तन्त्ररहस्यभूमिका १९ पृष्ठे कुमारिलेन निरस्तो भर्तृमित्रसिद्धान्तः सत्स्मृतिसदाचाराणां धर्मप्रमाणत्वं विधिनिषेधयोरिष्टानिष्टफलानभ्युपगमादयश्च प्रभाकरेण समर्थिता इति वर्णयन्ती भर्तृमित्रसिद्धान्तमूलकत्वं प्रभाकरसिद्धान्तस्याऽभिप्रैति। तत्र सत्स्मृतिसदाचाराणां तत्तद्रूपेण विना वेदमूलकत्वं धर्मप्रामाण्यं कुमारिलोऽपि न स्वीकरोति। अयमेवाऽत्र सिद्धान्तो यत्कुमारिलमतेऽपि सत्स्मृतिसदाचाराणां तन्मूलस्मृत्यनुमापकत्वात्, तदनुमितवेदवाक्यविधयैव धर्मे प्रामाण्यम्। अन्यथा "चोदनालक्षणोऽर्थो धर्म" इति वैदिकविधिवाक्यमूलकत्वस्य प्रतिज्ञानात्, स्मृतिवाक्यानां धर्मप्रमाणतायां शास्त्रसङ्गतिर्बाधिता स्यात्।

अत एव न्यायसुधायां परोक्षवेदवाक्यविचार एव तृतीयपादार्थ इति सिद्धान्तितमिति, भट्ट-प्रभाकरयोर्वेदार्थविचारे त्वैकमत्यमेव।

## भर्तृमित्रमतमेव स्मृत्यधिकरणे कुमारिलेन निरस्यत इति कथनम्।

भर्तृमित्रस्तु—स्मृतिपादे वैदिकमन्वादिमूलकत्वमात्रेण स्मृतिप्रामाण्यं निरस्यति। कुमारिलेन स्मृत्यधिकरणे मन्वादिस्मृतीनां स्वप्नमूलकत्वं भ्रान्तिमूलकत्वं प्रमादमूलकत्वञ्चाऽऽदाय स्मृत्यप्रामाण्यपूर्वपक्ष उपक्षिप्तः।

अस्मिन्प्रसङ्गे—

"येन यत्नेन मन्वाद्यैरात्मवाक्यं प्रपाठितम्।
कस्मात्तेनैव तन्मूलं चोदना न समर्पिते[तं वा. पृ. १६१]ति।

वदन् कुमारिलभट्टः स्वप्नादिमूलकत्वं सत्स्मृतिसदाचाराणां सविस्तरं निरस्यति। विश्वस्यते कुमारिलोऽस्मिन्प्रसङ्गे भर्तृमित्रमेव निरस्यं मन्यते।

यतोऽत्र—

"प्रायेणैव हि मीमांसा लोके लोकायतीकृता।
तामास्तिकपथे कर्तुमयं यत्नः कृतो मयेति ॥" स्वीयां प्रतिज्ञां भर्तृमित्रसिद्धान्तस्याऽत्र सविस्तरं निरसनेन सफलयतीति।

## कुमारिलेन प्रभाकरेण वा विधि-निषेधयोरफलवादो निराक्रियत इति कथनम्।

कर्मणामिष्टानिष्टफलसाधनतानभ्युपगमस्तु "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यादिषु स्वर्गकामादिपदं न फलसमर्पकम्, किन्तु कर्मस्तावकमात्रम्। अतो न पृथगर्थवादापेक्षा न वाऽर्थवादानां प्रामाण्यमित्यर्थवादाधिकरणपूर्वपक्षे शाबरभाष्योक्तपक्षविशेषस्य फलं विधिनिषेधयोरिष्टानिष्टफलसाधनतानभ्युपगम इति।

यत्तु सिद्धान्ते भाष्यकारेण कुमारिलेन वा किम्बहुना प्रभाकरेणाऽपि निरस्यते। प्रतीयतेऽयमेवेष्टानिष्टफलसाधनतानभ्युपगमवादो भर्तृमित्रावलम्बितः कृत्स्नवेदप्रामाण्यविरोधी स्वीयया मीमांसया लोकायतीकृत इति। येन परोक्षवेदानां वेदैकदेशानामर्थवादादीनाञ्चाऽप्रामाण्यावलम्बनेन नास्तिकमतप्रचारणनिराकरणेनाऽऽस्तिकपथे धर्ममीमांसां नेतुमेव कुमारिलस्य प्रवृत्तिरित्यध्यवसीयते। सर्वथा

तु पूर्वमीमांसायामुत्तरमीमांसायां वा बादरिपदघटितेषु तेषु तेषु सूत्रेषु कुत्राऽपि सत्स्मृतिसदाचारादीनामप्रामाण्यं विधिनिषेधयोरिष्टानिष्टफलानभ्युपगमादयो बादरिसिद्धान्तत्वेन न मीमांस्यन्त इति बादरिमूलकत्वं भर्तृमित्रस्य प्रभाकरस्य वा न क्षोदक्षमम्।

वस्तुतस्तु—कुमारिल इव प्रभाकरोऽपि पूर्वोक्तरीत्या यत्फलशेषत्वं यागादीनां तृतीयाध्यायप्रथमपादगतबादर्यधिकरणेनाऽभिप्रैति। फलशेषत्वमार्थिकमौपादानिकं वेत्यन्यदेतदिति विधि-निषेधयोरिष्टानिष्टफलानभ्युपगमेन भर्तृमित्रसिद्धान्त एव न प्रभाकरस्याऽपि।

वेदवाक्यानां फलभाव्यकभावनापरतयैव प्रामाण्यमिति जैमिनेर्मतं कुमारिलस्य। यदेव शबरस्वामी तदीये श्रेयस्करभाष्येऽर्थपदव्याख्यानव्याजेन निश्चिनोति।

प्रभाकरस्तु—कौमारिलमतमत्र निरस्य कार्यपरत्वम्, अपूर्वपरत्वम्, नियोगपरत्वं वा लिङादिघटितानां वाक्यानामभिप्रैति। तत्र लिङादिघटितानां वाक्यानां मुख्यो विषयः—न यागः, न वा स्वर्गः, न वा तयोस्सम्बन्धः, किन्त्वपूर्वमेवेति।

## गुरूक्तापूर्वस्य वार्तिके कुमारिलेन निरासार्थमनुवादः।

अत्र तन्त्ररहस्यभूमिका २२ पृष्ठे वदति—यत् कुमारिलः—

"श्रेयो हि पुरुषप्रीतिस्सा द्रव्य-गुण-कर्मभिः।
चोदनालक्षणैस्साध्या तस्मात्तेष्वेव धर्मता॥
अन्तःकरणवृत्तौ वा वासनायाञ्च चेतसः।
पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि॥
प्रयोगो धर्मशब्दस्य न दृष्टो न च साधनम्।
पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिरि"॥ त्यादिना

सांख्य—बौद्ध-आर्हत-वैशेषिक—मीमांसककल्पितेष्वन्तःकरणवृत्ति वासनाविशेषपुद्गलनृगुणापूर्वेषु धर्मशब्दप्रयोगाभावादन्तःकरणवृत्त्यादीनामिवाऽपूर्वस्याऽपि धर्मत्वं निरस्यतीति।

## तत्समीक्षा।

अत्रेदमालोचनीयम्—किमत्राऽपूर्वशब्देन प्रभाकराभिमतं कार्यं नियोगो वा विवक्ष्यते, उत—जैमिनि-शबरस्वामिकुमारिलाद्यभिमतं "चोदना पुनरारम्भः" इति सूत्रसिद्धं यागेन स्वर्गे जननीये द्वारभूतमपूर्वम्। तत्रायङ्कुमारिलस्याऽऽशयः—द्वारी याग एव धर्मः, न तु द्वारभूतमपूर्वम् साक्षात्फलसाधनत्वात्—यथा द्रव्य-गुणादीति स्वमतदृष्ट्या द्वारभूतस्याऽपूर्वस्य धर्मत्वनिरास एव तात्पर्यमिति। नियोगः कार्य वा प्रभाकरभिमतं कुमारिलात्प्राक्तनेन केऽपि मीमांसकेन विशिष्य च भर्तृमित्रेण बादरिणा वा स्वीकृतमासीदित्यत्र न किमपि प्रमाणमुपलभ्यते। प्रभाकराभिमत-

नियोगधर्मतावादस्तु—न ततः प्राक्तनैः कैरपि मीमांसकैरवलम्बितः। अवलम्ब्यमानोऽपि न स बादरिणा, भर्तृमित्रेण वा स्वीकृत इति तु निरालम्बन एव।

## नियोगवादः प्रभाकरोपज्ञ एवेति कथनम्।

प्रभाकरानन्तरैश्शालिकनाथ-भवनाथादिभिः प्रभाकरमतसमर्थनम्, मण्डनमिश्र-उम्बेक-सुचरितमिश्र-पार्थसारथिमिश्रादिभिः, बौद्ध-जैनमतावलम्बिभिः प्रज्ञाकरगुप्तविद्यानन्दप्रभृतिभिश्च विधिविवेक—प्रमाणवार्तिकभाष्य-अष्टसाहस्त्यादौ तन्निरसनं वसुबन्धु-असङ्ग-दिङ्नाग-धर्मकीर्तिभिः प्रभाकरनियोगवादस्याऽनिरसनञ्च वेदार्थनियोगवादं प्रभाकरोपज्ञं ज्ञापयति। सर्वथा तु बादरि-भर्तृमित्रादिमूलकत्वं नियोगवेदार्थतावादे न विकल्पसहम्। सति चैवमपूर्ववादः प्रभाकरमुख्यप्रीतिपात्रं प्रभाकरोपज्ञ एव।

"श्रेयो हि पुरुषप्रीतिः सा द्रव्य-गुणकर्मभिरि"त्यादिश्लोकवार्तिकेषु कुमारिलेनाऽपि प्रभाकरात्प्राक्तनेन निरस्यत इति वादो न प्रेक्षावतां बुद्धिमनुरञ्जयति। "चोदनलक्षणोऽर्थो धर्म इत्यत्र चोदनापदविवरणं कुमारिलस्य फलवत एव कर्मणो धर्मत्वम्, न त्वफलस्येत्यभिप्रायः। ततः प्राचीनत्वं विधि-निषेधयोरिष्टानिष्टफलानभ्युपगमस्य भर्तृमित्राभिमतस्य प्रभाकराभिमतस्य च निरासमेवाऽभिप्रैतीत्यतोऽवगम्यते।

## बादरिसिद्धान्तः कुमारिलेन निरस्यत इत्यस्य समीक्षा।

बादरिसिद्धान्तश्चाऽतिप्राचीनः कुमारिलेन निरस्यत इति तन्त्ररहस्यभूमिकाऽभिप्रैति।

तत्र ब्रह्ममीमांसायां "सुकृत-दुष्कृत एवेति तु बादरिरिति" [ब्र. सू. ३-१-११] सूत्रे "रमणीयचरणा रमणीयां योनिमापद्यन्ते, कपूयचरणा कपूयां योनिमापद्यन्ते" इत्यत्र भुक्तशेषं सुकृतदुष्कृतात्मकं कर्मैव तत्तज्जन्मान्तरप्राप्तिनिदानमिति बादरिमतमिति प्रतिपाद्यते। अनेन च चेदमवगम्यते—भर्तृमित्राभिमतः विधिनिषेधयोरिष्टानिष्टफलानभ्युपगमवादो न बादरेः सम्मत इति बादरिमूलकत्वं भर्तृमित्रस्य, न वा प्रभाकरस्य। कार्यमपूर्वं नियोगो वा बादरिसिद्धान्त इति कल्पनाऽप्यत एव न विचारासहः।

## नास्तिक्यवादनिराकरणम्।

नास्तिकवादस्तु—पूर्वमीमांसासूत्रेषु जीवात्मनः, परमात्मनः, प्रपञ्चसृष्टेः, मोक्षस्य, जननमरणप्रवाहस्य च निरूपणं जैमिन्यनभिमतमिति केषाञ्चन वादं कुमारिलस्स्वीये वार्तिके निरस्यति। प्राचीनमीमांसका हि येषां वेद एव मुख्यं प्रमाणम्, कार्यं नियोगो वा वेदार्थः पुरुषाः केवलं कार्यशेषा इत्यास्तिकवादं जैमिन्यभिमतमाक्षिपन्ति।

इदमत्राऽऽलोचनीयम्—प्राचीनैर्मीमांसकै रक्षितं कुमारिलेन समर्थ्यमानञ्चाऽऽस्तिक्यं किन्नामेति। यदीश्वरानङ्गीकारः, देहातिरिक्तात्माङ्गीकार उत वेदप्रामा-

ण्याभ्युपगमो वेति। तत्र यदि प्राचीनमीमांसका बादरि-बोधायनादयस्तर्हि "कार्यं बादरिरस्य गत्युपपत्तेः" "अभावं बादरिरित्यादौवी"श्वरादेः बादरिणाऽपि स्वीकारात्, पूर्वोत्तरमीमांसैकशास्त्रवादिना बोधायनेनाऽपि स्वीकाराच्च नास्तिक्यवादो न बादर्यादीनामपि विवादविषयः। इयमेव रीतिः प्राभाकरसिद्धान्ते।

तत्रापि नयविवेकस्तु प्रभाकरादेरानुमानिकेश्वरनिरास एव तात्पर्यमिति विशदयति।

यत्तु प्रकरणपञ्चिकायां विमलाञ्जनाख्ये सप्तमे प्रकरणे—अत्र "यदपि केचिदित्यादिना—तेनाऽनादिरेव वृद्धव्यवहारपरम्परे" [प्र. पं. पृ. ३०९] त्यन्तेन ईश्वर-तत्सृष्ट्यादिनिरासो दृश्यते। सोऽप्यानुमानिकेश्वरवादिनां वैशेषिकादीनां निरासाभिप्राय एवेति तु प्रभाकरविजयस्याऽप्याशयः। प्रभाकरविजयस्य तु मूलं शालिकनाथ-भवनाथयोः कृतिरेव। वेदप्रामाण्यस्वीकारस्तु सर्वेषां मीमांसकानां समानः। अतः कुमारिलेनाऽऽस्तिक्यसमर्थनं केषाञ्चन स्वतन्त्रप्रज्ञानां शंकामात्रनिरासाभिप्रायः। सर्वथा तु प्रभाकराद्धान्तानां सर्वेषामपि मीमांसकनामास्तिक्यवादेन विप्रतिपत्तिलेशोऽपि कुमारिल इव प्राभाकरेऽपि।

यश्च— "मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः।
नित्य-नैमित्तिके कुर्यात्प्रत्यवायजिहासया॥
नित्य-नैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानञ्च विमालीकुर्वन्नभ्यासेन च पाचयेत्"॥

वैराग्यात्पक्वविज्ञानः कैवल्यं भजते नरः। इति न्यायसुधोद्धृतबृहट्टीकावचनाभ्यामैकभविकन्यायः, "एतेन उपनिषदो व्याख्याताः" इत्यर्थवादाधिकरणवार्तिकेनाऽर्थज्ञानपारार्थ्यवादश्च कुमारिलेनोपक्षिप्तः। तदिदं जैमिनीयं सिद्धान्तमवलम्ब्य। यद्यप्ययं सिद्धान्तो जैमिनीयधर्ममीमांसायां नोपलभ्यते, तथापि "शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनि"रिति बादरायणसूत्रादवगम्यते।

## अत्र शालिकनाथमतम्।

शालिकनाथस्तु—"आत्यन्तिकस्तु—देहोच्छेदः" इत्यादिना धर्माधर्मपरिक्षयनिबन्धनः, [प्र. पं. पृ. ३४१] परार्थत्वे प्रमाणाभावादि" [प्र. पं. ३४२] त्यन्तेन च प्रकरणपञ्चिकागतवाक्यसन्दर्भेणाऽऽत्मज्ञानपारार्थ्यं वादं खण्डयति। अयञ्च शालिकनाथसिद्धान्तो न प्राचीनमीमांसकस्य बादर्यादेर्मतेन, येन कुमारिलस्य सिद्धान्तोऽयं बादर्यादिमतखण्डनाभिप्रायस्स्यात्। किन्तु "पुरुषार्थोऽतश्शब्दादिति बादरायण" इति सूत्राद्बादरायणमतेनेति। अतोऽत्र विषये न बादरिमतानुसारी प्रभाकरसिद्धान्त इति सुधीभिरवधेयम्।

## भर्तृमित्रानभिमताकाशश्रोत्रतावाद एव प्राभाकरसिद्धान्तः।

"इमञ्च श्रोत्रसंस्कारं शब्दग्रहणहेतुकम्।
केचित्तु पण्डितम्मन्याः श्रोत्रमित्यभिमन्वते"। इत्यत्र

भर्तृमित्राभिमतसंस्कारश्रोत्रतावादोभट्टेन खण्डितः । 'आकाशश्रोत्रतावादस्तु—तार्किकाभिमतस्स्वीकृतःस्समर्थितश्च बृहत्या', न भर्तृमित्रस्य न वा बादरेः। प्रकरणपञ्चिका—"एवञ्च शब्दगुणत्वाच्छ्रोत्रस्य, यच्छब्दगुणकं द्रव्यमाकाशपदावेदनीयं तदेव श्रोत्रमिति सिद्धम् [पृ. ३२५] तथा—किञ्च शब्दोऽम्बरगुणः शब्दगुणवच्चाऽऽकाशं श्रोत्रेन्द्रियमि [१५३] त्यादिना" अन्यथा नभसः श्रोत्रभूतस्य शब्दस्य च प्राप्त्यसम्भवादि (पृ० ४३२) ति च वदन्ती तार्किकवदाकाशश्रोत्रतापक्षमेव प्रभाकरभिमतं विविनक्ति। इदमनेन विशदीक्रियते—श्रोत्रस्वरूपनिष्कर्षे भर्तृमित्रसिद्धान्तात्प्रभाकरसिद्धान्तो भिन्न इति। अतः प्रभाकरसिद्धान्तमूलकत्वं भर्तृमित्रसिद्धान्तस्याऽऽशातीतम्।

## प्राभाकरसिद्धान्तानां भार्तृमित्रमूलकत्वनिरासे युक्त्यन्तरम्।

इदमत्र पर्यनुयुज्यते—को वाऽपरस्सिद्धान्तो भर्तृमित्रस्य कुमारिलेन खण्डितः, प्रभाकरेण समर्थितश्चेति।

## भाट्टप्राभाकरप्रस्थानयोः प्रवाहरूपेणाऽनादित्वसमर्थनम्।

अयमत्र निष्कर्षः—प्रसिद्धाः प्राभाकरसिद्धान्तास्सर्वेऽपि जैमिन्यादिप्राक्तनाचार्यमूलाः, किन्तु न प्रभाकरोपज्ञा एव। परन्तु—तेऽपि जैमिनि-शबरादिपूर्वाचार्यानुमता एव न तु विरुद्धा इति बृहत्यादिपर्यालोचनेनाऽवगम्यते। न चैतावता प्राभाकरसिद्धान्तोऽवद्यः, कुमारिलसिद्धान्त एवाऽनवद्य इति वचनं न साधायः।

उक्तञ्च कविकुलकमलदिवाकरेण कालिदासेन—

"पुराणमित्येव न साधु सर्वं न चाऽपि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्याऽन्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिरि" ॥ (मा.ना.)ति।

अयमेव पन्था यथा—द्वैताद्वैत-विशिष्टाद्वैतादिसम्प्रदायेषु तत्तदाचार्यैः परिपाल्यते। तत्र वैदिकसिद्धान्तास्सर्वेऽपि तत्तदाचार्यप्रचारिताः जैमिन्यादिमहर्षिप्रवर्तिता अप्यनादिसम्प्रदायसिद्धाः, तथा मीमांसासम्प्रदायेषु विशिष्य कश्चन सम्प्रदायः कुमारिलेन प्रचारङ्गमितः, अपरस्तु सम्प्रदायः प्रभाकरेणेति तत्तद्वेदान्तसम्प्रदायेषु प्रस्थानभेदा इव मीमांसायाः प्रस्थानभेदावेव भाट्ट-प्राभाकरसम्प्रदायौ।

मीमांसाशास्त्रं हि परीक्षाशास्त्रम्, वेदाः षडङ्गानि स्मृति-पुराणेतिहासादयश्चोपदेशशास्त्राणि। सचि चैवं धर्मसूत्राणां ब्रह्मसूत्राणाञ्च तत्तन्यायस्वरूपनिष्कर्ष एव तात्पर्यम्। एषां सन्दिग्धान्येव वाक्यानि विषयः। अत एवाऽसत्यपि संशये विषयवाक्यानि कानिचनाऽज्ञातन्यायस्वरूपविवेचनार्थं कृत्वाचिन्तया तत्र तत्र विचारितानि।

कौमारिलसिद्धान्तोयथा याज्ञिकानां कल्पसूत्रकाराणाञ्चाऽनुष्ठानविरुद्ध तथा प्राभाकरसिद्धान्ता अपीत्यन्यदेतदिति। कल्पसूत्राणि श्रुति-स्मृति-पुराणेतिहासादिवाक्यानि च यत्र निर्णीतानि, तत्र तद्विरुद्धा न्याया एवाऽप्रमाणम्, न तु श्रुत्या-

दिवाक्यानि। तथा च—शाबरं भाष्यम्—"लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति सम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम्। नाऽध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा। एवं वेदवाक्यान्येवैभिर्विचार्यन्ते। अन्यथा वेदवाक्यानि विचारयितव्यानि" स्वपदार्थाश्च व्याख्येया इति।

तथा—

"वैदिकं जैमिनीयञ्च यत्र वाक्यं विरुध्यते।
यथाश्रुतगृहीतेऽर्थे तत्रेदमुपदिश्यते ॥
अध्याहारादिभिस्सूत्रं वैदिकन्तु यथाश्रुतमि"
[ ४७-४८, श्लो. ]ति च।

वेदसूत्रयोर्विरोधे "गुणे त्वन्यायकल्पने"ति पाशाधिकरणन्यायेन वेदवाक्याविरोधेन सूत्रव्याख्यानं लक्षणादिना। इयमेव शैली भामतीपतिनाऽऽनन्दमयाधिकरणभाष्यमतोपपादनावसरे समादृता। ततश्च कौमारिलत्वं, प्राभाकरत्वं वा न समादरणीयत्वानादरणीयत्वादौ प्रयोजकम्, किन्तु यत्किमपि न्यायाविरुद्धं प्रमाणम्।❀

## व्यवहारे भाट्टनय इति वाक्यसमीक्षा

न्यायचन्द्रिकायामानन्दपूर्णविद्यासागरमुनिः अन्विताभिधानवादाभिहितान्वयवादयोरन्विताभिधानवादं समर्थयन् "व्यवहारे भाट्टनय" इति न्यायविरोधमाशङ्क्य न कौमारिलं वचनं मानववचनमिति तस्य सिद्धान्तस्याऽनादरणीयत्वं मन्यते। तत्रान्विभिधानवादो वेदान्तिभिन्यायचन्द्रिभिकारादिभिः श्रीमट्टीकाकारैर्जयतीर्थादिभिश्च समादृतोऽन्विताभिधानवादोऽन्यः। इतरान्वितमात्रं प्राभाकराभिमतोऽन्विताभिधानवादस्तद्विलक्षणो यत्कार्यान्विताभिधानम्, न तु सामान्यत इतरान्विताभिधानम्।

## अन्विताभिधानसमर्थनम्।

वाक्यार्थप्रसङ्गेऽन्विताभिधानवादिनः प्राभाकरमीमांसका इत्यवादिष्म। कोऽयमन्विताभिधानशब्दार्थ इति जिज्ञासायामभिधीयते। तथाहि—अन्वितस्याऽभिधानमिति। विभक्त्यन्तस्यैकपदस्याऽर्थेनाऽन्वितोऽन्यः पदार्थः पदेनाऽनुभाव्यते; न तु विभक्त्यन्तपदार्थमात्रम्। अयम्भावः—लोके केवलेन पदार्थमात्रेण न कश्चित् व्यवहरति, अपि तु विशिष्टेनैव,। अन्ततो गत्वाऽस्त्यर्थेनैव व्यवह्रियते अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति" इति कात्यायनवचनात्।

प्राथमिकशक्तिग्रहणवेलायामेव व्युत्पित्सुर्बालकस्स्वप्रयोजनार्थं व्यवहरतोरुत्तमवृद्ध-मध्यमवृद्धयोर्वाक्यात् विशिष्ट एवाऽर्थे शक्तिं गृह्णाति। पदानामावापोद्वापाभ्यां विपर्यासेऽपि प्रथमातिक्रमणे कारणाभावादन्विताभिधानवादाभ्युपगमो युज्यत इति प्रथमा युक्तिः।

पदानां पदार्थेऽन्वये च पार्थगर्थ्येन शक्तिस्वीकारे शक्तिद्वयम्। जातिशक्तेर्व्यक्तिबोधपर्यन्तत्ववत्पदशक्तेरन्वयपर्यन्तत्वे च लाघवेनाऽन्विताभिधानवाद-

श्श्रेयान्। "कल्पनालाघवं यत्र तं पक्षं रोचयामहे" इति न्यायात्। अभिहितान्वयवादे गौरवं अग्रे [प्र. पं. पृ. ४११] प्रदर्शइष्यतति द्वितीया युक्तिः।

सप्तमाद्ये टीकाकृता ग्राहकग्रहणमन्विताभिधानोपपादनायाऽभ्युपगतम्। तथा हि—"दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेते"त्येत्यधिकारवाक्यगतेन लिङाऽधिकारापूर्वमभिधीयते। तच्च स्वयं प्रयोजनभूतं स्वसन्निधिपठितं सकलमपि पदार्थवर्गं स्वोपसर्जनत्वेन गृह्णाति। तदेव ग्राहकग्रहणमित्युच्यते। दर्श-पूर्णमास-ज्योतिष्टोमादिषु धर्मा व्यतिकीर्यन्ते, उत व्यवतिष्ठन्त इति संशयमुपन्यस्य धर्माणां पारिप्लवं पूर्वपक्षयित्वा, धर्माणां प्रतिप्रकरणं व्यवस्थेति सिद्धान्तः कृतः। तत्र व्यवस्थापकमपूर्वमेव। तच्चाऽधिकारापूर्वं प्रधानतया प्रतीयते। तदेव ग्राहकम्, विनियोजकं, प्रयोजकञ्चेति त्रयीमवस्थामनुभवति। तत्र प्रकरणपठितान्पदार्थान्स्वीयभावेन गृह्णद्ग्राहकमित्युच्यते, द्वारकार्ये विनियुञ्जानं सद्विनियोजकमित्युदीर्यते, प्रयुञ्जानं सत्प्रयोजकमित्युच्यत इत्येकस्याऽवस्थात्रयमिति गुरुमतरहस्यम्। तथा चेदमपूर्वं खलेकपोतन्यायेन स्वकीयत्वेन प्राच उदीचश्च पदार्थान् गृह्णाति।

तत्राऽऽदौ समेषां पदार्थानां शब्दाभिहितानामपूर्वीयत्वेनैवाऽन्वयः, तदेवाऽन्विताभिधानम्, ग्राहकग्रहणमिति च गीयते। तस्य प्रयोजनत्वेन प्राधान्यम्, अन्येषां पदार्थानामपूर्वीयत्वेन तदुपसर्जनत्वात्प्रयोजनित्वम्। स एव प्रयोजनप्रयोजनिभावः। तथा च सप्तमाद्यसिद्धेन ग्राहकग्रहणेनाऽप्यन्विताभिधानसिद्धिरिति तृतीया युक्तिः।

दण्डीत्यादावन्विताभिधानमनिच्छताऽपि स्वीकरणीयम्। "परिपूर्णपदं पदान्तरेणाऽन्वेती"ति नियमस्समेषां वादिनामभिमतः। पदे परिपूर्णत्वञ्च प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्प्रत्ययानाम्। अन्यथा आकाशा इति प्रयोगः कथं वार्येतेति-चतुर्थी युक्तिः।

## अन्विताभिधानपरतया सूत्राक्षरयोजनम्।

सूत्र-भाष्ययोरप्यविरोध इत्थमुपपादनीयः। तथा हि—"तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्त्वादि [मी. द. १. १. ७.] ति। तेषु—विद्यमानानां पदानां क्रियार्थेन व्यवहारार्थेनोच्चारणम्। अत्र क्रियाशब्देन लोकवेदसाधारणो व्यवहारो विवक्षितः, न भावार्थाधिकरणगतक्रियाशब्दवदपूर्वम्। अन्विताभिधानरूपो न्यायस्तु लोकवेदयोस्समानः। अर्थस्य-अन्वयस्य, तन्निमित्तत्वात्—पदार्थनिमित्तत्वात्, पदार्थशब्देनाऽन्विता अभिधीयन्ते। तेषु—पदार्थेषु वर्तमानान्येव पदान्यन्वयापरपर्यायं वाक्यार्थं गमयन्ति। अतोऽन्विता एवाऽन्वयस्य निमित्तम्। अतस्सनिमित्ता वाक्यार्थावगतिः। भाष्याक्षराण्यस्माभिरन्विताभिधानपरतया [प्र. पं. पृ. ३८३] व्याख्यातानि, तत्र योजनाप्रकारो द्रष्टव्यः।

एतेन लघुचन्द्रिकाकारोक्तं तत्त्वचिन्तामणिकृद्वचनव्याख्यानमुखेनाऽन्विताभिधानवादे भाष्याक्षराणामनाञ्जस्यं चिकित्सितमिति [लघु. चं. पृ. ६७३] वेदितव्यं सूरिभिः। लोके कार्यान्विताभिधायितया पदानि व्युत्पन्नानि दृश्यन्ते, तेन वेदेऽपि

कार्यान्विता एव पदार्थाः पदैरभिधातव्याः। साधनान्वितेऽपूर्वे लिङादिनाऽभिधीयमाने साधनव्यतिषङ्गोऽवगम्यते। साध्यान्वितेऽभिधीयमाने साध्यव्यतिषङ्गश्चाऽवगम्यते। अत एव सूत्रकारः "तद्भूतानामि"त्यसुसूत्रत्।

टीकाकारोऽप्याह—"तद्भूतानामात्मीयेष्वर्थेषु विद्यमानानां—स्थितानां व्यतिषक्ताभिधायिनां व्यतिषङ्गावगमनिमित्तत्वमुपपद्यते" इति। व्यतिषक्त एवाऽन्यथाऽवगन्तुं न शक्यते व्यतिषङ्गमप्रतीत्य। तेन व्यतिषक्तस्याऽभिधाने व्यतिषङ्गोऽप्यवगम्यत इति प्रदर्शयितुं व्यतिषक्तस्य निमित्तत्वमुच्यते। तस्माद्व्यतिषक्ताभिधानम्।

## अभिहितान्वयवादेऽप्यन्विताभिधानस्वीकार इति कथनम्।

किञ्चाऽभिहितान्वयवादिभिरपि बहुत्राऽन्विताभिधानमभ्युपगतमेव। तौतातितमतेऽभिहितान्वय इत्युत्सर्गः। तदपवादस्त्वनेकार्थप्रत्यये कर्त्रैकत्वविधिभिरन्विताया भावनायाः "यजेते" त्यादौ तिङि स्वीक्रियते। "पशुने" त्यत्रैकत्वपुंस्त्वाभ्यामन्वितस्य करणकारकस्याऽभिधायकत्वमपीष्यते। "यदाग्नेयोऽष्टाकपालः" इत्यत्र "साऽस्य देवते"त्यनेन विहितस्य देवतातद्धितस्य वैयाकरणैरुक्तानां पक्षान्तराणां निराकरणेन देवतान्वितद्रव्यवाचित्वस्य गुणाधिकरणे [२-२-६] वार्तिककृता व्यवस्थापितत्वात्।

## तन्त्ररत्नोपन्यासः।

अत एव पार्थसारथिः टुप्टीकाव्याख्याने तन्त्ररत्नेऽन्विताभिधानाभ्युपगमं मुक्तकण्ठं स्वीकरोति। तथा च तन्त्ररत्नसन्दर्भः—"किञ्चैकेनाऽभिधानेन युगपदभिधीयमाने संख्याकारके मिथोऽन्वित एवाऽभिधीयेते, अन्यथा युगपदभिधनायोगात्, अक्षादिशब्देष्वदर्शना" [मी. द. ४, १ ५ पृ. ७२] दिति।

## तदुपष्टम्भकतया न्यायरत्नमालाया अवतारणम्।

एवं न्यायरत्नमालायामपि भाट्टतन्त्रयन्त्रितोऽपि पार्थसारथिरन्विताभिधानमनिच्छंस्तमगत्योररीकरोति। तथा च न्यायरत्नमालासन्दर्भः—"यत्राऽनेकार्थाभिधानमेकेन शब्देन युगपद्भवति, विभक्त्यैव लिङ्गसंख्याकरणकारकाणाम्, अनन्वितानामनेकेषामर्थानामेकेन शब्देन युगपदभिधानस्यैकशेषमन्तरेणाऽसम्भवादक्षशब्देनेव विदेवनादीनाम्। अन्यथा "गामानये" तिवद्याङ्क्षाच्छिद्यक्तिमक्षमानयेति नियुक्तो विदेवनादीनामन्यतममानयेन्न सन्दिहीत। सन्दिग्धे च—किम्परोऽयं प्रयुक्त इति। तस्मादन्वितानामेवाऽभिधानमि" [न्या. र. मा. पृ. १६७] ति।

## मत्वर्थीयस्थलेऽन्विताभिधानस्याऽऽवश्यकता।

अपि च मत्वर्थीयप्रत्यया विशिष्टमेवाऽभिदधति। न हि तेषां वाच्यान्तरं समस्ति। यथा "दण्डी देवदत्तः" इत्यत्र प्रकृत्या दण्डमात्रमभिधीयते, देवदत्त इति

विशेष्यमपि स्वपदेनोपात्तम्, इनिप्रत्ययस्तु विशिष्टमभिदध्यात्। तथा "हिरण्य-मालिन ऋत्विजः प्रचरन्ती" त्यत्र विशेषणभूता हिरण्यमाला प्रकृत्यैवोक्ता, ऋत्विजोऽपि विशेष्यभूतास्स्वशब्देन, मतुप्प्रत्ययस्तु किमन्यदभिदध्याद्विशिष्टात्। अतो मत्वर्थीयप्रत्ययानामन्वित एवाऽर्थेऽनुशासनात्तेषामन्विताभिधायित्वमनिच्छताऽप्यवश्यमेष्टव्यम्।

## भाष्याक्षराणामन्विताभिधान एवाऽऽञ्जस्यम्।

किञ्च "प्रातिपदिकादुच्चरन्ती द्वितीयाविभक्तिर्विशेषक इत्याहे" ति तद्भूताधिकरणस्थं भाष्यमन्विताभिधान एव स्वारस्यमश्नुते। तस्याऽभिहितान्वयवादपरतया व्याख्यानं कृतम्, परन्त्वभिनिवेशमात्रं तत्।

## शाङ्करभाष्यमप्यन्विताभिधानवाद एव स्वरसम्।

"तत्तु समन्वयादिति" शारीरकशाङ्करभाष्येऽयं वाक्यसन्दर्भो दृश्यते— "न च तद्गतानां पदानां निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गादि" [वे, द. १, १, ४ पृ. ६२]ति। अत्र भाष्ये पदानामित्यस्य स्थाने पदार्थानामिति पाठं परिकल्पयति विवरणप्रस्थानम्, समर्थयति च तदवष्टम्भेनाऽभिहितान्वयवादम्। तदेवाऽन्वसारि चित्सुखमुनिना प्रत्यक्तत्त्वप्रदीपिकायाम्, तस्यैव विश्वरूपाचार्याद्यभिप्रेतत्वमुपावर्णि।

## अन्विताभिधानवाद एव भामतीप्रस्थानमनुकूलम्।

भामतीप्रस्थानन्तु—पदानामिति पाठमेव स्वीकरोति। अत्रेदं विचारणीयमापतति—पदानां समन्वयः, पदार्थानां समन्वयो वेति। किमत्र युक्तमित्यक्षिणी निमील्य विचारयन्तु सुधियः। वयन्तु मन्महे शाङ्करभाष्यमन्विताभिधानवाद एव सामञ्जस्यमावहति।

## न्यायचन्द्रिकाऽप्यन्विताभिधानवाद एव स्वरसवाहिनी

अभिनवद्राविडपूर्णानन्दसरस्वतीविरचिता न्यायचन्द्रिका समन्वयसूत्रभाष्यवाक्यमन्विताभिधानवाद एव स्वरसवाहि, न त्वभिहितान्वयवाद इत्येव सुधीरमुद्घोषयति।

## टीकाकारजयतीर्थानां मतम्।

द्वैतवादिनां न्यायसुधाऽप्यभिहितान्वयवादेऽनादरं सूचयन्ती, अन्विताभिधानवादमेव स्वहस्तयति।

## अद्वैतसिद्धिकारस्याऽस्मिन् विषये ताटस्थ्यम्।

अद्वैतसिद्धिकारा मधुसूदनसरस्वत्योऽखण्डार्थवादनिरूपणावसरेऽभिहितान्वयान्विताभिधानवादद्वयमुपपादयन्तोऽखण्डार्थवादे तयोरसाहाय्यं मन्यन्ते।

तार्किकमतस्योभयपक्षबहिर्भूतत्वादिकं वर्णयन्ति, अन्ते तत्त्वप्रदीपिकाकृदादयस्तु—अभिहितान्वयपक्षमेवोररीचक्रुरित्यत्र तुशब्दं प्रयुञ्जानास्तत्र स्वानभिसन्धिं सूचयन्तस्स्वाभिप्रायं प्राचीकशन्। सर्वथाऽपि सिद्धान्तानुकूलत्वादिति न किञ्चिदनवद्यमि [अ. सि. पृ. ७०५] ति च वर्णयन्ति।

## कार्यकारणभावे लाघवम्।

अन्विताभिधानवादे कार्य-कारणभावश्चेत्थम्—तद्विषयकशाब्दबोधं प्रति तत्पदनिष्ठशक्तिग्रहाधीनतद्विषयकोपस्थितिः कारणमिति तद्विषयकशाब्दबोधत्वेन तत्पदनिष्ठशक्तिग्रहाधीनतद्विषयकोपस्थितित्वेन च कार्य-कारणभावो बोध्यः। यथा घटपटादिपदानां बुद्धिविषयतावच्छेदकत्वेन घटत्वादिकमनुगमीकृत्य घटत्वादिविशिष्टे घटादिपदानां शक्तिरिष्यते, तथैव संसर्गतावच्छेदकत्वोपलक्षिते संसर्गे शक्तिस्वीकारे न कोऽपि दोषः। एतेन संसर्गाणामानन्त्येनाऽननुगमदोषः प्रत्याख्यातो वेदितव्यः।

एवं तैस्तैर्वादिभिरुद्भाविताः क्षुद्रा उपद्रवा अनया दिशा निरसनीयाः। तस्मान्निरस्तसमस्तदोषाशङ्कष्टीकाकारसम्मतोऽन्विताभिधानवादो वाक्यार्थविचारणाप्रसङ्गे समादरणीयः।

एवं जैमिनीयमीमांसायां प्रभाकरप्रस्थानस्य प्रवाहरूपेण प्रचलितस्य प्रभाकरमिश्रेण समर्थनं तत्परिष्कारश्चेत्यादि समालोचितम्। विस्तरस्तु प्रकरणपञ्चिकायां तत्तत्प्रकरणेषु तत्र तत्र टिप्पण्यादौ च विशद एव। तत्र दार्शनिकप्रमाणप्रमेयप्रक्रियासु भाट्टप्रक्रियातोऽहीनत्वेऽपि कर्मानुष्ठाने प्रभाकरप्रस्थानं कौमारिलप्रस्थानं वा याज्ञिकैः कल्पसूत्रप्रधानैरविरुद्धांशेनाऽनुस्त्रियते।

## याज्ञिकानां स्ववैशिष्ट्यम्।

याज्ञिका हि प्रयोगशास्त्रापरपर्यायाणि श्रौतसूत्राण्यनुसरन्ति। तदविरुद्धानेव मीमांसान्यायान् समाद्रियन्ते,

"धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति"॥ इति।

भट्टवार्तिकञ्चाऽनेकयज्ञशास्त्रसारक्रोडीकारनिबन्धनसमादरमूलकमिति व्याचक्षते। स च समादरो यज्ञशास्त्रतदनुबन्धिनिबन्धाविरोधेन मीमांसाव्याख्यातृषु प्रवरीवर्ति। तदेतच्च धूर्तस्वामि-कपर्दिस्वामिप्रभृतिभिर्भाष्यकृद्भिस्तत्र तत्र मीमांसकाभिप्रायस्य तद्विलक्षणस्वाभिप्रायस्य चाऽऽविष्करणेन विशदीक्रियते। अत एव श्रौतसूत्रव्याख्याता महादेव आह—

"याज्ञिकास्सूत्रकाराणां मतं बुद्ध्वा स्वयन्तथा।
न्यायैस्तत्सूचितैरेव द्रढयन्त्यकुतोभयाः॥
प्रसिद्धिमनुगृह्णन्तस्ते मान्याश्श्रौतकर्मणि॥ इति।
तज्जैमिनिमतापेतमिति मे दूषणन्न हि"। इति।

न्यायोपदेशयोः केचिद्विकल्पं ब्रुवते न तत्।
युक्तं न्यायोऽनुमानन्तु श्रुतितुल्यं कथं भवेदि" ॥ ति च

तथा चाऽयं निर्गलितोऽर्थः—यन्मीमांसकेषु स्वसम्प्रदायाविरुद्धमेवोपादेयमिति याज्ञिकपक्ष इति स्ववैशिष्ट्यं प्रतिपादयन्ति।

मीमांसकास्तु—कल्पसूत्राधिकरणवार्तिक-शास्त्रदीपिका-भाट्टदीपिका-कौस्तुभग्रन्थैश्चाऽन्यथासिद्धान्तयन्तः, कल्पसूत्राणां सन्न्यायविरोधे दौर्बल्यम्, मीमांसान्यायानां प्राबल्यमुपवर्णयन्ति। प्रायशश्श्रौतसूत्रानुसार्येव धर्मानुष्ठानं भवति। भाट्टप्राभाकरप्रस्थाने उभे अपि तत्र विरुध्येते। एवं समाने विरोधे भाट्टप्रस्थानस्य समादरः, प्राभाकरप्रस्थानस्याऽनादरश्च किन्निबन्धन इति।

अतस्तत्तन्न्यायानां पूर्वोत्तरपक्षसमालोचनप्रसङ्गे भाट्टप्राभाकरमतयोः कुत्र को विशेषो द्वादशलक्षणीगतेष्वधिकरणेष्वित्यवसरप्राप्तम्, किन्तत्रौचित्यमिति च। ग्रन्थगौरवेण वैरस्यापादकमित्यवसरान्तरे प्रतिपादयिष्यते।

## शाबरभाष्यं तद्व्याख्यातारश्च।

किञ्चाऽत्र बौधायनोपवर्षयोर्वृत्ती न केवलं पूर्वमीमांसाम्, किन्तूत्तरमीमांसामधिकृत्याऽपि प्रवृत्ते, ते तु साम्प्रतं नोपलभ्येते। भवदासीयाया वृत्तेरियमेव गतिः। पूर्वमीमांसामात्रमधिकृत्य प्रवृत्तो निबन्धस्तु शाबरभाष्यमात्रम्। तत्र शाबरभाष्यस्य चत्वारो व्याख्यातारः। ते यथा—(१) भर्तृमित्रः, (२) कुमारिलभट्टः, (३) प्रभाकरमिश्रः, (४) मुरारिमिश्रश्च। तत्र भाट्टप्राभाकरप्रस्थान एव नित्यं विकासमधिगच्छतः। भर्तृमित्रस्य मुरारिमिश्रस्य च न कोऽपि ग्रन्थस्समुपलभ्यते।

क्षीरसागरमिश्रस्य तु भाष्यदीपाख्यं व्याख्यानमष्टमाध्यायपर्यन्तं हस्तलिखितमुपलभ्यते शृङ्गेरीमठे। तस्यैव प्रतिलिपिरडैयारपुस्तकालयेऽस्तीति श्रूयते। इदञ्च गुरुमतानुसारि।

तत्र कुमारिलप्रस्थानं व्याख्योपव्याख्यामुखेन तत्सिद्धान्तानुयायिस्वतन्त्रग्रन्थमुखेन च साम्प्रतमपि वर्धते। तत्र साक्षात्तदीयश्लोकवार्तिकव्याख्यातारः—उम्वेकभट्ट—सुचरितमिश्र—पार्थसारथिमिश्राः। तन्त्रवार्तिकव्याख्यातारस्तुपरितोषमिश्र—भवदेवभट्ट—भट्टसोमेश्वराः। टुप्टीकाव्याख्यातारस्तु—पार्थसारथिभट्टसोमेश्वर—राजचूडामणिदीक्षिताः।

अधस्तनेन चित्रेण तेषां कालदिकमैतिहासिकैर्निर्णीतं शुविशदं ज्ञातुं शक्यते।

मण्डनमिश्रोऽपि कुमारिलशिष्यो विधिविवेक-भावनाविवेक-विभ्रमविवेकैर्भाट्टाभिमतमन्यथाख्यातिवादम्, आख्यातार्थभावनावादञ्च सोपष्टम्भं समर्थयन्, प्रभाकराभिमताख्यातिवादस्य निरसनपूर्वकं भाट्टसिद्धान्तमुपबृंहयन् दृश्यते। तदीयेन ब्रह्मसिद्ध्याख्यनिबन्धेन तु स्वीयविधिविवेक-विभ्रमविवेकयोरर्थं प्रभाकरतनिरसनप्रसङ्गेन सङ्गृह्णानोऽपि वेदान्तार्थनिर्णये भाट्टसिद्धान्तमपि परास्यति प्रतिपक्षतया। किम्बहुना कुमारिलभट्टवदुक्तानुक्तदुरुक्तचिन्तनेन स्वतन्त्रमेवाऽयमपि स्वीयं निबन्ध-

**जैमिनिसूत्राणि**
B. C. 400

**बौधायनवृत्तिः**
B. C. A. O. 300

**औपवर्षवृत्तिः**
C. 100. B. C. A. D. 300.

**मवदासीया वृत्तिः।**
C. A. D. 100-200

**भाष्यंशबरस्वामिनः**, C. A. D. 200.

भाष्यव्याख्यानानि—

१. भर्तृमित्रस्य C. A. D. 300-600
तत्त्वशुद्धिः;

२. कुमारिलभट्टस्य
C. A. D. 620-700.
१—श्लोकवार्तिकम्,
२—तन्त्रवार्तिकम्,
३—टुप्टीका

**श्लोकवार्तिकव्याख्या**

१—तात्पर्यटीका,
उम्वेकभट्टस्य,
C. A. D. 670-750.

२—काशिका सुचरितमिश्रस्य,
C. A. D. 1000-1100.

३. प्रभाकरमिश्रस्य,
C. AD. 650-720.
१—विवरणम्,
२—निबन्धनञ्च,

**विवरणव्याख्या**

१—दीपशिखा,

**निबन्धनव्याख्या**

२—ऋजुविमला,
३—प्रकरणपञ्चिका

४. मुरारिमिश्रस्य
C. A. D. 1150-1220
२. त्रिपादनीतिनयनम्

३—न्यायरत्नाकरः पार्थसारथेः C. A. D. 1000-1120.

४—भाष्यपरिशिष्टं तर्कपादस्य शालिकनाथस्य C. A. D. 780-825.

## तन्त्रवार्तिकव्याख्या

१—अजिता परितोषमिश्रस्य C. A. D. 1050-1100

२—तौतातितमततिलकम् भवदेवस्य C. A. D. 1070-1150.

३—न्यायसुधा भट्ट-सोमेश्वरस्य C. A. D. 1200.

१—नयविवेको भवनाथस्य, C. A. D. 1050-1150

१—प्रभाकरविजयो नन्दीश्वरस्य C. A .D. 1220-1300

१—नयविवेकदीपिका वरदराजस्य C. A. D.1500-1575

## टुप्टीकाव्याख्या

१—तन्त्ररत्नं पार्थसारथिमिश्रस्य,

२—तन्त्रसारस्सोमेश्वरभट्टस्य

३—वार्तिकाभरणं वेङ्कटेश्वरदीक्षितस्य C. A. D. 1600.

१—तन्त्ररहस्यम्

२—नायकरत्नञ्च धर्मपुरिरामानुजाचार्यस्य, A. D. 1750

मारचयति। स एव शङ्करभगवत्पादेन पराजितो गृहस्थावस्थायां विश्वरूपाख्योऽपि सन्यासग्रहणानन्तरन्तु सुरेश्वरः, तथा सो विश्वरूपादन्यस्स एव वाऽऽसीदित्यादिकन्तु तैस्तैरैतिह्यविद्भिर्विचार्य तत्र तत्र निर्णीतमिति त्वन्यदेतत्।

भाट्टसिद्धान्तोऽयं न केवलं मीमांसाबालप्रकाश—मीमांसान्यायप्रकाश—भाट्टचिन्तामणिद्वारा तत्तत्प्रबन्धृभिर्विकासितः। किन्तु खण्डदेवेन तद्धश्यात्रा कविमण्डनशम्भुभट्टेन च नवीनपद्धत्या भाट्टसिद्धान्तानां व्यवस्थापनेन सुतरामेव साम्प्रतमपि वर्धते।

## प्राभाकरसिद्धान्तानां परम्परायातमिति प्रागुक्तस्याऽनुसन्धानम्।

प्राभाकरसिद्धान्तस्तु—तत्र तत्र बहुभिः प्रभाकरोपज्ञ इति वर्ण्यते। तत्र तदुपज्ञत्वं यथा भामतीप्रस्थानस्य मण्डनमिश्रोपज्ञत्वम्, यथावा—श्रीभाष्यसिद्धान्तस्य नाथोपज्ञत्वम्, परम्पराप्राप्तसम्प्रदायविशेषस्य विशदं प्रकाशनमात्रनिबन्धनम्। भाट्टसिद्धान्तस्याऽपि तदुपज्ञत्वमेवंरूपमेवेत्यनुसन्धेयम्।

## भट्ट-प्रभाकरयोर्गुरुशिष्यभावनिरासः।

अत इदं प्रतीयते न भट्ट-प्रभाकरौ गुरुशिष्यभावेन व्यपदेशमर्हतः, किन्तु स्वतन्त्रावेव तौ तत्तत्प्रस्थानमात्रावलम्बिनौ।

चौखम्बाग्रन्थमालातः प्रकाशितन्यायमञ्जरीभूमिकायां न्यायव्याकरणाचार्यसूर्यनारायणशर्मणा तदीये पञ्चमे पृष्ठे—"उक्तञ्च कर्तव्यताविषयौ नियोगः, न पुनस्तस्य कर्तव्यतामाह" [बृ. टी.] इति प्रतीके जरत्प्राभाकरोन्नीतं गुरोर्वचस्सङ्गच्छते। एवञ्च प्रभाकर-भट्टोम्वेक-मण्डनमिश्राणामेकगुरुत्वमत्यन्तमसम्भवि। "एकगुरुकाणां परस्परं स्पर्धाया दर्शनात्" इति न्याकणिकोक्तेः प्रभाकरस्याऽपि गुरुरपरो जरत्प्रभाकरः कश्चिदासीदिति ज्ञायते। यस्यैव शिष्यः प्रभाकरोपीति। एवं वदन् न्यायमञ्जरीसम्पादकमहाशयोऽस्मदुक्तमेवाऽर्थं परिपोषयति। अतो भट्ट—प्रभाकरयोर्गुरुशिष्यभाव इत्यैतिह्यं चिन्त्यमूलम्।

## प्रभाकरस्य गुरुरिति किंवदन्त्या मूलम्।

विश्वस्यते—न प्रभाकरमतस्य गुरुमतत्वेन प्रसिद्धिरपि कुमारिलशिष्यस्यैव तस्य गुरुरिति कुमारिलस्य कस्मिंश्चनाऽवसरे प्रेमातिशयप्रयुक्ताभिनन्दनेन गुरूपाधिनिबन्धना, किन्तु शालिकनाथादीनां प्रभाकरस्य साक्षाद्गुरुत्वेन गौरवातिशयनिबन्धना। उम्वेकभट्टेन सुचरितमिश्रेण च कुमारिल-मण्डनपक्षपातितया गुरुरिति प्रभाकरस्य न्यक्करणं, शालिकनाथानन्तरेण सुचरितमिश्रेण च तत्र तत्राऽनुपासितगुरुरिति प्रभाकरस्य न्यक्करणं कुमारिलेन प्रभाकरविषये कस्मिंश्चनाऽवसरे सन्तोषातिशयेन गुरुरित्युपाधिर्वितीर्ण इति कल्पनामात्रम्, न तु वस्तुस्थितिरित्यलमतिविस्तरेण। इतोऽधिकमग्रे वक्ष्यते।

## प्रभाकरप्रस्थानस्य विकासक्रमनिरूपणम् ।

प्राभाकरप्रस्थानन्तु न केवलं तच्छिष्येण शालिकनाथेन दीपशिखा–ऋजुविमलापञ्चिका–प्रकरणपञ्चिका–भाष्यपरिशिष्टद्वारा, किन्तु रविदेव–वरदराज–शङ्करमिश्र–दामोदरपण्डितप्रवरकृततत्तद्गम्भीरव्याख्योपष्टम्भितनयविवेकद्वारा भवनाथमिश्रेण, स्वतन्त्रप्रकरणकर्त्रा नन्दीश्वरेण च वृद्धिं गमितम्। यः—

"नाथद्वयात्तसारेऽस्मिन् शास्त्रे मम परिश्रमः।
शुक्तिश्रमायते सिन्धौ हरिणोद्धृतकौस्तुभे" ॥ इति स्वीये

प्रभाकरविजये शालिकनाथ—भवनाथमूलकत्वमेव स्वीयनिबन्धस्य प्रभाकरविजयाख्यस्याऽनुसन्धत्ते। न्यायकोशकारोऽपि नयविवेकमनुधावन् तत्र तत्र भाष्यव्याख्यामुखेन स्वीयप्रबन्धस्य नाथद्वयमूलकत्वं मन्यते। यथोक्तम्—

"गुरुक्रमागतज्ञानप्रवाहैकप्रयोजनः।
नाथद्वयमतोद्धारो न्यायकोशो निबद्ध्यते" ॥ इति ॥

तदेव मतं क्रमेण पल्लवितं पुष्पितं फलितञ्च। तन्त्ररहस्याख्यस्वतन्त्रप्रकरणकर्त्रा धर्मपुरीश्रीरामानुजाचार्येण महतीं वृद्धिमगमत्। धर्मपुरीरामानुजाचार्योऽयं पार्थसारथीयन्यायरत्नमालाया अपि नायकरत्नव्याख्यानेन गुरुमत इव भट्टमतेऽपि महतीं श्रद्धामावहति। परन्तु तस्य महानादरः प्राभाकरसिद्धान्त एव। यतस्स भाट्टसिद्धान्तेन प्राभाकरसिद्धान्तेनेव न नियन्त्रित इति तदीयेन नायकरत्नव्याख्योपगतेन—

"गुरुतन्त्रनियन्त्रितोऽप्यहं बहुमानादिह पार्थसारथेः।
विवृणोमि मतान्तराश्रितां स्थिरभावां नयरत्नमालिकाम्" ॥

इति पद्येनाऽवगम्यते।

प्रकृतमनुसरामः। द्वादशलक्षण्या उपर्येव शाबरस्वामिता भाष्यं व्यरचि। यद्यपि "स्विष्टकृद्विकारो वनस्पतिहोम इति संङ्कर्षे वक्ष्यते" [१०.४.२१.] इति भाष्योक्त्या सङ्कर्षकाण्डेऽपि भगवता शबरस्वामिना भाष्यं कृतमित्यूहितुमवकाशोऽस्ति, तथाऽपि प्रपञ्चहृदयाद्द्वादशलक्षण्या एव भाष्यस्य प्रवृत्तिरिति निर्णीयत इति प्रागवोचाम तद्व्याख्यानस्य कौमारिलप्रस्थानस्य प्राभाकरप्रस्थानस्य च प्रवृत्तिरिति।

## द्वादशलक्षण्या विषयः।

तत्र जैमिनीयमीमांसायाः प्रथमेऽध्याये विधिवाक्यमात्रस्य वेदगतस्य प्रामाण्यम्। अर्थवादानान्तु न स्वातन्त्र्येण प्रामाण्यम्, किन्तु विधिवाक्येन पदैकवाक्यतयैव प्रामाण्यमिति प्राभाकरसिद्धान्तः।

## अर्थवादादिविषये शङ्का।

तत्राऽर्थवादानां मन्त्राणां च विधिवाक्यशेषतयैव यदि प्रामाण्यमिति कल्प्येत, तर्हि यत्राऽर्थवादमात्रमाम्नायते, न विधिः, तत्र कथं तस्य प्रामाण्यव्यवस्था,

विधिकल्पनन्तु कल्पितस्य तस्य पौरुषेयत्वापत्त्या तत्राऽर्थवादस्य तत्कल्पकत्वानुपपत्त्या चाऽर्थवादानां पृथक्प्रामाण्यमवश्यं स्वीकर्तव्यम् । अयमेव न्यायो मन्त्रेष्वपि यत्र लिङ्गानुसारेण मन्त्राणां विनियोगव्यवस्थेति प्राभाकरमते शङ्का समुन्मिषति ।

## समाधानम् ।

तत्राऽर्थवादाधिकरणे वेदवाक्यानि—सविधिकार्थवादानि निर्विधिकार्थवादरूपाणि—निरर्थवादविधिरूपाणि चेति त्रिधा विभज्य निरर्थवादविधौ विधेरेव प्राशस्त्यपरत्वम् । निर्विधिकार्थवादेष्वर्थवादानामेव विधिपरत्वमपीति शबरस्वामिनाऽर्थवावादाधिकरणसिद्धान्तभाष्ये व्यवस्थापितम् । प्रकृते तेनैव मन्त्रार्थवादेष्वपि विधिव्यवस्था, प्रामाण्यव्यवस्था च । अतो गुरुमते विधिरेव प्रमाणम्, तस्यैव प्रामाण्यं द्रढयितुं त्रिपाद्यां स्मृत्यादीनां चिन्तनमिति तन्मतपरिस्थितिः ।

शब्दान्तरादिभिः प्रमाणैर्भावनाभेदो भाट्टमते द्वितीयाध्यायार्थः, प्राभाकरमते तु तत्तत्पदार्थविधायकवाक्यात्मकशास्त्रभेदस्साध्यभेदानुबन्धभेदाभ्यां । तत्राऽनुबन्धभेदश्शब्दान्तरादिप्रमाणैः शास्त्रभेद एव तत्रोपन्यस्यते । संख्या तु भावार्थमात्रस्य भेदिका, न तु शास्त्रस्येति भावार्थाधिकरणऋजुविमलायाम्, अत्राऽपि पञ्चिकायां शास्त्रपरिच्छेदेऽयं विषयो विशदः ।

तृतीये श्रुतिलिङ्गादिभिष्षड्भिः प्रमाणैर्वैनियोगिकं शेषत्वं प्रतिपादितम् । चतुर्थ औपादानिकं शेषत्वं प्रत्यपादि । पञ्चमाध्याये श्रुत्यादिप्रमाणगम्यस्य क्रमस्य विधेयत्वं कौमारिलमत इव प्रभाकरेण न स्वीक्रियते, तथाऽपि क्रमस्याऽपेक्षितत्वात्तद्विवक्षेति पञ्चमाध्याये न्यरूपि। अस्याऽधिकारादेश्च विस्तरो [प्र. पं. पृ. ४८०-४८२] द्रष्टव्यः ।

दशमे ऽध्याये बाध्यं पदार्थमतिदेशो विकृतिषु नाऽऽनयतीति भाट्टमीमांसका मन्वते, प्रतिपादयन्ति च तृतीयाध्याये स्थितस्य प्रबलप्रमाणेन दुर्बलप्रमाणबाधस्याऽप्राप्तबाधत्वं दाशमिकबाधस्य प्राप्तबाधत्वमिति तृतीयदशमाध्याययोर्भेदप्रकारम् ।

एवं सति भट्टमतानुसारेण दाशमिकबाधस्याऽप्राप्तबाधप्रसङ्ग इति प्रभाकरमतानुसारिणो बाध्यानामपि प्राकृतानां पदार्थानामतिदेशेन विकृतिषु प्राप्तिमङ्गभावञ्चोपपाद्य प्राकृतकार्यविरहे सत्यननुष्ठानलक्षणो बाध इति समर्थयन्ति, अस्य विस्तरो [प्र. पं. पृ. ४८६-एवं ४९१] विशदः । इत्थमध्यायार्थनिरूपणप्रकारोऽतिस्थूलमुपाक्षेपि । अत्र प्रत्यध्यायं भाट्टमतापेक्षयाऽनेके विशेषा शास्त्रदीपिका—तद्व्याख्यादिपरामर्शेनाऽवगम्यन्ते । एषां विशिष्य निरूपणं तदेकपरे प्रबन्ध उपपद्यतेतमाम्, अतोऽत्रैवेमं विषयं हित्वोपरि गच्छामः ।

## प्रकरणपञ्चिकाशब्दनिर्वचनम् ।

अथाऽवसरप्राप्तं प्रकरणपञ्चिकाविमर्शनं विशिष्य प्रस्तूयते । प्रकरणपदार्थः "शास्त्रैकदेशस्य प्रक्रिया प्रकरणमि" [का.मी.]ति वचनात् प्रतिपिपादयिषित-

शास्त्रतत्त्वनिर्णयोपयोगिनीनां सरलानां जटिलानाञ्च समस्यानां सोपपत्तिकमुपन्यासः। पञ्चिकाशब्दो–विस्तरार्थः "'पचि' विस्तारे" इति धातोर्निष्पन्नः, प्रतिपिपादयिषित-शास्त्रतत्त्वनिर्णयोपयोगी संकलितसरलजटिलादिशास्त्रमात्रासाधारणसमस्याविस्तरः प्रकरणपञ्चिका नाम।

## अस्य ग्रन्थस्य प्राभाकरसिद्धान्तनिरूपणपरत्वे हेतुनिर्देशः।

तत्र प्रकृतानि तु प्रकरणानि जैमिनीयमीमांसाया प्रभाकरप्रस्थानसम्मत-तत्तदसाधारणविषयसङ्कलनात्मकानीति ग्रन्थोपक्रमे, तदवसाने "प्रभाकरगुरोर्दृष्ट्या मीमांसारम्भसिद्धये" इति ग्रन्थकारेण तस्य तस्य प्रकरणस्याऽऽदावन्ते च निर्देशा-दवगम्यन्ते—

"शास्त्रमुखं नाम गुरोराविष्कर्तुं गभीरमपि भावम्।
अर्थासंस्पर्शिता शङ्का यथा शब्दस्य वार्यते।
प्रभाकरगुरोश्शिष्यैस्तथा यत्नो विधीयते।
यथार्थं सर्वमेवेदं विज्ञानमिति सिद्धये।
प्रभाकरगुरोर्भावस्समीचीनः प्रकाश्यते॥
मिश्रशालिकनाथेन नयवीथीति संज्ञितम्।
कृतं लोकहितार्थाय प्रभाकरमतं यथा॥
बहुधा जातिविषये विवदन्ते विपश्चितः।
प्रभाकरमतेनाऽयं तेषां प्रत्यास उच्यते॥
जातिराश्रयतो भिन्ना प्रत्यक्षज्ञानगोचरः।
पूर्वाकारावमर्शेन प्रभाकरगुरोर्मता॥
तत्र पञ्चविधं मानं प्रत्यक्षमनुमा तथा।
शास्त्रं तथोपमानार्थापत्ती इति गुरोर्मतम्॥
अभावाख्यं प्रमाणं ये षष्ठमाहुर्मनीषिणः।
तेषां प्राभाकरैरेवं प्रत्यादेशोऽयमुच्यते॥
आत्मतत्त्वे बहुविधा विवादास्सन्ति वादिनाम्।
वयं प्राभाकरास्तत्त्वनिर्णयाय यतामहे॥
एषा शालिकनाथेन शब्दनित्यत्वसाधनी।
प्रभाकरगुरोर्दृष्ट्या न्यायशुद्धिः प्रकीर्तिता॥
प्रभाकरगुरोर्भावं परिभाव्याऽभिधीयते।
पदेभ्य एव वाक्यार्थप्रत्ययो जायते यथा।
तथा वयं निबध्नीमः प्रभाकरगुरोर्मतम्॥
वाक्यार्थमातृकेयं प्रभाकरगुरोर्मतानुसारेण।
प्रभाकरमतं सम्यगालोच्य क्रियते मया।
विषयं करणञ्चैव विवेक्तुं युक्तिवर्णना॥
समुदीक्ष्य वा गुरुमतं सम्यग्विषयकरणीयमिदम्।

व्याख्याविकल्पसम्भवमज्ञान्यधिकृत्य संशयं छेत्तुम् ।
परमं प्रभाकरगुरोर्गम्भीरं भावमभिधास्ये ॥ इति ।

प्रकरणपञ्चिकायाञ्चतुर्दशसु प्रकरणेषु यथायथमुपक्रमपरामर्शोपसंहारेषु स्वयं, प्रकरणपञ्चिकानिबन्धा स्वीयनिबन्धस्य प्रभाकरगुरुमतानुसारित्वस्य कण्ठरवेणोक्तत्वात् ।

## ग्रन्थनामविचारः ।

प्रकरणपञ्चिका, पञ्चिकाप्रकरणं, प्रकरणं, प्रकरणशालिकेति ग्रन्थकर्तृभिर्बहुध व्यपदिश्यते । प्रकरणपञ्चिकेति प्राचां ग्रन्थकाराणां व्यवहारदर्शनात्, शालिकनाथेन ऋजुविमलायां तथैव निर्देशादिदं संस्करणमपि तेनैव नाम्ना व्यपदिशति ।

## प्रकरणानां नामनिर्देशः

तदन्तर्गतानीमानि शास्त्रमुखम्, नीतिपथः, नयवीथी, जातिनिर्णयः, अमृतकला, प्रमाणपारायणम्, विमलाञ्जनम्, तत्त्वालोकः, न्यायशुद्धिः, मीमांसाजीवरक्षा, वाक्यार्थमातृका, विषयकरणीयम्, अङ्गपारायणम्, अतिदेशपारायणञ्चेति चतुर्दश प्रकरणानि । तेषु द्वितीय-तृतीय-पञ्चमैकादश-चतुर्दशानीमानि पञ्च प्रकरणानि शुद्धपद्यमयानि, अवशिष्टानि शुद्धवाक्यरूपाणि, अस्मिन्पञ्चके पञ्चमैकादशे तेनैव व्याख्याते ।

## शास्त्रमुखप्रतिपाद्यविषयः ।

तेष्वादिमं प्रकरणं शास्त्रमुखन्नाम जिज्ञासाधिकरणविचाररूपम्, तत्र शास्त्रमुखाख्ये प्रकरणेऽध्यापनविधिप्रयुक्तमध्ययनम्, न त्वध्ययनविधिप्रयुक्तमिति प्राभाकरसिद्धान्तोऽध्ययनविधिप्रयुक्तमध्ययनमिति भाट्टमतनिरसनमुखेन परीक्षितः । तत्राऽध्ययनस्य स्वविधिप्रयुक्तत्वे स्वशब्देन स्वत्वस्य विवक्षणात्तत्तद्वेदगततत्तच्छाखामात्राध्ययनं नियतम्, शाखान्तरान्तराध्ययनन्त्वनियतं भाट्टमते, प्राभाकरमते तु "स्वाध्यायोऽध्येतव्यः" इत्यस्यऽविधित्वादध्यापनविधिप्रयुक्तमुपनीतानां सर्वेषां सर्ववेदीयसर्वशाखाध्ययनं धर्मः । तेन च तत्तद्वेदगतशाखान्तरगतानामुपनिषदामध्ययनपरम्परा सर्वेषु वेदान्तिकसम्प्रदायेषूपपद्यते, पक्षेऽस्मिन् विप्रकीर्णतत्तच्छाखागतवेदवाक्यानामनुसन्धानेन मन्वादीनां तत्तत्स्मृतयोऽपि स्वरसाः । भाट्टमते तु नेदमुपपद्यते ।

अत एव श्रीकण्ठश्रीमद्भगवद्रामानुजादिसिद्धान्तेष्वध्यापनविधिप्रयुक्तमध्ययनमिति समाश्रीयते । तत्राऽध्ययनविधिना योऽध्ययनस्याऽर्थज्ञानफलवदात्मज्ञानस्य परार्थत्वपक्षः, स मा भूदित्यध्यापनविधिप्रयुक्तमध्ययनमिति श्रुतप्रकाशिका-[पृ० २२] वदति । उभयत्राऽध्ययनस्याऽर्थज्ञानार्थत्वं वेदार्थज्ञानमुखेनैव क्रतावधिकारश्च समानः । अयं विषयो बृहत्यां तृतीयपृष्ठे विशदः । अद्वैतदृष्ट्या त्वात्मज्ञानं जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रसाक्षात्कारः, यत्तु कर्माधिकारेऽनुपयुक्तमित्यध्ययन-

विधिप्रयुक्तत्वे चोभयमपि समानम् । अत एव ब्रह्मसिद्ध्यादौ तद्विचारो न प्रस्तूयते । भामत्यान्त्वध्ययनविधिप्रक्तमध्ययनमिति मत्वैव ब्रह्मजिज्ञासा समर्थिता ।

## अध्यापनविधिप्रयुक्तमध्ययनमित्यस्य खण्डन-मण्डनाभ्यां विकासक्रमः ।

अध्ययनस्याऽध्यापनविधिप्रयुक्तत्वं बृहत्यां जिज्ञासाधिकरणे [मी. द. १. १. १.] स्वयं प्रभाकरेण प्रास्तावि । उम्बेकेन तु श्लोकवार्तिकव्याख्यायां तात्पर्यटीकायां "नाऽप्यध्ययनविधिप्रयुक्तत्वेनेत्यादिना तन्मतं (ता. टी. पृ. ४) निरस्तम् । बृहतीव्याख्यायामृजुविमलायां [पृ. ४] भाष्यपरिशिष्टे च शालिकनाथेन [पृ. ३-४] उम्वेकभट्टोक्तार्थनिरसनेन तत्समर्थितम्, यदर्थमत्र शास्त्रमुखाख्यमेकं प्रकरणं प्राकारि । यस्य निरसनं पार्थसारथिमिश्रेण शास्त्रदीपिकायां न्यायरत्नमालायाञ्च विस्तरेणाऽकारि । तदनन्तरं तु भवनाथेन नन्दीश्वरेण च स्वीये नयविवेके, प्रभाकरविजये चाऽध्यापनविधिप्रयुक्तत्वमध्ययनस्य प्राभाकरीयं सविस्तरमुपपादितम् । यदेवाऽनुसृत्य चिदानन्देन नारायणभट्टेन च स्वीये नीतितत्त्वाविर्भावे मानमेयोदये चाऽध्ययनस्य स्वविधिप्रयुक्तत्वमध्यापनविधिप्रयुक्तत्वाभावश्च-संगृहीतः ।

ततस्तु धर्मपुरिरामानुजचार्येण स्वीये तन्त्ररहस्ये चाऽध्यापनविधिप्रयुक्तत्वमध्ययनस्योपसंहृतमितीयं परिस्थितिरद्य प्रकरणपञ्चिकायाः प्राथमिकस्य शास्त्रमुखाख्यस्य प्रकरणस्य ।

## नीतिपथस्य विषयः ।

चोदनासूत्रे भाष्यकारेण प्रतिपादितं शब्दस्याऽर्थव्यभिचारित्वाभावं समर्थयितुं द्वितीयं प्रकरणं नीतिपथाख्यम् । यत्र शब्दस्याऽर्थासंस्पर्शितानिरासेन तत्संस्पर्शित्वं समर्थ्यते । तत्र शब्दपदेन लिङादि, अर्थपदेनाऽलौकिकमपूर्वञ्च विवक्षितम् । तेन च "य एव लौकिकाश्शब्दाः, त एव वैदिकाः" इति न्यायेस्य लिङर्थनिर्णये प्रवृत्तिर्वर्तते न वेति विप्रतिपत्तिप्रयुक्तसंशयनिरासोऽस्य फलमिष्यते । तत्र भाट्टमतं तन्न्यायप्रवृत्तिमूरीकृत्य, मानान्तरागम्यालौकिकमपूर्वं न लिङर्थ इति शब्दस्याऽर्थासंस्पर्शितामभिप्रेत्य, अयञ्च विषयः कुमारिलभट्टेन स्वीये श्लोकवार्तिकेऽन्यत्र वा न प्रास्तावि । अत एवाऽवगम्यतेऽलौकिकापूर्वलिङर्थतावादः प्रभाकरस्य तदुपज्ञ एवेति । अयञ्च सिद्धान्तः प्रभाकरेण बृहत्या-[पृष्ठे २४] मुपाक्षेपि ।

मण्डनोम्बेकाभ्यां प्राभाकरीयनियोगखण्डनम्; शालिकनाथ ऋजुविमलायां [पृ. २४] भाष्यपरिशिष्टे [पृ. ९) अत्र प्रकरणपञ्चिकायां वाक्यार्थमातृकायामत्राऽपर आह" इत्यादिना मण्डनमिश्रस्य ब्रह्मसिद्धिवचनम्, विधिविवेकवचनञ्च विशिष्योपन्यस्य परास्यति [प्र. पं. पृ. ४२८], नीतिपथप्रकरणे लिङादेरपूर्वार्थत्वञ्च साधयति ।

## सुचरितमिश्रमतनिरासः ।

ततस्सुचरितमिश्रस्स्वीयश्लोकवार्तिकव्याख्यायाम्
"धर्मे सामान्यतस्सिद्धे प्रमाणञ्चोदनोच्यते" । इति

वार्तिकव्याख्यानावसरे शब्दस्याऽर्थासंस्पर्शित्वकथां प्रभाकरमिश्रप्रस्तुतां शालिकनाथोपबृंहितां पराकरोति ।

ततो भवनाथस्स्वीये नयविवेके तत्तन्मतनिरसनपूर्वकं शब्दस्याऽर्थसंस्पर्शितावादं विशदयति । शास्त्रदीपिकाकारोऽन्ये वा भाट्टमतानुयायिनोऽत्रोदासीना एव प्रतिभान्ति । टीकाकारो नारायणश्च सुचरितमिश्रेण समर्थितं वार्तिकभिमतं स्वतः प्रामाण्यं निरस्य, शब्दस्याऽर्थासंस्पर्शितामुपपादयति [ प्र. पं. पृ. २९ ] ।

## अस्मिन् विषये प्राभाकरसिद्धान्ताच्छ्रीभाष्यसिद्धान्तस्य भेदः ।

भगवद्रामानुजादयोऽध्ययनस्याऽध्यापनविधिप्रयुक्तत्वं प्राभाकरीयमनुसरन्तोऽपि, लिङादिघटितवाक्यानां प्राभाकराभिमतकार्यार्थमुख्यविशेष्यतावादं परास्यन्तीत्यस्मिन्नंशे न प्राभाकरसिद्धान्तेन तेषामैकमत्यमितीयं प्रकरणपञ्चिकाया द्वितीयप्रकरणस्य परिस्थितिः ।

## नयवीथीप्रकरणस्य तृतीयस्थाननिवेशे कारणोपन्यासः ।

तृतीयन्तु नयवीथ्याख्यं प्रकरणम् । एतत्संस्करणादृष्टयाऽन्ये द्वे संस्करणे पण्डितपत्रप्रकाशितप्रकरणपञ्चिकायाः पण्डितप्रवरविठ्ठलशास्त्रिभिस्सपादितम् , चौखम्बाग्रन्थमालायामडकरोपनामक पं० प्र० मुकुन्दशास्त्रिभिस्संपादितञ्च । तृतीयन्तु संस्करणं महामहोपाध्यायमीमांसाकण्ठीरवेत्यादिविविधबिरुदावलीविभूषितैर्वैद्यनाथशास्त्रिवर्यैश्शृङ्गेरीमठास्थानविद्वत्पदमलकुर्वाणैस्संशोधितं मीमांसाग्रन्थप्रकाशकसमित्या प्रकाशितं न्यायसिद्धिव्याख्यासहितं नयवीथिप्रकरणस्य ३२ पत्रपरिमितञ्च प्रकरणपञ्चिकायाः । तत्र पूर्वयोस्संस्करणयोस्तुरीयं प्रकरणं नयवीथ्याख्यम् । अन्तिमे तु तृतीयं नयवीथीप्रकरणम् । अस्मिन्नपि संस्करणे नयवीथीप्रकरणं तृतीयस्थान एवाऽस्माभिरयोजि ।

## तत्र निर्णयकथनम् ।

अत्र तृतीप्रकरणतया योजने कारणान्येतत्प्रकरणोपक्रमे ग्रन्थशरीर एव कानिचनास्माभिस्सूचितानि, तत्रैकं कारणं तर्कपादभाष्यबृहतीक्रमः प्रकरणपञ्चिकाया एवङ्क्रमतायां स्वारस्यमावहति । न्यायसिद्धिव्याख्यायां पुण्यपत्तनतः प्रकाशितायां मातृकायां नयवीथीप्रकरणस्य तृतीयस्थाने जातिनिर्णयात्पूर्वमेव दर्शनमप्यस्य प्रकरणस्य तृतीयप्रकरणत्वं सम्भावयति । अतोऽत्राऽस्माभिरपि पुण्यपत्तनप्रकाशितप्रकरणपञ्चिकाक्रम एवऽत्र समादृतः । अत्र च पण्डितप्रवरा एव प्रमाणम् ।

## नयवीथीप्रकरणस्य विषयकथनम्, उद्देश्यनिरूपणञ्च।

तत्र नयवीथीप्रकरणस्य लक्ष्यन्तु सर्वज्ञानयाथार्थ्यवादसमर्थनम्, भ्रमज्ञानकथाया एव निरसनमन्तकरणञ्च। तत्र वेदापौरुषेयत्ववादे वेदे विपर्ययशङ्कैव नोदेति, विशिष्य चाऽपूर्वलिङर्थतावादे। भ्रमप्रमाविवेकस्तु लौकिकेष्वेव प्रमाणेषु व्यवहारनिर्वाहमात्रं प्रयोजनं ग्रहणस्मरणात्मकज्ञानद्वयस्य स्वरूपतो विषयतश्च भेदाग्रहमात्रेणाऽपि निर्वाहात्, अत्र ख्यात्यन्तराणामङ्गीकारे न प्रयोजनाधिक्यम्।

## सर्वज्ञानयाथार्थ्यवादस्य फलम्।

वेदप्रामाण्यव्यवस्थायान्तु सर्वज्ञानयाथार्थ्यवादोऽत्यन्तमुपकरोति। अयञ्च सिद्धान्तो बृहत्यां [पृ० ६६] प्रस्तुतः, ऋजुविमलायामुपबृंहितश्च। मण्डनमिश्रेण तु विभ्रमविवेके, '[१५] उम्बेकभट्टेन च तात्पर्यटीकायाम [५१ पृष्ठे]यं वादस्सविस्तरं खण्डितः। यस्य समर्थनार्थं ऋजुविमलायाः प्रकृतनिबन्धनस्य प्रकरणपञ्चिकायाः भाष्यपरिशिष्टस्य च शालिकनाथीयस्य प्रवृत्तिः। ततश्च वाचस्पतिमिश्र-सुचरितमिश्र-पार्थसारथिमिश्रश्च स्वीयनिबन्धेषु सर्वज्ञानयाथार्थ्यवादश्शालिकनाथोक्तयुक्तिनिरसनपूर्वकं निरस्तः। भवनाथ–नन्दीश्वर–रामानुजाचार्यपर्यन्तैः प्राभाकरमतसमर्थनमिह विस्तरेणाऽकारि। तत्र भगवद्रामानुजाचार्यस्याऽख्यातिवादोपस्थापानं न प्रभाकरसम्मतेनैव प्रकारेण, किन्तु शुक्त्यादौ रजताद्यवयवानां सतामेव दोषवशाद्भानमिति सत्ख्यातिवादस्वीकारेणेत्यन्यदेतत्।

## भाष्यवार्तिकयोरुपालम्भ उम्बेकभट्टस्याऽनुचित इति वर्णनम्।

इदमेवाऽत्र चित्रं यदुम्बेकभट्टः—

"ब्रुवन् स्फुटीकरोतीष्टमुपदेशो हि नाऽन्यथे"।

ति [श्लो. वा. पृ. १०८] वार्तिकव्याख्यानावसरे श्येनादीनान्तु न साक्षात्, नाऽप्युपचारेण, नाऽपि तस्य फलस्याऽनर्थत्वम्, तस्याऽनर्थत्वप्रतिपादनपरं "श्येनः, इषुः, वज्रः" एवमादि भाष्यमुपेक्षणीयमिति। तदुक्तम्—

"गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथं प्रतिपन्नस्य परित्यागो विधीयते" (वा. रा. २. २१. १३, म. भा. शा. ५७. ७१. १८०. ४८) इति।

"साध्यत्वरहिते चेष्टा विधेये नित्यमर्थता।
शतुश्च लक्षणार्थत्वं तेषाञ्चाऽप्युपदेशनमि" ॥ति

वार्तिकव्याख्यानावसर इदं वार्तिककारीयं दूषणं समर्थनञ्च सर्वमेवाऽलूनविशीर्णमिति च भगवन्तं शबरस्वामिनं भाष्यकारं, स्वोपजीव्यं वार्तिककारञ्च वार्तिकस्येव स्वटीकाया अपि उक्तानुक्तदुरुक्तचिन्तनमेव स्वीयं लक्ष्यं मन्यते।

## तदनुयायिनस्सुचरितमिश्रस्याऽप्यनौचित्यवर्णनम् ।

तदनुयायी सुचरितमिश्रोऽपि कुत्राऽपि मात्रयाऽपि वार्तिके शब्देन व्यञ्जनया वाऽसूचितं प्रभाकरसिद्धान्तनिरसनं, शब्दानामर्थसंस्पर्शितानिरसनं विनैव संगतिं प्रस्तौतीति विदाङ्कुर्वन्तु विद्वांसः ।

तत्र प्रथमं शास्त्रमुखाख्यं प्रकरणं शास्त्रारम्भसमर्थक"मथातो धर्मजिज्ञासे"ति विषयवाक्यमवष्टभ्य प्रवृत्तम् । अतस्तस्य शास्त्रारम्भरूपत्वात् शास्त्रमुखमित्यन्वर्था समाख्या । शास्त्रस्य शास्त्रत्वं प्रमाणान्तराज्ञातापूर्वार्थबोधकलिङ्गादिघटितत्वेन । तच्च लिगोऽपूर्वार्थसंस्पर्शमन्तरा नोपपद्यत इति लिगोऽपूर्वसंस्पर्शिताबोधनार्थं नीतिपथाख्यं द्वितीयं प्रकरणम्, अनेन शास्त्रस्य शास्त्रत्वस्थापनाग्रहः, शास्त्रस्य शास्त्रत्वव्यवस्थापकनीतिमार्गः प्रदर्श्यत इति नीतिपथ इत्यऽन्वर्थसंज्ञा द्वितीयप्रकरणस्य ।

वेदप्रामाण्यायोगव्यवच्छेदे कोऽपि तत्र प्राभाकरसंमताख्यातिवादस्यैवोपयोगः सविकल्पकज्ञानानां सर्वेषां मिथ्यात्ववादिनो योगाचारस्य मुखमुद्रणञ्च कृतं भवति । अत इयमेव नीतिस्समादरमत्राऽर्हतीति प्राभाकराणामत्र विशिष्य प्रवृत्तिः, तेन च नीतिपथप्रकरणस्य नयवीथीप्रकरणस्य च विशिष्टा संगतिरपि भवति ।

## जातिनिर्णयस्य विषयः ।

तत्र प्रकरणद्वयेनाऽनेनाऽप्रमाण्यशङ्कायां वेदस्य निरस्तायां प्रामाण्यस्य विषयाबाधप्रयुक्तत्वात् ज्ञाने विषयस्य कारणत्वाच्च लौकिके वैदिके वा ज्ञाने विषयस्वरूपं निर्धारणीयम् । तत्र लोके वेदे च सविकल्पकमेव ज्ञानं प्रमाणमर्थसाधकत्वात्, प्रवर्तकत्वाच्च । निर्धर्मकस्वरूपमात्रविषयकं निर्विकल्पज्ञानन्तु नाऽनुभवसिद्धम् । निर्विकल्पेऽपि ज्ञाने प्रकारतया विकल्पो विषय एव, परन्तु सोऽपि स्वरूपतयैव प्रकारः, नत्वनुवृत्ताकारेण । सविकल्पे तु विषयोऽनुवृत्ताकारेण-प्रतीयते यतः, सर्वेषु ज्ञानेषु स्वरूपतः, अनुवृत्ताकारेण वा प्रतीयमानं संस्थानमात्रं प्रकारतया भासते, यस्याऽऽकृतिरिति नाम । यथा गवां सास्नादिः, अन्यत्राऽन्यत् । इयञ्चाऽऽकृतिः, जातिः, सामान्यमिति प्राभाकरैर्मन्यते । विशेषस्तु टिप्पण्यां [ पृष्ठ० १०२ ] द्रष्टव्यः ।

## ब्राह्मणत्वादेरुपाधित्ववर्णनम् ।

सा च जातिः तत्तत्स्वरूपाभिव्यञ्जकोपाधिमात्रम् । न च गवादीनामिव ब्राह्मण-क्षत्रिय-वैश्यादीनामनुवृत्तमेकं संस्थानं करचरणादिसाधारणं संस्थानव्यतिरिक्तं सास्नादीव गवादीनां किञ्चित्संस्थानं दृश्यते । येन प्रत्यक्षमात्रेण द्रागित्येव ब्राह्मण्यादिकं सुज्ञानं स्यात् । अतो ब्राह्मण्यादिकं न जातिराकृतिर्वा, तथाऽपि सत्त्ब्राह्मण्यादिमातापितृजन्यत्वज्ञानेन न ब्राह्मण्याद्यध्यवसायो दुर्वारः । अतो ब्राह्मण्यादिकमुपाधिरिति व्यपदिश्यते ।

## जातिविषये शालिकमतमेव श्रीभाष्यकारादीनामभिमतमिति वर्णनम् ।

अन्यत्र बहुषु विषयेष्विवाऽत्राऽपि श्रीभाष्यकारादयः प्राभाकरसिद्धान्तमेव अनुवर्तन्ते । अत्र बृहतीऋजुविमलाप्रकरणपञ्चिकास्सामान्यतो विशेषतश्च प्रमाणस्वरूपनिश्चयात्पूर्वममुं विचारमुपस्थापयन्ति ।

## अमृतकलाया विषयः ।

ततोऽमृतकलाख्यं पञ्चमं प्रकरणम्, अस्यैव विस्तरात्मकं व्याख्यानात्मकं वा षष्ठं प्रमाणपारायणं नाम । मीमांसाशास्त्राख्यस्य समुद्रस्य मथितस्य प्रधानतमो रसस्तस्याऽमृतकलेति समाख्या । अत्राऽनुसन्धेयेयं प्रकरणपञ्चिका—

"मीमांसाजलराशेरशेषनयरत्ननिकषनिजधाम्नः ।
इति शालिकनाथ इमाममृतस्य कलामुदाहरद्धीरः" ।। इति ।

## अमृतकलायास्स्थानसमीक्षा—

तत्र पण्डितपत्रे चौखम्बाग्रन्थमालायाञ्च प्रकाशितायां प्रकरणपञ्चिकायां पञ्चमं स्थानं प्रमाणपारायणस्य, षष्ठं स्थानममृतकलाया वितीर्णम् । अमृतकलोपक्रमावसरे सम्पादकेन श्रीविट्ठलशास्त्रिणा प्रमाणपारायणस्य समासभूतमिदं प्रकरणमित्युट्टङ्कितम् । इदञ्च संस्करणममृतकलायाः प्रमाणपारायणप्रकरणसमासरूपाया अपि व्याख्यानव्याख्येयभावमवलोक्य वस्तुगत्या मूलमूलिभावमुभयोर्निश्चित्य प्रथमं स्थानममृतकलायाः, द्वितीयन्तु स्थानं प्रमाणपारायणस्य वितरति ।

तत्राऽमृतकलायां प्रमाणपरायणे च मीमांसकदृष्ट्या समास-व्यासाभ्यां तत्तद्दर्शनान्तरप्रक्रियासमीक्षापूर्वकं पञ्च प्रमाणानि प्रत्यक्षानुमानशास्त्रोपमानार्थापत्तिरूपाणि परीक्षितानि ।

## प्रमेयापेक्षयैव प्रमाणान्तरत्वव्यपदेशः ।

अत्र साक्षात्प्रतीतिः प्रत्यक्षमिति प्रत्यक्षलक्षणं स्वप्रकाशज्ञानप्रत्यक्षाभिप्रायेण । जन्यप्रत्यक्षं तु बाह्यान्तरविषयाणां सत्सम्प्रयोगसूत्रसिद्धमिन्द्रियार्थसन्निकर्षजन्यत्वप्रयुक्तमेव । तत्र नैयायिकादिवत् ज्ञानस्य व्यवसायानुव्यवसायभेदानङ्गीकारात् । सर्वं ज्ञानमनुव्यवसायात्मकमेवोत्पद्यत इति साक्षात्प्रतीत्यात्मकज्ञानसम्बन्धप्रयुक्तं तु प्रत्यक्षत्वं ज्ञातृज्ञानज्ञेयानां साक्षात्प्रतीत्यैव । सत्सम्प्रयोगसूत्रं तु मेयांशमात्रस्य प्रत्यक्षत्वमभिप्रेत्य, तत्र जडस्याऽप्यात्मनो मेयविलक्षणं प्रत्यक्षत्वं साक्षात्प्रतीत्यैव निर्वहति ।

## निरालम्बनवाद-शून्यवादविषये प्रो. ए. बि. कीत् महोदयस्य मतानुवादः ।

शाबरभाष्य—बृहतीटीकयोरुपन्यस्य निराकृतौ निरालम्बनवाद-शून्यवादौ विज्ञानवादिनो योगाचारस्यैव, न तु माध्यमिकस्येत्ययं विषयो भाट्ट-प्राभाकरमीमांसकानामुभयेषां समानः । परन्त्वत्र शाबरभाष्ये वृत्तिकारग्रन्थ उपक्षिप्तं निरालम्बन-

वादं शून्यवादञ्च सङ्गृह्णानः प्रो० कीथ्महाशयो लिखति—सोऽयं वादो द्विभागो भवति। तत्राऽऽद्यः—प्रत्यया निराधारा निरालम्बना (Have no foundation) इत्याक्षेपनिराकरणपरः। द्वितीयो बाह्यार्थशून्य इत्येतन्निराकरणपरः। द्वावप्येतौ सर्वशून्यवादिनामाक्षेपा ( क० मी० पृ० ४६ ) विति।

## तन्निरासः

निरालम्बन इत्यत्राऽऽलम्बनपदं [Foundation] इति व्याचक्षाणस्य कीत्-महाशयस्याऽभिप्रायं न विद्मः। निरालम्बनो बाह्यालम्बनशून्यः इत्येव तदर्थ इति। म० म० झेपाह्वा गंगानाथशर्माणश्श्लोकवार्तिकभाषानुवादे 'परः प्रत्यवतिष्ठत' इतीदं Another Scion of the Bauddha comes forward (S. V. T. P. 148 ) इत्यनुवदन्ति। वस्तुतस्तु तत्र पर इत्यस्य पूर्वस्मादन्य इति नाऽर्थ; किन्तु प्रतिपक्षीत्येव तदर्थः। झोपाह्वगङ्गानाथशर्मणामनुवाद एव कीत् महाशयस्य भ्रमगर्तनिपतने निदानमिति सूरिभिर्ज्ञेयम्। पूर्वोक्तरीत्येदं द्वयमपि निराकृतं वेदितव्यम्। अत्रत्यो विशेषस्तु टिप्पण्यां ( प्र० पं० पृ० १९६ ) द्रष्टव्यः।

## कीत्महोदयस्य संवित्प्रकाशविषये मतानुवादः

प्रो० ए० बी० कीत् महोदयः प्रमाणप्रस्तावे प्रत्यक्षपरिच्छेदान्ते प्रभाकर-मतमुपक्रम्य लिखति–the mode in which cognction is known is inference ( Karma mīmāmsā Page 20 ) संविदो ग्रहणमनुमानेनेति तदर्थः—इति।

## तन्निरासः

अत्र वयं ब्रूमः—प्रभाकराभिमतं संविदां स्वयम्प्रकाशत्वं प्रोफेसर्महाशयेन न सम्यग्गृहीतमिति। यतोऽयं स्वयमेव पूर्वं संविदां स्वयम्प्रकाशत्वमभिधत्ते ( which is self illumined ) इति वदन्। ततोऽनुमेयत्वमाह, तन्नितरां परिहासास्पदम्। प्रोफेसरमहोदयस्येदृशभ्रान्तेः किं कारणमिति चिन्तयन्तो वयं यत्प्रकरणपञ्चिकायां शालिकनाथो ब्रवीति—"अपि च ज्ञानमनुमेयमिष्यते" ( पृ० १८८ ) इति। तदेवेति कथनमेवेति मन्महे। संविदां स्वयम्प्रकाशत्वमुप-पादयितुं भाष्यस्थतया युक्त्यन्तरमुपवर्णयन् शालिकाचार्य एवमुक्त्वा ज्ञानपदस्य कोऽर्थ इत्यनुक्त्वैवाऽनुमेयस्य ज्ञानस्यऽनुमापकमर्थज्ञानम्, तस्य स्वयम्प्रकाशत्वं विना ज्ञानानुमापकत्वं न सम्भवतीति स्वाभिमतं संविदां स्वयम्प्रकाशत्वं प्रसाध्य, नन्वेवं संवित्पदाभिधेयस्य ज्ञानस्य स्वयम्प्रकाशत्वेऽनुमापकत्वे च ज्ञानमनुमे-यमिति कथमभिधीयते। न खल्वेकमेव स्वप्रकाशमनुमेयञ्चेति युक्तम्। न खल्वेकस्यैव स्वयम्प्रकाशत्वमनुमेयत्वञ्चेतीमां शङ्कां पराणुदन्निदमाह "किन्तर्ह्यनु-मीयते, ज्ञानम्। ननु न तत्संविदस्स्वयम्प्रकाशाया भिन्नमुपलभ्यते। सत्यम्, अत एवाऽनुमीयते। ननु किन्तदिति न विद्मः। संविदुत्पत्तिकारणमात्मम-नस्सन्निकर्षाख्यं तदित्यवगम्य परितुष्यतामायुष्मते" [ प्र. पं. पृ. १८८–१८९ ] ति।

तत्राऽनुमेयतयोक्तं ज्ञानं ज्ञायतेऽनेनेति व्युत्पत्त्याऽऽत्ममनस्सन्निकर्ष इति पञ्चिकाकारो मन्यते। अतो न संविद्रूपस्य ज्ञानस्याऽनुमेयत्वमिति प्रघट्टकार्थः। विस्तरस्तु तत्र टिप्पण्यां द्रष्टव्यः।

## अनुमानविषयनिरूपणम्।

तत्र व्यतिरेक्यनुमानं स्वतन्त्रं प्रभाकरेण नाऽङ्गीक्रियते। कारणन्तु तत्र व्यतिरेक्यनुमानसाध्यं फलमर्थापत्तिरेव साधयति। तथाऽनुमाने परार्थे त्रय एवाऽवयवाः, प्रतिज्ञाहेतूदाहरणानि, उदाहरणोपनयनिगमनानि वा स्वीक्रियन्ते, न तु प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चाऽवयवाः। साधर्म्योदाहरणमेव, न वैधर्म्योदाहरणम्। तेन च व्याप्तिज्ञानसहकृतपक्षधर्मताज्ञानमेव कारणम्, न तु तृतीयलिङ्गपरामर्शोऽपि।

हेत्वाभासेषु-बाधकार्यं प्रबलेन स्वविरुद्धानुमानान्तरेण निर्वहतीति न पृथक् सत्प्रतिपक्षस्य हेत्वाभासत्वमित्यादयो बहवो विषया मीमांसकाभिमताः प्रकरणपञ्चिकायां विवेचिताः।

## शास्त्रपरिच्छेदस्य विषयः।

अस्मिन् परिच्छेदे शास्त्रस्याऽलौकिककार्थप्रतिपादकत्वेन प्रामाण्यं व्यवस्थाप्यते शालिकनाथेन। नैयायिका भाट्टमीमांसकाश्च शब्दत्वेन लौकिक-वैदिकवाक्यानां प्रामाण्यमातिष्ठन्ते। वैशेषिकास्तूभयेषामनुमानविधया प्रामाण्यमूरीकुर्वन्ति। प्राभाकरमीमांसकास्तु शास्त्रस्य शाब्दविधया प्रामाण्यम्, लौकिकशब्दानामनुमानविधया प्रामाण्यमिति पन्थानं तृतीयमेवाऽभ्युपगच्छन्तीति विशेषः।

## शास्त्रप्रामाण्यसमर्थनम्।

तत्राऽभिहितान्वयवादान्विताभिधानवादयोर्विध्यर्थस्य भावनापरत्वे नियोगपरत्वे च दर्शनान्तराणीव प्रक्रियाभेदं स्वतन्त्रं सङ्गृह्णत् प्राभाकरप्रस्थानमभिप्रैति वेदत्वापरपर्यायेण शास्त्रत्वेन शब्दानां प्रामाण्यमिति।

तत्र वेदवाक्यानामलौकिकार्थबोधकत्वेनैवाऽपौरुषेयत्वं प्रधानातमोऽवष्टम्भः, न तु भाट्टमत इव पूर्वोत्तरावधिराहित्यरूपम्। वेदपौरुषेयत्वे हि लौकिकवाक्यानामिव वैदिकवाक्यानामप्यनुमानविधया प्रामाण्यं स्यादिति तदीयहृदयम्। अतो यदि शाब्दवादस्समादरणीयः, तर्हि पौरुषेयत्वमेव वेदानां शरणम्। तत्पौरुषेयत्वे तु वैशेषिकाणामिव नैयायिकानामप्यनुमानविधयैव प्रामाण्यसम्भवात् व्यर्थं पार्थगर्थ्येन शब्दप्रामाण्यसमर्थनम्।

यदि वेदप्रामाण्यं मुख्यं न लभ्यम्। तत्र वेदवाक्यानामीश्वरप्रणीतत्वेन प्रामाण्यवादस्तु यदीश्वरस्यैवाऽऽप्तत्वेन, तर्हि—

"तीर्थकृत्समयानाञ्च परस्परविरोधतः
सर्वेषामाप्तता नाऽस्ति कश्चिदेव भवेद्गुरुः॥

"सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा।
तावुभौ यदि सर्वज्ञौ मतभेदः कथं तयोरि" (अ. सा. पृ. ५) ति-

विद्यानन्दोक्तकुमारिलोक्तिरीत्या कथं भवतोऽपि स्वातन्त्र्ये वेदानां प्रामाण्यम्। अत एव कुमारिलोऽपि—

"यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता"।
"सर्वज्ञवन्निषेध्या नः स्रष्टुस्सद्भावकल्पने"। ति च वदन्

स्रष्टारमीश्वरम्, तस्य वेदे स्वातन्त्र्यञ्च न्यासेधति। अतो लौकिकवाक्यानां प्रामाण्यं न तथा लक्ष्यं दार्शनिकानां, यथा वैदिकवाक्यानाम्। अतश्शास्त्रमात्रप्रामाण्यवादः प्रभाकरस्यैव मुख्यः। अत एव वाक्यत्वेन लौकिकवाक्यानामपि प्रामाण्यस्वीकारपक्ष एव हि "वेदवाक्यं पौरुषेयं वाक्यत्वादि"त्यनुमानस्याऽवसरो भाट्टमतेऽपि। प्राभाकरमते तु नाऽस्याश्शङ्काया उत्थितिरपि।

## शास्त्रप्रामाण्यवादिनां प्रभाकरसिद्धान्ताश्रयणमेव गतिरिति कथनम्।

विध्यर्थो नियोग एव, न भावना, अथवा भावनैव विध्यर्थः, न नियोग इति प्रभाकरकुमारिलसिद्धान्तावपि शास्त्रप्रामाण्यनिबन्धनावेव। वैदिकसिद्धान्तानां सर्वेषामप्रकम्प्यत्वे तज्जीवातुः प्रभाकर एव गतिः। अतस्तत्तत्सम्प्रदायविशेषमात्रपूर्वकत्वेन भावनावादे नियोगवाक्यार्थवादे वाऽभिनिवेशस्तेषु तेष्वाचार्येष्वेव श्रद्धामात्रनिबन्धन इति, यावत्प्राधानलक्ष्याविरोधे स्वस्वसम्प्रदायाचार्यमात्रे सर्वेषां दार्शनिकानां वाक्यमात्रप्रामाण्यवादिनां नियोगवाक्यार्थतामवष्टभ्य प्रभाकरगुरोरुपर्याक्रमणं केवलं शिवद्रोहे तात्पर्येणैवेतिन्यायमनुकरोति, तत्राऽपौरुषेयत्वविधयैव वाक्यप्रामाण्यवादिनाम्। वेदाप्रामाण्यवादिनाञ्च प्रज्ञाकरगुप्तस्य नियोगवाक्यार्थतावादस्यैकादशधा विकल्पनेन निरसनं प्रमाणवार्तिकभाष्ये, श्रीविद्यानन्दकृताष्टसाहस्र्याञ्च स्वसिद्धन्तविरोधिवेदप्रामाण्मात्रनिरासार्थतया स्वस्वागममात्रसमर्थनलक्ष्यतया च कथञ्चिच्छक्यसमर्थनम्।

## कौमारिलप्रस्थानानुयायिभिरुम्वेकादिभिः प्रभाकरमतनिरसनमयुक्तमिति कथनम्।

इदमेवाऽत्र चित्रम्—वेदप्रामाण्यसमर्थनं कौमारिलमेव मतं स्वीयं मतमिति कृत्वा वेदप्रामाण्यरक्षणाप्रतमस्य प्रभाकरस्योपरि व्यर्थमाक्रमणमुम्वेकादीनामिति। सौगतादयोऽन्ये दार्शनिका मीमांसकमतं निरस्यन्तः प्राभाकरमतमिव कुमारिलमतमपि निरस्यन्ति।

तथा चोक्तम्—

"भावना यदि वाक्यार्थो नियोगो नेति का प्रमा।
तावुभौ यदि वाक्यार्थौ हतौ भट्टप्रभाकरावि"ति
"कार्येऽर्थे चोदनाज्ञानं स्वरूपे किं न तत्प्रमा।
द्वयोश्चेद्धन्त तौ नष्टौ भट्ट-वेदान्तिनाविति" (अष्टसा. पृ. १०, ११)।

तत्र नियोगार्थवादं दूषयत् प्रमाणवार्तिकभाष्यम्, अष्टसाहस्री च तत्रैकादशधा विकल्प्य, नियोगवाक्यार्थवादं निरस्यति। एवं निरस्यन्त्यष्टसाहस्री भावनावाक्यार्थवादमपि निरस्यति। तद्यथा—

"तत्र (१) कार्यं, (२) प्रेरणा, (३) प्रेर्यमाणं कार्यम्, (४) कार्यसहिता प्रेरणा, (५) कार्यस्य प्रवर्तकत्वमात्रम्, (६) कार्यप्रेरणयोस्सम्बन्धः, (७) कार्यनियोगप्रेरणादिसमुदायः, (८) नियोगस्वरूपमात्रम्, (९) भोग्यम्, (१०) नियोज्यपुरुषमात्रम्, (११) कार्यविशिष्टः पुरुष इति।

## विकल्पपरिहारः।

विकल्पितेष्वेकादशसु प्रकारेष्वलौकिकोऽपूर्वपदाभिधेयः कार्यरूपो नियोग एव वाक्यार्थः। यदवगमसिद्धमानुषङ्गिकमेव प्रेरणादि, पुरुषश्च। नियोज्यतया कर्तृतया चाऽनुषङ्गिकः पुरुषस्याऽन्वयवः। प्रमेयत्वं हि तस्य यजेतेत्यादिवाक्यप्रमाणगम्यत्वेन। न च वाक्यमेव नियोगः, येन तस्य प्रमेयत्वं न स्यात्। तत्र नियोगवाक्यार्थता तस्याऽलौकिकत्वमप्रामाण्यञ्च मत्वैव सर्वैरपि परास्यते। अलौकिकत्वन्तु तस्याऽपौरुषेयशास्त्रप्रमाणैकगम्यत्वेन। तत्र सौगतैर्यद्यप्रामाणिकं सर्वज्ञत्वमूरीकृत्य तदागमोक्तानां धर्मत्वं मन्यते, तस्यैव प्रामाण्यं मत्वा, तर्हि वैदिकैः किमपराद्धम्, ये वेदमपौरुषेयं प्रमाणं मन्यन्ते।

उक्तञ्च तैरेव—

"सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा।
तावुभौ यदि सर्वज्ञौ मतभेदः कथन्तयोः"॥ इति।

सुगतसर्वज्ञत्वमपि न सम्प्रतिपन्नमस्तीदमेवाऽभिप्रेत्य कुमारिलस्सम्बन्धाक्षेपपरिहारप्रकरणे सर्वज्ञत्वं सुगतस्य सप्रपञ्चं निरस्यति तथाऽन्यत्राऽपि। तद्यथा—कौमारिलानामन्येषाञ्च नियोगस्याऽलौकिककत्वनिरासे। अयमेव न्यायो वैदिकानां दार्शनिकानां मण्डनमिश्रोम्वेक-वाचस्पतिमिश्रसुचरितमिश्र-पार्थसारथिमिश्रप्रभृतीनामपूर्ववाक्यार्थत्वप्रत्याख्यानेऽपि मन्तव्यः।

## भट्टमतानुयायिनां मण्डनमिश्रादीनामनैकमत्यप्रतिपादनं।

तत्र मण्डनमिश्रः कुमारिलपक्षपातित्वमात्मनो मन्यमानः, तदनुयायी पार्थसारथिमिश्रश्च कुमारिलानभिमतं लिङर्थमिष्टसाधनत्वम्, इष्टसाधनत्वेन प्रवर्तनां वा मन्येते। इदञ्च "पुंसो नेष्टाभ्युपायत्वादि"त्यादिविधिविवेकपद्येन, [ वि. वि. पृ. २४३ ] "इदन्तु न्यायविदां मतमि"त्यादि न्यायरत्नमालासन्दर्भेण [ न्या. र. मा. पृ. ८३ ] च विशद एव। अन्ये तु कौमारिलमतानुयायिनो भट्टसोमेश्वर-खण्डदेवादयो भावनावाक्यार्थतामातिष्ठन्ते। तत्राऽपि मण्डन–पार्थसारथी तु प्रस्थानान्तरमेव प्रस्थापयतः, भट्टसोमेश्वरो लौकिकवाक्यवैलक्षण्यं वैदिकवाक्यानां समर्थयितुमलौकिकीं प्रेरणामेव लिङर्थमाहेति लिङर्थवादे नैकान्तः कौमारिलानां केषामपि।

## गुरुमतानुसारिणां विध्यर्थे ऐकमत्यमिति निरूपणम् ।

नैवमनेकान्तः प्राभाकरसिद्धान्ते, यत्र नियोग एव वाक्यार्थः। नियोगवाक्यार्थवादे वाक्यानां प्रमाणान्तरानपेक्षं प्रामाण्यं प्राभाकरैर्मन्यते। तन्निरसनन्तु मण्डनमिश्रादिभिर्भवदेवभट्टपर्यन्तैर्नियोगपरत्वेनैव लिङ्घटितवाक्यानां प्रामाण्यस्वीकारे "चैत्यवन्दनं कुर्यादि"त्यादिवाक्यनामपि प्रामाण्यापत्त्या निरस्यते। इदञ्च लौकिकवाक्यानां प्रमाण्यस्वीकारे सत्यमुपपद्येत। परन्तु प्राभाकरमते लौकिकवाक्यानां प्रामाण्यास्वीकारात्। अलौकिकस्याऽपूर्वस्यैव तदर्थत्वाच्च नैतद्दूषणमुपतिष्ठते। लिङर्थस्याऽपूर्वत्वमलौकिकम्, तच्च लौकिकवाक्यघटकलिङर्थस्य बाधितम्—इति ।

## नियोगस्यैव धर्मपदार्थत्वमिति निरूपणम् ।

सम्प्रतिपन्नमिदं चोदनार्थस्य वेदार्थस्य वा धर्मत्वमिति। तत्राऽपूर्वं नियोगो वा धर्म इति प्राभाकराः। अपूर्वद्वारा फलसाधनं यागो धर्म इति भाट्टा इति पूर्वमवादिष्म। तत्रोत्तरमीमांसायां फलसाधनत्वं प्रसादद्वारा नेश्वरस्य, इति पूर्वपक्षे "धर्मं जैमिनिरत एवे"ति सूत्रे धर्मस्य फलसाधनत्वं जैमिनिमतेनोपक्षिप्तम्। इदन्त्वपूर्वस्य धर्मत्वपक्षे स्वरसमुपपद्यते।

## श्रुतार्थापत्तिनिरासः ।

तत्राऽपूर्वमिदं "चोदना पुनरारम्भः" इति सूत्रेण साक्षाच्चोदनार्थं इति प्राभाकराः। भाट्टास्तु यागस्य स्वर्गसाधनत्वश्रवणान्यथानुपपत्त्याऽऽर्थत्वात्तत्प्रमाणमङ्गीकृत्येति वदन्ति। एतदर्थमेव भाट्टानां श्रुतार्थापत्तिस्वीकारः। गुरुवस्तु चोदनया साक्षाच्छ्रुत्यैवाऽपूर्वं बोध्यत इति तदर्थं श्रुतार्थापत्तिमपरां नाऽभ्युपगच्छन्ति ।

## उपमानपरिच्छेदस्य विषयः ।

प्रमाणेषूपमानाख्यं प्रमाणं भाट्टा इव प्राभाकरा अपि स्वीकुर्वन्ति। उपमानस्य प्रमाणान्तरत्वाभ्युपगमस्सादृश्यस्य पदार्थान्तरत्ववादिनां प्राभाकराणामेव सप्रयोजनः। विशेषस्तु टिप्पण्यां द्रष्टव्यः।

## अर्थापत्तिपरिच्छेदस्य विषयः ।

दृष्टार्थापत्तिरेकैवाऽङ्गीक्रियते न तु श्रुतार्थापत्तिरपि। गमकस्य निश्चितत्वसन्दिग्धत्वाभ्यामनुमानार्थापत्त्योर्वैलक्षण्यम्। अर्थाध्याहार एवेष्यते, न तु शब्दाध्याहारः, विशेषस्तु टिप्पणीतो [प्र. पं. २७८–२८१] अवगन्तव्यः।

## अभावविषये गुरुमतम् ।

अभावस्य पृथक्प्रामाण्यानङ्गीकारस्तु तद्विषयस्याऽभावस्याऽधिकरणातिरेकेण पृथक्पदार्थत्वानङ्गीकारनिबन्धनः। अधिकन्तु प्रकरणपञ्चिका–टिप्पण्योर्द्रष्टव्यम् ।

## विमलाञ्जनमिति नामनिर्देशे हेतुकथनम् ।

एवं प्रत्यक्षसूत्रपर्यन्तविषये प्रतिपादिते शब्दार्थसम्बन्धनित्यत्वसाधनाय विमलाञ्जनं नाम सप्तमं प्रकरणम् । तन्नामत्वे—

"दुस्तर्कतिमिरं भेत्तुं शिष्याणां दृष्टिरोधकम् ।
इदं शालिकनाथेन विहितं विमलाञ्जनम्" ।। इति

प्रकरणपञ्चिकायां शिष्यदृष्टिनिरोधकतिमिरभेदनसामर्थ्यंनिमित्तं स्वयं शालिकनाथेन प्रतिपाद्यते । ऋजुविमलायां "व्यवहारानादित्वस्य विमलाञ्जने स्थापितत्वादि"[ २–१–१ ]ति धर्मपुरीरामानुजाचार्यकृते तन्त्ररहस्ये, प्रकरणपञ्चिकाया मातृकाभेदेषु च विमलाञ्जनमिति परामर्शाच्च प्रकृतं संस्करणं विमलाञ्जननाम्नेदं प्रकरणं निर्दिशति ।

## विमलाञ्जनस्य प्रतिपाद्यविषयः ।

अत्र लौकिकानां वैदिकानाञ्च पदानामर्थेन सम्बन्धोऽपौरुषेय इति निर्णीयते । तत्र लौकिकेषु पदेषु तन्निर्णयस्य फलमनुमानविधया पदानां प्रामाण्य उपयुज्यते । वैदिकेषु तु पदेषु पदार्थांश इव तदन्वयांशेऽपि तेषां व्यापारात्, एकत्र पौरुषेयत्वमपरत्राऽपौरुषेयत्वमिति वैरूप्यायोगात्, अन्वयांश इव पदार्थांशे पदस्य सम्बन्धोऽपौरुषेय इति व्यवस्थापनीयम् । अतोऽनेन प्रकरणेन पदपदार्थसम्बन्धोऽपि भूमिकारूपेणाऽपौरुषेय इति व्यवस्थाप्यते ।

## सम्बन्धापौरुषेयत्वनिरूपणस्य फलकथनम् ।

इदञ्च वैदिकवाक्यमात्रप्रामाण्यमात्र पक्ष एव उपपद्यते, येन पदपदार्थयोरिव पदतदन्वययोरपि बाधसम्भावना तत्प्रयुक्तदोषसम्भावना वा वैदिकेषु वाक्येषु वार्यत इति वैदिकवाक्यानां द्रागेव प्रवर्तकत्वं, लौकिकवाक्यानान्तु विलम्ब्य प्रवर्तकत्वमिति फलति । तेन "चाऽम्नायस्य गतिं वक्तुं प्रभवामः, न त्वाम्नायं पर्यनुयोक्तुमिति" न्यायो निर्णीयते ।

तत्र यद्यपि वेदापौरुषेयत्वाधिकरणेनैवेदं लभ्यते, तथाऽपि क्रमविशेषविशिष्टपदानामेव वेदत्वात् मूलत एवाऽप्रामाण्यशङ्का दूरीक्रियते । अन्यथा स्वतःप्रामाण्यवादेऽपि बौद्धाद्यागमानां पौरुषेयत्वस्वीकारात् तेष्विव वेदेष्वपि पौरुषेयत्वे बाध-तत्प्रयुक्तदोषसम्भावनया निष्कम्पप्रवृत्तिजनकत्वं न स्यात् । अतश्शब्दार्थयोस्सम्बन्धस्वरूपमस्मिन् प्रकरणे सुष्ठु विवेचितम् , टिप्पण्याञ्चाऽवशिष्टमुपबृंहितम् ।

## ईश्वरविषये मीमांसकमतम् ।

अत एवेश्वरस्याऽपि शब्दार्थसम्बन्धे, वेदवाक्यप्रवर्तने वा न स्वातन्त्र्यमिति मीमांसकानां प्रस्थानद्वयमपि मनुते । मीमांसका हि तार्किकवदानुमानिकमीश्वरं जगत्सृष्ट्यादाविव तदन्तःपातित्वात् वेदानां, वेदेष्वपि स्वातन्त्र्यं

तस्य माभूदिति कृत्वैव तत्र तत्र निरस्यन्ति। जगत्सृष्ट्यादेः कर्मजन्यपूर्व-परिणामवादेनाऽपि "न कदाचिदनीदृशं जगत्" इति न्यायेन निर्वाहे,

"सर्वज्ञवन्निषेध्या च स्रष्टुस्सद्भावकल्पना" सं. श्ला. परि. [११३-११४]

इत्यादिवार्तिकैर्विशदीक्रियते। अतो यदि जगत्सृष्ट्याद्यर्थमपीश्वर ऊरीकरणीयः, तर्हि—

"स्यात्तत्पूर्वकता चाऽस्य चैतन्यादस्मदादिवत्"। इति

वार्तिकोक्तरीत्या श्रुतिमूलकत्वेनैवेश्वरवादस्समर्थनीयः। किम्बहुना "अस्य महतो भूतस्य निश्वसितमेतत् ऋग्वेदो, यजुर्वेदस्सामवेद [बृ-उ-] इत्यादिश्रुत्या भगवतश्श्वासनिःश्वासरूपा वेदा इति प्रतीयते। तत्र यथा जीवराशीनां श्वासनिःश्वासाद्यभावे केवलं प्रेतभावः, एवं विना वेदान् ईश्वरस्याऽपि प्रेतभाव एवेति। ईश्वरस्य प्राणदातरि वेदे कथन्नामेश्वरस्य स्वातन्त्र्यमित्येवं साम्प्रतिकी विमलाञ्जनपरीक्षा वरीवर्ति।

## तत्वालोकस्य प्रतिपाद्यविषयः।

औत्पत्तिकसूत्रव्याख्यानावसरे शबरस्वामिना प्रतिपादितमात्मस्वरूपं तत्त्वालोके प्रकरणे शाबरभाष्ये वृत्तिकारपक्षेणोपक्षिप्तं बुद्धीन्द्रियदेहादिव्यतिरिक्तमात्मतत्त्वं त्रिपुट्यात्मना भासमानेषु सर्वेषु ज्ञानेष्वाश्रयतयैव भासमानं तत्तद्वादनिरसनद्वारा सुष्ठु व्यवस्थापयति शालिकनाथः। यथा—

"आत्मतत्त्वे बहुविधा विवादास्सन्ति वादिनाम्।
वयं प्राभाकरास्तत्त्वनिर्णयाय यतामहे"॥ इति

स्वयं वदति। तत्र शरीरेन्द्रियाद्यात्मवादाश्चार्वाकाणां पौराणिकानामन्येषां वा तेषां तेषां दृष्ट्येति टिप्पण्यां सुष्ठूपपादिताः।

## मोक्षविवेचनम्।

मोक्षवादप्रसङ्गे ब्रह्मसिद्धिकारमतमनूद्य निरस्य च प्रकरणपञ्चिका "निश्शेषधर्माधर्मपरिक्षयनिबन्धनो देहोच्छेदो मोक्षः" इति स्वीयं सिद्धान्तं सौगताद्वैतवादादिमतान्तरनिरासपूर्वकं सविस्तरमुपपादयति।

तत्र मोक्षसाधनं कर्मयोगसहकृतं विशुद्धात्मतत्त्वज्ञानं न तत्त्वंपदार्थज्ञानमित्यादि भूमिकायामिव ग्रन्थशरीरेऽपि टिप्पण्यादौ व्यक्तम्। अस्य प्रकरणस्य मूलमात्मवादगतं शाबरं भाष्यं तट्टीकाऋजुविमलादीनि च।

## न्यायशुद्धेः प्रतिपाद्यविषयः।

अथ नवमं प्रकरणं न्यायशुद्धिर्नामेति। अत्र शब्दनित्यत्वविषयश्शब्दाधिकरणविचारो न्यायुशुद्ध्यभिधानेऽस्मिन् प्रकरणे क्रियते।

"एषा शालिकनाथेन शब्दनित्यत्वसाधिनी।

प्रभाकरगुरोर्दृष्ट्या न्यायशुद्धिः प्रकीर्तिता"॥ इति प्रकृतप्रकरणोपसंहारादवगम्यते। इदमपि प्रकरणं विमलाञ्जनप्रकरणोक्तरीत्या वक्ष्यमाणवाक्यार्थमातृकाप्रकरणोक्तरीत्या च वेदवाक्यप्रवर्तने शब्दार्थसम्बन्ध इव च शब्देऽपि न कस्याऽपि, किं बहुनेश्वरस्याऽपि न स्वातन्त्र्यमिति निश्चिनोति।

अत्र भाट्टा इव प्राभाकराश्शब्दं नित्यं मन्यन्ते, किन्त्वाकाशधर्मं नित्यगुणञ्चेति। तत्र भाट्टमतरीत्या नित्यत्वमात्रम्। नैयायिकदृष्ट्या गुणत्वञ्च शब्दस्य प्राभाकरे सिद्धान्ते, "आकाशश्च शब्दवान्, स एव श्रोत्रं तद्गुणश्च शब्दः" [प्र. पं॰ पृ. ३५०] इति।

अस्य लक्ष्यन्तु शालिकनाथस्य प्रभाकरस्येव प्रधानतमं "संयोगाद्वा विभागाद्वा शब्दाद्वा शब्दनिष्पत्तिरि"ति वैशेषिकपक्षनिरसनम्, "वायुरापद्यते शब्दतामि"ति शिक्षाकारमतनिरसनञ्च। नित्यश्शब्दो वर्णात्मको ध्वनिनाऽभिव्यज्यत इति भाट्टसिद्धान्त इव प्राभाकरसिद्धान्तोऽपि। अन्यत्तु सर्वं ग्रन्थशरीरे टिप्पण्याञ्च व्यक्तम्। एतन्मूलमपि बृहत्यादिकमेव।

## मीमांसाजीवरक्षायाःप्रतिपाद्यनिरूपणम्।

दशमं प्रकरणं मीमांसाजीवरक्षाख्यं क्षणिकत्वनिराकरणपरम्।

"प्रभाकरगुरोर्भावं परिभाव्याऽभिधीयते।

मीमांसाजीवरक्षेयं क्षणिकत्वनिराक्रिया"॥ इत्युपक्रमे शालिकनाथस्सकारणनिर्देशं प्रस्तौति।

## त्रुटितांशपूरणम्।

इदन्तु प्रकरणं कियतैकपृष्ठपरिमितेन सवृत्तिकाया वाक्यार्थमातृकायाः द्वितीयपरिच्छेदगतेत केनचनांऽशेन साकं प्राकाशि पण्डितपत्रे पं॰ विट्ठलशास्त्रिभिः। चौखम्बाग्रन्थमालया प्रकरणपञ्चिकाप्रकाशनावसरे तदेव संस्करणमन्वकारि। पश्चात्तु चौखम्बाग्रन्थमालैव पं॰ बालशास्त्रिमहाशयगृहात् प्राप्तं मीमांसाजीवरक्षाया वाक्यार्थमातृकायाश्च पूर्वस्मिन् प्रकरणे लुप्तमंशं सङ्गृह्य पृथक् प्रकाश्य सर्वं पण्डितकुलमधमर्णीचकार।

इदन्तु संस्करणं चौखम्बाग्रन्थमालायाः पृथक् प्रकाशितां क्षुद्रां पुस्तिकामपि ऐशियाटिकसोसैटीपुस्तकसाहाय्येन यथास्थानं विन्यस्य सम्पूर्णां प्रकरणपञ्चिकां प्रियपाठकानुपहरति।

अस्य प्रकरणस्य लक्ष्यं सौगतसम्मतक्षणिकवादनिराकरणम्, जातिव्यक्त्यादीनां भेदाभेदवादनिरसनेन भेदसमर्थनञ्च। अस्याऽपि मूलं भाष्य-बृहती-टीका-ऋजुविमलादिकमित्यनुसन्धेयम्। अनेन प्रकरणेन कर्ममीमांसाया अपि रक्षा भवतीत्यस्यैव प्रकरणस्योपसंहारगतात्—

"सुगताशीविषविषमक्षणभङ्गविषानलावलीढायाः ।
मीमांसाया विहिता मर्ममयी जीवरक्षेयमि" ।। ति पद्यादवगम्यते ।

## सवृत्तिकाया वाक्यार्थमातृकाया विषयः ।

वाक्यार्थमातृकेति समाख्याऽस्य प्रकरणस्य—
"वाक्यार्थमातृकेयं प्रभाकरगुरोर्मतानुसारेण ।
अनुसूयुबोधनार्थं शालिकनाथेन सङ्ग्रथिते" ।। ति शालिकनाथेनैवैतत्प्रकरणोपसंहारे निर्दिश्यते । वाक्यार्थः प्रवर्तकवेदवाक्यगम्यं कार्यमेवेति न केवलं चोदनासूत्रे बृहत्या, किन्तु प्रकरणपञ्चिकयाऽपि (पृ० ४४०) "अत्रैषा प्रक्रिये"ति प्रकरणार्थसङ्ग्रहेण ज्ञाप्यते । अत्र वाक्यार्थमातृकेति शब्दप्रयोगादवगम्यते-सर्वेषामपि प्राभाकरसिद्धान्तानां मातृस्थानीयं प्रकरणमिदमिति ।

अत्र परिच्छेदद्वयमस्ति—तत्राऽद्यः परिच्छेद उपोद्घातरूपः । तत्राऽभिहितान्वयवादं शाब्दिकसम्मतस्फोटवादञ्च सपरिकरमुपपाद्य तन्निरसनपूर्वकमन्विताभिधानवादस्सयुक्तिकं समर्थितः, सूत्रं भाष्यञ्च तदानुगुण्येनाऽयोजि । द्वितीये सर्वाख्यातानां भावनावाचित्वं कुमारिलभट्टसम्मतशब्दभावनापरपर्यायप्रेरणालिङर्थवादं मण्डनमिश्राभिमतमिष्टसाधनतालिङर्थवादञ्च पराणुद्य, वैदिकलिङादेरलौकिके नियोगापराभिधाने कार्ये शक्तिर्वेदवाक्यविमर्शेन जायते, लोके क्रियाकार्ये लक्षणेति कार्यलिङर्थतावादस्सोपष्टम्भं समर्थितः । यदेवोपजीव्य नीतिपथ-नयवीथ्यमृतकला-प्रमाणपारायणप्रकरणान्यात्मानं लभन्ते । तत्र लिङर्थोऽपूर्वमिति व्यवस्थाप्यते । वाक्यार्थमातृकायामितरान्वितलिङर्थबोधस्य व्यवस्थापनादुभयोरप्युपजीव्योपजीवकभावस्सिद्ध एव । नयवीथ्यां सर्वज्ञानयाथार्थ्यवादः प्रस्तुतोऽपि पूर्वोक्तरीत्याऽप्रामाण्ये व्यवहारस्य लौकिकत्वात्, वेदे तस्याऽप्रसक्त्या लौकिकस्य व्यवहारस्य ज्ञानद्वयविवेकाग्रहणेनाऽपि निर्वाहान्न विपरीतख्यातेरुत्थितिरपीति वैदिकवाक्यप्रामाण्येऽयोगव्यवच्छेदफलसिद्ध्युपयोगितया वाक्यार्थमात्रोपजीवित्वममृतकला-तद्व्याख्यारूपप्रमाणपारायणे प्रकरणेऽपि मुख्यं लक्ष्यं शास्त्रप्रामाण्यपरीक्षामेवेति मन्येते । यत्र कृत्स्न एव वेदोऽपूर्वे कार्यात्मनि प्रमाणमित्युपक्षिप्तम् ।

तत्र प्रथमे परिच्छेदे पदानां व्यतिषिक्तार्थवर्णनप्रसङ्गेऽभिहितान्वयवादनिरासेनाऽन्विताभिधानवादः प्रकरणपञ्चिकायां सविस्तरं समर्थितः । अन्विताभिधानवादोऽयं प्राभाकराणाम्, अभिहितान्वयवादश्च भाट्टानाम् । वेदान्तसिद्धान्ते तु व्यवहारे भाट्टनय इति व्यवहारे केवलाद्वैतिनामभिहितान्वयवादः प्रायेण प्रमाणम् । अन्विताभिधानवादस्तु तदितरेषां वेदान्तिनाम् । अन्येषामन्विताभिधानवादस्वीकारे लक्ष्यन्त्वद्वैताभिमताखण्डार्थतानिरसनमेव ।

## न्यायचन्द्रिकाकारस्याऽन्विताभिधानवाद एवाऽभिमत इति प्रागुक्तस्याऽर्थस्याऽनुसन्धानम् ।

न्यायचन्द्रिकायां विद्यासागरमुनिस्तु, यो ब्रह्मसिद्धिव्याख्याने तत्र तत्र मीमांसासिद्धान्तसङ्ग्रहप्रसङ्गे प्राभाकरसिद्धान्तमेवाऽनुवदति, सः स्वीयन्यायचन्द्रिकायां

"व्यवहारे भाट्टनय इति वचनं न मानवं वचनमि"[पृ० २४०]ति भाट्टाभिमतमभिहितान्वयवादं दूरीकृत्य, प्रभाकराभिमतान्विताभिधानवादेनैव स्वीयमद्वैतसिद्धान्तं समर्थयतीति प्रागवोचाम। अन्विताभिधानवादेऽभिहितान्वयवादे चोभयत्राऽन्वयपदं समानम्। तदर्थस्तु तात्पर्यविषय इति विद्यासागरमुनेराशयः। यस्यैव परम्परायां प्राप्तात्मलाभो ब्रह्मानन्दोऽप्यभिहितान्वयवादसमकक्षमेवाऽन्वयपदस्य तात्पर्यविषयार्थस्वीकारेणाऽन्विताभिधानवादमभिप्रैति।

## अत्र टीकाकारमतम्।

बृहती तु पदार्थानां स्वान्वितकार्यमात्रे पर्यवसानं वदति। अन्वयबोधस्त्वन्विताभिधानवादेन, अभिहितान्वयवादेन वेति तथा स्पष्टं नोल्लिखति, यथा कुमारिलः तद्भूताधिकरणेऽभिहितान्वयवादं स्पष्टमुल्लिखति। अन्विताभिधानवादोऽयं प्रभाकरस्यैव सिद्धान्त इति प्रभाकरपरिपन्थिकुमारिलमतानुयायिमण्डनमिश्रादिनिबन्धार्थनिरसनेन प्राभाकरसिद्धान्तोद्धारणमेव लक्ष्यम्मन्वानः प्रकरणपञ्चिकाकार एवाऽस्य सिद्धान्तस्य मूलमिति प्रतिभाति। सर्वथा तु सर्वेऽपि दार्शनिका अन्विताभिधानवादमिमं प्राभाकरसिद्धान्तमित्येवाऽनुवदन्ति।

## द्वितीयपरिच्छेदस्य विषयः।

वाक्यार्थमातृकाया द्वितीयपरिच्छेदस्तु लिङर्थमुख्यविशेष्यकत्वेऽविवदमानेऽपि लिङर्थस्य भावनापरत्वमिष्टसाधनत्वञ्च निरस्यति। तत्र मण्डनमिश्रो ब्रह्मसिद्धौ नियोगकाण्डे वाक्यार्थमातृकाप्रकरणविषयं प्रभाकरसिद्धान्तं महता प्रयासेन खण्डयति। यत्र प्रसङ्गतोऽन्वितविधानवादोऽपि निरस्तः। विश्वस्यते ब्रह्मसिद्ध्युक्तदूषणोन्मूलनेन नियोगवाक्यार्थवादस्य प्राभाकरीयस्योद्धरणमेव वाक्यार्थमातृकाया उद्देश्यम्। विशेषस्तु टिप्पण्यां द्रष्टव्यः।

## विषयकरणीयस्य विषयः।

एवं तर्कपादगतैस्सप्तभिरधिकरणैर्वाक्यार्थमातृकापर्यन्ते विषये निरूपिते भावार्थाधिकरण-शब्दान्तराधिकरणयोस्सिद्धान्तप्रतिपादनाय विषयकरणीयाख्यं द्वादशं प्रकरणमपि कार्यप्रतिपत्तौ यागस्य विषयत्वमुत्पत्तौ च करणत्वं विवेचयति, नियोगवाक्यार्थतां वाक्यर्थमातृकाविषयं स्पष्टीकरोति। अतोऽन्यानि प्रकरणानीव वाक्यार्थमातृकाया एव सन्तानो विषयकरणीयं नाम प्रकरणम्।

## अङ्गपारायणातिदेशपारायणयोर्विषयनिर्देशः।

त्रयोदश-चतुर्दशप्रकरणे अङ्गपारायणातिदेशपारायणे द्विविधमङ्गजातं वाक्यार्थनियोगेन परम्परया सर्वेषां प्राकृतानां वैकृतानामङ्गानाञ्च नियोगार्थेनाऽपूर्वेण करणोपकारद्वारेणोत्पत्तौ सम्बन्धं व्यवस्थापयतः। तत्राऽङ्गपारायणमुपदेशविधया प्रवृत्तमङ्गजातं विषयीकरोति, अतिदेशविधया प्रवृत्तं तद्भावेनाऽङ्गजातम्, तत्रोपदेशप्रवृत्तानि तान्यङ्गानि साक्षान्नियोगार्थेन सम्बध्यन्ते। अतिदेशपारायणे

तु प्राकृतनियोगस्य वैकृतनियोगस्य च भेदात् प्राकृतकार्यसम्बन्धिप्रमेयमात्रस्य विकृतावन्वयो व्यवस्थाप्यते। तदेवं चतुर्दश प्रकरणानि वाक्यार्थमातृकामुपजीव्य प्रवृत्तानि प्रकरणपञ्चिकायां सविस्तरमुपपादितानि। तत्र तत्र प्रकरणेषु संग्रहेणोपक्षिप्तानां विषयाणां भाट्टसिद्धान्तेन साकं तोलनेन प्राभाकरीयतत्तन्मूलग्रन्थसङ्ग्रहेण च विस्तरष्टिप्पण्यां कृतः। तत्र तत्तप्रकरणार्थानां पूर्वोत्तरपक्षसंकलनं दर्शनान्तरप्रस्तुततत्तदाक्षेपनिरसनं, इदन्तया प्रभाकरसिद्धान्तनिष्कर्षश्च प्रमाणपरायणमारभ्याऽऽन्तं सङ्गृहीतम्।

तत्र प्रियपाठकास्स्वीयां दृष्टिं सुहृद्भावेन निक्षिप्य समालोच्य च स्वीयाशयप्रकाशनेन विश्वस्यते सम्पादकमिमं जनमनुग्रहीष्यन्ति—इति।

## वाक्यार्थमातृकायाः प्राचीनात्संस्करणादस्य वैलक्षण्यकथनम्।

प्राचीनेषु संस्करणेषु वाक्यार्थमातृकायास्सवृत्तिकाया मूलस्य तद्वृत्तेश्च तत्प्रकरणोद्धृतानामन्येषां श्लोकानाञ्चेदं मूलम्, वृत्तिरियम्, अयमुद्धृतश्श्लोक इति विवेकं विना मुद्रापितम्। अस्मिन् संस्करणे तु वाक्यार्थमातृकाया मूलस्य तद्वृत्तेस्तदुद्धृतश्लोकानाञ्च विनैवाऽऽयासं प्रियपाठकानां ज्ञानं भवत्वित्यभिप्रेत्य स्थूलाक्षरेण मूलश्लोकानां वृत्तेस्संख्यानिर्देशमुद्धृतश्लोकानाञ्च पृथक्करणं कृतम्। यद्यपीयमेव नीतिर्व्याख्यानव्याख्येयभावेन प्रवृत्तयोरमृतकला-प्रमाणपारायणयोरपि विषयेऽवलम्बनीयाऽऽसीत्, तथा करणे सम्प्रदायतः प्रकरणपञ्चिकायाश्चतुर्दश त्रयोदश वा प्रकरणानीति केषाञ्चन संशयस्स्यात्, तन्मा भूदिति प्राचीनैव रीतिस्संरक्षिता, सर्वथा तु टिप्पण्यामनयोर्व्याख्यानव्याख्येयभावस्संसूचितः।

## प्रकरणपञ्चिकाप्रवृत्तेः पुनस्सिंहावलोकनम्।

प्रकरणपञ्चिकेयं विशेषेण कुमारिलसिद्धान्तं तदनुबन्धेन प्रवृत्तं मण्डनमिश्रसिद्धान्तञ्च, तेषु तेषु प्रकरणेषु खण्डयति। यस्य लक्ष्यं प्रभाकरसिद्धान्तनिरसनमेवेति तदीयेन विधिविवेकेन भावनाविवेकेन ब्रह्मसिद्धिगतनियोगकाण्डेन चाऽवगम्यते, तत्र प्रकरणपञ्चिकानिरस्तसौगत-कुमारिल-मण्डनसिद्धान्ताश्च सङ्ग्रहेणाऽधस्तान्निर्दिश्यन्ते।

### बौद्धमतनिरासः।

१—अर्थासंस्पर्शिताशङ्कानिरासः।
२—जातिर्विकल्पविलसितमितिपक्षप्रतिक्षेपः।
३—अविसंवादिज्ञानं प्रमाणमितिपक्षनिरासः।
४—कल्पनापोढमभ्रान्तमिति प्रत्यक्षलक्षणखण्डनम्।
५—स्वलक्षणं निर्विकल्पकस्य विषय इत्यस्य निरासः।
६—निरालम्बनवाद-शून्यवादयोर्निरासः।
७—अविनाभावनियमो व्याप्तिरित्यस्य निरासः।

८—वैधर्म्यदृष्टान्तस्य निरासः।
९—विज्ञानात्मवादनिरासः।
१०—क्षणभङ्गवादनिरासः।

## प्रकरणपञ्चिकायां शालिकनाथेन खण्डिता वार्तिककारीयसिद्धान्ताः।

१—अध्ययनविधिनिरासः।
२—प्रमाणानां स्वतःप्रामाण्यनिराकरणम्। [भाष्यपरिशिष्टे]
३—अन्यथाख्यातिनिरासः।
४—ब्राह्मणत्वजातिनिरासः।
५—प्रमाणलक्षणदूषणम्।
६—प्रत्यक्षलक्षणदूषणम्।
७—ज्ञानानुमेयतावादनिरासः।
८—श्रुतार्थापत्तिखण्डनम्।
९—शब्दाध्याहारपक्षप्रतिक्षेपः।
१०—अनुपलब्धेः प्रमाणान्तरत्वनिरासः।
११—शब्दस्य द्रव्यत्वनिरासः।
१२—अभिहितान्वयवादनिरासः।
१३—अंशत्रयविशिष्टप्रवर्तनाविध्यर्थतावादस्य प्रतिक्षेपः।
१४—विध्युद्देशस्य द्वे शक्ती कल्पयिष्याम इत्यत्र दर्विहोमदृष्टान्तस्य विघटनम्।
१५—आख्यातमात्रस्य भावनावाचित्वपक्षनिरासः।
१६—कर्मणः प्राधान्यनिरासः। यागस्याऽवान्तरव्यापारश्शक्तिर्वाऽपूर्वमितिपक्षस्य खण्डनम्।
१७—उपदेशातिदेशव्यवस्थानिरास इत्यादि।

## प्रकरणपञ्चिकायां शालिकनाथेन निरस्ता मण्डनमिश्रीयास्सिद्धान्ताः।

१— तन्त्राऽन्यः पण्डितम्मन्यो मन्यते [प्र. पं. पृ. ९८]।
२—लब्धरूपे क्वचित्किञ्चिदित्यादि यदुच्यते, तदितरेतराभावविषयम् [प्र. पं. पृ. १६०]।
३—अत्र कश्चिदाहेत्यादि [प्र. पं. पृ. २१५]।
४—यच्चेदमुच्यते छायैव तम इति [प्र. पं. पृ. ३२२]।
५—यत्त्विदं केनचित्प्रलप्यते पार्थिवानामणूनामित्यादि [प्र. पं. पृ. ३३४]।
६—कः पुनरेष मोक्ष इति [प्र. पं. पृ. ३३४]।
७—कश्चित्पण्डितम्मानी [प्र. पं. बृ. ३४५]।
८—अत्राऽपर आह [प्र. पं. पृ. ४२२]।
९—यस्तु देवदत्त ओदनं पचतीत्यादि [प्र. पं. पृ. ४२६]।

अन्ते प्रभाकरम्, शालिकनाथञ्चाऽधिकृत्य तैस्तैर्विमर्शकैः पण्डितप्रवरैरालोचितान् विषयानवष्टभ्य किञ्चिदिव स्वीयं वक्तव्यमत्र प्रकाशयामः।

## प्रभाकरमिश्रस्य परिचयः ।

अथेदं प्रस्तूयते—टीकाकारः प्रभाकरमिश्रः कं देशं स्वजनुषा मण्डयामास, कावस्य पितरौ, काऽस्य शैली, कोऽस्य कालः, कानि ग्रन्थरत्नान्ययं निबबन्ध—इति।

टीकाकारश्चाऽयं सुगृहीतनामा प्रभाकरमिश्रो मिश्रोपाधिना संक्षिप्ताक्षरार्थबहुललेखप्रणाल्या च मैथिल इति तर्कयामो वयम्। प्रभाकरमिश्र-मण्डनमिश्र-वाचस्पतिमिश्र-सुचरितमिश्रादीनां मैथिलत्वं श्रीविन्ध्येश्वरीप्रसादत्रिवेदिना न्यायवार्तिकभूमिकायामत्यन्वेषणसम्पादितायां निरणायि। प्रसिद्धिरपि वस्तुनिर्णये महत्साहाय्यमाचरति। प्रसिद्धश्च विद्वत्समाजे प्रदर्शितानामेषां मैथिलत्वमिति, वयमपि तथैव मन्यामहे यावद्बाधकोपलम्भम्।

कस्याञ्चिद्बृहतीमातृकायां वङ्गप्रान्त उपलब्धायां "इति श्रीदक्षिणकोसलेश्वरमहामात्यविभाकरमिश्रात्मजस्य प्रभाकरमिश्रस्य कृतौ बृहत्यां द्वादशोऽध्यायस्समाप्तः" इति दर्शनाद्विभाकरमिश्रोऽस्य पितेत्यवगम्यते।

## प्रभाकरमिश्रस्य भाषावैचित्र्यम् ।

प्राभाकरी वचनभङ्गी सुश्लिष्टपदा प्रसन्नगम्भीरा च। भाषायां स्वातन्त्र्यस्य, व्युत्पत्तिविशदिम्नो वेदं लक्षणम्—यदभिधीयमानं प्रायस्सर्वमेव सूत्ररूपं वृत्तिरूपं वा भवति। व्यवहारानतुगुणमिव रूपमादाय साम्प्रतं वर्तमानां संस्कृतभाषां पुनस्तदनुगुणं परिष्कर्तुं कश्चित्प्रयतेत, तस्य प्राभाकरी वचोभङ्ग्यवश्यं पर्यालोचनीया। यतस्तत्र चिराय प्रयुक्तप्रलीनाः पृष्ठाकोटेन विवक्षितार्थप्रतिपादनसमर्थाः प्रयोगविशेषा भूम्नोपलभ्यन्ते। भाष्याक्षराणामन्यूनानतिरेकं व्याचक्षाणः प्रभाकरमिश्रः कुमारिलोपक्षिप्तो व्याख्यानमार्गो न विचारचातुरीचेतसां हृदयङ्गम इति मन्वानो विवरणं निबन्धनम्, अथवा लघ्वी बृहतीति टीकाद्वयं शब्दसामर्थ्यमर्थसामर्थ्यञ्चाऽनुसृत्य व्यरीरचत्। विवरणं न समग्रमुपलभ्यते, निबन्धनन्तु षष्ठाध्यायद्वितीयपादपर्यन्तमुपलभ्यते। अवशिष्टं शालिकप्रस्तावे वक्ष्यते।

## विवरण-निबन्धनयोः पौर्वापर्यम् ।

अत्र विवरणकार इति निबन्धनकार इति शालिकाचार्येण वाचस्पतिना च कथनात्, भवनाथेन नयविवेके, वरदराजेन दीपिकायां, माधवसरस्वत्या सर्वदर्शनकौमुद्यां प्रभाकरकृतं व्याख्यानद्वयं एकं विवरणम्, अपरं निबन्धनसंज्ञमिति निर्देशात्। पूर्वं विवरणं पश्चान्निबन्धनमिति तयोः क्रमः प्रतीयते। अत्र नियामकं [प्र. पं. पृ. ४८०] द्रष्टव्यम्।

अयम्प्रभाकरः—

"अविवेकः परमापदां पदमि" [कि. स. २, श्लो. ३०] ति पद्यतुरीयचरणं स्थलद्वये [बृ. पृ. २४२,३३४] उदाहरति।

एवं—विवर्ततेऽर्थभावेनेति [वा. प. १. १.]

"ऋषिणामपि यज्ज्ञानं तदप्यागमपूर्वकमि" [वा. प. १, ३०]ति, बृ. ३६९ पृष्ठउरुद्धरति। अत एतयोरर्वाचीनः प्रभाकर इत्यापतति।

## कुमारिलमतखण्डनप्रदर्शनम्।

प्रभाकरमिश्रः—"एकदेशी कश्चिदि"त्यादिना कौमारिलानेव सिद्धान्तान्खण्डयति। यद्यप्यत्र कुमारिलस्य नाम न गृह्णाति, तथाऽपि शालिकनाथ-भवनाथयोर्वचनेनेदमगम्यते—"लोक" इत्यादिभाष्यस्याऽथात इत्येतस्मिन्पदद्वयेऽलौकिकार्थाशङ्कानिवृत्तिः प्रयोजनमिति टीका, "लोक इत्यादिभाष्यं यत्नगौरवं प्रसज्येत" इत्येवमन्तमथशब्ददूषणार्थमौचित्यानुभाषणमिति वार्तिककारेण व्याख्यातम्। तत्तु मन्दप्रयोजनमिति मत्वा टीकाकारः प्रयोजनं दर्शयति—"लोक" इत्यादिनेति पञ्चिका (पृ. १) तदेतद्वार्तिककारमतं टीकाकारो भगवान्न मृष्यति, यथा गुरुदर्शनं किञ्चिदुच्यते" [बृ. पृ. ११६]। "एकदेशिमतमाह—तद्दूषयति" इत्यादि।

एवं भवनाथवचनेनाऽपीदमवगम्यते। तथा च नयविवेकसन्दर्भः—"अत्र च यद्यपि परमते "लोके" इत्यादिभाष्यस्य षडर्थानुक्त्वा दशपक्षी चाऽपरोक्ता। तथाऽप्यथशब्ददूषणार्थमौचित्यानुभाषणपरत्वमेव स्वीकृतम्। तदपि मन्दम्मत्वा गुरुस्सप्तदशमर्थमाहे" [नय. वि. पृ. ७] ति। अत्र यद्यपि-दशपक्ष्यां षट्पक्ष्याञ्चौचित्यानुभाषणरूपोऽर्थोऽनुवर्तमान एक एवेति सङ्कलने पञ्चदशैवाऽर्थाः, अवयुत्यगणने तु षोडशत्वव्यवहारः। एतदभिप्रायको "गुरुस्सप्तदशमर्थमाहे" ति नयविवेकग्रन्थः। अतः कुमारिलमेव प्रभाकरः खण्डयतीति सुस्पष्टमवगम्यते। स्थालीपुलाकन्यायेन कतिचित्स्थलानि प्रदर्श्यन्ते प्रियपाठकानां मनोविनोदाय।

१—तथा हि—"धर्मजिज्ञासा" इत्यत्र भाष्योक्तचतुर्थीसमासं निरस्यति, स्थापयति च षष्ठीसमासं कुमारिलः। कुमारिलोक्तं षष्ठीसमासं निरस्य चतुर्थीसमासं स्थापयति प्रभाकरः [बृ. पृ. १६]।

२—"यस्य च दुष्टं करणं, यत्र च मिथ्येति प्रत्ययः, स एवाऽसमीचीनः प्रत्ययो नाऽन्यः" इति भाष्यं कारणदोषबाधकज्ञानाभ्यामप्रामाण्यमित्येवम्परतया कुमारिलो व्याचचक्षे। प्रभाकरस्तु सविकल्पकज्ञानानामप्रामाण्यं वदतो धर्मकीर्तेर्मतं निरस्य, तेषां प्रामाण्यप्रतिपादनपरतया योजयति स्म।

३—गुणकामाधिकरणे वार्तिककारोन्नीतं गुणफलसम्बन्धविधानं निरस्यति प्रभाकरः।

४—अभिक्रमणाधिकरणे सन्दंशोद्धृतमवान्तरप्रकरणं कुमारिलोक्तं निरस्यति प्रभाकरः।

५—बलाबलाधिकरणे "अथ यत् तत्र तत्रे"त्यादिना भाष्यस्योपर्युक्तं दूषणं परिहारश्च। "अनेन न कश्चित्परिहारलेशोऽभिहितः" इति निरस्यति [प्र. पं. पृ. ४८९-४९१.]।

६—तृतीयचतुर्थपादे दशमादीनां षण्णां सूत्राणां भाष्यं नोपलभ्यते। तत्र कुमारिलो बह्वीरुत्प्रेक्षा वर्णयति स्म। तथा च वार्तिकसन्दर्भः—"अतः परं षट्सूत्राणि भाष्यकारेण न लिखितानि, तत्र व्याख्यातारो विवदन्ते—केचिदा-हुर्विस्मृतानीति। लिखितो ग्रन्थः प्रलीन इत्यपरे। फल्गुत्वादुपेक्षितानीत्यपरे। अनार्षेयत्वादित्यन्ये। वृत्त्यन्तरकारैस्सर्वैर्व्याख्यातानि। तत्र केश्चित्त्र्यधिकर-णानि कल्पितानि, अपरैश्चत्वारि। तस्मात्सूत्रमात्रं व्याख्येयमि [मी द. पृ. ८९५] ति। "भाष्यकृतस्सूत्रषट्कोपेक्षणे कारणमाह" [न्या. सु. पृ. १३८५ ] ति।

सोमनाथोऽपि—"इतः प्रभृति षट्सूत्राणि भाष्यानुक्तान्यपि वृत्त्यन्तरे दर्शना-दाचार्यैस्त्र्यधिकरणतया, चतुरधिकरणतया च व्याख्यातानी" [ शा-दी. पृ. २६० ]ति। अत एषु षट्सु सूत्रेषु शबरस्वामिना भाष्यं न प्रणीतमित्यवगम्यते। अत्र बृहत्यां तद्व्याख्यायामृजुविमलायाञ्च "उपवीतं लिङ्गदर्शनात्सर्वधर्मस्स्यात्, विधिस्तु धारणेऽपूर्वत्वादि" [ मी. द-३-४-१०-१६ ] ति षण्णां सूत्राणामनुवादोऽपि न दृश्यते, नाऽपि तदर्थविवरणम्। प्रत्युत निवीताधिकरणसमनन्तरमेव दिग्वि-भागाधिकरणमुपलभ्यते। इदमपि कुमारिलात्प्रभाकरस्याऽर्वाचीनत्वे गमकम्, भाष्यानुसारित्वात्प्रभाकरस्य।

७—उद्गात्रधिकरणे [ मी. ३-५-१० ] ससुब्रह्मण्यानां चतुर्णां भक्षणमिति भाष्यकारीयस्सिद्धान्तः। कुमारिलस्तु भाष्यसिद्धान्तं निराकृत्य, अपसुब्रह्मण्यानां त्रयाणामिति स्वसिद्धान्तमुपस्थापयामास [मी.द. पृ. १००४]। प्रभाकरस्तुससुब्र-ह्मण्यानां चतुर्णां भक्षणमिति भाष्यसिद्धान्तमेव समाललम्बे। प्रत्युत कुमारिलं न्यक्करोति—"अपसुब्रह्मण्यवादिनोऽपन्यायवादिन" इति टीकाग्रन्थेन। अत्राऽप-न्यायवादिन इत्यनेन कुमारिलमेव कटाक्षयतीत्यवगम्यते। अत एवाऽस्मिन्नधिकरणे "यत्केनचिदपनयादुक्तमपसुब्रह्मण्यवादिनोऽपन्यायवादिन इति। तदेवाऽपन्या-य्यमपनीतमि" [ शा. दी. पृ. २८८ ] ति। अत्र केनचिदितिपदं प्रभाकरणेति विवृणोति सोमनाथः।

## कुमारिलाभिमतव्याख्यावर्णकादिकं प्रभाकरस्याऽनभिमतमिति वर्णनम्।

विरोधाधिकरण-शिष्टाकोपाधिकरण-यववराहाधिकरण-कल्पसूत्राधिकरणेषु कुमारिलोक्तानि वर्णकान्ययथाभाष्यं मन्वानो भाष्यानुसारेणाऽधिकरणार्थं वर्णया-मास, सूत्रभाष्यानारूढं सौगतमतनिरसनम्, सूत्रभेदेन क्वचित्सूत्रयोरेकवाक्यता-कल्पनेनाऽधिकरणभेदं वर्णकानि वा नाऽनुमेने प्रभाकरमिश्रः। एवं द्वादशलक्षणी-गतेष्वधिकरणेषु परिशील्यमानेषु कुमारिलादर्वाचीनत्वं कुमारिलोक्तार्थनिराकरणात् प्रभाकरस्य करतलामलकवदवभासते। गुरुशिष्यभावस्त्वतिदूरोत्सारित इति।

## प्रभाकरग्रन्थे धर्मकीर्तेर्मतोल्लेखः।

किञ्चाऽयं टीकाकारो बौद्धाचार्यं धर्मकीर्तिं क्वचित्समाद्रियते, क्वचिच्चोपेक्षते। यथा—विवेकाग्रहणं कीर्तेरेवेति न्यायमञ्जरीकारो "मन्यते-शास्त्रचिन्तकाः खल्वि"

त्यादिप्रतीकग्रहणेन । अयं विषयोऽस्माभिष्टिप्पण्यां [प्र. पं. पृ. ३४०] विविच्य निर्दिष्टोऽस्ति ।

पञ्चिकायां शालिकनाथो निरालम्बनवादान्ते कथयति—"तस्मादतिपेलवमिदं सकलमेव कीर्तिनाऽभिहितमिति नोपन्यस्तं टीकाकारेणेत्यनवद्यमि" [ बृ. पृ. ८० ] ति ।

भवनाथोऽपि नयविवेके ब्रवीति – "तस्मात्कीर्त्युक्तं हेतुत्रयं मन्दमिति गुरुणोपेक्षितमि" [नय. वि. पृ. ११०] ति ।

## मण्डनमिश्रेण प्रभाकरमतखण्डनम् ।

मण्डनमिश्रः प्रभाकरमतं निरस्यति । यथा—

"अवोचन्निपुणम्मन्या विभ्रमं सम्यगग्रहम् [विभ्र. वि. श्लो. ३७]

"बोधादेव प्रमाणत्वमिति मीमांसकस्थितिम् ।
विदन्नव्यभिचारेण तां व्युदस्यत्यपण्डितः" [विभ्र. वि. श्लो. ८३] ॥

"अख्यातौ नो तत्त्व-मिथ्याविभागः [ विभ्र. वि. श्लो. १६२ ] इति ।

"यदपि दर्शनं प्रमाणान्तरागोचरश्शब्दमात्रावलम्बनो नियुक्तोऽस्मीति प्रत्यात्मवेदनीयस्सुखादिवदपरामृष्टकालत्रयो लिङादीनामर्थो विधिरि"त्यादिग्रन्थेन प्रभाकराभिमतं कार्यविध्यर्थतावादं खण्डयति । यद्यप्यत्र प्रभाकरस्य नाम न श्रूयते, तथाऽपि वाचस्पतिमिश्रस्य वचनेन प्रभाकरमतमेवाऽत्र खण्डयतीत्यवगम्यते । तथा हि न्यायकणिकासन्दर्भः—"सम्प्रति टीकाकारीयं मतमुपन्यस्यती [पृ. ४८] ।" ति । एवं भावनाविवेके, ब्रह्मसिद्धौ च प्रभाकरमतं खण्डयति । अतो मण्डनमिश्रादयं प्राचीनः—इति ।

तत्त्वसङ्ग्रहव्याख्यात्रा कमलशीलेनाऽष्टमशतकवर्तिना पञ्जिकायां विना मूलसम्बन्धं स्वातन्त्र्येण प्रभाकराभिमतस्मृतिप्रमोषादेः खण्डनात् तस्मादपि प्राचीनः—इति ।

प्रमाणवार्तिकभाष्यकृता प्रज्ञाकरगुप्तेन प्रभाकराभिमतनियोग-स्मृतिप्रमोषादेर्निरासात् । तदनुवर्तिना जैनाचार्येण विद्यानन्देनाऽष्टसाहस्र्यां नियोगादेः खण्डनात् । उक्तेन सन्दर्भेणाऽयमर्थोऽवगम्यते—यत् A. D. 700 तः A. D. 800 पूर्वं तस्य काल इति लब्धसामग्रीबलेन निर्णीयते यावद्बलवत्तरबाधकोपलम्भम् ।

## अत्राऽपिनोक्तमितिवचनावलम्बेन कुमारिल-प्रभाकरयोर्गुरुशिष्यभावशङ्का ।

यदपि कुमारिल-प्रभाकरयोर्गुरुशिष्यभावप्रदर्शनाय "तत्राऽपिनोक्तम्, अत्र तुनोक्तमिति द्विरुक्तमि"ति कञ्चन ग्रन्थसन्दर्भमुदाहरन्ति केचित् । अस्य वाक्यस्याऽध्यापनसमये कुमारिलभट्टस्य तदर्थनिर्णये महान् व्यामोह आसीत् । कुमारिलः पाठं परिसमाप्य माध्याह्निकस्नानार्थं नदीं प्रति गतः । प्रभाकरस्तु तत्पत्न्यास्सविधे "तत्र अपिना उक्तम्, अत्र तुना उक्तम्, अतो द्विरुक्तमि"ति किञ्चिद्विलिख्य पत्रं

प्रददौ । स्नानानन्तरं प्रत्यागतः कुमारिलस्तद्दर्शनेन गतव्यामोहस्तस्मै गुरुरित्युपाधिं व्यतरदित्यैतिह्यं तयोर्गुरुशिष्यभावे प्रमाणम्—इति ।

## तत्समीक्षा ।

नेदं मम विश्वासार्हं प्रतिभाति । यतो हि तत्राऽपिनोक्तं, अत्र तुनोक्तमित्येतादृशानुपूर्वीकं वाक्यं प्रभाकरस्याऽध्ययनकाले कस्मिन्ग्रन्थ आसीदिति न विज्ञायते, शाबरभाष्यादावदर्शनात् । एतादृशं क्षुद्रकारणमवलम्ब्य गुरुरित्युपाधिदानमपि न विश्वासार्हम् । अयं विषयो [ भू. पृ. २४ ] चर्चितपूर्वः ।

## उम्वेकः कारिकां वेत्तीति पद्यविमर्शः ।

अन्यच्च—

"उम्वेकः कारिकां वेत्ति चम्पूं वेत्ति प्रभाकरः ।
मण्डनस्तूभयं वेत्ति न किञ्चिद्वेत्ति रेवणः" ।। इतीदं पद्यं तत्र प्रमाणयन्ति वृद्धाः । इदं पद्यं कुत्रत्यं ? अनेन कथं तयोर्गुरुशिष्यभावोऽवगम्यत इत्यपि विचारणीयम् । यतो हि शास्त्रविषये ह्यत्यन्तभिन्नौ कुमारिलप्रभाकरयोः पन्थानौ । प्रभाकरो भाष्यव्याख्यानावसरे बृहत्यां साक्षात्कुमारिलवार्तिकान्यक्षरशः खण्डयति । कस्मिन्नप्यंशे कुत्रचिदपि कौमारिलं मतं न प्रमाणयति । अतो नेदं तयोर्गुरुशिष्यभावे प्रमाणम् ।

किञ्चेदं पद्यं जैनाचार्येण गुणरत्नेन षड्दर्शनसमुच्चयव्याख्यायां तर्करहस्यदीपिकायां "जैमिनेश्शिष्यकृता बहवो भेदाः" [ तर्क. र. दी. पृ. २० ] इत्युक्त्वा पठ्यते । अनेन च पद्येन गुणरत्नाचार्यो जैमिनिशिष्यत्वमभिप्रैति उम्वेकादीनाम्, तत्कृतभेदञ्च । तदुपेक्ष्य, कुमारिलशिष्यत्वं प्रभाकरस्येति नेदं तयोर्गुरुशिष्यभावे प्रमाणम् ।

## नयविवेकभूमिकोक्तार्थपर्यालोचनम् ।

यदपि नयविवेकभूमिकायां ब्रह्मश्रीरामनाथशास्त्रिभिः कश्चनाऽभ्यूहः कृतः । सोऽपि निरस्तो वेदितव्यः । तैरित्थं तत्र प्रत्यपादि—प्रथमं कुमारिलो बृहट्टीकां मध्यमटीकाञ्च प्रणिनाय । ततः प्रभाकरष्षट्सहस्रग्रन्थपरिमितं लघ्वीत्यपरपर्यायं विवरणन्नाम व्याख्यानं निबबन्ध । तदनु कुमारिलः—श्लोकवार्तिकं, तन्त्रवार्तिकं, टुप्टीका चेति ग्रन्थत्रयमजीग्रथत् । तदनन्तरं बृहतीत्यपरनामधेयं निबन्धनन्नाम टीकां रचयाम्बभूवेति ।

अविमृश्यमानसुन्दरमिदम् । यतस्तत्र तैर्न किञ्चित्प्रमाणमुपन्यस्तम् । प्रभाकरमतानुसारिभिश्शालिकनाथ—भवनाथ—रामानुजाचार्यपर्यन्तैश्शब्दसामर्थ्यमर्थसामर्थ्यञ्चाऽऽश्रित्य टीकाद्वयं कृतमित्येव जोघुष्यते, नाऽयं प्रकारः । अतश्शास्त्रिपादानां कल्पनं चिन्त्यमूलमिति विभावयामो वयम् ।

## अनुपासितगुरुशब्दप्रयोगविचारः ।

अनुपासितगुरोरित्युपालम्भः प्रभाकरोपज्ञः कुमारिलं प्रति । यतो हि सम्बन्धाक्षेपपरिहारग्रन्थे प्रभाकरस्स्वयं ब्रूते—"किमनयाऽनुपासितगुरुकथया विकल्पितया । यस्माद्धि यः प्रतीयते, स तस्यार्थः । न च केवलात्पदाद् वृद्धव्यवहारे कस्यचिदवगतिर्दृष्टा । अनवगम्यमानस्य चाऽर्थस्य केनचित्सम्बन्ध इति दुर्वचं वचः । कथं तर्हि प्रसिद्धिरियम् ? अनुपासितगुरुत्वादि [बृ. पृ. १३५]ति । अत्र तद्व्याख्याया ऋजुविमलायास्सन्दर्भः—"किमनयाऽनुपासितगुरोरभिहितान्वयवादिनः कथया विकल्पितया··· अनुपासितगुरुत्वाद् भ्रान्तिमूलेत्युक्तम्" । इत्युपर्युद्धृतबृहती-ऋजुविमलाभ्यां सुविशदमिदमवगम्यते—यत्प्रभाकरेण प्रथमं कुमारिलं प्रत्यनुपासितगुरुशब्दः प्रायोजि । तत्प्रतीकारायोम्वेकभट्टेन कुमारिलमतानुगेन श्लोकवार्तिकव्याख्यायामधोनिर्दिष्टेषु तेनैव शब्देन प्रभाकरो न्यक्क्रियते ।

१—"एवमनुपासितगुरुव्याख्याविकल्पनाभिधानेन [ ता. टी पृ. १४ ]

२—अवगमैकनिबन्धनं वस्तुत्वमित्यनुपासितगुरुं बोधयितुमाह [ ता. टी. पृ. २९ ]

३—अनुपासितगुरुप्रज्ञाविलसितमिति ग्रन्थज्ञानमानिनो मन्यन्ते [ ता. टी. पृ. ३० ]

४—अत्राऽनुपासितगुरवश्चोदयन्ति [ ता. टी पृ. ३३ ]

५—अनुपासितगुरुत्वादुपेक्षणीयम् [ ता. टी. पृ. ५५ ]

६—अनालोचितपौर्वापर्यस्याऽनुपासितगुरोः परिचोदना [ता. टी. पृ. ७५]

७—अनुपासितगुरुव्याख्यानमुपेक्षणीयम् [ ता. टी. पृ. ३०४ ]

८—अत्राऽनुपासितगुरवश्चोदयन्ती" [ ता. टी. पृ. ४४१ ] ति ।

## अत्र शालिकस्य समाधानम् ।

तदसहमानश्शालिकनाथः प्रभाकरमिश्रं गौरवातिशयेन साक्षाद्गुरुः, तत्रभवानुपाध्यायः, भगवानिति च तत्र तत्र प्रकरणपञ्चिकायामृजुविमलायाञ्च निर्दिशति । अतः प्रभाकरो न कुमारिलस्य शिष्यः, न वा तदनुयायी, अपि तु प्रवाहरूपेण समायातस्य कस्यचन मीमांसकसम्प्रदायस्य यथा कुमारिलस्समर्थकः, तथा प्रभाकरोऽपि, प्रभाकरो न कुमारिलस्य शिष्य इति यावद्बाधकोपलम्भमङ्गीक्रियते । तस्य कालादिकं [भू. पृ. २१] निर्दिष्टमस्ति । इतोऽप्यधिकमवजिगमिषुभिरच्युतग्रन्थमालातः प्रकाशितभाषानुवादसहितनैष्कर्म्यसिद्धिभूमिकाऽस्मदीया द्रष्टव्या ।

## बृहतीद्वितीयभागभूमिकोक्तार्थविमर्शः ।

श्रीमता डॉक्टर कुन्हन्राजमहोदयेन मद्रपुरीयविश्वविद्यालयतः प्रकाशिताया बृहत्या द्वितीयभागे प्रभाकरमिश्रः केरलदेशीय इत्यत्र केचन हेतवस्समुपन्यस्ताः । तत्राऽऽद्यो हेतुः—केरलदेश एव प्राभाकरसिद्धान्तानां प्राचुर्येण प्रचारः

आसीदिति। अस्य पक्षस्य प्रधानतमोऽवष्टम्भो यत्समेषां मद्रास-बडोदाप्रभृति-पुस्तकागारेषु गुरुमतसिद्धान्तप्रतिपादकानां ग्रन्थानां केरलदेशादेवोपलम्भः-इति।

अत्र ब्रूमः—भाट्टसिद्धान्तप्रतिपादकानां नीतितत्त्वाविर्भाव-मानमेयोदयादीनां ग्रन्थानामुपलम्भात्कुमारिलस्य केरलदेशीयत्वं न दण्डेन पराणुद्यते। गोश्रीराज्ये (कोचीन) भाट्टसम्भावना प्राभाकरसम्भावना चेति धनमुष्टिद्वयं साम्प्रतमपि द्वाभ्यां ब्राह्मणकुटुम्बाभ्यां दीयत इति शृणुमो वयं वृद्धविदुषां मुखात्। माधवरावपेशवामहोदयस्याऽवसरे वेद-शास्त्राणां रक्षणाय बहवो विद्वांसो वृत्तिप्रतिपादनेन परिपोषिताः इतीहासतोऽवगम्यत इति नेदं प्रभाकरस्य केरलदेशीयत्वे हेतुरलमिति।

किञ्च शृङ्गारशतकगतेन—

"धूर्तैर्यश्श्वपचीकृतो वररुचिस्सर्वज्ञकल्पोऽपि सन्
जीवन्नेव पिशाचताञ्च गमितो भर्तुर्यदभ्यर्चितः।
छन्दोगोऽयमिति प्रभाकरगुरुर्देशाच्च निर्वासितः
मद्वृत्तान्तविजृम्भितेन महता तत्सर्वमल्पीकृतमि॥ (शृं. प्र.) तिपद्येन

प्रभाकरस्य छन्दोगत्वं देशाच्च निर्वासनमवगम्यत इति हेतुरप्यविस्मृयमानसुन्दरः—इति। ततो निष्कासने सामगत्वं न कारणम्, किन्त्वन्यदेव। नम्बूदरीब्राह्मणेष्वन्येषु द्राविडेषु च छन्दोगत्वं दोष इति कोऽपि न मन्यते। सन्ति चाऽद्यत्वेऽपि पूज्यास्सामगा बहवस्तत्र। अतो नेदं प्रभाकरमिश्रस्य केरलदेशीयत्वे हेतुरिति।

योऽपि तृतीयो हेतुः—"मातुलधनकथनन्यायः", सोऽपि न्यायः केरलीयानेवाऽधिकरोति, तत्राऽपि न केरलीयब्राह्मणान् (नम्बूदरी) अन्यान् वा, किन्तु ब्राह्मणेतरानेव। शब्दस्य द्रव्यत्व-गुणत्वान्यतरपक्षमुपक्षिप्य तत्क्रियात्वनिरसनपक्ष उपक्षिप्तः। तेन तु तं न्यायं स निन्दतीति प्रतीयते। न च केरलीया ब्राह्मणा अपि तन्न्यायं निन्दन्ति, किन्त्वन्य एव। सति चैवं प्रभाकरस्य तद्देशान्निरसनेन केरलदेश एव विद्वेषो महानासीदिति, तस्य न्यायस्याऽत्रोपक्षेपेणाऽवगम्यते। अतोऽयमपि हेत्वाभास एव।

## बृहट्टीका-बृहतीटीकयोरैक्यभ्रमनिरासः।

बृहट्टीका-बृहतीटीकयोरैक्यं मन्वानेन डा० कुह्नन्राजमहोदयेन माधवसरस्वतीवचनमनुसृत्याऽन्ये केचन हेतवस्सम्भावनामात्रेणोत्प्रेक्षिताः। ते च न क्षोदक्षमाः। बृहट्टीका-बृहतीटीकयोर्वैलक्षण्यं टिप्पण्यामत्र चाऽवोचाम। अतोऽत्रैव प्रभाकरमिश्रं विहाय, परमप्रकृतं शालिकनाथं प्रस्तुमः।

## शालिकनाथः।

प्रकरणपञ्चिकाकारश्शालिकनाथमिश्रः कस्मिन्देशे कस्मिन्काल आविर्भूतः, तस्य का शैली तत्प्रणीता ग्रन्थाः के? तेषाञ्च पौर्वापर्यं, इत्यमुमर्थमवलम्ब्य विचारः प्रस्तूयते। यद्यपि कैश्चित् पुरातत्त्वविद्भिरयं विषयो निरणायि, यथासम्भवं तमुपादाय, सम्भावनार्हानुपवर्णयामः।

## नामविचारः ।

पञ्चिकाकारं भवनाथादयो रामानुजाचार्यपर्यन्ताश्शालिकानाथ इति व्यपदिशन्ति । यथा—

१—टीकामधिकृत्य शालिकानाथः । ( तं० र० पृ० १ श्लो० ६ )

२—तथाऽन्यां शालिकानाथः ( तं० र० पृ० १ श्लो० ७ )

३—शालिकानाथेन नयवीथ्यां समर्थितम् ( पृ० ७ )

४—अमृतकलायां शालिकानाथेन ( पृ० १६ )

१—स्याद्वादरत्नाकरे यदपि प्राभाकरमतमाविष्कुर्वन् शालिकः प्रमाणपारायणे 'मानत्वे संविदां बाह्यमि" त्यादि, ( स्या० र० पृ० ६१ )

२—यथा चाऽवोचि शालिकेन "सन्निहितरजतशकले" इत्यादि ( स्या० र० पृ० ११२ )

३—यदवादि शालिकेन, "अत्र ब्रूमः" इत्यादि ( स्या० र० पृ० ११५ )

४—शालिकनाथेन तदुक्तम्, "यदा भावसाधनमित्यादि" (न्या० दी० पृ० ८)

५—सम्प्रति सुहृद्भावेनाऽऽह, नाथः ( न० वि० पृ० १८८ )

६—"तत्त्वज्ञानमहो न शारिकगिरामि" (प्र.च.ना. श्लो. २-३)ति कृष्णमिश्रः । एतेषां पर्यालोचनेन शालिकानाथः, शारिकानाथः, शालिकः, नाथ इत्यादिनामभिरयमेव पञ्चिकाकारस्तैस्तैर्ग्रन्थकारैर्व्यवह्रियमाणो दृश्यते ।

## शारिकाशब्दार्थविवरणम् ।

तत्र शारिका नाम गुरुकृतस्य विवरण-निबन्धनाख्यस्य शाबरभाष्यटीकाद्वयस्य दीपशिखा-ऋजुविमलाख्यं पञ्चिकाद्वयम् । तद्गिरां शालिकगिरामिति व्याख्यातं चन्द्रिकाकृता । माधवसरस्वती तु मीमांसाशास्त्रस्य परिचयप्रदानप्रसङ्गे भाट्टप्रस्थानमुपन्यस्य, प्राभाकरप्रस्थानन्तु भाष्यस्य प्रभाकरकृतं व्याख्यानद्वयम्—एकं विवरणं षट्सहस्रग्रन्थरूपम्, अपरं निबन्धनसंज्ञं द्वादशसहस्रग्रन्थात्मकम् । विवरणस्य दीपशिखा, निबन्धनस्य ऋजुविमला चेति टीकाद्वयं शालिकनाथकृतमिति शालिकाशब्दार्थं वर्णयांबभूव । अत एव—"इयं शालिका पञ्चिका स्यादि"ति, "शालिकायामुक्तमि"ति च निर्देशोऽभियुक्तानां दृश्यते । परं प्रकरणपञ्चिकाकोशे ऋजुविमलाकोशे वा शालिकनाथ इत्येव दृश्यते—"मिश्रशालिकनाथेने"त्यादि । मद्रपुरविश्वविद्यालयात् प्रकाशितायां पंचिकायां शालिकनाथमिश्रः, [बृ. पृ. १] शालिकमिश्रः [बृ. पृ. ४०७] इति च दृश्यते । अतो वयमिदमेव पुरस्कृत्य शालिकनाथ इत्येव व्यवाहार्ष्म ।

## शालिकनाथस्य शैली ।

अस्य तलस्पर्शि पाण्डित्यम्, वाक्यधोरणी मनोहारिणी, मतान्तरप्रतिक्षेपनैपुण्यमनितरसाधारणी । प्रभाकरमिश्रेऽतिभक्तिमतेऽस्मै कौमारिली शास्त्रविचारस-

रणिनैव रोचते । एतदीयग्रन्थान् पर्यालोचयतो भायात शास्त्र्युत्पत्तिरस्य परिष्कृता चतुरस्रा च। प्रकृत्या कठिना प्रभाकरमिश्रस्य वचोभङ्गी, न चेच्छालिकनाथस्य पञ्चिकाऽवतीर्णा स्यात्, प्रायेण सा दुरवबोधा भवेत्। किञ्च विस्तरेण विपयविचारे प्रसक्ते तदवसाने प्रतिपादितमर्थं श्लोकेन सङ्गृह्णाति ।

अयं यथा सौगतमतम्, तथा भाट्टानुयायिनां मण्डनमिश्रोम्वेकादीनाम्मतं खण्डयित्वा, सुनिपुणं प्रभाकरगुरोर्मतं स्थापयति । गरीयानस्याऽभिनिवेशः प्रभाकर-गुरुमते । मतान्तरोपरोधात्प्रभाकरमतसंरक्षणगौरवं नाऽन्यस्याऽन्तरेण शालिक-नाथम्। अयञ्च सोपहासं सोल्लुण्ठनञ्च खण्डयति कौमारिलं मतम्। संस्कृत-भाषायामस्य स्वातन्त्र्यमत्यधिकम्। यद्यपि समेपां ग्रन्थकाराणां प्राचामयमंशस्सा-धारणः, तत्राऽपि परिहासे निन्दायामयं समर्थानि पदानि प्रयुञ्जानो विशिष्यते। यथा "लिङादिव्यापारस्य प्रवृत्तिहेतुत्वाश्रयणं देवाः प्रतिपद्यन्ताम्, पिशितचक्षुपो मानुषा वयं नेयतीं प्रमाणभूमिकामवगाहितुं क्षमाः" [प्र० पं० पृ० ४१९] इति ।

## तज्जन्मस्थानम् ।

शालिकनाथमिश्रस्य मिश्रपदेन निर्देशात्प्रभाकरमिश्रविवेचनावसर उक्तरीत्या मैथिल इत्यायाति। हिन्दीभाषानुवादयुतस्य शङ्करदिग्विजयस्योपोद्घाते पण्डित-बलदेवोपाध्यायो मिश्रनाम्नाऽस्य मैथिलत्वं ब्रवीति। प्रसिद्धिरप्यीदृश्येव जागर्ति। परं कुसुमाञ्जलौ "गौडमीमांसकः" इत्युदयनाचार्येणाऽस्य नामोदटङ्कि। यथा— "वेदानुकारेण पठ्यमानेषु मन्वादिस्मृतिष्वपौरुषेयत्वाभिमानिनो गौडमीमांस-कस्याऽर्थनिश्चयः" इति। इदञ्च व्याचक्षाणो वरदराजो दीपिकायां "गौडमीमांसकः पञ्चिकाकारः" [कु. दी. पृ. ४०२] इति गौडमीमांसकस्येति पदस्यार्थं विवृणोति स्म।

तत्र गौडदेशः क इति विचारे शक्तिसङ्गमतन्त्रे—

"वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे ।
गौडदेशस्समाख्यातस्सर्वविद्याविशारदः" ॥ इति गौडदेशस्य वर्णनात्

विशेषप्रमाणबलेनाऽयं वङ्गदेशीय इति निर्णीयते। अत एव चित्सुख्या भूमिकायां स्वामी योगीन्द्रानन्दमहोदयो न्या. मी. आचार्यश्शालिको वङ्गीय [पृ. ३३] इति वदति ।

## शालिकनाथस्य प्रभाकरमिश्रस्य साक्षाच्छिष्यत्वकथनम् ।

अयं साक्षात् प्रभाकरशिष्य इति प्रसिद्धिर्विद्वत्समाजे। अत एवाऽयं भगवान् "गुरुः," "उपाध्यायः", "भगवान् उपाध्यायः" इत्यादिपूज्यवाचकैरेव शब्दैश्श्रद्धातिशयेन प्रभाकरमिश्रं निर्दिशति ।

यथा—

"प्रभाकरगुरोर्भावं मितगम्भीरभाषिणः ।
अञ्जसा व्यञ्जयिष्यन्ती पञ्चिका क्रियते मया" [बृ. पृ. १] इति

सबहुमानं तं महीकरोति ।

## शालिकनाथप्रणीता ग्रन्थाः ।

गुरुकृतस्य विवरण-निबन्धनाख्यटीकाद्वयस्य दीपशिखा-ऋजुविमलाख्यं व्याख्याद्वयम्, शाबरभाष्यीयतर्कपादस्य परिशिष्टम्, प्रकरणपञ्चिका चेति ग्रन्थचतुष्टयमनेन कृतमुपलभ्यते। तत्र ऋजुविमला समग्रोपलभ्यते। दीपशिखोत्तरषट्कस्यैव। भाष्यपरिशिष्टं मद्रपुरविश्वविद्यालयेन प्रकाशितम्। प्रकरणपञ्चिकायाश्चाऽस्मदीयमिदमेव संस्करणम्। एतैश्चतुर्भिर्ग्रन्थैः प्रभाकरप्रस्थाने निगूहितानि तत्त्वरत्नानि प्राचकाशदयं शालिकनाथः।

साम्प्रतं प्राभाकरप्रस्थान उपलभ्यमानाः क्षुद्रा महान्तश्च ग्रन्थाश्शालिकनाथकृतिमेवोपजीवन्ति। "लोकानुमतमित्येव शालिकोक्तं प्रसाध्यते" इति भवनाथोक्तिरपि नाऽत्युक्तिकोटिमाटीकते, किञ्चैषा परिपक्ववयसा शालिकनाथेन निरमायीत्युपपादनकौशलेन, "क्षुण्णश्चाऽयमर्थो ऋजुविमलादावि"ति तत्र तत्रोपन्यासेन च सम्प्रधार्यते।

## तेषां पौर्वापर्यम्।

यथा—

१—"एतच्च पञ्चिकाद्वये प्रपञ्चितम्, अत्राऽप्यनुमानपरिच्छेदे वक्ष्यामः" इति प्रकरणपञ्चिकासन्दर्भेण प्रथमं दीपशिखा, तत ऋजुविमला, ततः प्रकरणपञ्चिकेत्यवगम्यते।

२—"एवं निराकृतश्चाऽयं बाह्यार्थसिद्धावृजुविमलायाम्" [प्र. पं. पृ. ३१७]

३—"किं भवानृजुविमलायामनवहितः ?," [प्र. पं. पृ. ४७७]

४—"अर्थश्चाऽयमतिक्षुण्ण ऋजुविमलादिषु [प्र. पृ. ४८७] इत्यादिनिर्देशेन ऋजुविमलाया आनन्तर्यं प्रकरणपञ्चिकाया अवगम्यते। भाष्यपरिशिष्टे च "तदुक्तं नीतिपथे"इति प्रकरणपञ्चिकावचनस्योदाहरणात्। [प्र. पं. पृ. ४०] सर्वतः कानीनत्वं भाष्यपरिशिष्टस्य प्रतीयते।

## अत्रेयं समीक्षा।

ऋजुविमलायामर्थवादाधिकरणे वाक्यार्थमातृकायाः, स्मृत्यधिकरणे नीतिपथस्य, मीमांसाजीवरक्षाया भावार्थाधिकरणे वाक्यार्थमातृकायाः, विमलाञ्जनस्याऽपूर्वाधिकरणे, विषयकरणीयस्य च निर्देशो लभ्यते। अपूर्वाधिकरणे "आत्मनश्च निष्क्रियत्वं सर्वगतत्वादात्मनः" इति बृहतीसन्दर्भव्याख्यानावसरे "निष्क्रियता च सर्वगतत्वात्। उपपादिता च सर्वगतताऽस्माभिः परिशिष्टे" इति परस्परमुभयत्राऽपि व्यवहारदर्शनात् यद्यप्ययं शालिकनाथो व्याहतवचन इव दृश्यते। तथाऽपि दर्शनग्रन्थकर्तॄणाम्, संस्कृतसाहित्यस्य चेदं वैशिष्ट्यं चिकीर्षितांस्तांस्तान्ग्रन्थान्बुद्धिस्थीकृत्य, ग्रन्थेषु च तानि तानि वचनानि परस्परं संवादयन्ति ते। अतस्तेषां ग्रन्थानां पौर्वापर्येऽपि, बुद्धिस्थत्वेन रूपेण तेषां परस्परं संवादस्सर्वत्र सङ्गच्छत एव। इदञ्च वैचित्र्यं संस्कृतसाहित्य एवोपलभ्यते, नाऽन्यत्र। एवमेवाऽन्यत्र सर्वत्राऽपि परस्परं संवाद इयमेव रीतिरुद्भावनीया—इति।

## शालिकनाथस्य समयः ।

अयञ्च शालिकनाथो मण्डनमिश्रोक्तार्थान्खण्डयति पञ्चिकादौ । शालिकोक्तानर्थान्वाचस्पतिः खण्डयति स्वीयेषु ग्रन्थेषु । यथा कुमारिल—मण्डनाभ्यां प्रभाकरस्संदष्टः, तथैव मण्डनवाचस्पतिभ्यां संदष्टश्शालिकनाथः । अतो मण्डनमिश्रस्य पश्चात्कालिकश्शालिकनाथ इत्यत्र नाऽस्ति संशीतिलेशः । तथा शालिकनाथोक्तानर्थान्खण्डयन् शब्दतोऽर्थतश्चाऽनुवदन् वाचस्पतिमिश्रस्तदनन्तरकालिक इति निश्चप्रचम् । तथाहि—

१—भामत्यां-"यत्र यदध्यासः, तद्विवेकाग्रहणनिबन्धनो भ्रमः" इति शाङ्करभाष्यं व्याचक्षाणो नयवीथ्यां शालिकनाथेन समर्थितं सर्वज्ञानयाथार्थ्यवादमानुपूर्व्येणाऽनूद्य निरस्यति ।

२—सर्वंवित्तिषु चाऽऽत्मनः कर्तृत्वमेव, न कर्मत्वमिति तत्त्वालोके प्रतिपादितमर्थं "कथं पुनः प्रत्यगात्मन्यध्यासो विषय—तद्धर्माणामिति" भाष्यभामत्याम् ।

३—"नवीनास्तून्नयन्ति अनिरूपितनियोगव्यापारस्येदं चोद्यमि" त्यादिना ऋजुविमलापञ्चिकायामु(पृ० ३७)क्तमर्थं न्यायकणिकाया(पृ० १०९) मुपन्यस्यति ।

४—नियोगो विध्यर्थ इति टीकाकारमतखण्डनावसरे वाक्यार्थमातृकावृत्तिपंक्तीरक्षरशः ५५ तः ६१ पर्यन्तेषु त्रिचतुरेषु पत्रेषु न्यायकणिकायामनुवदति ।

५—तत्त्वबिन्दौ कश्चित्त्वाह इत्यादिना ।

"वाच्यस्याऽर्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः ।
तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते" ॥ [प्र. पं. पृ. ३९८] इति ।

वाक्यार्थमातृकावृत्तिगतं पद्यं निरसितुमनुवदति ।

६—अलौकिककार्यपरत्वेनाऽपौरुषेयत्वं शास्त्रस्येति सिद्धान्तनिरसनम् ।

७—अपरे त्वग्रहणमित्यादिना [ न्या. वा. तात्प. टी. ८५, ८७, ८८ ] शालिकमतनिरास इति ।

८—"न तावन्मीमांसकवत्पदार्थान्तरमतीन्द्रिया शक्तिरङ्गीक्रियते" [ न्या. वा. ता. टी. पृ. १०३ ] इति ।

९—"तस्मात्सदिवाऽसदपि तत्त्वमभ्युपेयमि" [ ता. टी. पृ. ११२ ] ति ।

१०—"परीक्षापर्वणि वचनार्हमपि सुभाषितरुचितया तद्विलम्बमसहमानो भाष्यकारो लक्षणावसर एवाऽऽहे"त्यनेन शालिकोक्तं निरस्यति [ न्या. वा. ता. टी. १२७ ]

११—"अपि च प्रभाकरदर्शनेऽनुमानादिज्ञानमात्मनि प्रत्यक्षं न भवेत्, न हि तत्सम्प्रयोगजं तस्मादेतदपि परिभावनीयं सूरिभिः" [ न्या. वा. ता. टी. पृ. १५५ ]

१२—"नाऽपि प्रमाणविनिश्चितो गृहाभावः पाक्षिकमस्य गृहसत्त्वं प्रतिक्षिपन् सत्त्वमपि प्रतिक्षेप्तुं सांशयिकत्वमपनेतुमर्हतीति युक्तमि"। [न्या. वा. ता. टी. ४३८–४३९. तत्त्व. कौ. पृ. ९० ] त्यादि।

अतोऽस्मिन्नवसरे कुमारिलभट्टः, प्रभाकरमिश्रः, मण्डनमिश्रः, शालिकनाथमिश्रः, वाचस्पतिमिश्रश्चेत्येतेषां पञ्चानां पौर्वापर्यं स्थितम्। वाचस्पतिमिश्रो न्यायसूचीनिबन्धे स्वकीयं समयं सूचयति—

"न्यायसूचीनिबन्धोऽसावकारि सुधियाम्मुदे।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे"॥ इत्यनेन

अस्मिन्विषये वैदेशिकानां विदुषां विभिन्नो विचारो दृश्यते। तत्र मॉक्समुल्लरमहोदयः A. D. ११५० अस्य समयः इत्यभिप्रैति। मेक्डानल्महोदयस्तु—A. D. ११०० इति मनुते। बीबरमहोदयस्तु—A. D. १००० शतकमिति मनुते। स्वोक्तिदार्ढ्याय उपर्युद्धृतं पद्यञ्च प्रमाणयति। अत्र शालिवाहनशकग्रहणम्, अथवा विक्रमशकग्रहणमित्यत्राऽपि विवादो वर्तते। वयन्तु मन्यामहे विक्रमशकगणनया ८९८ मितं वर्षाणि A.D. ८४२, भवन्तीति। एवमेव झोपाह्वलक्ष्मीनाथशर्मणा प्रकाशविकासभूमिकायां निरणायि। वयमपि तदेवाऽनुमन्यामहे यावद्बलवत्तरबाधकोपलम्भम्। एवं सति तत्पूर्वतनस्य शालिकनाथस्य 780-825 स्थितिकाल इति निश्चीयते।

तथा च निर्गलितोऽर्थः—कुमारिल-मण्डनाभ्यां सन्दष्टः प्रभाकरः, मण्डनमिश्र-वाचस्पतिमिश्राभ्यां सन्दष्टश्शालिकनाथ इति। एते मीमांसकाः क्रमेणोत्तरोत्तरकालिका इत्येतावन्मात्रमुक्त्वाऽत्रैव तिष्ठासामः। अत्र विषये विमर्शका एव प्रमाणमिति।

अभियुक्ताश्शालिकनाथमधिकृत्य पद्यद्वयं पठन्ति।

यथा—

"द्वैते लक्षद्वयाधीती चाऽद्वैते लक्षपारगः।
अद्याऽपि विद्यालाभाय जागर्म्येव जरन्नपि॥"
"शालिकनाथवन्मूढो न जातो न जनिष्यते।
प्रभाकरप्रकाशाय येन दीपशिखा कृते"॥ ति

## न्यायसिद्धिव्याख्या।

न्यायसिद्धिकारो नारायणः प्रकरणपञ्चिकाया गूढाभिप्रायतामालोक्य, मितम्पचमतीनां ग्रन्थार्थानवबोधञ्चाऽऽलोच्य न्यायसिद्धिन्नाम व्याख्यामरचयत्। व्याख्यया चाऽनया मूलग्रन्थस्स्फुटं विवृतः। व्याख्या चैषा मूलार्थपरिज्ञाने महदुपकरोतीति स्फुटं पठितॄणां। यत्र यत्र मूलमन्यथयितं लेखकैश्शोधकैर्वा, तत्र सर्वत्राऽपि यथावन्मूलनिवेशनेन सम्प्रदायानुगतव्याख्याकरणेन च ते दोषा अतिदूरोत्सारिता व्याख्यात्रा। "नामूलं लिख्यते किञ्चित् नानपेक्षितमुच्यते" इत्यभि-
युक्तवचनं सर्वशाऽन्वमारि।

## व्याख्याया वैशिष्ट्यम् ।

प्रभाकरसम्मता द्रव्यादिपदार्थाः, (पृ० ७८–८२) जातिनिर्णये, प्रत्यक्षपरिच्छेदे च (पृ० १५४–१६०) संक्षेपेणोपवर्णिताः । अस्या अध्ययनेन कस्याऽपि प्राभाकरीयस्य पदार्थस्य परिज्ञानाय ग्रन्थान्तरदिदृक्षैव नोदीयात् । किञ्चाऽनेन भवनाथनन्दीश्वरादीनां युक्तयो युक्तियुक्ता न काश्चिदप्युपेक्षिताः, अनुक्तिसहाश्च न काश्चिदपि न पर्यालोचिताः, कठिनतमा अन्तस्साराः प्रकरणपञ्चिकापङ्क्तयस्तथा व्याख्याता यथाऽतितरां समुल्लसति चित्तं निधिलाभ इवेति नेदं तिरोहितं व्याख्यानपरिशीलनैकतानमानसानां सुमनसाम् । यथा—

१—"क्रमस्य नवमपदार्थत्वम् ।"

२—"ज्ञप्तौ सापेक्षं ज्ञानं स्मृतिरिति लक्षणं द्रष्टव्यम्, संस्कारजन्तु प्रायिकमि" ति ।

३—"काऽनुभूतिरित्युपेक्षायां सा स्मृतेरन्येत्युत्तरमिति मन्दमतीनां शङ्का स्यात्, तन्निवृत्त्यर्थं स्वयमेव व्याचष्टे-सा स्मृतेरन्येति नाऽनुभूतिस्वरूपप्रदर्शनम्, किन्त्वविसम्वादिज्ञानं प्रमाणमित्यादिपरोक्तलक्षणेऽव्याप्तिः, अतिव्याप्तिश्च दोष उक्तः, स इह नाऽस्तीत्येवम्परमि" त्यादयो विशेषा द्रष्टव्याः । ते चाऽर्था अस्माभिश्चिकित्सिताः, समर्थिताश्च शालिकोक्ता अर्थाष्टिप्पण्यां परिशिष्टे च । अनेन समग्रायाः पञ्चिकाया व्याख्या कृतेति प्रतीयते । परन्तु प्रत्यक्षपरिच्छेदान्तो भागोऽस्माभिरुपलब्धः, तावान् मुद्रितः । ततः प्रभृति छात्राणामुपकाराय विषमस्थलटिप्पणी संयोजिताऽस्माभिः । प्राभाकरमतजिज्ञासूनामुपकारं समीहमानैरस्माभिस्सरलैरेव वाक्यैस्सर्वे पदार्थास्तत्र तत्र प्रघट्टके संक्षिप्य प्रदर्शिताः ।

## कोऽयं नारायणः ।

नारायणो न्यायसिद्धिव्याख्याकारः कुत्राऽजनिष्ट, तत्कृता ग्रन्थाः के ?, तस्य कालः क इत्यादिकमधिकृत्य किञ्चिदुच्यते ।

अत्र त्रयो विद्वांसो नारायणनाम्ना प्रसिद्धाश्श्रूयन्ते । तत्राऽऽद्यो मातृदत्ततनूजः, केरलदेशस्थनिलानद्युत्तरवर्त्युपरिनवग्रामवास्तव्यश्चिदानन्दपण्डितपृष्ठसेवी मानमेयोदयाख्यस्य पूर्वमीमांसाग्रन्थस्य प्रमाणपरिच्छेदस्य कर्ता नारायणभट्ट ( C. A. D. 1560—1646 ) इति । यद्यपि

"मानमेयविभागेन वस्तूनां द्विविधा स्थितिः ।<br>अतस्तदुभयं ब्रूमश्श्रीमत्कौमारिलाध्वने" ॥ ति

प्रमेयपरिच्छेदोऽपि चिकीर्षिततया प्रत्यज्ञायि । तथाऽपि कुतश्चित्प्रतिबन्धकादसौविध्याद्वा स न कृत इति वयं मन्यामहे ।

द्वितीयस्तु श्रीकृष्णान्तेवासी नारायणपण्डितो मानवेदनृपतेरादेशानुसारेण प्रमेयपरिच्छेदप्रणयनेन नारायणभट्टेनाऽर्धनिर्मितं ग्रन्थमपूरयत् । यथोक्तं तेन प्रमेयपरिच्छेदान्ते—

"प्राङ्नारायणसूरिणाऽर्धरचितं तन्मानमेयोदयम् ।
मोहात्पूरयितुं कृता मतिरियं सन्तुः प्रसीदन्त नः" ॥ [मा. मे. पृ. ६४ अ. श. सं.] इति अनेन गुरुसम्मताः पदार्थाः कौमारिलमतोपन्यासश्चेति लघुकायश्च कश्चन ग्रन्थः कृतः। अनन्तशयनविश्वविद्यालयेन प्रकाशितः १९५४ इस्वीयवर्षे। C. A. D. 1700 अस्य काल इत्यैतिह्यकुशलैर्न्यरूपि।

तृतीयोऽपि भावनाविवेकव्याख्याता नारायणश्श्रूयते। स तत्र तत्र मूलानुपात्तमपि प्रभाकरसिद्धान्तं तत्र तत्र निरस्यन् दृश्यते। अस्य पितुर्नाम विष्णुः—

"भावनाया विवेकस्य विवृतिं विष्णुनन्दनः।
लघ्वीं नारायणश्चक्रे नारायणपरायणः" ॥ इत्युपसंहारगतात्पद्यादवगम्यते। इतोधिकं तदीयं चरितं नाऽधिगतम्। एभ्योऽन्यः प्रकरणव्याख्याता-इति। सः प्रतिप्रकरणमवसाने जयपुरजनुषा नारायणेनेति निर्दिशति। यथा प्रत्यक्षपरिच्छेदान्ते—

"श्रीशालिकप्रकरणव्याख्या नारायणस्य जयपुरीजनुषः।
प्रत्यक्षपरिच्छेदः पूर्णो यावदादितः प्रारभ्य" ॥ इत्यनन्तशयनप्राच्यकोशागारादागते पुस्तके दृश्यते। व्याख्यायां प्राभाकराणां पदार्थानां प्रक्रियेत्यारभ्य प्रतिपाद्यमाना गुरुसम्मताः पदार्था इति ग्रन्थेन साकं शब्दतोऽर्थतश्चाऽनुवादो दृश्यते। तथाऽपि स्मृतिविषये लक्षणान्तरकरणं क्रमस्य नवमपदार्थत्वमित्यादिना भेदस्स्फुटं प्रतीयते। तत्र काशिका-नयविवेक-प्रभाकरविजय-विवरणप्रमेयसङ्ग्रहादिष्वुक्तानामर्थानां खण्डनायाऽनुवादादनन्तरकालिक इत्येतावदेव वक्तुं पार्यतेऽस्माभिरितो नाधिकम्।

## व्याख्यायां त्यक्तांशपूरणम्।

प्रकरणपञ्चिका पृ० ७८, १९ पंक्तावेवं पठनीयम्। प्रमाणम्। प्रयोगस्तु—लोष्टादिष्ववयवेष्वणुष्वातिशयोऽवधिमान् परिमाणातिशयत्वात् महत्वातिशयवत्। ततोऽल्पपरिमाणतारतम्यस्याऽवधिभूमिः परमाणुरित्युच्यते। स च नित्यनिरवयवत्वादाकाशवत्। स च निरवयवोऽल्पऽरिमाणतारतम्यस्याऽवधित्वात्। यत्सावयवं तदल्पपरिमाणावधिभूतं न भवति, यथा तन्त्वादय इति।

इदमस्मिन्सन्दर्भे वक्तव्यम्-यन्मण्डनमिश्रोद्वेगे शालिकनाथस्येव, शालिकनाथोद्वेगे पार्थसारथिमिश्रस्याऽपि महदेवाऽसहनमासीत्। तदेव निमित्तं पार्थसारथिमिश्रस्य न्यायरत्नमालाख्यनिबन्धस्य रचनेऽपि। मण्डनपृष्ठसेवी वाचस्पतिमिश्रोऽपि स्वीयेषु ग्रन्थेषु तात्पर्यटीका-भामती-तत्त्वबिन्दु—तत्त्वकौमुदीषु प्रकरणपञ्चिकोपक्षिप्तानि सर्वाण्यपि दूषणानि समुद्धरति। तानि च टिप्पण्यामस्माभिस्स्थलादिनिर्देशपूर्वकं सङ्गृह्य प्रदर्शितानि। किञ्च मुद्रिते मूलमात्रे प्रकाशिते च वक्तव्यं सर्वम्, तत्र तत्रोल्लेखनेन विषयवाक्यानां पूर्वपक्षतयोदाहृतानां स्थानादिकमन्विष्य यथोपलम्भं सन्यवेशि टिप्पण्याम्।

भाट्टप्राभाकरसम्मतानां प्रमाण-प्रमेयरूपाणामर्थानां विवरणावेदिका सूचनी विषयानुक्रमणिका च सन्निवेशिता जिज्ञासूनां परिज्ञानाय। प्रकरणपञ्चिकायाः

अर्थानुसन्धानाय मूलश्लोकास्सङ्गृहीताः। वाक्यार्थमातृकायामुक्ता आन्तरश्लोकाश्च *अनेन सङ्केतेन ज्ञापिताः। प्रकरणपञ्चिकादावुदाहृतानां ग्रन्थानां तत्कर्तॄणां निर्देशश्च कृतोऽस्ति, प्रमादपाठशुद्धपाठपत्रिका च।

इदन्तु संस्करणं सव्याख्यायाः प्रकरणपञ्चिकायाः प्राचीनबहुकोशसाहाय्येन ऋजुविमलादिपरिशीलनेन च समपादि। अध्यापनकार्ये ग्रन्थान्तरशोधने च व्यापृतोऽहं शनैश्शनैरेव कार्यमिदं सम्पादयितुं प्राभवम्। अत एतावान्विलम्बस्समजनिष्ट। तथाऽपि समाप्तिमगमदिति भृशं प्रमोदस्थानम्।

## समर्पणम्।

स्वर्गीयाः पूज्या अस्मदाचार्यचरणा महामहोपाध्यायाश्चिन्नस्वामिशास्त्रिचरणाः वारं वारं तदा तदा पाठभेदादिसमुद्धरणपूर्वकमुत्कृष्टं किञ्चन संस्करणं प्रकरणपञ्चिकायाः कर्त्तव्यमिति स्वीयं सङ्कल्पं पूरयितुमसकृदस्मानन्तेवासिन आदिशन्ति स्म। सत्यसङ्कल्पा अस्माकं पूज्यपादा आपस्तम्बोक्तश्रुतर्षिलक्षणसम्पन्नाः—

"लौकिकानाञ्च साधूनामर्थं वागनुधावति।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति"॥ इति भवभूतिवचनमस्मान्स्मारयन्ति।

## धन्यवादाः।

इदन्त्विहाऽवसरप्राप्तम्-एतस्य प्रकाशने न केवलमस्मदध्ययनकाले संशोधिता प्रकरणपञ्चिकैव मूलम्, किन्तु मद्रपुरराजकीयप्राचीनकोशभाण्डागारतोऽत्रयोजिताया न्यायसिद्धिव्याख्यायाः प्रतिलिपिकरणेन स्वयन्तोलनेन चाऽत्यन्तमुपकारी श्रीमान्पण्डितराज एस् सुब्रह्मण्यशास्त्री धन्यवादमर्हति।

विद्यावारिधयः ब्रह्मश्रिया विराजमानाश्श्रीमच्छृङ्गेरीजगद्गुरुशङ्कराचार्यमठास्थानविद्वांसः काशीहिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालये वेदान्तशास्त्रप्राध्यापका वी. एस्. श्रीरामचन्द्रशास्त्रिमहोदयास्स्वीयं संशोधितं प्रकरणपञ्चिकापुस्तकं यावन्मुद्रणकालं मन्निकटे संस्थाप्य बहूपकृतवन्त इति न केवलं वयम्, अस्मन्मुखन्निमित्तीकृत्य काशीहिन्दूविद्यालयीयदर्शनानुसन्धानसमितिरपि विशेषतस्तमुपकारमनुस्मरति, अतस्तेभ्यः कृतज्ञतां वयमाबिभृमः।

वाराणसेयसँस्कृतविश्वविद्यालयीयसरस्वतीपुस्तकालयाध्यक्षेण डा० सुभद्रझामहोदयेन स्वयं न केवलं सरस्वतीभवनात्किन्तु वङ्गीयैशाटिकसोसैटीतोऽपि स्वच्छाः प्रकरणपञ्चिकामातृका आनाय्य प्रदाय च महानुपकार आधीयते स्मेति, सत्यमयं धन्यवादार्हः।

श्रीमान् श्रीकृष्णपन्तमहोदयस्साहित्याचार्यो ललिताघट्टस्थविश्वनाथपुस्तकालयाध्यक्षः पण्डितपत्रप्रदानेनाऽस्याः प्रसाधनेऽतितरामुपचकारेति सोऽपि धन्यवादपात्रम्।

काशीहिन्दूविश्वविद्यालये पूर्वमीमांसाध्यापकोऽस्मत्सहयोग्याद्योपाह्व मध्वाचार्यः, सर्वमपि स्वीयमध्यापनसमयमतिरिच्य सव्याख्यप्रकरणपञ्चिकाया अस्या-

स्तदा तदा प्रतिलिपिकरणे तत्तदंशसंशोधनेऽन्यान्येषु चैतत्प्रसक्तेषु कार्येषु केवलमात्मीयभावेन परिश्रमस्वीकारेण महान्तमुपकारं स्वीयकर्तव्यबुद्ध्यैवाऽतानीत्। अतो विश्वस्यते भगवान्विश्वनाथो यथासमयं तस्योद्धरणक्रमं करिष्यति—इति।

पं० दलसुखभाई मलवणियामहाशयो भूतपूर्वहिन्दूविश्वविद्यालयान्तर्गतसंस्कृतमहाविद्यालयजैनशास्त्रप्राध्यापकः, साम्प्रतं अहमदाबादस्थदलपतलालभारतीयसंस्कृतिविद्यामन्दिरस्य डॉयरेक्टरपदमलङ्कुर्वाणश्च, अस्य ग्रन्थस्य प्रकाशनोपक्रमे प्रूफसंशोधनादिषु महत्साहाय्यमकरोदिति, सोऽपि विशेषतो धन्यवादपात्रम्।

निवेदयामश्च सबहुमानमेतस्यास्सव्याख्यायाः प्रकरणपञ्चिकायास्संशोधनविषये आगर्भसन्धि आ च निर्वहणसन्धि यथायोगमपेक्षितसकलसामग्रीप्रदानेनाऽस्मानधमर्णयन्ति हिन्दूविश्वविद्यालयीयप्राच्य-प्रतीच्यदर्शनविभागशीर्षण्या आर्टस् महाविद्यालयाध्यक्षाः संस्कृतविद्याविनोदरसिका विशिष्य दर्शनशास्त्रमर्मज्ञाः श्रीमन्तः पद्मभूषण डॉ. टी. आर. वी. मूर्तिमहोदयाः, यदत्र सौष्ठवं किञ्चित्संस्करणे, तत्सर्वं तेषामेव। आशास्यत एतेषामनितरसाधारणेन प्रोत्साहनेन विधिविवेकादिप्रबन्धशिखामणीनां प्रकाशनमचिरादित एव सम्पत्स्यत इति।

## एतद्ग्रन्थसंस्करणे संगृहीतान्यादर्शपुस्तकानि।

सव्याख्यायाः प्रकरणपञ्चिकायाः प्रसाधनाय सङ्गृहीतान्यादर्शपुस्तकानि त्रीणि, तेषु चौखम्भाग्रन्थमालातः प्रकाशितमस्माकमध्ययनवेलायामेव तदा तदा संशोधितं मदीयं पुस्तकं कसंज्ञया व्यवाहारि। महिशूरपुरीयप्राच्यकोशागारस्थहस्तलिखितपुस्तकद्वयाधारेण संशोध्य पाठभेदेन चाऽस्मद्प्रियसुहृद्वरेण S. सुब्रह्मण्यशास्त्रिणा एम० ए० Reader in Sanskrit Madras University. विलिख्य प्रेषितं खसंज्ञया व्यवहृतम्। वाराणसेयसंस्कृतविश्वविद्यालयीयग्रन्थपालेन श्रीमता डाक्टर सुभद्रझामहोदयेन परमयाऽनुकम्पया सौहार्देन च दत्तं सरस्वतीभवनस्थं गसंज्ञया व्यवहृतम्। ऐशियाटिकसोसैटीतः प्रतिकृतिचित्रद्वारेण समानीय तेनैव महानुभावेन दत्तमस्माकं महत उपकाराय प्रकल्पते स्म।

## व्याख्याप्रसाधने सामग्री।

न्यायसिद्धिव्याख्यायास्संस्करणे मद्रपुरविश्वविद्यालयात् प्रतिलिपीकृत्य समानीतं पुस्तकद्वयम्। तत्राऽऽद्यं शास्त्रमुखप्रकरणमारभ्य प्रत्यक्षपरिच्छेदान्तम्। द्वितीयन्त्वाद्यन्तरहितं प्रथमस्यैवाऽनुवादरूपम्, तत्र तत्र मध्ये त्रुटितञ्च। अनन्तशयनस्थप्राच्यपुस्तकागारात् प्रतिलिपीकृत्य श्रीमद्भिः डा० T.R.V. Murti. महोदयैस्समानीय दत्तमतिशुद्धञ्च। यत्र शास्त्रमुखम्, प्रमाणपारायणस्य प्रत्यक्षपरिच्छेदान्तञ्चेति द्वे प्रकरणे स्तः। अस्यैवाऽऽधारेण शास्त्रमुखस्य व्याख्यानं संस्करणेऽस्मिन्नस्माभिस्समयोजि।

महामहोपाध्यायमीमांसाकण्ठीरववैद्यनाथशास्त्रिचरणैस्संशोधितायास्सव्याख्यायाः प्रकरणपञ्चिकाया द्वात्रिंशत्पृष्ठपर्यन्तभागः पण्डितप्रवरेण श्री सुब्रह्मण्यशास्त्रिणा वितीर्णोऽस्माकम्महत एवोपकारायाऽकल्पत। एवमेतेषामादर्शानां साहाय्येन ग्रन्थोऽयं समशोधि। एवं सावधानेन मनसा कृतेऽपि संशोधने मनुष्यमात्रसुलभेन दृष्टिदोषेण सीसकाक्षरसंयोजकदोषेण च मुद्रापणकाले इकारेकारोकारौकारादिमात्राक्षराणां भङ्गतोऽनिवारणीयान्मात्राच्युतादिदोषान् तत्र तत्रोपलभ्यमानान् प्रियपाठकमहाभागा एव संशोधयितुं सादरमनुरुध्यन्ते।

विज्ञापयामः—इदमपरं परमं प्रमोदस्थानं यदस्य ग्रन्थरत्नस्य मुद्रणकार्यं भारतभारतीसमाराधनतत्परान्तःकरणानां हितमितमधुरभाषिणां विश्वविद्यालयोत्तमप्रबन्धनिष्णातानां विश्रान्त-उच्चतमन्यायाधीश्वराणां हिन्दूविश्वविद्यालयकुलपतिविभूषणानां श्रीमतां एन्. एच्. भगवतीमहोदयानां कार्यकाले सांप्रतिकेऽष्टादशाधिकद्विसहस्रसम्मिते वैक्रमाब्दे (२०१८) सम्पन्नमिति।

अन्यच्च इतस्सम्पादकात्कदाचिदनिवार्यतया समुपनतेष्वपि मुद्राशालाक्लेशेषु केष्वपि स्वयमनिर्विद्य निरवद्यमेव स्वीयंकार्यभारं निर्व्यूढवान्मुद्रालयस्वामी श्रीमांल्लक्ष्मीदासस्तानुजयं सप्रमोदञ्चाभिनन्द्यतेऽस्माभिः।

## उपसंहारः।

अन्ते च केवलं दर्शनशास्त्ररसिकान्विदुष एतदेवाऽभ्यर्थये यदेवंविधपरिश्रमेण सम्पादितं प्रबन्धशिखामणिमिमसवलोक्य सफलयन्तु मामकीनं परिश्रमम्, आस्वादयन्तु प्रभाकरमीमांसासाम्राज्यधुरन्धरस्य शालिकनाथस्य वचसां रसम्, आकलयन्तु जैमिनीयमीमांसाशास्त्रसारं प्राभाकरीयम्, प्रचारयन्तु सर्वत्राज्ञानान्ध्यनिराकरणपूर्वकं ज्ञानालोकम्—इति। अन्ते च सविनयम्—

"तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः।
सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः॥
न चाऽत्राऽतीव कर्तव्यं दोषदृष्टिपरं मनः।
दोषोऽविद्यमानोऽपि तच्चित्तानां प्रकाशते॥
आगमप्रवणश्चाऽहं नाऽपवाद्यस्स्खलन्नपि।
न हि सद्वर्त्मना गच्छन्स्खलितेष्वप्यपोद्यते"॥ इत्यभियुक्तवचनैरेव

निवेदयति—

विदुषामाश्रवः

म. म. चिन्नस्वामिशास्त्रिचरणानां शिष्यः

**मीमांसारत्नं०-अ० सुब्रह्मण्यशास्त्री**

(कपालतटाकपुराभिजनः)

मीमांसा—वेदान्ताचार्यः

काशीहिन्दूविश्वविद्यालयान्तर्गतसंस्कृतमहाविद्यालयप्राध्यापकः

दीपावली
वै. सं. २०१८
७-११-६१

# प्रकरणपञ्चिकाया विषयानुक्रमणिका ।

पृ.

## १—शास्त्रमुखस्य



## २—नीतिपथस्य



## ३—नयवीथीप्रकरणस्य



## ४—जातिनिर्णयस्य

## ५—अमृतकलायाः ।



## ६—प्रमाणपारायणस्य ।

## अनुमानपरिच्छेदस्य ।

## शास्त्रपरिच्छेदस्य

पृ.

## ७—विमलाञ्जनस्य



## ८—तत्त्वालोकोस्य

## ९—न्यायशुद्धेः



## १०—मीमांसाजीवरक्षायाः



## ११—सवृत्तिकाया वाक्यार्थमातृकायाः

## द्वितीयपरिच्छेदस्य

## १२—विषयकरणीयस्य

पृ.

## १३—अङ्गपारायणे प्रथमपरिच्छेदस्य



## द्वितीयपरिच्छेदस्य

पृ.

## १४—अतिदेशपारायणस्य



**प्रकरणपञ्चिकाया विषयानुक्रमणिका समाप्ता ।**

---

# प्रकरणपञ्चिकामूलश्लोकाः ।

स्वाध्यायविधिवाक्यार्थविचारे प्रयतामहे ।
प्रभाकरगुरोर्दृष्ट्या मीमांसारम्भसिद्धये ॥ १ ॥

शास्त्रमुखं नाम गुरोराविष्कर्तुं गभीरमपि भावम् ।
शालिकनाथेन कृतं प्रकरणमेतत्प्रसन्नतरम् ॥ २ ॥

अर्थासंस्पर्शिताशङ्का यथा शब्दस्य वार्यते ।
प्रभाकरगुरोश्शिष्यैस्तथा यत्नो विधीयते ॥ ३ ॥

अत्र लौकिकवाक्यानां व्यभिचाराभिमानतः ।
अर्थासंस्पर्शितां केचिदाहुश्शब्दस्य वादिनः ॥ ४ ॥

निश्चयोऽर्थस्य संस्पर्शः स चाऽर्थाव्यभिचारिणः ।
प्रत्यक्षादेरेव भवेच्छब्दस्तु व्यभिचारवान् ॥ ५ ॥

विनाऽप्यर्थं हि शब्देन प्रतीतिरुपजायते ।
अङ्गुल्यग्रेऽस्ति करिणां यूथमित्येवमादिना ॥ ६ ॥

न चाऽत्र शक्यते वक्तुं शुक्तौ रजतबोधवत् ।
अग्रहाद्भ्रान्तिरेषेति कारणस्याऽविशेषतः ॥ ७ ॥

दुष्टा हि हेतवः कार्यं सम्पूर्णं कर्तुमक्षमाः ।
तेन भेदाग्रहो युक्तश्शुक्तिकारजतादिषु ॥ ८ ॥

इह तु ज्ञानहेतुर्यश्शब्दस्स न विशिष्यते ।
विशिष्यते यस्तु वक्ता स ज्ञानस्य न कारणम् ॥ ९ ॥

वक्ताऽपि यदि विज्ञानहेतुस्स्यादिन्द्रियादिवत् ।
ततस्तस्याऽपि दोषेण भवेदग्रहणं तदा ॥१०॥

वक्ता तु केवलं शब्दव्यक्तावेवोपयुज्यते ।
ज्ञानन्तु शब्दमात्रेण निरपेक्षेण जन्यते ॥११॥

न च तस्येह दुष्टत्वं किञ्चिदप्युपलभ्यते ।
दोषश्चाऽग्रहणे हेतुस्तदभावे स्फुटो ग्रहः ॥१२॥

तेन शब्दोपजनितं ज्ञानमेवेदमीदृशम् ।
अर्थं व्यतिक्रामतीति कुतस्तेनाऽर्थनिश्चयः ॥१३॥
येनाऽपि हि विना यस्य सद्भाव उपपद्यते ।
निश्चयस्तत्र तेनेति सुभाषितमिदं वचः ॥१४॥
नन्वेवमाप्तवाक्येभ्यः कथं व्यवहृतिर्भवेत् ।
व्यवहारो हि लोकस्य कथं स्यान्निश्चयं विना ॥१५॥
उच्यते व्यवहारो हि सन्देहादपि लौकिकः ।
प्रायशो दृश्यते तेन न किञ्चिदिह दुष्यति ॥१६॥
अपि चाऽप्तत्वमालोच्य वक्तुस्तत्राऽर्थनिश्चयः ।
मानान्तरवशेनाऽपि कथञ्चिदुपपद्यते ॥१७॥
वेदस्त्वलौकिकार्थत्वादभावाद्वक्तुरेव च ।
अहो बत दशां कष्टामुपनीतो हि पण्डितैः ॥१८॥
अत्र प्रतिविधानाय यतन्ते मतिशालिनः ।
ज्ञानस्य व्यभिचारित्वं नयवीथ्यां निवारितम् ॥१९॥
श्रूयतामवधानेन गतिर्नरगिरामपि ।
अनुमानात्पृथग्भावं तासां नेच्छन्ति सूरयः ॥२०॥
वाक्यं हि पुरुषाधीनरचनं लौकिकं सदा ।
शङ्क्यमानायथार्थत्वं नाऽर्थनिश्चायकं स्वतः ॥२१॥
अन्योन्यानन्विताथानि पदान्यपि हि मानवाः ।
रचयन्तो विलोक्यन्ते तेन नाऽन्वयनिश्चयः ॥२२॥
केचित्तावद्भ्रमेणैव केचिदाशयदोषतः ।
प्रमादात्केऽप्यशक्तेश्च केऽप्यनन्वितवादिनः ॥२३॥
तदुक्तानां पदार्थानां यद्यप्यन्वययोग्यता ।
तथाऽप्यनन्वितस्याऽपि दृष्टेर्नोऽन्वयनिश्चयः ॥२४॥
तत्र निश्चयशब्देन ज्ञानमेवाऽभिधीयते ।
अन्वयानिश्चये तेन ज्ञानमेवाऽस्ति नाऽन्वये ॥२५॥
शङ्क्यमानायथार्थत्वरचनं तेन पुंवचः ।
श्रुतमात्रकमेवाऽर्थे न तावन्निश्चयावहम् ॥२६॥

यावद्वक्तुरविज्ञातं पूर्वभावि प्रमान्तरम् ।
विविक्षितार्थविषयमिन्द्रियार्थनिबन्धनम् ॥२७॥

तस्य ज्ञानञ्च वाक्येन लिङ्गभूतेन गम्यते ।
ज्ञात्वैवाऽर्थं ब्रवीतीति य एवमवधारितः ॥२८॥
तस्य ज्ञानेन नियतं वाक्यं ज्ञानानुमापकम् ।
ज्ञानञ्चाऽर्थाविनाभावि तेनाऽर्थेऽपि विनिश्चयः ॥२९॥
तत्राऽर्थे निश्चिते पश्चात्सोऽर्थो वाक्येन गम्यते ।
तस्यां दशायां वाक्यस्य तस्य स्यादनुवादता ॥३०॥

पूर्वन्तु लिङ्गभूतं तत् वक्तुर्ज्ञानावधारणे ।
वक्तृज्ञानप्रसूतं हि वाक्यं तत्कार्यमिष्यते ॥३१॥
कार्यात्कारणसिद्धिश्च सर्वेषामनुमानतः ।
पौरुषेयमतो वाक्यं न शास्त्रमभिधीयते ॥३२॥

एवञ्च सति लिङ्गस्य व्यभिचारोऽयमीर्यते ।
न शास्त्रस्येति तस्य स्यादर्थासंस्पर्शिता कुतः ॥३३॥
लिङ्गस्याऽपि न चैवाऽयं व्यभिचारोऽस्ति किन्तु यः ।
लिङ्गालिङ्गे न शक्नोति विवेक्तुं मूढचेतनः ॥३४॥

तस्याऽलिङ्गे लिङ्गरूपसाधारण्यनिबन्धनः ।
लिङ्गसंव्यवहारोऽयं विपरीतः प्रवर्तते ॥३५॥
श्रुतिलिङ्गाधिकरणे विस्तरेणैतदीरितम् ।
तेन न व्यभिचारोऽस्ति द्वयोर्लैङ्गिकशास्त्रयोः ॥३६॥

नन्वर्थ एव प्रथमं पुंवाक्येभ्योऽवगम्यते ।
अन्यथा हि कथं वक्तुर्धीविशिष्टाऽनुमीयते ॥३७॥
अर्थेनैव विशेषो हि निराकारतया धियाम् ।
न चाऽप्रतीतेनाऽर्थेन विशेषश्चाऽवकल्पते ॥३८॥

अत्र ब्रूमोऽयथार्थत्वशङ्कयाऽर्थो न निश्चितः ।
अनिश्चितश्च न ज्ञात इति तावद्व्यवस्थितम् ॥३९॥
किन्त्वज्ञातेऽपि वाक्यार्थे पदजाते श्रुते सति ।
विमर्शो जायते श्रोतुरीदृशो मतिशालिनः ॥४०॥

अन्योन्यान्वययोग्यार्थं पदजातं ब्रवीत्ययम् ।
आप्तस्तेनाऽमुना नूनं ज्ञातस्तेषां समन्वयः ॥४१॥

न कदाचिदसम्बद्धानर्थानेष विवक्षति ।
न वाऽप्रतीतसम्बधानिति दोषो न कश्चन ॥४२॥

नन्वेवं तुरगारूढस्तुरङ्गं विस्मृतो भवान् ।
वेदप्रामाण्यसिद्ध्यर्थमुत्थितस्तत्प्रहीणवान् ॥४३॥
लोकावगतशक्तिर्हि वेदे शब्दोऽवबोधकः ।
लोके च लिङ्गभावेन प्रतीतिर्भवताऽऽश्रिता ॥४४॥
स्वयन्त्विह समाधानमाचार्येण प्रदर्शितम् ।
शब्दस्याऽर्थेन सम्बन्ध इति दर्शयता सता ॥४५॥
अन्विताथार्भिधायित्वे पदानां हि स्थिते सति ।
विशिष्टा वक्तृधीर्ज्ञातुं शक्यते नाऽन्यथा यतः ॥४६॥
ज्ञातेषु हि पदार्थेषु श्रोता वक्तरि कल्पयेत् ।
अन्योन्यान्वयविज्ञानं नाऽन्यथेत्युपदर्शितम् ॥४७॥
पदानां तत्पदार्थेषु शक्तिस्स्वाभाविकी स्थिता ।
पुंवाक्येषु विसंवादशङ्कया सा तिरोहिता ॥४८॥
वेदेषु त्वस्मर्यमाणकर्तृकेषु स्वरूपतः ।
प्रमाणान्तरसंस्पर्शरहितार्थावबोधिषु ॥४९॥
न कर्तुरनुमानं स्याद्वाक्यत्वादिति लिङ्गतः ।
न कर्ता शक्नुयाद्वाक्यं कर्तुं कार्ये ह्यलौकिके ॥५०॥
तेन वेदे विसंवादशङ्का नाऽस्ति कथञ्चन ।
अर्थनिश्चयहेतुत्वादर्थसंस्पर्शिता स्थिता ॥५१॥
व्यपगतवाङ्मलपङ्कः प्रोद्धृतपरयुक्तिकण्टकप्रकरः ।
सृष्टः प्रगुणतरोऽयं शालिकनाथेन नीतिपथः ॥५२॥
यथार्थं सर्वमेवेह विज्ञानमितिसिद्धये ।
प्रभाकरगुरोर्भावस्समीचीनः प्रकाश्यते ॥५३॥
तत्र तावदिदं केचिदूचिरे चारुचेतसः ।
भ्रमसन्देहविज्ञानेऽयथार्थे उभे इति ॥५४॥

इदं रजतमित्येषा या शुक्तिशकले मतिः ।
सा चेदयथार्था भ्रान्तित्वं तदा तस्यास्तु कीदृशम् ॥५५॥
यथावस्थितवस्त्वाभमपि ज्ञानं यदा भ्रमः ।
प्रमाणेषु तदाऽऽपन्ना सर्वेषु भ्रमरूपता ॥५६॥
विवेकाग्रहणं भ्रान्तिरिति चेन्नैतदीदृशम् ।
सुषुप्तेऽपि भ्रमापत्तेः सर्वभेदापरिग्रहात् ॥५७॥
भेदाग्रहे गृहीते च यदि स्याद्भ्रमरूपता ।
दूरात्सामान्यमात्रस्य दर्शनं स्याद्भ्रमस्तदा ॥५८॥
यथार्थदर्शनत्वे च बाधकोऽपि न युज्यते ।
अज्ञानभेदग्रहणैर्न बाधकमतिर्भवेत् ॥५९॥
यथार्थताऽपि चैतस्याः कथमित्यपि चिन्त्यताम् ।
एषा हि रजतत्वेन शुक्तिकामध्यवस्यति ॥६०॥
रजतत्वं न शुक्तेश्च रजतस्य न शुक्तिता ।
तयोरन्योन्यभिन्नत्वं प्रत्यक्षेणाऽवधारितम् ॥६१॥
अथेयं रजतत्वेन न शुक्तिमवलम्बते ।
सामानाधिकरण्येन प्रतिपत्तिर्विरुध्यते ॥६२॥
रूप्यार्थिनः प्रवृत्तिश्च शुक्तौ स्यान्निर्निबन्धना ।
अग्रहोऽपि न भेदस्य प्रवृत्तौ कारणं यतः ॥६३॥
रजतप्रतिपत्तिश्च नेयमन्धस्य जायते ।
तेनेयमिन्द्रियाधीना संयुक्ते चेन्द्रियं धियम् ॥६४॥
समर्थमुत्पादयितुं शुक्तिसंयोगि चेन्द्रियम् ।
तेन सैवेन्द्रियेणेह रजतत्वेन गृह्यते ॥६५॥
स्यान्मतं शुक्तिकामात्रमिन्द्रियेणाऽवसीयते ।
तदेव सदृशत्वेन रजतस्मृतिकारणम् ॥६६॥
सदृशप्रत्ययेनेह संस्कारोद्बोधहेतुना ।
तदित्युल्लेखरहिता रजते भवति स्मृतिः ॥६७॥
स्मृतावस्यां मनोदोषात्तदित्यंशोऽवखण्डितः ।
तेनेन्द्रियानुकारित्वमन्यथासिद्धमित्यसत् ॥६८॥

अनुभूतेऽपि विषये तत्परामर्शविवर्जितम् ।
न बोधं स्मृतिमिच्छन्ति धारावाहिकबोधवत् ॥६९॥

अपरोक्षपुरोवर्तिसामानाधिकरण्यतः ।
नेयं स्मृतिः किन्तु शुक्तौ भ्रान्तोऽयं रजतग्रहः ॥७०॥

स्मृत्युद्बोधनिमित्तञ्च स्वप्ने किञ्चिन्न विद्यते ।
पीतशंखावबोधे च द्विचन्द्रग्रहणे तथा ॥७१॥

दिङ्मोहालातचक्रादिभ्रान्तयश्च कथं पुनः ।
स्मृतित्वाश्रयणेनैता वर्णनीया यथार्थतः ॥७२॥

तेनेन्द्रियादिदोषेण जायन्ते भ्रान्तिबुद्धयः ।
बुध्यमाना वस्तुरूपमन्यथास्थितमन्यथा ॥७३॥

स्थाणुर्वा पुरुषो वेति सन्देहो योऽपि जायते ।
अभावात्तादृशोऽर्थस्य स यथार्थः कथं भवेत् ॥७४॥

अत्र ब्रूमो य एवाऽर्थो यस्यां संविदि भासते ।
वेद्यः स एव नाऽन्यद्धि विद्याद्वेद्यस्य लक्षणम् ॥७५॥

इदं रजतमित्यत्र रजतञ्चाऽवभासते ।
तदेव तेन वेद्यं स्यान्न तु शुक्तिरवेदनात् ॥७६॥

तेनाऽन्यस्याऽन्यथाभानं प्रतीत्यैव पराहतम् ।
परस्मिन्भासमाने हि न परं भासते यतः ॥७७॥

नन्वेवं रजताभासः कथमेष घटिष्यति ।
उच्यते शुक्तिशकलं गृहीतं भेदवर्जितम् ॥७८॥

शुक्तिकाया विशेषा ये रजताद्भेदहेतवः ।
ते न ज्ञाता अभिभवाद् ज्ञाता सामान्यरूपता ॥७९॥

अनन्तरञ्च रजते स्मृतिर्जाता तथाऽपि च ।
मनोदोषात् तदित्यंशपरामर्शविवर्जितम् ॥८०॥

रजतं विषयीकृत्य नैव शुक्तेर्विवेचितम् ।
स्मृत्याऽतो रजताभास उपपन्नो भविष्यति ॥८१॥

धारावाहिकवन्नेयं स्मृतिरित्युदितञ्च यत् ।
उच्यतेऽनन्यगतितः स्मृतिरत्राऽवगम्यते ॥८२॥

न ह्यसन्निहितं तावत्प्रत्यक्षं रजतं भवेत् ।
लिङ्गाद्यभावाच्चाऽन्यस्य प्रमाणस्य न गोचरः ॥८३॥

परिशेषात्स्मृतिरिति निश्चयो जायते ततः ।
तस्याः कारणसद्भावात्, धारावाहिकधीषु तु ॥८४॥

प्रत्युत्पन्नेन्द्रियग्रामसामग्री ग्रहकारणम् ।
ग्रहण-स्मरणे चेमे विवेकानवभासिनी ॥८५॥

सम्यग्रजतबोधात्तु भिन्ने यद्यपि तत्त्वतः ।
तथाऽपि भिन्ने नाऽऽभातो भेदाग्रहसमत्वतः ॥८६॥

सम्यग्रजतबोधश्च समक्षैकार्थगोचरः ।
ततो भिन्नेऽबुध्वा तु स्मरण-ग्रहणे इमे ॥८७॥

समानेनैव रूपेण केवलं मन्यते जनः ।
अपरोक्षार्थबोधेन समानार्थग्रहेण च ॥८८॥

अवैलक्षण्यसंवित्तिरिति तावत्समर्थितम् ।
व्यवहारोऽपि तत्तुल्यस्तत एव प्रवर्तते ॥८९॥

समत्वेन च संवित्तेर्भेदस्याऽग्रहणेन च ।
मिथ्याभावोऽपि तत्तुल्यव्यवहारप्रवर्तनात् ॥९०॥

रजतव्यवहारांशे विसंवादयतो नरान् ।
बाधकप्रत्ययस्याऽपि बाधकत्वमतो मतम् ॥९१॥

प्रसज्यमानरजतव्यवहारनिवारणात् ॥९२॥

सन्निहितरजशकले रजतमतिर्भवति यादृशी सत्या ।
भेदानध्यवसायादियमपि तादृक् परिस्फुरति ॥९३॥

साधारणं हि रूपं तस्या अस्याश्च विद्यते तेन ।
तन्मात्रप्रतिभानात्समानतामेव मन्यन्ते ॥९४॥

तत्तुल्यव्यवहारः प्रवृत्तिरपि युज्यते चाऽतः ।
तद्विनिवारणकरणाद्बाधकता बाधकस्याऽपि ॥९५॥

एवं स्वप्नेऽपि वस्तूनि स्मर्यमाणानि सन्त्यपि ।
अनुभूतांशमोषेण भासन्ते गृह्यमाणवत् ॥९६॥

ग्रहणस्य विशेषो हि गृहीतग्रहणं स्मृतिः ।
सा गृहीतांशमोषेण गृहीतिरिव तिष्ठति ॥९७॥

संस्कारोद्बोधहेतुश्च तत्राऽदृष्टं प्रकल्प्यते ।
विपरीतख्यातिपक्षेऽप्येषा तुल्या हि कल्पना ॥९८॥

अदृष्टस्य च हेतुत्वाज्जाग्रतस्तादृशी न धीः ।
अवस्थाऽपि ह्यदृष्टस्य सामग्री फलसम्भवे ॥९९॥

पीतशंखाववबोधे च पित्तस्येन्द्रियवर्तिनः ।
पीतिमा गृह्यते द्रव्यरहितोऽप्स्विव तिग्मता ॥१००॥

शंखस्येन्द्रियदोषेण शुक्लिमा च न गृह्यते ।
केवलं द्रव्यमात्रन्तु प्रथते रूपवर्जितम् ॥१०१॥

गुणे द्रव्यव्यपेक्षे च द्रव्ये च गुणकाङ्क्षिणि ।
भासमाने तयोर्बुद्धिरसम्बन्धं न बुध्यते ॥१०२॥

सत्यपीतावभासेन समे भातो मती इमे ।
व्यवहारोऽपि तत्तुल्यः, एवमत्राऽपि युज्यते ॥१०३॥

यत्तु नेत्रगतस्याऽपि कज्जलस्य न कालिमा ।
गृह्यते कारणं तत्र तेनेन्द्रियनिरोधनम् ॥१०४॥

अतसीपुष्पसङ्काशं यत्तावन्नेत्रमण्डलम् ।
तत्रस्थमञ्जनं यत्तत् तेजोवृत्तिनिरोधकम् ॥१०५॥

मण्डलान्तरसंस्थन्तु यन्नाम नयनेऽञ्जनम् ।
तस्याऽनार्जवदोषेण नीलिमा नाऽवगम्यते ॥१०६॥

इन्द्रियोपरिभागेऽपि लिप्तेन स्वच्छभावतः ।
पित्तेन नायनं तेजः काचेनेव न रुध्यते ॥१०७॥

प्रसरन्नायनं तेजो ग्राहकं नाऽनिन्द्रियस्थितम् ।
पित्तस्याऽग्रहणं सौक्ष्म्यात्प्रभायामिव तेजसः ॥१०८॥

मधुरे तिक्तधीरेवं व्याख्याता पित्तवर्तिनः ।
तैक्त्यस्य रसहीनस्य गुडस्य च परिग्रहात् ॥१०९॥

तथा द्विचन्द्रबोधेऽपि भिन्नं द्वैधैन्द्रियं महः ।
भिन्ने जनयति प्रख्ये एकस्मिन्नेव शीतगौ ॥११०॥

संवित्ती ते न भिद्येते तद्द्वित्वे सति मन्यते ।
भिन्नार्थबुद्धितुल्यत्वमत्राऽपि खलु पूर्ववत् ॥१११॥
स्मरतोऽप्येकतां तेन भ्रमोऽयमुपपद्यते ।
न हि स्मृतिप्रमोषेण सर्वत्रैव भ्रमो मतः ॥११२॥
अलातचक्रेऽलातस्य भ्रमतः सर्वतो द्रुतम् ।
निरन्तरं धियो जाताश्चक्रबुद्धिसमा मताः ॥११३॥
कालभेदस्तु शीघ्रत्वाद्धिया तासां न लक्ष्यते ।
चक्रधीव्यवहारश्च तेनाऽस्मिन्नपि युज्यते ॥११४॥
अनेनैव प्रकारेण सर्वभ्रान्तिषु पण्डितैः ।
ऊहनीया हेतुभेदा यथार्थज्ञानसिद्धये ॥११५॥
स्थाणुर्वा पुरुषो वेति सन्देहेऽपि यदा द्वयम् ।
स्मर्यतेऽन्योन्यनिर्मुक्तं तदाऽर्थविरहः कुतः? ॥११६॥
यदि चाऽर्थं परित्यज्य काचिद्बुद्धिः प्रवर्तते ।
व्यभिचारवती स्वार्थे कथं विश्वासकारणम्? ॥११७॥
नन्वत्राऽप्यरजतधीतुल्यताशङ्कया समः ।
अविश्वासस्तत्र दोषविरहाचेद्विनिर्णयः ॥११८॥
सममेतद्विपरीतख्यातिपक्षेऽपि दृश्यते ।
अहो बत महानेष प्रमादो धीमतामपि ॥११९॥
ज्ञानस्य व्यभिचारे हि विश्वासः किन्निबन्धनः ।
ज्ञानस्य व्यभिचारेऽपि ज्ञातं यत्सत्यमेव तत् ॥१२०॥
अज्ञानमपि किन्त्वस्ति रूपभेदनिबन्धनम् ।
जिज्ञासा जायते येयं साऽप्यन्येन निवर्तते ॥१२१॥
यत्नेनाऽन्विष्यमाणेऽपि रूपं तच्चेन्न दृश्यते ।
तदा पूर्वैव संवित्तिस्तत्त्वेनाऽप्यतिदिश्यते ॥१२२॥
अयथार्थत्वपक्षे च ज्ञानं साकारमापतेत् ।
आकारो भासते यो हि ज्ञान एवाऽवतिष्ठते ॥१२३॥
अयथार्थस्य बोधस्य नोत्पत्तावपि कारणम् ।
दोषाश्चेन्न हि दोषाणां कार्यशक्तिविघातिता ॥१२४॥

भस्मकादिपु कार्यस्य विघातादेव दोषता ।
अग्नेर्हि रसनिष्पत्तिः कार्यं जठरवर्तिनः ॥१२५॥

विद्यमानवस्तुरूपग्रहणे प्रतिबन्धृता ।
दोषाणामुपपन्नेति भ्रान्तिरग्रहबन्धना ॥१२६॥

विषयाव्यभिचारित्वं साधयितुं सर्वसंविदामेषा ।
निरमीयत नीतिविदा शालिकनाथेन नयवीथी ॥१२७॥

मिश्रशालिकनाथेन नयवीथीतिसञ्ज्ञितम् ।
कृतं लोकहितार्थाय प्रभाकरमतं यथा ॥१२८॥

बहुधा जातिविषये विवदन्ते विपश्चितः ।
प्रभाकरमतेनाऽयं तेषां प्रत्यास उच्यते ॥१२९॥

जातिराश्रयतो भिन्ना प्रत्यक्षज्ञानगोचरः ।
पूर्वाकारावमर्शेन प्रभाकरगुरोर्मता ॥१३०॥

शालिकनाथेन कृतं कृतमतिना जातिनिर्णयाख्यमिदम् ।
बहुविधविवादहरणं प्रकरणमुरुणाऽवधानेन ॥१३१॥

अनुभूतिः प्रमाणं सा स्मृतेरन्या स्मृतिः पुनः ।
पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ॥१३२॥

न प्रमाणं स्मृतिः पूर्वप्रतिपत्तेरपेक्षणात् ।
अन्योन्यनिरपेक्षास्तु धारावाहिकबुद्धयः ॥१३३॥

तत्र पञ्चविधं मानं प्रत्यक्षमनुमा तथा ।
शास्त्रं तथोपमानार्थापत्ती इति गुरोर्मतम् ॥१३४॥

साक्षात्प्रतीतिः प्रत्यक्षं मेय-मातृ-प्रमासु सा ।
मेयेष्विन्द्रिययोगोत्था द्रव्यजातिगुणेषु सा ॥१३५॥

सविकल्पाऽविकल्पा च प्रत्यक्षा बुद्धिरिष्यते ।
आद्या विशिष्टविषया स्वरूपविषयेतरा ॥१३६॥

सर्वविज्ञानहेतूत्था मितौ मातरि च प्रमा ।
साक्षात्कर्तृत्वसामान्यात् प्रत्यक्षत्वेन सम्मता ॥१३७॥

मानत्वं संविदां बाह्यं हानादानादिकं फलम् ।
ज्ञानस्य तु फलं सैव व्यवहारोपयोगिनी ॥१३८॥

आपेक्षिकञ्च करणं मन इन्द्रियमेव वा ।
तदर्थसन्निकर्षो वा मानञ्चेत्पूर्वकं फलम् ॥१३९॥
ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनात् ।
एकदेशान्तरे बुद्धिरनुमानमबाधिते ॥१४०॥
यः कश्चिद्येन यस्येह सम्बन्धो निरुपाधिकः ।
प्रत्यक्षादिप्रमासिद्धः स तस्य गमको मतः ॥१४१॥
प्रमेयमनुमानस्य दृष्टादृष्टस्वलक्षणम् ।
परप्रत्यायनेच्छूनामनुमोदयसाधनम् ॥१४२॥
वचनं दूषणैस्सार्धमर्थादेतेन वर्णितम् ।
प्रत्यक्षवच्च वक्तव्या प्रमाणफलवर्णना ॥१४३॥
शास्त्रन्तु शब्दविज्ञानात् यदसन्निकृष्टार्थविज्ञानम् ॥१४४॥
सादृश्यदर्शनोत्थं ज्ञानं सादृश्यविषयमुपमानम् ।
विषयोऽस्य वित्तिसिद्धो भिन्नो द्रव्यादिभावेभ्यः ॥१४५॥
सादृश्याद्दृश्यमानाद्यत्प्रतियोगिनि जायते ।
सादृश्यविषयं ज्ञानमुपमानं तदुच्यते ॥१४६॥
विना कल्पनयाऽर्थेन दृष्टेनाऽनुपपन्नताम् ।
नयता दृष्टमर्थं या साऽर्थापत्तिस्तु कल्पना ॥१४७॥
अभावेन गृहे भावो बहिष्कल्पनया विना ।
नयताऽनुपपन्नत्वं कल्प्यमानो बहिर्यथा ॥१४८॥
गम्यस्याऽनुपपन्नत्वमिह कल्पनया विना ।
मानान्तरविरोधेन सन्देहापत्तिलक्षणम् ॥१४९॥
देशेन हि विना भावो न कदाचन दृश्यते ।
विना भावेन सिद्धोऽपि तेन सन्देहमृच्छति ॥१५०॥
तत्सन्देहव्युदासाय कल्पना या प्रवर्तते ।
सन्देहापादकादर्थादर्थापत्तिरसौ स्मृता ॥१५१॥
यत्कल्पनां विना योऽर्थः प्रतीतोऽप्येति संशयम् ।
तेन तत्कल्पनामेके त्वर्थापत्तिं प्रचक्षते ॥१५२॥

गमकस्याऽनुमाने तु विपक्षासत्त्वलक्षणम् ।
गम्यतेऽनुपपन्नत्वं विना गम्येन वस्तुना ॥१५३॥
तत्सामग्रीविभेदेन भिन्ने एते परस्परम् ।
अर्थापत्त्यनुमानाख्ये प्रमाणे इति निश्चितम् ॥१५४॥

अभावाख्यं प्रमाणं ये षष्ठमाहुर्मनीषिणः ।
तेषां प्राभाकरैरेवं प्रत्यादेशोऽयमुच्यते ॥१५५॥
प्रमाणं खलु कस्याऽपि प्रमेयस्याऽवबोधकम् ।
तत्राऽभावस्य किन्तावत् प्रमेयमिति चिन्त्यताम् ॥१५६॥

ननु नाऽस्तीति बुध्द्या तु बोध्यं यदुपकल्पितम् ।
अभावस्य प्रमाणस्य प्रमेयं तद्भविष्यति ॥१५७॥
भूतलेऽत्र घटो नाऽस्तीत्येषा या जायते मतिः ।
सा न भूतलमात्रे स्यात्प्रसक्तेर्घटवत्यपि ॥१५८॥

केवले भूतले चेत्स्यात्कैवल्यं तत्र कीदृशम् ।
स्वरूपमात्रे नो तावद्धर्मान्तरमथोच्यते ॥१५९॥
प्रमेयान्तरमेवाऽत्र तावताऽङ्गीकृतं भवेत् ।
तच्च नेन्द्रियविज्ञेयं तद्व्यापारानपेक्षणात् ॥१६०॥
स्वरूपमात्रे दृष्टेऽपि भावे दूरगतोऽपि सन् ।
कथञ्चिज्ज्ञातजिज्ञासो नाऽस्तित्वं प्रतिपद्यते ॥१६१॥
तेन यत्राऽपि नाऽस्तित्वं बुध्यते व्यापृतेन्द्रियः ।
भावांशमात्रे तत्राऽपि प्रत्यक्षस्य प्रमाणता ॥१६२॥

नाऽस्तित्वञ्च प्रमाणानामनुत्पत्त्यैव गम्यते ।
नाऽस्तित्वप्रतिपत्तिर्हि तां विना नाऽस्ति कुत्रचित् ॥१६३॥
योग्यप्रमाणानुत्पत्तेः कारणत्वपरिग्रहात् ।
अतिप्रसङ्गदोषोऽपि नाऽवकाशमुपाश्नुते ॥१६४॥

अनुत्पत्तिश्च न ज्ञाता सती कारणमक्षवत् ।
तेन लिङ्गत्वशङ्काऽपि दूरादेव निराकृता ॥१६५॥
अनुत्पत्तिश्च विज्ञाता हेतुश्चेल्लिङ्गवद्भवेत् ।
अनवस्था प्रसज्जेत नाऽस्तित्वं न च सिद्ध्यति ॥१६६॥

किञ्च पादविहारादिव्यवहारश्च भूतले ।
न भूतलपरिच्छेदमात्रेणैव प्रवर्तते ॥१६७॥
प्रसङ्गस्तत्र दुर्वारः कण्टकाद्यन्वितेऽपि हि ।
अथ केवलभूभागपरिच्छेदात्प्रवर्तते ॥१६८॥

विकल्प्यं तत्र कैवल्यं ग्राह्यस्य ग्रहणस्य वा ।
ग्राह्यस्य चेत्पुरैवोक्तो दोषस्तर्हि प्रसज्यते ॥१६९॥
ग्रहस्य चेत्तदा सूक्ष्मजिज्ञासा निष्फला भवेत् ।
जाता हि केवला संविद्व्यवहारस्य कारणम् ॥१७०॥

तेन भावं परिच्छिद्य व्यवहारे चिकीर्षति ।
दृश्यादर्शनसिद्ध्यर्थं युक्तं सूक्ष्मनिरीक्षणम् ॥१७१॥
अत्रोच्यते द्वयी संविद्वस्तुनो भूतलादिनः ।
एका संसृष्टविषया तन्मात्रविषया परा ॥१७२॥

तन्मात्रविषया या च द्विधा साऽपि प्रभज्यते ।
प्रतियोगिन्यदृश्ये च दृश्ये च प्रतियोगिनि ॥१७३॥
तत्र तन्मात्रधीर्येयं दृश्ये च प्रतियोगिनि ।
नाऽस्तित्वं सैव भूभागे घटादिप्रतियोगिनः ॥१७४॥

ननु संसृष्टबुद्ध्या यः पुरस्तादवधारितः ।
कथं तन्मात्रधीस्तत्र जाता भावेन तत्र चेत् ॥१७५॥
शक्यते तदभावेऽपि वक्तुं यो यत्र सन्नभूत् ।
तस्याऽभावः कथं तत्र ब्रूयाच्चेत्तत्र कारणम् ॥१७६॥
तन्मात्रधिय एवाऽस्तु वरं यत्कारणं ततः ।
तस्यास्सम्प्रतिपन्नत्वाद्वादिनोरुभयोरपि ॥१७७॥
चक्षुर्वदपरामृष्टं न कारणमदर्शनम् ।
स्वापावस्थागतस्याऽपि प्रमाणत्वप्रसङ्गतः ॥१७८॥

विशेषापादिका तस्य न निषेधस्य दृश्यता ।
भावरूपविशेषो हि नाऽभावस्योपपद्यते ॥१७९॥
अदर्शने निवृत्तेऽपि पुनर्भावस्य कस्यचित् ।
प्राङ्नास्तित्वं व्यपदिशन्त्यपृष्टस्य पुरा क्वचित् ॥१८०॥

दृश्यस्याऽदर्शनं तेन ज्ञातं सदवबोधकम् ।
दृश्यादर्शनतस्तस्य ज्ञानश्चेदव्यवस्थितिः ॥१८१॥

यदि तन्मात्रसंवित्तिरूपं स्यात्तददर्शनम् ।
तदा तस्यास्स्वसंवित्तेरनवस्था निवर्तते ॥१८२॥

तेनाऽवश्याभ्युपेतव्यो विमर्शो दृश्यगोचरः ।
अदर्शनमभावो हि तन्मात्रानुभवात्मकम् ॥१८३॥

तन्मात्रानुभवश्चाऽयं न मेयः फलभावतः ।
किञ्च स्वयंप्रकाशोऽसाविति न्यायविदो विदुः ॥१८४॥

नाऽस्तीतिशब्दस्तत्रैव स्वसंवेद्ये प्रवर्तते ॥
तेन नाऽस्तीति विज्ञानन्यायेन न समागतम् ॥१८५॥

मेयाभावे ततो मानमभावाख्यं कथं भवेत् ।
घटसत्ता न लभ्या हि नाऽसत्ता चोदितात्क्रमात् ॥१८६॥

अभावव्यवहारो हि निश्शङ्कगमनादिकः ॥
तन्मात्रानुभवेनैव यथोक्तेन प्रवर्तते ॥१८७॥

यदा यस्य च दृश्यत्वे सत्यप्यनुपलम्भनम् ॥
तदभावव्यवहृतिस्तदानीं सम्प्रवर्तते ॥१८८॥

सूक्ष्मकण्टकजिज्ञासाऽप्यतः सार्थकताङ्गता ।
तां विना न हि दृश्यत्वं सूक्ष्मसत्ताऽधिरोहति ॥१८९॥

व्यवहारप्रवृत्तिश्च दृश्यादृष्टिनिबन्धना ।
तेन दृश्यत्वसिद्ध्यर्थं युक्तं तस्मिन्निरीक्षणम् ॥१९०॥

नन्वेवं लक्षणग्रन्थस्याऽर्थस्तर्ह्यस्य कीदृशः ।
मीमांसार्णवसम्भूतं पीयतां समयामृतम् ॥१९१॥

प्रत्यक्षाद्यपरिच्छेद्यमभावाख्यं चतुर्विधम् ।
प्रमेयं साधयन्मानमभावाख्यं वदन्ति ये ॥१९२॥

तन्निराकरणार्थोऽयं यत्नो भाष्यकृता कृतः ।
अभावोऽसन्निकृष्टस्य नाऽस्तीत्यस्याऽवबोधकः ॥१९३॥

प्रमाणं न भवतीति प्रमाणभाव उच्यते ।
किं निराकरणस्येह फलमित्यथ चेन्मतम् ॥१९४॥

उच्यते लक्षणग्रन्थः प्रत्यक्षादेस्समर्थ्यते ।
प्रमाणं कार्यगम्यं हि सर्वत्रेति विनिश्चितम् ॥१९५॥
निश्चयश्च प्रमाणस्य कार्यमित्यपि सम्मतम् ।
निश्चयश्चेयमेवेति संवित्तिः सर्ववस्तुषु ॥१९६॥
सा च वस्त्वन्तराभावसंवित्यनुगमे सति ।
प्रमाणानुदयस्तत्र यत्राऽभावोऽवसीयते ॥१९७॥
तदा तेन सहैव स्यात्प्रत्यक्षादेः प्रमाणता ।
लक्षणं क्रियमाणञ्च तथाभूतस्य युज्यते ॥१९८॥
न कृतञ्च तथा तेन न कृतं साधु लक्षणम् ॥
इमां शङ्कां निराकर्तुं निराकरणमुच्यते ॥१९९॥
कथं पुनरियं शङ्का भवत्यत्र निराकृता ।
अभावाख्यो न मेयोऽस्ति यदर्थं प्रार्थ्यते पुनः ॥२००॥
प्रमाणानामनुत्पादः साधु तल्लक्षणं कृतम् ।
इति पूर्वप्रमाणानां लक्षणानि समादधत् ॥२०१॥
भाष्यकार इमं ग्रन्थं चक्रे नाऽभावलक्षणम् ।
नन्वेवमपि पञ्चाऽऽह शब्दं हित्वा कथं पुनः ॥२०२॥
भाष्यकारः प्रमाणानि चित्राक्षेपं समादधत् ।
उच्यते व्यवहारस्य हेतुभूतप्रसिद्धये ॥२०३॥
एवमाहोभयात्माऽपि व्यवहारः प्रतिष्ठितः ।
तत्र भावव्यवहृतिः पञ्चस्वेवोपलभ्यते ॥२०४॥
अभावव्यवहारस्तु दृश्यादृष्टिविमर्शजः ।
सा हि भूभागसद्भावमात्रावच्छेदबन्धना ॥२०५॥
तदभावव्यहृतिरिति प्रागेव दर्शितम् ॥
मीमांसाजलराशेरशेषनयरत्ननिकषनिजधाम्नः ॥२०६॥
इति शालिकनाथ इमाममृतस्य कलामुदाहरद्धीरः ।
स्वरूपसंख्यार्थफलेषु वादिभिः
यतो विवादा बहुधा वितेनिरे ।
ततो वयं तत्प्रतिबोधसिद्धये
प्रमाणपारायणमारभामहे ॥२०७॥

अपौरुषेये सम्बन्धे सिद्धे शब्दार्थयोर्द्वयोः ।
प्रामाण्यं वेदवाक्यानामिति स प्रतिपाद्यते ॥२०८॥
तत्र शब्दार्थसम्बन्धं पौरुषेयं प्रचक्षते ।
जगदीश्वरनिर्माणं वदन्तो वेदवादिनः ॥२०९॥

औत्पत्तिकस्तु सम्बन्धश्शब्दस्याऽर्थेन सम्मतः ।
वृद्धसंव्यवहारस्य प्रवाहानादिता यतः ॥२१०॥
दुस्तर्कतिमिरं भेत्तुं शिष्याणां दृष्टिरोधकम् ।
इदं शालिकनाथेन विहितं विमलाञ्जनम् ॥२११॥

आत्मतत्त्वे बहुविधा विवादास्सन्ति वादिनाम् ।
वयं प्राभाकरास्तत्त्वनिर्णयाय यतामहे ॥२१२॥
बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः ।
नानाभूतः प्रतिक्षेत्रमर्थवित्तिषु भासते ॥२१३॥

नानाविवादसन्दर्भतमस्सञ्जातभेदनः ।
एष शालिकनाथेन तत्त्वालोकः प्रवर्तितः ॥२१४॥
अपौरुषेये सम्बन्धे शब्दः प्रामाण्यमृच्छति ।
स च नित्यत्वसिद्धौ स्यादिति तत्प्रतिपाद्यते ॥२१५॥

अभिव्यञ्जकवैधर्म्यादभिव्यक्तेरसम्भवे ।
प्रयत्नानन्तरं दृष्टेरभिधानं प्रयत्नजम् ॥२१६॥
नानाभावे प्रयत्नस्य नानाभावोपलम्भनात् ।
वैलक्षण्ये च शब्दस्य वैलक्षण्येन कार्यता ॥२१७॥

शब्दे तत्प्रत्यये स्पष्टे नानाव्यञ्जककल्पनात् ।
उपलब्धिव्यवस्थानमुपपन्नं भविष्यति ॥२१८॥
अभिव्यञ्जकनानात्वाच्छब्दो नानेव लक्ष्यते ।
नेत्रवृत्तिविभेदेन चन्द्रस्तैमिरिकैरिव ॥२१९॥

नानादेशोपलम्भे हि सर्वेषां भ्रान्तिसम्मतिः ।
कर्णच्छिद्रगतस्यैव शब्दस्य श्रवणं यतः ॥२२०॥
वैलक्षण्यं स्वभावेन वर्णानां न च सम्मतम् ।
नादाल्पत्व-महत्त्वाभ्यां तथात्वभ्रान्तिसम्भवात् ॥२२१॥

नाऽवश्यं तद्ग्रहेणैव तत्संस्कारप्रबोधनम् ।
तेन हेत्वन्तरोद्बुद्धात्संस्काराात्तद्ग्रहोदयः ॥२२२॥

भेदे मानं यदा नाऽस्ति शुक्तिका-रजतादिवत् ।
तदा प्रतीतिसंसिद्धस्तद्ग्रहः केन वार्यते ॥२२३॥

अनुमाननिरासेन तद्ग्रहत्वं प्रसाध्यते ।
स्वयं प्रतीतिसिद्धत्वाद्भ्रान्तिशङ्का तु वार्यते ॥२२४॥

ज्वालाभेदं विना भासां विततिर्नोपपद्यते ।
भेदाज्ञानेन सादृश्यात् प्रत्यभिज्ञा तु युज्यते ॥२२५॥

विना तु शब्दभेदेन न किञ्चिन्नोपपद्यते ।
उक्तेन नीतिमार्गेण तद्ग्रहोऽतोऽत्र सम्मतः ॥२२६॥
सदसत्कारणत्वेन तस्माच्छब्दस्य नित्यता ।
एतदेव हि नित्यत्वं व्योमादिष्वपि सम्मतम् ॥२२७॥

एषा शालिकनाथेन शब्दनित्यत्वसाधनी ।
प्रभाकरगुरोर्दृष्ट्या न्यायशुद्धिः प्रकीर्तिता ॥२२८॥
प्रभाकरगुरोर्भावं परिभाव्याऽभिधीयते ।
मीमांसाजीवरक्षेयं क्षणिकत्वनिराक्रिया ॥२२९॥

सुगताशीविषविषमक्षणभङ्गविषानलावलीढायाः ।
मीमांसाया विहिता मर्ममयी जीवरक्षेयम् ॥२३०॥
पदेभ्य एव वाक्यार्थप्रत्ययो जायते यथा ।
तथा वयं निबध्नीमः प्रभाकरगुरोर्मतम् ॥२३१॥

पदैरेवाऽन्वितस्वार्थमात्रोपक्षीणशक्तिभिः ।
स्वार्थाश्चेद्बोधिता बुद्धौ वाक्यार्थोऽपि तथा सति ॥२३२॥
प्रधानगुणभावेन लब्धान्योन्यसमन्वयान् ।
पदार्थानेव वाक्यार्थान्सङ्गिरन्ते विपश्चितः ॥२३३॥
भूयांसो यद्यपि स्वार्थाः पदानां ते पृथक् पृथक् ।
प्रयोजनतया त्वेकवाक्यार्थं सम्प्रचक्षते ॥२३४॥
तत्प्रतीत्येककार्यत्वाद्वाक्यमप्येकमुच्यते ।
प्रतिपत्तिर्गुणानां हि प्रधानैकप्रयोजना ॥२३५॥

व्यवहारेषु वृद्धानां वाक्यश्रवणभाविषु ।
आवापोद्धारभेदेन पदानां शक्तिनिश्चयः ॥२३६॥
ओप्यन्ते चोद्ध्रियन्ते च स्वार्था अन्वयशालिनः ।
अन्वितेष्वेव सामर्थ्यं पदानां तेन गम्यते ॥२३७॥
आकाङ्क्षासन्निधिप्राप्तयोग्यार्थान्तरसङ्गतान् ।
स्वार्थानाहुः पदानीति व्युत्पत्तिस्संश्रिता यदा ॥२३८॥
आनन्त्यव्यभिचाराभ्यां तदा दोषो न कश्चन ।
पदार्थेष्वपि चैवैषा सामग्र्यन्वयबोधने ॥२३९॥
यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तदन्वितः पदेनाऽर्थस्स्वकीयः प्रतिपाद्यते ॥*॥
अन्वितस्याऽभिधानार्थमुक्तार्थघटनाय वा ।
प्रतियोगिनि जिज्ञासा या साऽऽकांक्षेति गीयते ॥*॥
परिपूर्णेन योग्यस्य समीपस्याऽप्यनन्वयः ।
व्युत्पत्तौ तेन शब्दानामाकाङ्क्षाऽप्युपलक्षणम् ॥*॥
प्रतियोगिषु सर्वेषु नाऽऽकाङ्क्षोदेति तत्क्षणात् ।
कारणोपनिपातानुपूर्व्येण तु यथायथम् ॥*॥
जिज्ञासा जायते बोद्धुस्सम्बन्धिषु यथा यथा ।
तथा तथैव शब्दानामन्वितार्थाभिधायिता ॥*॥
सन्निधिश्शब्दजन्मैव व्युत्पत्तौ नोपलक्षणम् ।
अध्याहृतेनाऽप्यर्थेन लोके सम्बन्धदर्शनात् ॥*॥
सहसैव न सर्वेषां सन्निधिः प्रतियोगिनाम् ।
सन्निधापकसामग्रीक्रमेण क्रमवानसौ ॥*॥
यथा यथा सन्निधानं जायते प्रतियोगिनाम् ।
तथा तथा क्रमेणैव शब्दैरन्वितबोधनम् ॥*॥
सामान्येनैव योग्यत्वं लोके यदवधारितम् ।
तदन्विताभिधानस्य व्युत्पत्तावुपलक्षणम् ॥*॥
किन्तु तेषामदृष्टैषा शक्तिर्मानान्तराद्गतौ ।
कल्प्या विशिष्टार्थपरपदसंस्पर्शभाविता ॥२४०॥

वाच्यस्याऽर्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः ।
तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते ॥२४१॥

प्राथम्यादभिधातृत्वात्तात्पर्यावगमादपि ।
पदानामेव सा शक्तिर्वरमभ्युपगम्यताम् ॥२४२॥

पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥२४३॥

अन्वितस्याऽभिधानेऽपि स्वरूपं विद्यते सदा ।
तेन स्वरूपमात्रेऽपि शब्दो जनयति स्मृतिम् ॥२४४॥

यथाऽर्थेनाऽप्रमाणेन स्वपदं स्मार्यते क्वचित् ।
पदेनाऽप्यप्रमाणेन तथाऽर्थस्स्मारयिष्यते ॥२४५॥

स्मृतिर[illegible]हितै[illegible]र्थैरन्वितमात्मनः ।
अर्थमाह पदं सर्वमिति नाऽन्योन्यसंश्रयः ॥२४६॥

अन्वितेषु पदैरेवं बोध्यमानेषु शक्तिभिः ।
अन्वयार्थगृहीतत्वान्नाऽन्यां शक्तिमपेक्षते ॥२४७॥

प्रतीयन्नन्वयं यस्मात्प्रतीयादन्वितं पुमान् ।
व्यक्तिं जातिमिवाऽर्थेऽसाविति सम्परिकीर्त्यते ॥२४८॥

सामान्येनाऽन्वितं वाच्यं पदानां ये प्रचक्षते ।
नियतेन विशेषेण तेषां स्यादन्वयः कथम् ॥२४९॥

यद्यप्याक्षिप्यते नाम विशेषो व्यक्तिजातिवत् ।
निर्धारितविशेषस्तु तद्वदेव न गम्यते ॥२५०॥

यद्यप्याकाङ्क्षितो योग्यो विशेषस्सन्निधौ श्रुतः ।
सम्बन्धबोधकाभावे गृह्यते न तथाऽप्यसौ ॥२५१॥

सम्बन्धबोधे व्युत्पत्तावुपाधित्वे समाविशत् ।
विशेषान्वयवादे तु योग्यत्वादुपकारकम् ॥२५२॥

किञ्च वस्तुबलेनैव सिद्धे सामान्यसङ्गमे ।
तस्य वाच्यत्वमिच्छद्भिर्वृथा शब्दः प्रयासितः ॥२५३॥

वाक्यमेकं न निर्भागं वाक्यान्त्यो वर्ण एव वा ।
पदवृन्दं स्मृतिस्थं वा प्रथमं पदमेव वा ॥*॥

आख्यातपदमात्रं वा पदार्था वाऽप्यनन्विताः ।
सामान्यान्वयबोधे वा हेतुर्वाक्यार्थबोधने ॥*॥

पदान्येव समर्थानि वाक्यार्थस्याऽवबोधने ।
विशेषान्वयवादीनि भागशो भागशालिनः ॥*॥

ननु व्युत्पत्त्यपेक्षेषु शब्देष्वर्थाभिधायिषु ।
कथं मानान्तरावेद्यं कार्यमाहुर्लिङादयः ॥२५४॥

शब्दान्तराण्यपि कथं तेनाऽदृष्टेन कुत्रचिद् ।
वदिष्यत्यन्वितं स्वार्थं व्युत्पत्तिपथदूरगम् ॥२५५॥

अत्रोच्यते यदा नाम वृद्धेनैकेन भाषिते ।
जलं चैत्राऽऽहरस्वेति चैत्र आहरते जलम् ॥२५६॥

तदा व्युत्पित्समानोऽन्यस्तत्रैवमवगच्छति ।
तत्र बुद्ध्वा प्रवृत्तोऽहं किं तावत्स्वयमन्यदा ॥२५७॥

आस्तां तावत्क्रिया लोके गमना गमनक्रिया ।
अन्ततस्स्तन्यपानादिस्तृप्तिकारिण्यपि क्रिया ॥२५८॥

सा यावन्मम कार्येयमिति नैवाऽवधार्यते ।
तावत्कदाऽपि मे तत्र प्रवृत्तिरभवन्न हि ॥२५९॥

फलसाधनता नाम या सा नैव च कार्यता ।
कार्यता कृतिसाध्यत्वं फलसाधनता पुनः ॥२६०॥

करणत्वं फलोत्पादे भिद्येते ते परस्परम् ।
किन्तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत् ॥२६१॥

फलसाधनता तत्र कारणं तेन कार्यता ।
तद्भावभाविनी नित्यं तदा सैव प्रकाशते ॥२६२॥

शब्दान्तराणि स्वार्थेषु व्युत्पद्यन्ते यथैव हि ।
आवापोद्वापभेदेन तथा कार्ये लिङादयः ॥२६३॥

कार्यमेव हि वक्तृणां ज्यायस्सम-कनीयसाम् ।
प्रवत्यापेक्षया भेदात्प्रैषादिव्यपदेशभाक् ॥२६४॥

कार्यमेव हि सर्वत्र प्रवृत्तावेककारणम् ।
प्रवृत्त्यव्यभिचारित्वाल्लिङाद्यर्थोऽवधार्यते ॥२६५॥

कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते ।
तच्च मानान्तरेणाऽपि वेद्यमोदनपाकवत् ॥२६६॥
एवं कार्यात्मकेऽप्यर्थे व्युत्पद्यन्ते लिङादयः ।
तदन्वितेषु स्वार्थेषु तथा शब्दान्तराण्यपि ॥२६७॥
सम्प्रधार्यमिदन्त्वत्र तत्कार्यं किं क्रियात्मकम् ।
यद्वा तद्व्यतिरेकीति तत्र लोकानुसारतः ॥२६८॥
प्रमाणान्तरविज्ञेया क्रियाकार्येति यद्यपि ।
तथाऽपि वेदे षष्ठाद्यसिद्धान्तेऽवस्थिते सति ॥२६९॥
स्वर्गकामादयः कार्ये नियोज्यत्वेन सम्मताः ।
स्वर्गकामादिभिश्शब्दैर्वक्तव्या इत्यवस्थितम् ॥२७०॥
नियोज्यस्स च कार्यं यस्स्वकीयत्वेन बुद्ध्यते ।
स्वर्गादिः कामयोगाच्च साध्यत्वेनैव गम्यते ॥२७१॥
तेन साध्यत्वपर्यन्तस्वर्गादीच्छाविशेषितः ।
तदेव शक्नुयात्कार्यं बोद्धुं यत्काम्यसाधनम् ॥२७२॥
लिङादिस्तत्र कार्यश्चेत्क्रियामेवाऽवबोधयेत् ।
समन्वयो नियोज्येन तदानीमेव हीयते ॥२७३॥
क्रिया हि क्षणिकत्वेन न कालान्तरभाविनः ।
स्वर्गादेः काम्यमानस्य समर्था जननं प्रति ॥२७४॥
इष्टस्याऽऽजनिका सा च नियोज्येन फलार्थिना ।
कार्यत्वेन न सम्बन्धमर्हति क्षणभङ्गिनी ॥२७५॥
तस्मान्नियोज्यसम्बन्धसमर्थं विधिवाचिभिः ।
कार्यं कार्यान्तरस्थायि क्रियातो भिन्नमुच्यते ॥२७६॥
तद्धि कालान्तरस्थानाच्छक्तं स्वर्गादिसिद्धये ।
सम्बन्धोऽप्युपपद्येत नियोज्येनाऽस्य कामिना ॥२७७॥
क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तत् ।
अतो मानान्तरापूर्वमपूर्वमिति गीयते ॥२७८॥
कार्यत्वेन नियोज्यश्च स्वात्मनि प्रेरयन्नसौ ।
नियोग इति मीमांसानिष्णातैरभिधीयते ॥२७९॥

कार्यस्यैव प्रधानत्वाद्वाक्यार्थत्वञ्च युज्यते ।
वाक्यं तदेव हि प्राह नियोज्य-विषयान्वितम् ॥२८०॥
आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये ।
कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः ॥२८१॥
विषयानुष्ठितौ सत्यां सिद्धो न हि विधिः फलम् ।
तदानीमेव कुरुते सहकारिव्यपेक्षया ॥२८२॥
सहकारिव्यपेक्षा च कारणत्वं न बाधते ।
मा बाधिष्टेति सर्वत्र तदनुग्रहकल्पना ॥२८३॥
एवं कामाधिकारार्थपर्यालोचनयोत्थिता ।
व्युत्पत्तिस्सर्ववाक्यार्थप्रतिपत्तिनिबन्धनम् ॥२८४॥
व्यवहारत एवाऽऽहुर्व्युत्पत्तिमपरे पुनः ।
कार्ये मानान्तरावेद्ये क्रियादिव्यतिरेकिणि ॥२८५॥
व्युत्पत्तिरपि कार्येऽर्थे व्यवहारानुसारिणी ।
किन्तु निर्धारणामात्रं वेदवाक्यविमर्शजम् ॥२८६॥
सितेतर इव त्वेष पक्षश्चित्तं न कर्षति ।
चन्द्रातपामलन्यायप्रवासमलिनीकृतः ॥२८७॥
कार्ये मानान्तरावेद्ये पार्श्वस्थस्तन्निबन्धनम् ।
व्यवहारं कथङ्कारं शब्दात्प्रागवबुद्ध्यताम् ॥२८८॥
व्यवहारमविज्ञाय तन्निबन्धनतद्गता ।
प्रतिपत्तिः कथं ज्ञेया शब्दशक्तिः कथन्तराम् ॥२८९॥
कार्यप्रतीतिमात्रञ्च प्रवृत्तेरनुमीयताम् ।
किन्तु कार्या क्रियैवेति लोकदृष्ट्याऽवसीयते ॥२९०॥
वेदार्थाचार्यवाक्येषु प्रवृत्तिर्याऽपि दृश्यते ।
तत्राऽप्येषैव सम्बन्धपरिज्ञानविधा भवेत् ॥२९१॥
तस्माल्लोकानुसारेण व्युत्पत्तिः कार्यमानके ।
तस्य त्वपूर्वरूपत्वं वेदवाक्यानुसारतः ॥२९२॥
ननु लोकविरोधित्वं पक्षेऽस्मिन्नपि दृश्यते ।
सर्वथैव यतो लोके क्रिया कार्यैव गम्यते ॥२९३॥

भवेदेवं बिरुद्ध्येते कार्येऽपूर्वेऽपि लौकिकौ ।
प्रतिपत्ति-प्रयोगौ चेत्क्रियाकार्यत्वगोचरौ ॥२६४॥

अपूर्वं हि क्रियासाध्यं साधिता साधनं क्रिया ।
तस्मादपूर्वकार्यत्वं क्रियाकार्यत्वसङ्गतम् ॥२६५॥

प्रमाणान्तरगम्यं हि लोकश्शब्दैर्विवक्षति ।
क्रियाकार्यत्व एवाऽतः प्रयोगो लक्षणान्वितः ॥२६६॥

लक्षणानभिमानस्तु मुख्यार्थानवधारणात् ।
ये तु मुख्यार्थकुशलास्तेषां लाक्षणिकत्वधीः ॥२६७॥

तस्मान्मानान्तरावेद्यं कार्यमर्थान्तरान्वितम् ।
वेदवाक्यं ब्रवीतीति सङ्क्षेपोऽयमुदाहृतः ॥२६८॥

वाक्यार्थमातृकेयं प्रभाकरगुरोर्मतानुसारेण ।
अनुसृत्युबोधनार्थं शालिकनाथेन सङ्ग्रथिता ॥२६९॥

प्रभाकरमतं सम्यगालोच्य क्रियते मया ।
विषयं करणश्चैव विवेक्तुं युक्तिवर्णना ॥३००॥

शालिकनाथेन कृतं कृतिनामुपकारसिद्धये सम्यक् ।
समुदीक्ष्य वा गुरुमतं सम्यग्विषयकरणीयमिदम् ॥३०१।

व्याख्याविकल्पसम्भवमज्ञान्याधिकृत्य संशयञ्छेत्तुम् ।
परमं प्रभाकरगुरोर्गम्भीरं भावमभिधास्ये ॥३०२॥

पूर्वावस्थाप्रहारणेन दशान्तरपरिग्रहम् ।
विकारमाहुस्संस्कारं केवलातिशयोदयम् ॥३०३॥

सन्निधानवशोत्पन्ना प्रकृतापूर्वगामिनी ।
मा बाधि प्रत्यभिज्ञेति तदनुग्रहकाङ्क्षया ॥३०४॥

अवहन्त्यादिभिश्शब्दैः कार्यान्वितपदार्थकैः ।
प्रकृतापूर्वसम्बद्ध एव स्वार्थोऽभिधीयते ॥३०५॥

तथा सति तदीयत्वं तेषां रक्षितुमिच्छता ।
व्रीह्यादिभिः पदैर्युक्ता कार्यसाधनलक्षणा ॥३०६॥

क्रियाकारकसम्बन्धोऽप्यतस्साधनगोचरः ।
शेषिभावोऽपि तस्यैव श्रौतद्वारानुसारतः ॥३०७॥

नानाश्रमविषयाणां विधिसिन्धौ निमज्जताऽज्ञानाम् ।
प्रविततगम्भीराणां पारायणमेतदाचरितम् ॥३०८॥
विकृतौ ये पदार्थानामतिदेशं न मन्वते ।
प्रकारस्योपदेशश्च तेषामुत्तरमुच्यते ॥३०९॥
प्राकृतेनोपकारेण पदार्थैश्चैव वैकृतैः ।
प्रयोगविधिना स्वेन विधिरन्वित उच्यते ॥३१०॥
यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेनाऽन्वितो हि विध्यर्थस्स्वशब्देनैव वर्ण्यते ॥३११॥
साध्यभूतश्च विध्यर्थ उपकारमपेक्षते ।
वाक्यादिभिः प्राकृतश्च स योग्यस्सन्निधाप्यते ॥३१२॥
अन्यथाऽनवगम्यत्वाद्यद्यप्यङ्गपुरस्सरः ।
उपकारः प्राकृतोऽसौ विकृतौ सन्निधाप्यते ॥३१३॥
तथाऽप्यपेक्षितत्वेन प्रकारं प्रथमं विधिः ।
स्वीकरोति पदार्थांस्तु प्रतीतानप्युपेक्षते ॥३१४॥
पश्चात्तु तैरपि पुनरुपकारप्रसिद्धये ।
अपेक्षितैस्तद्वशेन प्राप्तैरन्वयमृच्छति ॥३१५॥
गुणप्रधानभावेन सर्वत्रैवाऽन्वयो मतः ।
प्रधानश्च विधिर्धर्मा गुणास्तं प्रति सम्मताः ॥३१६॥
अन्वितस्याऽभिधानश्च न शब्दोपस्थितैः परम् ।
दर्शनात्पितृयज्ञादौ कल्प्येनाऽप्यधिकारिणा ॥३१७॥
सम्बन्धिना न सर्वेण सहसैवाऽन्विताभिधा ।
सम्बन्धिनां सन्निधानक्रमेण तु यथायथम् ॥३१८॥
प्रकृतौ तु स्वशब्दत्वात्पदार्थानां पुरोऽन्वयः ।
उपकारस्य कल्प्यस्य पश्चादिति परं भिदा ॥३१९॥
व्युत्क्रमेणोपकारेण पदर्थैश्चैव वैकृतैः ।
प्राकृतैर्विधिरन्वेति सोऽतिदेशश्च सम्मतः ॥३२०॥
यस्य देशे विधिर्यस्मिंस्ततोऽन्यत्राऽपि तद्गतिः ।
अतिदेशः प्रकारस्य धर्माणाञ्चैव युज्यते ॥३२१॥

अन्यत्रत्यो यथाऽन्यत्र प्रकारोऽन्वयमृच्छति ।
तथा धर्मा अपीष्यन्ते तेषामप्यतिदेश्यता ॥३२२॥
नन्वेवं दशमाद्येन विरोधस्ते प्रसज्यते ।
नैवं कार्यानपेक्षोऽसावतिदेशो निवारितः ॥३२३॥

तद्वद्भावेन सम्बन्धो धर्माणामेव चेद्भवेत् ।
अनपेक्ष्यप्रकारत्वात्तदा बाधो न सिध्यति ॥३२४॥
प्रकृतौ हि पदार्थानां सम्बन्धेऽवगते यथा ।
द्वारं दृष्टमदृष्टं वा सम्बन्धार्थं प्रकल्प्यते ॥३२५॥

कार्यानपेक्षसम्बन्धे तथैवाऽवगते सति ।
द्वारं दृष्टमदृष्टं वा कल्प्यं स्याद्विकृतावपि ॥३२६॥
ततो न घटते बाधः कार्यलोपनिबन्धनः ।
दृष्टाभावेऽप्यदृष्टस्य द्वारस्य खलु सम्भवात् ॥३२७॥

कार्यापेक्षा यदा धर्मा विकृतौ यान्ति सङ्गतिम् ।
तदा कार्यविलोपेन तेषां बाधः प्रसिद्ध्यति ॥३२८॥
प्राप्नुवन्तो हि कार्येण धर्मा द्वारसमन्विताः ।
प्राप्नुवन्तीति न द्वारकल्पनावसरस्तदा ॥३२९॥

क्लृप्तद्वारावलोपेन तेषां बाधः प्रमाणवान् ।
अतिदेशेन धर्माणां प्राप्तानामपि सिद्ध्यति ॥३३०॥
कार्यानपेक्षसम्बन्धो धर्माणामुच्यते यदि ।
दशमाद्यविरोधस्स्यात्तदानीं न च तत्तथा ॥३३१॥
तद्वद्भावेन किं धर्माः प्रकारो वाऽपि गृह्यते ।
इत्येषा दशमाद्ये हि चिन्ता बाधप्रसिद्धये ॥३३२॥

पूर्वपक्षी च तत्राऽऽह पदार्थानां परिग्रहम् ।
नोपकारे हि धर्मेभ्यो विना शक्यं निरूपणम् ॥३३३॥
यद्यप्याकाङ्क्षति विधिः प्रकारं प्रथमं स्वयम् ।
तथाऽपि तस्य प्रकृतावपि नैव स्वरूपतः ॥३३४॥
परिज्ञानं किन्तु यथाश्रुतैर्धर्मैस्तथैव हि ।
तस्मात्पदार्थपूर्वैव सदा तस्य निरूपणा ॥३३५॥

अतः पूर्वप्रतीतत्वात्पदार्थैरेव वैकृतः ।
विधिस्सम्बन्धमाप्नोति तान्गृहीत्वा तु स स्वयम् ॥३३६॥
उपकारं प्रकृतिवत्कल्पयत्यात्मसिद्धये ।
अतश्च प्राकृते द्वारेऽलुप्ते बाधन्तु नाऽर्हति ॥३३७॥
राद्धान्ती तु वदत्येवं सत्यं धर्माः पुरस्सराः ।
तथाऽपि ते न गृह्यन्ते तदानीमनपेक्षणात् ॥३३८॥
प्रकारं हि पुनस्साध्यरूपो विधिरपेक्षते ।
न पदार्थानिति हि तान्प्रतीतानप्युपेक्षते ॥३३९॥
प्रकारेणैव सम्बन्धं प्रथमं प्रतिपद्यते ।
प्रकारकल्पितैः पश्चात्पदार्थैरिति दर्शितम् ॥३४०॥
धर्माणामन्यदीयानां कथमन्यत्र सङ्गमः ।
इति चेदुपकारेऽपि तुल्यमेतदथोच्यते ॥३४१॥
नोपकारस्य सम्बन्ध इति हास्यमिदं वचः ।
यद्यसौ नाऽन्यदीयस्स्यात्कथं तर्ह्यतिदिश्यते ॥३४२॥
अन्यत्र ह्यन्यदीयस्य देशोऽतिदेश उच्यते ।
तद्वद्भावेन तत्प्राप्तौ विरोधश्चेन्न विद्यते ॥३४३॥
तद्वद्भावोपपत्त्यर्थं पदार्थेष्वपि तत्समम् ।
प्रतिपत्तिविरोधोऽयमन्यदीयान्यसङ्गमे ॥३४४॥
मुखान्तरेण सम्बन्धे स च नाऽस्ति कथञ्चन ।
ये तु नेच्छन्ति धर्माणां सम्बन्धं वैकृतैस्सह ॥३४५॥
अपूर्वे प्राकृताङ्गानां ग्रन्थस्तेषां विरुध्यते ।
सप्तमाष्टमयोस्तेषां प्रकारप्राप्तिचिन्तनम् ॥३४६॥
न युक्तं तत्र चिन्ता हि षट्केऽस्मिन्कार्यबन्धना ।
नियोगोऽप्यथ कार्यञ्चेत्तदर्थमपि चिन्त्यते ॥३४७॥
चतुर्थाध्यायचिन्ताऽपि षट्केऽस्मिन्नापतेत्तथा ।
कार्यतो ह्युपदेशार्थाद्विध्यर्थाद्यत्प्रतीयते ॥३४८॥
यथा तस्योपदिष्टत्वं तथाऽऽक्षेपेण वक्ष्यते ।
तेन विध्यर्थमुत्सृज्य कार्यमन्यत्समाश्रितम् ॥३४९॥

द्वारभूतमियं चिन्ता कार्यषट्के विधीयते।
अतिदेशः पदार्थानां तेन षट्केऽत्र चिन्तितः ॥३५०॥
तस्यैव हेतुभूतस्स उपकारोऽपि दर्शितः।
"षड्भिर्दीक्षयती"त्यत्र प्राकृतानाञ्च वैकृतैः ॥३५१॥
अङ्गभूतैरनङ्गानां बाधश्चैवं प्रसज्यते।
प्रधानभावबाह्यत्वादुपकारप्रसिद्धये ॥३५२॥
नैव प्रयुक्तिमात्रेण क्रियते प्राकृतं पुनः।
तत्र कार्यातिदेशोऽयं सम्मतस्त्वौपदेशिकः ॥३५३॥
उपदेशप्रमेयेण विध्यर्थेनोपकल्पितः।
प्रकृतावुपकारस्य यदपूर्वेण कल्पना ॥३५४॥
नियोज्यस्य च वृद्धानामुपदेशेन सम्मता।
उपदेशो हि नामाऽत्र ग्रन्थसन्दर्भ उच्यते ॥३५५॥
स च प्रमाणं विध्यर्थे कार्यरूपेऽवधारितः।
योऽर्थः प्रतीयते यस्मात्स परं नौपदेशिकः ॥३५६॥
विध्यर्थस्स्वप्रतीत्यर्थं यमाक्षिपति सोऽपि च।
अपर्यवस्यन्विध्यर्थो यं प्रकल्पयितुं क्षमः ॥३५७॥
औपदेशिकता युक्ता तस्याऽप्यक्षरबोध्यवत्।
उपकारविशेषश्च विधिः कल्पयितुं क्षमः ॥३५८॥
न पदार्थविशेषन्तु वैकृतं प्राकृतो यथा।
उपकारविशेषस्य कल्पनायां क्षमोऽपि यत् ॥३५९॥
प्रकृतेरेव गृह्णाति लाघवं तत्र कारणम्।
क्लृप्त-कल्प्यविरोधे हि लघुः क्लृप्तपरिग्रहः ॥३६०॥
स्ववाक्य-नाम-लिङ्गैश्च क्लृप्तोऽसौ-सन्निधाप्यते।
पदार्थभेदप्राप्तिस्तु नोपकारं विना भवेत् ॥३६१॥
तत्प्राप्तिः कार्यतस्तेषां प्रकारश्चोपदेशतः।
प्रकृतावुपकारश्च पदार्थश्चोपदेशतः ॥३६२॥
विकृतौ कार्यतो धर्माः प्रकारश्चोपदेशतः।
उपदिष्टेऽपि चैतस्मिन्नतिदेशपदाभिधा ॥३६३॥

न वार्यतेऽस्ति तस्याऽर्थो देशान्यत्वं निजाद्विधेः ।
उपदिष्टातिदिष्टत्वं न त्वेकस्य विरुद्ध्यते ॥३६४॥
नोपदेशातिदेशौ हि प्रमाण इति सम्मते ।
उपदेशातिदेशौ हि प्रमाणे भवतो यदि ॥३६५॥
तदा विरोधो जायेत न चैवमिह सम्मतम् ।
तेनोपदेशमेयत्वादुपदिष्टमितीष्यते ॥३६६॥
अन्यस्मिन्नन्यतोभावादतिदेशोऽपि युज्यते ।
उपदेश-कार्यरूपप्रमाणद्वयसंश्रयौ ॥३६७॥
षट्कावुभौ नोपदेशमतिदेशश्च संश्रितौ ।
अतिदेशाश्रयत्वे हि बाधे तन्त्रे च भूयसी ॥३६८॥
उपदिष्टार्थविषया चिन्ता नैवोपपद्यते ।
द्वारकार्याश्रयत्वे तु सर्वासामुपपन्नता ॥३६९॥
चिन्तानामिति चिन्तेह युक्ता कार्यसमाश्रया ।
नन्वेवमुपदिष्टत्वं पदार्थानां प्रसज्यते ॥३७०॥
कार्यवत्तैरपि यतो विध्यर्थोऽन्वित उच्यते ।
उच्यते शाब्दतैवं स्यान्नोपदेशप्रमेयता ॥३७१॥
प्रमाणद्वयभेदोऽयमुपस्थाननिबन्धनः ।
उपदेशोपस्थितो यो वाक्यार्थान्वयमृच्छति ॥३७२॥
स औपदेशिको ज्ञेयस्स च द्वैधमुपस्थितः ।
ग्रन्थेनोपस्थितश्चैव विध्यर्थोपस्थितस्तथा ॥३७३॥
यथोपकारः प्रकृतौ नियोज्यो वाऽश्रुतो यथा ।
प्रकारोपस्थितो यश्च द्वेधा नाऽसावुपस्थितः ॥३७४॥
तेनौपदेशिको नाऽसौ केवलं कार्यबन्धनः ।
पूर्वनिबन्धनिबन्धनमपनेतुं मोहमीहमानेन ॥३७५॥
शालिकनाथेन कृतः कृतिनामानन्ददो यत्नः ॥३७६॥

॥ प्रकरणपञ्चिकामूलश्लोकास्संपूर्णाः ॥

---

श्रीमत्प्रभाकरगुरुतन्त्रधुरन्धरेण महामहोपाध्याय-शालिकनाथमिश्रेण प्रणीता

# प्रकरणपञ्चिका

न्यायसिद्ध्याख्यया व्याख्यया विषमस्थलटिप्पण्या च समलङ्कृता।

## शास्त्रमुखं नाम प्रथमं प्रकरणम्

प्रकरणार्थप्रतिज्ञा

स्वाध्यायविधिवाक्यार्थविचारे प्रयतामहे।
प्रभाकरगुरोर्दृष्ट्या मीमांसारम्भसिद्धये ॥ १ ॥

भाट्टमतेन मीमांसाशास्त्रानारम्भपूर्वपक्षः

अत्र केचिदाचक्षते—न मीमांसाशास्त्रमारम्भणीयमिति। तद्धि वेद-

---

## श्रीनारायणकृता प्रकरणपञ्चिकाव्याख्या न्यायसिद्धिः॥

हरते सर्वविघ्नानि कर्मसिद्धिविधायिने।
तुभ्यमभ्यासवत्यस्तु महागणपते! नतिः॥

प्रकरणमारिप्सुः श्रोतृबुद्धिसमाधानार्थं सम्प्रदायाभिधेयप्रयोजनानि श्लोकेन दर्शयति—स्वाध्यायविधीति। अत्र पूर्वार्धेनाभिधेयो दर्शितः। उत्तरार्धेन प्रयोजनम्। प्रभाकरगुरोर्दृष्ट्येति सम्प्रदायो दर्शितः। तत्र गुरुमते हि अध्ययनस्य नियोगविषयत्वाद्यदेकस्मादपूर्वं तदेतरत्तदर्थमिति न्यायेन स्वाध्यायस्याध्ययननिष्पत्त्यर्थतया विधानम्, न पुनः दर्शनान्तरवदानन्तर्यात्स्वाध्यायोद्देशेनाध्ययनं विधीयते इति मत्वा स्वाभिमतवचनव्यक्तिद्योतनार्थं स्वाध्यायविधिवाक्यार्थ—इत्युक्तम्। स्वाध्यायविध्याक्षेपोऽध्यापनविधिना प्रथमाधिकरणे विद्यत इति गुरोरभिप्रायः। न पुनर्हेत्वन्तरादारम्भानारम्भौ चिन्त्येते इति मत्वा—

"प्रभाकरगुरोर्दृष्ट्या मीमांसारम्भसिद्धये।
स्वाध्यायविधिवाक्यार्थविचारे प्रयतामहे॥" इत्युक्तम्।

मीमांसारम्भसिद्धये इत्यनेन शास्त्रोपोद्घातरूपं प्रकरणमिदं न शास्त्रान्तरमिति दर्शितम् ॥१॥

इदानीं परोक्तं पूर्वपक्षं दर्शयति—अत्र केचिदिति। अत्र एवंशब्दोऽध्या-

---

## विषमस्थलटिप्पणी ॥

जैमिनिं सूत्रकर्तारं शबरस्वामिनं तथा।
प्रभाकरगुरुञ्चैव हृदि भक्त्या विभावये॥

**वाक्यार्थविचारोपायः तन्न्यायनिबन्धनम् । न च वेदवाक्यार्थो विचार्योऽस्ति, यो विचारस्य विषयभूतः । नाप्यसौ विचार्य निर्णीतः प्रयोजनमवकल्पते,**

इतव्यः । मीमांसाशास्त्रमेवमनारम्भणीयमिति शास्त्रानारम्भारम्भवादिनः केचित् पूर्वपक्षं कुर्वन्तीत्यर्थः । तद्धीति—मीमांसा[1] शास्त्रमित्यर्थः । अत्र विचारशब्देन निर्णय-प्रयोजनः पुरुषप्रयत्नोऽभिप्रेतः । न्यायाः—युक्तिरूपाः, अर्थापत्त्यनुमानादयः तत्परिकराः निबन्धनम् ग्रन्थाः—भाष्यटीकादयः[2] । एतदुक्तम्भवति—वेदवाक्यात्समीचीनार्थ-प्रतिपत्तावितिकर्तव्यताभूता मीमांसेति[3] ।

ननु च भवत्वेवम्भूता मीमांसा, तथापि कथमनारम्भः ? इत्यत्राह—न चेति । अन्यपराच्छब्दादर्थानभिधानं मानान्तरगम्यार्थे व्यवहारसिद्धम् । ततश्चाप्रतीतः[4] वेदवाक्यार्थो न विचार्यः—विचारानर्हः । विचार्याभावाद्विचारविषयो नास्ति । विशेषेण सीयते बध्यतेऽस्मिन्निति अनन्यत्रभावो विषयशब्दार्थः । ततश्च तस्याभावाद्विचारो नारब्धव्यः ।

---

यद्व्याख्यया गुरोरुक्तिः स्फुटीभवति तत्त्वतः ।
तं वन्दे शालिकाचार्यं गुरुतन्त्रधुरन्धरम् ॥
मितम्पचमतिः क्वाऽहं क्व चेमाश्शालिका गिरः ।
स्वबुद्धिशुद्धये कुर्वे विषमस्थलटिप्पणीम् ॥

श्रीमान् मीमांसकमूर्धन्यः शालिकनाथमिश्रः गुरुमते निरूढाभिनिवेशस्तन्मतमाश्रित्य प्रमाणप्रमेयसङ्ग्राहकं प्रकरणपञ्चिकानामकं प्रकरणमारभमाणः स्वप्रबन्धप्रवृत्तेः प्रयोजनाति-शयं दर्शयन् ग्रन्थारम्भं प्रतिजानीते **स्वाध्यायेति** । सूत्रभाष्यटीकादिष्वितस्ततो विप्रकीर्णानां विषयाणां मतान्तरनिरसनपूर्वकं विशिष्टयाऽऽनुपूर्व्या संकलय्यानाकुलं प्रदर्शनमेवास्य ग्रन्थस्य प्रयोजनमिति ध्येयम् ।

तत्र नानाप्रकरणात्मकेऽस्मिन् ग्रन्थे मीमांसारम्भाक्षेपसमाधानात्मकतया सर्वप्रकरणो-पजीव्यं शास्त्रमुखं नाम प्रथमं प्रकरणं वक्तुमारभते—**मीमांसारम्भसिद्धये** इति ।

अध्यापनविधिना स्वाध्यायाऽध्ययनविधेराक्षेपः चातुर्थिकेनोपादानाख्यप्रमाणेनेति शेषः ।

**अत्रेयं विषयपरिशुद्धिः—'अथातो धर्मजिज्ञासा'** इति प्रथमसूत्रव्याख्यावसरे भाष्यकारः मीमांसाशास्त्रमनारम्भणीयम्, अहोस्वित् आरम्भणीयम् ? इति संशयमुपन्यस्य शास्त्रारम्भ-सिद्ध्यर्थं स्वाध्यायाध्ययनविधेः अर्थज्ञानपर्यवसानमस्ति, न वा ? इति विचारम्प्रवर्तयामास । तत्र स्वाभिमतौ पूर्वोत्तरपक्षौ पश्चात् प्रवर्तयिष्यन् आदौ भाट्टसम्मतौ पूर्वपक्षसिद्धान्तौ निराकर्तुमनुवदति—**अत्र केचिदिति** ।

[1] 'मान, पूजायाम्' इत्यस्माद्धातोः 'मातेर्जिज्ञासायामि'ति वार्तिकेन जिज्ञासारूपेऽर्थे सन् प्रत्ययो विहितः, तेन निष्पन्नो मीमांसाशब्दः । सन्दिग्धवेदवाक्यविचारात्मकं मीमांसाशास्त्रम् ।

[2] शाबरभाष्य-बृहती-ऋजुविमलादयो गृह्यन्ते ।

[3] धर्मे प्रमीयमाणे इति वार्तिकमत्रानुसन्ध्येयम् ।

[4] प्रतीतिसिद्धः—क० ।

अपुरुषार्थत्वात्। पुरुषार्थत्वे हि तस्य चोदनैव प्रमाणं स्यात्। न चाविवक्षितार्था सा प्रमाणं भवितुमर्हति।

ननु शब्दानामौत्पत्तिकत्वादर्थपरत्वस्य नाऽविवक्षितार्थता युक्ता। सत्यमेवम्। वेदेनैव त्वन्यपरतामवगमयताऽविवक्षितार्थताऽऽपद्यमाना न शक्या वारयितुम्। तथाहि—स्वाध्यायोऽध्येतव्य इत्यत्र परप्रेरणात्मकविध्यवरुद्धा भावना तव्यप्रत्ययवाच्या प्रतीयते। सा च स्वभावतो भाव्यं करणमितिकर्तव्यताञ्चापेक्षते।

तत्र[1] न तावदध्ययनमेव समानपदोपात्तं भाव्यतया सम्बन्धमर्हति,

ननु अन्यपरादपि वेदवाक्यादापाततः प्रतीतो विषयोऽस्त्वित्यत्राह—नापीति। हेतुमाह—अपुरुषार्थत्वादिति। अतीन्द्रियेऽर्थेऽन्यपरस्य शब्दस्य तात्पर्याभावात्प्रतीतिरेव न काकदन्तपरीक्षावदपुरुषार्थत्वादित्यर्थः। अतीन्द्रियस्यार्थस्य पुरुषार्थत्वे चोदनैव प्रमाणमित्याह—पुरुषार्थत्वे इति। ततः किमित्यत्राह—न चेति। अविवक्षितार्था सा प्रमाणमेव न भवति, किम्पुनः स्वप्रमेयस्य पुरुषार्थत्वे इति।

चोदयति—नन्विति। शब्दानामौत्पत्तिकं नित्यसिद्धमर्थपरत्वं कथमन्यपरतया विहन्यते? औपाधिकं हि अर्थपरत्वमुपाधिविगमे हीयेत, न त्वेतदौपाधिकम्। परिहरति—सत्यमिति। परप्रेरणात्मकविधिशब्देन शब्दभावनोच्यते। तस्य खल्वर्थसम्वेदनफलप्रसवोन्नीतसद्भावस्य प्रवृत्तिजननसामर्थ्यमुन्नेतव्यम्। नन्वेवं लिङादीनां स्वाभिधैव कथमभिधीयते? उच्यते—यथाऽभिधाशब्देन स्वाभिधाऽभिधीयते, एवं लिङादेरप्यविरोधः। तेन प्रवर्तकशब्दकता तेनाभिहिता। प्रवर्त्येच्छासहकारिणी अभिधाभावना विधिशब्देनोच्यते। एवम्भूतया परप्रेरणयावरुद्धा समालिङ्गिता पुरुषप्रयत्नरूपार्थभावना तव्यप्रत्ययवाच्येत्यर्थः प्रतीयते इति।

ततः किमित्याह—सा चेति। सा[2] अर्थभावना स्वभावतो भावनात्वादेव भाव्यादित्रितयमपेक्षते[3] इति। नन्वर्थभावनाया भाव्याकाङ्क्षायामध्येतव्य इत्यत्र समानपदोपात्तमध्ययनं भाव्यतया संबध्यत इत्यत्राह—तत्रेति। हेतुमाह—अपुरुषार्थत्वादिति। दुःखात्म[4]कत्वेनापुरुषार्थत्वादित्यर्थः। न केवलमपुरुषार्थत्वमेव, प्रत्युत तस्मिन्नध्ययने

---

[1] अत्राध्ययनेनैव स्वाध्यायशब्दवाच्याक्षरराशिः प्राप्यते इति स्वाध्यायस्वरूपे अध्ययननियम इति आद्यः। अध्ययनेनैवार्थज्ञानं प्राप्यते इति अर्थज्ञानेऽध्ययननियम इति द्वितीयः। क्रत्वनुष्ठानेऽध्ययनं नियम्यते इति तृतीयः। एतान् पक्षान् क्रमेणानूद्य निरस्यति अपुरुषार्थत्वात् विध्यानर्थक्यात् अक्रत्वर्थत्वादिति हेतुत्रयेण।

[2] क० ख० प्रत्योः इत आरभ्य आहवनीयाद्यग्निवदित्यर्थ [पृ० ८] इत्यन्तः पाठो न दृश्यते। ग० संज्ञकप्रत्यनुसारेणायं पाठोऽत्र संयोजित इति ध्येयम्।

[3] साध्यं, साधनम्, इतिकर्तव्यताञ्चेति।

[4] कष्टं कर्मेतिन्यायेन दुःखात्मकत्वादित्यर्थः।

अपुरुषार्थत्वात्। तस्मिन् हि भाव्यतया स्वीक्रियमाणे पुरुषप्रवृत्त्यनुपपत्तेः परप्रेरणात्मकविधिव्यापारभङ्गप्रसङ्गात्। नाप्येकवाक्यतया समभिव्याहियमाणस्य स्वाध्यायस्य भाव्यतया सम्बन्धोऽवकल्पते, विध्यानर्थक्यप्रसङ्गात्। अन्तरेणापि हि विधिं प्रतीयत एवाध्ययनेन स्वाध्यायोऽवाप्यत इति।

न च व्रीहीनवहन्तीतिवन्नियमार्थो विधिरिति शक्यते वक्तुम्, अक्रत्वर्थत्वादध्ययनस्य। न खल्वध्ययनस्य क्रत्वर्थत्वे किंचन प्रमाणमस्ति, अक्रत्वर्थश्च न नियमस्य विषयः। अवघातादयो हि क्रतावेव नियम्यन्ते, न तण्डुलादिस्वरूपे। अवघातेनैव सम्पादितैस्तण्डुलैः क्रतुफलसिद्धिरिति प्रमाणान्तरस्याविषयत्वात्तेनैव सिद्धिरिति न किंचिद्विरुद्धम्। स्वाध्यायस्वरूपग्रहणं त्वध्ययनेनैव सिध्यतीति नियम्यमानं मानान्तरविरुद्धम्, स्वयमनधीयानस्यापि परपुरुषाधीयमानस्वाध्यायग्रहणदर्शनात्। न चाध्ययनस्वीकृतेनैव स्वाध्यायेन क्रतुफलभावनासिद्धिरिति अक्रत्वर्थतया क्रतुसंस्पर्शाभावेन नियमानुपपत्तेरिति।

एतेनैवार्थावबोधस्यापि भाव्यतया सम्बन्धो निरस्तो वेदितव्यः। तथा

भाव्यतया संबद्धे पुरुषप्रवृत्त्यभावात्प्रेरणारूपविधिव्याघातप्रसङ्ग इत्याह— तस्मिन्निति। ननु प्रकृत्यर्थस्याध्ययनस्य भाव्यत्वासंभवेऽपि पदान्तरोपात्तस्य स्वाध्यायस्य भाव्यतया संबन्धोऽस्त्वित्यत्राह—नापीति। तत्र हेतुर्विध्यानर्थक्येति। तथा सत्यज्ञातज्ञापनाभावादप्राप्तविधिर्न संभवतीति।

ननु सिद्धे सत्यारम्भो व्रीहीनवहन्तीतिवन्नियमार्थः कस्मान्न भवतीत्यत्राह—न चेति। कुत इत्यत्राह—अक्रत्वर्थत्वादिति। दृष्टसिद्धौ नियमापेक्षभावाद्। अवघातादेस्तु युक्त एव क्रतौ नियमः, शास्त्रैकगम्यत्वात्तत्सिद्धेरिति। नन्ववघातादिवदध्ययनस्यापि क्रतौ नियमोऽस्त्वित्यत्राह—अक्रत्वर्थेति।

अज्ञातज्ञापनाभावादपुरुषार्थतया चाक्रत्वर्थतया च नियमानुपपत्तेः सामर्थ्यप्राप्तस्यार्थावबोधस्य भाव्यतया संबन्धः स्वाध्यायवदेव न संभवतीत्याह—एतेनेति। तदुपपादयति—तथाहीति। ननु नित्यवदध्ययनविधिबलादेव तदकरणे प्रत्यवायः परिकल्प्यत इति प्रत्यवायपरिहारस्य भाव्यतया संबन्धः किमिति न भवति। उच्यते। प्रत्यवायपरिहारस्य प्रागभावरूपत्वेनाभाव्यत्वात्। ननु भावान्तरमेवाभाव[1] इति तस्य

[1] अभावविषये भाट्टानां प्राभाकराणाञ्च मतभेदो दृश्यते। तत्र भाट्टाः—घटादिस्वरूपेण निरूप्यमाणो भाव इत्युच्यते, पररूपेण निरूप्यमाणोऽभाव इति गीयते। 'भावान्तरमभावोऽन्यः कयाचित्तु व्यपेक्षया' इति—वदन्ति। प्राभाकरास्तु अभावमधिकरणस्वरूपातिरिक्तं न मन्वते, अतस्तन्मते दृश्ये प्रतियोगिनि या भूतलमात्रप्रतीतिः सैवाभावबुद्धिनिबन्धनं न तु अतिरिक्तोऽभावो नाम पदार्थः। अयं विषयोऽनुपलब्धिपरिच्छेदे कणेहत्य विवेचित इति नेह प्रतन्यते।

हि—यद्यप्यधीतात्स्वाध्यायात्फलवत्कर्मावबोधो दृश्यत इति तस्यैव भाव्यताऽवसीयते, तथापि विनापि विधिनाऽन्वयव्यतिरेकाभ्यामध्ययनस्यार्थावबोधसाधनत्वावगमाद्विधिरनर्थक एव। न चाध्ययनेनैवार्थावबोधो भावयितव्य इति नियमविधेरर्थवत्ता, प्रकारान्तरेणापि तत्संभवान्नियमानुपपत्तेः। न चाध्ययनेनैवार्थमवबुध्यानुतिष्ठतां क्रतुफलभावनासिद्धिरिति नियमः संभवति, अक्रत्वर्थत्वादध्ययनस्य। 'तस्माद्विश्वजिन्न्यायेन[1] स्वर्ग एव भाव्यतया कल्पयितव्ये प्राप्ते फलमात्रेयो[2] निर्देशादि'त्यर्थवादिकमधुघृतकुल्यादितृप्तपित्रादिप्रसादलभ्यसर्वकामफलावाप्तिरेव भाव्यतयाऽवसीयते।

नन्वाद्याध्ययने न किंचिदार्थवादिकं फलं श्रूयते, तत्रैषामर्थवादानामश्रवणात्। धारणजपयज्ञविध्यर्थवादा ह्येते। तदाहुर्वार्तिककारमिश्राः—

"[3]आद्ये त्वध्ययने नैव काचिदस्ति फलश्रुतिः।
धारणे जपयज्ञे च या साऽप्येवं निवारिता" ॥ इति ॥

सत्यमेवम्, तथापि तेषामतिदेशतोऽपि लब्धेर्युक्तैव तदीयफलस्य भाव्यता युक्ता। मैवम्। निरुपाख्याभाववादिनो वयमित्यवगम्य परितुष्यतामायुष्मता। किञ्च 'जीवताध्येतव्यम्' इति वचनात्.........कथमध्ययनस्य नित्यवत् कर्तव्यताविधिः। नन्वृणवाक्येऽध्ययनस्य श्रवणाद् जीवतोऽधिकारः कल्प्यत इति चेत्। सत्यम्। इह त्वृणवाक्ये विधुरस्य स्वाध्यायोऽध्येतव्य इत्येतावन्मात्रेऽधिकारो निरूप्यत इत्यविरोधः। अत एवाध्ययनस्यावश्यकर्तव्यतानियमविधिरुपन्यस्य षष्ठे निराकृतः। अत एकपदोपात्तस्याध्ययनस्यैकवाक्योपात्तस्य स्वाध्यायस्य सामर्थ्यप्राप्तस्यार्थावबोधस्य च भाव्यत्वासंभवे 'सः स्वर्गः स्यादि'त्यनेन स्वर्गस्य रात्रिसत्रन्यायेनार्थवादिकस्य फलस्य वा

---

[1] **विश्वजिन्न्यायेन इति**—अस्यायम्भावः—'विश्वजिता यजेत' इत्यत्र विश्वजिन्नामको यागो विहितः परं फलं न श्रूयते। चेतन इष्टे इष्टसाधने वा प्रवर्तते, यागस्तु कर्म कष्टमिति न स्वयं फलं भवितुमर्हति। अतो यागः फलसाधनमिति वक्तव्यम्। फलस्याश्रवणात् तत्कल्पनीयम्। तच्च सर्वाभिलषितत्वात् स्वर्गरूपमिति। तथा च—यत्र विधिवाक्ये फलं न श्रूयते तत्र विधेः प्रवर्तकत्वसिद्ध्यर्थं स्वर्गः फलं कल्प्यते—विश्वजिता यजेत स्वर्गकामः इति। तेन न्यायेनेत्यर्थः। पू. मी. ४. ३. १५

[2] आत्रेय आचार्यः निर्देशादर्थवादात् फलं मन्यते। तस्याश्रुतौ विश्वजिन्न्यायेन अनुमानं फलस्य कल्पनं स्यात्। यत्र विधिवाक्ये फलं न श्रूयते, सन्निहिते त्वर्थवादे फलं श्रूयते, तदेव विधिवाक्ये ग्राह्यम्। यथा रात्रिसत्रे। पू. मी. ४. ३. १८

[3] अध्ययनं त्रिविधम्—ग्रहणाध्ययनम्, धारणाध्ययनम्, जपाध्ययनञ्चेति। न्यायरतनमालायां चतुर्थः पादोऽन्यथा दृश्यते—**फलश्रुतिरियं यतः** इति।

भाव्यता। तथा हि[१]—"लिङादियुक्तेषु वाक्येषु द्वे भावनेऽवगम्येते, शब्दभावनाऽर्थभावना चेति। तत्र शब्दभावना परप्रेरणात्मिका। तस्याः पुरुषप्रवृत्तिर्भाव्यम्[३]। तया च प्रेरणया सह यो लिङादीनां वाच्यवाचकभावः सम्बन्धः, स तत्र योग्यतया करणम्। तदाहुर्वार्तिककारमिश्राः—"लिङादयो हि प्रेरणां कुर्वन्त्यभिदधति चेति" [ तन्त्रवा० १. २. १. ]। प्रवर्त्यरुच्युत्पादनयोग्यतया चार्थवादिकी स्तुतिरितिकर्तव्यता। तदेवमध्ययनविधौ साक्षादश्रुतार्थवादके शब्दभावनायामितिकर्तव्यताभूतार्थवादाकाङ्क्षिण्यां जपयज्ञाऽध्ययनादतिदेशेनाऽर्थवादाः स्वीक्रियन्ते। तदाहुर्वार्तिककारमिश्राः—"अनुषङ्गानुमानाद्यैर्लभ्यन्तेऽन्येऽतिदेशतः" इति। ते चातिदिष्टा अर्थवादा अर्थभावनायां फलं समर्पयन्ति रात्रिसत्रवत्। एवमार्थवादिके फले भाव्यतयाऽवसितेऽध्ययनं समानपदोपात्तं करणाकाङ्क्षापरिपूरकत्वेन संबध्यते। एवञ्च [४]यदैकस्मादपूर्वं तदेतरत्तदर्थमिति न्यायेन स्वाध्यायशब्दवाच्योऽक्षरराशिरप्यध्ययननिर्वृत्त्यर्थ एवावसीयते। एवञ्चान्यपरत्वादक्षराणां तेभ्योऽर्थप्रतिपत्तिरेवानुपपन्ना, व्युत्पत्तिविरहात्। वृद्धव्यवहारे ह्यनन्यपराण्येवाक्षराण्यर्थावबोधकतया व्युत्पन्नानि। व्युत्पत्त्यपेक्षश्च शब्दोऽर्थावबोधकः। यः पुनरन्यपरेभ्योऽप्यक्षरेभ्योऽर्थावगमः, स सामान्यतोदृष्टनिबन्धनानन्यपरत्वभ्रान्त्या भ्रान्तिरेवेति मन्तव्यम्। अप्रतीयमानश्चार्थो न विचारस्य विषयः, नापि प्रयोजनमिति विचारस्तावन्नारब्धव्यः, तदनारम्भे च तदुपायभूतन्यायपरिज्ञानमप्यनुपयोगि। तदनुपयोगे च तन्निबन्धनं मीमांसाशास्त्रमनारम्भणीयमिति पूर्वः पक्षः॥

भाव्यत्वं युक्तमेवेति। तदुपपादयति—तथाहि—इति। तया चेति। प्रेरणारूपशब्दभावनयेत्यर्थः।

उक्तं निगमयति—एवमिति। एवञ्च स्वाध्यायस्याध्ययननिष्पत्त्यर्थतयार्थपरत्वाभावेनाध्ययनस्यान्यपरत्वादेवार्थप्रतीतेरभावादप्रतीतार्थस्य विचार्यत्वाभावेन प्रयोजना-

---

[१] तन्त्रवार्तिके अर्थवादाधिकरणसिद्धान्ते शाब्दभावनाऽर्थभावनाभेदेन भावनायाः द्वैविध्यप्रदर्शनमस्ति तन्त्रवा० १. २. १

[२] "लिङोऽभिधा सैव च शब्दभावना, भाव्यं च तस्याः पुरुषप्रवृत्तिः। लिङादिबोधः करणं तदीयप्ररोचना चाङ्गतयोपयुज्यते।" इति मण्डनमिश्रीयं ब्रह्मसिद्धिवचनमत्रानुसन्धेयम्।

[३] भाव्या क०

[४] अयञ्च न्यायो भावार्थाधिकरणस्य भाष्यसन्दर्भसिद्ध इति ध्येयम् टि.।

भाट्टमतेन मीमांसारम्भसमर्थनम्—

राद्धान्तस्तु स्वाध्यायोऽध्येतव्य इति स्वाध्यायस्य [1]कर्मत्वावगमात्स एव भाव्यतयाऽवसीयते। यद्यपि नित्यत्वान्निर्वर्त्यकर्मता नास्ति स्वाध्यायस्य, विकार्यकर्मता वा, अध्ययनेन तस्य विकारानुपपत्तेः, तथापि प्राप्यतया तस्य कर्मता नानुपपन्ना। अत एव प्राप्यकर्मोदाहरणं वृत्तिकारस्य वेदाध्ययनम्। यच्च कर्म, तदर्थैव क्रिया युक्ता। सोऽयं श्रौतो विनियोगः।

न च स्वाध्यायस्य सक्तुवच्छेषित्वमनुपपन्नम्, फलवदर्थावबोधोपयोगित्वात्। यद्यपि चार्थावबोधोपयोगित्वमध्ययनात्प्राङ्नावगम्यते, तथापि पश्चाद्भाव्यपि भवत्येव प्रयोजनम्। भाविनापि चोपयोगेन शेषित्वं नानुपपन्नम्, अग्निवत्। उत्पन्नानां ह्यग्नीनां विनियोगावगमः, नावगतविनियोगानामुत्पत्तिः। आहवनीयादिशब्दानामलौकिकार्थतया प्राग्व्युत्पत्त्यवगमादर्थानवगतेः होमादिषु विनियोगासंभवात्। तथा चोक्तम्—"भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हति।" [तन्त्रवा० २.१.४]

ननु चार्थावबोधोपयोगितया संस्कारविधिरनर्थक एवेत्युक्तम् इति। नानर्थकः, नियमार्थतयाऽर्थवत्त्वात्। ननु च नियमो न सम्भवति, अक्रतु-

भावादनारभ्यं शास्त्रमित्येवं परैः पूर्वपक्ष उक्तः। तं निराकर्तुं परोक्तं राद्धान्तमाह—राद्धान्तस्त्विति। कर्मणि विहिततव्यप्रत्ययादेव स्वाध्यायस्य कर्मत्वावगमात्तस्यैव भाव्यता युक्तेत्याह—स्वाध्यायेति। स्वाध्यायस्य नित्यत्वादध्ययनेन तस्य विकारोत्पत्त्योरनुपपत्तेरुत्पत्तिविकारकर्मत्वयोरभावेऽपि दोहनेन पयःप्राप्तिवत् प्राप्यकर्मता युक्तेत्याह—यद्यपीति। उक्तमर्थं वृद्धसम्मत्या द्रढयति—अत इति। प्राप्यकर्मोदाहरणत्वं वृत्तिकारेणाप्युक्तम्—वृत्तीति। ततः किमित्याह—यच्चेति। व्रीहीनवहन्तीतिवदिति भावः। सोऽयमिति कर्मणि विहिततव्यप्रत्ययश्रुत्या शेषितया विनियोग इत्यर्थः।

ननु यथा [2]सक्तूञ्जुहोतीत्यत्र होमस्य सक्त्वर्थत्वाभावान्न सक्तूनां शेषित्वं तथा

---

[1] कर्म चतुर्विधम्—उत्पाद्यं, प्राप्यं, विकार्यं, संस्कार्यञ्चेति। यथा लोके घटं करोति, वेदे संयवनेन पिण्डः; गां दोग्धि पयः, वेदाध्ययनम्; व्रीहीनवहन्ति; व्रीहीन् प्रोक्षति इति क्रमेणोदाहरणं बोध्यम्।

[2] अत्र वाक्ये सक्तूनिति द्वितीयया करणत्वं लक्ष्यते सक्तुभिरित्यर्थः। जुहोतीत्यस्य होमम्भावयेदित्यर्थः। तथा च वाक्यार्थः सक्तुभिर्होमं भावयेदिति। अयं च विषयः पू० मी० २।१।४ इत्यत्र निरूपितः। तथा च वार्तिकम् भूतभाव्युपयोगं हि संस्कार्यं द्रव्यमिष्यते। सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ताः क्वचित्" इति। अत्र मुद्रिते वार्तिके 'संस्कार्यं द्रव्यमिष्यते' इत्यस्य स्थाने 'द्रव्यं संस्कारमर्हति' इति पाठो दृश्यते इति।

संस्पर्शित्वादित्युक्तम्। तन्न सम्भवति स्वाभाविकार्थपरत्वानुसारेण क्रत्वनुप्रवेशे क्रतुसंस्पर्शिताया एवोचितत्वात्। यदि खल्वध्ययनविधेः क्रत्वनुप्रवेशिता नाश्रीयते, तदा शब्दानां वृद्धव्यवहारव्युत्पन्नानां स्वाभाविकार्थपरता हीयेत। जहत्स्वार्थत्वं च न न्याय्यमिति क्रतुफलभावनानुप्रवेश्येवाध्ययनसंस्कारो युक्तः। तत्र कर्मविधिष्वेवं नियमवर्णना अध्ययनाविर्भावितैरेव कर्मविधिभिरर्थमवबुध्यानुतिष्ठतां क्रतुफलभावनासिद्धिरिति। अर्थवादेषु त्वध्ययनाविर्भावितार्थवादप्ररोचिताः क्रियमाणाः क्रतवः फलभावनाय अलमिति। मन्त्रेषु पुनरध्ययनपरिगृहीतैरेव मन्त्रैः क्रतुषु पदार्थस्मरणं फलभावनाङ्गमिति। अध्ययननियमाश्रितश्च कालनियमो व्रतादिनियमश्च।

"श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्॥"

[मनु. अ. २, श्लो. १६५]

"भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम्॥"

[मनु. अ. २, श्लो. २, ४९, ११] इति।

एवञ्चानन्यपरत्वादक्षराणां फलवत्कर्मावबोधोत्पत्तेर्विचारस्य विषयप्रयोजनलाभाच्छास्त्रस्यारम्भणीयत्वम्, विषयप्रयोजनलाभे च विचारस्याध्ययनानन्तरमुपनिपतितत्वाद् गुरुकुलस्थितेरर्थवत्त्वात्तन्निवृत्तिमध्ययनानन्तरप्राप्तां स्मरद् 'वेदमधीत्य स्नायाद्' इति स्मृतिवचनमपन्यायमूलं दर्शयन्नर्थावबोधपरतया स्वाध्यायस्य विवक्षितार्थतां मन्यमानः सूत्रकारो विचारस्य विषयं प्रयोजनं चाह "अथातो धर्मजिज्ञासा" [पू०मी० १.१.१] इति। एतच्च व्याख्यातम्—

स्वाध्यायस्य कर्मत्वे शेषित्वं न संभवतीत्यत्राह—न चेति। नन्वध्ययनात् प्रागर्थावबोधाभावात् फलवत्कर्मावबोधो न सिद्ध इत्यत्राह—यद्यपीति। तदुपपादयति भाविनेति। अग्निवदिति। आहवनीयाद्यग्निवदित्यर्थः। उत्पन्नानामिति। पूर्वमेवाधानेनोत्पन्नानामाहवनीयाद्यग्नीनां यदाहवनीये जुहोतीति पश्चाद्विनियोगः। न पुनः पूर्वमेवावगत[१]विनियोगानामग्नीनामुत्पत्त्यपेक्षायामाधानेनोत्पत्तिरित्यर्थः। विपर्यये दोषमाह—यदीति। तेन विध्यर्थवादमन्त्ररूपेषु त्रिविधेषु स्वाध्यायेषु क्रतावेव नियम इत्याह—तत इति। अध्ययननियमाश्रितानि नियमान्तराण्यपि क्रतावेवाध्ययननियमं सूचयन्तीत्याह अध्ययनेति। प्रकृतं निगमयति—एवञ्चेति।

[१] अवगतानामग्नीनामिति क० मु०।

"अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम्।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥"

[ मीमांसाश्लोकवार्तिकम् १. १. ११. ] इति बहुरोपि

[1]'तदयुक्तम्। न हि लिङादियुक्तवाक्येषु भावना भाव्यान्तरमपेक्षते,

ननु वक्तुरभावे स्वाध्यायस्यार्थतात्पर्यं कथमवगम्यते ? उच्यते—लोके विवक्षाधीनस्तात्पर्यावगमः, वेदे तु विध्यधीन इति न कश्चिद्दोषः। अध्ययनविधिना कृत्स्नस्वाध्याये पुरुषप्रवृत्तिं विदधता तात्पर्यं सम्पादयितुं सूत्रकारेणापि 'अथातो धर्मजिज्ञासा' इति सूत्रेण विषयप्रयोजनलाभादारभ्यं शास्त्रमित्युक्तम्—विषयेति। अर्थपरतया स्वाध्यायस्यानन्यसाध्यविषयपुरुषार्थरूपप्रयोजनलाभादारभ्यं शास्त्रं वेदार्थभूतधर्मज्ञानकामस्येति सूत्रार्थः। वार्तिककारेणाप्येवमेव सूत्रं व्याख्यातमित्याह—एतच्चेति। प्रतिपाद्यतया संबन्धस्यानन्यसाध्यतया विषयीभूतस्यैव निर्णयोत्तरकालं पुरुषार्थत्वात् प्रयोजनत्वं वक्तुं कृतमिदं सूत्रमिति वार्तिकार्थः।

परोक्तं[2] निराकरोति–तदयुक्तमिति। एवं परमतेन सूत्रव्याख्यानमयुक्तमित्यर्थः। पूर्वपक्षेऽपि शास्त्रस्य विषयः प्रयोजनञ्च लभ्यत एव। तथा हि स्वाध्यायस्यार्थो विषयनिर्णयोत्तरकालं तदेवानुष्ठेयरूपत्वात् प्रयोजनं भवति। तन्निर्णयस्य मीमांसागतन्यायकलापाधीनात्मलाभात् तदारम्भेण पूर्वपक्षवर्णनं न शक्यते कर्तुम्। किञ्च सिद्धान्तेऽपि विषयप्रयोजनपरतया सूत्रव्याख्यानमयुक्तम्। शास्त्रप्रणेतरि गौरवादेव सामान्येन प्रयोजनवत्त्वनिश्चयात् प्रवर्तन्ते श्रोतारः। नन्वभिप्रेतप्रयोजनविशेषेऽवगते श्रोतृप्रवृत्तिः, न सामान्यमात्रे। विशेषश्च निर्देशादृतेऽवगन्तुं न शक्यत इति तन्निर्देशार्थं सूत्रम्। मैवम्। अधीतसाङ्गवेदस्य विदितपदपदार्थकस्य स्वानुगुणार्थधीरीषज्जातेति तत्सम्यक्त्वेच्छोः स्नानस्मृतिदर्शनेनानर्थपरत्वधिया विमुखतापत्तौ स्मृतिं बाधित्वार्थपरत्वप्रतिपादनाय विषयप्रयोजनज्ञं प्रत्येव सूत्रम्।

यदुक्तम्[3]–अस्ति प्रवर्तना शब्दगता। तया फलभावनायां पुरुषः प्रवर्त्यत इति। तन्मन्दम्। प्रयोक्तृपुरुषधर्मत्वेन प्रवर्तनाया लोके व्युत्पत्तेर्न शब्दस्याचेतनस्य प्रवर्तना संभवति। अथ पवनादिवदचेतनोऽपि शब्दः प्रवर्तयतीत्यभिप्रायः। तर्ह्यव्युत्पन्नमपि प्रवर्तयेत्। किञ्च वाय्वादिवत् प्रवर्तकत्वे शब्दव्यापारस्याभिधानमनर्थकमेव,

---

[1] एवं तावत् भाट्टमतेन पूर्वोत्तरपक्षावारचय्य तद्दूषयितुमारभते-तदयुक्तमित्यादिना।

[2] परोक्तौ पूर्वपक्षसिद्धान्तौ निराकरोतीति क पुस्तके मुद्रितपुस्तके च पाठः।

[3] 'अभिधाभावना' मिति तं. वा. २. १. १. ३४४ पृ.। तत्र पार्थसारथिमिश्रेणार्थप्रतीत्यनुकूलापरपर्यायायाः अभिधायाः लिङादिवाच्यत्वमङ्गीकृतम्। तदेव मतमत्र व्याख्याने खण्डयते। तन्मतोपपादनन्तु न्यायरत्नमालायां विधिनिर्णयप्रकरणे शास्त्रदीपिकायां षष्ठाद्ये च विशिष्य निरूपितम्। तत्तु तत एवावगन्तव्यम्।

अप्रतीतव्यापारस्यापि लिङादेर्वाय्वादिवत् स्वभावतः प्रेरकत्वसंभवात्। अथाकाशगतशब्दस्य प्रवर्तना, न तर्हि पुरुषाणाम्। का प्रवर्तना ! उच्यते—पुरुषाणां प्रयोक्तृणामयं पुरुषः प्रवर्ततामिति स्वतः फलसङ्कल्पपूर्वा काचित्। नैवं शब्दस्य संभवति। यद्यपि स्यात्। तथापि किमिति पुरुषः प्रवर्तते। न वा सर्वत्र प्रवृत्तिरस्ति प्रेक्षावतां पुरुषाणां लोके, अपि तु अनुविधेये राजादौ प्रवर्तयति। तत्रापि किमिति प्रवर्तयतीति चेद् ! उच्यते—अनुविधेये तु दण्डादिभिरवश्यं प्रवर्तयितव्यम्। न चैवं शब्दोऽस्य दण्डयति सान्त्वयत्यनुजानाति वा। तस्मादर्थानर्थप्राप्तिपरिहारकारणशब्दोक्तौ शब्दव्यापारात् प्रवृत्तिर्न स्यात्।

किञ्च शब्दव्यापारस्य प्रवर्तकत्वेऽव्युत्पन्नस्य शब्दश्रवणानन्तरं प्रवृत्तिप्रसङ्गः। शब्दसद्भावादेव तद्व्यापारसंभवात्। अथाभिधाव्यापारस्याभिधेयप्रदर्शकतया प्रवर्तकत्वम्, तस्माद् व्युत्पत्त्यपेक्षा युक्तेति चेत्, तर्हि बालस्य स्तन्यपानादौ प्रवृत्तिर्न स्यात्, तस्य व्युत्पत्त्यभावेनाभिधेयप्रदर्शनाभावात्। अथ तत्रापि जन्मान्तरीयस्मृत्या प्रवर्तत इति चेन्न। स्वसंवेदनविरुद्धत्वात्। किञ्च जन्मान्तरीयव्यापारस्मृतौ पुनर्व्युत्पत्त्यपेक्षा न स्यात्। ✓

किञ्च व्यापारस्य विषयादर्शकतया प्रवर्तकत्वे किं स्वरूपेण प्रवर्तकत्वमुत विषयेच्छोत्पादनद्वारेण ? आद्येऽव्युत्पन्नानां प्रवृत्तिप्रसङ्गः, शब्दसद्भावादेव तद्व्यापारस्यापि सद्भावात्। द्वितीये प्रवृत्त्यानन्तर्योत्तस्या एव प्रवर्तकत्वं, न भावनायाः।

किञ्च लिङादिव्यापारे च विधौ लिङादिस्वरूपाभिधानं प्रसक्तम्। तथा हि—व्यापारस्याभिधालक्षणस्य लङादिव्यापाराद् व्यावृत्त्यर्थं लिङादिविशिष्टतया व्यापारोऽभ्युपगन्तव्यः। तदा लिङ्शब्दस्याप्यभिधेयत्वप्रसङ्गः। अथ लिङादेः स्वविशिष्टभावनाभिधानमपि सन्निधानात्, तर्हि सन्निधानात्तेन विशेषणार्थस्यापि सन्निधानात्तेनापि विशेषणत्वप्रसङ्गः। अथार्थस्य प्रवर्तनां प्रति विशेषणयोग्यत्वं नावधृतम्, तर्हि लिङादेरपि योग्यत्वं नान्यतोऽवधृतम्, तेन लिङादिना तस्याभिहितस्य न विधिरूपत्वम्। ✓/

अथ मतं—शब्दस्याभिधाव्यापार एव भावना विधिरित्युच्येत तस्य खल्वर्थसंवेदनफलप्रसवोन्नीतसद्भावस्य प्रवृत्तिजननं प्रति सामर्थ्यमुन्नेतव्यमिति लाघवमस्मिन् पक्षे—इति। तदप्यनुपपन्नम्। सर्वशब्दानां यथास्वमभिधेयेष्वभिधाव्यापारसम्भवाद् घटादिशब्देभ्योऽपि प्रतिपत्तिप्रसङ्गः। अथ सत्यभिधात्वेऽभिधेयविशेषात् भेदोऽभिधाया भविष्यतीति तादृशोऽभिधेयविशेषो लिङादीनां, न घटादीनामिति लिङाद्यभिधैव प्रवर्तयति, न घटादिशब्दाभिधेति। तर्ह्यभिधेयविशेषात् भेदोऽभिधाया भविष्यतीति स एव प्रवृत्तिहेतुः किमिति न भवति। अन्वयव्यतिरेकाभ्यामेवाभिधेयविशेषावगमे सति प्रवृत्तेर्भावात् सत्यामप्यभिधायां घटादिशब्दस्य तदभावात् प्रवृत्तेरभावात्।

किञ्च अनन्यलभ्यश्च शब्दार्थ इति स्थितौ सत्यामर्थधीलक्षणकार्योन्नेयाभिधाया अन्यलभ्यत्वाच्छब्दार्थत्वमयुक्तम्। किञ्च अभिधायाश्चाभिधापेक्षत्वेऽभिधाप्यऽभिधा-

अपूर्वस्य भाव्यस्य स्वशब्देनाभिहितत्वात् । लिङादयो हि भाव्य-कोटिनिविष्टप्रधानभूतापूर्वोपसर्जनतापन्नामेव भावनामभिदधतीति[1] विषयकरणीये निपुणतरमुपपादितम् । अतो न पूर्वपक्षे भाव्याकाङ्क्षायामार्थवादिकफल-सम्बन्धः । नापि सिद्धान्ते स्वाध्यायस्य साध्यतयान्वयः । कथं तर्हि विश्वजिदादिषु स्वर्गादिफलकल्पनम् ?

यथा तत्तथा निशम्यताम्—

यदपूर्वं कार्यभूतं प्रतीयते तद् विषयत्वेन सम्बद्धकरणीभूतयागाद्यनुष्ठा-

त्वेनाभिधेया, एवं तदपीत्यनवस्थापातः । अन्याभिधैवाभिधेया नाभिधेयाभिधेति नियमो नास्ति, तस्मादभिधाभावनापक्षो दुर्घट एव । कथञ्चाम्बरगुणस्य शब्दस्य व्यापारसम्भवः । अम्बरगुणत्वं तत्त्वालोके[2] प्रतिपाद्यते । द्रव्यत्वेऽपि शब्दस्य सर्वगतद्रव्यस्य कथं व्यापारसम्भवः ? स्वाश्रयस्य देशान्तरसंयोगवियोगकारणं कर्म संयोगविभागाभ्यामनुमीयते । उक्तञ्च—"यदाश्रयं देशान्तरं प्रापयति तत् कर्मेत्युच्यत इति" [२-१-२. शा. भा.] षष्ठे प्रतिनिधिपादे भाष्यकारेण क्रियाणामाश्रितत्वादित्य-स्मिन्नधिकरणे च [पू. मी. अ. ६ पा. ३ अ.धि. ३]। तस्माच्छब्दस्य व्यापाराभ्युपगमो युक्तिविरुद्धः, मूलग्रन्थविरुद्धश्च । यत्तु चलनात्मकक्रियालक्षणविरहात् क्रियात्वनिर-पेक्षा शब्दगता ज्ञातता भावनेति, तदपि प्राकट्यानिराकरणादेव निराकृतम् । अन्यत् सर्वं कार्यपरिच्छेदे वक्ष्यामः । अतो लिङादिविधिशब्दयुक्तेषु वाक्येषु न भावना भाव्यान्तरमपेक्षत इत्याह—नहीति । किञ्च एतत्सर्वमुपरिष्टाद्विषय-करणीयाख्ये प्रकरणे[3] विस्तरेणोपपादितमित्याह—लिङादयो हीति । तेन लिङाद्यर्थो भावनाऽपूर्वभाव्यैव श्रुतेति पूर्वपक्षे भाव्याकाङ्क्षायामार्थवादिकस्य फलस्य न भाव्य-तेत्याह—अत इति । तथा सिद्धान्तेऽप्यभिहितस्यापूर्वस्य भाव्यत्वान्न स्वाध्यायस्य भाव्यतया सम्बन्ध इत्याह—नापीति । यदि नियोग एव भाव्यः प्रतीयते कथन्तर्हि विश्वजिता यजेतेत्यत्र नियोगसिद्ध्यर्थं स्वर्गादिकं कल्प्यत इत्युच्यत इति पृच्छति—कथमिति ।

परिहरति—यथेति । तथापि किमित्याह[4]—नचेति । कर्त्रा अनुष्ठात्रा तदनुष्ठानोपपत्तिरित्यर्थः । ततः किमित्याह—नचेति । मदुपयोगिफलजनकतया

---

[1] द्वादश प्रकरणे लिङादिशब्दवाच्ये कार्ये धात्वर्थ एव विषयत्वेन करणत्वेन चान्वेतीति प्रतिपादितम् । अस्य विस्तरस्तत्रैव द्रष्टव्यः ।

[2] एवंसिद्धगुणभावः शब्दो गुणिनमनुमापयतीत्यादिग्रन्थेनेति द्रष्टव्यम् ।

[3] यदुक्तमित्यादि तदपीत्यन्तस्य ग्रन्थस्य क पुस्तके मुद्रितपुस्तके च पाठो न दृश्यते । अत्र ग्रन्थपातोऽनुमीयते ।

[4] अनुमितो वेदः इति क. पुस्तके मुद्रितपुस्तके च पाठः ।

नाधीनात्मलाभम्। [१]न च विना कर्त्रा तदनुष्ठानोपपत्तिः। नचाधिकारं विना कर्तृत्वलाभः। नच नियोज्यमन्तरेणाधिकारसिद्धिः। न वाऽविशिष्टो नियोज्योऽवकल्पत इति विशेषणभावेन स्वर्गकामना परिकल्प्यते। स्वर्गकामना चेन्नियोज्यविशेषणं ततोऽग्निहोत्रादिवत् स्वर्गस्यापि नियोगतः सिद्धिरिति। भवत्वेवम्, अत्रापि तर्हि नियोज्यविशेषणतयैवार्थवादिकं फलं रात्रिसत्रवत्सम्बध्यताम्। न। अन्यतोऽनुष्ठानसिद्धेः। कुतोऽन्यतः? आचार्यकरणविधिप्रयुक्तेः। कः पुनराचार्यकरणविधिः?

"उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" ॥

[ मनुः २. १४० ]

इति स्मरणानुमितः शिष्यमुपनीय वेदाध्यापनेनाचार्यकं भावयेदित्येवंरूपः। अलौकिकश्चाहवनीयादिवदाचार्यकमिति तन्निष्पत्त्युपायविधानं

मदर्थमिदं कर्मेत्येवमैश्वर्यलक्षणमधिकारं विना कर्तृत्वं न सिद्ध्यतीत्यर्थः। नचेति। ममेदं कार्यमिति बोद्धारं विनाऽधिकारो न सिद्ध्यतीत्यर्थः। तेन स्वर्गपुत्रादिविशेषणैरविशिष्टो नियोज्यो न संभवतीति नियोज्यविशेषणतया स्वर्गादिक कल्प्यत इत्याह—नचेति। तेन विश्वजिदादिष्वनुष्ठानसिद्ध्यर्थं स्वर्गादिकल्पनमित्यर्थः। ननु भवत्वेवं विश्वजिदादिषु, अत्राप्यध्ययनविधौ तर्हि नियोज्यविशेषणाश्रवणात् विशेषणतयार्थवादिकं फलं रात्रिसत्रन्यायेन संबध्यतामिति चोदयति—अत्रापीति। स्मरणानुमित इति। स्मृतिवाक्येनानुमितो वेद इत्यर्थः। ननु स कीदृश इत्यत्राह—शिष्यमिति। विहितानेकनियमयुक्तम् उपनयनं कृत्वाध्यापनेनाचार्यकं भावयेदित्येवंरूप इत्यर्थः। तत्र यूपाहवनीयादिवदलौकिकमाचार्यकत्वम्। ननु[२] पचनक्रिया कर्तृत्वनिमित्तपाचकत्वादिवदध्यापनक्रियाकर्तृत्वनिमित्तमाचार्यत्वम् न त्वलौकिकमित्यत्राह—अलौकिकमिति। आचार्यत्वमलौकिकम्, अनेकनियमापेक्षत्वात्तदुत्पत्तेः। नहि दृष्टं नियमापेक्षोत्पत्तिकं भवति, नियमानियमयोरविशेषेण दृष्टोत्पत्तिदर्शनात्।

---

[१] यजेत स्वर्गकाम इत्यादौ लिङ्वाच्यमपूर्वमेव, ममेदं कार्यमिति बोद्धृतया नियोज्यत्वेन संबध्यते स्वर्गकामः पुरुषः। स पश्चात्तत्सिद्धये तत्साधने कर्मणि मयाऽनुष्ठेयमिदं कर्मेत्यधिकारितया संबध्यते। कर्मणि मादर्थ्यज्ञानमधिकार इत्युच्यते। कर्मणि पुरुषस्यैश्वर्यमित्यर्थः। तदनुतिष्ठन् कर्तृतया संबध्यते। अत एकस्यैव पुरुषस्य तिस्रोऽवस्थाः क्रमेण भवन्ति। तत्रेयान् विशेषः। नियोज्यत्वं नियोगे। अधिकारित्वं कर्तृत्वञ्च कर्मणीति ध्येयम्।

[२] वचनक्रियेति क. पुस्तके मुद्रित पुस्तके च पाठः।

सत्स्वेव नियमेष्वाचार्य इति स्मृत्या गम्यते। अतोऽलौकिकत्वादाचार्यत्वं विध्यर्हम्। [१]अक्षरार्थस्तु-अलौकिकमाचार्यत्वमहावनीयादिवदिति व्युत्पाद्य पश्चात्तन्निष्पत्त्युपायतया तमध्यापयीतेत्यध्यापनविधानं युक्तमित्यर्थः। अत्राहवनीयादिदृष्टान्तेनाध्यापनक्रियाकर्तृत्वमाचार्यत्वमिति पाचकत्वादिवत् क्रियानिमित्तत्वपक्षो निराक्रियते, न पुनर्लिङर्थतापि। अत एवालौकिकञ्चाहवनीयवदित्युक्तम्। तेन क्रियाफलमेव नियोगरूपं लिङाद्यभिधेयमाचार्यत्वमित्यर्थः।

अथवाऽऽचार्याय वरो देय[२] इत्यादिप्रयोगदर्शनादलौकिकार्थतयाऽऽ-चार्यत्वस्य कारकातिवृत्तावपि व्यतीतेऽध्यापनकारकत्वे तद्गतदृष्टान्तभावेन च भूतपूर्वगतेरयुक्तत्वे चाचार्यपदप्रयोगात् तद्गतमदृष्टं गम्यते। उपाध्यायशब्दस्तु नियमानपेक्षोऽध्यापनमात्रे स्मृत इति पाचकादितुल्यः। तस्य यद्यत्र कारकातिवृत्तावप्याचार्यशब्दस्येवोपाध्यायशब्दस्य वैदिकप्रयोगोऽस्ति तदाऽलौकिकार्थता यूपादिवत् स्यात्। न चेह तदस्तीति पाचकादितुल्यतैव। लोकेऽपि कारकातिवृ[३]त्तावप्युपाध्यायपदप्रयोगोऽभिप्रायवशात् भूतपूर्वगत्यापि युक्तः।

ननु सोमयाजिशब्दः कर्तृवाचित्वेऽप्युत्तरकालं सोमयाज्येव सन्नयेदिति दृश्यत इति चेत्। न [३]तद्वदाचार्याय वरो देय इति वाक्येऽपि स्यात्। अथ तत्र लक्षणेति चेद्, इहापि तर्हि लक्षणैव। अदृष्टवाचित्वकल्पनातो लक्षणैव गरीयसी। लौकिकी हि लक्षणा हठोऽप्रसिद्धकल्पनेति न्यायविदः। (१-४-१ शा.भा.) मैवम्। सोमयाजिशब्दे कर्तृवचनत्वेन प्रत्ययस्यान्यत्र व्युत्पन्नत्वात्। सोमेनेष्टवान् सोमयाजी नानिष्टवान्। इह त्वाचार्यशब्दस्य नाध्यापनक्रियाकर्तृत्वपक्षपात इति न[४] लक्षणा। किञ्च सोमयाज्येव सन्नयेदित्यत्र कृतसोमस्याधिकारः प्रतिपाद्यते। इह त्वाचार्यशब्दः सम्प्रदानतयोपदिश्यते। तत्र नाध्यापनक्रियायोगमात्रमाचार्यत्वम्। तस्यातीतत्वात्। न चातीतक्रियोपलक्षितं स्वरूपमात्रम्। तथा सत्यध्यापनात् प्रागवस्थातो निरतिशयस्य दानादौ सम्प्रदानतयोपदेशासंभवाद्विध्यानर्थक्यं स्यादिति तत्परिहारार्थं विशिष्टाध्यापनात् कोऽप्यतिशयोऽस्ति तद्विशिष्टश्चाचार्य इति बलाददृष्टवाचित्वमेव युक्तम्।

न पुनर्विधौ लक्षणाश्रयणम्। भूतस्य सोमयागकर्तृत्वस्य निमित्तत्वमाश्रित्य कृतसोमस्याधिकारः प्रतिपाद्यते न कर्तृतया विधीयते इति लक्षणायामपि नातीव दोषः।

---

[१] अत्र नियोगरूपं लिङाद्यभिधेयमाचार्यत्वं न पाचकादिवत् क्रियाकर्तृत्वमित्यर्थ इति क. पुस्तके मुद्रितपुस्तके च दृश्यते।

[२] कारकादिवृत्तावपि 'आचार्याय वरो देय' इत्यादिदर्शनाच्चालोकिकत्वमित्येव पाठः क. पुस्तके मुद्रितपुस्तके च दृश्यते।

[३] तद्वदित्यादि मैवमित्यन्तो ग्रन्थः क. पुस्तके मुद्रितपुस्तके च नोपलभ्यते।

[४] न लक्षणेत्यादि तेनेत्यन्तः पाठः क. पुस्तके मुद्रित पुस्तके च न दृश्यते।

युक्तमेव। तत्रार्थादाचार्यीबुभूषत एवाधिकारो धनार्जननियमवत्। तत्र शिष्यं प्रति विहिततद्धिताचरणदक्षिणादानदर्शनात्तल्लिप्सोरेवाचार्यभवनेच्छा। यथा दीक्षणीयया दीक्षितत्वसिद्धिः, तथा वेदाध्यापनेनाचार्यत्वसिद्धिः।

नन्वध्यापनसमयेऽप्याचार्यशब्दस्य प्रयोगः स्मृतौ दृष्टः। सत्यम्। भविष्यल्लक्षणया स प्रयोगः। कथं पुनरेतदवगम्यते ! उपनयनसमयेऽप्याचार्यशब्दप्रयोगो दृष्टः। तस्य भविष्यल्लक्षणैव सर्वथा गतिरिति। दृष्टा भविष्यल्लक्षणा। न पुनरग्निहोत्रहवणीन्यायात्[1] भूतलक्षणासंभवः। यूपाहवनीयादिशब्दानामप्यदृष्टवाचकत्वमेव न्याय्यम्, अन्यथा तत्तत्क्रियाकर्तृत्वमेव यूपाहवनीयादिशब्दार्थः किमिति न भवति। ननु धनार्थी धनमाशंसन्नाध्यापने पुरुषः प्रवर्तत इति विध्यनर्हफलं तत्। मैवम्। अलौकिकादृष्टसाधने तत्प्रयुक्तलाभविशेषार्थो प्रवृत्तिर्विधिमन्तरेण न सिद्ध्यति। तेन योऽध्यापयेत् स आचार्य इत्यध्यापनजन्यादृष्टवानेवाचार्यशब्देनोच्यते। तदुक्तम्—

अदृष्टार्थस्याङ्गसम्बन्धात् स्थायिना कार्यसङ्गमात्।
विधितः साङ्गताबोधादाचार्यत्वमलौकिकम्॥ इति।

ननु वेदमध्यापयेद् इति परस्मैपदान्नाचार्यपरता। कर्त्रभिप्राये फले णिजन्ते णिचश्च इत्यात्मनेपदप्राप्तेः। मैवम्। कर्त्रभिप्रायेऽपि ण्यक्ष्यन्तादिङो बुधयुधेत्यादिना विशेषतः परस्मैपदप्राप्तेः। अतः परस्मैपदेऽप्याचार्यफलता न विरुद्धा। तेन यथा ब्राह्मणः प्रतिग्रहादिना धनमर्जयेदित्यत्र रागाद् द्रव्यार्जने प्रवृत्तस्य ब्राह्मणस्य प्रतिग्रहादिनेति नियमः क्रियते, तद्वदनेन वचनेन ज्ञाताचार्यत्वस्य तद्धिताचरणदक्षिणादानादिफलसाधनत्वादाचार्यत्वोपाये चाध्यापने वचनेन प्रतिपादिते तदर्थिनोऽर्थतस्तत्राधिकारलाभादनुष्ठानं सिद्धमिति नानुष्ठानार्थमधिकारिकल्पना, तथा च नाचार्यीबुभूषोर्नियोज्यत्वकल्पनेत्याह—तत्रार्थादिति। [2]दीक्षणीयादृष्टान्तेन यथा विशिष्टपुरुषसमाख्यानिमित्तदीक्षितत्वं दीक्षणीयया साध्यते तथाचार्यसमाख्यानिमित्तमाचार्यत्वमप्यनेकनियमापेक्षाध्यापनेन साध्यत इत्याह—यथेति।

केचित्तु दीक्षणीयादृष्टान्तेनाचार्यत्वमपि नैयोगिकमिति दर्शयतीति वर्णयन्ति।

---

[1] अस्यायमर्थः—आधानप्रकरणे अग्निहोत्रहवण्या हवींषि निर्वपतीति श्रूयते। येन पात्रेणाग्निहोत्रं हूयते, तदेव पात्रमग्निहोत्रहवणीत्युच्यते। हूयतेऽनयेति तद्व्युत्पत्तेः। अत्राधानेनाग्नीनां सिद्धौ तदूर्ध्वमग्निहोत्रं होष्यते, आधानसमयेऽग्निहोत्रस्यानिष्पन्नत्वेनातीतलक्षणासम्भवेऽपि भाविलक्षणामङ्गीकृत्याग्निहोत्रहवणीति प्रयुज्यते, तथा प्रकृतेऽपि अतीतलक्षणाऽसम्भवेऽपि भाविलक्षणया प्रयोग इति। अयं न्यायः 'गुणलोपे च मुख्यस्ये'त्यधिकरणे निरूपितः। [१०-२-२७ मी. द.]

[2] 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इत्यनेन वाक्येन विहितेनेष्टिः दीक्षणीयेष्टिरुच्यते। अस्या इष्टेरन्ते यजमानस्य दीक्षितत्वं सिद्धचति। अत एव 'दीक्षितमावेदयती'त्यनेन वचनेनादीक्षिष्टायं ब्राह्मण इत्यादिना विहितम्। तद्दृष्टान्तेनेत्यर्थः।

उपनयनं च क्त्वाप्रत्ययेनाध्यापनसमानकर्तृकमवगम्यमानमेकप्रयोगतया विना समानकर्तृकत्वासम्भवादङ्गाङ्गिभावेन च विना एकप्रयोगत्वानुपपत्तेराचार्यकभावनाकरणीभूतमध्यापनं प्रत्यङ्गत्वेनावतिष्ठते। तदाश्रित'श्चाष्टवर्षं ब्राह्मणमुपनयीते'त्यादिनियमः। उपनयनं च स्वभावत उपनेयासक्तिप्रयोजनकमिति तद्द्वारेणैव तस्याङ्गम्। न चाध्यापनं प्रत्यनुपयोगिन उपनेयस्यासक्तिरध्यापनोपयोगिनीत्युपनेयस्य कर्मापेक्षायामुपनयनं प्रक्रम्य 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनं विधीयमानमुपनेयस्य कर्मेत्यवगम्यते। अध्ययनं चाध्या-

तदयुक्तम्। अत्रादृष्टद्वयसद्भावे प्रमाणाभावात् विषयफलाचार्यत्वस्य नैयोगिकत्वायोगाच्च। नैयोगिकत्वे तदाद्येपलभ्यमिति पुरुषविशेषणतया स्वर्गादिवदेवाभिधानं स्यात्। तथाचार्यीबुभुषुरध्यापनेनापूर्वं भावयेदित्यनुमेया श्रुतिर्दर्शयितव्या, न तथा दर्शितम्। दीक्षणीयायामुदीच्याङ्गबलान्नैयोगिकत्वं युक्तमेवेत्यर्थः।

ननु शिष्यमुपनीयाध्यापयेदिति द्वितीयाश्रुत्या माणवकार्थमुपनयनं निर्ज्ञातपरार्थत्वात् कालार्थ एव क्त्वाप्रत्ययस्त्रिवृता यूपं परिवीयेतिवदित्यत्राह—**उपनयनञ्चेति**। अध्यापनाङ्गभूतस्योपनयनस्य दृष्टरूपत्वेन व्रीहीनवहन्तीतिवद्द्वारविशेषणतयापि माणवकसम्बन्धोपपत्तेर्न [१]माणवकार्थतयोपनयनस्य कृतार्थता, 'यूपं परिवीये'त्यत्र यूपस्यादृष्टरूपत्वान्न द्वारशेषितेति द्वितीयातो यूपाङ्गतैवेति। किञ्च परिव्याणोपाकरणयोर्ज्योतिष्टोमाधिकारसंबन्धादित्येकप्रयोगोपपत्तेर्युक्तं कालार्थत्वमित्यर्थः। किञ्चो पनयनाङ्गकाध्यापनविधौ [२]स्मृत्युनुमेये सति यावत्यंशे प्रत्यक्षवेदवाक्यमूलत्वं दृष्टं तस्य तावति मूलता युक्तेति "अष्टवर्षं ब्राह्मणमुपनयीते"त्यंस्योपनयनांशे मूलत्वादुपनयनाश्रितोऽष्टवर्षादिनियम इत्याह—**तदाश्रितश्चेति**। एवमुपनयनस्य साधिकाराध्यापनाङ्गत्वे स्थित उपनयनस्य प्रयोजनमुपनेयवशीकरणम्, तथासति स्वभावतः सामर्थ्यादवगम्यत इति तद्द्वारेणैवोपनयनस्याध्यापनाङ्गत्वमित्याह—**उपनयनञ्चेति**। [३]नन्वध्यापनस्याध्ययनमेवोपयोगि नोपनेयो माणवक इत्युपनेयासत्त्या किं कार्यमित्यत्राह—**न चाध्यापनमिति**। उपनयनेन वशीकृतस्यान्यस्योपनेयस्य कर्मापेक्षायां स्मृतिषूपनयनं प्रक्रम्याध्ययनविधानादुपनीतकर्तृकत्वे स्थिते तन्मुखेन विहिताध्ययनस्य सन्निहितत्वाद् णिचश्च अप्रवृत्तप्रेरकत्वात् प्रयोज्यव्यापारापेक्षित्वाच्च विहिताध्ययनमेव तस्य कर्मेति निश्चीयते। अतो विहिताध्ययनं कारयितुं माणवक आचार्येणोपनीयत इति स्वतोऽध्यापनस्वरूपनिर्वृत्तावनपेक्षितमपि स्वापेक्षिताध्यापनोपयोगितया प्रयोज्यमेवेत्यर्थः। ननु[२] तद्धु'पनीयाध्या-

---

[१] न माणवकार्थतोपनयनस्येति क. पुस्तके मुद्रित पुस्तके च पाठ उपलभ्यते।

[२] श्रुतिवाक्यादिति ग. पुस्तके पाठो दृश्यते।

[३] नन्वित्यादिः नचाध्यापनमित्यन्तः पाठः क. पुस्तके मुद्रित पुस्तके च नास्ति।

पनोपयोगीति सिद्धमेतत् । [1]तेन स्वाध्यायमध्येष्यमाणस्य माणवकस्योपनयनम[2]ध्यापनाङ्गमित्यध्यापनविधिः स्वाङ्गभूतमुपनयनं प्रयुञ्जानस्तस्यान्यत्रानुपपत्त्याऽध्ययनमपि प्रयुङ्क्ते । तत्प्रयुक्ताध्ययननिष्पत्त्या च लब्धसिद्धिस्स्वाध्यायाध्ययननियोगो नाधिकारान्तरमपेक्षते । अतो नायं विश्वजिन्न्यायस्य विषयः, नापि रात्रिसत्रन्यायस्य, अनन्यप्रयुक्तविषयनियोगगोचरत्वात्तयोः । अत एव प्रयाजादिनियोगेषु तयोरनवतारः । अन्यथा सिद्धान्तेपि कामश्रुतिप्रयुक्तमध्ययनमिति विद्यासाध्येष्वपि कर्मसु शूद्रादीनामधिकारः स्यात् । अतोऽध्यापनविधिप्रयुक्तत्वादध्ययनस्य येषामेवोपनयनं तेषामेव तत्प्रयुक्तमन्त्रलाभाच्छूद्रादीनामनधिकारः । एवञ्च विध्यन्तरप्रयुक्तेऽध्ययने न रात्रिसत्र-

पयेदि'त्यध्येष्यमाणस्य माणवकस्योपनयनमेवाध्यापनाङ्गं, नाध्ययनमित्युपनयनस्यैवाध्यापनं प्रयोजकं नाध्ययनस्येत्यध्ययनविषयो नियोगोऽनुष्ठानार्थमधिकारान्तरमपेक्षत इत्यत्राह—तेनेति । [2]अध्यापनानङ्गत्वेऽप्यध्ययनस्य स्वाङ्गभूतोपनयनस्याध्ययनं विनाध्यापनाङ्गत्वानुपपत्तेरुपनयनं प्रयुञ्जानोऽङ्गत्वसिद्ध्यर्थम् अध्ययनं प्रयुङ्क्ते अतोऽङ्गभूतस्योपनयनस्य प्रयोक्तव्यत्वादध्ययनस्य प्रयोज्यत्वावगमोऽत्र, न पुनः शेषभूतोपनयनप्रवृत्तिपुरस्सरा द्वारभूताध्ययनप्रयुक्तिः । सा चोपकारकार्थावबोधद्वारककर्मविधिभ्यः शीघ्रतरा । किञ्च उत्तरविधीनामप्यध्ययनात् प्रागवगम्यमानानां नाध्ययनप्रयोजकत्वमिति न क्रतुविधिप्रयुक्तिगन्धः । उपसंहरति—अतो नायमिति । अयमध्ययननियोग इत्यर्थः । कुत इत्याह अनन्यप्रयुक्तेति । तयोर्विश्वजिन्न्यायरात्रिसत्रन्याययोरित्यर्थः । यस्मात्तयोरनन्यप्रयुक्तविषयनियोगगोचरत्वं तस्मादेव प्रयाजादिनियोगेषु तयोर्न्याययोरनवतार[3] इत्याह—अत एवेति । अन्यथा राद्धान्ते क्रत्वनुप्रवेशकल्पनया राद्धान्तवर्णने कामश्रुतिप्रयुक्तमध्ययनमित्यनुपनीतस्यापि शूद्रस्य विद्यासाध्ये कर्मण्यधिकारः स्यादित्याह—अन्यथा सिद्धान्तेऽपीति । अस्मिन् मते त्वाचार्यकरणविधिप्रयुक्त्या लब्धविद्यत्रैवर्णिकलाभात् क्रतुप्रयुक्त्युपरमान्निर्विद्यः शूद्रो नाधिक्रियत इति शूद्राधिकारप्रसक्तिरेव नास्तीत्युपसंहरति—अत इति । एवमुक्तप्रकारेण विध्यन्तरप्रयुक्ते अध्यापनविधिप्रयुक्तेऽध्ययने सति न रात्रिसत्रन्यायेन पूर्वपक्षाशङ्कोचितेत्याह—एवमिति । ननु तर्हि नाध्यापनविधिप्रयुक्तमिति पूर्वपक्षं कृत्वाध्यापनविधिप्रयुक्तमिति सिद्धान्तः क्रियत इत्यत्राह न चेति । अत्र हेतुमाह—अतत्प्रयुक्तत्व इति ।

---

[1] ननु उपनयनस्यैव स्वाङ्गतयाऽध्यापनं प्रयोजकं नाध्ययनस्य, ततस्तदधिकारान्तरमपेक्षते इत्यत्राह-तेन स्वाध्यायमिति ।

[2] अत्र अध्यापनेत्यादिनायमित्यन्तः पाठः क. पुस्तके मुद्रितपुस्तके च न दृश्यते ।

[3] मुद्रितपुस्तके अनवसर इति पाठो दृश्यते । व्याख्यायामनवतार इति दर्शनात् स एव मूले निवेशितः ।

न्यायेन पूर्वपक्षाशङ्कोचिता । न चातत्प्रयुक्त्या पूर्वः पक्षः, तत्प्रयुक्त्या च राद्धान्त इति युक्तम् । अतत्प्रयुक्तत्वे कारणाभावात् ।

यच्चोक्तं नियमार्थो विधिरिति । तदयुक्तम् । स्वाध्यायाध्ययनस्य नियोगनिष्पत्त्यर्थतया विधानेन वचनस्यार्थवत्त्वात् । स्वाध्यायोऽध्येतव्य इति तव्यप्रत्ययेन विधिरभिधीयते । न चावहन्त्यादिष्विव क्रतुविषयनियोगानुवादोऽयमवकल्पते, असंनिधानात् क्रतुनियोगानाम् । सन्निधानवशेनैव हि क्रतुनियोगप्रत्यभिज्ञानात्तत्र क्रतुनियोगानुवादोपगमः । न चेह सन्निधानमस्ति । नापि 'पर्णमयी जुहूर्भवतीति'वत् पदार्थसम्बन्धमुखेन क्रतुनियोगप्रत्यभिज्ञानम्, स्वाध्यायस्य व्यभिचरितक्रतुसम्बन्धत्वात्, हुमित्येवमादीनामनर्थकानां स्वाध्यायान्तर्गतिदर्शनात् । यत एवात्र नियोगः साध्यतयाऽवगम्यते,

यच्चोक्तमित्यनुभाष्य परिहरति--तदयुक्तमिति । ननु विधिप्रत्ययाभावाद्वचनत्वमसिद्धमित्यत्राह—स्वाध्याय इति । "[1]कुर्यात्, क्रियेत, कर्तव्यम्, भवेत्, स्यादिति पञ्चममि"[2]त्युक्तत्वात्तव्यप्रत्ययो विधिरेवेति । नन्ववहन्त्यादिवत् क्रतुविषयनियोगानुवादोऽस्त्वित्यत्राह—न चेति । तत्र कारणमाह—असन्निधानादिति । दर्शपूर्णमासनियोगसन्निधानादवहन्त्यादिष्वनुवादकत्वं युक्तम् । इह नियोगान्तरसन्निधानाभावाद् नानुवादकत्वमित्यर्थः । ननु [3]'पर्णमयी जुहूर्भवती'त्यनारभ्य श्रुतं पर्णतादिकं नियोगान्तरसन्निधानाभावेऽपि यथा क्रत्वनुप्रवेशि, एवमध्ययनस्यापि क्रत्वनुप्रवेशोऽस्त्वित्यत्राह—नापीति । तत्र कारणमाह—स्वाध्यायस्येति । पर्णतादिषु क्रत्वेकान्तपदार्थमुखेन क्रत्वनुप्रवेशो युक्तः, इह स्वाध्यायस्य तथाविधक्रत्वेकान्तपदार्थाभावाद् न क्रत्वनुप्रवेश इत्यर्थः । ननु स्वाध्यायस्यापि कर्मबोधकतया कर्माव्यभिचारात् कर्मार्थत्वमित्यत्राह—हुमित्येवमादीनामिति । [4]हुमित्येवमादीनामनर्थकत्वेन कर्मबोध-

---

[1] कुर्यादित्येवमादिः स्वाध्यायस्येत्यन्तः पाठो क. पुस्तके मुद्रितपुस्तके च न दृश्यते ।

[2] 'कुर्यात् क्रियेत, कर्तव्यं भवेत् स्यादिति पञ्चमम् । एतत् स्यात्सर्ववेदेषु नियतं विधिलक्षणम्' इति समग्रं पद्यं प्रयुक्तिलक्षणे तृतीयचरणे पदवाक्यार्थविदः श्लोकमामनन्तीत्यादिना शबरमुनिनाऽवतारितम् । शाङ्करभाष्ये [३-४-२] च समुपलभ्यते ।

[3] 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति तै० सं० काण्ड ३, प्र० ५, अनु० ७ । अस्यायमर्थः—यस्य यजमानस्य पर्णमयी पलाशवृक्षनिर्मिता जुहूर्भवति, सः यजमानः पापं श्लोकं न शृणोति इति । पलाशवृक्षस्य पर्णशब्दवाच्यत्वं 'तृतीयस्यामितो दिवि सोम आसीत्' 'देवा वै ब्रह्मन्नवदन्त' इति वाक्याभ्यामवगन्तव्यम् । तत्र जुह्वाः अव्यभिचरितक्रतुसम्बधात् क्रत्वर्थत्वमिति ।

[4] हुमित्येवमादिः साध्यद्वयविरोधादित्यन्तः पाठः क पुस्तके मुद्रितपुस्तके च न दृश्यते ।

अत एव स्वाध्यायस्य नेप्सितकर्मतया सम्बन्धोऽवकल्पते, एकस्मिन् वाक्ये साध्यद्वयविरोधात्। न च स्वर्गादिवत् स्वाध्यायस्य नियोज्यविशेषणतयाऽन्वयादविरोधः, अनियोगफलत्वात्स्वाध्यायग्रहणस्य। यदेव हि नैयोगिकं फलम्, तदेव साध्यतया नियोज्यविशेषणं नान्यदिति तृतीये दर्शितम्—[१]"अनभिज्ञो भवान्विषयनियोज्यानाम्" इत्यत्र। अतोऽध्ययनविषयनियोगप्रतिपादनेनैव तस्यार्थवत्त्वान्न क्रतुप्रवेशकल्पनया नियमार्थता विधेः।

## जरत्प्रभाकरमतं तत्खण्डनं च।

अन्ये पुनरेवं पूर्वपक्षयन्ति—अध्यापनविधिप्रयुक्तमध्ययनमध्यापनाङ्गभूतम् तन्निष्पत्त्यर्थतया च स्वाध्यायस्यान्यपरत्वादविवक्षितार्थता—इति। तदयुक्तम्। प्रयुक्तिमात्रेण तादर्थ्यानुपपत्तेः। स्यान्मतम्—यथा [२]'प्रजापतिव्रतेषु स्वतन्त्र-

क्रत्वव्यभिचारात् क्रत्वर्थता न युक्तेत्यर्थः। किञ्च यतः 'स्वाध्यायोऽध्येतव्यः' इत्यत्र नियोगः साध्यतयाऽवगम्यते, अत एव स्वाध्यायस्यानीप्सितकर्मतया सम्बन्धः। ईप्सितकर्मत्वाभ्युपगम एकस्मिन् वाक्ये नियोगस्य स्वाध्यायस्य च साध्यत्वेन साध्यद्वयविरोधादित्याह—**यत इति**। ननु तर्हि साध्यद्वयहानार्थं[३] स्वाध्यायस्य नियोज्यविशेषणतया सम्बन्धोऽस्त्वित्यत्राह—**न च स्वर्गादिवदिति**। कुत इत्याह—**अनियोगेति**। ततः किमित्याह—**यदेवेति**। उपसंहरति—**अत इति**।

इदानीं जरत्प्राभाकरमतं निराकर्तुमुपन्यस्यति—**अन्ये पुनरिति**। अध्यापनविधिप्रयोज्यतया विधेयत्वादध्यापनविध्यङ्गमध्ययनमिति। ततः किमित्याह—**तन्निष्पत्त्यर्थतया चेति**। परिहरति—**तदयुक्तमिति**। प्रयुक्तत्वादेवाङ्गत्वमयुक्तमित्यर्थः। विधिगृहीतस्य विनियोगादेवाङ्गत्वं प्रयुक्तिमात्रेण तादर्थ्यमनुपपन्नमित्यर्थः। शङ्कते—**स्यान्मतमिति**। यथा '[४]नोद्यन्तमादित्यमीक्षेत' इत्यत्राख्यातार्थस्य साध्यत्वात् कारकत्वा-

---

[१] अथातः शेषलक्षणम् इति सूत्रभाष्यटीकायां बृहत्याम् अयं संदर्भो दृश्यते—'नियोगशून्यानि श्रुत्यादीनि शेषतया विनियोक्तुम् शक्नुवन्तीति न युक्तम्। तस्माच्छेषत्वं नियोगापन्हवश्चेति विप्रतिषिद्धम्। अतः शेषत्वं विना नास्त्येव अपूर्वम्। विषयता वा नापह्नोतुम् शक्यते। उच्यते। अनभिज्ञो भवान् विषयनियोज्यानाम्। न ब्रूमः गुणभूतेषु पुंसां नियोज्यता नास्ति इति। किं तर्हि? विषयस्तु न भवतीति, कार्यान्तरदर्शनात्। यस्य पुनः नियोगसिद्धिरेव कार्यम् स विषयः तेषामर्थेन संबन्ध इत्यत्र प्रकटतरमेव वक्ष्यामः इति'।

[२] 'नेक्षेतोद्यन्तमादित्यं नास्तंयन्तं कदाचन। नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्'॥ मनु. ४/३७। इत्यादिना विहितेषु प्रजापतिव्रतेष्वित्यर्थः।

[३] विरोधादिति ग. पुस्तके पाठः।

[४] अर्थतोऽनुवादोऽयम्।

कर्त्रवगमात्तद्धेतुभूताधिकारसिद्ध्यर्थं नियोज्यपरिकल्पनं, तथा प्रयुक्तिदर्शनात्तादर्थ्यम्—इति। तन्न। प्रयुक्तेस्तादर्थ्यव्यभिचारात्। असत्यपि तादर्थ्ये केवलोपकारकतामात्रेणाध्ययनस्य क्रतुविधिभिः प्रयुज्यमानत्वात्। कथं तर्हि [1]पश्वेकत्वादेरङ्गत्वम्। न तावद्विभक्तिरेव क्रतुसम्बन्धितयैकत्वादिकमभिधत्ते येनारुण्यादिवद्वाक्येन विनियोगः स्यात्। विभक्तयो हि प्रातिपदिकार्थगतमेव स्वार्थं श्रुत्याभिदधति। नापि करणभूतस्यैकत्वमुच्यते, संख्यान्वितस्य वा करणत्वम्, करणत्वैकत्वयोर्युगपदभिधानात्। अतो न वैनियोगिकं शेषत्वं विभक्त्यभिहितायाः संख्यायाः। इष्यते च शेषत्वम्, तच्च प्रयुक्तिकृतमेव।

मैवम्। न तत्रापि शेषत्वमौपादानिकं किन्तु लैङ्गिकमेव। वस्तुसामर्थ्यमेव लिङ्गमुच्यते। संख्या च स्वभावत एव संख्येयावच्छेदिकेति संख्येयार्थैव,

त्क्षेपे प्रवृत्ते स्वतन्त्रे कर्तर्याक्षिप्ते स्वातन्त्र्यस्याधिकारायत्तत्वादधिकारे कल्पितेऽधिकारसिद्ध्यर्थं नियोज्यपरिकल्पनं, तथाऽध्ययनस्यापि प्रयुक्तिदर्शनात् प्रयुक्तिसिद्ध्यर्थमध्यापनाङ्गत्वं कल्प्यत इत्यर्थः। परिहरति—तन्नेति। अनङ्गानामपि प्रयुक्तिदर्शनात् न प्रयुक्तेरङ्गत्वमिति। नन्वनङ्गानां प्रयुक्तिः कुत्रेत्याह—असत्यपीति। आहवनीयाद्यग्न्यङ्गभूतस्याधानस्य क्रत्वनङ्गत्वेऽपि क्रतुविधिभिः प्रयुज्यमानत्वदर्शनादिति पृच्छति—कथं तर्हीति। यदि विनियोगादेव सर्वत्राङ्गत्वमुच्यते तर्हि 'पशुना यजेत' इत्यत्रैकत्वस्य विनियोगाभावेऽप्यङ्गत्वं कथमुपपद्यत इत्यर्थः। ननु तत्र विभक्त्या क्रतुसंबन्धितयैवैकत्वमुच्यत इति चेत्तत्राह—न तावदिति। 'अरुणया क्रीणाति' इत्यत्रारुण्यस्य यथा वाक्येन विनियोगः, न तथैकत्वस्य विभक्त्या विनियोग इत्यर्थः। ननु कुत्र विभक्त्योच्यत इत्यत्राह—विभक्तयो हीति। तत्र कारणमाह—करणत्वैकत्वयोरिति। उपसंहरति—अत इति। ननु यद्यत्र विनियोगो नास्ति तर्हि शेषत्वमपि नेष्यत इत्यत्राह—इष्यते चेति।

परिहरति—मैवमिति। एकत्वस्य शेषत्वं लैङ्गिकम्, [2]नौपादानिकमित्यर्थः। नन्वभिधानसामर्थ्यं लिङ्गमित्युच्यते, अतः कथं लैङ्गिकमित्यत्राह—वस्तुसामर्थ्यमिति। लैङ्गिकत्वमेवोपपादयति—संख्या चेति। संख्यायाः संख्येयमात्रसंबन्धे ग्राहकान्वया-

---

[1] पशुना यजेत इत्यादौ एकवचनोपात्तस्यैकत्वस्याङ्गत्वम् इति।

[2] प्राभाकरैः श्रुत्यादिप्रमाणगम्यः विनियोगस्तृतीये निरूपितः। चतुर्थे उपादानाख्यं प्रमाणं निरूप्यते। तस्य चेदं लक्षणं "यत्तु स्वसिद्ध्यर्थमुपादीयते तदपि विधेयमिति तन्त्रे व्यवहारः इति चोदनासूत्रगतेन बृहतीवाक्येनोक्तम्। इदमेवाक्षेपापरपर्यायम्। तेन चोपादानलक्षणेन प्रमाणेन शेषत्वं प्रयुक्तिः अधिकारः उत्पत्तिरिति चतुर्विधं प्रमेयमवगम्यते। ग्रन्थकारेणाऽपि अङ्गपारायणे उपादानप्रमाणं निरूपयिष्यते। शास्त्रदीपिकाव्याख्याने सोमनाथीये प्रथमाधिकरणे समुल्लिखितमस्ति।

किन्तु संख्येयभूतप्रातिपदिकार्थमात्रसम्बन्धे ग्राहकान्वयव्याघातापत्तेर्ग्राहकीय-भूतपश्वादिसम्बन्ध औपादानिकः। सन्निधिसमाम्नातमात्रेण हि विभक्त्यर्थस्यापि ग्राहकं ग्रत्यैदमर्थ्येनान्वितस्यैवाभिधानम्, तदन्यथानुपपत्त्या च केवलाभिधान-निबन्धनं स्वरूपसम्बन्धमतिलङ्घ्य साधनीभूतसंख्येयसम्बन्धाध्यवसानमिति नौपादानिकं तत्रापि शेषत्वम्। भवतु तर्हि लिङ्गादेवाध्ययनस्यापि अध्यापने विनियोगः। नैवं भवितुमर्हति, सामान्यसम्बन्धबोधकप्रमाणसापेक्षत्वाल्लिङ्ग-विनियोगस्य। न चास्य सामान्यसम्बन्धबोधकं किञ्चिदस्ति प्रमाणम्। ननु च णिच्छ्रुतिः प्रकृत्यर्थभूतस्याध्ययनस्य शेषतामापादयतीति। तन्न। प्रयोजक-व्यापारस्य प्रयोज्यव्यापारोत्पत्तिहेतुत्वाद्विपरीतशेषत्वापत्तेः। वाक्यप्रक-रणस्थानसमाख्यानानि त्वध्ययनस्याध्यापनं प्रति विनियोजकतया नाशङ्क-नीयान्येव। [1]किञ्च टीकाग्रन्थविरोधश्चाङ्गत्ववादिनाम्। यत एवमाह भगवान्[2]—"प्रयोज्यत्वादनङ्गत्वाच्च[3] भवति संशयः" इति॥

भावात् ग्राहकान्वयसिद्ध्यर्थं ग्राहकीयपश्वादिसंबन्ध उपादानेन कल्प्यत इत्याह—किन्त्विति। एतदुपपादयति—सन्निधीति। चोदयति—भवत्विति। लिङ्गात् सामर्थ्यादित्यर्थः। परिहरति—नैवमिति। कुत इत्याह—सामान्येति। सन्निधि-समाम्नानमात्रेण सामान्येन ग्राहकसंबन्धे सति पश्चात् पश्वेकत्वादीनां लिङ्गेन विनियोगः। अन्यथा लिङ्गमात्रादङ्गत्वपक्षे लिङ्गादेवाध्यापनाङ्गमध्ययनं किमिति न भवतीत्यर्थः। ननु तर्ह्यत्रापि सामान्यसंबन्धे सति पश्चाल्लिङ्गेन विनियोगो भविष्यतीत्याह—न चेति। अत्र सामान्यसंबन्धापादकं सन्निधिसमाम्नानं नास्तीत्यर्थः। पुनश्चोदयति—ननु चेति। सान्निध्याभावेऽप्यध्यापयीतेत्यत्र णिच्छ्रुतिः स्वप्रकृत्यर्थभूतस्याध्ययनस्याध्यापनं प्रति शेषतामापादयतीति। परिहरति—नेति। प्रयोजकव्यापारः आचार्यव्यापारभूतमध्यापनम्, प्रयोज्यव्यापारश्च माणवकव्यापारभूतमध्ययनम्, प्रयोज्यव्यापारभूताध्ययनं प्रत्युत्पत्ति-हेतुत्वाद्विपरीतशेषत्वापत्तेरिति। किञ्चाध्यापनाध्ययनयोः साधारणत्वाण्णिच्छ्रुतिरप्य-नैकान्तिकीति। ननु यदि श्रुतिलिङ्गाभ्यामध्ययनस्याध्यापनं प्रति विनियोगो न संभवति,

---

[1] 'किञ्चेति, मुद्रिते नास्ति। टीकानुरोधात् मूले निवेशितः'।

[2] भाष्यव्याख्याता प्रभाकरमिश्र इति शेषः।

[3] 'प्रयोज्यत्वादनङ्गत्वाच्च स्वाध्यायाध्ययनस्य भवति संशयः' इति बृहतीवाक्यसन्दर्भः। अयञ्चांशस्समुद्धृतश्शालिकनाथेन स्वोक्तार्थदार्ढ्याय। अस्यायमाशयः। बृहत्यां 'कथं पुनरङ्गता नास्ति प्रयोज्यत्वञ्चेत्यादिना—तस्मादन्यदेव प्रयोज्यत्वम्, अन्या चाङ्गता' इत्यन्तेन ग्रन्थेनाध्ययनस्याध्यापनप्रयोज्यत्वात् अङ्गताबोधकानां श्रुत्यादीनामन्यतमस्याभावेनानङ्गत्वात्। अतः संशयो भवति यत् आचार्यकरणविधिप्रयोज्यत्वादध्ययनाध्यापनयोरेककार्यत्वं आचार्यत्व-सिद्धिरथवाभिन्नकार्यत्वमर्थज्ञानसिद्धिरिति संशय इति भावः।

तस्मादनङ्गतयैव पूर्वपक्षणीयम् ।

कथं पुनरनङ्गतया पूर्वपक्षयितुं शक्यते । उच्यते । सर्वो हि विधिर-

तर्हि वाक्यादिभिर्विनियोगोऽस्त्वित्यत्राह—वाक्येति । तेषां अभावादिति भावः । किञ्चाङ्गत्ववादिनां टीकाग्रन्थविरोध इत्याह—किञ्चेति । अतो वैषम्यादध्ययनविषयो नियोगः प्रतीयत इति भावः । ननु स्वाध्यायं प्रत्यध्ययनस्योद्देश्यत्वादपूर्वं प्रत्युपादेयत्वाद्वि-रुद्धत्रिकद्वयापत्तिः स्यात् । मैवम् । 'आज्यैस्तुवत' इत्यादिवदिह नामत्वोपनीताख्यातसा-मानाधिकरण्यप्रवृत्तिनिमित्ताद्यसंभवादध्येतव्यसाकाङ्क्षत्वाच्च 'हिरण्यं भार्यम्' इत्यादिव-द्विशिष्टविधिरेव । तत्र सन्निकृष्टत्वादध्ययनमेव नियोगविषयः, स्वाध्यायस्तु तदर्थ एव । उपसंहरति—तस्मादिति । तेन परप्रयुक्तत्वमनङ्गत्वञ्च सिद्धमित्यनङ्गतयैव पूर्व-पक्षणीयमित्यर्थः ।

इदानीं स्वमतेन पूर्वपक्षं वक्तुं पृच्छति—कथं पुनरिति । उत्तरमाह—उच्यत इति । किमिदमधिकारपर्यवसानं नाम ? अथ कार्यस्य प्रयत्नशेषिपुरुषसंबन्धिरूपत्वात् संबन्ध्यन्तरपर्यवसानमधिकारपर्यवसानमिति चेत् । मैवम् । तर्हि कार्यस्य बोद्धा सम्बन्धीति नियोज्यपर्यवसानं स्याद्, नाधिकारपर्यवसानम् । अथ कृतिसमवायी सम्बन्धीति न नियोज्य इति चेत्, तथापि कर्तृपर्यवसानं स्याद्, नाधिकारपर्यवसानम् । उच्यते । भावार्थे पुरुषस्यैश्वर्यमधिकारः । तत्पर्यन्तत्वं सर्वेषामपि विधीनामङ्गीकरणीयम् । तेन साधिकारविषयान्वितरूपमधिकारपर्यवसानम् । नन्वेवमनुष्ठानसिद्ध्यर्थमेव सर्व-त्राधिकाराकाङ्क्षा । कृतिसाध्यतया साक्षात्सम्बध्यमानस्य भावार्थस्य दुःखात्मकत्वेन स्वरूपेण कार्याबोधनादिष्टसाधनत्वेन मदर्थमिदं कर्मेति ज्ञात्वा कार्यबोधेन प्रवर्तत इति सर्वत्रानुष्ठानायाधिकाराकाङ्क्षा । तच्चेह विध्यन्तरप्रयुक्त्या लब्धमिति नाधिकाराकाङ्क्षा । अन्याधिकारिकृतिसाध्यतया कार्यस्य प्राधान्यमित्येवमधिकाराकाङ्क्षा । तर्हि सा ह्याचार्य-कृतिसाध्यतया शान्तैवेति किमर्थमधिकारिपर्यवसानम् । उच्यते । सर्वो हि विधिरधि-कारपर्यवसायी । विधिर्हि कार्यरूपः । कार्यञ्च कृतिप्रयोजनम् । तदेव कृतिप्रयोजनं यदैश्वर्यं साधयति । न स्वतः किञ्चित् स्वर्गाद्यपि । अतो यद्यद्धि यस्य प्रयोजनमुच्यते तदैश्वर्यसिद्धिहेतुतया प्रयोजनं भवति । अत एव कस्यचित् प्रयोजनमन्यस्य तदानीमेव न भवति । तस्मादैश्वर्यव्यवस्थाप्यं प्रयोजनत्वम् । अतः कार्यं कृतिप्रयोजनत्वायाधि-कारपर्यवसानस्वभावम् । लौकिकन्तु फलसाधनतयैश्वर्यं साधयति । अपूर्वकार्यन्तु प्रधानतयैव शब्दावगतफलसाधनद्वारेण पुरुषैश्वर्यं साधयति । तस्मादस्ति सर्वविधीनां प्रवर्तकत्वसिद्ध्यर्थमधिकाराकाङ्क्षा । विधित्वाय क्वचिद् सिद्धं यत् विश्वजिदादौ तत्र तेनैव विधित्वमपि पर्यवस्यति । अथवा विधिर्हि प्रवृत्तिहेतुः । प्रवृत्तिहेतोः प्रवृत्ति-शक्तिरस्ति । ऐश्वर्यहेतुतैव प्रवृत्तिशक्तिः कार्यस्य नान्यदिति विधेः प्रवर्तकत्वस्वभाव-सिद्धयेऽधिकाराकाङ्क्षा, न पुनः प्रवृत्त्यर्थमेवेति सिद्धं विधित्वायाधिकारविषयान्वितस्व-रूपमधिकारपर्यवसानमिति । ततः किमित्याह—न चेति । कुतो इत्याह—साक्षादिति ।

धिकारपर्यवसायी। नचाध्ययनविधौ कस्यचिदधिकारोऽस्तीत्युक्तमेव साक्षाद्-श्रवणात्, अध्यापनविधिप्रयोज्यतया कल्पनानुपपत्तेः। तत्र य एवासौ प्रयोजकविधावधिकारः स एव प्रयोजनमिति युक्तम्, प्रथमोपनिपातित्वात्। यदपि च यस्यानङ्गं तदपि तस्य प्रयोजनं भवत्येव आधानस्येव होमादय इति। ननु चानन्तरभाविकर्मावबोधफलकतया अध्ययनस्याध्येतुरेवाधिकारोऽध्ययने प्रतीयते इति तत्प्रयोजनतैव स्वाध्यायविधेर्युक्ता अन्तरङ्गत्वात्। न। तस्योत्तरकालभावित्वात्। तुल्यायां हि प्राप्तावन्तरङ्गता बलीयसी। न चानयोरधिकारयोस्तुल्या प्राप्तिः। प्रथमोपनिपातित्वात्प्रयोजकविध्यधिकारस्य उत्तरकालभावित्वाच्चार्थावबोधनिबन्धनस्याधिकारस्य। यदा चाध्यापनविध्यधिकारसिद्धिरध्ययनस्य प्रयोजनमित्यध्ययनविधिना बोधितं तदाऽध्ययननिष्पन्नार्थत्वात्स्वाध्यायस्यान्यपरत्वादविवक्षितार्थत्वम्। अविवक्षितश्चार्थो न विचारणीय इति वेदाध्ययनमात्रेणैव गुरुकुलस्थितेः कृतार्थत्वादध्ययनोत्तरकालं गुरुकुलनिवृत्तिरेव युक्तेति मत्वा स्मृतं "वेदमधीत्य स्नायाद्"। [बौ. गृ. सू. ६. १] इति अत्र च न स्नानमदृष्टार्थं विधीयते, किन्तु यो "ब्रह्मचारी न स्नायात्" [बौ. गृ. सू.] इति अस्नाननियमस्तस्य पर्यवसानमेतदध्य-

ननु यद्यश्रवणं तर्हि विश्वजिन्न्यायेन कल्प्यते। तत्राह—अध्यापनेति। ननु[१] विश्वजिदादिष्विवाङ्गेषु चान्यप्रयोजनेन प्रयोजनवत्त्वदर्शनादिहाङ्गत्वाभावान्नान्यप्रयोजनेन प्रयोजनवत्त्वमित्यत्राह—यदपि चेति। यथाधानस्य होमादीन् प्रत्यङ्गत्वाभावोप्यनेन परिहृत एव।

किञ्च न केवलं प्रयोजनवत्त्वं तद्वदिहाप्यविरोध इति चोदयति—नन्विति। न अध्ययनानन्तरभाविकर्मावबोधफलतयाध्ययनस्याध्येतुरेवाधिकारः प्रतीयत इति तत्प्रयोजनतैवाध्ययनविधेर्युक्तेति कुत इत्याह—अन्तरङ्गत्वादिति। परिहरति—नेति। कर्मावबोधरूपप्रयोजनस्याध्ययनोत्तरकालभावित्वादिति। ततः किमित्याह—तुल्यायामिति। तथापि किमित्याह—न चेति। कथमतुल्यतेत्याह—प्रथमेति। ननु भवत्वध्यापनाधिकारस्य प्रथमोपनिपातिता, तथापि किमित्यर्थावबोधो नाङ्गीक्रियत इत्यत्राह—यदेति। ननु 'वेदमधीत्य स्नायात्' इत्यनेन वेदाध्ययनानन्तरमदृष्टार्थं स्नानं विधीयत इत्यत्राह—अत्र चेति। किन्तर्ह्यनेनोच्यत इत्यत्राह—किन्त्विति। आदिशब्देनाग्नीन्धनभैक्षाचरणादिसकलब्रह्मचारिधर्माणां ग्रहणम्। सकलब्रह्मचारिनियमानामध्ययनाङ्गतयाध्ययननिवृत्तौ प्राप्तानियमनिवृत्तिः 'वेदमधीत्य स्नायात्' इत्यनेनोच्यते, इत्याह—अध्ययनेति।

---

[१] ननु विश्वजिदादिः निगमयतीत्यन्तः पाठः मुद्रितपुस्तके क पुस्तके च न दृश्यते।

यनाङ्गतया नियमानां तन्निवृत्तौ प्राप्तमुच्यते। अस्नाननियमतुल्यतया च गुरुकुलवासादीनामपि निवृत्तिः प्राप्तैवेति सकलब्रह्मचारिधर्मनिवृत्तिरेवाध्ययनानन्तरमुच्यते। एवं चाध्ययनविधिना विचारस्यानाक्षिप्तत्वात्तदुपायभूतन्यायनिबन्धनं मीमांसाशास्त्रं नारम्भणीयमिति पूर्वः पक्षः।

स्वमतेन सिद्धान्तः।

राद्धान्तस्तु—यद्यपि प्रयोजकविध्यधिकारः प्रथमभावी, तथापि तन्निष्पत्तिः प्रयोजनमिति न युक्तम्। किन्तु दृष्टार्थावबोधफलकतयाऽध्ययनोत्तरकालभाव्यप्यध्येतुरेवाधिकारः प्रयोजनतया युक्त आश्रयितुम्, कर्तृसमवायित्वात्। यत्कर्तृकं हि यत्कर्म तस्यैव तत्रैश्वर्यमिति युक्तम्, अन्तरङ्गत्वात्। न च सहसैव विधिदर्शनादत्राधिकारपर्यवसानकल्पनाकारणमस्ति, परप्रयुक्त्यैवानुष्ठानस्य सिद्धत्वात्। यत्र खल्वधिकारपर्यवसानकल्पनामन्तरेण प्रागनुष्ठानं न लभ्यते, तत्रानुष्ठानात्प्रागनवगतोऽधिकारः तदनुप्रवेशात्साध्यः। इह त्वध्यापनविधिप्रयुक्त्यैवाधिकारपर्यवसानकल्पनामन्तरेणानुष्ठानं लब्धमिति प्राथम्यमकिञ्चित्करम्। अन्तरङ्गत्वादध्येतुरेवाधिकारो युक्त इति। तदेवमध्ययनविधेरन्यप्रयुक्त्यैवानुष्ठानसिद्धेर्नियोज्यो नास्ति। अधिकारी तु विद्यत एव। यदर्थं हि यत्कर्म स तत्राधिकारी। अर्थावबोधोपयोगेन चाध्ये-

ननु विधानादेव ब्रह्मचारिधर्ममात्रनिवृत्तिः न गुरुकुलवासनिवृत्तिरपीत्यत्राह—**अस्नाननियमेति**। पूर्वपक्षं निगमयति—**एवञ्चेति**।

इदानीं स्वमतेन राद्धान्तमाह—**राद्धान्तस्त्विति**। अध्यापनविध्यधिकारस्य प्राथम्येऽपि तत्प्रयुक्त्या सिद्धावाकाङ्क्षाहीनस्याध्ययनविधेर्न तदर्थाध्यापननियोगनिर्वृत्तिः प्रयोजनमित्यर्थः। किन्तर्ह्यध्ययनविधेः प्रयोजनमित्याह—**किन्त्विति**। अध्ययनोत्तरकालभाव्यपि दृष्टार्थावबोधफलकतयाध्येतुरेवाधिकारोऽध्ययनविधेः प्रयोजनमित्यर्थः। कुत इत्याह—**कर्तृसमवायित्वादिति**। यद्यपि कर्तृसमवायः, तथापि किमित्याह—**यत्कर्तृकमिति**। अन्तरङ्गत्वात् कर्त्रैश्वर्यपर्यवसानमेव युक्तमित्यर्थः। नन्वध्ययनविधौ प्रथमं विधिदर्शनात् विध्याकाङ्क्षायामेव स्वाभाविकार्थावबोधाधिकारपर्यवसानमेव कल्प्यत इत्यत्राह—**न चेति**। कुत इत्यत्राह—**परेति**। तदुपपादयति—**यत्रेति**। अकिञ्चित्करमननुष्ठापकमित्यर्थः। कर्तृसमवायित्वेन नान्तरङ्गत्वादध्येतुरेवाधिकारमात्रं नाङ्गपर्यवसानमपीत्याह—**अन्तरङ्गत्वादिति**। निगमयति—**तदेवमिति**। तेनाध्ययनविधेरध्यापनविधिप्रयुक्त्यैवानुष्ठानसिद्धेरध्येतुर्ममेदं कार्यमित्यवगत्यभावान्नियोज्यो नास्ति। नियोज्याभावेऽपि कर्तृगतदृष्टप्रयोजनेन नियोगस्यैकीकृतत्वात् अर्थज्ञानवत एव नियोग इति निश्चयादधिकारी विद्यते। नियोज्यान्वयबललभ्यं कार्यस्य विशिष्टपुरुषसम्ब-

र्थताऽध्ययनस्येति स तत्राधिकारी। स चायमधिकारः प्रागध्ययनान्नावगम्यते, अध्ययनोत्तरकाले चावगम्यते। स्वाध्यायाध्ययनं त्वेवमभिनिर्वर्त्यते—

"श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्॥" [म. ४ अ. ९५]
ततः[१] परं तु छन्दांसि शुक्लेषु नियतः पठेत्।
वेदाङ्गानि रहस्यं च कृष्णपक्षेषु सम्पठेत्॥"
[म. ४. अ. श्लो. ९८] इति।

इत्थं चाध्ययने क्रियमाणेऽङ्गाध्ययनसंस्कृतस्य वेदवाक्यादर्थावगमो जायते। स चायमध्येता मन्यते मदुपयोगिकर्मावबोधकतया मदर्थमध्ययनमिति। [२]योऽयं वेदाध्ययनमीमांसाश्रवणयोर्मध्येऽधिकारः, सोऽयं [३]तान्मौ-

न्धित्वमिहाधिकारिबललभ्यमित्यर्थः। नियोज्याभावे कथमधिकारिलाभ इत्यत्राह— **यदर्थमिति**। उक्तमर्थं प्रकृते निगमयति—**अर्थावबोधेति**। नन्वध्ययनविधेरपि साधिकारत्वात् कथं परप्रयुक्त्याश्रयणमित्यत्राह—**स चायमिति**। न सत्तयाधिकारोऽनुष्ठानहेतुः, किन्तु ज्ञायमानतया, अतोऽध्ययनप्रयुक्तिसमयेऽज्ञातत्वान्न परप्रयुक्तिविघातकृदित्यर्थः। किञ्च उत्तरविधीनामप्यध्ययनात् प्रागनवगम्यमानानां नाध्येतृप्रयत्नप्रयोजकत्वं संभवतीत्यभिप्रायो ग्रन्थस्य कदावगम्यत इत्यत्राह—**अध्ययनोत्तरेति**। नन्वध्ययनानन्तरमर्थज्ञानं न संभवति, माणवकस्य तदानीं व्युत्पत्त्यभावादित्यत्राह— **स्वाध्यायाध्ययनमिति**। निगमनिरुक्तव्याकरणच्छन्दोज्योतिर्भिः सहाध्ययनात्तदानीं वाक्यार्थावगमो जायत इत्यर्थः।

ननु तदानीं वाक्यार्थावगमेऽपि कथमधिकारलाभ इत्यत्राह—**स चायमिति**। ननु यद्ययमधिकारोऽध्ययनात् प्राङ्नावगम्यते तदा किमर्थोऽयमधिकारलाभ इत्यत्राह— **योऽयमिति**। साङ्गाध्ययनानन्तरं विदितपदपदार्थं बुध्यमानो मदर्थमिदं कर्मेति जानाति, तदपि फलवत्कर्मावबोधरूपत्वात् प्रयोजनमेव। लब्धानुष्ठानस्यापि विधेः स्वाभाविकाधिकारपर्यवसानोपयोगित्वात् मध्येऽधिकारो न वृथा। तेन वस्तुतः साधिकारत्वात् अध्ययनविधेः प्रयुक्तिशक्तिरस्त्येवेत्याचार्यविधिप्रसङ्गितैव, न पुनर्वाजिनवदप्रयोजकता। अत एवाचार्ये मध्ये मृते प्रोषिते अशक्ते उदासीने वा स्वविधिप्रयुक्तिरनुज्ञायते। नन्वेवं स्वविधिप्रयुक्त्याश्रयणे सिद्धान्तहानिरित्यत्राह—**सोऽयमिति**। सोऽयं वक्ष्यमाणः शास्त्रार्थस्तन्मौलिकः, आचार्यकरणविधिप्रयुक्तिमूलः स्वविधिप्रयुक्तावप्याचार्यकरणविधिप्रयुक्तिमूलज्ञात-

---

[१] 'अत ऊर्ध्वम्' इति मानवे पाठः।
उत्तरार्धे तु 'वेदाङ्गानि च सर्वाणि' इति पाठो दृश्यते।
[२] सोऽयमिति मु०।
[३] तात्कालिक इति क. पु. पाठः।

**लिकः शास्त्रार्थः। इममेव तावदधिकारमालोच्य पित्रादयोऽर्थदानादिना कांश्चिदानमय्य पुत्रादीनुपनाययन्ति। प्रबुद्धाश्च केचन स्वयमेवात्मानम्। अन्यथाऽध्ययनासंभवात्। अनुपनीतस्याध्ययननिषेधात्।**

**"नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते।**
**[1]स शूद्रेण समस्तावद्यावद्वेदान्न जायते॥"**

[म. अ. २. श्लो. १७२] **इति।**

**एवं तावदध्यापनविधिं स्मृत्यनुमितमाश्रित्य राद्धान्तवर्णना कृता।**

विवरणसिद्धान्तः।

**[2]अन्ये तु साक्षाच्छ्रुताध्यापनविध्यनुसारेणैवमाहुः। यद्यध्यापनविध्य-**

स्वाधिकारसिद्ध्यर्थमेवाध्ययनविधिनाध्यापनप्रयुक्तिरिति परम्परया तन्मूल एव शास्त्रार्थ इति न सिद्धान्तहानिरित्यर्थः। [3]सोऽयन्तान्मौलिक इत्यर्थः। वक्ष्यमाणमेव शास्त्रार्थं दर्शयति—**इममेवेति।** उपनयनात् प्रागाचार्याभावे इमं ज्ञानाधिकारमालोच्य पित्रादयः कांश्चिदर्थदानादिनानमय्य स्वपुत्रादीन् उपनाययन्ति। पित्राद्यभावे प्रबुद्धाः स्वयमेवात्मानमिति योऽयं शास्त्रार्थः सोऽयन्तान्मौलिक इत्यर्थः। नन्वध्ययनविधेरपेक्षितमध्ययनमेव। किमर्थं तदुपनयनमित्यत्राह—**अन्यथेति।** कथमसम्भव इत्यत्राह—**अनुपनीतस्येति।** प्रतिषेधमेव दर्शयति—**नेति।** वेदान्न जायते, उपनयनेन जायत इत्यर्थः। एवम्—'उपनीय तु यः शिष्यम्'—इत्यादिस्मृत्यानुमितमाश्रित्य राद्धान्तवर्णना कृतेत्याह—**एवन्तावदिति।** एवं स्वसिद्धान्तमुपन्यस्येदानीं विवरणसिद्धान्तमुपन्यस्यति—**अन्ये त्विति।** श्रुताध्यापनविध्यनुसारेण—'तमध्यापयेदि'ति विध्यनुसारेणेत्यर्थः।

---

[1] शूद्रेण हि इति. मानवे पाठः।

[2] ग्रन्थकारः 'उपनीय तु यश्शिष्य' मित्यादिस्मृत्यनुमितमध्यापनविधिमंगीकरोति। अतस्तदनुसारेण सिद्धान्तमवर्णयत्। अनन्तरं प्रभाकरमिश्रस्य मतेन कस्यचिच्छाखायां "अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत," इति प्रत्यक्षाध्यापनविधिःश्रवणात् सिद्धान्तमुपन्यस्यति **अन्ये त्विति।** अत्र व्याख्यायां जरत्प्राभाकरमतमित्यवतरणं दृश्यते, प्रकरणस्यान्ते 'एवं बृहतीसिद्धान्तमभिधाय विवरणसिद्धान्तमुपन्यस्यति' इति च दृश्यते। इदं पूर्वापरविरुद्धं प्रतीयते यतः शाबरभाष्यस्य प्रभाकरकृतं व्याख्यानद्वयं विवरणं निबन्धनञ्चेति। तत्राद्यस्यैव नामान्तरं बृहती। तस्य व्याख्या ऋजुविमला। द्वितीयस्य व्याख्या दीपशिखेति। पञ्चिकाकारः स्वसिद्धान्तमुपन्यस्य बृहत्यपरपर्यायस्य विवरणस्य सिद्धान्तमुपन्यस्यति इत्येव युक्तमिति प्रतीमः। इममर्थं नयविवेकस्तद्व्याख्या चोपोद्बलयतः। तथाहि—श्रौतो वा आचार्यकरणविधिः इति नयविवेकः [पृ० १८]। ग्रन्थमिमं रविदेवस्तत्त्वे इत्थमवतारयति—एवं प्रकरणोक्तमुपपाद्य विवरणमतानुसारतोऽपि आचार्यकविधिसमर्थनार्थमाह—श्रौतो वेत्यादिना इति।

[3] सोऽयं तात्कालिकः शास्त्रार्थ इति मुद्रितपुस्तके पाठः।

धिकारप्रयोजनता स्वाध्यायाध्ययनविधेः स्यात्, तदाऽध्यापनविधेरपि स्वाध्यायान्तर्गतत्वादविवक्षितार्थत्वेन तत्प्रयुक्ततापि न सम्भवति। [1]स्वशाखा हि स्वाध्यायशब्देनोच्यते। साक्षादधीतश्चाध्यापनविधिर्नूनं केषांचिच्छाखिनां स्वशाखान्तर्गतो भवेदिति स्वाध्यायस्याविवक्षितार्थत्वेन तस्याप्यविवक्षितार्थत्वान्न प्रयोजकत्वमवकल्पते इति पश्चाद्भाव्यर्थावबोधोपयोगितयाऽध्येतुरेवाधिकारोऽध्ययनविधेः प्रयोजनमिति।

ननु स्वाध्यायोऽध्येतव्य इति नियोगसिद्धेरवगमात्तन्निष्पत्त्यर्थत्वादध्ययनस्यान्यपरत्वादर्थविवक्षा दुर्भणैव। मैवम्। यदि केवलं नियोगनिष्पत्त्यर्थतैवाध्ययनस्य स्यात्स्यादेतदेवम्। यदा त्वर्थावबोधोऽपि प्रयोजनतया स्वीक्रियते, तदार्थऽपरताऽप्यस्तीति नाविवक्षितार्थता। कथं पुनरेकस्मिन्वाक्ये प्रयोजनद्वयम्। उच्यते। नियोगनिष्पत्तिरेव शाब्दं प्रयोजनम्, आर्थं त्वर्थावबोधनमिति न विरोधः। यच्च तदर्थावबोधाख्यं प्रयोजनं तन्न केवलाध्ययनसाध्यमिति अध्ययनविधिरेव स्वप्रयोजनसिद्धये विचारमाक्षिपति। विचारस्य च [2]न्यायनिबन्धनत्वान्न्यायानां मीमांसाज्ञान-

एवमुक्तप्रकारं दर्शयति—यद्यध्यापनेति। स्वाध्यायविधेरध्यापनविध्यधिकारार्थत्वेनाविवक्षितार्थत्वेऽध्यापनविधेरपि स्वाध्यायान्तर्गतत्वादेव स्वस्याप्यविवक्षितार्थता स्यात्। ततश्चाध्यापनविधिप्रयुक्तताध्ययनविधेर्न सम्भवतीति। एतदेवोपपादयति—स्वशाखेति। स्वाध्यायशब्देनानाद्यात्मीयवंशपरिगृहीतवेदशाखोच्यते। साक्षादधीतस्त्वध्यापनविधिर्नूनं केषाञ्चित् शाखिनां स्वशाखान्तर्गतो भवेदिति तस्याप्यविवक्षितार्थत्वान्न प्रयोजकत्वमवकल्पत इति पश्चाद्भाव्यर्थावबोधप्रयोजनतैवाध्ययनविधेर्युक्तेत्येवं विवरणसिद्धान्त इत्यर्थः।

चोदयति—नन्विति। स्वाध्यायोऽध्येतव्य इत्यध्ययनविधेर्नियोगसिद्धेरवगमान्नियोगनिष्पत्त्यर्थत्वेनार्थपरत्वाभावादेवान्यपरत्वादध्यापननिष्पत्तिवदर्थपरता दुर्लभैवेति। परिहरति—मैवमिति। केवलं नियोगनिष्पत्तिमात्रप्रयोजनत्वे ह्येतत् स्यात्। न पुनरर्थपरत्वाङ्गीकारेऽपीत्यर्थः। पृच्छति—कथं पुनरिति। परिहरति—उच्यत इति। ननु भवत्वेवं कथं मीमांसाया आरम्भणीयत्वमित्यात्राह—यच्चेति। ततः किमित्याह—

---

[1] स्वशाखादीति मु. पु. पाठः।

[2] न्यायशब्दस्तार्किकैः परार्थानुमाने पञ्चावयववाक्येषु च प्रयुज्यते। प्रमाणैरर्थपरीक्षणं न्याय इति पक्षिलस्वामी बभाषे। मीमांसकास्तु न्यायशब्दमधिकरणे प्रयुञ्जते। न तु तार्किकाभिमतार्थे। अत एव जैमिनीयन्यायमालेतिपदं व्याचक्षाणैर्माधवाचार्यैर्न्यायाःअधिकरणानीति

**गम्यत्वान्मीमांसाज्ञानस्य गुर्वायत्तत्वान्न वेदाध्ययनानन्तरं गुरुकुलान्निवर्तितव्यमिति मन्यमानो भगवान्सूत्रकारः पूर्वपक्षनयमूलतां स्मृतेर्दर्शयितुं धर्मजिज्ञासोपदेशमुखेनाध्ययनानन्तरभाविनीं गुरुकुलनिवृत्तिं प्रतिषेधन्निदमाह— "अथातो धर्मजिज्ञासा" [1]इति। वेदवाक्यार्थविचारविरोधिनी च गुरुकुलनिवृत्तिरेव केवला निवार्यते, न सकलेतरभिक्षाचरणब्रह्मचर्यादिधर्मनिवृत्तिः। असमाप्तसकलब्रह्मचारिनियमश्च न स्नातक इति न दाराधिगमनेऽधिक्रियते स्नातकस्य दाराधिगमस्मरणात्, "स्नातकः[2] सदृशीं भार्यां विन्देद्" [गौ. ध. सू. अ. ४-१] इति। तस्माद् गुरुकुले स्थित्वा सकलेतरब्रह्मचारिधर्मान्परित्यज्य वेदार्थो विचारयितव्यः, अविचारितस्यानिर्णीयमानत्वात्।**

**विचारस्येति। स्मृतेरिति। वेदमधीत्य स्नायादिति स्मृतेरित्यर्थः। ननु किमनेन सूत्रेणोच्यत इत्यत्राह—वेदवाक्येति। ततः किमित्यत्राह—असमाप्तेति। कुत इत्याह—स्नातकस्येति। स्मरणमेव दर्शयति—स्नातक इति। उपसंहरति—**

---

न्यायमालाविस्तरे व्याख्यातम्। अधिकरणन्तु पञ्चाङ्गमिति वदन्तः पद्यमिदं प्रमाणयन्ति केचित्।

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
सङ्गतिश्चेति पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः॥ इति

सांप्रदायिकास्तु प्रयोजनं संगतिश्च शास्त्रेऽधिकरणं विदुरित्यभ्युपगच्छन्ति। इदमेव युक्तमिति वयं प्रतीमः। यथा—जिज्ञासाधिकरणस्य विषयः धर्मविचारशास्त्रापरपर्यायं मीमांसाशास्त्रं अनारम्भणीयमारम्भणीयं वेति संशयः अनारम्भणीयमिति पूर्वपक्षः पाठमात्रादेवाचार्यत्वसिद्धेः। आरम्भणीयमिति सिद्धान्तः पुरुषार्थपर्यवसाय्यर्थज्ञानस्य विचारमन्तरेणासिद्धेः। अतोऽध्यापनविधिप्रयुक्त्या विचारशास्त्रमारम्भणीयम्। पूर्वपक्षे आचार्यत्वसिद्धिः प्रयोजनम्। सिद्धान्ते वेदार्थज्ञानं प्रयोजनम्। शास्त्रसंगतिः शास्त्रसंबन्ध्येवार्थः प्रत्यधिकरणं विचारणीयः। क्वचित् क्वचिदधिकरणैकदेशे सिद्धान्तेऽपि न्यायशब्दस्य प्रयोगो द्रष्टव्यः यथाऽऽकृत्यधिकरणन्यायेनेत्यादौ। अतएव मीमांसाशास्त्रे न्यायशब्दघटितान्येव न्यायप्रकाश-न्यायमाला-न्यायसुधा-न्यायरत्नमाला-न्यायरत्नाकरेत्यादिग्रन्थनामान्युपलभ्यन्ते इति ध्येयम्।

---

[1] अथातो धर्मजिज्ञासा इति सूत्रार्थस्तु प्राभाकरमतेनेत्थम्। तथाहि—अतः वेदाध्ययनाद्धेतोः धर्मस्य वेदार्थस्य जिज्ञासा विचारः अथ वेदाध्ययनानन्तरमेव कर्तव्यः। हेतोस्सिद्धत्वादेव विलम्बानुपपत्तेः। यतोऽध्ययनानन्तरमेवार्थज्ञानं भवति। तस्मादध्ययनं हेतुरिति। अत एव "अधीतो वेदो धर्मजिज्ञासायां हेतुर्ज्ञात" इति भाष्यं सङ्गच्छत इति १.१. १.। इतोऽप्यधिकमृजुविमलापञ्चिकादिभ्योऽवगन्तव्यमिति।

[2] धर्मसूत्रे गृहस्थः इति पाठः।

अनिर्णीतवेदार्थश्चेद् गुरुकुलान्निवर्तेत, ततः कृतदारसंग्रहः श्रौताग्निहोत्रादिनित्यनैमित्तिकधर्माधिकारापातात्तदनुष्ठानं कर्तुमसमर्थः प्रत्यवेयात् ।

तस्मादध्ययनस्यानन्तरमेव वेदार्थो विचारयितव्य इति विचारोपायभूतन्यायनिबन्धनं मीमांसाशास्त्रमारब्धव्यमिति सिद्धम् ।

शास्त्रमुखं नाम गुरोराविष्कर्तुं गभीरमपि भावम् ।
शालिकनाथेन कृतं प्रकरणमेतत्प्रसन्नतरम् ॥ २ ॥

॥ इति महामहोपाध्याय श्रीशालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां शास्त्रमुखं नाम प्रथमं प्रकरणं समाप्तम् ॥

तस्मादिति। ततः किमित्याह—विचारयितव्य इति। तथापि किमित्याह—ततः कृतदारेति।

परमप्रकृतमुपसंहरति—तस्मादिति ।

इदानीं प्रकरणस्य संज्ञां प्रयोजनञ्चार्यया दर्शयति—शास्त्रमुखमिति। शास्त्रमुखं नामैतत् प्रसन्नतरं गुरोर्गभीरं भावमभिप्रायम् आविष्कर्तुं शालिकनाथेन कृतमित्यर्थः ॥ २ ॥

[१]श्रीशालिकाप्रकरणव्याख्या नारायणेन जयपुरिजनुषा ।
शास्त्रमुखस्य विलिखिता गुरुदर्शनपारदृश्वना विदुषैषा ॥

॥ शास्त्रमुखव्याख्या समाप्ता ॥

---

[१] इदं च पद्यं क० पुस्तके मुद्रितपुस्तके च नोपलभ्यते ।

## नीतिपथो नाम द्वितीयं प्रकरणम् ।

प्रकरणार्थप्रतिज्ञा ।

अर्थासंस्पर्शिताशङ्का यथा शब्दस्य वार्यते ।
प्रभाकरगुरोः शिष्यैस्तथा यत्नो विधीयते ॥ १ ॥

पूर्वपक्षः ।

अत्र लौकिकवाक्यानां व्यभिचाराभिमानतः ।
अर्थासंस्पर्शितां केचिदाहुः शब्दस्य वादिनः ॥ २ ॥

"न्यायसिद्धिः"

[1]अत्र शब्दमात्रस्यार्थासंस्पर्शितया शब्दविशेषावगम्यकार्यात्मा वेदार्थ इति प्रतिज्ञा नोपपद्यते इति केचिदाक्षेपं कुर्वन्ति । तदाक्षेपसमाधानार्थमिदं प्रकरणमिति वदन्संप्रदायं प्रतिपाद्यं प्रयोजनं च दर्शयति—अर्थासंस्पर्शितेति । श्रोतृबुद्धिसमाधानार्थमारभ्यमाणस्य प्रकरणस्य संप्रदायं प्रतिपाद्य प्रयोजनं दर्शयति—अर्थेति । अर्थासंस्पर्शिताशंकानिराकरणं प्रयोजनम्, निराकरणप्रकारः प्रतिपाद्यः, प्रभाकरगुरोः शिष्यैरिति संप्रदायो दर्शितः । प्रतिज्ञाक्षेपसमाधानार्थमिदं प्रकरणमिति वेदप्रामाण्येऽप्युपयोगोऽस्तीति भावः ॥१॥

तत्र पूर्वपक्षमाह—अत्र लौकिकेति । शब्दस्यासत्यर्थे ज्ञानजनकत्वरूपव्यभिचाराङ्गीकारे स्वसिद्धान्तो दुर्वचस्स्यादित्यभिप्रेत्य व्यभिचाराभिमानत इत्युक्तम् । शब्दविशेषेषु लौकिकवाक्येषु व्यभिचाराभिमानमात्राच्छब्दमात्रस्यार्थासंस्पर्शितामाहुरित्यर्थः ॥२॥

[2]अत्रैकदेशिन एवं चोदयन्ति—

ननु कोऽयमर्थासंस्पर्शः? यदि संयोगसमवाययोरभावः, सोऽनुज्ञात एव । अथार्थानवबोधकत्वम्—शब्दो नावबोधकः, सति चासति चार्थे ज्ञानजनकत्वादिति प्रतिज्ञाहेत्वोर्व्याघातात्संबन्धपरिहारे निराकरिष्यमाणत्वाच्च । तेन स्वतः प्रामाण्यमेवास्मि-

---

[1] सौगताः शब्दार्थयोः परस्पराध्यासमङ्गीकुर्वन्तोऽर्थासंस्पर्शित्वाच्छब्दसामान्यस्य प्रामाण्यासंभवेन शब्दविशेषस्य चोदनाऽपरपर्य्यायस्प वेदस्य धर्मे कथं प्रामाण्यमिति वेदप्रामाण्यमाक्षिपन्ति, तदेव दर्शयति—अत्रेत्यादिना, कुर्वन्तीत्यन्तेन ।

[2] श्लोकवार्तिकव्याख्याकारास्सुचरितमिश्रप्रभृतयः संयोगादिनिराकरणमुखेनाऽर्थासंस्पर्शिताशंका नात्र निराक्रियते, सम्बन्धाक्षेपपरिहारग्रन्थे तस्य निराकरणात् । अतः समग्रे प्रथमे पादे प्रामाण्यमेव प्रतिपाद्यते । नार्थास्पर्शित्वशंका निराक्रियते इति वदन्ति । अतएव वार्तिके उक्तम् "पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णयः" । अत्रत्यो विशेषो भूमिकायां द्रष्टव्यः । तन्मतमुपन्यस्पति—अत्रेति ।

निश्चयोऽर्थस्य संस्पर्शः स चार्थाव्यभिचारिणः ।
प्रत्यक्षादेरेव भवेच्छब्दस्तु व्यभिचारवान् ॥ ३ ॥
विनाप्यर्थं हि शब्देन प्रतीतिरुपजायते ।
अङ्गुल्यग्रेऽस्ति करिणां यूथमित्येवमादिना ॥ ४ ॥
नचात्र शक्यते वक्तुं शुक्तौ रजतबोधवत् ।
अग्रहाद् भ्रान्तिरेषेति कारणस्याविशेषतः ॥ ५ ॥

न्पादे प्रतिपाद्यते, नार्थासंस्पर्शिताशंकानिराकरणमिति । तान्प्रत्याह—**निश्चय इति** । [1]निश्चय एव अर्थसंस्पर्शः, निश्चयो नामायोगान्ययोगव्यवच्छेदात्मिका संविदेव । उक्तं चाभावनिराकरणे—"नि[2]श्चयश्चायमेवेति संवित्तिस्सर्ववस्तुषु" इति । स च निश्चयोऽत्रापि भवन्नर्थाव्यभिचारिणश्शब्दाद्भवेत् प्रत्यक्षादेरिव । शब्दस्तु न तथा, व्यभिचारादिति । अथवा अर्थस्य संस्पर्शो नाम निश्चयो नान्यः । स च निश्चयः अर्थाव्यभिचारिणो मानात्प्रत्यक्षादेरेव भवेत् । शब्दस्तु न तथा व्यभिचारात् । यदव्यभिचारि तदेव निश्चयजनकं, यथा प्रत्यक्षादि । व्यभिचारी च शब्द इति दृष्टान्तोपनयावेवोक्तौ । शब्दो नार्थव्याप्त्यनपेक्षतयार्थनिश्चयजनकः, व्यभिचारित्वात्, ऊर्ध्वत्ववत्, प्रमेयत्ववच्चेत्यन्वयः । यन्नेत्थं, तन्नेत्थम् यथा प्रत्यक्षमिति व्यतिरेकी । तेन "नन्वतथाभूतम्" इति भाष्येणार्थासंस्पर्शित्वमेवोच्यते । स्वतः प्रामाण्यं वृत्तिकारग्रन्थे प्रतिपाद्यत इति ॥३॥

ननु कुत्र व्यभिचार इत्यत्राह—**विनापीति** । अंगुल्यग्रे हस्तियूथशतमास्त इत्येवमादिवाक्यादसत्यर्थे शब्दात् ज्ञानं जन्यत इति ॥४॥

ननु शुक्तिकारजतबोधवदग्रहणसमाधेयोऽयं व्यभिचार इत्यत्राह—**नचेति** । कुत इत्याह—**कारणस्याविशेषत इति** । सत्यर्थेऽसत्यर्थे च ज्ञानकारणभूतशब्दस्याविशेषादित्यर्थः । किंचात्र बाधितोऽपि संसर्गश्शतकृत्वश्शब्दादवगम्यते । न चेदं शुक्तिकारजतादौ दृष्टपूर्वम्, नेदं रजतमिति विवेके गृहीते चक्षुषैव पुना रजतमिति बोधो न जन्यते ।

ननु द्विचन्द्रदिङ्मोहालातचक्रपीतशंखप्रतिबिम्बादिविभ्रमा बाधितविषया अपि पुनः पुनश्चक्षुषैवोपजायन्ते । सत्यम् । अयथार्थग्राहिण इदं चोद्यम् । द्विचन्द्रादिव्यवहारे तु यावत्कारणदोषानुवृत्तिस्तावद्विवेको न गृहीत एवेति । तदानीमेकश्चन्द्र इति स्मृतिरेव । तेन परोक्षो बाध इति कारणदोषानुवृत्तेर्द्विचन्द्रादौ पुनरपि भ्रान्तिरपरिहार्या । अंगुल्यग्रादिषु प्रत्यक्ष एव बाध इति विवेको गृहीत एव । तथा शब्दात्संसर्गज्ञानं जायते, तस्माच्छब्दस्य व्यभिचारो न विवेकाग्रहणसमाधेय इति ॥५॥

---

[1] विषयवैलक्षण्येन पूर्वोक्तमेकदेशिमतं निराकरोति—निश्चय इति ।

[2] अमृतकलानामकस्य पञ्चमप्रकरणस्य ६३ श्लोकस्य पूर्वार्धम् ।

दुष्टा हि [१]हेतवः कार्यं सम्पूर्णं कर्तुमक्षमाः ।
तेन भेदाऽग्रहो युक्तः शुक्तिकारजतादिषु ॥ ६ ॥

इह तु ज्ञानहेतुर्यः शब्दः स न विशिष्यते ।
विशिष्यते यस्तु वक्ता स ज्ञानस्य न कारणम् ॥ ७ ॥

वक्तापि यदि विज्ञानहेतुः स्यादिन्द्रियादिवत् ।
ततस्तस्याऽपि दोषेण भवेदग्रहणं तदा ॥ ८ ॥

वक्ता तु केवलं शब्दव्यक्तावेवोपयुज्यते ।
ज्ञानं तु शब्दमात्रेण निरपेक्षेण जन्यते ॥ ९ ॥

न च तस्येह दुष्टत्वं किंचिदप्युपलभ्यते ।
दोषश्चाग्रहणे हेतुस्तदभावे स्फुटो ग्रहः ॥ १० ॥

ननु तर्हि शुक्तिकारजतादावपि शब्दवत् इन्द्रियसंयोगाद्यविशिष्टमेवेत्यत्राह—**दुष्टा हि हेतव इति**। शुक्तिकारजतादौ मनोदोषादिना दुष्टं करणमिति न तद्ग्रहणमारभते। किन्तु अगृहीतविवेके ग्रहणस्मरणे आरभत इति युक्तं तत्राग्रहणमित्यर्थः ॥६॥

ननु तर्ह्यत्रापि वक्तृदोषात्कारणस्यैव दुष्टता वक्तुं युक्तेत्यत्राह—**इह त्विति**। ज्ञानहेतुभूतशब्दस्याविशेषाद्विशिष्टवक्तुर्ज्ञानकारणत्वाभावाच्चेत्यर्थः ॥७॥

किंच शुक्तिकारजतज्ञाने इन्द्रियादीनां हेतुत्ववदत्रापि यदि वक्तुर्ज्ञानहेतुत्वं स्यात्तदा वक्तृदोषेण भ्रान्तित्वं स्यात्। न च तदस्तीत्याह—**वक्तापीति** ॥८॥

नन्वकारणभूतेन वक्त्रा किं कार्यमित्यत्राह—**वक्ता त्विति**। वक्ता तु शब्दाभिव्यक्तिमात्रं करोति। अभिव्यक्तस्तु शब्दोऽर्थं बोधयति। कारणदोषः कार्ये ह्यासज्येतापि न व्यञ्जकदोषो व्यङ्ग्ये। ननु व्यञ्जकदोषोऽपि व्यङ्ग्यें दृश्यते—मण्डूकवसया लेपिता दृक् स्तंभादिकं सर्परूपेण बोधयति। मैवम्। तत्रापि व्यक्तावेव दोषः न व्यङ्ग्ये। अन्यथा विप्रलंभकपुरुषप्रकाशितस्य दीपस्याप्रकाशता स्यात्। तथा स्तम्भस्य तदानीमेव सर्पत्वप्रसंगाच्च। किंच दुष्टेनापि वक्त्रा व्यक्तश्शब्दो विगलितनिखिलकला[२]ध्मातादिदोष इति प्रत्यक्षेण प्रतिभात्येव ॥९॥

ननु दोषानभिज्ञत्वं, कार्यदर्शनात्तु किंचिदेव क्वचिद्दोषपक्षे निक्षिप्यते, यथा मणेरिवारुण्यस्य बोधे जपाकुसुमसन्निधानमित्यत्राह—**न च तस्येति**। जपादिवदिह दोषोपलब्धिर्नास्तीत्यर्थः ॥१०॥

नन्विह प्रत्यक्षाभावे प्रतारकवक्तृदोषाच्छब्दे दोषा जायन्ते इत्यन्यथा ज्ञानकार्या-

---

[१] इन्द्रियादय इत्यर्थः

तेन शब्दोपजनितं ज्ञानमेवेदमीदृशम् ।
अर्थं व्यतिक्रामतीति कुतस्तेनार्थनिश्चयः ?॥ ११ ॥
येनापि हि विना यस्य सद्भाव[१] उपपद्यते ।
निश्चयस्तत्र तेनेति सुभाषितमिदं वचः ॥ १२ ॥
नन्वेवमाप्तवाक्येभ्यः कथं व्यवहृतिर्भवेत् ?।
व्यवहारो हि लोकस्य कथं स्यान्निश्चयं विना ? ॥ १३ ॥
उच्यते व्यवहारो हि संदेहादपि लौकिकः ।
प्रायशो दृश्यते तेन न किंचिदिह दुष्यति ॥ १४ ॥
अपि चाप्तत्वमालोच्य वक्तुस्तत्रार्थनिश्चयः ।
मानान्तरवशेनापि कथंचिदुपपद्यते ॥ १५ ॥

दनुमीयते। मैवम्। ज्ञायमानतया शब्दस्यार्थबुद्धिहेतुत्वमिति निर्विवादम्। सति चैवं शब्दगतानामपि दोषाणां शब्देन सह ज्ञानविषयतामप्रतिपद्यमानानां ज्ञानाधारककार्यविशेषापादकत्वमशक्यमिति निरर्थकमेव शब्दगताप्रत्यक्षदोषानुमानम्।

ननु प्रत्यक्ष एवाकांक्षाद्ययोग्यपदसन्निकर्षः शब्दे दोषः। मैवम्। योग्यपदरचनमप्यसत्यार्थं नद्यास्तीरे फलानि संतीत्यादिकं दृश्यते। तस्मादिहाव्यापित्वादयोग्यपदसन्निकर्षो न दोषः। सति चैवमदुष्टशब्दजनितमेव ज्ञानमर्थं व्यतिक्रामतीति कुतस्तेन शब्देन तस्यार्थस्य निश्चय इत्याह—तेन शब्दोपजनितमिति। शब्दस्यार्थनिश्चायकत्वं सिद्धमेवेति भावः ॥११॥

शब्दादर्थानिश्चयमेव सोपहासमाह—येनापीति। येनार्थेन विना यस्य शब्दस्य सद्भाव उपपद्यते, तत्र तस्मिन्नर्थे निश्चय इति महदिदं सुभाषितम्, तेन शब्देन केवलं अ[२]नभिज्ञत्वमेवोक्तमित्यर्थः ॥१२॥

चोदयति—नन्वेवमिति। आप्तवाक्यश्रवणानन्तरं लौकिकानां व्यवहारदर्शनाद्व्यवहारस्य चार्थनिश्चयं विनानुपपत्तेः, वाक्यश्रवणानन्तरमर्थनिश्चयो जायत इति कल्प्यते। प्रयोगस्तु आप्तवाक्यमर्थनिश्चायकं व्यवहारहेतुत्वात्प्रत्यक्षवदिति ॥१३॥

परिहरति—उच्यत इति। सन्देहादपि व्यवहारोपपत्तेः। न व्यवहारान्निश्चयकल्पनमित्यर्थः ॥१४॥

किंच प्रमाणान्तरेण तत्रार्थनिश्चय इति, सिद्धसाधनश्चायं हेतुरित्याह—अपि चाप्तत्वमिति ॥१५॥

ननु शब्दस्य स्वतोऽर्थनिश्चयजनकत्वाभावेऽप्याप्तवाक्यवत्प्रामाण्यसंभवान्न वेद-

---

[१] वो नो प० क० पु० पाठः।

[२] क पुस्तके मूकतैवेति पाठः।

वेदस्त्वलौकिकार्थत्वादभावाद्वक्तुरेव च ।
अहो बत दशां कष्टामुपनीतो हि पण्डितैः ॥ १६ ॥

सिद्धान्तः ।

अत्र प्रतिविधानाय यतन्ते मतिशालिनः ।
ज्ञानस्य व्यभिचारित्वं नयवीथ्यां निवारितम् ॥ १७ ॥

श्रूयतामवधानेन गतिर्नरगिरामपि ।
अनुमानात्पृथग्भावं तासां नेच्छन्ति सूरयः ॥ १८ ॥

वाक्यं हि पुरुषाधीनरचनं लौकिकं सदा ।
शङ्क्यमानायथार्थत्वं नार्थनिश्चायकं स्वतः ॥ १९ ॥

प्रामाण्यहानिरित्यत्राह–[1]वेदस्त्विति । वेदो नार्थनिश्चायकः अलौकिकार्थत्वात्–लौकिकप्रमाणानवगम्यार्थत्वादित्यर्थः । यदर्थनिश्चायकं तल्लौकिकार्थं दृष्टं, यथा प्तवाक्यम् । तथा, वेदो नार्थनिश्चायकः, वक्तुरभावात्, यदित्थं तदित्थम्, यथा समुद्रघोष इति । यदर्थनिश्चायकं तद्वक्तृप्रणीतं दृष्टम्, यथाप्तवाक्यमि[2]त्यादि । तेन[3] प्रत्यक्षादिप्रमाणान्तरगम्यार्थत्वाभावात्, वक्तुरभावेनाप्तवाक्यवद्वक्तृप्रमाणगम्यार्थत्वाभावाच्च स्वतो निश्चयजनकत्वाभावान्न प्रामाण्यसिद्धिरिति पूर्वः पक्षः ॥१६॥

सिद्धान्तमारभते–अत्रेति । अख्यातौ सर्वज्ञानानां यथार्थत्वसाधनादसत्यर्थे ज्ञानजनकत्वं शब्दस्यासिद्धमित्यसिद्धो हेतुरित्यर्थः ॥१७॥

किंच ज्ञानानां व्यभिचारित्वसंभवेऽपि लौकिकशब्दस्य व्यभिचारिज्ञानजनकत्वं नास्ति, व्याप्त्यनपेक्षस्य लौकिकशब्दस्य ज्ञानजनकत्वाभावादित्याह–**श्रूयतामिति** । **तासां नरगिरामित्यर्थः** ॥१८॥

लौकिकवाक्यानामनुमानानपेक्षयाऽर्थानिश्चायकत्वे हेतुमाह—**वाक्यं हीति** । हिर्हेतौ, पुरुषतन्त्रा प्रवृत्तिः सर्वत्र सत्यासत्यसाधारण्यदर्शनात्, स्वात्मन्येवासत्यर्थे वाक्यप्रयोगदर्शनाच्चानुपलब्धार्थं प्रत्यपि वाक्यं प्रयोक्तुं शक्यमिति स्वात्मन्येव तावत्सर्वेषामवगतिरस्ति । अतः पुरुषोऽपि तं कर्तुमकर्तुमन्यथाकर्तुं स्वविषये शक्नोतीति शब्दस्यार्थव्यभिचारदर्शनाभावेऽपि प्रथमप्रयोग एव पुरुषाधीनरचनं तं शब्दं न विश्वसतीति; श्रुतमात्र एव संशयोऽस्तीति पुरुषाधीनत्वं शंकाकारणमित्यर्थः। यदुक्तमेकदेशिना

---

[1] न च वेदवाक्यानामाप्तवाक्यत्वेन प्रामाण्यमभ्युपगन्तुं न शक्यत इत्याह—वेदस्त्विति, इति ग पुस्तके पाठः ।

[2] इति व्यतिरेकीति पाठः क पुस्तके ।

[3] तेनेत्यादिः; पूर्वः पक्ष इत्यन्तः पाठो न दृश्यते ग पुस्तके ।

अन्योन्यानन्विताथानि पदान्यपि हि मानवाः ।
रचयन्तो विलोक्यन्ते तेन नान्वयनिश्चयः ॥ २० ॥

केचित्तावद् भ्रमेणैव केचिदाशयदोषतः ।
प्रमादात्केऽप्यशक्तेश्च केऽप्यनन्वितवादिनः ॥ २१ ॥

शब्दानां श्रुतमात्र एव कथं संशयः। सर्वत्र तथ्यातथ्यरूपं वाक्यद्वयं दृष्टवतः पुरुषस्य वाक्यश्रवणसमनन्तरं कोटिद्वयं स्मरतोऽन्यतरकोटिनिश्चयरहितस्य संशयो भवति। तत्र तथ्यरूपमपि दृष्टं चेत्कथं सर्वस्यार्थसंस्पर्शित्वम्, अथादृष्टं कथं संशयः, कोटिद्वय-दर्शनाभावात्। तस्माच्छ्रुतमात्रकमेवार्थे न तावन्निश्चयायाषहमिति प्रलापमात्रम्। अतो न क्वचिदपि शब्दस्संशयहेतुः, किन्तु श्रवणसमनन्तरमेवार्थज्ञानमुत्पादयति। यदि परं शंकानिवृत्त्यर्थमाप्तत्वेन दोषाभावमात्रमवगम्यते, सर्वप्रमाणसाधारणं चेदं शंकित-दोषनिवृत्त्यौत्सर्गिकं प्रामाण्यमिति शब्दे न कश्चिद्विशेष इति; तदपि परिहृतं, पुरुषा-धीनत्वस्य शंकाकारणत्वेनोक्तत्वात्।

यदप्युक्तं—अदृष्टव्यभिचारस्य वाक्ये पूर्वं स्वव्यभिचारदर्शनाभावेन शंकाभावात्, प्रथममेव निश्चयज्ञानजनकत्वं दुर्वारमिति—तदप्यनेन परिहृतमेव ॥१९॥

किंच न केवलं स्वप्रवृत्तिदर्शनमेव शंकाहेतुः, किन्तु असत्यर्थे परेषां वाक्य-प्रयोगदर्शनादपि शंका भवतीत्याह—अन्योऽन्येति। तस्मात्पुरुषाधीनत्वं शंकाकारण-मिति श्लोकद्वयेनोक्तमिति द्रष्टव्यम् ॥२०॥

केचिच्छ्लोकद्वयमेवं व्याचक्षते—शब्दो न ज्ञानजनकः, व्याप्त्यपेक्षतया निश्चय-जनकत्वाभावात्। निश्चयजनकत्वाभावेऽपि शङ्क्यमानायथार्थत्वमपि द्वेधा, ततो पुरुषाणां स्वात्मन्येवासत्यर्थे वाक्यप्रयोग[१]दर्शनादिति प्रथमः प्रकारो—वाक्यं ह्रीत्यनेनोच्यते। परपुरुषाणामपि असत्यर्थे वाक्यप्रयोगदर्शनादिति द्वितीयप्रकारः—अन्योऽन्यानन्विताथानीत्यनेनोच्यते। स्ववाक्ये स्वप्रत्यक्षदृष्टार्थे परवाक्ये निश्चित-विपर्यये च वाक्ये, व्यभिचारशंकाया अभावेन ज्ञानजनकत्वप्रसंगादेव व्याप्तित्वान्निश्चय-जनकत्वाभावे व्यभिचारित्वशंका न साक्षाद्धेतुः। किंतु निश्चयोत्पत्तिसामग्रीभूतयथार्थ-तात्पर्यनिश्चयविरोधित्वान्निश्चयजनकत्वाभावं प्रति परंपरया हेतुरित्यभिप्रायः ॥१९-२०॥

नन्वनन्वितार्थपदरचनायां को हेतुरित्यत्राह—केचित्तावदिति। अतस्मिंस्त-द्बुद्धिर्भ्रमः। [२]आशयदोषो बुद्धिदोषः। अनभिसन्धिपूर्वकमकस्मादेव प्रवृत्तिः प्रमादः। अन्यथा वक्तुकामेन हिक्कादिनाऽन्यथाप्रवृत्तिरशक्तिः। तेन भ्रमादिचतुष्टय-मुक्तम् ॥२१॥

---

[१] प्रयोगसौकर्यदर्शनात् इति क—पुस्तके पाठः

[२] मनोदोष इति ग० पु० पाठः।

तदुक्तानां पदार्थानां यद्यप्यन्वययोग्यता ।
तथाप्यनन्वितस्यापि दृष्टेनान्वयनिश्चयः ॥ २२ ॥
तत्र निश्चयशब्देन ज्ञानमेवाभिधीयते ।
अन्वयानिश्चये तेन ज्ञानमेवास्ति नान्वये ॥ २३ ॥
शङ्क्यमानायथार्थत्वरचनं तेन पुंवचः ।
श्रुतमात्रकमेवार्थे न तावन्निश्चयावहम् ॥ २४ ॥
यावद्वक्तुरविज्ञातं पूर्वभाविप्रमान्तरम् ।
विवक्षितार्थविषयमिन्द्रियार्थनिबन्धनम् ॥ २५ ॥
तस्य ज्ञानं च वाक्येन लिङ्गभूतेन गम्यते ।
ज्ञात्वैवार्थं ब्रवीतीति य एवमवधारितः ॥ २६ ॥
तस्य ज्ञानेन नियतं वाक्यं ज्ञानानुमापकम् ।
ज्ञानं चार्थाविनाभावि तेनार्थेऽपि विनिश्चयः ॥ २७ ॥

आप्तोक्तानामन्वययोग्यत्वेऽप्यन्यत्रानन्वितस्यापि दृष्टेनान्वयनिश्चयजनकत्वमित्याह—तदुक्तानामिति ॥२२॥

ननु तर्हि ज्ञानमात्रजनकश्शब्दो न निश्चयजनकः, न च ज्ञानमात्रमेव निश्चयशब्देनोच्यते। यतो निश्चयाभावेऽपि संशयोहानध्यवसायात्मकं विज्ञानं दृष्टम्। तेनान्वयानिश्चयेऽप्यन्वयज्ञानजनकश्शब्द इत्याशंक्याह—तत्र निश्चयशब्देनेति। ज्ञानमनिश्चयात्मकमिति विरुद्धम्, अवभासमानस्य निश्चितविषयैकान्तव्यवहारप्रवर्तकं ज्ञानं निश्चयशब्देनोच्यते, ततश्चान्वयानिश्चयेऽन्वयज्ञानमेव नास्ति। ऊहस्तु स्मृतिविशेष इत्यख्यातौ प्रतिपादयिष्यते। अनध्यवसायस्तु न ज्ञानम्,[१] किन्तु जिज्ञासेति तत्रैव प्रतिपादयिष्यते ॥२३॥

तेन पुरुषाधीनतया प्रतिबद्धस्वाभाविकशक्तिस्तावच्छ्रुतमात्रकमेव बोधं न जनयति, यावदन्यतोऽर्थे न निश्चय इत्याह—शंक्यमानेतिद्वयेन ॥२४-२५॥

[२]ननु कीदृग्भूतेन वाक्येन ज्ञानमनुमीयत इत्यत्राह—तस्येति। यः प्रमाणान्तरेणार्थं ज्ञात्वैव वाक्यं ब्रवीतीत्यवधारितः तस्य ज्ञानं तेन वाक्येनानुमीयते इति ॥२६॥

नायमशक्तः, न च प्रमादी संभवदेतदर्थविषयप्रमाणस्सकलाशयदोषरहितश्च नायमविज्ञायान्वयमन्वितार्थानि पदानि प्रयुङ्क्त इति यो ह्येवमवधारितः, तस्य वाक्यप्रयोगस्यान्वयज्ञानपूर्वकत्वात्तेन वाक्येन तस्यान्वयज्ञानं प्रथमं तावदनुमीयते। ज्ञानानां ज्ञेयाविनाभावित्वादन्वयज्ञानाच्च अन्वयोऽप्यनुमीयते, ततोऽर्थो निश्चीयत इति ज्ञेयानुमाने ज्ञानं भवत्येव लिङ्गमित्याह—तस्येति ॥२७॥

[१] 'किन्तु' इत्यादिः 'प्रतिपादयिष्यते' इत्यन्तः पाठो ग—पु० नास्ति

[२] ननु तर्हि कीदृक् वाक्यं ज्ञानस्य लिंगं स्यादिति पाठो ख पुस्तके दृश्यते ।

तत्रार्थे निश्चिते पश्चात्सोऽर्थो वाक्येन गम्यते ।
तस्यां दशायां वाक्यस्य तस्य स्यादनुवादता ॥ २८ ॥

एवं[१] निश्चितेऽन्वये निवृत्तानन्वयशंकाद्वाक्यादनुवादरूपेणार्थनिश्चयो जायत इत्याह—तत्रार्थ इति ।

ननु भवतां वक्तृज्ञानानुमानं किं पुंवाक्यमात्रात् ? आहोस्वित्प्रत्ययितवाक्यविशेषात् । न तावदाद्यः कल्पः, अतिप्रसंगात् । नापि द्वितीयः, यदवस्थस्य वक्तृबुद्ध्यनुमापकत्वं तदवस्थस्यार्थाभिधायकत्वमेव युक्तमिति न वक्तृज्ञानानुमानम् । उच्यते—नानुमापकावस्थस्यार्थाभिधायकत्वं युक्तम् । तथाहि—श्रोतुरिन्द्रियविषयस्य अनाप्तवाक्यादपि लोकेऽभिधानदर्शनादाप्तत्वं नाव्यभिचारे प्रयोजकं तत्पुत्रत्वादिति हेतुवत् । जनिष्यमाणस्तच्चिह्नः तत्पुत्रत्वादित्यत्र हेतोः प्रयोजकत्वं नास्ति । तस्मात्प्रमाणान्तरप्रतीतार्थविषयत्वमेवाव्यभिचारे प्रयोजकमित्यनुमापकत्वमेव नाभिधायकत्वम् ।

अथवा मितिनिर्णयादेव सन्देहापहृतिः । तन्निर्णयो हेतुभूताप्तत्वाद्यवधारणादेवेति सन्देहे निर्णयस्य सन्देहापनोदनत्वेन प्रसिद्धत्वात् । तेनैव सन्देहापाकरणं कल्पनालाघवायेति नाप्तवाक्यस्याभिधायकत्वम् ।

अथवा सन्देहनिर्णययोः भिन्नविषयत्वादाप्तविषयो निर्णयः, अर्थविषयस्सन्देहः । एकविषयो हि निर्णयः सन्देहमपाकरोति, न भिन्नविषयः । तस्मादर्थगतसन्देहापनोदनस्यार्थनिर्णयाप्त्यवधारणं हेतुरिति नाप्तवाक्यादभिधानम् ।

अथवा अयथार्थत्वशङ्कया तावत्प्रथममनभिधानम् । यस्य वाक्यस्य अभिधानशक्तिर्नास्ति तदयथार्थम् । यस्य त्वस्ति तद्यथार्थम् । तेन किं सदर्थमिदं वाक्यम्, उतासदर्थमित्येवंरूपा यथार्थत्वशंका, तदपनयश्च सदर्थमेवेतिनिर्णयरूपः । तेनार्थसत्यत्वे सत्येव तावद्वाक्यस्याभिधानावसरः ।

अर्थनिश्चयश्चानुमानरूपादेवेत्यनुमानमयथार्थत्वशंकायामपनीतायामेवेत्यंगीकरणीयम् ।

नचैतावता पुरुषमात्रवाक्यात्समीचीनार्थबुद्ध्यनुमानप्रसंगः । संबन्धनियमस्यासिद्धत्वात्संबन्धनियमस्त्वेवंआशयदोषप्रमादाशक्तिभ्रान्तिकारणरहितस्य संभवदेतदर्थविषयप्रमाणस्य च यद्वाक्यं तत्प्रतिपाद्यार्थविषयसमीचीनबुद्धिनियतमवधारितमिति तादृशादेव वाक्याद् बुद्ध्यनुमानम् । तेनानुमानात्प्रागभिधानबुद्ध्यभावात्सिद्धमनुमापकत्वम् ।

नन्वेवमन्तर्भावितार्थनिश्चयमाप्तत्वावधारणमिति नाप्तवाक्याल्लिङ्गाद्गम्यं प्रमेयमवशिष्यते । सत्यम्, अन्तर्भावितार्थनिश्चयमाप्तत्वावधारणमिति पञ्जिकाकृता शास्त्रपरिच्छेदे-"अभ्रान्तत्वं नाम पुरुषस्य यथार्थज्ञानयोगित्वम् । तद्यथार्थत्वं यस्य यथा प्रतीयमानोऽर्थोऽस्ति तेन समीचीनज्ञाननिश्चयोऽन्तर्भावितार्थनिश्चयादेवेति न संशयनिवारण-

[१] इत आरभ्य ज्ञानानामित्यन्तः पाठो ग—पु० न दृश्यते ।

पूर्वं तु[1] लिङ्गभूतं तत् वक्तुर्ज्ञानावधारणे ।
वक्तृज्ञानप्रसूतं हि वाक्यं तत्कार्यमिष्यते ॥ २९ ॥
कार्यात्कारणसिद्धिश्च सर्वेषामनुमानतः[2] ।
पौरुषेयमतो वाक्यं न शास्त्रमभिधीयते ॥ ३० ॥

मात्रे पुरुषविशेषज्ञानं व्याप्रियते, किन्त्वर्थनिश्चयादावेवेति । निश्चिते चार्थे निवृत्ते संशये वाक्यमर्थनिश्चयं कुर्वदनुवादत्वादप्रमाणमिति" [ शा० परि० ] स्वयमेवोक्तम् ।

यत्त्वत्र भवनाथेनोक्तं—"नाप्तपुरुषवाक्याल्लिङ्गाद्गम्यं प्रमेयं नावशिष्यत इति वाच्यम् । यस्माद्वाक्ययोग्यार्थे निरस्तभ्रमादिचतुष्टयोऽयमिति सामान्येनाप्तत्वमवधारितवतोऽपि विशेषवाक्यदर्शनोत्थस्य संशयस्य तन्निर्णयापनोद्यत्वात् तत्प्रयुक्तमिदं वाक्यमिति विशेषे व्याप्तिमनुसन्धाय व्याप्तिबलान्मूलानुमाननिश्चयाद्गम्यमस्त्येव । यथा यो यो धूमवान्स सोऽग्निमानिति सामान्येन गृहीतव्याप्तिकस्यैव धूमविशेषदर्शनादग्निविशेषानुमानम् । एवमाप्तवाक्यविशेषात्तदर्थविशेषविषयं विज्ञानमनुमेयमस्त्येव" [ नय० वि० पृ० ५१ ] इति, तत् परिहारविभवादुक्तम् ।

नन्वनुमेयस्यार्थविशेषप्रमितिरूपत्वाद्वक्तृज्ञानानुमाने पक्षधर्मताबलेन प्रमेयसिद्धिरस्त्येवेति किमर्थं ज्ञानं चार्थाविनाभावीत्यादिना द्वितीयानुमानमुपन्यस्तम् ? उच्यते । यत्र विशिष्टेनैवार्थेन लिङ्गस्य व्याप्तिग्रहः तत्र विशेषणस्यापि पक्षधर्मताबलेन सिद्धिरस्त्येव, यत्र तु विशेषणेन सह लिङ्गस्य न व्याप्तिः, न तत्र लिङ्गाद्विशेषणसत्तानिश्चयः । यथा रात्रौ स्वरविशेषश्रुत्या देवदत्तपुत्रत्वेऽनुमितेऽपि न देवदत्तसत्तानिश्चयः; तद्वदिहापि वक्तृज्ञानमात्रस्यैव कारणत्वात्कार्याद्वाक्याज्ज्ञानमात्रमेवानुमेयम् । प्रमाणस्य पुनः प्रमेयाव्यभिचारात्, प्रमेयस्यापि निश्चय इति द्वितीयानुमानं दर्शितम् ॥२८॥

नन्वनुमानेऽपि शङ्काप्रतिबन्धस्समानः । मैवम् । शङ्का हि ज्ञातृदोषत्वाच्छब्दादर्थनिश्चयं प्रतिबध्नाति, नानुमानम् । तथाहि—मूलप्रमाणाविनाभावानुसंधाने वाक्यात्प्रवर्तत एवानुमानम्, अविनाभावस्यापुरुषतन्त्रत्वात् । शब्दोच्चारणं हि पुरुषतंत्रत्वादविश्वास्यं, नानुमानम् । तस्मात्कार्यात्कारणविषयमनुमानमव्याहतं प्रवर्तत एवेति । तेन वक्तृज्ञानावधारणे लिङ्गभूतं भ्रान्त्यादिरहितस्य वाक्यं विवक्षाद्वारप्रमाणान्तरकार्यमित्याह—पूर्वन्त्विति ।

वक्तृज्ञानप्रसूतं, वक्तृज्ञानेनोत्पन्नमित्यर्थः ॥२९॥

ननु वाक्याद्वक्तृज्ञानमनुमीयत इति कथमुच्यते, भवन्मते ज्ञानानां स्वयंप्रकाशत्वेन प्रत्यक्षत्वादित्यत्राह—कार्यात्कारणसिद्धिश्चेति । स्वज्ञानं स्वस्य स्वयंप्रकाशत्वेन प्रत्यक्षं, परज्ञानं परस्यानुमेयमेवेति प्रमाणभूताद्वाक्यात्कारणभूतवक्तृज्ञानानुमानं सर्वेषामभ्युपगन्तव्यमित्यर्थः । यस्मात्कार्यभूताद्वाक्यात्कारणभूतं प्रमाणज्ञानमनुमाय

---

[1] चेति मुद्रितपुस्तके पाठः ।

[2] अनुवादतः इति मुद्रितपुस्तके पाठः ।

एवञ्च सति लिङ्गस्य व्यभिचारोऽयमीर्य्यते ।
न शास्त्रस्येति तस्य स्यादर्थासंस्पर्शिता कुतः?॥ ३१ ॥
लिङ्गस्यापि न चैवायं व्यभिचारोऽस्ति किन्तु यः ।
लिङ्गालिङ्गे न शक्नोति विवेक्तुं मूढ़चेतनः ॥ ३२ ॥
तस्यालिङ्गे लिङ्गरूपसाधारण्यनिबन्धनः ।
लिङ्गसंव्यवहारोऽयं विपरीतः प्रवर्तते ॥ ३३ ॥
श्रुतिलिङ्गाधिकरणे विस्तरेणैतदीरितम् ।
तेन न व्यभिचारोऽस्ति द्वयोर्लैङ्गिकशास्त्रयोः ॥ ३४ ॥
नन्वर्थ एव प्रथमं पुंवाक्येभ्योऽवगम्यते ।
अन्यथा हि कथं वक्तुर्धीर्विशिष्टाऽनुमीयते ?॥ ३५ ॥
अर्थेनैव विशेषो हि निराकारतया धियाम् ।
नचाप्रतीतेनार्थेन विशेषश्चाऽवकल्पते ॥ ३६ ॥

तत एव कारणभूतलिङ्गात्तद्विषयार्थनिर्णये सति वाक्यादनुवादरूपेणैवार्थनिश्चयः, तस्मात्पौरुषेयं वाक्यं न शास्त्रमित्याह—पौरुषेयमतो वाक्यमिति । अज्ञातज्ञापनाभावादिति भावः ॥३०॥

उक्तप्रकारेण लिङ्गभूतस्य पौरुषेयवाक्यस्याव्यभिचारादपौरुषेयवेदस्य व्यभिचारगन्धाभावाच्च, शब्दमात्रस्य व्यभिचारेण शब्दमात्रस्यार्थासंस्पर्शित्वाच्छास्त्रप्रमाणमुच्छिन्नं स्यादिति कथमुच्यत इत्याह—एवं चेति ॥३१॥

ननु यद्यपि शब्दस्य व्यभिचारो नास्ति, अव्यापृतत्वादर्थे, तथापि वक्तृज्ञानानुमापकत्वेन लिङ्गत्वे सति भवत्येवानुमानस्य व्यभिचार इत्यत्राह—लिङ्गस्यापीति । लिङ्गभूतस्याप्तवाक्यस्यानुमानेऽपि न व्यभिचारः । अनाप्तवाक्यस्यार्थनियतत्वाभावान्न लिङ्गत्वम् । तेनानुमानेऽपि लिङ्गालिङ्गविवेकाग्रहादलिङ्गे लिङ्गव्यवहार इति न लिङ्गस्य व्यभिचार इत्यर्थः ॥३२॥३३॥

एतत्सर्वं श्रुतिलिङ्गाधिकरणे विस्तरेणोक्तमित्याह—श्रुतिलिङ्गाधिकरण इति । निगमयति—तेनेति । लिङ्गभूतस्याप्तवाक्यस्य लैङ्गिकस्य वक्तृज्ञानस्य च न कापि व्यभिचार इत्यर्थः ॥३४॥

अत्र चोदयति—नन्वर्थ इति द्वयेन । आप्तवाक्याद्वक्तृज्ञानानुमाने सत्यनुमीयमानस्य ज्ञानस्य विशिष्टार्थविषयत्वादेव तथैवानुमाना[१]न्नागृहीतविशेषणा विशेष्ये बुद्धिरिति विशेषणभूतार्थप्रतीतिर्ज्ञानानुमानात् पूर्वमेव वाक्यादभ्युपगन्तव्या । अनुमानात्पूर्वमेवार्थप्रतीत्यभ्युपगमे तस्याश्शाब्दत्वमपि दुर्निवारम् । अशाब्दं चेत्

[१] आकृत्यधिकरणसिद्धोऽयं न्यायः । १-३-११ ।

अत्र ब्रूमोऽयथार्थत्वशङ्कयाऽर्थो न निश्चितः।
अनिश्चितश्च न ज्ञात इति तावद्व्यवस्थितम् ॥ ३७ ॥
किंत्वज्ञातेऽपि [१]वाक्यार्थे पदजाते श्रुते सति।
विमर्शो[२] जायते श्रोतुरीदृशो मतिशालिनः ॥३८॥
अन्योन्यान्वययोग्यार्थं पदजातं ब्रवीत्ययम्।
आप्तस्तेनामुना नूनं ज्ञातस्तेषां समन्वयः ॥ ३९ ॥
न कदाचिदसंबद्धानर्थानेष विवक्षति।
न वाऽप्रतीतसम्बन्धानिति दोषो न कश्चन ॥ ४० ॥

तस्यां दशायामर्थप्रतीतिः कुतस्स्यात्। न च स्मृतिरिति शक्यते वक्तुम्। अननुभूते वाक्यार्थे सा नास्तीति स्मृत्यसंभवात्। तस्मात्प्रतीत्युपगमे शाब्दतैव। अप्रतीतं चेद्विशेषणं बोध एवानुपपन्न इत्यर्थविशिष्टज्ञानानुमानं न स्यादित्यर्थः ॥३५॥३६॥

परिहरति—अत्र ब्रूम इति। अनुमानात्पूर्वमयथार्थत्वशंकया वाक्यादर्थनिश्चयो न जातः। अनिश्चितत्वादेवार्थो न ज्ञातो भवति। अज्ञातेऽपि वाक्यार्थे शब्दश्रवणानन्तरं विमर्शाख्यं स्मृतिज्ञानं जायत इति ॥३७॥३८॥

ननु कीदृशं तद्विमर्शाख्यं स्मृतिज्ञानमित्यत्राह—**अन्योन्यान्वययोग्यार्थमिति**। वाक्ययोग्यार्थोपलक्षितार्थोपलब्धिः पूर्वदर्शनाधीनाऽस्त्येव। न च तावताऽर्थास्तित्वनिश्चयः, किन्तु तद्विशिष्टज्ञानगतैवास्तिता। यथा लोके सूक्ष्मेक्षिकां कचित्कुर्वन्तं दृष्ट्वा चक्षुर्योग्यमर्थं दिदृक्षतीत्यनुमिनोति। न च तावता तत्र सूक्ष्मा अर्थास्सन्तीति निश्चीयते, असत्यप्यर्थे योग्यतायास्संभवात्।

तस्मादिह विशिष्टान्वययोग्यवाक्यप्रयोगे सति विशिष्टान्वयगोचरपदशक्तिविषयाव्युत्पन्नस्य बुद्धिर्भवत्येव। तथा घटकरणसमर्थः कुलाल इत्युक्त्या घटास्तित्वनास्तित्वरूपबहिष्कारेण पदशक्तिरूपविशेषणात्मनान्वयविशेषो विषयीभवति। अननुभूतेऽपि विषये तर्कादिवत्स्मृतिः संभवति। नानुभूतत्वं स्मृतित्वे निबन्धनम्, किन्तु [३]ज्ञप्तौ सापेक्षत्वमिति वक्ष्यामः[४] ॥३९॥४०॥

---

[१] शब्दार्थे, इति. मु० पु० पाठः।

[२] विमर्षं इति मु० पाठः।

[३] संशयोहानध्यवसायतर्काणां ज्ञानत्वेन कैश्चित् गणनं कृतं दृश्यते। तत्र न्यायसिद्धिकारः इत्थं मन्यते—तथाहि संशयः विशेषणस्मरणमेव। ऊहस्तु स्मृतिविशेषः। अनध्यवसायस्तु जिज्ञासेति। एतेषां संस्कारजन्यत्वाभावेऽपि ज्ञप्तौ सापेक्षत्वेन स्मृतित्वमुपपद्यते। संस्कारजन्यत्वं स्मृतेर्लक्षणन्तु प्रायिकमिति। ज्ञप्तौ सापेक्षत्वं स्मृतिलक्षणं नन्दीश्वरविरचिते प्रभाकरविजये चतुर्थे प्रमाणप्रकरणे समुपलभ्यते। तदेवात्र नारायणेनोपन्यस्तमित्यलमक्षरक्षरणेन।

[४] प्रमाणलक्षणनिरूपणावसरे इति शेषः।

नन्वेवं तुरगारूढस्तुरङ्गं विस्मृतो भवान् ।
वेदप्रामाण्यसिद्ध्यर्थमुत्थितस्तत्प्रहीणवान् ॥ ४१ ॥
लोकावगतशक्तिर्हि वेदे शब्दोऽवबोधकः ।
लोके च लिङ्गभावेन प्रतीतिर्भवताऽऽश्रिता ॥ ४२ ॥
स्वयं त्विह समाधानमाचार्येण[1] प्रदर्शितम् ।
शब्दस्याऽर्थेन सम्बन्ध इति दर्शयता सता ॥ ४३ ॥
अन्विताार्थाभिधायित्वे पदानां हि स्थिते सति ।
विशिष्टा वक्तृधीर्ज्ञातुं शक्यते नान्यथा यतः ॥ ४४ ॥
ज्ञातेषु हि पदार्थेषु श्रोता वक्तरि कल्पयेत् ।
अन्योन्यान्वयविज्ञानं नाऽन्यथेत्युपदर्शितम् ॥ ४५ ॥
पदानां तत्पदार्थेषु शक्तिः स्वाभाविकी स्थिता ।
पुंवाक्येषु विसंवादशङ्कया सा तिरोहिता ॥ ४६ ॥

चोदयति—नन्वेवं तुरगारूढ इतिद्वयेन । लोके वृद्धव्यवहारेऽवगतशक्तिश्शब्दो वेदेऽवबोधकः लोके च ज्ञानानुमाने लिङ्गत्वेनाभिमत इति, वेदेऽपि लिङ्गत्वमेव स्यात् । ततश्च लौकिकशब्दवद्वैदिकानामप्यनुवादकत्वमेवेति न प्रामाण्यसंभव इति ॥४१॥४२॥

परिहरति—स्वयं त्विति । [2]औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध इति वदता सूत्रकारेण स्वयमेव परिहृतम् ॥४३॥

ननु केन प्रकारेण सूत्रकृता परिहृतमित्यत्राह—अन्विताार्थाभिधायित्व इति । पदानामन्विताार्थाभिधायित्वे स्थिते सत्येवान्विताार्थविशिष्टवक्तृज्ञानमनुमातुं शक्यते, नान्यथेति ॥४४॥

ततः किमित्यत्राह—ज्ञातेषु हीति । श्रोता स्वयं ज्ञातेष्वेव पदार्थेष्वन्योन्यान्वयविज्ञानं वक्तरि कल्पयति, तदा पदार्थज्ञानं च पदानां स्वाभाविकशक्त्येति तत्तत्पदानां तत्तत्पदार्थेषु स्वाभाविकी शक्तिरस्तीति न वेदप्रामाण्यहानिरिति पौरुषेये वाक्ये विमर्शोत्तरकालं वाक्यादनुवादरूपा धीर्जायमाना न स्मृतिरूपा, किन्तु अनुभूतिरूपैव, अनपेक्षस्वभावशब्दजत्वात् । तत्रानुभूतिरूपं यदनपेक्षत्वं तन्नाभिव्यक्तं पुंवाक्यप्रयुक्तशङ्कानिरासार्थं मानान्तरापेक्षत्वात् । अतस्सापेक्षत्वमौपाधिकम् । शब्दस्य स्वभावशक्तिर्ह्यनुभवजनन एवावधृता लोके । वेदे तूपाधिविरहादनपेक्षत्वाभिव्यक्तिरिति ।

ननु तर्हि पौरुषेयेऽपि वाक्ये स्वाभाविकशक्त्यार्थावगतिरिति, किमनेनायासेनेत्यत्राह—पुंवाक्येष्विति । स्वाभाविकी शक्तिरेव पौरुषेये वाक्ये पौरुषेयत्वादेव विसंवादशङ्कया तिरोहिता । वेदे तदभावान्न तिरोधानमित्यर्थः ॥४५॥४६॥

---

[1] सूत्रकारेणेत्यर्थः । [2] जैमिनिसूत्रम्—१, १, ५ ।

वेदेषु त्वस्मर्यमाणकर्तृकेषु स्वरूपतः ।
प्रमाणान्तरसंस्पर्शरहितार्थावबोधिषु ॥ ४७ ॥
न कर्तुरनुमानं स्याद्वाक्यत्वादिति लिङ्गतः ।
न कर्ता शक्नुयाद्वाक्यं कर्तुं कार्ये ह्यलौकिके ॥ ४८ ॥
तेन वेदे विसंवादशङ्का नास्ति कथंचन ।
अर्थनिश्चयहेतुत्वादर्थसंस्पर्शिता स्थिता ॥ ४९ ॥

नन्वेवं वेदेऽपि वेदवाक्यानि पौरुषेयाणि, वाक्यत्वात्, भारतादिवदित्यनुमानसंभवात् पौरुषेयत्वाविशेषाल्लौकिकशब्दवद्वेदेऽपि स्वाभाविकी शक्तिर्विसंवाद[१]-शंकया तिरोहितैवेत्यत्राह—वेदेष्विति द्वयेन । स्वरूपतोऽस्मर्यमाणकर्तृकेषु प्रमाणान्तरसंस्पर्शरहितार्थाभिधायिषु वाक्यत्वादिति लिङ्गेन कर्तुरनुमानं न युक्तम्। स्वरूपतोऽस्मर्यमाणकर्तृकेषु, स्वरूपतः प्रमाणान्तरसंस्पर्शरहितार्थाभिधायिष्विति वान्वयः । [१]अपौरुषेया वेदाः व्यवहाराविच्छेदे सत्यस्मर्यमाणकर्तृकत्वात् यदित्थं तदित्थं यथा घटशब्दः[२] । यन्नेत्थं तन्नेत्थं यथा भारतादिवाक्यम् इति वा व्यतिरेकि । चिरतरनिखाते धने जीर्णकूपादौ च व्यभिचारनिवृत्त्यर्थं व्यवहाराविच्छेदे सतीत्युक्तम्। एतदेव स्वरूपत इति दर्शितम्।

किंच वेदवाक्यानि पौरुषेयाणीति प्रतिज्ञा न युक्ता। प्रमाणान्तरागोचरार्थप्रतिपादनपरं हि वेदवाक्यम्। प्रमाणान्तरगोचरार्थप्रतिपादकं हि पौरुषेयम् वाक्यम् । तेन प्रमाणान्तरागोचरार्थप्रतिपादकं वाक्यं प्रमाणान्तरगोचरार्थप्रतिपादकमिति साध्यमाने माता मे वन्ध्येतिवत्स्ववचनविरोधाद् दुष्टा । तथा वाक्यत्वादिति हेतुः भागासिद्धः। द्रुमादीनामवाक्यत्वात्। वाक्यत्वादिति किं विधिवाक्यत्वमभिप्रेतम्, उत अनुवादवाक्यत्वम् ? न तावत्प्रथमः, भारतादीनां विधायकत्वाभावेन साधनविकलता दृष्टान्तस्य। नापि द्वितीयः, विध्युद्देशस्यापि विद्यमानत्वात्, सर्ववाक्यानामनुवादकत्वाभावात् । तथास्मदादिशक्यक्रियं हि वाक्यं पौरुषेयम्, न वाक्यत्वमात्रमित्यप्रयोजकोऽपि । तथा वेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वादिदानीन्तन[३]-वेदाध्ययनवत् ॥४७–४८॥

निगमयति—तेनेति । तेनापौरुषेयत्वाल्लौकिकशब्दवद्विसंवादशङ्का नास्तीति शक्तेस्तिरोधानाभावादेव स्वयमेवार्थनिश्चायकत्वान्नार्थानिश्चायकत्वमित्यर्थः ॥४९॥

---

[१] इत्यनुमानेन अपौरुषेयत्वसिद्धिः पु मु० पु० पाठः अधिकः ।

[२] उदयनाचार्योक्तमनुमानमिदं द्रष्टव्यम् । (कु० स्त० १)

[३] श्लोकवार्तिके वाक्याधिकरणे विद्यमानं वार्तिकं
"वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यात् अधुनाध्ययनं यथा ॥" इति अत्रानुसंधेयम् ।

व्यपगतवाङ्मलपङ्कः प्रोद्धृतपरयुक्तिकण्टकप्रकरः ।
सृष्टः प्रगुणतरोऽयं शालिकनाथेन नीतिपथः ॥ ५० ॥

इति श्रीमहामहोपाध्यायशालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां नीतिपथो नाम द्वितीयं प्रकरणं समाप्तम् ॥२॥

इदानीं स्वकृतस्य प्रकरणस्य, ग्रन्थकर्तुः स्वस्य च संज्ञां, नीतिपथाख्यस्य प्रकरणस्य लोकमहापथस्य च सारूप्यमुच्यते—व्यपगतवाङ्मलपङ्क इति । विशेषेणापगतो व्यपगतः परवाङ्मलरूपपङ्कः । महापथेप्येवं न गन्तव्यमित्येवंरूपा वाक् विष्ठादिमलं पंकश्चाऽपगता इति व्यपगतवाङ्मलपङ्कः । पूर्वोक्तेन प्रकारेणोद्धृतपरयुक्तिरूपकण्टकप्रकरो नीतिपथः, महापथेऽपि न गन्तव्यमिति निषेधरूपपरयुक्तिः, तीक्ष्णकण्टकप्रकरश्च प्रोद्धृतः । अयं नीतिपथः प्रगुणतरश्शालिकनाथेन सृष्ट इत्यर्थः ॥५०॥

॥ इति प्रकरणपञ्चिकाव्याख्यायां जयपुरिनारायणकृतायां न्यायसिद्धौ नीतिपथो नाम द्वितीयं प्रकरणं समाप्तम् ॥

# अथ नयवीथी नाम तृतीयं प्रकरणम् ।

प्रकरणार्थप्रतिज्ञा—

यथार्थं[1] सर्वमेवेह विज्ञानमिति सिद्धये ।
प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते ॥ १ ॥

तत्र पूर्वपक्षः—

तत्र तावदिदं केचिदूचिरे चारुचेतसः ।
भ्रमसन्देहविज्ञाने अयथार्थे उभे इति ॥ २ ॥

ननु प्रमाणज्येष्ठं प्रत्यक्षमन्यसंप्रयोगेऽन्यविषयं दृष्टम्, यथा शुक्ताविदं रजतमिति । ततश्च संभवद्व्यभिचाराणि प्रमाणानीति चोदनाप्रामाण्यप्रतिज्ञा हेतुतस्समर्थनीयेति इमामाशङ्कामपनेतुं सर्वज्ञानानां यथार्थत्वं प्रतिपादनीयमिति मत्वाऽऽरभ्यमाणस्य प्रकरणस्य संप्रदाय-प्रतिपाद्य-प्रयोजनानि कथयति—**यथार्थं सर्वमेवेति । प्रभाकरगुरोरिति** संप्रदायो दर्शितः, **भावस्समीचीनः प्रकाश्यत** इति प्रतिपाद्यमुक्तम् । **सर्वमेवेदं विज्ञानं यथार्थमिति सिद्धय** इति प्रयोजनमुक्तम् ॥१॥

पूर्वपक्षमाह—**तत्र तावदिति** । [2]प्रमाणं स्मृतिः सन्देहो विपर्ययश्चेति चतुर्विधं ज्ञानम् । केचिदूहानध्यवसायविकल्पभेदात्सप्तविधं ज्ञानं मन्यन्ते । तत्र भ्रमसन्देहज्ञाने अयथार्थे । अतस्मिंस्तदिति प्रत्ययो भ्रमः । नानाकोट्यवलम्ब्येकं ज्ञानं संशयः । यथा स्थाणुर्वा पुरुषोवेति, तदुक्तम्—

---

[1] औत्पत्तिकसूत्रे कार्यरूपेऽर्थे उपदेश एव प्रमाणमिति व्यवस्थापितं टीकाकारेण । तदेव सिषाधयिषितमत्र पञ्चिकाकर्तुः ।

सामान्यानुगता शक्तिर्या काचन निरूपिता ।
तदन्वितो विशेषोऽपि तद्द्वारव्यपदेशभाक् ।

इति न्यायेन सर्वेषां ज्ञानानां याथार्थ्यसाधनेन तद् विशेषे उपदेशेऽपि फलिष्यतीत्याशयं मनसि निधाय नयवीथ्याख्यं तृतीयं प्रकरणमारभते यथार्थमित्यादिना ।

[2] प्रशस्तपादप्रणीते पदार्थसंग्रहाभिधे भाष्ये विद्यानिरूपणप्रस्तावेऽयथार्थज्ञानस्य चातुर्विध्यमुक्तं संशयविपर्ययस्वप्नानध्यवसायभेदेन । इमामेव शैलीमनुससार जगदीशतर्कालङ्कारस्तर्कामृते । तथाहि—अनुभूतपदार्थस्मरणैरदृष्टेन धातुदोषेण अदृष्टेन च स्वप्नो जायते इति स्वप्नं लक्षयामास । किञ्चिदिति विशेषादर्शनाज्जायमानं ज्ञानमनध्यवसाय इत्यनध्यवसायं लक्षयतिस्म । यदि निर्वह्निस्स्यात् निर्धूमस्स्यादिति तर्कमलिलक्षत् । तर्कस्वप्नानध्यवसायान् न्यायमतेन विपर्ययेऽन्तर्भावयामास । परिनिश्चिकाय चान्ते संशयविपर्ययभेदेनाऽयथार्थज्ञानस्य द्वैविध्यम् । विकल्पञ्च पातञ्जलास्स्वीकुर्वन्ति "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति वदन्तः । एतत्सर्वं मनसि निधायाऽऽह—प्रमाणमित्यादि ।

इदं रजतमित्येषा या शुक्तिशकले मतिः ।
सा चेद्यथार्था भ्रान्तित्वं तदा तस्यास्तु कीदृशम् ॥ ३ ॥

यथावस्थितवस्त्वाभमपि ज्ञानं यदा भ्रमः ।
प्रमाणेषु तदाऽऽपन्ना सर्वेषु भ्रमरूपता ॥ ४ ॥

विवेकाग्रहणं भ्रान्तिरिति चेन्नैतदीदृशम् ।
सुषुप्तेऽपि भ्रमापत्तेः सर्वभेदापरिग्रहात् ॥ ५ ॥

भेदाग्रहे गृहीते च यदि स्याद् भ्रमरूपता ।
दूरात् सामान्यमात्रस्य दर्शनं स्यात् भ्रमस्तदा ॥ ६ ॥

नानाकोटयवलम्ब्येकप्रत्ययस्संशयो मतः ।
साधारणविशेषाभ्यां विवादेन च स त्रिधा ॥ इति ।

ऊहो नाम संशयस्य परस्तान्निर्णयस्य पुरस्ताद्भवति, यथा बाह्यालिन्दप्रदेशे पुरुषेणानेन भवितव्यं, स्थाणुना च न भवितव्यमिति । अनिर्ज्ञाते वृक्षविशेष किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसायः । शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः । यथा खरविषाणम्, खपुष्पमिति । विकल्पस्य अयथार्थत्वं स्पष्टमेव ॥२॥

सर्वज्ञानानां यथार्थत्वपक्षे केषांचिज्ज्ञानानां भ्रान्तित्वमनुपपन्नम् । अतो भ्रान्तित्वानुपपत्त्या अयथार्थज्ञानं कल्प्यमित्येतदभिप्रायेणाह—**इदं रजतमित्येषेति** ॥३॥

ननु हिमशिलायां जलज्ञानवद्यथार्थस्यापि ज्ञानस्य भ्रमत्वमुपपद्यत एवेत्यत्राह—**यथावस्थितवस्त्वाभमिति** । सम्यग्रजतबोधवद्यदि यथार्थस्यापि ज्ञानस्य भ्रमरूपता स्यात्, तर्हि प्रमाणेष्वपि भ्रान्तित्वप्रसंग इत्यर्थः ।

ननु नेदमनिष्टम्, पीतशंखादिविज्ञानानां प्रमाणभूतानामपि भ्रान्तित्वदर्शनात् । सत्यम्, पीतशंखादिविज्ञानेषु तथाभावः, किन्तु सर्वेष्वपि प्रमाणेषु भ्रमरूपता प्रसज्येतेति प्रसङ्गमापादयतोऽभिप्रायः । अत एव **सर्वेषु भ्रमरूपतेत्युक्तम्** ॥४॥

शङ्कते—**विवेकाग्रहणमिति** । परिहरति—**नैतदिति** । न विवेकस्याग्रहणं भ्रान्तित्वेन संप्रतिपन्नम्, ग्रहणविशेषस्य भ्रान्तित्वेन प्रसिद्धेरित्यर्थः । किंचाग्रहणस्य भ्रान्तित्वेऽतिप्रसंग इत्याह—**सुषुप्तेऽपीति** । कुत इत्याह—**सर्वभेदेति** । सुषुप्त्यवस्थायां बाह्येन्द्रियोपरत्या सर्वभेदापरिग्रहादित्यर्थः ॥५॥

अथ पूर्वोक्तानिष्टद्वयपरिहारार्थं साधारणाकारग्रहणे सति विशेषाग्रहणं भ्रान्तिरित्येतदभिप्रायेण शंकते—**भेदाग्रह इति** । परिहरति—**दूरादिति** । स्थाणुर्वा पुरुषो वेत्यत्र च दूरादूर्ध्वत्वादिसामान्यमात्रग्रहणे सति स्थाणुपुरुषयोरसाधारणविशेषाग्रहणाद्भ्रान्तित्वप्रसङ्गः । अतो यथार्थत्वेत् भ्रान्तित्वानुपपत्तेः भ्रमज्ञानमयथार्थमेवेत्यभिप्रायः ॥६॥

यथार्थदर्शनत्वे च बाधकोऽपि न युज्यते ।
अज्ञातभेदग्रहणैर्न बाधकमतिर्भवेत् ॥ ७ ॥
यथार्थतापि चैतस्याः कथमित्यपि चिन्त्यताम् ।
एषा हि रजतत्वेन शुक्तिकामध्यवस्यति ॥ ८ ॥
रजतत्वं न शुक्तेश्च रजतस्य न शुक्तिता ।
तयोरन्योन्यभिन्नत्वं प्रत्यक्षेणावधारितम् ॥ ९ ॥
अथेयं रजतत्वेन न शुक्तिमवलम्बते ।
सामानाधिकरण्येन प्रतिपत्तिर्विरुध्यते ॥ १० ॥
रूप्यार्थिनः प्रवृत्तिश्च शुक्तौ स्यान्निर्निबन्धना ।
अग्रहोऽपि न भेदस्य प्रवृत्तौ कारणं यतः ॥ ११ ॥

किंच बाधकानुपपत्तेश्च भ्रमज्ञानस्यायथार्थत्वमेवेत्याह—**यथार्थदर्शनत्वे चेति**। प्रसक्तप्रतिषेधात्मा नेदं रजतमिति बाधकप्रत्ययो रजतेदमंशयोः सामानाधिकरण्यप्रतीति-रयथार्थेति ख्यापयतीत्यर्थः ।

अथागृहीतविवेक एव बाधकप्रत्ययव्यापार इति चेत्तत्राह—**अज्ञातेति**। सर्वे-षामपि पदार्थानां केनचिदाकारेणागृहीतविवेकत्वसंभवाद्बाध्यत्वप्रसंगः । तथा सर्वभेदा-परिग्रहात्सुषुप्तेरपि बाधकप्रत्ययप्रसङ्गः । अथ गृहीते भेदाग्रहे बाधकप्रत्यय इति चेत्तर्हि दूरात्सामान्यमात्रस्य दर्शनेऽपि बाधकप्रत्ययप्रसङ्ग इत्येवमादि द्रष्टव्यम् ॥७॥

तिष्ठतु तावदव्याप्त्यतिव्याप्तिकथा, एतस्यययथार्थतैव परीक्ष्यतामित्याह— **यथार्थतापीति**। एषा हि मती रजतत्वेन शुक्तिकामध्यवस्यति । तत्र शुक्तिरजतयोः प्रत्यक्ष-दृष्टयोरन्योऽन्यभिन्नत्वादेतयोर्वृक्षत्वशिंशपात्वयोरिवान्योन्यात्मकता न संभवति । तस्मा-च्छुक्तिकायामिदं रजतमिति प्रतीतिरेकैवायथार्था चेत्याह—**एषा हीति** ॥८॥

ननु यथा शुक्तौ शुक्तिज्ञानाच्छुक्तिता तथा शुक्तौ रजतज्ञानाद्रजततापि स्यादि-त्यत्राह—**रजतत्वमिति**। कुत इत्याह—**तयोरन्योन्येति**। प्रत्यक्षविरोधादित्यर्थः ।

ननु एतज्ज्ञानं शुक्तिमवलम्बत इति न शक्यते वक्तुम्, रजतनिर्भासरूपत्वा-त्तस्य । उच्यते—शुक्तिकामेवालम्बते दोषवशाद्रजताकारेण प्रथत इत्यन्यथाख्याति-वादिनोऽभिप्रायः ॥९॥

शङ्कते—**अथेयमिति**। परिहरति—**सामानाधिकरण्येनेति**। शुक्त्यवलम्ब-नाभावे सामानाधिकरण्येन प्रतीतिर्बाधिता स्यात् । सा च सर्वप्रामाणिकसिद्धा नापह्नवमर्हति । नेदं रजतमिति सामानाधिकरण्यप्रतीतिरपि भ्रमज्ञानस्यायथार्थत्वं साधयतीत्यर्थः ॥१०॥

ननु शुक्तौ रजताभावादिदंरजतयोस्सामानाधिकरण्यं न प्रथत इति चेत्तत्राह— **रूप्यार्थिन इति**। सामानाधिकरण्यप्रतीत्यभावे रजतार्थिनस्तदुद्देशाभिमुखा प्रवृत्तिर्न

रजतप्रतिपत्तिश्च नेयमन्धस्य जायते ।
तेनेयमिन्द्रियाधीना संयुक्ते चेन्द्रियं धियम् ॥ १२ ॥
समर्थमुत्पादयितुं शुक्तिसंयोगि चेन्द्रियम् ।
तेन सैवेन्द्रियेणेह रजतत्वेन गृह्यते ॥ १३ ॥
स्यान्मतं शुक्तिकामात्रमिन्द्रियेणावसीयते ।
तदेव सदृशत्वेन रजतस्मृतिकारणम् ॥ १४ ॥
सदृशप्रत्ययेनेह संस्कारोद्बोधहेतुना ।
तदित्युल्लेखरहिता रजते भवति स्मृतिः ॥ १५ ॥
स्मृतावस्यां मनोदोषात् तदित्यंशोऽवखण्डितः ।
तेनेन्द्रियानुकारित्वमन्यथासिद्धमित्यसत् ॥ १६ ॥

स्यात्, दृश्यते च प्रवृत्तिरिति सामानाधिकरण्यं प्रतीयत एवेति । अयमत्र प्रयोगः—विवादाध्यासितं रजतविज्ञानं पुरोवर्तिवस्तुविषयं, तदर्थिनस्तत्र नियमेन प्रवर्तकत्वात्, यद्यदर्थिनं यत्र नियमेन प्रवर्तयति तत् तद्विषयं, यथा समीचीनरजतज्ञानमिति[1] । नन्वग्रहणात्प्रवृत्तिर्न सामानाधिकरण्यज्ञानादिति चेत्तत्राह—अग्रहोऽपीति । सर्वत्राग्रहणं प्रवृत्तौ न कारणम्, तथात्वे सुषुप्तौ प्रवृत्तिप्रसंगः । अथ साधारणाकारग्रहणे सति विशेषाग्रहणं प्रवृत्तौ कारणमिति चेत्तर्हि दूरात्सामान्यमात्रस्य दर्शनेऽपि प्रवृत्तिप्रसंग इत्यादिप्रसंगोऽत्रापि द्रष्टव्यः ॥११॥

किंच कारणवशादयथार्थत्वमेवेत्याह—रजतप्रतिपत्तिश्चेति । इन्द्रियान्वयव्यतिरेकादिन्द्रियोत्था चेयं प्रतीतिरित्यवगम्यते । सा च पुरोदेशावस्थितसंप्रयुक्तशुक्तिकाद्रव्यसमानाधिकृतरजतग्रहणरूपैव जायत इत्ययथार्थ तैवेति ॥१२-१३॥

इदानीमिन्द्रियान्वयव्यतिरेकयोरन्यथासिद्धिमाशङ्कते—स्यान्मतमित्यादिना अन्यथासिद्धमित्यन्तेन । दोषसहितेन्द्रियेणेदमित्यपरिगृहीतविशेषाकारं भास्वरमात्रं प्रतीयते । प्रतीतं साधारणाकाररूपं भास्वरमात्रं सदृशतया रजतस्मृतिकारणं भवति । दोषसहितसंस्कारोद्बोधहेतुना सदृशग्रहणेन तदित्युल्लेखरहिता रजते स्मृतिर्जाता । अस्यां स्मृतौ मनोदोषात्तदित्यंशोऽवखण्डितः ।

एतदुक्तं भवति—इदं रजतमिति नेदमेकं विज्ञानम्, किन्तु ग्रहणस्मरणरूपे द्वे एते ज्ञाने, तत्रेदमित्यपरिगृहीतविशेषाकारं भास्वरमात्रग्रहणरूपं दोषसहितेन्द्रियसंप्रयोगजम् । तथा रजतमित्यपि प्रमुषिततदित्युल्लेखं दोषसहितसंस्कारजम् । संस्कारोद्बोधकन्तु दुष्टेन्द्रियजं सदृशग्रहणं परिकल्प्यते । ततश्चार्थयोर्ज्ञानयोश्च विवेकाग्रहणाद् गृह्यमाणमिदमाकारं स्मरणविपरिवर्तिना रजतेन समानाधिकृतमिति मन्यते, विविक्ततयाऽनवगमात्, न पुनस्तयोरैक्यं प्रथते, अविद्यमानस्यैकस्य प्रथनानुपपत्तेः । भेदस्तयोर्न प्रथत इत्येव तावत् युक्तम् । तस्मादिन्द्रियान्वयव्यतिरेकौ सदृशग्रहण एवोपयुक्तावित्यन्यथासिद्धाविति । परिहरति असदिति । प्रतिभासापह्नवप्रसंगादिति भावः ॥१४-१६॥

अनुभूतेऽपि विषये तत्परामर्शवर्जितम् ।
न बोधं स्मृतिमिच्छन्ति धारावाहिकबोधवत् ॥ १७ ॥
अपरोक्षपुरोवर्तिसामानाधिकरण्यतः ।
नेयं स्मृतिः, किन्तु शुक्तौ भ्रान्तोऽयं रजतग्रहः ॥ १८ ॥
स्मृत्युद्बोधनिमित्तं च स्वप्ने किञ्चिन्न विद्यते ।
पीतशङ्खावबोधे च द्विचन्द्रग्रहणे तथा ॥ १९ ॥
दिङ्मोहालातचक्रादिभ्रान्तयश्च कथं पुनः ।
स्मृतित्वाश्रयणेनैता वर्णनीया यथार्थतः ॥ २० ॥
तेनेन्द्रियादिदोषेण जायन्ते भ्रान्तिबुद्धयः ।
बुध्यमाना वस्तुरूपमन्यथास्थितमन्यथा ॥ २१ ॥

किंच पूर्वमनुभूते विषये पुनरुत्पन्नं ज्ञानं तत्परामर्शवर्जितं स्मृतित्वेन नेच्छन्ति धारावाहिकज्ञानवदित्याह—अनुभूतेऽपीति[१] ।

ननु स्मृतित्वासंभवेऽपि स्मृतिप्रमोषता युक्तैवेति चेत्, नैवम् । संस्कारजत्वं स्मृतित्वं तत्प्रमोषात्स्मृतिप्रमोषता, तदा सर्वस्मृतिषु संस्कारजत्वानवभासात्प्रमोषत्वप्रसंगः । अथ तदुक्तिलक्षितो ज्ञानविशेषः । तर्हि स विशेषः स्वानुभवसिद्ध एव स्वयंप्रकाशत्वात्सर्वज्ञानानाम् । अतः कथं प्रमोषता ॥१७॥

किंचापरोक्षपुरोवर्तीदमंशेन रजताकारस्य सामानाधिकरण्याभिधानादेकत्वं प्रतीयत इतीदं रजतमिति, समानाधिकरणं ज्ञानमयथार्थमेवेत्याह—अपरोक्षेति ॥१८॥

किंच ग्रहणाभिमानास्पदमिदं विज्ञानं प्रत्युत्पन्नमेवेन्द्रियं तद्भावभावितयात्मनः कारणं कल्पयतीति कुत उद्बोधकारणापेक्षा ? किंच स्वप्नपीतशंखद्विचन्द्रदिङ्मोहालातचक्रादिभ्रान्तिज्ञाने संस्कारोद्बोधकसदृशदर्शनाभावात्कथं स्मृतित्वाश्रयणेन यथार्थत्वम्? चिन्तापि तत्र नास्त्येव, अचिन्तितेऽपि क्वचित्स्वप्नाद्युत्पत्तिदर्शनादित्याह—स्मृत्युद्बोधेति ॥१९–२०॥

तस्माच्छुक्तिकागतेन पुरुषगतेनेन्द्रियादिगतेन वा दोषेणान्यथास्थितं वस्तुरूपमन्यथा बुध्यमाना भ्रान्तिबुद्धयो जायन्त इत्यङ्गीकर्तव्यमित्युपसंहरति—तेनेति ।

ननु दोषाः कार्यशक्तिविघातकाः । न पुनः कार्यान्यथाभावहेतवः । मैवम् । अंगुल्यवष्टम्भलक्षणदोषे सति चक्षुषोऽन्यथा कार्यजनकत्वं दृष्टं द्वौ चन्द्रमसाविति, न पुनश्चन्द्राप्रत्यायकत्वम् । तस्माच्छुक्तिरेव दोषवशादन्यथा प्रथते ॥२१॥

---

[१] विमतं ज्ञानं न स्मृतिरूपं तत्परामर्शरहितत्वात् धारावाहिकज्ञानवदिति अनुमानं बोध्यमिति पु—मु. पु.—न्यायसिद्धौ पाठो दृश्यते ।

स्थाणुर्वा पुरुषो वेति सन्देहो योऽपि जायते ।
अभावात्तादृशोऽर्थस्य स यथार्थः कथं भवेत् ? ॥ २२ ॥[1]

सिद्धान्तः—

अत्र ब्रूमो—य एवार्थो यस्यां संविदि भासते ।
वेद्यः स एव नान्यद्धि [2]विद्याद्वेद्यस्य लक्षणम् ॥ २३ ॥

किंच स्थाणुर्वा पुरुषो वेति सन्देहज्ञाने स्थाणुपुरुषोभयरूपार्थस्याभावात्कथं यथार्थत्वमित्याह—स्थाणुर्वेति ।

किंचानास्वादिततिक्तरसस्य बालस्य मधुरे तिक्तधीः कथं स्मृतिः? न च जन्मान्तरानुभूततिक्तस्मृतिरेषेति शक्यते वक्तुम्, जननमरणयोस्संस्कारोच्छेदकत्वात् ।

किंच केयमख्यातिरिति वाच्यम्, न तावत्ख्यात्यभावमात्रम्, सुषुप्त्यादावतिप्रसंगात् । अथान्यार्थिनोऽन्यत्र प्रवृत्तिहेतुविज्ञानमिति चेन्मैवम् । यत्र तर्हि न प्रवृत्तिः झटिति बोधश्च भवति, तत्र कथं भ्रान्तिः? अथाविविक्तानेकपदार्थज्ञानं भ्रमः, तर्हि इदं रजतमित्यादेर्न भ्रान्तित्वम् । इदमिति रजतमिति चापुनरुक्तशब्दात्यथार्थस्मृतिहेतुतया विविक्तावभासनात् । तेन सामान्यविशेषाकारयोरविवेकाद्भ्रमो न संभवति, अन्यथा सामान्याकाराद्विशेषाकारस्य भेदानवभासादिदमित्येव स्यात् नेदं रजतमिति । ततश्च प्रतीयमानयोस्सामान्यविशेषाकारयोर्नाविवेको भ्रमः । नाप्रतीयमानाकाराविवेको भ्रमः । तथात्वेऽतिप्रसंगात् । तस्मान्नाविवेको भ्रमः किन्तु इदं रजतमिति एकमेवेदं प्रत्यक्षज्ञानं भ्रान्तं चेति प्रत्यक्षज्ञानस्य व्यभिचारित्वं सिद्धम् ॥२२॥

इदानीं राद्धान्तमारभते—अत्र ब्रूम इति परिहारमिति शेषः । सर्वज्ञानानां विषयाव्यभिचारित्वं साधयितुं सिद्धान्ती स्वमतेन विषयलक्षणमाह—य एवेति । यस्यां संविदि सत्यां य एवार्थो भासते सोऽर्थ एव तस्यास्संविदो विषयः । भासनमेव ह्यर्थस्य प्रतीतिविषयत्वम्, भासनमपि स्वव्यवहारानुगुणायाः प्रतीतेरात्मनि वर्तनम् । अर्थव्यवहारो द्विविधः—मानसः कायिकश्चेति । मानसस्तु बुद्धिसुखदुःखेच्छादिरूपः, वाचकशब्दप्रयोगो वा सर्वार्थेषु संभवति । तत्र कायिकः वर्तमानेषु महत्सु चतुर्विधेषु द्रव्येषु उपादानादिरूपः, तद्गतेषु जात्यादिधर्मेषु समवायेन तद्विशिष्टद्रव्योपादानादिरूपः । यथा रजतादिसमवायभूमिरिति किंचिद्द्रव्यमुपादीयते, तथा मधुरमिति, तथान्यद्गन्धवदिति ।

---

[1] २१–२२श्लोकाभ्यां विपर्ययसंशययोर्याथार्थ्यलक्षणं प्रामाण्यं खण्डयन् यथार्थज्ञानात्तयोः पार्थक्यं साधयामास व्याख्याकारः । अन्ते च प्राभाकरसम्मतमख्यातिशब्दार्थं त्रेधा विकल्प्य दूषयाञ्चकार किञ्च केयमख्यातिरित्यादिग्रन्थेन । इदमन्यूनानतिरिक्तं विद्यारण्यमुनिविरचिते विवरणप्रमेयसंग्रहे समुपलभ्यते । पृ० १०२ अच्युत० ग्र० सं. काशी ।

[2] वेद्यावेद्यस्येति. मु० पु. पाठः ।

इदं रजतमित्यत्र रजतञ्चाऽवभासते ।
तदेव तेन वेद्यं स्यान्न तु शुक्तिरवेदनात् ॥ २४ ॥
तेनान्यस्यान्यथाभानं प्रतीत्यैव पराहतम् ।
परस्मिन् भासमाने हि न परं भासते यतः ॥ २५ ॥
नन्वेवं रजताभासः कथमेष [1]घटिष्यति ।
उच्यते—शुक्तिशकलं गृहीतं भेदवर्जितम् ॥ २६ ॥
शुक्तिकाया विशेषा ये रजताद् भेदहेतवः ।
ते न ज्ञाता अभिभवाद् ज्ञाता सामान्यरूपता ॥ २७ ॥

एवं सर्वत्र द्रष्टव्यम् । प्रतीतेर्व्यवहारानुगुणत्वमपि तस्यां सत्यां समर्थस्येच्छोर्व्यवहार-निष्पत्तिरिति । तेन वेद्यत्वं विषयत्वमालम्बनत्वमित्यवभासमानत्वमेवेति द्रष्टव्यम् ।

केचिद्व्यवहारभाक्त्वं विषयत्वमित्याहुः, तथा सति शुक्तिकागतमलादेरुत्तोलनादि-व्यवहारभाजो विषयत्वापातान्नैतल्लक्षणमित्येतदभिप्रायेणोक्तम्—नान्यद्धि विद्या-द्वेद्यस्य लक्षणमिति ॥२३॥

भवत्वेवं विषयत्वम् । प्रकृते कि[2]मायातमित्यत्राह—इदं रजतमिति । चकारोऽवधारणार्थः ॥२४॥

शुक्तौ रजतमित्यत्र रजतमेव भासते, न तु शुक्तिरिति सर्वसम्मतम् । न च परस्मिन् भासमाने परं भासते इति, अन्यस्यान्यथा भानम्प्रतीतिविरुद्धमेवेत्याह–तेनेति । तेनासमीचीनं किंचिद्विज्ञानं न संभवति । शुक्तेर्हि रजतात्मनाऽवभासे ज्ञानमयथार्थम् ।

नच रजतं शुक्तेरात्मेति काचिद्धीरस्ति, तस्याऽर्थस्य प्रतीतिपराहतत्वात् । तेन नान्यस्यान्यथाभानमिति । तेनेदमिति ज्ञानं पुरोवर्तिनि व्यवहारानुगुणमिति यथार्थम् । रजतमित्यपि ज्ञानं रजतत्वावच्छिन्ने व्यवहारानुगुणमिति यथार्थमेव । अय-मत्र प्रयोगः—शुक्ती रजतत्वेन न प्रकाशते तद्रूपेणासत्त्वात्, यद्यद्रूपेणासत् तत्तेनाका-रेण न प्रकाशते, यथा व्योम कमलरूपेणेति । तथा विवादाध्यासितं रजतविज्ञानं नायथार्थं ज्ञानत्वात्, उभयसिद्धसमीचीनरजतज्ञानवदिति ॥२५॥

चोदयति–नन्वेवमिति । पुरोऽवस्थितस्यारजतत्वादेशान्तरगतस्यासन्निहितत्वा-दत्र तत्प्रतीतौ कारणं वक्तव्यम् । न ज्ञानरूपं प्रतीयत इति वाच्यम् । रजतं जानामी-त्यत्र ज्ञानाद्भेदेन रजते भासमाने ज्ञानरूपं प्रतीयत इत्यसिद्धमेव । सर्वैरिदंतया बाह्य-तयैव रजतप्रतीतेः, तेन रजतज्ञाने कारणं वक्तव्यमिति ।

---

[1] धरिष्यतीति. मु. पाठः ।

[2] किमित्यत्राह—इति खपुस्तके ।

अनन्तरञ्च रजते स्मृतिर्जाता तथापि च ।
मनोदोषात् [1]तदित्यंशपरामर्शविवर्जितम् ॥ २८ ॥
रजतं विषयीकृत्य नैव शुक्तेर्विवेचितम् ।
स्मृत्याऽतो रजताभास उपपन्नो भविष्यति ॥ २९ ॥
धारावाहिकवन्नेयं स्मृतिरित्युदितश्च यत् ।
उच्यतेऽनन्यगतितः स्मृतिरत्राऽवगम्यते ॥ ३० ॥
न ह्यसन्निहितं तावत् प्रत्यक्षं रजतं भवेत् ।
लिङ्गाद्यभावाच्चान्यस्य प्रमाणस्य न गोचरः ॥ ३१ ॥

परिहरति–उच्यते—शुक्तीति । पुरोऽवस्थितं शुक्तिशकलं भेदवर्जितं गृहीतं, शुक्तिकाया रजताद्भेदहेतवो विशेषाः, दोषाद्यभिभवादेव न ज्ञाताः, किन्तु सामान्यरूपतैव ज्ञाता । रजतसदृशशुक्तिकादर्शनात्साधारणमात्रग्रहणाच्च रजते स्मृतिर्जायमाना मनोदोषात्तदित्यंशरहिता शुक्तेरविवेचिता जातेति ।

एतदुक्तं भवति–शुक्तिकाव्यक्तिरजतजात्योः परमार्थतः पृथग्गतिमत्त्वेन युतसिद्धयोरपि विरुद्धधर्माग्रहणाद्विलक्षणाकारबुद्धिविषयता शुक्तिशकलादिना लब्धेति भेदवर्जितं स्वरूपमेव गृहीतमिति ।

ननु तर्हि स्वरूपे गृहीते भेदे चागृहीते स्वरूपभेदवादकथा दत्तजलाञ्जलिस्स्यात्, शुक्तेः स्वरूपं गृहीतं, भेदो न गृहीत इत्युक्तत्वात्—इति चेत् ।

उच्यते—विलक्षणाकारबुध्यर्हत्वं भेदः, अभिन्नाकारबुध्यर्हत्वमभेद इति जातिनिर्णये प्रतिपादयिष्यते । तेन बुद्धिविशेषलक्षणमेव भिन्नत्वं नाकारान्तरनिर्वाह्यम् । सति चैवं केचित्पदार्था विषमरूपत्वात्स्वभावत एव विलक्षणाकारबुद्धिविषया भवन्ति । यथा गुणेषु रूपरसगन्धस्पर्शाः, द्रव्येषु घटपटादयश्च । अन्ये तु स्वत एव भिन्ना अपि नीलपीतादयः विस्पष्टतरविरुद्धधर्माग्रहणमपेक्ष्य विलक्षणाकारबुद्धिविषयत्वाभावान्न भिन्नाः भासन्ते । तथाहि—कस्यचित्पुरुषस्य पुरोनिहितं माषादिकं दृष्टवतो नेत्रे निमील्य पुनर्माषान्तरादिकं तत्स्थाने निहितं पश्यतो न विलक्षणाकारा बुद्धिर्भवति । तस्माद्विलक्षणाकारबुद्ध्यर्हस्य भेदांशस्याग्रहणाच्छुक्तिशकलमात्रं गृहीतं भेदवर्जितमिति युक्तमेव ॥२६-२९॥

अनुभाषते—धारावाहिकवदिति । तदित्युल्लेखविरहाद्धारावाहिकज्ञानवन्न स्मृतिः, नापि प्रमोष इति । परिहरति—उच्यत इति । अत्रेदं रजतज्ञान इत्यर्थः ॥३०॥

अनन्यगतित्वमेव दर्शयति—न ह्यसन्निहितमिति । आदिग्रहणेनार्थापत्तौ कल्पकभूतमन्यथाऽनुपपद्यमानं वस्तु गृह्यते ।

---

[1] स्मृतिप्रमोषः प्रमुष्टतत्ताकं स्मरणमिति चैकोऽर्थ इति प्राभाकरैस्स्वीक्रियते । इदमेव सर्वैरपि खण्ड्यते तत्र तत्र । अयञ्च स्मृतिप्रमोषोऽन्यत्र सर्वैरप्युररीक्रियते । तथाहि—भूतले घटो नास्तीत्यभावज्ञाने प्रतियोगिज्ञानं कारणम् । तच्चानुभवरूपं न भवितुमर्हति । असन्निकर्षात् ।

परिशेषात् स्मृतिरिति निश्चयो जायते ततः ।
तस्याः कारणसद्भावात्, धारावाहिकधीषु तु ॥ ३२ ॥
प्रत्युत्पन्नेन्द्रियग्रामसामग्रीग्रहकारणम् ।
ग्रहणस्मरणे चेमे विवेकानवभासिनी ॥ ३३ ॥
सम्यग्रजतबोधात्तु भिन्ने यद्यपि तत्त्वतः ।
तथापि भिन्ने नाभातो भेदाग्रहसमत्वतः ॥ ३४ ॥
सम्यग्रजतबोधश्च समक्षैकार्थगोचरः ।
ततो भिन्ने अबुध्वा तु स्मरणग्रहणे इमे ॥ ३५ ॥
समानेनैव रूपेण केवलं मन्यते जनः ।
अपरोक्षार्थबोधेन समानार्थग्रहेण च ॥ ३६ ॥




ननु प्रत्यक्षादिप्रमाणज्ञानत्वासंभवे सति नावश्यं स्मृतित्वमेवाऽङ्गीकरणीयम्, भ्रमत्वेनाप्युपपत्तेरित्यत्राह—**तस्याः कारणसद्भावादिति** । स्मृतिकारणभूतसदृशदर्शनोद्भूतसंस्कारजन्यत्वसंभवात्स्मरणमेव । एतदुक्तं भवति—ज्ञानविशेष एव स्मृतिः स्वकारणैः दोषसहायैर्जन्यमानो ज्ञानमात्रप्रतिबद्धव्यवहारानुकूलस्वभावो जन्यते, न तु विशेषप्रतिबद्धव्यवहारानुकूलस्वभाव इति तत्तानवभासाद्भवति स्मृतिप्रमोषतेति ।

ननु तर्हि धारावाहिकज्ञानेष्वपि स्मृतिप्रमोषत्वमेवेत्यत्राह—**धारावाहिकधीष्विति** । धारावाहिकादौ पूर्वज्ञानवदुत्तरज्ञानेष्यनुभवकारणसद्भावात्स्मृतिप्रमोषता न कल्प्येति । अर्थयोर्भेदाग्रह उक्तः । इदानीं ज्ञानयोरपि भेदाग्रहं दर्शयन्, ननु स्वयं प्रकाशयोर्ग्रहणस्मरणयोर्बुध्योः कथं विवेकाग्रहणमित्याशंक्याह—**ग्रहणस्मरणे चेति** । स्वयंप्रकाशयोरपि विरुद्धविषयत्वासिद्धेर्भिन्नतया प्रकाशो न भवति, घटादिप्रकाशनवत्स्वयंप्रकाशनेऽपि विवेकावगमे विरुद्धधर्मापेक्षत्वमुपपन्नम् । तथाहि—घटादिकं प्रति हि या प्रकाशता, सा स्वयं प्रत्यपीत्येवं वित्तेः स्वयंप्रकाशता । तेन विवेकाग्रहणं वित्त्योरपि युक्तम् । **भेदाग्रहसमत्वतः**—सम्यग्रजतबोधे समक्षैकार्थगोचरत्वेन भेदाभावात् भेदाग्रह इत्यर्थः ॥३१-३५॥

नन्विदं रजतमिति सामानाधिकरण्यप्रतीतिः कथमुपपद्यत इत्यत्राह—**अपरोक्षार्थबोधेनेति** । सामानाधिकरण्यमपि भेदाग्रहादित्यर्थः ॥३६॥

---

पारिशेष्यात् स्मरणमित्यङ्गीकार्यम् । तच्च स्मरणं तत्तांशविहीनं घटमुपस्थापयतीत्यनिच्छताऽप्येष्टव्यम् । किञ्च गामानयेतिवाक्येषु पदेभ्यः पदार्थस्मृतयस्सर्वैरिष्यन्ते । ताश्च तत्तांशविधुरा इति सर्वसंप्रतिपन्नम्, "पदमभ्यधिकाभावात्स्मारकान्न विशिष्यत" इत्यभियुक्तोक्तेः । अतः स्मृतिप्रमोषस्य निराकरणं न युक्तमित्याभातीति ध्येयम् ।

अवैलक्षण्यसंवित्तिरिति तावत् समर्थितम् ।
व्यवहारोऽपि तत्तुल्यस्तत एव प्रवर्तते ।। ३७ ।।
समत्वेन च संवित्तेर्भेदस्याग्रहणेन च ।
मिथ्याभावोऽपि तत्तुल्यव्यवहारप्रवर्तनात् ।। ३८ ।।

ननु रजतार्थिनः शुक्तौ प्रवृत्तिः कथमुपपद्यते, ईप्सितात्मना ख्यात्यभावे लोष्टादावपि प्रवृत्तिप्रसंगादित्यत्राह—**व्यवहारोऽपीति**। ज्ञानयोरर्थयोश्च भेदाग्रहात्प्रवृत्तिरित्यर्थः। लोष्टादौ तु प्रवृत्तिहेतोर्भेदाग्रहस्याभावादप्रवृत्तिः ।।३७।।

को[१] नाम भेदाग्रहः ? उच्यते—भेदाग्रहो हि नाम यद्रूपं ज्ञातं सत्प्रवृत्तिं वारयति, तस्य विशेषरूपस्याग्रहे सति साधारणाकारग्रहो ज्ञानार्थयोः।

ननु भेदाग्रहस्य प्रवृत्तिहेतुत्वं न दृष्टमिति चेन्न, सर्वत्र भेदाग्रहादेव प्रवृत्तेः। किंचाऽन्यथाज्ञानस्यापि प्रवृत्तिहेतुत्वं न दृष्टमिति परिहारो वक्तव्यः। यदप्युक्तं—शुक्तिकासंप्रयोगे सादृश्याद्रजतमेव स्मर्यते चेदतिसादृश्याच्छुक्तिकान्तरमेव स्मर्यतामिति—तदन्यथाख्यातिवादिनोऽपि समानम्। अथवाऽगृहीतभेदयोर्निरन्तरोत्पन्नयोः परतन्त्रापरतन्त्रयोः प्रतीतिः प्रवृत्तिहेतुः। एतेन केयमख्यातिरिति यदुक्तं, तदपि परिहृतमेव; यद्रूपं ज्ञातं सदित्यादिनोक्तोत्तरत्वात्।

ननु यदि सर्वज्ञानानां यथार्थत्वं तर्हि भ्रान्तत्वं कथमित्यत्राह—**मिथ्याभावोऽपीति**। ज्ञानानां सर्वत्र मिथ्यात्वं व्यवहारविसंवादादेव, न पुनरयथार्थत्वात्। तथाहि—यथार्थज्ञानस्यापि व्यवहारविसंवादान्मिथ्यात्वं व्यवहरन्ति लौकिकाः। हिमशिलादौ जलबुद्धौ सत्यां जलप्रयुक्तावगाहनादिकार्याभावान्न जलमिति प्रतिपद्यन्ते, तथोष्णजलज्ञाने जलस्यौष्ण्याभावेनाऽयथार्थत्वे सत्यपि वातशमनकार्यदर्शनेन व्यवहारविसंवादाभावान्न मिथ्यात्वं व्यवहरन्ति। तस्मात्सर्वत्र मिथ्यात्वं व्यवहारविसंवादादेव। स चात्रास्तीति यथार्थत्वेऽपि भ्रान्तत्वन्नानुपपन्नम् ।।३८।।

---

[१] सर्वेषां प्रत्ययानां याथार्थ्यलक्षणं प्रामाण्यमभ्युपगच्छतां प्राभाकराणामयमाशयः—यत्र भ्रमो वादिभिः स्वीक्रियते, तत्र भेदाग्रहेणैवोपपत्तौ संभवन्त्यां पृथक् भ्रमो नाङ्गीकर्तव्य इति। तन्मते भेदाग्रहः विवेकाग्रह इत्यनर्थान्तरम्। तत्र केवलस्य भेदाग्रहस्य हेतुत्वं नाङ्गीक्रियते, सुषुप्तौ कस्याप्यग्रहणात्तत्राऽतिव्याप्तिस्स्यात्, तद्वारणाय ज्ञानज्ञेययोर्विवेकाग्रह इति वक्तव्यम्। सुषुप्तौ स्वारसिकविवेकाग्रहस्य सत्त्वेऽपि ज्ञानज्ञेयज्ञानपुरस्सरं विवेकग्रहाभावान्नातिव्याप्तिः। अत्रानेकज्ञानत्वं विवक्षितं न बहुत्वम्। इतरथेदं रजतमिति ज्ञानद्वयविवेकाख्यातावव्याप्तिः प्रसज्येत। एवञ्च स्वरूपतो विषयतश्चागृहीतविवेकानेकज्ञानत्वमख्यातिरित्युक्तं भवति। एकविषयानेकज्ञानेष्वतिव्याप्तिनिरासाय स्वरूपत इत्युक्तम्। समूहालम्बनज्ञानेऽतिव्याप्तिपरिहाराय विषयत इति विशेषणमिति। तथा च स्वरूपतो विषयतश्चागृहीतभेदाभ्यामनुभवस्मरणाभ्यां समीचीनरजतज्ञानसादृश्येन च इदं रजतमिति सामानाधिकरण्यव्यपदेशस्य प्रवृत्तेश्चोपपत्तौ इदं रजतमितीदमंशरजतांशविषयविशिष्टमेकं ज्ञानं नाङ्गीकर्तव्यमिति ध्येयम् (इतोऽधिकं भूमिकायां द्रष्टव्यम्)।

रजतव्यवहारांशे विसंवादयतो नरान् ।
बाधकप्रत्ययस्यापि बाधकत्वमतो मतम् ।। ३९ ।।
[1]प्रसज्यमानरजतव्यवहारनिवारणात् ।। ४० ।।
सन्निहितरजतशकले रजतमतिर्भवति यादृशी सत्या ।
भेदानध्यवसायादियमपि तादृक् परिस्फुरति ।। ४१ ।।

ननु प्रसक्तप्रतिषेधात्मा नेदं रजतमिति बाधकज्ञानमिदमिति रजतज्ञानाभावेनोपपद्यत इति यदुक्तं तन्निराकरोति—**बाधकप्रत्ययस्यापीति**। इयं शुक्तिकेति स्वरूपज्ञानस्य स्वविषयविरुद्धरजतोचितव्यवहारनिवारणरूपत्वाद्बाधकताप्युपपन्ना। इतरथा अन्यथाख्यातिवादे बाधकप्रत्ययस्यापि अयथार्थतैव। तथाहि—इदं रजतमित्यसमीचीने ज्ञाने संसर्गस्यापरमार्थत्वात्तस्याभावोऽप्यपरमार्थ इति तद्विषयं नेदं रजतमिति बाधकज्ञानमपि मिथ्या स्यात्।

किंच ज्ञानेनाऽज्ञानं निवर्त्यते, न ज्ञानम्। तथाहि—ज्ञानेन बाध्यमानं किमेकविषयम्, उत ? भिन्नविषयम् ? एकविषयस्य बाध्यत्वे धारावाहिकज्ञानानामपि बाध्यत्वापातः। भिन्नविषयस्य बाध्यत्वे रूपरसादिज्ञानानामपि बाध्यता स्यात्। तस्माज्ज्ञानेनाऽज्ञानं बाध्यते, न ज्ञानम्। अत एवोक्तं भगवता गुरुणा [2]दशमाद्ये 'ज्ञानेनाऽज्ञानं निवर्तत इति बाधविदः' इति ।।३९।।

ननु प्रतिषेधात्मा बाधक इति सार्वलौकिकम्। तेनेदं रजतमिति सामानाधिकरण्यज्ञानमयथार्थं प्रसक्तं नेदं रजतमित्यनेन बाध्यत इति कथं ज्ञानेनाऽज्ञानं बाध्यत इत्युच्यते ! नैवम्, इयं शुक्तिकेति स्वरूपज्ञानमेव बाधकज्ञानमित्युच्यते। अनेन शुक्तिस्वरूपाज्ञानं बाध्यते, स्वरूपज्ञानेन स्वरूपाज्ञाने बाधिते सतीतरेतराभावव्यवहारोऽयं नेदं रजतमिति।

न पुनरस्यैव बाधकत्वं बाध्याभावात्, शुक्ते रजतभावोऽनेन बाध्यते नेदं रजतमिति, तच्च न प्रसक्तम्। तेन शुक्तिस्वरूपाज्ञाननिबन्धनः प्रसज्यमानरजतव्यवहारः स्वरूपज्ञानेन बाध्यत इति स्वरूपज्ञानस्यैव बाधकत्वमनेनोक्तम्। अतएव विनियोगलक्षणे श्रुत्यादीनां बलाबलाधिकरणे—"अथ यत्तत्र तत्र"इत्यधिकरणपरिसमाप्तौ पञ्चिका[3]—"इयं शुक्तिकेति, स्वरूपज्ञानमेव बाधकप्रत्ययः" इति। एवं समीचीनरजतबोधे मिथ्याज्ञाने चानुस्यूतत्वादग्रहणमेव प्रवृत्तिकारणमित्युक्तम् ।।४०।।

इदानीमुक्तमेवार्थं संक्षेपेणार्याभिः दर्शयति—**सन्निहितरजतशकलेत्यादिना**। सन्निहिते सम्यग्रजतशकले सत्या रजतमिति मतिः यादृशी, इयमपि शुक्तिभेदानध्यवसा-

---

[1] अस्याग्रेतनपद्येनानन्वयात् पूर्वेणैवान्वयाच्च श्लोकार्धमेवैकश्लोकत्वेन परिगणितं ग्रन्थकारेणेति ध्येयम्।

[2] बृहत्यां दशमाध्याये प्रथमपादे प्रथमेऽधिकरणे इति शेषः।

[3] तृतीयाध्याये तृतीयपादे सप्तमाधिकरणम्।

साधारणं हि रूपं तस्या अस्याश्च विद्यते तेन ।
तन्मात्रप्रतिभानात् समानतामेव मन्यन्ते ॥ ४२ ॥
तत्तुल्यव्यवहारः[१] प्रवृत्तिरपि युज्यते चातः ।
तद्विनिवारणकरणाद्बाधकता बाधकस्यापि ॥ ४३ ॥
एवं स्वप्नेऽपि वस्तूनि स्मर्यमाणानि सन्त्यपि ।

यात्तादृगेव परिस्फुरति साधारणं भास्वरत्वादिरूपं तस्या रजतव्यक्तेरस्याः शुक्तिव्यक्तेश्च विद्यते। तेन साधारणरूपमात्रप्रतिभानात्समानतामेव मनोदोषादिना मन्यन्ते। सम्यग्र-जततुल्यव्यवहारप्रवृत्तिरपि भेदाग्रहाद्युज्यते, तत्प्रवृत्तिनिवारणादियं शुक्तिकेति बाधक-ज्ञानस्यापि बाधकता युक्तैवेति ।

अथवा शुक्ताविदं रजतमित्यत्र समवायोऽपि रजतजातीयव्यक्तिस्मरणात्स्मृति-विपरिवृत्तः, स्मर्यमाणव्यक्त्या पुरोवर्तिनो भेदाग्रह इति श्लोकत्रयेणोच्यते इति, केचिन्मन्यन्ते ।

अपरे तु संस्कारसहितचक्षुर्जन्या बुद्धिर्व्यक्तिरुभयविषयैवास्तु, ततश्च पुरः-स्थितायामपि व्यक्तौ व्यवच्छिन्नाकारबुद्धिर्भवतीति विशिष्टत्वं च लब्धम् । अत्रापि धर्मधर्मिणोर्धर्मिभूतं द्रव्यं धर्मभूतेन जात्यादिना प्रायेण विशिष्टमवगम्यते । विशिष्ट-त्वमपि तस्य व्यवच्छिन्नाकारबुद्धिगोचरत्वमेव, तदपि संबन्धिनोर्द्वयोरवगमादेव सिध्यति न पुनर्विशेषणस्य सत्तामेवापेक्षते, मृतेन पित्रा विशेषणदर्शनात्, तदेवमिहविशिष्ट-विषया बुद्धिर्जातापि बोधोत्तरकालं विशिष्टार्थविषया स्मृतिरिति परिहारः समान एवेति।

तदभिप्रेत्याह—सन्निहितरजतशकल इत्यादिना । एवं व्याख्यायमाने श्लोकत्र-यमर्थान्तरे व्याख्यातं भवतीत्यपुनरुक्तता स्यात्, एवं च सति यदुक्तं "न चात्यन्तोद्ग्रन्था समानाधिकरण्येऽपि स्मृतिरुपेया" [ नयवि. पृ. ९१. ] इत्ययुक्तमेव, श्लोकत्रयेणास्यार्थ-स्योक्तत्वादुद्ग्रन्थत्वाभावात् ।

एतदुक्तं भवति—सन्निहितरजतशकलस्य स्मृतिपरिवर्तिन्या रजतत्वजातेः परस्परा-कांक्षायां भेदाग्रह इत्यर्थः ।

ननु तात्त्विकरजते नेदं रजतमित्यभ्रान्तौ भेदग्रहाभावेऽपि निवृत्तिर्दृश्यते, भेदग्रहा-भ्युपगमे अन्यथाख्यातिप्रसंगः, अतो न भेदग्रहो निवृत्तिकारणम् । उच्यते—विवेकाग्रहाद्विषयाननुगुणव्यवहारप्रसाधकं ज्ञानम्, इहाप्यरजते रजतस्य विवेका-ग्रहाद्रजते अरजतमिति शब्दप्रवृत्तिरूपव्यवहारो जातः, सोऽरजतेन रजतस्य भेदग्रहा-न्निवर्तत इत्यन्यथाख्यातिः नास्माकं प्रसज्यते ॥४१–४३॥

नन्ववर्तमानावभासितयाऽतीतरजतावभासविज्ञानतुल्यताप्यस्यास्तीति तत्तुल्य-व्यवहारप्रवृत्तिरपि स्यादिति पुरोवर्तिनि शुक्तिशकले रूप्यार्थी प्रवर्तते, निवर्तते चेति

१ व्यवहारप्रसक्तिरिति मु. पाठः ।

अनुभूतांशमोषेण भासन्ते गृह्यमाणवत् ॥ ४४ ॥
ग्रहणस्य विशेषो हि गृहीतग्रहणं स्मृतिः ।
सा गृहीतांशमोषेण गृहीतिरिव[१] तिष्ठति ॥ ४५ ॥
संस्कारोद्बोधहेतुश्च तत्राऽदृष्टं प्रकल्प्यते ।
विपरीतख्यातिपक्षेऽप्येषा तुल्या हि कल्पना ॥ ४६ ॥
अदृष्टस्य च हेतुत्वाज्जाग्रतस्तादृशी न धीः ।
अवस्थापि ह्यदृष्टस्य सामग्रीफलसम्भवे ॥ ४७ ॥
पीतशङ्खावबोधे च पित्तस्येन्द्रियवर्तिनः ।
पीतिमा गृह्यते द्रव्यरहितोऽप्स्विव तिग्मता ॥ ४८ ॥
शङ्खस्येन्द्रियदोषेण शुक्लिमा च न गृह्यते ।
केवलं द्रव्यमात्रन्तु प्रथते रूपवर्जितम् ॥ ४९ ॥

युगपत्प्रवृत्तिनिवृत्ती स्याताम् । नैवम्, सन्निहितरजतविषयसत्यबुद्धिवदियमपि तादृशी परिस्फुरतीति कथमवर्तमानावभासितयाऽतीतरजतावभासतुल्यतेति न युगपत्प्रवृत्तिनिवृत्तिप्रसंगः ।

स्वप्ने संस्कारोद्बोधकसदृशदर्शनाद्यभावात्कथं स्मृतित्वेन वर्णनमिति यदुक्तं तत्परिहरति—**एवं स्वप्नेऽपीति** । स्वप्ने स्मर्यमाणान्यपि वस्तून्यनुभूतांशमोषेण गृह्यमाणवद्भासन्त इति ॥४४॥

स्वप्ने तु यदि स्मृतिः, तर्हि कथं गृह्यमाणवद्भासनम्, अन्यथाख्यातिप्रसंगादित्यत्राह—**ग्रहणस्य विशेषो हीति** ॥४५॥

ननु स्मृतौ गृहीतग्रहणं तर्ह्यत्रागृहीततया ग्रहणं स्यादित्यत्राह—**सा गृहीतांशेति** । ननु कस्यात्र संस्कारोद्बोधकत्वमित्यत्राह—**संस्कारोद्बोधेति** । पूर्वानुभूतचिन्तासंभवे तस्याः संस्कारोद्बोधकत्वम्, यत्र न चिन्ता संभाविता तत्रादृष्टं कल्प्यताम्, अवश्यं चादृष्टव्यापृतिः स्वप्नेऽङ्गीकार्या सुखदुःखदर्शनात् ।

तथा चाचार्याः—"क्षुद्रकर्मनिमित्ता स्वप्नावस्था" [ वै० द० विद्याप्र० ] इति । दुःखमपि अदृष्टकृतमेव शंय्वधिकरणन्यायेन ।[२] एवं जाग्रति सत्यपि प्रणिधाने स्वप्नतुल्या भ्रमाः स्युः । अदृष्टस्य तस्यामवस्थायामव्यापृतत्वादिति । किंचादृष्टाङ्गीकारो नास्माकमेव, किन्तु अन्यथाख्यातिवादिनोऽपि समानमित्याह—**विपरीतख्यातिपक्ष इति** । कथमित्यत्राह—**अदृष्टस्य चेति** ॥४६॥

ननु कथं जाग्रदवस्थायामदृष्टात्तादृशज्ञानानुपपत्तिरित्यत्राह—**अवस्थापीति** ॥४७॥

---

[१] गृहीतिरिति—इति मु. पु. पाठः ।    [२] पू० मी० ३. ४. १०

गुणे द्रव्यव्यपेक्षे[1] च द्रव्ये च गुणकाङ्क्षिणि ।
भासमाने तयोर्बुद्धिरसम्बन्धं न बुध्यते ॥ ५० ॥
सत्यपीतावभासेन समे भातो मती इमे ।
व्यवहारोऽपि तत्तुल्यः, एवमत्रापि युज्यते ॥ ५१ ॥
यत्तु नेत्रगतस्यापि कज्जलस्य न कालिमा ।
गृह्यते कारणं तत्र तेनेन्द्रियनिरोधनम् ॥ ५२ ॥
अतसीपुष्पसंकाशं यत् तावन्नेत्रमण्डलम् ।
तत्रस्थमञ्जनं यत्तत् तेजोवृत्तिनिरोधकम् ॥ ५३ ॥
मण्डलान्तरसंस्थन्तु यन्नाम नयनेऽञ्जनम् ।
तस्यानार्जवदोषेण नीलिमा नावगम्यते ॥ ५४ ॥
इन्द्रियोपरिभागेऽपि लिप्तेन स्वच्छभावतः ।
पित्तेन नायनं तेजः काचेनेव न रुद्ध्यते ॥ ५५ ॥
प्रसरन्नायनं तेजो ग्राहकं [2]नानिन्द्रियस्थितम् ।
पित्तस्याऽग्रहणं सौक्ष्म्यात् प्रभायामिव तेजसः ॥ ५६ ॥

नन्वतिधवलशङ्खादौ पीतश्शङ्ख इति ज्ञानमन्यथाज्ञानमेव, अन्यथा यथार्थत्वं कथं युज्यत इत्यत्राह—पीतशङ्खावबोधे चेति । सुगममन्यत् ॥४८॥४९॥५०॥५१॥

नन्विन्द्रियवर्तिनः पित्तस्य पीतिमाग्रहे नेत्रगतस्याञ्जनादेर्नीलिमा कथं न गृह्यत इति यदुक्तं तत्परिहरति—यत्तु नेत्रगतस्येति ॥५२॥

ननु कथमिन्द्रियनिरोध इत्यत्राह—अतसीपुष्पेति ॥५३॥

ननु भवतु नेत्रमण्डलमध्यगतेन्द्रियनिर्गमनद्वारस्थस्याञ्जनादेर्नैल्याग्रहणं, तेनेन्द्रियनिर्गमननिरोधात्, तथापि तत्समीपभूतशुक्लमण्डलगतस्याञ्जनादेर्ग्रहणं स्यात्, तेनेन्द्रियनिर्गमननिरोधाभावादित्यत्राह—मण्डलान्तरेति ॥५४॥

ननु तर्हीन्द्रियवर्तिना पित्तद्रव्येणापि इन्द्रियनिरोधात्पीतिमाग्रहणं नोपपद्यत इत्यत्राह—इन्द्रियोपरिभागेऽपीति ॥५५॥

ननु यद्यञ्जनादिनेन्द्रियद्वारनिरोधाद्बहिरग्रहणं तर्हि द्वारस्थस्याञ्जनादेरन्तर्भागस्य ग्रहणं स्यादित्यत्राह—प्रसरदिति ॥५६॥

---

[1] अत्रेदं बोध्यम—द्रव्यनिरपेक्षं गुणग्रहणं, गुणनिरपेक्षं द्रव्यग्रहणञ्चोपलभ्यते लोके । कस्तूरिकादिद्रव्याग्रहणेऽपि केवलो गन्धाख्यः गुणोऽनुभूयते । प्रदोषसमये शौक्ल्यगुणस्याग्रहणेऽपि बलाकाया गृह्यमाणत्वात् पृथक्त्वेनाऽपि द्रव्यगुणयोर्ग्रहणं संभवतीति ।

[2] नाश्रय-इति. मु. पाठः ।

मधुरे तिक्तधीरेवं व्याख्याता पित्तवर्तिनः ।
तैक्त्यस्य रसहीनस्य गुडस्य च परिग्रहात् ॥ ५७ ॥
तथा द्विचन्द्रबोधेऽपि भिन्नं द्वेधैन्द्रियं महः ।
भिन्ने जनयति प्रख्ये एकस्मिन्नेव शीतगौ ॥ ५८ ॥
सम्वित्ती ते न भिद्येते तद्द्वित्वे सति मन्यते ।
भिन्नार्थबुद्धितुल्यत्वमत्रापि खलु पूर्ववत् ॥ ५६ ॥
स्मरतोऽप्येकतां तेन भ्रमोऽयमुपपद्यते ।
न हि स्मृतिप्रमोषेण सर्वत्रैव भ्रमो मतः ॥ ६० ॥

ननु पित्तसहितमिन्द्रियं बहिर्गतं, तर्हि पित्तद्रव्यगतपीतिमवत्पित्तद्रव्यस्यापि इन्द्रियसंयोगाद्ग्रहणं स्यादित्यत्राह—पित्तस्याग्रहणमिति । यथा प्रभाग्रहणे सत्यप्यतिसौक्ष्म्यादाश्रयभूततेजसो ग्रहणं तथेति भावः । अतः पीतशङ्खादौ गृहीत्योरेव भ्रमः, स्वप्ने स्मृत्योरेव भ्रमः । इदं रजतमितिज्ञाने ग्रहणस्मरणयोरिति द्रष्टव्यम् ॥५६॥

नन्वतिमधुरे गुडादौ तिक्तज्ञानस्य कथं निर्वाह इत्यत्राह-मधुरे तिक्तधीरिति ।

नन्वनास्वादिततिक्तरसस्य बालस्य मधुरे तिक्तधीः कथं यथार्था । उच्यते—जन्मान्तरानुभूततिक्तस्मृत्या भवतु । यथा जन्मान्तरानुभूतां तृप्तिकरीं स्तन्यपानादिक्रियामद्यजातो बालः स्मृत्वा कार्यमिति प्रतिपद्यते । अथ जननमरणयोः संस्कारोच्छेदकत्वान्न स्मृतिरुपपद्यते इति चेत्, नैवम्, जननमरणयोस्तु नात्यन्तिकसंस्कारोच्छेदकत्वमस्माकं संमतम् । ननु तर्हि भाष्यविरोधः, "जन्मान्तरानुभूतं च न स्मर्यते" [ शा· भा· १· ३· १· ] इति । मैवम्, प्रयत्नवशान्न स्मर्यत इति भाष्यार्थः, न पुनरदृष्टवशादपि । तेनेह जन्मनि जन्मान्तरे वाऽनुभूतविषया स्मृतिरित्यदोषः, अन्यथाननुभूतार्थविषयभ्रमपक्षे असन्नेव सप्तमो रसः तृतीयो वा गन्धः किमिति नावभासेतेति ॥५७॥

नन्वेकश्चन्द्र इति स्मृतिज्ञानानुवृत्तौ सत्यां द्वौ चन्द्रमसाविति भ्रमस्याऽन्यथाज्ञानं विना कथं निर्वाह इत्यत्राह—तथा द्विचन्द्रबोधेऽपीति । अङ्गुल्यवष्टम्भादिना द्विधा भिन्नमेवेन्द्रियं तेनैव प्रकारेण चन्द्रमण्डलेन संयुक्तं प्रत्येकं ज्ञानजनकं भवति, तदा चन्द्रद्वयज्ञानं भवति । एतदुक्तं भवति—निरन्तरोत्पन्नयोर्बुद्ध्योरन्यत्वग्राहिताप्रतिसन्धानसाम्येन भिन्नार्थद्वयेन समं भेदाग्रहाद्भिन्नचन्द्रव्यवहारहेतुत्वमिति ।

ननु बुद्धिद्वित्वानुभवाभावात्तद्द्वित्वव्यवहारो विवेकाग्रहणाच्चन्द्र इति किमिति नोच्यत इति चोद्यपरिहारोऽयुक्तः । क्रमभाविबुद्धिगोचरत्वेन द्वित्वस्योत्पादासंभवाद्द्वित्वानुभव एवानुपपन्न इति । तदयुक्तम् । देवदत्तस्य मृतेन पुत्रेण सह चत्वारः पुत्रा इत्यत्र संख्यायाः सदसदाश्रयत्वं दृष्टम् । तद्वद्बुद्धिगतद्वित्वस्याप्युत्पत्तिः संभवति । तेन बुद्धिद्वित्वव्यवहारो विवेकाग्रहणादुपपद्यत एव, पञ्चिकाकृता नोक्त इत्येतावत् ।

अन्ये तु संख्याया नासदाश्रयत्वं, तत्रापि स्मृतसंख्यया विवेकाग्रहाद्व्यवहार इति प्रतिपादितत्वादिति मन्यन्ते ॥५८–६०॥

दिङ्मोहेऽदृष्टसामर्थ्याद् दिक्स्वरूपानवग्रहात् ।
दिगन्तरस्वरूपस्य स्मरणाच्च भ्रमो मतः ॥ ६१ ॥

अलातचक्रेऽलातस्य भ्रमतः सर्वतो [1]द्रुतम् ।
निरन्तरं धियो जाताश्चक्रबुद्धिसमा मताः ॥ ६२ ॥

कालभेदस्तु शीघ्रत्वाद्धियां तासां न लक्ष्यते ।
चक्रधीव्यवहारश्च तेनाऽस्मिन्नपि युज्यते ॥६३॥

[2]अनेनैव प्रकारेण सर्वभ्रान्तिषु पण्डितैः ।
ऊहनीया हेतुभेदा यथार्थज्ञानसिद्धये ॥६४॥

स्थाणुर्वा पुरुषो वेति सन्देहेऽपि यदा द्वयम् ।
स्मर्यतेऽन्योन्यनिर्मुक्तं तदाऽर्थविरहः कुतः ? ॥६५॥

यदि चार्थं परित्यज्य काचिद्बुद्धिः प्रवर्तते ।
व्यभिचारवती स्वार्थे कथं विश्वासकारणम् ? ॥६६॥

ननु प्राच्यां प्रतीचीति व्यवहारः कथं युज्यत इत्यत्राह—**दिङ्मोह** इति । सुगमम् ॥६१॥

नन्वलातचक्रोदाहरणे चक्रबुद्धेः कथं निर्वाह इत्यत्राह—**अलातचक्रेऽलातस्येति** ॥६२॥

नन्वनेकज्ञानाङ्गीकारे क्रमेणोत्पत्तेः कालभेदाच्चक्रज्ञानं न संभवतीत्यत्राह—**कालभेदस्त्विति** ॥६३॥

पद्मपत्रशतव्यतिभेदनवदतिशैघ्र्याच्चक्रज्ञानमित्यर्थः । उपसंहरति—**अनेनैवेति** ॥६४॥

ननु स्थाणुर्वा पुरुषो वेति सन्देहोदाहरणे उभयरूपार्थाभावादन्यथाज्ञानमेवेत्यत्राह—**स्थाणुर्वा पुरुषो वेति** । स्मृतिद्वयमेतदिति प्रत्यक्षपरिच्छेदे वक्ष्यामः[3] ॥६५॥

अन्यथाज्ञानाङ्गीकारे दूषणान्तरमाह—**यदि चार्थमिति**[4] । एकत्रायथार्थज्ञा-

---

[1] अद्भुतमिति. मु. पु. पाठः ।

[2] एतेनैवेति मु० पुं० पा० ।

[3] भाट्टसम्मतप्रत्यक्षलक्षणघटकदृढविशेषणखण्डनावसरे इति शेषः ।

[4] अत्रेदं बोध्यम् । तथाहि—प्राभाकराः सर्वेषां ज्ञानानां याथार्थ्यलक्षणं प्रामाण्यमभ्युपगच्छन्ति । तत्रेदमनुमानं प्रमाणयन्ति-सर्वे विगीताः सन्देहविभ्रमा यथार्थाः प्रत्ययत्वात् इदं रजतमिति प्रत्ययवत् इति । तत्र सर्वे प्रत्यया यथार्थाः प्रत्ययत्वादित्याद्यः प्रयोगः पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरवच्छेदकावच्छेदेन साध्यानुमितेर्न प्रतिबन्धिके-

नन्वत्राप्यरजतधीतुल्यताशङ्कया समः ।
अविश्वासस्तत्र दोषविरहाच्चेद् विनिर्णयः ॥६७॥

सममेतद् विपरीतख्यातिपक्षेऽपि दृश्यते ।
अहो बत महानेष प्रमादो धीमतामपि ॥६८॥

ज्ञानस्य व्यभिचारे हि विश्वासः किंनिबन्धनः ? ।
ज्ञानस्य व्यभिचारेऽपि ज्ञातं यत् सत्यमेव तत् ॥६९॥

अज्ञानमपि किन्त्वस्ति रूपभेदनिबन्धनम् ।
जिज्ञासा जायते येयं साप्यन्येन निवर्तते ॥७०॥

नाङ्गीकारे यथार्थज्ञानेऽप्ययथार्थज्ञानशंकया ज्ञानतोऽर्थनिश्चयाभावाज्ज्ञेयेऽनाश्वासस्स्यादिति ॥६६॥

चोदयति—नन्वत्रापीति, अविश्वास इत्यन्तेन। सर्वज्ञानानां यथार्थत्वपक्षेऽपि भ्रमज्ञाने विवेकाग्रहदर्शनादन्यत्रापि विवेकाग्रहशङ्कया व्यवहारेऽनाश्वासस्तुल्य एवेति शङ्कते—तत्र दोषविरहादिति ॥६७॥

परिहरति—सममेतदिति। एतत्सर्वम्। परिहासोक्तिः—अहो बतेति। स्वतो ज्ञानतोऽर्थतथात्वे सति विरोध्यन्तरानुदये च व्यवहारविचिकित्सा। यश्च तुल्यधीसन्देह उक्तः, सोप्येवं भवेत्। किं शुक्तिकात्वरूपरूपान्तरे सत्यपि तदग्रहणाद्रजततुल्यधीत्वम्? उत नेति? तत्र रूपान्तरं प्रति प्रयत्नेनान्विष्यतोऽपि यदि पूर्वा रजतधीरेवानुवर्तते, तदा सैव शुक्तिरूपस्यानुपलब्धिरभावश्चेति सम्यग्बोधत्वनिश्चयः। त्वत्पक्षे

---

तिमतेन बोध्यः। द्वितीयः प्रयोगस्तु विप्रतिपन्नास्संदेहविभ्रमाः यथार्थाः प्रत्ययत्वात् संप्रतिपन्नरजतप्रत्ययवदिति। अत्र विप्रतिपन्ना इति पक्षविशेषणं दृष्टान्तासिद्धि-सिद्धसाधनता-दोषौ वारयति-द्वितीये चानुमाने संशयत्वेन विभ्रमत्वेन न पक्षताऽङ्गीक्रियते। अपितु अयथार्थव्यवहारहेतुत्वेन मतद्वयसम्मताः प्रत्ययाः इति पक्षनिर्देशः। तेन नाश्रयासिद्धिरशंकितुं शक्यते प्राभाकरमते। व्यवहारसामान्यं प्रति ईश्वरीयज्ञानस्य कारणत्वादयथार्थव्यवहारं प्रत्यपि तस्य हेतुत्वेन तत्र सिद्धसाधनत्वाशंका प्रसरतीति नाशंकनीयम्। प्राभाकरमीमांसकैरीश्वरस्यानंगीकारात्। अत्र साध्यमपि याथार्थ्यं स्वीयसर्वविषयावच्छेदेन विवक्षितम्। तेन सर्वं धर्मिण्यभ्रान्तं प्रकारे तु विपर्ययः, इति न्यायेन धर्म्यंशे सिद्धं प्रामाण्यमादाय सिद्धसाधनत्वं नाशङ्कितुं शक्यते।

एवमनुमानेन विज्ञानानां प्रामाण्यं प्रसाध्य, विपक्षे बाधकान् चतुरस्तर्कापरर्यायान् वर्णयामास शालिकनाथः। ते च संविद्विरोधानाश्वासासत्ख्यात्यकारणककार्योत्पत्तिप्रसङ्गरूपाः। तत्राद्यं संविद्विरोधं पञ्चविंशतितमेन श्लोकेनोपन्यस्यतिस्म। द्वितीयं सर्वत्रानाश्वासरूपं बाधकं दर्शयति—यदि स्वार्थं परित्यज्येत्यादिना।

यत्नेनान्विष्यमाणेऽपि रूपं तच्चेन्न दृश्यते ।
तदा पूर्वैव संवित्तिस्त[1]त्त्वेनाप्यपदिश्यते ॥७१॥
[2]अयथार्थत्वपक्षे च ज्ञानं साकारमापतेत् ।
आकारो भासते यो हि ज्ञान एवावतिष्ठते ॥७२॥
[3]अयथार्थस्य बोधस्य नोत्पत्तावस्ति कारणम् ।
दोषाश्चेन्न हि दोषाणां कार्यशक्तिविघातिता ॥७३॥

त्वभावेऽपि प्रमाणान्तरान्वेषणायां तद्बुद्धेरप्यन्यथाख्यातिशङ्का दुर्निवारा, यत्र तस्या रजतधियोऽनुवृत्तिर्न तत्र तुल्यधीत्वशङ्काप्रसक्तिरिति विशेषः ॥६८-७१॥

अयथार्थज्ञानाङ्गीकारे दूषणान्तरमाह—अयथार्थत्वपक्षे चेति । रजताकारस्य स्वरूपत्वेन भानान्नासत्यता, नापि शुक्तिरूपतेति धीरेव साकारा स्यादिति बाह्यार्थापलापो दुर्निवारः । ज्ञानरूपत्वासंभवे असतः ख्यातिप्रसंगः, अन्यथा त्वसत एव रजतस्यात्र दोषवशात्संसर्ग इति चेत्तर्हि संसर्गांशेऽसतः ख्यातिप्रसंग इति ॥७२॥

किंच अयथार्थज्ञानोत्पत्तौ कारणमपि नास्तीत्याहार्धेन—अयथार्थस्येति । शङ्कते—दोषाश्चेदिति । न कारणाभावः, दोषाणां कारणत्वादिति । परिहरति—नहीति । दोषाणां कार्यप्रसवप्रतिबन्धोपक्षीणत्वान्नान्यकार्यकरत्वम् । न हि मूषिकाघ्रातं शालिबीजं यवाङ्कुरप्रसवसमर्थम् । यत्तु दग्धं वेत्रबीजं कदल्यङ्कुरप्रसवसमर्थमिति, तदयुक्तम्, न हि दाहोऽस्मिन्कार्ये दोषः, किन्तु कदलीकार्ये सामग्र्येव वेत्राजननाद्धि तद्दोषता, न तु विकृतवेत्रजननात् । यत्त्वग्निदग्धं वेत्रं कदल्यङ्कुरं न जनयतीति, तदयुक्तम्,

---

[1] नास्तित्वेनेति. मु० पु० पा० ।

[2] तृतीयं बाधकमाह—अयथार्थत्वपक्षे इत्यनेन ।

[3] चतुर्थमकारणककार्योत्पत्तिप्रसङ्ग-रूपं बाधकं निर्दिशति—अयथार्थस्येति । अत्रेयमभिसन्धिः—तथाहि—यद्यस्य जनकत्वेन प्रसिद्धं, तत्ततोऽन्यस्य जनकं न भवति । यथा कलमबीजं कन्दल्यङ्कुरस्य न जनकम् । तथा विमतं चक्षुरादि अयथार्थज्ञानस्य जनकं न भवति यथार्थज्ञानजनकत्वात् । यथा कलमबीजं कदल्यङ्कुरस्य । न चेदं न तथा । तस्मान्नायथार्थज्ञानस्य जनकमित्यनुमानप्रयोगो बोध्यः ।

ननु निर्दुष्टस्य यथार्थज्ञानजनकत्वनियमेऽपि दोषासहितस्य स्यादन्यभाव इत्याशंकते—दोषाश्चेदिति । दोषाणां स्वारसिककार्यप्रसवशक्तिप्रतिरोधमात्रं कृत्यम् । न त्वतिशयाधानमन्यकार्योत्पादकत्वं वेति । अत्र व्याख्याकारः भवनाथमिश्रेणोक्ते दोषाणां विपरीतकार्यजनकत्वं नास्तीत्यर्थे तत्त्वप्रदीपिकानयनप्रसादिनीभ्यामुक्तान् दोषानन्यूनातिरेकमपोद्धृत्य नयविवेकोक्तं दोषाणां कार्यजननशक्तिविघातमात्रत्वमेव न तु विपरीतकार्यारम्भकत्वमिति समर्थयतीत्यनुसन्धेयम् ।

[१]भस्मकादिषु कार्यस्य विघातादेव दोषता ।
अग्नेर्हि रसनिष्पत्तिः कार्यं जठरवर्तिनः ॥७४॥

विद्यमानवस्तुरूपग्रहणे प्रतिबन्धृता ।
दोषाणामुपपन्नेति भ्रान्तिरग्रहबन्धना[२] ॥७५॥

विषयाव्यभिचारित्वं साधयितुं सर्वसंविदामेषा ।
निरमीयत नीतिविदा शालिकनाथेन नयवीथी ॥७६॥

तत्र योगप्रतिबन्धे ह्यङ्कुरपरिमाणस्रोतसि प्रचितस्य परिणामसन्तानस्य प्रतिबन्धापगमे महानङ्कुरो जातः कदल्यङ्कुरसदृशः इत्येतावत्स्रोतस इव सेतुविगमे महत्त्वम् । यदि दोषैरयथार्था धीस्स्यात्, तदा दाहस्य कफादिधातुत्रयवैषम्यदोषानुषङ्गात् सर्वास्वेवेन्द्रियार्थप्रतीतिषु सदा व्यभिचारसंशयः स्यात् । न च सनिवर्तते । निवर्तकेऽपि प्रत्यये सन्देहाविशेषात् । अस्माकं तु प्रतीतिकार्यबलादेव कार्यप्रतिबन्धकमात्रभूतदोषोत्पत्तिकं नेतुं शक्यते । किंच लाघवमप्यस्मिन्पक्षे दोषाणां प्रतिबन्धकत्वमात्रकल्पनात्, परस्य प्रतिबन्धकत्वं, विपरीतकार्यकरत्वं च कल्प्यम्, अप्रतिबन्धकत्वे सम्यग्ज्ञानस्यापि प्रसंगादिति ॥७३॥

ननु भस्मकाख्यदोषसहितस्य जाठराग्नेः सर्वदाहरूपान्यकार्यकरत्वं दृश्यत इत्यत्राह—भस्मकादिष्विति । भस्मकादिदोषेण जाठराग्नेः कार्यभूतो रसविवेको विहन्यते, ततोऽग्निमात्रप्रयुक्तसर्वदाहं करोतीति सर्वत्र दोषाणां कार्यविघातकत्वमेवेति ।

ननु कार्यविघाते कारणत्वमङ्गीकृतमिति चेत्, मैवम्, तत्रापि सन्निधानमात्रादेव विहतिः । ननु तर्हि सन्निधौ कारणत्वमङ्गीकृतमिति चेत्, तत्र ह्युत्पत्तिकारणादेवोत्पन्नमात्रात्सन्निधिः नान्यकारणत्वमित्यर्थः ॥७४॥

निगमयति—विद्यमानेति ॥७५॥

इदानीं ग्रन्थकर्तुः प्रकरणस्य च संज्ञां प्रकरणप्रयोजनं चैकेन श्लोकेनाह—विषयाव्यभिचारित्वमिति । सर्वसंविदां विषयाव्यभिचारित्वं साधयतुमिति प्रयोजनमुक्तम् ॥७६॥

---

[१] "कट्वादिरूक्षान्नभुजां नराणां क्षीणे कफे मारुतपित्तवृद्धौ ।
अतिप्रवृद्धः पवनान्वितोऽग्निर्भुक्तं क्षणात् भस्मकरोति यस्मात् ॥१॥
तस्मादसौ भस्मकसंज्ञकोऽभूत्, उपक्षितोऽयं पचते च यस्मात् । धातून्"—
इति लक्षितो योगरत्नाकरे रोगविशेषः भस्मकदोषः ।

[२] ग्रहनिबन्धनेति मु. पु. पाठः ।

मिश्रशालिकनाथेन नयवीथीतिसंज्ञितम् ।
कृतं लोकहितार्थाय प्रभाकरमतं यथा ॥७७॥

इति श्रीमहामहोपाध्याय-शालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां नीतिपथो नाम तृतीयं प्रकरणं समाप्तम् ॥

शालिकनाथेनेति, ग्रन्थकर्तुः संज्ञा । नयवीथीति प्रकरणस्य संज्ञेत्यर्थः ॥७७॥

॥ इति प्रकरणपञ्चिकाव्याख्यायां जयपुरिनारायणविरचितायां न्यायसिद्धौ नयवीथी नाम तृतीयं प्रकरणं समाप्तम् ॥



# जातिनिर्णयो नाम चतुर्थं प्रकरणम्

प्रकरणार्थप्रतिज्ञा—

बहुधा जातिविषये विवदन्ते विपश्चितः ।
प्रभाकरमतेनायं तेषां प्रत्यास उच्यते ॥१॥

केचिदाचक्षते—जातिरिति विकल्पविलसितम् इति । एके तु सतीमपि जातिमाश्रयेभ्योऽभिन्नामनुमन्यन्ते । अन्ये तु भिन्नामप्यनुमेयामाहुः । अपरे तु भिन्नाभिन्नामिच्छन्ति । तथा अजातावपि जातिव्यवहारो बहुलमुपलभ्यते केषांचिदिति तन्निराकरणायेदमारभ्यते ।

**न्यायसिद्धिः**

स्वमतेन तस्य निमित्तपरीष्टिरित्यादिसूत्रत्रयं व्याख्याय कतिपयदोषोपेतमपि चोदनाप्रामाण्योपयोग्यनेकार्थाभिधानादपेक्षितं परमतमिति मत्वा भगवता भाष्यकारेणोपन्यस्तम् । तत्राध्याहृतनञ्युक्तेन "तस्य निमित्तपरीष्टिरिति" सूत्रेण सत्संप्रयोगे इति तत्प्रत्यक्षमित्येवमन्तेन च साक्षादुक्तमेकमधिकरणम् । तत्र निमित्तपरीक्षा न कर्तव्येति प्रथमं राद्धान्तसूत्रमाशंकितपूर्वपक्षपरिहारार्थम्, व्यत्यस्तसत्तच्छब्दकमुत्तरसूत्रमपि मेयविषयप्रत्यक्षलक्षणप्रदर्शनमुखेन राद्धान्तस्थापनार्थं श्रुत्या, अर्थान्निरालंबनवादादीन्यभावनिराकरणपर्यन्तानि सप्ताधिकरणानि सूचितानीति दर्शनस्थितिः । तत्र साक्षादुक्तराद्धान्तोपक्रमाधिकरणेप्याशंकितपूर्वपक्ष एव जातिरिति विकल्पविलसितमित्यादिनोच्यते । तदवलम्बनेनेदं प्रकरणमारभ्यते । तत्र प्रारिप्सितस्य प्रकरणस्य संप्रदायप्रतिपाद्यप्रयोजनानि कथयति—बहुधेति । प्रभाकरमतेनेति संप्रदाय उक्तः, परेषां प्रत्यादेशः प्रतिपाद्यः, विवादनिराकरणं प्रयोजनम् ।

वादिनां विवादं दर्शयति तत्र केचिदित्यादिना केषांचिदित्यन्तेन । वादिनां विवादमेव दर्शयन्सौगतानां[1] मतं दर्शयति केचिदिति । केचित् सौगता इत्यर्थः । विकल्पशब्देन शब्दज्ञानानुपाती वस्तुशून्यः प्रत्ययविशेष उच्यते । तदुक्तम्—

शब्दज्ञानानुपाती योऽतस्तु शून्यस्स उच्यते ।
विकल्प इति तत्त्वज्ञैः खरशृंगखपुष्पवत् ॥ इति ।

तथा[2] दिङ्नागेनापि सूत्रितम्, शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति । विकल्पस्य विलसितं विकल्पविलसितम् । मतान्तरं दर्शयति—एके त्विति । अन्ये

---

[1] सुगतपक्षमिति क. पु. पाठः ।

[2] प्रमाणसमुच्चये (?) ।

[१]सिद्धान्तः-

जातिराश्रयतो भिन्ना प्रत्यक्षज्ञानगो[२]चरः ।
पूर्वाकारावमर्शेन प्रभाकरगुरोर्मता ॥२॥

पूर्वपक्षः-

नन्वाश्रय एव द्रव्यं जातेरसदिति सौगताः । तथाहि न परमाणुषु चतुर्विधेषु पार्थिवाप्यतैजसवायवीयेषु जातिराश्रिताऽभिमता, अनुवृत्ताकार-प्रत्ययवियोगात् । भिन्नेषु यदभिन्ना जातिरुपेयते, तत्रानुवृत्ताकारावभासिनी बुद्धिरेव निबन्धनम् । न कस्यचिज्जन्तोः परमाणुषु करणपथविदूरवर्तिषु निपु-

वैशेषिका इत्यर्थः । आश्रयेभ्यो भिन्नामेव जातिमनुमेयामाहुरित्याह—अन्ये त्विति । अपरे कौमारिलमतानुसारिणः आश्रयेभ्यो भिन्नाभिन्नामिच्छन्तीत्याह—अपरे त्विति । तथाऽजातावपि सत्तादौ जातिव्यवहारो, बहुलं समग्र उपलभ्यते, केषांचिद्वादिना-मित्याह—तथाऽजातावपीति । तेषां निराकरणार्थमिदं प्रकरणमारभ्यत इत्याह—तन्निराकरणायेति ।

इदानीं स्वमतं श्लोकेन प्रतिजानीते—जातिराश्रयतो भिन्नेति । जातिरस्तीति शेषः, विकल्पविलसितमिति[२] सौगतपक्षं व्युदस्यति—जातिरस्ति, न पुनर्विकल्प-विलसितमित्यर्थः । आश्रयतो भिन्नेत्यनेनाऽभेदपक्षं, भेदाभेदपक्षं च व्युदस्यति नाप्यभिन्ना, नापि भिन्नाभिन्ना, किन्तु भिन्नेत्यर्थः । प्रत्यक्षज्ञानगोचर इत्यनेनाऽनु-मेयपक्षं व्युदस्यति-नाप्यनुमेया, किन्तु प्रत्यक्षगम्येत्यर्थः, गोचरशब्दो नित्यपुल्लिङ्गः । पूर्वाकारावमर्शेनेत्यनेनाऽजातावपि जातिव्यवहार इति पक्षं व्युदस्यति पूर्वाकारावमर्शना-भावात्सत्तादौ सामान्यं नास्तीत्यर्थः ।

अत्र पूर्वपक्षं कुर्वन्नाश्रयभूतद्रव्याभावादेव जातेरप्यभाव एवेति सौगता मन्यन्त इत्याह—नन्वाश्रय एवेति । द्रव्यमवयविद्रव्यमित्यर्थः । आश्रयाभावमेव दर्शयन्प्रथमं द्रव्येषु चतुर्विधेषु जातिर्नाश्रितेति जातिवादिनामपि सिद्धमित्याह—तथाहीति । कुत इत्याह—अनुवृत्ताकारेति ।

ननु भवतु चतुर्विधेषु परमाणुष्वनुवृत्ताकारप्रत्ययाभावः, तथापि कथं जातेर-भावः ? इत्यत्राह—भिन्नेष्विति । अनन्यथासिद्धानुवृत्ताकारप्रत्ययो जातौ निबन्धन-मिति परमाणूनां जात्यभावं विवृणोति—न कस्यचिदिति । परमाणूनां नित्यानुमे-यत्वादनुमानस्य च सन्मात्रग्राहित्वादनुवृत्ताकारबुध्यसंभवान्न तेषु जातिरस्तीति ।

---

[१] अयञ्च ग्रन्थकारस्सर्वत्रादौ स्वसिद्धान्तमुपक्षिपन् ततः पूर्वपक्षं तन्निरसनं ततः प्रतिज्ञातञ्च सिद्धान्तमुपपादयन् प्रकरणार्थमुपसंहरतीति ज्ञेयम् ।

[२] मुद्रितपुस्तके "गोचरा" इति स्त्रीलिङ्गपाठो दृश्यते । व्याख्यायां पुल्लिंगपाठस्यैव समर्थनात्स एव पाठो मूले निवेशितोऽस्माभिरित्यनुसन्धेयम् ।

णामपि निरूपयतोऽनुवृत्ताकारावभासिनो मतिराविर्भवति । यापि चेयं परमाणुरिति मतिः, सापि [1]पारिमाण्डल्यलक्षणगुणकारणिका मीमांसकैरपि सङ्गीर्यते । पृथिवीत्वादिकमपि न तत्तदसाधारणगन्धादिगुणसमवायमात्रलब्धात्मलाभायां पृथिव्यादिबुद्धौ निबन्धनम् । न च स्थूलेषु द्रव्येषु जातिः समवेयात्, तेषामेव दुरुपगमत्वात् । न खलु स्थूलद्रव्यारम्भो[2] घटते । तथा हि—द्व्यणुकादिक्रमेण स्थूलद्रव्यारम्भोऽभिधीयते, तत्र तावद् द्रव्यारम्भ

ननु मीमांसकैकदेशिनः केचिदाद्यमहद्व्यतिरेकेण परमाणुर्नाम नास्तीति मन्यन्ते । तेषां मते त्रसरेणुरेव परमाणुशब्देनोच्यते । तेषु परमाणुः परमाणुरित्यनुवृत्ताकारावभासिनी बुद्धिर्जायत इति परमाणुषु परमाणुत्वं नाम सामान्यमस्त्येवेत्यत्राह—यापि चेयमिति । परमाणुष्वपि या परमाणुः परमाणुरिति मतिः, सापि परमाण्वसाधारणपारिमाण्डल्यलक्षणगुणकारणिकेति जातिवादिभिः मीमांसकैरपि सङ्गीर्यत इति न तेषु जातिरिति, नास्माकं यत्न इत्यर्थः ।

ननु यद्यपि चतुर्विधेषु परमाणुषु परमाणुत्वं नाम सामान्यं नास्ति, तथापि पार्थिवादिषु पृथिवीत्वादि सामान्यमस्त्येव । शरीरघटतृणवृक्षादिषु पार्थिवेषु यज्जलादिभ्यो व्यावृत्तमनुगतमीक्ष्यते, तत् पृथिवीत्वम्, तच्चातीन्द्रियेषु परमाणुषु द्व्यणुकेषु च गन्धवत्त्वेनानुमेयम् । गन्धवत्त्वमपि तत्कार्ये गन्धोपलब्धेरनुमेयमेव, अन्यथा तत्कार्ये गन्धानुपलब्धेरित्येवं सामान्यमस्त्येवेत्यत्राह—पृथिवीत्वादिकमपीति । पार्थिवेषु शरीरतृणगुल्मवृक्षादिषु पार्थिवत्वं नामानुवृत्ताकारं न प्रतीयते इति न पार्थिवत्वं नाम सामान्यमस्ति ।

ननु जलादिभ्यो व्यावृत्तिः प्रतीयत इत्युक्तम् । नैवम् । तत्तत्पदार्थस्वरूपव्यतिरेकेण न वस्त्वन्तरं व्यावृत्त्याख्यं प्रतीयते, अनुवृत्ताकारप्रत्ययविरहात् । सति चैवं प्रत्यक्षेषु द्रव्येषु पृथिवीत्वाद्यभावादेव गन्धादिगुणैकार्थसमवायाभावात्कथं परमाणुषु पृथिवीत्वादिसामान्यानुमानम् । अक्षरार्थस्तु पृथिव्यादिषु तत्तदसाधारणगन्धादिगुणसमवायोपाधिमात्रादेव लब्धात्मलाभायां पृथिव्यादिबुद्धौ सत्यां निर्निबन्धनमेव पृथिवीत्वादिसामान्यकल्पनमिति । अत्रादिग्रहणेन पृथिव्यादीनां नवानां द्रव्याणां द्रव्यत्वं नाम सामान्यमस्ति । तत्राप्रत्यक्षेषु द्रव्येषु द्रव्यत्वसामान्याभ्युपगमः, तत्कार्येषु गुणदर्शनात्, कारणेऽपि गुणवत्त्वमनुमाय गुणवत्त्वाद् द्रव्यत्वमनुमीयते, इत्येवं द्रव्यत्वसामान्यं यैरभ्युपगतम्, तदपि निराकृतम् । अनुवृत्ताकारप्रत्ययाभावात् । न ह्यात्मानमुपलब्धवतश्चतुर्विधेषु त्रसरेण्वादिषु अनुवृत्ताकारावभासिनी बुद्धिरस्तीति । तस्मात्परमाणूनां जात्याश्रयत्वं दुरुपपादमेव ।

ननु तर्हि स्थूलद्रव्येषु जातिः समवैतीत्यत्राह—न च स्थूलेष्विति । कुत इत्यत्राह—तेषामेवेति । स्थूलद्रव्यानारम्भमेवोपपादयति—तथाहीति ।

---

[1] परिमाणलक्षणेति—मु० पु० पाठः ।   [2] सम्भव इति. मु. पु. पाठः ।

एव न साधीयानिति मन्यामहे। न खलु तथैवैकः परमाणुरारभते। द्रव्यस्यैकाकिनः स्थूलद्रव्यान्तरारम्भकत्वानुपपत्तेः। न चैकैकद्रव्यव्यतिरिक्तमपरमारम्भकमस्ति। संयोगोऽपि च तयोरनुपपन्न एव। स हि नैकैकद्रव्यसमवेतः, नाप्यनेकद्रव्यसमवेतः। एकैकातिरेकेणाऽनेकस्याभावात्। एवञ्च प्रत्येकमेकद्रव्यसमवेतत्वाभावे, नानेकद्रव्यसमवेतत्वमपि सम्भवति।

ननु कथं द्व्यणुकारम्भासम्भव इत्याशङ्क्य किमेकैकः परमाणुः द्व्यणुकमारभते? उतानेकः? इति विकल्पं हृदि निधाय, प्रथमपक्षे दूषणमाह—न खल्विति। कुत इत्यत्राह—द्रव्यस्यैकाकिन इति। शिक्यादिष्वेकैकस्य द्रव्यस्य द्रव्यान्तरारम्भकत्वदर्शनान्निरवयवस्येत्यध्याहर्तव्यम्। तेन द्रव्यस्यैकाकिनो निरवयवस्य द्रव्यान्तरारम्भोऽनुपपन्न इत्यर्थः। शिक्यादिषु सावयवस्यैकाकिन इति न कश्चिद्विरोधः।

किं च नित्याः परमाणव इति भवतामभिमतम्। एकस्य नित्यस्य शक्तस्वभावस्यारम्भकत्वे कार्यस्य सर्वदोत्पत्तिप्रसङ्गः, अपेक्षणीयाभावात्। ततश्चान्योन्यविहतं जगत्सर्वं निरुच्छ्वासमापद्येत। तथा कार्यस्याविनाशित्वञ्च प्रसज्येत। आश्रयनाशात्, समवायिकारणनाशाद्वा, असमवायिकारणनाशाद्वा, कार्यस्य नाशो नियतः। इह त्रिविधस्य नाशस्याभावादविनाशित्वप्रसङ्गः।

ननु तर्हि अनेक आरम्भक इत्यत्राह—न चैकैकेति। एकातिरिक्तानेकाभावान्नानेकस्यारम्भकत्वम्। ननु द्वाभ्यां किमिति नारभ्यते? उच्यते—अप्रत्यक्षेषु परमाणुष्वपेक्षाबुद्धिजन्याया द्वित्वबुद्धेरसम्भवेन द्वित्वासम्भवान्न द्वाभ्यामारम्भः।

किं च परमाणुद्वयेनारम्भपक्षे निरवयवत्वेन सर्वतः संश्लिष्टत्वात्परमाणुपरिमाणादधिकह्रस्वदीर्घत्वाद्यनुत्पत्तिप्रसंगः। त्रयाणामप्यारम्भकत्वं भवतामनिष्टमेव। तथासति तथारब्धेन द्रव्येणावयवबहुत्वान्महता भवितव्यमित्यनिष्टप्रसङ्गात्। किञ्च अणोरेकेन संयोगे संयुक्तप्रदेशातिरिक्तप्रदेशान्तराभावादेव तृतीयस्याण्वन्तरस्यासंयोगात् त्रिभिर्नैकावयव्यारम्भः स्यात्। किञ्च परमाणूनामनित्यत्वात्तेषामप्यारम्भकान्तरं तेषामपीति कार्यं परमाणुस्स्यात्।

अनित्याः परमाणवः, अवयववत्त्वात्, तन्तुवदिति। तथा द्व्यणुकं कारणनाशादेव नश्यति, कार्यद्रव्यत्वात् घटवदिति। सावयवत्वाद्वा। सावयवत्वमपि कार्यद्रव्यत्वे सत्यमूर्तत्वात्, युगपत्सर्वदिक्संबन्धाद्वा। उक्तं च दिङ्नागेन—

"युगपद्योगादणूनां स्यात् षडंशता" इति।

किंच उक्तेन न्यायेन परमाणोः संयोगोप्यनुपपन्न इत्याह—संयोगोपि चेति। तस्यापि कार्यत्वादिति भावः। स हि संयोगो नैकैकद्रव्यसमवेतः, नाप्यनेकद्रव्यसमवेत इत्याह—स हि नैकैकेति। ननु संयोगस्य द्विष्ठत्वादेव मा भवत्वेकैकद्रव्यसमवायः, अनेकद्रव्यसमवायः किमिति न भवतीत्यत्राह—एकैकेति। द्व्यणुकासंभवादेव त्रिभिः

अनेनैव मार्गेण त्र्यणुकस्य त्रिभिर्द्व्यणुकैरारम्भणीयस्य महिमगुणशालिनः सम्भवो निरस्तः। तदेवं दूरभूता स्थवीयसामवयविनामारम्भसंकथा।

अपि चावयविनः किमवयवेषु प्रत्येकं कात्स्न्र्येन वृत्तिः? व्यासङ्गेन वा? इति चिन्तनीयम्। न तावत् कात्स्न्र्येन वृत्तिमुपलभामहे, एकैकावयवगतस्य तस्याप्रतिपत्तेः। एकैकावयवगते च कम्पे रागे वा सकलस्यावयविनः कम्परागप्रतीतिप्रसङ्गात्। तथावयवान्तरे च कम्परागविरहे कम्परागविरहसमासक्तेः, अवयवी कम्पेत न कम्पेत, रज्येत न रज्येत चेति विषमां दशामाविशेत्। नापि व्यासङ्गेनावयविनो वृत्तिरवयवान्तरविरहात्। अवयवान्तरशालिनो हि केनचिदवयवेन क्वचन, केनचिदवयवेन क्वचनेति व्यासङ्गिनी वृत्तिरुपपत्तिमती। किञ्चैकैकत्रावृत्तेरवृत्तिरेव, एकैकातिरिक्ताने-

द्व्यणुकैरारभ्यस्य त्र्यणुकस्यापि संभवो न भवतीत्याह—अनेनैवेति। उक्तप्रकारेण स्थवीयसां घटाद्यवयविनामारम्भसंकथा दूरत एव निरस्तेत्याह—तदेवमिति।

परमार्थतोऽवयविन उत्पत्तिर्न संभवतीत्युक्तम्। इदानीमुत्पत्तिसंभवेप्यवयवेष्ववयविनो वृत्तिर्न संभवतीति हेत्वन्तरमाह—अपि चेति। एकस्यावयविनो येऽवयवाः सन्ति, तेषु सर्वेष्ववयवी कलापिकण्ठगुणवत्किंप्रत्येकं कात्स्न्र्येन वर्तत उत सूत्रे मण्यादेरिव व्यासङ्गेन वा? इत्यर्थः।

प्रथमपक्षे दूषणमाह—न तावदिति। नन्ववयविनः स्वावयवव्यतिरेकेणावयवान्तराभावादेव व्यासङ्गेन वृत्त्यभावादव्यासङ्गेनैव वर्तनं युक्तमित्यत्राह—एकैकेति। एकावयवगतत्वे तस्यावयविनः कात्स्न्र्येन वृत्तावेकावयवदर्शने सकलावयव्युपलम्भप्रसंगादिति दूषणान्तरमाह—एकैकावयवगते चेति। अवयवी चलच्चलदवयवत्वात्, चलत्सर्वावयवावयविवत्। रक्तोऽवयवी रक्तावयवत्वाद्रक्तसर्वावयवावयविवत्। एकावयवे सर्वस्यावयविनो वृत्तेः कम्परागप्रतिपत्तिप्रसङ्ग इति। भवत्वेवमित्यत्राह—तथावयवान्तर इति। पूर्वोक्तेन न्यायेन अवयवान्तरस्य कम्परागविरहेऽवयविनोऽपि कम्परागाभावप्रसंगः। अचलदवयवी अचलदवयवत्वात्, अचलत्सर्वावयवावयविवत्, अरक्तोऽवयवी अरक्तावयवत्वात् अरक्तसर्वावयवावयविवत्।

नन्वेवमपि भवतु, को दोष? इत्यत्राह—अवयवी कम्पेत इति। तथासति प्रत्यवयवमवयविनो भेदप्रसंगः। तथाहि अनेकावयवेष्ववयव्येको न भवति, रक्तारक्तत्वात्, स्थालीकलशवत्। तथावयव्येको न भवति, चलाचलत्वात्, पर्वतपाषाणवत्, तथाऽऽवृतानावृतत्वात्, कुड्यघटादिवदिति। द्वितीयपक्षे दूषणमाह—नापीति। तत्र कारणमाह—अवयवेति। स्वावयवव्यतिरेकेणावयवान्तराभावात्। एतदेवोपपादयति—अवयवान्तरशालिन इति।

काभावात् । किञ्च सकलावयवग्रहणे एव नियमेनावयवी ज्ञायेत, न च तथा सम्भवति, अवयवान्तरेणावयवान्तरतिरस्कारात् । न च प्रकारान्तरेण वृत्तिरिति वदितुं शक्यम्; अनुपपत्तेः प्रकारान्तरस्य ।

अवयवेभ्यश्चावयवी व्यतिरिच्यमानोऽव्यतिरिच्यमानो वा न प्रमाणेन सङ्गच्छते । व्यतिरिक्तो हि तदग्रहेऽपि ग्रहणं कदाचिदनुभवेत् । न खलु भिन्नयोः सहोपलम्भनियमो घटपटयोरिव । तद्वदवयव्यपि भिद्यमानो नावयवैरेव सहोपलभ्येत । कस्याञ्चिदपि दशायामननुभूयमानेष्वप्यवयवेष्वनुभूयेत । न चावयविनमवयवानुभवमन्तरेण केचिदुपलभन्ते । अव्यतिरिच्यमानस्तु नास्त्येवेति वचनभङ्गिमात्रेणोक्तं भवति । तदेवमवयवि द्रव्यमुपपत्तिभिरनुसन्धीयमानमेकान्ततो लीयते ।

कथं तर्हि स्थूलावभासिनी मनीषा समर्थनीया ? इत्थम्—उत्तराधरभावेन निरन्तरमुत्पन्नाः परमाणव एव समधिगतैन्द्रियकज्ञानजननयोग्यदशाविशेषाः प्रत्यक्षमीक्ष्यन्ते । तांस्तथाभूताननुसंदधतस्तद्बलभावी मानस एव स्थूलविकल्पो विजृम्भते, दूरादिव तरुषु निरन्तरेषु समनुभूयमानेषु वनमिति मतिः । अतः स्थवीयसां द्रव्याणामाश्रयत्वेनाभिमतानामयोगाज्जातिरपि तदाश्रिता नाभ्युपगममर्हति ।

किंच वृत्तिमान्कात्स्न्यैकदेशयोरन्यतरेण व्याप्तः । यथा स्रक्सूत्रं कुसुमेषु, यथा वा कलापिकण्ठगुणः । दूषणान्तरमाह—किंचेति । कुत इत्याह—एकातिरिक्तेति । दूषणान्तरमाह—सकलावयव इति । सर्वावयवेष्ववयविनो वृत्तेरित्यर्थः । भवत्वेवमित्यत्राह—न चेति । ननु कथमसंभव इत्यत्राह—अवयवान्तरेणेति । ननु तर्हि प्रकारान्तरेणावर्तत इत्यत्राह—नचेति । कारणमाह—अनुपपत्तेरिति । अवयवी वृत्तिमान्न भवति, कात्स्न्यैकदेशातिरिक्तवृत्तित्वात्, खरविषाणवत् ।

किंच अवयवेभ्योऽवयवी व्यतिरिक्तोऽव्यतिरिक्तो वा । उभयथापि न संभवतीत्याह—अवयवेभ्य इति । व्यतिरेके दोषमाह—व्यतिरिक्तो हीति । कुत इत्याह—न खल्विति । एतदेवोपपादयति तद्वदवयव्यपीति । अव्यतिरेके दोषमाह—अव्यतिरिच्यमान इति । निगमयति—तदेवमिति ।

कथं तर्हीत्यादिना स्थूलबुद्धेः कथं निर्वाह इति पृष्टे वैभाषिकः परिहरति—इत्थमिति । निरन्तरोत्पन्नेषु परमाणुष्वनेकेषु स्थूलज्ञानं जायते, अनेकेषु तरुषु वनप्रत्ययवत् ।

ननु परमाणूनामतीन्द्रियत्वात्पुञ्जदशाप्राप्तस्यापि प्रत्यक्षता न स्यात्, प्रत्यक्षेषु तरुषु युक्तो वनप्रत्ययः । उच्यते । एकैकस्याप्रत्यक्षत्वेऽपि पुञ्जदशाप्राप्तः प्रत्यक्षः स्यात्

अपि च जातिरपि नेन्द्रियज्ञानविषया प्रतीयते, तस्या नित्यत्वेनाभ्युपगमात् । नहि नित्यं कस्मैचित्कार्याय पर्याप्तम्; तद्धि न शक्तस्वभावम्, नित्यं कार्योदयप्रसङ्गात् । अशक्तस्वभावं तु नित्यत्वादविचिकित्सयाऽशक्तिकं नित्यं न किञ्चित् कुर्यात् । न चाजनकमिन्द्रियज्ञानविषयतामनुभवति। यो हि विषयः स्वस्यान्वयव्यतिरेकज्ञानमनुकारयति, स प्रत्यक्षः । किञ्च समुन्मिषितचक्षुषश्चिराय विषयान्तरानुसन्धानव्यावृत्तचित्तस्य पुरोवर्तिनीं स्वस्तिमतीं कालाक्षीं वा साक्षात्कुर्वाणस्येव न जातिरपराऽवभासते । अन्यच्च न जातिरसौ पिण्डैः सहोत्पद्यते, विनश्यति वा । तथोपगमे [1]स्वरूपहानिप्रसङ्गात् । एका[2] च जातिरनेकाधिष्ठाना प्रतिज्ञायते, उत्पत्तिमती विनाशिनो चान्याऽन्या स्यात्, विरुद्धधर्माध्यासस्य भेदापादकत्वात् । सेयं नित्या जातिरुदितवत्यां

यथा सिकता दूरे ह्येकैकशोऽप्रत्यक्षा अपि पुञ्जदशायां प्रत्यक्षा भवन्त्येवेति। उपसंहरति—अत इति ।

आश्रयाभावाज्जातेरपलाप उक्तः । इदानीं जातिसद्भावे प्रमाणाभावं दर्शयन्प्रथमं प्रत्यक्षाभावमाह—अपि चेति । कुत इत्याह—तस्या इति । ननु नित्यस्यापि शब्दस्य प्रत्यक्षत्वं दृष्टमिति चेन्मैवम्, बौद्धमतेनोच्यत इति, न विरोधः । नित्यस्याप्रत्यक्षत्वमेवोपपादयन्नित्यस्य कार्यकरत्वं न संभवतीत्याह—नहीति । कथं नित्यस्य कार्यजनकत्वमित्याशङ्क्य तन्नित्यं किं कार्यजनने शक्तमुताशक्तमिति विकल्पं हृदि निधाय, प्रथमपक्षे दूषणमाह—तद्धीति । तद्धि नित्यमित्यर्थः । कुत इत्याह—नित्यमिति । शक्तस्वभावत्वे नित्यस्य शक्तस्वभावस्य क्षेपायोगादेव सर्वदा कार्योदयप्रसङ्गादिति । द्वितीयपक्षे दूषणमाह—अशक्तेति । ननु प्रत्यक्षत्वे विषयेन्द्रियसंयोगो निबन्धनं न कार्यकरत्वमित्यत्राह—नचेति । कुत इत्याशङ्क्य [3]बौद्धमते प्रत्यक्षलक्षणमाह—यो हीति । उत्पादकत्वं स्वरूपार्पकत्वं च प्रत्यक्षमिति बौद्धमते लक्षणम्, तेन कार्योत्पादकस्यैव प्रत्यक्षत्वाभ्युपगमादिति ।

किंच मीमांसकाभ्युपगतप्रत्यक्षलक्षणस्वीकारेऽपि न जातेः प्रत्यक्षतास्तीत्याह—किंचेति । अन्यदपि दूषणान्तरमाह—अन्यच्चेति । पिण्डैस्सह उत्पादविनाशाङ्गीकारे एकत्वनित्यत्वस्वरूपहानिरित्याह—तथेति । स्वरूपहानिमुपपादयति—एका चेति । ततः किमित्याह—उत्पत्तिमतीति । एकस्मिन्काले आश्रयोत्पत्तिविनाशाभ्यामेवाश्रितस्याप्युत्पत्तिविनाशावङ्गीकृतौ स्याताम् । भवत्वेवं तथापि कुतो भेद

---

१ सस्वरूपापहारापत्तिरिति मु. पु. पाठः । २ एका हीति मु. पु. पाठः ।

३ भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥
प्र. वा. ३ परि. श्लो. २४८ । इति श्लोकोक्तं लक्षणमत्रानुसन्धेयम् ।

व्यक्तौ प्रतीयमाना नान्यत आगता, निष्क्रियत्वात्। न च तत्रैवासीत्, प्रागप्रतीतेः। न च स्थितिरपि युक्तिमती, व्यक्तिरेव हि तस्या देशो नाकाशादिः, अनुत्पन्ना च व्यक्तिरिति क्वाऽवतिष्ठतामाकृतिः। नचोत्पाद्येऽप्यवतिष्ठते। तदेषा जातिरवतिष्ठते, नावतिष्ठते च, इति सङ्कटमापतितम्।

किञ्च व्यक्तेरभिन्ना[वा]? भिन्ना वा? उभयरूपा वा जातिरास्थेया?। तत्र नाभिन्ना; तथाभावे व्यक्त्या सहोत्पादे विनाशे वा स्वरूपहानिप्रसङ्ग इति पुरस्तादुपन्यस्तम्। व्यक्तिमात्राङ्गीकारे च कोऽस्मत्पक्षस्य अस्य च भेद इत्यपि चिन्तयाऽन्तः सीदन्तु भवन्तः। अतो व्यक्तिमात्रमेव तत्त्वमिति वदतां साहाय्यकमेवाचरितमनतिरेकिणीं जातिमुररीकुर्वाणैः। भिन्नत्वेऽपि पिण्डग्रहणान्तरेण ग्रहणापत्तिः। उभयप्रतीतौ च सम्बन्धप्रतीतिसमापत्तिः[1]।

इत्यत्राह—विरुद्धधर्मेति। किंच जातेराश्रयभूतपिण्डे उत्पन्ने प्रतीयमाना जातिरन्यत आगतेति[2] न शक्यं वक्तुमित्याह—सेयमिति। कुत इत्याह—निष्क्रियत्वादिति। जातेर्द्रव्यत्वाभावादेव निष्क्रियत्वाद्गमनपक्षे पिण्डापसर्पणदेशे जात्यभावप्रसङ्गः। न चैकेनाङ्गेन गच्छति अपरेण तिष्ठतीति शक्यते वक्तुम्, निरङ्गत्वात्, तस्मान्महद्व्यसनं जातिवादिनाम्।

ननु प्रागपि तत्रैवासीदित्यत्राह—न च तत्रैवेति। कुत इत्यत्राह—प्रागिति। व्यक्तिजननात्प्राक् प्रतीत्यभावादिति प्राक्स्थितिपक्षे दूषणान्तरमाह—न च स्थितिरिति। कुत इत्याह—व्यक्तिरिति। ततः किमित्याह—अनुत्पन्ना चेति।

ननु तर्हि उत्पाद्ये तिष्ठतीत्यत्राह—नचेति। निगमयति—तदेषेति। आश्रयोत्पत्तिसमये दर्शनात्, प्रागपि तिष्ठतीति स्वीकार्यम्। प्रागाश्रयाभावान्न तिष्ठतीत्येवं संकटमापतति। तदुक्तम्—

"नायाति न च तत्रासीदस्ति पश्चान्न चांशवत्।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः॥" इति [प्र. वा. प. ३. १५१. १५२.]

दूषणान्तरं वक्तुं विकल्पयति—किञ्चेति। अभेदपक्षे दूषणान्तरमाह—तत्र नाभिन्नेति। कुत इत्याह—तथाभाव इति। व्यक्त्या अभेदे व्यक्त्या सहोत्पत्तिविनाशौ स्याताम्। तदेकत्वे नित्यत्वस्वरूपहानिरित्यर्थः। अभेदपक्षे अस्मत्पक्ष एवावशिष्यत इत्याह—व्यक्तिमात्रेति।

किंच एकस्मात्स्वलक्षणादभिन्ना सती स्वलक्षणवन्न स्वलक्षणान्तरादभेदमर्हति। स्वलक्षणान्तरादभेदे स्वलक्षणयोरप्यभेदो दुर्निवारस्स्यात्। भेदपक्षे दूषणमाह—भिन्नत्वे पीति। घटपटयोरिव भिन्नयोः सहोपलम्भनियमाभावादिति भावः।

---

[1] समासक्तिरिति मु. पु. पाठः।

अस्त्येवेति चेत्; महदिदं वैयात्यम्। कः खलु इह गवि गोत्वमिति मतिमभ्युपगच्छेत्, अन्यत्र निरस्तत्रपायन्त्रणात् भवतः। भिन्नत्वे च वृत्तिप्रकारो दुर्निरूप एव—किं व्यासङ्गिनी वृत्तिः? उत प्रत्येकपरिसमाप्तिमतीति। एकत्र च परिसमाप्तावन्यत्र न वर्तेतेति पुनरपि स्वरूपहानिप्रसङ्गः। व्यासङ्गोऽपि कालत्रयवर्तिनीषु व्यक्तिष्वनुपपन्न एव। प्रत्येकश्च गौः गौरिति प्रत्ययो विकल्पमात्रमित्यङ्गीकृतं स्यात्। न चोभयरूपता, विरोधात्। न चोपलम्भबलेन विरोध एव नास्तीति चतुरस्रम्, तथाविधस्योपलम्भस्यैवासम्भावनीयत्वात्। अभिन्नाकारबुद्धिबोध्यं हि वस्त्वभिन्नमिति लौकिकाः मन्यन्ते, विलक्षणाकारबोधविषयश्च भिन्नमिति। तत्र यदि विलक्षणाकार-

ननु भवत्विति चेत्तत्राह—उभयप्रतीतौ चेति। अस्त्येवेत्यनेन सम्बन्धग्रहणमाशङ्क्याक्षेपमुखेन परिहरति—महदिदमिति। किञ्च स्वलक्षणैस्सह सामानाधिकरण्यप्रतिपत्तिविरोधादपि न भेदः। नच भिन्नयोः समवायात्सामानाधिकरण्यम्, तस्यापि सम्बन्धद्वयेन भेदाभेदवत् पर्यनुयोगस्य दुरुत्तरत्वात्।

किंच भेदपक्षे पूर्ववत्प्रत्येकं परिसमाप्य वृत्तिर्व्यासज्य वेति वृत्तिविकल्पो दुर्निवार इत्याह—भिन्नत्वे चेति। परिसमाप्य वृत्तौ दूषणमाह—एकत्र चेति। व्यासङ्गपक्षे दूषणमाह—व्यासङ्गोऽपीति। दूषणान्तरमाह—प्रत्येकमिति। व्यासङ्गपक्ष एकव्यक्तिदर्शनेऽयं गौरिति सकला प्रतीतिरसत्या स्यात्। तर्हि भेदाभेद एवास्त्वित्यत्राह—नचोभयरूपतेति। कुत इत्याह—विरोधादिति। विरुद्धं हीदं भिन्नस्याभिन्नत्वमभिन्नस्य च भिन्नत्वम्, भावाभावरूपत्वेनोभयोः परस्परप्रतिपक्षभूतत्वात्तयोरप्यविरोधे क्व विरोधः पदं न्यसेत।

ननु भेदाभेदयोस्तादात्म्यमत्र विरुध्यते? उत सहानवस्थानम्? यदि तादात्म्यम्, तदास्तु विरोधः, नेह भेदाभेदयोस्तादात्म्यमभ्युपगम्यते, भेद एवाभेद इत्यनभ्युपगमात्। अथ सहानवस्थानं विरुध्यते इत्युच्यते, नैवम्, अनवस्थानं हि अनुपलम्भावसेयं भेदाभेदौ च सहोपलभ्येते, गौरयमिति। तदुक्तम्—

"प्रतीयते चेदुभयं विरोधः कोऽयमुच्यते।" इति,

तत्राह—नचोपलम्भेति। कुत इत्याह—तथाविधस्येति। भावरूपतयोपलभ्यमानावस्थायामेवाभावरूपतयोपलम्भाभाववद्भिन्नतयोपलभ्यमानावस्थायामेवाभिन्नतयोपलम्भासंभवादिति, एकस्य वस्तुन एकस्मिन्काले भिन्नत्वमभिन्नत्वं च न संभवतीति वक्तुं भिन्नस्वरूपमभिन्नस्वरूपं च दर्शयति—अभिन्नेति। धर्मभेदपक्षे भेदभेदिनोरपि भेदे तस्य तस्येत्यनवस्थापातात्, स्वरूपभेदपक्ष एकस्वरूपदर्शनेऽपि भेदप्रतिपत्तिप्रसंगाच्च। अभिन्नाकारबुद्ध्यर्हत्वमभेदः। अभिन्नाकारबुद्धिः केवले घटे भवति तदर्हत्वमभिन्नत्वं, तथा विलक्षणाकारबुद्ध्यर्हत्वं भेदः, विलक्षणाकारा च बुद्धिः सद्वितीये भवतीति सद्वितीयं

प्रतीतिसमये द्वे वस्तुनी विलक्षणेनाकारेणावभातस्तदाऽभेदप्रतीतिदशायामेक आकारोऽनुभवनीयः—स जातिभागस्य ? पिण्डभागस्य वा ? तत्रैकस्य द्विरवभासोऽयं स्यान्न तु जातिजातिमतोरभेदावभासः। अथ—विलक्षणावप्याकारौ तादात्म्येनावसीयेते—इति मतम्। तत्रापि पर्यनुयोजनीयः—किमिदं तादात्म्यं नामेति ? यद्येकाकारतेति ब्रूयात्; तर्हि पूर्वोक्तमेव दूषणमात्मसात्कृतम्। शब्दयोः सामानाधिकरण्यं तादात्म्यमिति चेत् ? [1]अयुक्तमिदं, गौर्वाहीक इत्यादावतादात्म्येऽपि सामानाधिकरण्यदर्शनात्। उपचारस्तत्रेति

भिन्न इति बुद्धिविशेषलक्षणमेव भिन्नत्वमभिन्नत्वं वा, नाकारान्तरमित्यर्थः। तत्र यद्येति विलक्षणाकारशब्देन द्वित्वाश्रयं गृह्यते। तत्र यदि विलक्षणाकारप्रतिपत्तिसमये द्वे वस्तुनी विलक्षणेनाकारेणावभासेते अपर्यायेण, तदाऽभेदप्रतीतिदशायामेक आकारोऽनुभवनीयः। एकत्वाश्रयविषया तु बुद्धिः केवले घटे भवतीति। स चायमाकारो जातिभागस्य पिण्डभागस्य वा ? तत्रैकस्य पर्यायरूपेण द्विरवभासोऽयं स्यात्, न जातिजातिमतोरभेदावसाय इति। शङ्कते—अथ विलक्षणावपीति। परिहरति—किमिदमिति। तादात्म्यं नाम न किंचित्संभवतीत्यर्थः।

ननु स्वरूपसंश्लेषलक्षणसंबन्धः तादात्म्यशब्देनोच्यत इति चेत्। मैवम्, स्वरूपसंश्लेषलक्षणस्य संबन्धस्य संबन्धिभ्यां संबन्धोऽस्ति वा ? न वा ? आद्यपक्षे तादात्म्यमाला स्यात्, द्वितीयपक्षे संबन्धिनां संबन्धे संबन्धाभावादनयोस्तादात्म्यमिति नोपपद्यते, ताविव तस्य। किंच तादात्म्यं नामैकत्वम्, तादात्म्याङ्गीकारेणैकतैव स्यादिति न द्वयोस्संबन्धः। किंच तयोस्तादात्म्यं किं ताभ्यां व्यतिरिक्तमव्यतिरिक्तं उभयरूपं वा ? अव्यतिरेके तावेवेति न तयोस्तादात्म्यम्। व्यतिरिक्तत्वे घटपटयोरिव स्वातन्त्र्यात्संबन्धिनोः तादात्म्यमिति न संभवति, ताविव तस्य। नाप्युभयरूपत्वम्, एकोपाधौ भेदाभेदयोर्विरोधात्। एकत्वे द्वित्वाश्रयाभावाद् द्वित्वविरोधः, द्वित्वे चैकत्वाश्रयाभावादेकत्वविरोध इति शङ्कते—यद्येकाकारतेति। परिहरति—तर्हीति। पुनश्शङ्कते—शब्दयोरिति। गौरयमिति सामानाधिकरण्यं तादात्म्ये सत्येवोपपद्यते। तथाहि—अत्यन्तभिन्नयोर्घटपटयोः विशेषणविशेष्ययोर्दण्डपुरुषयोर्वाचकशब्दयोरत्यन्ताभिन्नवाचकयोर्हस्तकरशब्दयोश्च सामानाधिकरण्यं न दृश्यते, एवमत्यन्तभेदादत्यन्ताभेदाच्च व्यावर्तमानः सामानाधिकरण्यानुभवो विधान्तर एवावतिष्ठते, तद्विधान्तरं तादात्म्यमित्यर्थः। परिहरति—अयुक्तमिदमिति। शब्दानां स्वमाहात्म्येनापि सामानाधिकरण्यानुपपत्तौ तादात्म्यनिबन्धनत्वं युक्तमित्यर्थः।

ननु तादात्म्याभावेऽपि शब्दमाहात्म्यमात्रेण कुत्र सामानाधिकरण्यं दृश्यत इति चेत्तत्राह—गौर्वाहीक इति। लोके दर्शनादिति भावः। शङ्कते—उपचार इति।

---

[1] अयुक्तमेतदिति मुद्रितपुस्तके पाठः।

चेत्। अत्रापि भिन्नजातिवादिन उपचारमेव मन्यन्ते। वयन्तु विवक्षामात्रपरतन्त्राः शब्दा न वस्तुव्यवस्थापनायेशत इति सर्वत्र मन्यामहे।

कथं तर्हि गौगौरिति नानाभूतासु व्यक्तिषु बुद्धिरनुवृत्तमाकारमुल्लिखन्ती समुपजायते? तेनास्या एव बुद्धेर्द्रढिम्नः कारणमनुमास्यामहे। अस्ति तद्विशेषणं यदुपरागवशेनेयं भिन्नेष्वभिन्नाकारानुसन्धायिनी धीरुदीयत इति। तदपि न जातिसाधनसमर्थम्। कार्यभूता हि बुद्धिरेषा कारणमाक्षिपन्ती यदनन्तरमेवोपजायते तदेव कारणं कल्पयति, न पुनरप्रतीतमपरमपि किञ्चिदुपस्थापयति। सा चेयं स्वलक्षणविषयदर्शनसमनन्तरभाविनीति ता एव व्यक्तयः स्वनिर्भासा बुद्धीरुपजनय्य तन्मुखेन तामेकाकारानुभासिनीं धियमाविर्भावयन्ति। नितान्तभेदवतीनां च व्यक्तीनां कासांचिदेष महिमा न सर्वासामिति किमनुपपन्नम्। यथा ह्यत्यन्तभिन्ना अपि चक्षुरालोकमनस्संयोगाः एकसामग्रीसमुपनिपतिता एकविज्ञानोदयलक्षणं कार्यमारभन्ते, तथा व्यक्तयोऽपि किं नारभन्त इति नेदं प्रतिपत्तिकठिनम्। सा चेयं स्वाकारेणाभेद-

गौर्वाहीक इत्यत्र न मुख्यं सामानाधिकरण्यमिति। परिहरति—अत्रापीति। भिन्नजातिवादिनो मीमांसका अत्रापि—अयं गौः, शुक्लः पटः इत्यत्रापि भिन्नत्वात् गुणजात्योर्गौर्वाहीक इति च मुख्यसामानाधिकरण्याभावादुपचारमेव मन्यन्त इति। सुगतमतानुसारिणो वयं काशकुशादिवद्विवक्षामात्रपरतन्त्राः शब्दा न वस्तुव्यवस्थापनायेशत इति सर्वत्र मन्यामह इत्याह—वयं त्विति। तस्माद्विरुद्धधर्माध्यासस्य भेदापादकत्वेन नैकं विरुद्धोभयरूपं संभवति, तथाविधप्रतीत्यभावात्।

इदानीं वैशेषिकमतं दर्शयितुं पृच्छति—कथं तर्हीति। यदि पूर्वोक्तप्रकारेण व्यक्तेरभावाज्जातेरप्यभावः, तर्हि नानार्थभूतासु व्यक्तिष्वेकाकारा बुद्धिः कथं जायत इति। तत् परिहरति—तेनास्या इति। प्रत्यक्षाभावेऽपि प्रत्यक्षदृष्टसामान्यबुद्धिरूपकार्यात्कारणमनुमीयते इति। एतदेवोपपादयति—अस्तीति।

एवमुपन्यस्तं वैशेषिकमतं बौद्धः परिहरति—तदपीति। कुत इत्याह—कार्यभूता हीति। बुद्धिरूपकार्यात्कारणानुमानेऽपि स्वानन्तरभूतमेवानुमापयति न व्यवहितमिति। ततः किमित्याह—सा चेयमिति। नन्वनेकव्यक्तीनामेकाकारबुद्धिजननाङ्गीकारे सर्वव्यक्तीनामेकजातीयत्वप्रसङ्ग इत्यत्राह—नितान्तेति।

ननु यद्यत्यन्तभिन्ना एव व्यक्तयः तर्हि महिषाश्वव्यक्तिवदेकरूपबुद्धिकारणत्वं न संभवतीत्याशङ्क्यात्यन्तभिन्नानामप्येककार्यकरत्वं दृष्टान्तमुखेन साधयति—यथा हीति। अत्यन्तभिन्नानां चक्षुरूपालोकमनसामेकज्ञानकारणत्ववदत्यन्तभिन्नानामपि व्यक्तीनामयंगौरित्येकज्ञानकारणत्वं संभवतीत्यनेकाभिर्व्यक्तिभिर्जायमानाऽयं गौरयमपि गौरित्येवंरूपा। सा च संविदेवात्यन्तभेदयोगिनीनामपि व्यक्तीनां भेदं संवृण्वती संवृतिरिति अस्माभिरुच्यत इत्याह—सा चेयमिति। तदुक्तं बौद्धैः—

नात्यन्तिकभेदयोगिनोनामपि व्यक्तीनां भेदं सम्वृणोतीति संवृतिरित्यनुगीयते। एषा च मनीषा न स्वलक्षणं विषयीकरोति, तस्य विशदावभासित्वात्, अस्याश्चाभिलापसंसर्गयोग्यार्थप्रतिभासत्वात्। अभिलापानाञ्च विशदाकारमवभासितुमशक्तेः, अभिलापमात्रेण तथाविधप्रतीत्यभावात्[1]। तेनैषा न स्वच्छाकारावभासिनी।

नन्वेतत् प्रतीतिपराहतमुदितम्, गौरयमिति बुद्धौ विशदावभासात्।

उच्यते—न विशदावभासित्वमवजानीमहे। तत्तु समानकालभाविनो निर्विकल्पप्रत्ययस्य स्वलक्षणावलम्बिनः प्रसादात्, तदभावे तथात्वानुपलम्भात्। न चैतद्वाच्यं कथमेकमेव वस्त्विन्द्रियैर्विशदावभासं अनुभूयते, शब्दैश्चा[2]विशदावभासमिति। भिद्यमानेऽपि बोधोपाये बोध्याभेदे बोधवैलक्षण्यानुपपत्तेः। नियताकारश्च स्वलक्षणमनियताकारश्चास्यां बुद्धौ

"[3]पररूपं स्वरूपेण यया संव्रियते धिया।
एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः॥
तया संवृतनानात्वाः प्रकृत्या भेदिनः स्वयम्।
अभेदिन इवाभान्ति भावा रूपेण केनचित्॥
तस्याभिप्रायरूपेण सामान्यं संप्रकीर्तितम्।
तदसत्परमार्थेन यथा संकल्पितं तथा॥"

[प्र. वा. १. ६७-६९] इति।

संवृतिरूपैषा मनीषा न स्वलक्षणविषयेत्याह—**एषेति**। कुत इत्याह—**तस्येति**। तस्य स्वलक्षणस्य स्पष्टावभासित्वादिति। भवत्वस्य विशदावभासित्वम्, तथापि कथमविषयत्वमित्यत्राह—**अस्याश्चेति**। भवत्वभिलापसंसर्गयोग्यप्रतिभासः, ततः किमित्याह—**अभिलापानामिति**। कथमशक्तिरित्यत्राह—**अभिलापमात्रेणेति**। तथाविधप्रतीत्यभावाद्विशदप्रतिभासाभावादित्यर्थः। निगमयति—**तेनेति**।

नन्वेतदित्यादिना चोदिते परिहरति—**उच्यते इति**। सा तु विशदप्रतीतिः प्रमाणभूतनिर्विकल्पकप्रतीतिमाहात्म्यान्न संवृतिमाहात्म्यादित्यर्थः।

नन्वेतत्कथमवगम्यत इत्यत्राह—**तदभाव इति**। ननु ज्ञानोपायभेदादेकमेव वस्तु विशदमविशदं चानुभूयत इति वक्तुं न शक्यमित्याह—**नचैतदिति**। कुत इत्याह—**भिद्यमान इति**। किंच नियताकारं स्वलक्षणं अनुवृत्ताकारत्वादेवानियतश्चाकारोऽस्यां

---

[1] प्रतिपत्त्यभावात् इति मु. पु. पाठः। [2] निराकारमितिः मु. पु. पाठः।

[3] धर्मकीर्तेः प्रमाणवार्तिकस्थमेतत्पद्यत्रयं निरालम्बनवादे ऋजुविमलापञ्चिकायां शालिकनाथेनोद्धृतमिति ज्ञेयम्।

चकास्ति। तदेवं विशदाविशदतया नियतानियततया च स्वलक्षणस्य विकल्पाकारस्य च भेदे सत्यपि विकल्पाः साक्षात्परम्परया वा स्वलक्षणविषयदर्शनप्रभवतया स्वलक्षणग्रहणाभिमानिनो जायन्ते। तत एव तत्र प्रवर्तयन्तः पुरुषं व्यवहाराङ्गभावमनुभवन्ति। पारम्पर्येण वस्तुनि प्रतिबन्धादवस्त्वपि प्रतिबद्धं भवति, मणिप्रभायां मणिबुद्धिवत्। यथा हि खलु मणिप्रभायां मणिदीप्तायां मणिकिरणविषयिणी मणिबुद्धिरयथार्थतया भेदमजुषमाणापि मणिमनु प्रतिबद्धेति मणिसमधिगमनिमित्तं भवेत्, तथेयमपि वस्तुतः स्वलक्षणमगृह्णत्यपि स्वलक्षणादर्शनं, दर्शनतो विकल्प इति स्वलक्षणप्रतिबद्धा सती तत्प्राप्तये प्रभवति। निर्विकल्पकप्रत्ययसमधिगतस्वलक्षणप्रापकतया च स्मृतिरियमुच्यते। तत एव च गृहीतग्राहित्वादप्रमाणम्, अन्यथा वस्तुविषयतया

गवादिबुद्धौ चकास्तीत्यनियताकारमिति। निगमयति—तदेवमिति। अत्र दृष्टान्तमाह—मणीति। निगमयति—तदेवमिति। अत्र दृष्टान्तमाह—मणीति। एतदेवोपपादयति—यथेति। तदुक्तम्—

"मणिप्रदीपप्रभयोर्मणिबुध्याऽभिधावतोः।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति॥" [प्र. वा. १. परि. श्लो. ५७] इति।

दार्ष्टान्तिके निगमयति—तथेयमिति। ननु विकल्पज्ञानस्यापि व्यवहाराविसंवादात्प्रामाण्यं प्रसक्तं,

"प्रमाणमविसंवादिज्ञानमर्थक्रियास्थितिः।
अविसंवादनं शब्देऽप्यभिप्रायनिवेदनात्॥" [प्र. वा. १. परि. श्लो. ३.] इति

तत्राह—निर्विकल्पकेति। अविसंवादित्वे सत्यपि गृहीतग्राहित्वादप्रामाण्यमित्यर्थः। विकल्पस्यावस्तुविषयत्वेऽप्यगृहीतग्राहित्वे सत्यनुमानवत्प्रामाण्यं युक्तम्, नच तदस्तीत्याह—अन्यथेति। ननु प्रमितिविषयत्वेऽपि स्वलक्षणातिरिक्तापूर्वजात्यंशोपनिपातात्प्रामाण्यं युक्तमिति चेत्, नैवम्, विध्यनुवादविरोधात्। नह्येका बुद्धिः जातिं विधास्यति, स्वलक्षणं चानुवदिष्यतीति घटते, एतज्जातितद्बुद्धिगतं भेदाभेदविध्यनुवादविरोधादिदूषणजातं गुणनामक्रियाविशिष्टतद्बुद्धिष्वपि द्रष्टव्यम्। [१]किंच विशिष्टप्रत्यये विशेषणविशेष्यतत्संबन्धातिरिक्तं न पश्यामः। उक्तञ्च—

"विशेषणं विशेष्यं च संबन्धं लौकिकीं स्थितिम्।
गृहीत्वा संकलय्यैतत्तथा प्रत्येति नान्यथा॥" [प्र. वा. २.१४५] इति।

कर्मकल्पनायामागन्तुकात्क्षणिकादेव कार्यसिद्धेः क्रियायां प्रमाणं नास्तीत्यभिप्रायः।

---

[१] किञ्चित्सर्वप्रत्ययविशिष्टप्रत्यये, इत्यपि पाठो दृश्यते १. पुस्तके।

वस्तुप्रापकतया चानुमानमिव प्रमाणमेव स्यात्। स चायं तस्याकारः प्रथमानो न ज्ञानस्यैव, बहिष्ट्वेनावभासात्। न चार्थगत एव; उक्तेन न्यायेन निरस्तत्वात्। किन्त्वयमसन्नेव ज्ञानमनु भासते शब्दमिव प्रतिशब्दः। एतच्च शास्त्रचिन्तका विवेचयन्ति, प्रतिपत्तारस्तु दृश्यविकल्प्यावर्थावेकीकृत्य बाह्यमेवानुमन्यमाना व्यवहारेषु प्रवर्तन्ते, प्रवृत्ताश्चार्थप्रतिलम्भेनाविसंवादं मन्यन्ते। कथं पुनरेकत्वाध्यवसायो दृश्यविकल्प्ययोः, अतद्व्यावृत्ततया तत्सदृशत्वात्, यथा दृश्यस्यातद्व्यावृत्तता, तथा विकल्प्यस्यापि। तस्माज्ज्ञा-

ननु निर्विकल्पकानुविद्धे सविकल्पके प्रतीयमान आकारः किं ज्ञानस्य, उत अर्थस्येति, विकल्पं हृदि निधाय प्रथमपक्षे दूषणमाह—स चायमिति। कुत इत्याह—बहिष्ट्वेनेति। द्वितीयपक्षे दूषणमाह—नचेति। कारणमाह—उक्तेनेति। ननु यदि प्रतीयमान आकारो न ज्ञानार्थयोः, तर्हि शुक्तिकारजतादाविवान्यथाख्यातिरेवेत्याशङ्क्याह—किन्त्वयमिति। शुक्तिकारजतादिषु शुक्तिकायामविद्यमानस्यापि रजतस्य देशान्तरकालान्तरवर्तिनः प्रतिभानादन्यथाख्यातित्वं युक्तम्, इह त्वन्यथाख्यातित्वं नोपपद्यते, सर्वत्र जात्याकारस्याविद्यमानत्वात्। तेनासत्ख्यातिरेव। अतः संवृतिशब्देनाप्यसत्त्वमेवोच्यते, तदुक्तम्—

"सत्याभासः परस्त्वत्र न सत्यं परमार्थतः।
विचार्यमाणशून्यत्वे संवृतिश्चेति गीयते॥" इति॥

कथमेतदवगम्यत इत्याशङ्क्याह—एतच्चेति। शास्त्रचिन्तकाः शास्त्रज्ञा इत्यर्थः। दृश्यशब्देन निर्विकल्पकज्ञानविषयभूतोऽर्थ उच्यते, विकल्प्यशब्देन विकल्पज्ञानविषयः। दृश्यविकल्प्ययोः सत्यासत्यरूपेण वैरूप्यादेव सादृश्याभावादेकाध्यवसायो नोपपद्यत इत्यभिप्रायेण कथं पुनरित्यादिना पृष्टे परिहरति—अतद्व्यावृत्ततयेति। एतदेवोपपादयति—यथा दृश्यस्येति। उपसंहरति—तस्मादिति। [१]निरन्तरोत्पन्नाः परमाणव इत्यादिना वैभाषिकसिद्धान्तोपन्यासः। वैभाषिकास्तु ज्ञानस्य प्रत्यक्षत्वमिदं रजतमित्यादि भ्रान्तिज्ञाने दृष्टमिति वदन्तो ज्ञानाकारत्वं मन्यन्ते। निर्विकल्पकज्ञानानि निराकाराणि। अर्थस्तु साकारः, ज्ञानार्थयोर्द्वयोरपि सव्येतरगोविषाणयोरिवैकसामग्रीप्रतिबन्धो विद्यते। ततश्च ज्ञानक्षणानि स्वसमयक्षणवर्तिनो नीलाद्यर्थो गृह्णन्ति। तदनु वासना सह जात्याद्याकारसाकारान्स्वलक्षणविषयान्विकल्पप्रत्ययानुत्पादयन्ति। ततश्च ज्ञानार्थाकारयोरन्योन्यातद्व्यावृत्तिप्रत्ययतया साम्यात् भेदाग्रहणा-

---

[१] अत्रायमभिप्रायः—जातिनिराकरणपूर्वपक्षे स्थौल्यप्रतीतिः वैभाषिकमतेन "उत्तराधरभावेन निरन्तरमुत्पन्नाः परमाणव" इत्यादिना समर्थिता। किन्त्वयमसन्नेव ज्ञानमनुभासते इत्यादिनाऽसत्ख्यातिवादो माध्यमिकसम्मतस्समर्थितः। तमेवार्थं स्थलनिर्देशेन संक्षिप्य दर्शयति—तस्मादिति।

तिप्रत्ययो विकल्पमात्रम्, परमार्थतस्तु न जातिर्नाम किञ्चित्। अपि च द्रव्यसमवायिनी जातिरभिमता। न च गन्धादिव्यतिरिक्तं द्रव्यमुपलभामहे, चक्षुरादीनां प्रत्येकं रूपादिष्वेव व्यापारादिति पूर्वपक्षसंक्षेपः।

सिद्धान्तः—

अत्रोच्यते—संविदेव हि भगवती विषयसत्त्वोपगमे शरणम्। गवादिषु च स्थूलाकारावलम्बिनी संविदुदीयत इति निर्विवादम्। नयवीथ्यांश्च निर्णीतं प्रमाणं स्मृतिश्च नः प्रत्यय इति। ननु तदेवासदिति मन्यते, अवयव्यादीनामेकान्ततोऽनुपपन्नत्वात्। उच्यते। न दृष्टे काचिदनुपपत्तिः। ननूक्ताऽवयविनोऽनुपपत्तिः आरम्भकाभावात्। अनुपपन्नेयमनुपपत्तिः; कार्यं प्रतीतं कारणकल्पनायां प्रमाणम्। न पुनः स्फुटावभासिकार्यं कारणाऽनिरूपणेऽ-

ऽवासदृश इति चाग्रहणाज्ज्ञानाकारा अपि जात्याकारा अर्थाकारा इवेदं रजतमित्यादिवद्भासन्ते। असन्नेव ज्ञानमनुभासत इत्यादिना असत्ख्यातिवादोपन्यास इति द्रष्टव्यम्। जातेराश्रयत्वेन अभिमतद्रव्योत्पत्त्यसंभवाज्जातेरभाव उक्तः।

इदानीं द्रव्यसद्भावे प्रमाणाभावादपि जातिर्नास्तीत्यभ्युच्चयत्वेनाह—**अपि चेति**। ततः किमित्याह—**नच गन्धादीति**। कुत इत्याह—**चक्षुरादीनामिति**[१]। तेन पञ्चविधप्रत्यक्षेषु व्यभिचारान्निमित्तपरीक्षा कर्तव्येति पूर्वः पक्षः।

सिद्धान्तमारभते—**अत्रोच्यत इति**। पदार्थानां सत्त्वे तद्विषयसंविदेव कारणमिति सर्ववादिसंप्रतिपन्नमित्याह—**संविदेवेति**। ततः किमित्याह—**गवादिष्विति**। गवादिपदार्थेषु स्थूलाकारज्ञानं जायत इति संप्रतिपन्नमिति। गवादिस्थूलज्ञानमपि स्थूलार्थनियतं ज्ञानत्वात्, नीलादिज्ञानवदिति। ननु स्वप्नावस्थायां गजारोहणस्वशिरश्छेदादिज्ञाने सत्यपि तथारूपार्थाभावाद्व्यभिचार इत्यत्राह—**नयवीथ्यामिति**। प्रमाणं स्मृतिश्च प्रत्यय इति द्वे एव ज्ञाने यथार्थे इत्यख्यातौ साधितमिति। महानयमेक इति प्रत्ययो यथार्थः अबाधितप्रत्ययत्वात्, भवदभिमतनीलप्रत्ययवदिति। तस्माज्जात्यादिबुद्धिः यथार्थैवेत्यर्थः।

ननु तदेवासदित्यादिना यौक्तिकबाधो विद्यत इत्युक्तमिति मत्वा चोदिते परिहरति—**उच्यत इति**। अबाधितप्रत्यक्षसिद्धे यौक्तिकबाधायोगादित्यर्थः। पुनश्चोदयति—**ननूक्तेति**। प्रत्यक्षदृष्टस्याप्यवयविन आरम्भकाभावादनुपपत्तिरुक्तेति। परिहरति—**अनुपपन्नेति**। स्पष्टदृष्टदृढतरकार्यप्रतीतिबलात्कारणकल्पनैव न्याय्या, न

---

[१] "क्षीणानि चक्षुरादीनि रूपादिष्वेव पञ्चसु।
न षष्ठमिन्द्रियं तस्य ग्राहकं विद्यते बहिः॥" इति धर्मकीर्तिनाऽभिहितं दूषयितुमनुवदतीतिध्येयम्।

पह्नवमर्हति, तेनावयवा एव समासादितसंयोगलक्षणसाधारणगुणा अवयविन उत्पादका भविष्यन्ति। [1]संयोगश्चैक एवानेकत्र वर्तते, एकैकत्र संयुक्तप्रत्ययानुदयात्, एकातिरिक्तानेकाभावेऽप्येकैक एव सद्वितीय आश्रयः संयोगस्येति न दोषः।

पुनः कारणानुपपत्त्या दृष्टकार्यत्याग इत्यर्थः। निगमयति—तेनेति। तेनावयवा एव संयोगलक्षणासाधारणगुणा असमवायिकारणानुगृहीताः कार्यस्योत्पादका भविष्यन्तीति।

ननु संयोगः किमेकत्र वर्तते? अनेकत्र वा? एकैकत्र संयुक्तप्रत्ययाभावादेकत्र न वर्तते। एकातिरिक्तानेकाभावादनेकत्रापि न वर्तत इत्युक्तमित्यत्राह—संयोगश्चेति। यथा त्वत्पक्ष एकातिरिक्तानेकाभावेप्यणुचयो धीहेतुः तथाऽस्मन्मतेप्येकैक एव सद्वितीयः संयोगस्याश्रय इति न दोषः।

## प्रभाकरमतेन पदार्थनिरूपणम्—

अत्र चेयं प्राभाकराणां पदार्थप्रक्रिया—नवधा पदार्थाः—द्रव्यं, गुणः, कर्म, सामान्यं, समवायः, शक्तिः, संख्या सादृश्यम्, [2]क्रमश्चेति। तत्र स्वात्मनि कार्यारम्भकं द्रव्यम्, तदपि नवप्रकारम्, पृथिव्यप्तेजोवायुराकाशकालदिगात्ममनांसि इति। तत्र पृथिव्यादीनां चतुर्णां नित्यानित्यरूपेण द्वैविध्यमस्ति परमाणुलक्षणं नित्यं, कार्यलक्षणं त्वनित्यम्। तेन वायुपर्यन्तानां पृथिव्यादीनां चतुर्णामेवारभ्यारम्भकत्वम्। नाकाशादीनां, तेषामारम्भशक्त्यभावात्। शक्त्यभावोऽपि निष्क्रियत्वादमूर्तत्वादस्पर्शत्वाच्च। तेनाकाशादीनां नित्यत्वमेव, नानित्यत्वम्। परमाणुसद्भावे चानुमानमेव। यद्वा स च निरवयवः परिमाणातिशयस्यावधित्वान्महत्परिमाणावधिभूताकाशवत्। अतो नित्या निरवयवाः परमाणवः। यत्त्वणूनामनित्यत्वं सावयवत्वं चानुमानादुक्तं तद्धर्मिग्राहकप्रमाणबाधितम्। तत्र परमाण्वोः संयोगः क्रियाजः, संयोगाजन्यत्वे सति संयोगत्वात्, तन्तुतुरीसंयोगवत्। संयोगजन्यत्वमसिद्धमिति चेन्मैवम्, निरवयवस्य संयोगजसंयोगानुपपत्तेः। सर्वत्रावयवसंयोगपूर्वकत्वात्संयोगस्य। तच्च

---

[1] संयोगो द्विविधः अन्यतरकर्मज उभयकर्मजश्चेति वदन्तः संयोगस्य द्वैविध्यं वर्णयन्ति भाट्टा मीमांसकाः। संयोगजं संयोगं न स्वीकुर्वन्ति। प्राभाकरमीमांसकास्तु वैशेषिकसम्मतां सरणिमनुसरन्तस्संयोगजस्य त्रैविध्यमातिष्ठन्ते। किञ्च संयोगस्संयोगिषु कथं वर्तत इति जिज्ञासायां भट्टमतानुयायिनस्सादृश्यवत्प्रतिसंयोगि भिन्न इति मन्यन्ते। गुरुमतानुयायिनस्तु वैशेषिकवदुभयोर्व्यासक्तं संयोगमेकमङ्गीकुर्वन्तीति ध्येयम्। अयमर्थोऽग्रे मूल एव स्पष्टीभविष्यति।

[2] प्राभाकरमते शक्तिसादृश्यसंख्यानां पदार्थत्वाभ्युपगमस्तदीयग्रन्थेषूपलभ्यते, परमयं व्याख्याकारः क्रमनामकं पदार्थमतिरिक्तमभ्युपगच्छति, तत्र किम्मूलमिति न प्रतीयते, इति ध्येयम्।

परमाण्वोराद्यं कर्म पुरुषविशेषगुणकारितं नोदनाभिघातसंस्काराजन्यत्वे सति कर्मत्वात्, पाणिकर्मवत्। तत्राप्यदृष्टाख्यविशेषगुणकारितमेव परमाणूनामाद्यं कर्म बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारेभ्यो व्यतिरिक्तं पुरुषविशेषगुणकारितं प्रयत्नादीनामभावे सति पुरुषविशेषगुणकारितत्वात्। यदभावे यदुत्पद्यते तत्ततो व्यतिरिक्तकारणं, यथा तन्त्वाद्यभावे घटः तद्व्यतिरिक्तजन्यः। ततश्च प्रयत्नाद्यभावे कर्मकारणमदृष्टमेव। तच्चादृष्टं स्वाश्रयसंयोगापेक्षमाश्रयान्तरे कर्मारभते, एकद्रव्यत्वे सति क्रियाहेतुत्वाद् गुरुत्ववत्। यथा गुरुत्वं तोमरस्याद्यतिर्यग्गतिकारणभूतं स्वाश्रयस्य तोमरसंयोगमपेक्ष्यैव कर्मारभते, तद्वदिहापि अदृष्टस्याद्यकर्मकारणत्वमदृष्टवदात्मसंयोगादेव। ततश्च परमाणूनां सुखदुःखप्रापणसमर्थाददृष्टवदात्मसंयोगादाद्यं कर्म जायते। ततश्च परस्परसंयोगः परमाण्वोर्जायते। ततश्च संयुक्ताभ्यां द्वाभ्यां परमाणुभ्यां द्व्यणुकसिद्धिः। प्रयोगस्तु द्व्यणुकावयव्येकद्रव्यारब्धं न भवति, कार्यद्रव्यत्वात्, घटवत्।

नन्वतीन्द्रियेषु अपेक्षाबुद्ध्यभावाद्द्वित्वोत्पत्त्यभावेन द्वाभ्यामुत्पत्तिरिति नोपपद्यते, मैवम्, द्वित्वोत्पत्तियोग्यस्य सद्वितीयस्यारम्भकत्वाभ्युपगमात्।

ननु त्रयाणामणूनामारम्भकत्वं किमिति न भवति। उच्यते—तथात्वे तदारब्धेन द्रव्येणावयवबहुत्वान्महता भवितव्यम्। अतो नित्यैस्त्रिभिः परमाणुभिः आद्यमहदुत्पत्तिरिति भवदभिप्रेतं न स्यात्, तथाहि—महत्कार्यभूतघटाद्युत्पत्तौ तत्परिमाणापेक्षयाऽल्पपरिमाणस्य कार्यद्रव्यत्वस्यैव कारणत्वं लोके दृष्टमिति त्रिभिरारब्धं महत्कार्यं कार्येणैव जन्यते महत्त्वे सति कार्यद्रव्यत्वात् घटवदिति प्रसज्यते। अतो द्वाभ्यामेवाद्यकार्यस्योत्पत्तिः, न त्रिभिरिति युक्तम्।

ननु यथा कार्यद्रव्यात्कार्यद्रव्यं महद्घटादिकं दृष्टं तथा महत्त्वोपेतादेव कार्यद्रव्यात्कार्यमहदुत्पत्तिः दृष्टैव। अतः कारणभूतस्यापि महत उत्पत्तिः अन्यस्मान्महतः, तस्याप्यन्यस्मादितिदर्शनबलादाश्रयणीयम्; मैवम्, तथात्वे सर्वेषां तुल्यकारणत्वाविशेषेण प्रकर्षाप्रकर्षहेत्वोः कारणसंख्याभूयस्त्वाभूयस्त्वयोरसंभवात्, कार्यकारणयोरपि तुल्यपरिमाणत्वापत्तिः। सा चानिष्टा। अस्ति च कार्यकारणयोर्जगतः परिमाणभेद इति कार्यकारणयोरनन्तावयवत्वेन तुल्यपरिमाणपरिहारार्थं कारणस्य कार्यादल्पपरिमाणत्वमास्थेयमिति महत्कार्योत्पत्तौ तत्परिमाणापेक्षयाऽल्पपरिमाणकार्यद्रव्यस्यैव कारणत्वमास्थेयम्। सति चैवं प्रत्यक्षद्रव्याणां यदल्पपरिमाणं तत् त्रसरेणुस्त्र्यणुकमिति चोच्यते। तत्त्रिभिः द्व्यणुकैरारभ्यते, न द्वाभ्यां, अवयवमहत्त्वाभावेऽवयवबहुत्वेनैव महत्त्वोत्पत्तेः। तत्रापि त्रिकेणैवोपपत्तेर्न बहुकल्पना न्याय्या। किंच द्व्यणुकचयेनैव महावयव्युत्पत्तौ तद्विनाशे नियमो नाल्पतरतमादिभावेनावयवदर्शनानुत्पत्तिः स्यात्, तस्मात्त्रिभिरेव द्व्यणुकैस्त्रसरेणुरुत्पद्यते, स च महान् अवयवबहुत्वात्, द्व्यणुकाख्यं कार्यं महत्त्वरहितं आरम्भकद्रव्ये सति अस्मदादीनामप्रत्यक्षत्वात्, परमाणुवत्। ततश्च कार्यपरिमाणारम्भकादल्पपरिमाणं कारणस्येति द्व्यणुकस्याणुत्वमेव परिमाणम्। अनेनैव न्यायेनाणुत्वपरिमाणापेक्षयाऽल्पपरिमाणं परमाणुत्वमिति द्व्यणुककारणयोः परमाणुत्वसिद्धिः। तत्र द्व्यणुकमधिकावयव्यपेक्षया ह्रस्वं न दीर्घम् ह्रस्वान्तराभावात्, ह्रस्वापेक्षत्वाच्च दीर्घ एव परमाणुर्न ह्रस्वः, किन्तु परिमण्डलं निरतिशयास्पदिकावच्छिन्नत्वात्। तस्या-

वच्छेदकस्य वैषम्ये च प्रमाणाभावात्। सर्वतस्समत्वाद्‌द्व्यणुकस्य तत्र न तत्परमाण्वारब्धस्य परमाण्वोर्द्विगुणदिक्परिच्छिन्नस्य परिच्छेदकवैषम्यानुमानाद्‌ध्रस्वत्वसिद्धिः। प्रत्यक्षावयविषु क्रमिकावयवारब्धेषु वैषम्यदर्शनाभावात्। ततश्च परमाण्वोस्संयोगभाजोरपि क्रमः, एकमूर्तद्रव्यावरुद्धे देशे तदैवान्यस्य स्थित्ययोगात्। अत एव सर्वतस्संश्लिष्टत्वेनानेकपरिमाणानुपपत्तिरिति यदुक्तं तदपि परिहृतमेव। स्पर्शद्रव्यस्यान्योऽन्यमन्तस्संश्लेषाभावात्। तत्र द्व्यणुकेषु संयोगभूतकर्मदिगनुसारेण क्रमभेदात्समविषमचतुरस्रदीर्घावयव्यारम्भ उन्नेयः।

तदेवमारम्भकं चतुर्विधद्रव्यं गुणकर्मणां समस्तानां कारणम्, आकाशदिगात्मानो गुणानामेव कारणम्। मनो ह्यनवयवि द्रव्यं च गुणकर्मणामिति विशेषः। तत्र चावयविन एकैकावयवगुरुत्वसमवाय एव न गुरुत्वान्तरम्, येन फलद्वैगुण्यं स्यात्। अन्त्यावयविन्यपि द्व्यणुकादिक्रमेण परमाणुगुरुत्वमेव। एवं च तेन तस्यादृष्टवशादुत्पन्नोऽवयवी त्रिविधः—शरीरेन्द्रियविषयभेदात्। भोगायतनं शरीरं, भोगसाधनानि इन्द्रियाणि। सर्वं वस्त्ववभासमानं विषयशब्देनोच्यते।

## पृथिवीनिरूपणम्

तत्र गन्धवत्त्वं पृथिव्या लक्षणम्। सा च पृथिवी गन्धरसरूपस्पर्शपरिमाणगुरुत्व नैमित्तिकद्रवत्वसंस्कारसंयोगविभागपरत्वापरत्ववती। एवंविधायाः कार्यं शरीरेन्द्रियविषयसंज्ञकम्। प्राणापानादिचेष्टाश्रयं भोगसाधनेन्द्रियाश्रयं शरीरं। इन्द्रियञ्चगन्धव्यञ्जकं घ्राणम्। विषयस्तु मृदादिः।

## जलनिरूपणम्

अपाकजरसवत्त्वमब्लक्षणम्, सांसिद्धिकद्रवत्वं वा। रसरूपस्पर्शसंख्यापरिमाणसंयोगविभागपरत्वापरत्वसांसिद्धिकद्रवत्ववेगस्नेहवत्य आपः। कार्यमपि[१] तासां द्विविधमेव, विषयेन्द्रियभेदात्। विषयः सरित्समुद्रकरकादीनि। इन्द्रियं रसोपलम्भकं रसनम्।

## तेजोनिरूपणम्

उष्णस्पर्शवत्तेजः। रूपस्पर्शपरिमाणसंयोगवियोगविभागपरत्वापरत्वलघुवेगवत्त्वान्नवगुणं तेजः। कार्यम् विषयेन्द्रियभावेन द्विविधमेव। विषयस्तु धूमध्वजादिः। इन्द्रियं रूपव्यञ्जकं चक्षुरशब्दाभिधेयम्।

## वायुनिरूपणम्

अपाकजानुष्णाशीतस्पर्शवान्वायुः, स्पर्शान्तराभिव्यञ्जकस्पर्शवान्वा। स्पर्शपरिमाणसंयोगविभागपरत्वापरत्वलघुत्वसंस्कारवान्वायुः। तत्र कार्यं त्रिविधम्।

---

[१] कार्यरूपाणां पृथिव्यप्तेजोवायूनां शरीरेन्द्रियविषयभेदेन त्रैविध्यं, तार्किकाणामभिमतम्। प्राभाकरमीमांसकानान्तु पृथिव्या वायोश्च एवंत्रैविध्यमभिमतम्। अप्तेजसों द्वैविध्यमेवाभिप्रेतमिति ध्येयम्।

इन्द्रियविषयप्राणसंज्ञकम्। इन्द्रियं स्पर्शोपलंभकं स्पर्शनं सर्वशरीरव्यापि। विषयस्तु तिर्यग्गमनस्वभावो वायुः। प्राणोऽन्तश्शरीरे रसमलधातूनां प्रेरणादिहेतुरेकस्सन् क्रियाभेदादपानादिसंज्ञां लभते। एवं पृथिव्यादीनि चतुर्विधानि द्रव्याणि नित्यानित्यस्वरूपेण द्विविधानि। तत्र परमाण्ववस्थानि द्रव्याणि नित्यानि, सदकारणत्वात्, द्व्यणुकादीन्यनित्यानि, कादाचित्कत्वात्। त्रसरेण्वादीनां महतां प्रत्यक्षं प्रमाणम्। तत्रापि स्पर्शवन्महत्स्पर्शनम्, रूपवन्महच्चाक्षुषम्। ततश्च पृथिव्यप्तेजसां त्रयाणां महत्त्वाद्रूपवत्त्वात्स्पर्शवत्त्वाच्चचक्षुस्पर्शनाभ्यां ग्रहणम्। वायोस्तु महतः स्पर्शेन्द्रियग्राह्यत्वमेव। परमाणुद्व्यणुकयोः त्रसरेण्वादिकार्यद्रव्यलिङ्गकानुमानमेव प्रमाणमिति सिद्धम्।

### आकाशादिनिरूपणम्।

शब्दगुणानुमेयमाकाशं द्रव्यमित्यात्मवादे वक्ष्यते।

दिक्कालावनुमेयावेव। तथाहि-विभुभ्यो नित्येभ्यश्च व्यतिरिक्तेषु सर्वेषु वस्तुष्विदमवच्छेदद्वयं दृश्यते—इतः प्रागितश्च प्रत्यगित्येकम्, अद्येदं न, न ह्यः न श्व इत्यपरम्। तत्र हेतुद्वयेन भवितव्यम् तत्र हेतुः प्रागित्यादिकावच्छेदहेतुर्दिगित्युच्यते, अवच्छेदान्तरहेतुः काल इति। तत्र शब्दपरिमाणसंयोगविभागवानाकाशः। परिमाणसंयोगविभागवन्तौ दिक्कालौ। तत्र चतुर्णामाकाशात्मकालदिशां नित्यत्वं निरवयवत्वमस्पर्शवत्त्वं सर्वगतत्वं परममहत्त्वञ्च विद्यते। अगत्वा सर्वमूर्तिमद्भिः युगपत्संयुज्यमानत्वं सर्वगतत्वमित्युच्यते। सर्वसंयोगिसमानदेशत्वं परममहत्त्वमित्युच्यते। मनसोऽपि नित्यत्वं निरवयवत्वं महत्स्पर्शवत्त्वं विद्यते, तदेवं नवैव द्रव्याणि। तत्रैव वृद्धव्यवहारे द्रव्यशब्दप्रयोगात्। तेषामनुगतं लक्षणं स्वात्मनि कार्यारम्भकत्वमित्युक्तमेव।

### गुणनिरूपणम्।

रूपरसादयो गुणाः। तेषां किं लक्षणम्? तत्तु पदार्थविद्भिरुक्तम्—द्रव्याश्रय्यगुणवान् संयोगविभागेष्वनपेक्षमकारणं गुणलक्षणमिति[१]। एवं तर्हि शक्तिसंख्यासादृश्येष्वतिप्रसंगः। मैवम्। द्रव्यमेवाश्रयते इति द्रव्याश्रयीत्युच्यते। ततश्च संख्यादीनां गुणादिष्वपि संभवान्नातिप्रसंगः।

### कर्मनिरूपणम्।

[२]द्रव्याश्रय्यगुणवान्संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम्।

### सामान्यनिरूपणम्।

नित्यैकत्वे सति निरतिशयेनानेकत्र वर्तमानं सामान्यम्।

[१] द्रव्याश्रय्यगुणवान् संयोगविभागयोरकारणमनपेक्ष इति गुणलक्षणमिति (१-१-१६) वैशेषिकं सूत्रमत्रानुसन्धेयम्।

[२] एकद्रव्यमगुणं संयोगविभागयोरनपेक्षकारणं कर्मलक्षणमिति (१-१-१७) वैशेषिकसूत्रमत्र स्मर्तव्यम्।

**ननु द्रव्ये एव तथोत्पन्ने संयोगविकल्पमाविर्भावयतो न तदतिरेकी संयोगो नाम कश्चिद् गुणविशेषः। तन्न, प्रत्यभिज्ञायेते हि द्रव्ये अनुवृत्ते। कादाचित्की च तयोरपरेयं दशा दृश्यत इति भवत्येव भेदसिद्धिः। स्थापिता**

तरतमभावेन द्रव्ये वर्तमानो गुण इति शक्त्यादीनां बुद्धिलक्षणत्वमेव। तदुक्तं "सादृश्यं[१] सादृश्यमिति"। समवायलक्षणमत्रैव वक्ष्यामः।

क्रमपदार्थनिरूपणम्।

क्रमो नाम पदार्थानां विततिरेव। ननु तर्हि विततिरपि पौर्वापर्यान्नातिरिच्यते। मैवम्। पौर्वापर्याद्विततिर्भिन्नैव। तथाहि—द्वितीयमात्रापेक्षयैकैकपदार्थवर्ति पौर्वापर्यम्। विततिस्तु अनेकाश्रये केवलसंख्यावत्। तथा पूर्वापरदिक्कालताविरहेऽनवधारितेऽपि देशतः पूर्वपरत्वे परस्परसन्निहितदेशस्थद्रव्याणां विततयनुगतेश्च पौर्वापर्याद्वितानस्य भेदस्सिद्धः। स च पञ्चमाध्यायार्थः[२]।

ननु पौर्वापर्यमपि पदार्थानां क्रमः, ततश्चाध्यायार्थत्वं तस्य किमिति न भवति? उच्यते;—युगपत्प्रसक्तानुष्ठानस्य वेदार्थवर्गस्यानुष्ठानयौगपद्यासंभवे वैतत्यमेव तदुपपादकतया स्वतोऽवगम्यते, न पुनरेकैकपदार्थवर्ति पौर्वापर्यमिति। विततिरूप एव क्रमोऽनुष्ठाननिर्वाहकतयाऽविधेयत्वेऽपि शास्त्रस्वीकृत इति स एवाध्यायार्थः।

तदेवं नवविधं पदार्थानां परिकल्पनं प्राभाकराणाम्। आसां द्रव्यादिबुद्धीनां कारणदोषबाधकप्रत्ययाभावात्[३] स्वतः प्राप्तं प्रामाण्यमिति दिक्।

[ इति प्राभाकरमतेन पदार्थऽनिरूपणम्। ]

**चोदयति—ननु द्रव्ये एवेति।** उत्तराधरभावेन निरन्तरोत्पन्नो द्रव्यक्षण एव संयोगक्षणमुत्पादयति इति, द्रव्यव्यतिरेकी संयोगो नाम कश्चित् गुणविशेषो नास्माकमभिमत इति शङ्कां परिहरति—**तन्नेति। प्रत्यभिज्ञायेते इति।** पूर्वोत्तरयोरनुवृत्ततया द्रव्ये प्रत्यभिज्ञायेते इत्यर्थः। तयोस्संयोगिनोः कदाचित्संयुक्ताक्षस्यापरेयं दशा दृश्यते इति, संयोगसंयोगिनोर्भेदो भवत्येव।

---

[१] बृहती, उपमानप्रकरणम् पृ० १०७ मद्रासससंस्करणम्। इदञ्च बृहतीवाक्यं ऋजुविमलायामित्थं ग्रन्थकारेण व्याख्यातम्। तथाहि-सादृश्यमिति यत्र ज्ञानं, तत्सादृश्यम्। अस्ति चेदं ज्ञानम्, तन्निबन्धना च विषयव्यवस्था इति। वक्ष्यते चोपमानपरिच्छेदे विषयोऽस्य वित्तिसिद्ध इत्यादिना।

[२] अत्रेयं विषयशुद्धिः—पञ्चमेऽध्याये क्रमो निरूप्यते इति स्थितिः। तत्र विततिरूपः क्रम इति साम्प्रदायिका आचक्षते। स च एतत्पदार्थानन्तरमेतत्कर्तव्यमिति अनेकेषु पदार्थेषु संख्यावद् व्यासज्यवर्तमानश्च समुदायः। स एव पञ्चमाध्यायार्थ इति। नव्यास्तु—यत्किञ्चित्पदार्थप्रतियोगिको यत्किञ्चित्पदार्थानुयोगिक आनन्तर्यविशेषः। स चोत्तरपदार्थस्याङ्गम्। तस्य चोत्तरपदार्थस्मारकत्वात् दृष्टार्थताऽपि इति वदन्ति। दं नवीनमतं निराकुर्वन्प्राचीनसम्मतं विततिविशेषं क्रमं समर्थयति।

[३] चोदनासूत्रे भाष्यकारेण "नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना", (शा. भा. १. १. २.)

**च मीमांसाजीवरक्षायां प्रत्यभिज्ञा। अतः संयोगलक्षणसाधारणगुणासमवायिकारणोपगृहीता अवयवा एव समवायिकारणमवयविन उपपद्यन्ते।**

**[1]यश्चायमवयविनो वृत्तिविकल्पेन दोष उक्तः, सोऽप्यवयविनः प्रतीतौ स्थितायामनुपपन्नः। व्यासक्त एवावयवेष्ववयवी, नैकत्र जातिवत्परिसमाप्तः। अवयवान्तरैरपि च विना स तस्य कोऽपि महिमा, य एक एवानेकावयवानुस्यूत इति किं न कल्प्यते। यद्यपि चावयविन एकैकत्रावृत्तिस्तथापि नावृत्ति-**

ननु केयं प्रत्यभिज्ञा? संस्कारेन्द्रियाभ्यां जातो ज्ञानविशेष इति चेत्तर्हि स्मृतिरेवेत्यत आह—**स्थापितेति**। मीमांसाजीवरक्षायां क्षणिकत्वनिराकरणपर्वणि इत्यर्थः। उपसंहरति—**अत इति**। परस्परसंयोगसहिता अवयवा एवावयविनः समवायिकारणं भविष्यन्तीति।

अनुभाषते—**यश्चायमिति**। यद्बहुषु प्रत्येकं परिसमाप्य वा एकदेशेन वा वर्तते। नच कृत्स्नैकदेशाभ्यां प्रकारान्तरमस्ति। अनयोरन्यतरनिषेधस्यान्यतरनान्तरीयकत्वान्नित्यानित्यत्वयोरिव[2]। किञ्च न चैकत्र कृत्स्नसमाप्तेरसंभवादिति परिहरति—**सोप्यवयविन इति**। वृत्तिप्रकारमाह—**व्यासक्त इति**।

नन्ववयविनः स्वावयवैर्विनाऽवयवान्तराभावादवयवेषु व्यासज्य वृत्तिर्न संभवतीत्यत्राह—**अवयवान्तरैरिति**। अवयवान्तरैर्विना प्रतीतिबलादेक एवानेकेष्वनुस्यूत इति कल्प्यत इत्यर्थः। किञ्च भवत्पक्षे वृत्तिरपि परमाणुभ्यां नातिरिच्यते, किन्तु निरन्तरोत्पाद एव परमाण्वोर्वृत्तिरिति भवद्भिर्व्यवहर्तव्यम्। तत्र च परमाणुस्वरूपातिरिक्ता काचिद्वृत्तिर्न वस्तुसती, ततश्च कारणगुणवत्प्रत्येकं कात्स्न्र्येन वृत्तिरप्युक्तिमात्रमेव, अतो भवत्पक्षे न किंचित्क्वचित् कात्स्न्र्येन एकदेशेन वा वर्तमानं दृष्टमिति। तयोर्वृत्तिं प्रति व्यापकत्वमयुक्तम्। अतोऽवयवी वृत्तिमान्न भवति, कात्स्न्यैकदेशव्यतिरिक्तवृत्तित्वात्खरविषाणवदिति निरस्तमेव, व्यासंगेनेत्युक्तत्वात्।

---

इत्यादिना भाष्येणायथार्थत्वलक्षणमप्रामाण्यमाशङ्कितम्। तत्परिहारार्थं तथात्वलक्षणं प्रामाण्यस्वतस्त्वं साध्यते। इदञ्च स्वतस्त्वं द्विविधं प्रामाण्यस्योत्पत्तौ स्वतस्त्वं ज्ञप्तौ स्वतस्त्वञ्चेति। ज्ञानोत्पादकसामग्रीजन्यत्वमाद्यस्य लक्षणम्। ज्ञानग्राहकसामग्रीग्राह्यत्वमन्त्यस्य लक्षणमिति बोध्यम्। इदञ्चानागतावेक्षणन्यायेन चोदनासूत्रे वार्तिककारैः विचार्य निरणायि। तच्च प्राभाकरमते औत्पत्तिकसूत्रे प्रतिपाद्यत इति स्थितिः। अर्थतथात्वलक्षणं प्रामाण्यं घटमहं जानामीत्याकारकं व्यवसायेन गृह्यत इति प्राभाकरमीमांसकाः कथयन्ति। तन्मते ज्ञानग्राहकसामग्रीपदेनेन्द्रियसन्निकर्षादिघटितसामग्रीपरिग्रहात्तज्जन्यव्यवसायात्मकग्रहविषयत्वात् स्वतोग्राह्यत्वं प्रामाण्यस्येति मन्तव्यम्। इतोऽधिकं ज्ञानानां स्वप्रकाशत्वनिरूपणावसरे वक्ष्यत इति।

[1] अत्रेदं बोध्यम्—विज्ञानवादिनो योगाचारा ज्ञानज्ञेयभेदेनोपलभ्यमानं द्विविधं वस्तु

**दोषः। संयोगसचिवा एवावयवा जनका आश्रयभूता यतः जनकतयैवाश्र-यत्वात् समवायिकारणानाम्। अत एव संयोगः सद्वितीयाश्रय इति न दोषः। न च सकलावयवोपलम्भसापेक्षा तदुपलब्धिः, अवयविनस्तेभ्यो भिन्नत्वात्। न चैतावता एकावयवग्रहणेऽपि ग्रहणपर्यनुयोगो युक्तः, कार्यानुगुणत्वात् कारण-**

नन्वेकातिरिक्तानेकाभावादेकैकत्रावृत्तेरवृत्तिरेवेत्युक्तमेवेत्यत्राह—**यद्यपि चेति**। कुत इत्याह—**संयोगसचिवा इति**। यथावयविनः संयोगसचिवा एवावयवावजनकाः, तथा संयोगसचिवा एवावयवाश्रयभूताः, इत्येकैकत्र वर्तमानाभावेऽपि नावृत्तिदोषः।

ननूत्पादकत्वं जनकत्वं, उत्पन्नस्याधारत्वमाश्रयत्वं कार्ये उत्पन्ने कारणरूपं नश्यतीति जनकत्वमाश्रयत्वं चैकस्य न संभवतीत्यत्राह—**जनकतयैवेति**। सर्वत्र समवायिकारणानां जनकतयैवाश्रयत्वम्, अवयविनः स्वावयवेषु समवाय एव वृत्तिर्नान्येति। ननु कारणभूतोऽपि संयोगः किमेकत्र वर्तते? नेकत्र वा? इत्युक्तमतएवेति।

ननु यद्यनेकावयवेष्ववयवी व्यासंगेन वर्तते, तर्हि सकलावयवोपलम्भ एवावयव्युपलभ्येतेत्युक्तमित्यत्राह—**नच सकलेति**। कुत इत्याह—**अवयविन इति**। नन्ववयविनोऽवयवाद्भेदेनावयव्युपलंभे न सकलावयवोपलम्भापेक्षा तर्हि एकावयवोपलंभेऽवयव्युपलभ्येतेत्यत्राह—**नचैतावतेति**। कुत इत्याह—**कार्यानुगुणत्वादिति**। तेन कतिप-

---

विचार्यमाणं ज्ञानमेवावशिष्यते, अतस्तदेव स्वीकारमर्हति। ज्ञेयन्तु व्यतिरेकाव्यतिरेकविकल्पेन वृत्तिविकल्पेन च परीक्ष्यमाणं न सेद्धुमर्हति। अतस्तदभ्युपगन्तुन्न शक्यते। तथाहि—बाह्यं घटादिकमवयवेभ्यः परमाणुभ्योऽवय व्यतिरिच्यते न वेति द्वेधा विकल्प्य निराक्रियतेऽवयविद्रव्यम्। एवमवयवेष्ववयविद्रव्यं द्वित्वादिवद्व्यासज्य वर्ततेऽथवा प्रत्येकं पर्याप्येति वृत्तिविकल्पेनावयविद्रव्यमेव निराक्रियते। इदं दूषणद्वयमवयविविषयमिति मन्तव्यम्। जातिगुणकर्मस्वपि निराकरणप्रकारोऽयमनुसन्धेयः। इदं दूषणद्वयं विज्ञानवादेऽपि स्यात्। बाह्यास्तित्ववादिभिर्यद्यावद्बहिरस्तीत्यूरीक्रियते, तत्सर्व विज्ञानवादिभिः अन्तस्सदित्येवाभ्युपगयनीयम्। अङ्गीक्रियते च तैः।

यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासते।
सोऽर्थविज्ञानरूपत्वात्तत्प्रत्ययतयाऽपि च॥ प्र० स० आ० प० श्लो ६,
नीलपीतादि यज्ज्ञाने बहिर्वदवभासते।
तन्न सत्यमतो नास्ति विज्ञेयं तत्त्वतो बहिः॥ प्र० वा०।

तथा च सर्वस्यान्तस्सत्यत्वे बहिरिवान्तरपि व्यतिरेकाव्यतिरेकवृत्तिविकल्पोक्तौ दोषौ प्रसज्येयाताम्। अपि चावयविवादिनं प्रत्यभिहिताविमौ दोषौ समुदायवादिनोर्वैभाषिकसौत्रान्तिकयोर्मते आपद्येयाताम्, तथाहि—समुदायस्समुदायिभ्यः भिन्नो न वेति भेदाभेदपक्षोक्तदोषस्स्यात्। समुदायिषु समुदायो द्वित्वादिवत् व्यासज्य वर्तते उत प्रत्येकं पर्याप्त्या इति वृत्तिविकल्पोक्तदोषश्च स्यात् समुदायवादिनोर्वैभाषिकसौत्रान्तिकयोर्मते उष्ट्रलगुडन्यायेनेति विभावनीयं सुधीभिः।

कल्पनायाः। कार्यसिद्ध्यर्थं हि कारणं परिकल्प्यते न कार्यविनाशाय। तेन यावतामवयवानां ग्रहणे तदुपलम्भस्तावतामेवावगमस्तदवगमनिबन्धनमिति दर्शनबलेनाभ्युपेयते।

[1]भिन्नत्वेऽपि तत एव सहोपलम्भनियमः; उपेयोपायभावात्। उपेयभूतोऽवयवी उपायपदवर्तिनश्चावयवाः। प्रत्येकं तु तेषां शक्यत एवासहोपलम्भोऽपि वक्तुम्, अवयवान्तरयोगिनोऽवयविनोऽपि परिग्रहे इतरावयवव्यतिरेकोऽपि सुदर्श एव।

इयश्च भेदसाधने युक्तिः—अन्वयव्यतिरेकाभ्यां हि वस्त्वन्तरत्वमवसीयते, अवगम्यमानोऽपि चावयवी विलक्षणबुद्धिगोचरतामावहत्येव। अवयवी हि स्थवीयानेको हृदयमागच्छति अवयवास्तु क्षोदीयांसो भूयांसश्च। स चायमवयवी महत्त्वाद्रूपवत्त्वाच्च चाक्षुषः स्पार्शनो वा, पार्थिवो वाम्भसो वा तैजसो

यावयवानां ग्रहणमवयव्युपलब्धिनिबन्धनमिति दर्शनबलादभ्युपगम्यत इत्याह—तेन यावतामिति।

नन्ववयवादत्यन्तभिन्नोऽवयवी यदि, तर्हि घटपटयोरिव सहोपलम्भनियमो नोपपद्यत इत्यत्राह—भिन्नत्वेऽपीति। कुत इत्याह—उपेयोपायेति। उपायोपेयभावमेव दर्शयति—उपेयभूत इति। किञ्च नियमेन सहोपलंभोऽपि नास्तीति शक्यं वक्तुमित्याह—प्रत्येकन्त्विति। सहोपलम्भमेव दर्शयति—अवयवान्तरेति।

अवयवावयविनोरसहोपलम्भ एव परस्परभेदसाधनेऽपि हेतुरित्यत्राह-इयं चेति।

अयमत्र प्रयोगः—अवयवाद्भिन्नोऽवयवी, तदनुपलंभेऽप्युपलभ्यमानत्वात्। कुड्यघटवत्, भिन्नोऽवयवी, तेषां बहुत्वे सत्येकत्वेनाबाधितप्रत्ययवेद्यत्वात्स्थूणासु वंशवत्। पुनरपि भेदे हेत्वन्तरमाह—अवगम्यमान इति। वैलक्षण्यमेव दर्शयति—अवयवा हीति। अवयवाद्भिन्नोऽवयवी, ततोऽधिकपरिमाणत्वात्सर्षपमहीधरवत्।

ननु वनादिष्विव परमाणूनां भेदाग्रहणादेवैकैकत्वबुद्धिः दूरस्थसैकतपुञ्जवदित्युक्तम्। मैवम्। प्रत्येकं प्रत्यक्षयोग्यानामेव सिकतानां दूरेऽप्रत्यक्षता, इह पुनरयोग्यानां परमाणूनां केन देशविशेषेण प्रत्यक्षता? ततश्च सिकतापुञ्जादिषु वन इव बाधकप्रत्ययादवयव्ययवभावः, यत्रानन्यथासिद्धा प्रत्यभिज्ञा, यथा पद्माद्यवयविनि विकाससंकोचादौ, तत्रावस्थाभेदमात्रम्, नावयव्यन्तरमुत्पाद्यते। तेनाश्रयद्रव्याभावाज्जातेरपलापः प्रलापमात्रम्। तथा च आश्रयभूतावयविसाधनं, स चायं पार्थिवो वा आप्यो वा तैजसो

---

[1] 'सहोपलम्भनियमादभेदो नीलतद्धियोरिति' वदन्तो योगाचाराः—अर्थज्ञानयोस्सहोपलम्भस्याभेदसाधकत्वं मन्यन्ते। अत्र शालिकनाथस्तमेवोपायोपेयभावेन अर्थज्ञानयोर्भेदसाधकत्वे नोपपादयति भिन्नत्वेऽपीत्यादिना। अयमर्थस्तत्वालोके विवरिष्यते।

वा। वायवीयस्तु महत्त्वात् स्पर्शवत्त्वाच्च स्पार्शन एव। द्व्यणुकस्तु चातुर्भौतिकोऽप्यमहत्त्वादप्रत्यक्ष एव। तस्य चामहत्त्वम्, [१]अवयवबहुत्व-महत्त्वप्रचयविशेषाणां महत्त्वगुणकारणानामभावात्। गगनादीनां तु महतामपि रूपस्पर्शविधुरतया न प्रत्यक्षगोचरतेत्यलमतिविस्तरेण।

ननु सकलावयवसमाश्रितत्वादवयविनस्तिरोहितैरवयवैः सहेन्द्रिया-सन्निकर्षे कथमवयविना समागमः? न चासङ्गतमेव बहिरिन्द्रियमवबोध-कमिति प्रतिज्ञा युज्यते, अवयवानामप्यसन्निकृष्टेन्द्रियबोध्यत्वापत्तेरिति। उक्तोत्तरमेतत्, भिन्नत्वादवयविनोऽवयवान्तरासंयोगेऽपि संयोगबुद्धेः पटादि-षूपपन्न एवेन्द्रियसन्निकर्षोऽवयविनः। तदनया दिशा तावदुपपन्नमाश्रय-द्रव्यमाकृतेः पृथुलम्।

ननूक्तं रूपादिव्यतिरेकि द्रव्यं नोपलभ्यत इति, किमिदं पश्यतो-हरत्वम्—प्रतीयते हि महानवयवी रूपादिव्यतिरेकी। अत एव जपाकुसुम-

वाऽवयवी महत्त्वाद्रूपवत्त्वाच्चाक्षुषो वा स्पार्शनो वेत्याह—**स चायमिति**। वायवीयस्त्व-वयवी महत्त्वात्स्पार्शन एव, रूपवत्त्वाभावान्न चाक्षुष इत्याह—**वायवीयस्त्विति**। पार्थि-वाप्यतैजसवायवीयरूपचातुर्भौतिकद्व्यणुको रूपस्पर्शवत्त्वे सत्यमहत्त्वादप्रत्यक्ष इत्याह—**द्व्यणुकस्त्विति**।

ननु कथं तस्यामहत्त्वमित्यत्राह—**तस्य चेति**। ननु यदि महत्त्वमेव प्रत्यक्षत्वे निबन्धनं न रूपवत्त्वं स्पर्शवत्त्वं वा, तर्हि गगनादीनां प्रत्यक्षत्वं स्यादित्यत्राह—**गगना-दीनामिति**। महत्त्वे सति रूपवत्त्वं स्पर्शवत्त्वं वा प्रत्यक्षत्वे निबन्धनम्, न पुनर्महत्त्वं स्पर्शवत्त्वं रूपवत्त्वं च प्रत्येकमित्यर्थः।

चोदयति—**ननु सकलावयवेति**। बहिरिन्द्रियाणां सन्निकृष्टग्राहित्वात्तिरोहितै-रवयवैस्सहेन्द्रियसन्निकर्षाभावात्, कथमप्रत्यक्षैस्सकलावयव्युपलंभ इति।

ननु तिरोहितैरवयवैस्साक्षात्सन्निकर्षाभावे सन्निकृष्टसंयोगादवयव्युपलंभ उपपद्यत इत्यत्राह—**नचासंगतमेवेति**। कुत इत्याह—**अवयवानामिति**। अवयवानां परमाण्वादीनामप्यसन्निकृष्टानां इन्द्रियबोध्यत्वप्रसंगात्, सर्वेषां सर्वदर्शित्वप्रसंगोऽन्ध-बधिरादिव्यवस्थाभावप्रसंगश्चेत्यर्थः। परिहरति—**उक्तोत्तरमिति**। अवयवावयविनो-र्भेदात्सकलावयवानामिन्द्रियसन्निकर्षाभावेऽपि कतिपयावयवेषु अवयविन इन्द्रियसन्नि-कर्षादेव सकलावयव्युपलम्भ इति अनया—दर्शितेन दिङ्मात्रेणाऽऽकृतेराश्रयं स्थूलद्रव्य-

---

[१] परिमाणकारणविचारप्रसङ्गे वैशेषिकसूत्रम्—कारणबहुत्वाच्च [ वै० द० ७-१-९ ] इति। अत्र सूत्रे चकारात् महत्त्वप्रचयविशेषौ ग्राह्यौ। एतैस्त्रिभिर्हेतुभिः कार्यद्रव्ये परिमाणमुत्पद्यते। तदेवार्थतोऽनुवदति अवयवेत्यादिना।

सन्निधानाभिभूतरूपमपि स्फटिकद्रव्यं प्रत्यभिज्ञायते। कथं नामागृहीतं प्रत्यभिज्ञायेत। अपि च दर्शनस्पर्शनाभ्यामेकार्थग्रहणाद्रूपस्पर्शव्यतिरेकि द्रव्यं स्फुटतरप्रतीतं तत् नापन्होतुमुचितम्। अत एव वनादिषु बाधकप्रत्ययबलेन तत्कल्पना न प्रसरतीति दूरतयान्तरालाग्रहणनिबन्धनोऽयमभेदव्यवहारः प्रवर्तत इति। अवयविनि तु बाधकज्ञानं नास्तीति पुरस्तादावेदितम्। तेनाश्रयद्रव्याभावाज्जातेरपलापः प्रलापमात्रमिति स्थितम्।

यच्चेदमुदितं 'नित्यतया जातेरात्मविज्ञानजननेऽपि न शक्ततेति' तदपि [१]क्षणभङ्गनिराकरणपर्वणि विस्तरेण नित्यानामर्थक्रियाकारित्वसमर्थनेन प्रत्युक्तम्। मा वा स्वविज्ञानमपि जातिरजीजनत्। तथापि कथङ्कारंरसावप्रत्यक्षा। काममप्रत्यक्षा। अथवा न खल्वियमाज्ञा राज्ञः कारणभूतस्यैव

मुपपन्नमित्याह—तदनयेति। ननूक्तमित्यनुभाष्य परिहरति—किमिदमिति। पूर्वं शुक्ले स्फटिके जपाकुसुमसन्निधानाद्रक्ततया गृह्यमाणे शुक्लमेव स्फटिकं रक्तं भवतीति द्रव्यं प्रत्यभिज्ञायते, द्रव्याग्रहणे तदिदमिति प्रत्यभिज्ञा नोपपद्यत इत्यर्थः।

हेत्वन्तरमाह-अपि चेति। यमहं चक्षुषाऽद्राक्षं तमहं स्पर्शनेन स्पृशामीति दर्शनस्पर्शनाभ्यामेकार्थग्रहणदर्शनाद्रूपस्पर्शेन्द्रियग्रहणभावाच्च द्रव्यग्रहणं स्पष्टमेवेति।

ननु यदि महानेकोऽयमित्यवयविबुद्ध्यावयवी संभाव्यते तर्हि महदिदमेकं वनमिति बुद्ध्या वनावयवी स्थित इवेत्यत्राह—वनादिष्विति। ननु तर्हि अवयविन्यपि सूक्ष्मतयाऽन्तरालाग्रहणादभेदव्यवहार इति बाधकज्ञानं समानमेवेत्यत्राह—अवयविनीति। एकदैकस्याप्यन्तरालग्रहणे सूक्ष्मत्वादत्राग्रहणमिति कल्प्यते, इह तु सर्वेषां सर्वदा ग्रहणादभेदादेवेति न बाधकसाम्यमित्यर्थः। उपसंहरति—तेनेति।

अनुभाषते—यच्चेदमिति। नित्यत्वेन संमता जातिः किं कार्यं प्रति शक्ता? अशक्ता वा? शक्तत्वे सर्वदा कार्योत्पत्तिप्रसंगः। अशक्तत्वे न कापि कार्यम्। किंच नित्यस्य कारणत्वमनुपपन्नम्, अन्वयव्यतिरेकाभावात्। यदि व्यतिरेकाभावेऽप्यन्वयमात्रेण कारणत्वं, तदा सर्वकार्येषु दिक्कालाकाशादीनामप्यन्वयाविशेषात् कारणत्वं स्यात्, तच्चानिष्टमिति। परिहरति—तदपीति। किंच नित्या जातिः स्वकार्यभूतं विज्ञानं मा वाऽजीजनत्, तदा किं भविष्यतीत्यत्राह—मा वा स्वविज्ञानमिति। बौद्धः पृच्छति कथं सा प्रत्यक्षेति। उत्पादकस्यैव प्रत्यक्षत्वाङ्गीकारात्, कार्यं प्रत्यनुत्पादिका सा जातिः कथं प्रत्यक्षेत्यर्थः। प्रौढोक्त्या परिहरति—काममप्रत्यक्षेति।

ननु भवतां किमप्रत्यक्षैव जातिरित्याशंक्य परिहारान्तरमाह—अथवा न खल्वियमिति।

यद्वा मा वा स्वविज्ञानमित्यादेरयमर्थः। जातिर्मा वा स्वविज्ञानमजीजनत् कथं

---

[१] सत्ता परा जातिरिति तार्किका मन्वते। अर्थक्रियाकारित्वं सत्त्वमिति सौगता

प्रत्यक्षेण भवितव्यमिति। यस्तु यतः प्रतीयते स तस्य विषय इति सार्वलौकिकम्।

ननु प्रत्यक्षमप्यविसंवाद्येव प्रमाणम्। असंविवादश्च तस्मादात्मलाभात् अन्यतस्तु भवतो[१]ऽतथाभूतस्य वाऽभावेऽपि भावसम्भवान्नियमेन संवादायोगादिति बलादभ्युपेयं प्रत्यक्षस्य कारणमेव विषय इति। अत एव च प्रत्यक्षमनुमानं च द्वे एव प्रमाणे; तयोरेवार्थाविसंवादकत्वात्। प्रत्यक्षं साक्षादर्थेन प्रतिबद्धम्, अनुमानं त्वर्थप्रतिबद्धलिङ्गजन्यतया पारम्पर्येण प्रतिबद्धम्। यस्य तु न साक्षात्, नापि परम्परयाऽर्थप्रतिबन्धः, न तस्य प्रामाण्यमुचितं, तस्य तदविसम्वादनियमाभावात्। अर्थाविसम्वादि च प्रमाणं व्यवजिहीर्षमाणा लौकिका आद्रियन्ते इति।

सिद्ध्येदयं मनोरथो यदि ज्ञानान्तरनिबन्धनोऽविसंवादः प्रार्थनीयः।

सा जातिः अप्रत्यक्षा भवेत्, कामं प्रत्यक्षैव सा कारणभूतस्यैव प्रत्यक्षत्वं संभवति, नान्यस्येत्येवं राजशासनं नास्तीत्यर्थः। ननु यदि कारणभूतस्य प्रत्यक्षत्वं तर्हि कीदृग्भूतस्य प्रत्यक्षत्वमित्यत्राह—**यस्तु यत इति**। पूर्वोक्तमेव परिहारान्तरं वक्तुमनुभाषते—**ननु प्रत्यक्षमपीति**। प्रत्यक्षप्रमाणमप्यर्थाविसंवादादेव प्रमाणं नान्यथा, इदं रजतमिति ज्ञानस्यापि प्रामाण्यप्रसंगादिति। ततः किमित्याह—**अविसंवादश्चेति**, यस्य स्वरूपं यस्मिन् सत्येव भवति, तत्तदविसंवादादिति।

ननु कथमेतदवगम्यत इत्यत्राह—**अन्यतस्तु भवत इति**। ननु यद्यप्येवं तथापि भवतः किमायातमित्यत्राह—**बलादभ्युपेयमिति**। यस्योत्पादकत्वं स्वरूपार्पकत्वं च संभवति, तस्यैव प्रत्यक्षत्वं, नान्यस्येत्यर्थः। यस्मात्प्रत्यक्षानुमानयोरेवार्थाविसंवादकत्वं तस्मात्तयोरेव प्रामाण्यमभ्युपगतमित्याह—**अत एवेति**,। तयोरेवार्थाविसंवादकत्वात्तमेव दर्शयति—**प्रत्यक्षमिति**। यस्य साक्षात्पारंपर्येणैवार्थप्रतिबन्धोऽस्ति, तस्यार्थाविसंवादाभावान्न प्रामाण्यमित्याह—**यस्य तु न साक्षादिति**।

नन्वर्थाविसंवादे सति कुतोऽप्रामाण्यमित्यत्राह—**अर्थाविसंवादि चेति**।, इदं प्रमाणमिदं प्रमाणं व्यवजिहीर्षमाणा लौकिका अर्थाविसंवादादेव प्रमाणमाद्रियन्ते इत्यर्थः।

परिहरति—**सिद्ध्येदिति**। न परतः प्रामाण्यं सर्वज्ञानानां संभवति। स्वतोऽनिश्चितोऽर्थः परतो निश्चेतुं न शक्यते, परस्यापि तद्वदेवासामर्थ्यात्।

---

आशेरते। प्रमाणसंबन्धयोग्यतारूपा स्वरूपसत्तैव सत्त्वमिति प्राभाकरा मन्वते। एवं सति अर्थक्रियामकुर्वन्नपि सन् भवतीति न किञ्चिदनवद्यमित्यादिना ग्रन्थेनोक्तमित्यवधेयम्।

[१] नित्यभूतस्येति. मु. पु. पा.

यद्विषयमेव च यज्ज्ञानं, तेनैव तस्मिन् विषये पर्युपस्थापिते नास्ति प्रत्ययान्तरनिबन्धनाऽविसंवादप्रार्थना। अर्थेनाऽप्रतिबद्धमपि च ज्ञानं स्वमहिमपर्युपस्थापितार्थमविसंवादकमेव संप्रवर्तते। तेनोत्पत्तिमात्र एव विज्ञानस्य परापेक्षा, न प्रामाण्येऽ[1]र्थाव्यभिचारलक्षणे। अतः सिद्धं शास्त्रादीनामपि अर्थप्रतिबन्धविरहिणां प्रामाण्यम्। एतदर्थमेव नयवीथ्यां "सर्वं ज्ञानं विषयाव्यभिचारि" इति प्रतिपादितम्। अतो नित्यायामपि जातौ भवत्येव प्रत्यक्षस्य प्रामाण्यम्।

यत् पुनरुक्तम्—'एकभावेन मनसा समाकलयतः कालाक्षीं स्वस्तिमतीं वा नास्ति जातिप्रतीतिः' इति। तदसिद्धम्, आकारो हि सा, प्रतीते

ननु रजतवदरजताच्च रजतज्ञानदर्शनान्न रजतज्ञानमात्रेण रजतनिश्चयो जायते। तत्राऽर्थक्रियाविज्ञानादेव तद्धेतुभूतार्थरजतनिश्चयपुरस्सरं पूर्वं जातस्य रजतज्ञानस्य रजताद्युत्पत्तिर्निश्चेतव्या। अर्थक्रियाज्ञानं तु अर्थाव्यभिचारात्स्वतः प्रमाणमर्थक्रियानिश्चायकमिति नालं पूर्वज्ञानस्य प्रामाण्यं निश्चाययितुम्। उच्यते—अर्थक्रियाज्ञानमपि स्वप्नावस्थायामसत्यायामेवार्थक्रियायां दृष्टमिति नियमेनार्थाव्यभिचाराभावान्न तेनापि स निश्चेतव्यः। तेन सर्वज्ञानानां स्वत एवार्थनिश्चयात्स्वतः प्रामाण्यमिति न ज्ञानान्तरनिबन्धनोऽयमविसंवादः। किंच स्वेनैव स्वविषयाविसंवादसंभवे ज्ञानान्तरेणाविसंवादप्रार्थना न युक्तेत्याह—यद्विषयमेवेति। ननु सर्वज्ञानानां स्वविषयार्थसंबन्धाभावात्कथं तेनाविसंवाद इत्यत्राह—अर्थेनाप्रतिबद्धमपीति। न च व्यवहारदर्शनात्, न तावन्मात्रेणार्थनिश्चय इति शक्यते वक्तुम्। सर्वज्ञानानां शब्दव्यवहारस्यापि जनकत्वादेव विषयाव्यभिचारस्योक्तत्वात्। ननु तर्हि यथार्थत्वेऽपि विवेकाग्रहणशङ्कायां प्रामाण्यशङ्का स्यादेव। मैवम्। विवेकाग्रहणेऽपि पीतशंखादिषु प्रामाण्यस्योक्तत्वात्। तस्मादुत्पत्त्यवस्थायामेव ज्ञानस्य परापेक्षा नार्थाविसंवादलक्षणे प्रामाण्ये इत्याह—तेनोत्पत्तिमात्र एवेति। सर्वज्ञानानामधिकार्थपरिच्छेदसामर्थ्यलक्षणं प्रामाण्यं स्वसामग्र्यधीनोत्पत्तिकमेवेत्यर्थः। तेन मतान्तरेऽधिकाथपरिच्छेदफलत्वात्प्रामाण्यम्। अस्माकस्तु सामर्थ्यविशेषो द्रष्टव्यः। यतः प्रामाण्येऽर्थसंबन्धो नावश्यकः, अतोऽर्थप्रतिबन्धाभावेऽपि शास्त्रादीनां प्रामाण्यं सिद्ध्यतीत्याह—अतस्सिद्धमिति। शास्त्रादीनामर्थसंबन्धाभावेऽपि प्रामाण्यसिद्ध्यर्थमेव सर्वं विज्ञानं विषयाव्यभिचारीति न्यायतः साधितमित्याह—एतदर्थमेवेति। एवं परतः प्रामाण्यचोद्यं स्वतःप्रामाण्येन परिहृत्य प्रकृतमुपसंहरति—अतो नित्यायामपीति।

कालाक्ष्यादिषु न जातिरपराऽवभासत इति पूर्वोक्तं चोद्यं परिहर्तुमनुभाषते—यत्पुनरिति। परिहरति—तदसिद्धमिति। कालाक्ष्यादिव्यक्तेराकारभूता सा जातिः व्यक्ताविन्द्रियसंयोगे सति संयुक्तसमवायाख्यसंबन्धात्प्रथममेव प्रतीयत इति। ननु

[1] अविसंवादल० मु. पु. पा.

चाकारे यदि परमर्थान्तरानुसन्धानविकलतया तस्यानुवृत्तिर्नावसीयते। अनुवृत्ता च जातिर्नानुवृत्तिः। अग्रहणेऽपि च धर्मस्य धर्मिणो ग्रहणं नानुपपन्नम्। अत एव च पिण्डान्तरसमधिगमे पूर्वाकारपरामर्शिनी मनीषा प्रत्यभिज्ञासमाख्यातोदीयते।

यच्चोक्तम् 'अनाश्रयतया तत्रैव प्रागनवस्थिता निष्क्रियतया चान्यस्माद्नागच्छन्ती स्वरूपहानिप्रसङ्गेन व्यक्त्या सहानुपजायमाना कथं सम्बन्धमनुभवति जातिः' इति। तदिदं मायामोहजननं यथाजातजनोद्वेजनमात्रम्। संयोगो ह्युभयकर्मजो भवति मल्लयोरिव, अन्यतरकर्मजो वा स्थाणुश्येनयोरिव, संयोगजो वा यथा तन्तुतुरीसंयोगादुत्पन्नस्य पटस्य तुरीसंयोगः। स च कर्म, प्राक्संनिधानं वाऽपेक्षते। समवायस्तु संयोगाद्विभिन्नो न कर्म, प्राक्सत्तां वाऽपे-

प्रथमव्यक्ताविन्द्रियसंयोगे सत्यनुवृत्तप्रतीत्यभावादनुवृत्तप्रत्ययवेद्यत्वाच्च सामान्यस्य प्रथममेवाकारो न प्रतीयत इत्यत्राह—यदि परमिति। प्रथमदर्शने स्वरूपेण गृहीतमप्यर्थान्तरानुसन्धानविकलतया तत्स्थाया जातेरनुवृत्तिर्नावसीयत इत्येतावदित्यर्थः।

ननु यद्यनुवृत्तप्रत्ययाभावः तर्हि जातिरप्रतीता स्यादित्यत्राह—अनुवृत्ता चेति। ततः किमित्याह—अग्रहणेऽपि चेति। यत एव प्रथमदर्शने जातिमात्रस्य ग्रहणम्, अतएव पिण्डान्तरसमधिगमे पूर्वाकारपरामर्शिनी मनीषा इयमपि गौरियमपि गौरिति प्रत्यभिज्ञासमाख्यातोदीयत इत्याह—अत एव चेति। प्रत्यभिज्ञासमाख्याता प्रत्यभिज्ञासंज्ञाका इत्यर्थः।

अनुभाषते—यच्चेति। व्यक्त्युत्पत्तेः प्रागाश्रयाभावेन जातिर्न तत्रैव प्रागवस्थिता, जातेर्निष्क्रियत्वाद्व्यक्तिदेशादन्यस्माद्व्यक्त्या सह नागच्छन्ती, व्यक्त्या सहोत्पादेऽनित्यत्वप्रसंगाच्च, कथं संबन्धमनुभवतीति। परिहरति—तदिदमिति। संबन्धस्य स्वसिद्ध्यर्थं कर्मापेक्षा प्राक्सत्तापेक्षा च संयोगाख्यसंबन्धस्यैव न समवायस्येत्यर्थः।

ननु कथमेतदवगम्यत इत्याशंक्य उक्तमर्थं संयोगे दर्शयन्प्रथममुभयकर्मजे दर्शयति—संयोगो हीति। विरुद्धदिक्क्रिययोः परस्पराभिमुखत्वेन सन्निपतितयोः ह्युभयकर्मजस्संयोगो मेषयोर्मल्लयोरिव वा भवतीति, तथा क्रियावता निष्क्रियस्यान्यतरकर्मजः श्येनस्थाण्वोर्विभूनां च मूर्तेन वा संयोगो भवतीत्याह—अन्यतरकर्मजो वेति। तथोत्पन्नमात्रस्य चिरोत्पन्नस्य वा निष्क्रियस्यावयविनो निष्क्रियैरेव कारणसंयोगिभिरकारणैः संयोगजोऽपि संयोगो भवतीत्याह—संयोगज इति। तन्तुसंयोगात् द्वितन्तुकस्योत्पन्नमात्रस्य पटस्य निष्क्रियस्यैव तुरीसंयोग इति। न चैवमप्राप्तयोः प्राप्तिलक्षणस्संयोगस्त्रिविधः कर्म, स्वाश्रयस्य प्राक्सन्निधानं वापेक्षते, न समवाय इत्याह—स च कर्मेति। स च संयोगोऽस्तीत्याह—समवायस्त्विति। न संयोग इत्यर्थः। समवायस्तु संयोगाद्भिन्नः, न कर्मजः, प्राक्सत्तापेक्षापि तत्र न। नापि संयोगजः, कर्मसंयोगयोरदर्शनात्।

**ष्यते । यत एव तु पिण्डस्योदयः समवायिकारणात्, तत एव जातिसमवा-**

एतदुक्तं भवति—गुणजात्यादीनामवयविद्रव्याणां चाश्रयसंबन्धो न कर्मजः, नापि संयोगजः, कर्मसंयोगयोरदर्शनात्। यद्यप्यवयवावयविनोः कर्म संभवति, तथापि गुण-जात्यादीनां कर्मसंयोगावत्यन्तासंभविनौ, ततश्च कर्मजत्वसंयोगजत्वयोरन्यतरेण व्याप्तः संयोग इति व्यापकं निवर्तमानं व्याप्यं संयोगं निवर्तयति, तथा संयोगोऽपि युतसिद्धाश्र-यत्वेन व्याप्त इति युतसिद्धाश्रयत्वं समवाये निवर्तमानं संयोगं निवर्तयति, तथा यः संयोगः सोऽधिकरणाधिकर्तव्ययोरेव नियतो न भवति। अयं तु संबन्धोऽधिकरणाधिकर्तव्य-योरेव नियतो भवति। अतो नास्य संयोगरूपतेति संयोगाद्विभिन्नस्समवायः।

ननु केषां संबन्धः समवायः? उच्यते। अयुतसिद्धानामाधाराधेयभूतानाम्। युतसिद्धादन्याऽयुतसिद्धिः। का पुनर्युतसिद्धिः? पृथगाश्रयाश्रयित्वं पृथग्गतिमत्त्वं च। तत्र ययोरसंबन्धः तद्व्यतिरिक्ताश्रयाश्रयित्वं पृथगाश्रयाश्रयित्वम्, यथा त्वगिन्द्रियशरीरयोः शरीरं स्वावयवेषु पार्थिवेष्वाश्रितम्, त्वगिन्द्रियमपि स्वावयवेषु वायवीयेष्वाश्रितम्। तेन तेषां पृथगाश्रयाश्रयित्वात्संबन्धः समवायो न भवति, किन्तु संयोग एव। पृथग्गतिमत्त्वं च द्वयोरन्यतरस्य वा संयोगविभागयोग्यत्वम्, यथाऽण्वोः परमाण्वाकाशयोश्च। तदेव-मुभयविधयुतसिद्ध्यभावोऽयुतसिद्धिः। नन्वेवमपृथगाश्रयाश्रयित्वमपृथग्गतिमत्त्वं च स्वातंत्र्येणायुतसिद्धत्वस्य लक्षणम्? उत समुच्चयेन इति। स्वातन्त्र्यपक्षे अवयवावयविनोः पृथग्गतिमत्त्वात्संयोगोऽपि प्रसज्यते। पृथग्गतिमत्त्वं च संयोगाभ्युपगमात्। तथाहि—सक्रियावयवयोगान्निष्क्रियस्यावयविनः संयोगजः संयोग इष्यते। ततश्च सक्रियस्य पृथग्गमनमेषितव्यम्। तथा परमाण्वाकाशयोरपृथगाश्रयाश्रयित्वात्संबन्धः समवायो-ऽपि स्यात्। समुच्चयपक्षे अवयवावयविनोरेव समवायाभावः। उच्यते। विषयभेदेन पृथग् लक्षणमिदं अपृथगाश्रयाश्रयित्वमनित्येऽयुतसिद्धिः। अपृथग्गतिमत्त्वं नित्येष्विति वेदितव्यम्। अनित्याश्चावयविन इति, पृथग्गतिमत्त्वेऽपि तेषां न युतसिद्धिप्रसंगः, पृथगाश्रयानाश्रितत्वात्। न ह्यवयविनोऽवयवेभ्यः पृथग्भूत आश्रयः। अत एव अपृथग्गतिमतोरपि त्वगिन्द्रियशरीरयोर्युतेष्वाश्रयेषु समवायो नास्तीति परस्परं संयोग-सिद्धिः। अपृथग्गतिमत्त्वान्नित्येष्वयुतसिद्धिः, ततश्चाण्वाकाशयोरनवयवत्वादाश्रयान्तरा-भावेऽप्यन्यतरस्य परमाणोः पृथग्गतिमत्त्वाद्युतसिद्धौ सत्यां संयोगविभागौ सिद्धौ। आकाशादीनां विभूनां परममहत्त्वस्य च समवाय एव संबन्धः, अपृथग्गतिमत्त्वादिति मन्तव्यम्। अयुतसिद्धस्यैवासमवायिकारणस्य तन्तुसंयोगस्य कार्येण पटादिना संबन्धः समवायो माभूदित्याधाराधेयभूतानामित्युक्तम्। तन्तुगतस्य संयोगस्य पटाख्यस्य कार्यस्य परस्परमाधाराधेयभावो नास्तीति पटाख्यस्य कार्यस्य संयोगलक्षणस्या-समवायिकारणस्य च संबन्धः समवायलक्षणो न भवति। नापि संयोगः, द्रव्यगुणयोः संयोगाभावात्, किन्तु कार्यकारणलक्षणः। उत्पत्तेः प्राङ्नियमेन सद्भावः कारणत्वम् तदुत्तरकालोत्पत्तिकत्वं कार्यत्वम्। एवंविधसंबन्धोऽपि दर्शनबलादाश्रयणीयः। तेनायु-तसिद्धानामाधाराधेयभूतानां संबन्धः समवायः। यस्मात्समवायिकारणाज्जात्याद्याश्रय-पिण्डस्योदयः, तस्मादेव कारणाज्जातिसमवायोऽपि तस्य पिण्डस्य उत्पद्यत इत्याह—**यत एवेति।**

**योऽपि तस्य उत्पद्यते । [१]समवायश्च न वयं काश्यपीया इव नित्यमुपेमः ।**

**ननु समवायस्यानित्यत्वं न संभवति, सर्वस्यैव कार्यस्योत्पत्तौ कारणत्रयस्यापेक्षितत्वात्, समवायस्य समवायिकारणाभावात् । अत एव समवायिकारणप्रत्यासत्त्यभावादसमवायिकारणाभावादुत्पत्त्यसंभवान्नित्यस्समवाय इत्यत्राह—समवायश्चेति । समवायं च वैशेषिकादय इव न वयं नियमेन नित्यमभ्युपेमः । समवायो नित्ययोराकाशमहत्त्वयोर्नित्यः, अनित्ययोरवयवावयविनोरनित्यः । अनित्ययोरन्यतरोत्पत्तिकारणादुत्पद्यते । तस्मात्प्रतिसंबन्धि समवायो भिन्नः, संबन्धरूपत्वात्, संयोगवदिति । अथ जात्याश्रयभूतव्यक्तिनाशे जातेरनुपलंभः, किमन्यत्र गमनात् ? उत**

---

[१] प्राभाकरमीमांसकैस्समवायोऽभ्युपगम्यते वैशेषिकवत् । परं वैशेषिकमते स एकः नित्यश्च । प्राभाकरमते नित्ययोः समवायो नित्यः, अनित्ययोस्सोऽनित्य इति महदन्तरम् । भगवता कणादमहर्षिणा 'इहेदमिति यतः कार्यकारणयोस्स समवायः' [वै० द० ७-२-२६] इति सूत्रेण समवायस्य लक्षणं कृतम् । सूत्रमिदं व्याचक्षाणः प्रशस्तपादाचार्यः पदार्थसंग्रहाभिधे ग्रन्थे 'अयुतसिद्धानामाधारधेयभूतानां यस्संबन्ध इहेतिप्रत्ययहेतुस्स समवायः' इति समवायं लक्षयांबभूव । इदमेव मनस्यभिधायाग्रे ग्रन्थकारो वक्ष्यति—"प्रतीत्य ह्याधारमाधेयञ्च संबन्धं प्रतीयात्" इत्यादिग्रन्थेनेति बोध्यम् । इदञ्च भाष्यं विषयभेदेन समवायस्य लक्षणद्वयप्रतिपादनपरमिति प्रशस्तपादभाष्यप्रस्थानम् । तथाहि युतसिद्धिरुभयोस्संबन्धिनोः परस्परपरिहारेण पृथगाश्रयायित्वम् । सा च ययोर्नास्ति, तावयुतसिद्धौ, तयोस्संबन्धस्समवायः । यथा—तन्तुपटयोः अनित्यानुसारेणेदमयुतसिद्धिनिर्वचनम् । पृथग्गतिमत्त्वं युतसिद्धिस्तद्विपरीता त्वयुतसिद्धिः । यथा आकाशपरमाण्वोः । इदञ्च नित्यानुसारेण । अयञ्च विभागस्तत्रैव प्रत्यपादि । इदञ्च भाष्यं कृत्स्नं समवायलक्षणप्रतिपादकमितिमन्वानश्श्रीधराचार्यः कन्दल्यां विशेषणानां सार्थक्यमित्थं वर्णयामास । तथाहि—अयुतसिद्धानां संबन्धस्समवाय इत्येतावति लक्षणे स्वीक्रियमाणे सुखस्य धर्मस्य च कार्यकारणभावसंबन्धोऽपि समवायः प्रसज्येत । अतस्तद्वारणायाधाराधेयभूतानामित्युक्तम् । आकाशाकाशपदयोर्वाच्यवाचकभावरूपस्संबन्धोऽपि समवायस्स्यात् तद्व्यावृत्तये इहप्रत्ययहेतुरिति विशेषणं निवेशनीयम् । आधाराधेयभूतानामिह प्रत्ययहेतुस्समवाय इत्युच्यमाने कुण्डबदरसंबन्धेऽतिप्रसङ्गस्स्यात् । अतस्तन्निवृत्त्यर्थमयुतसिद्धानामिति विशेषणमावश्यकम् । तस्मात्समस्तमेवेदं समवायलक्षणपरमिति कन्दलीकारस्य मतम् ।

उदयनाचार्यस्तु—अयुतसिद्धानां संबन्ध इत्येतावदेव लक्षणम् । तेन नित्यस्संबन्ध इत्युक्तं भवति । इहप्रत्ययहेतुरिति प्रमाणोपन्यासः । आधाराधेयभूतानामिति विषयनिर्देशः । अतः किरणावलीकारस्योदनाचार्यस्य च मतेनायुतसिद्धानां संबन्ध इत्येतावदेव समवायलक्षणपरमिति बोध्यम् । उदयनाचार्येण भाष्यार्थतया समर्थितमेवार्वाचीनैस्तार्किकैरात्मसात्कृतम् । व्याख्याकारो नारायणः प्रशस्तपादभाष्योक्तमनुसृत्यापृथगाश्रयाश्रयित्वमपृथग्गतिमत्त्वञ्चेति द्विविधमयुतसिद्धत्वमुपवर्णयन् समुच्चयपक्षं निरस्य विषयभेदेन समवायस्य लक्षणद्वयमुपन्यस्यति स्मेति बोध्यम् ।

[१]विनष्टायामपि व्यक्तौ न जातिरन्यत्र याति, न च तत्रावतिष्ठते, न विनश्यति, केवलं तद्व्यक्तिसमवायस्तस्या निवर्तते तेन तस्यानुपलम्भनम् । तथाहि—न याति निष्क्रियत्वात्, नावतिष्ठते व्यक्तिमात्राश्रयत्वात्, तदभावेऽवस्थानासम्भवात्, न च विनश्यति, पिण्डान्तरेऽपि प्रत्यभिज्ञायमानत्वादिति । विनाशो नामात्यन्तिकोऽनुपलम्भ [२]इत्यमृतकलायां वक्ष्यते । अतो न सङ्कटं किञ्चित् ।

यच्च पिण्डेभ्यो जातेरभिन्नत्वमुभयरूपत्वञ्च दूषितम्, तदस्माकं साहायकमेवाचरितम् । को हि नाम सचेतनः पदार्थान्तरप्रत्यभिज्ञामभेदाश्रयेण साधयेत् । को वा परस्परविरोधिनी एकस्य द्वे रूपे प्रतिजानीते । भेदवादः पुनरस्माकमपि सम्मत एव । न च तत्र इहप्रत्ययापत्तिर्दोषः । प्रतीत्य

व्यक्तिनाशादेव प्रतिबन्धत्वात् ? अथ नाश एवेत्यत्राह—**विनष्टायामपीति** । ननु तर्हि तदा किंकृतमित्यत्राह—**केवलमिति** । केवलं तस्या जातेर्व्यक्तिसंबन्ध एव निवर्तते, तेन तदा तस्यानुपलम्भनमिति ।

ननु व्यक्तिनाशेऽत्रानुपलम्भादन्यत्र व्यक्त्यन्तरे उपलम्भाच्च गमनमेव कल्पयितुं न्याय्यमित्यत्राह—**न यातीति** । कुत इत्याह—**निष्क्रियत्वादिति** । अद्रव्यत्वादेव जातेः क्रियाभावादिति ।

ननु यदि न याति नावतिष्ठते तर्हि विनश्यत्येवेत्यत्राह—**न च विनश्यतीति** । कुत इत्याह—**पिण्डान्तर इति** ।

ननु तर्हि विद्यमानव्यक्तौ जातिरपि विद्यते, विनष्टव्यक्तौ विनश्यत्येवेति कल्प्यत इत्यत्राह—**विनाशो नामेति** । [२]उपसंहरति—**अत इति** । पूर्वोक्तमभेदपक्षदूषणं भेदाभेदपक्षदूषणं च यच्चेत्यनुभाष्य, तदस्माकमिष्टमेवेत्यत्राह—**तदस्माकमिति** । कुत इत्याह—**को हि नामेति** ।

नन्वभेदपक्षो भेदाभेदपक्षश्चानभ्युपगतौ, तर्हि भेदपक्षस्य का गतिरित्यत्राह—**भेदवाद इति** । ननु यद्यत्यन्तभेद इष्टः, तर्हि 'इह कुण्डे बदरम्' इतिवद् 'इह गवि गोत्वम्' इतीह प्रत्ययापत्तिस्स्यादित्यत्राह—**नच तत्रेति** । कुत इत्यत्राह—**प्रतीत्य ह्याधारमिति** ।

---

[१] जातिर्नित्या व्यापिका च । व्यापकत्वं स्वरूपतः सर्वदेशसंबद्धत्वम् । न देशानां गोव्यवहारापत्तिः शंकनीया । समवायेन तद्व्यवहारस्याभ्युपगमात् । यथा काले रूपस्य सत्त्वेऽपि कालो रूपवानितिप्रतीतिर्नभवति, न वा व्यवहारः । तथा यत्र पिण्ड उत्पद्यते, तत्रस्थमेव सामान्यं तेन संबध्यते । जातस्संबद्धश्चैकः काल इत्यभ्युपगमात् । एतेन कीदृश्याश्रये वर्तत

[२] अमृतकलायामभावनिरूपणावसरे इत्यर्थः ।

**ह्याधारमाधेयश्च सम्म्बधं प्रतीयात्। सर्वञ्च रूपं रूपिग्रहणमन्तरेण न प्रतीयते। अतः समानेन्द्रियग्राह्यतया जातिरपि व्यक्तिप्रत्ययानुप्रवेशिनीति, न इह-प्रत्ययसम्भवः। कर्मणि त्वनुमेये भवत्येव इहप्रत्ययः। वृत्तिविकल्पे तु कृत्स्नसमाप्तिरेवाङ्गीकरणीया। न चान्यत्रावृत्तिदोषः; प्रत्यक्षावगमाद्वृत्तेः।**

'इह कुण्डे बदरम्' इत्यादावाधारमाधेयं च भेदेन प्रथमं प्रतीत्यैव हि पश्चात्तयोः संबन्धं प्रतीयात्, ततश्च किमित्याह—**सर्वञ्च रूपमिति**। रूपग्रहणे संयुक्तसमवायाख्यसन्निकर्षस्येष्टत्वादेव सर्वत्र पिण्डग्रहणमन्तरेण रूपग्रहणासंभवादिति।

ननु भवत्वेवम्, तथापि किमित्याह—**तेन समानेन्द्रियेति**। जातिव्यक्त्योरस्समानेन्द्रियग्राह्यतया जातिरपि व्यक्तिप्रत्ययानुप्रवेशिनीत्येकधीवेद्यतयाऽधाराधेययोर्भेदप्रतीत्यभावान्नेहप्रत्ययसंभव इति न केवलं जातिव्यक्त्योरेवैकधीवेद्यत्वम्, किन्तु संयुक्तसमवायाद्गृह्यमाणानां शौक्ल्यादीनामपि समानमिति दर्शयितुं सर्वं च रूपमित्युक्तम्[१]।

ननु यद्याधाराधेययोर्भेदेन प्रतीतौ सत्यामेव पश्चात्संबन्धप्रतीतिः, तर्हि गच्छति देवदत्ते देवदत्तस्य गमनक्रियासंबन्धप्रतीतिर्न स्यात्, अनुमेयत्वात्कर्मण इत्यत्राह—[२]**कर्मणि त्वनुमेये इति**। देवदत्तग्रहणानन्तरं लिङ्गभूतौ संयोगविभागौ गृहीत्वा संयोगविभागाभ्यां देवदत्ते गमनमनुमीयत इत्यनुमेये कर्मणि इह प्रत्ययो[३] भवत्येव पर्वते वह्निरितिवत् देवदत्ते गमनमिति।

ननु व्यक्तौ जातिः कार्त्स्न्येन वर्तते? उत व्यासंगेन वा? इत्युक्तमित्यत्राह—**वृत्तिविकल्पेति**। नन्वेकत्र कार्त्स्न्येन वृत्तावभावादेवान्यत्र, व्यक्त्यन्तरे वृत्तिर्न स्यादित्यत्राह—**न चान्यत्रेति**। कुत इत्याह—**प्रत्यक्षावगमादिति**। ननु तर्हि एका

---

इत्यस्य यत्र प्रतीयत इत्युत्तरम्। कुत्र प्रतीयत इति प्रश्नस्य यत्र वर्तत इत्युत्तरं बोध्यम्। गोत्ववृत्तेः प्राक् स पिण्डः कीदृगासीत् इति प्रश्नस्य नासीदित्येवोत्तरम्। अनेन नायाति न च तत्रासीदित्यादिवचनं गगनरोमन्थायितमिति ज्ञेयम्।

[१] मूल इति शेषः।

[२] कर्मतत्त्वं प्रत्यक्षगोचरमिति भाट्टमीमांसकास्तार्किकाश्चाभ्युपगच्छन्ति। प्राभाकरास्तु "संयोगविभागाभ्यां कर्मतत्त्वमनुमीयते, न तु प्रत्यक्षम्" इति मन्वते। अत्र मूले स्वसिद्धान्त उपन्यस्त इति ध्येयम्। अस्या विस्तरस्तु अनुमानप्रकरणे दृष्टव्यः।

[३] इह प्रत्ययात्समवाय इति वदन्तो वैशेषिका इह गवि गोत्वं, घटे घटत्वमिति च व्यवहरन्ति। प्राभाकरमीमांसकास्तु समवायमभ्युपगच्छन्तोपि कर्मानुमेयतावादिनः कर्मणि इहप्रत्ययमूरीकुर्वन्तोऽपि इह गवि गोत्वमितीहप्रत्ययं नेच्छन्ति जातिव्यक्त्योरेकेन्द्रियग्राह्यत्वात्। तथाहि—द्रव्यं घटादि अनेकद्रव्याश्रितं भवति। किञ्चिद् द्रव्यं परमाण्वादि अद्रव्याश्रितं भवति। गुणपदार्थो संयोगविभागद्वित्वादिसंख्यात्मकोऽनेकद्रव्याश्रितो भवति। रूपादि एकद्रव्याश्रितञ्च भवति। कर्मपदार्थस्त्वेकस्मिन्नेव द्रव्ये वर्तते। यदाह भगवान् काश्यपः—

प्रत्यभिज्ञायाः स्थापितत्वात् । पृथग्ग्रहणं तु जातेरसिद्धमेव । व्यक्त्यन्तरे हि जातिः प्रतीयमाना प्राच्यपिण्डपरिहारेण प्रकाशते। उदीच्यपिण्डपरिहारस्तु प्राक्तनपिण्डसमधिगमसमये सिद्ध एवेति परिहृतनिखिलानुपपत्तिकमुपपादितं गवादिषु साधारणाकारानुभवसिद्धं जातितत्त्वम् । उपपन्नश्च प्रत्यक्षवेद्यत्वं जातेः, इन्द्रियव्यापारानुविधानेन प्रतीतेः । संयुक्तसमवायलक्षणश्च सन्निकर्षोऽपि नानुपपन्नः । गौरयमिति च मतिर्विशदतरार्थनिर्भासिनी न शक्यतेऽपवदितुम् । समसमयसम्भवनिर्विकल्पकदर्शनबलेनेत्थमियं प्रथत इति चेत् । तन्न, तथाभावे प्रमाणाभावात् । शब्दमात्रेण तु केवलाकार-

जातिः एकत्र कार्त्स्न्येन वर्तमाना नान्यत्र वर्तते, अन्यत्र सजातीयान्यस्यापि वृत्तिसंभवादेव प्रत्यक्षोऽप्यन्यथासिद्ध इत्यत्राह—**प्रत्यभिज्ञाया इति**। क्षणिकत्व[१]निराकरणे प्रत्यभिज्ञायाः प्रमाणत्वेन स्थापितत्वादत्रापि सेयं गौरिति प्रत्यभिज्ञासंभवाच्च सैवान्यत्र वर्तत इति ।

ननु यदि जातिर्व्यक्तेरत्यन्तभिन्ना, तर्हि घटपटयोरिव पृथग्ग्रहणं स्यादिति नियमेनापृथग्ग्रहणं नोपपद्यत इत्यत्राह—**पृथग्ग्रहणमिति**। कथमसिद्धिरित्याशंक्य जातिव्यक्त्योः पृथग्ग्रहणमेवोपपादयति—**व्यक्त्यन्तरे हीति**।

ननु जातिसिद्धौ किं प्रमाणम् ? अद्रव्यत्वादेवेन्द्रियसंयोगाभावात् । स्वस्मिन्समवायाभावादेव शब्दवत्समवायेन ग्रहणाभावाच्च न प्रत्यक्षं प्रमाणम् । नाप्यनुमानं, लिङ्गाभावादित्यत्राह—**उपपन्नं चेति**। कुत इत्याह—**इन्द्रियव्यापार इति**। ननु संयोगादिग्राहकसन्निकर्षाभावात्प्रत्यक्षत्वं न संभवतीत्युक्तमित्यत्राह—**संयुक्तसमवायेति**।

नन्विन्द्रियव्यापारानुविधानेन प्रतीतिरसिद्धेत्यत्राह—**गौरयमिति** । ननु वैशद्यं न बाह्यवस्तुविषयम् किन्तु समानकालभाविनिर्विकल्पकज्ञानविषयमेव समानकालतया बाह्यवस्तुविषयमिव प्रतीयत इत्यत्राह—**समसमयेति** । कुत इत्याह—

---

एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षं कारणं कर्मलक्षणम् [ वै० द० १-१-१७ ] तेनैकपदार्थाभिप्रायेणेदमुच्यते इह प्रत्ययात्समवायः न व्यक्त्यभिप्रायेणेति। ननु व्यक्तावपीह प्रत्ययो जात्यपेक्षया न भवतीत्यत्र का युक्तिः । अत्रेदं समाधानं बोध्यम्—कर्मपदार्थोऽनुमेयः । तेन तदग्रहे द्रव्यं गृहीतं सत् पुनस्तदनुमानसमये शक्यमिहप्रत्ययेनालम्बितुम्, जातिस्तु न भिन्नप्रमाणग्राह्या । धर्मी च गृह्यमाणोऽवश्यं येन केनचिद्धर्मेणालिङ्गितो गृहीतव्यो भवति । सर्वा हि प्रतीतिः एवमिति भवति । एवंशब्दश्च प्रकारार्थः । प्रकारश्च धर्मः । तथा च जातिर्धर्मिप्रतीतावनुप्रविष्टेति न तदपेक्षया धर्मी इहप्रत्ययविषयमनुभवति । अतो धर्मधर्मितया जातिव्यक्त्योः प्रतीतिनाधाराधेयभावतया । तस्माद्व्यक्ताविहप्रत्ययाभाव इत्यभिप्रायं मनसि निधायाह—न इहप्रत्ययसंभवः कर्मणि त्वनुमेये भवत्येवेहप्रत्यय इति ग्रंथेन ।

[१] मीमांसाजीवरक्षानामके क्षणभंगनिराकरणपरे दशमे प्रकरणे इति शेषः ।

परिगृहीताकारप्रतीतेः रूपान्तरानवभासाच्चाविशदावभास एव । ऐन्द्रियके तु सम्वेदने प्रचुरतरावयवरूपावभासाद्विशदावगम इति नाबाह्यविषयत्वापत्तिः । नन्वेषा जातिप्रतीतिर्भिन्नामेव व्यक्तिमभेदेनावगमयन्ती जायत इति भ्रान्तिरेषा न प्रत्यक्षं प्रमाणम् । इयन्तु भ्रान्तिर्निर्बीजा न युज्यत इति बीजभावेन जातिरनुमीयते, तत्समवायश्च । दृष्टा हि सन्तापसञ्चारितदहनपरमाणुसंवलितायोगोलके दहनाकारानुकारिणी प्रतीतिरिति । तदिदमुक्तोत्तरमपि पुनः पर्यनुयोज्यामहे विस्मरणापराधादिति मन्यामहे । भिन्ना हि जातिरवगम्यते । न खल्वाकारमाकारिणश्चैकमेव मन्यन्ते । केवलं शब्दप्रयोगे एव समाधिर्वक्तव्यः । तत्र च लौकिकः प्रयोग एव शरणम् । प्रयोगश्च श्रुत्या लक्षणया गौण्या वा वृत्त्या नानुपपन्नः । समवायस्तु भवतु वस्त्वन्तरे सिद्धेऽनुमेयः, प्रत्यक्षेण तदनवगमात् । आकृतिस्तु प्रत्यक्षप्रमाणसिद्धा नाऽनुमेया । नचानुमानमपि शक्यं शाक्येषु प्रतिबन्धॄष्वित्यलमतिविस्तरेण ।

तथाभाव इति । ननु शब्दाद्विज्ञानेऽपि प्रमाणप्रवृत्तौ सत्यां विशदमेव वस्तु प्रकाशत इति न वैशद्यात्प्रत्यक्षमित्यत्राह—**शब्दमात्रेणेति** । निगमयति—**ऐन्द्रियके त्विति** । चोदयति—**नन्वेषेति**—परमार्थतः परस्परं भिन्नामेव व्यक्तिमभेदेनावगमयन्ती जातिप्रतीतिर्जायतइति भ्रान्तिरेषा न प्रत्यक्षं प्रमाणम् । भ्रान्तिश्च न निर्हेतुका इति भ्रान्तिकारणत्वेन जातिरनुमीयते । जातिसमवायोऽपि अनुमीयत एवेति व्यक्तिरेव प्रत्यक्षं न जातिरिति दृष्टान्तमाह—**दृष्टा हीति** । दहनपरमाणुसंहताऽयःपिण्डे दहनाकारानुकारिणी दहनपिण्डमिति यथा प्रतीतिर्जायते, तथानुमेयभूतगोत्वादिजातिसंबन्धे पिण्ड इयं गौरिति प्रतीतिर्जायत इति, परिहरति—**तदिदमिति** ।

ननु यदि व्यक्तेरन्या जातिः तर्हि व्यक्तौ जातिशब्दप्रयोगः किंनिबन्धन इत्यत्राह—**केवलमिति** । तर्हि लौकिकप्रयोगोपि किं निबन्धन इत्यत्राह—**प्रयोगश्चेति** ।

ननु समवायसिद्धौ किं प्रमाणमित्यत्राह—**समवायस्त्विति** । ननु किं लिङ्गं ! आगमसन्निधिहीनस्य परतन्त्रतया भानम्, समवायलिङ्गम् । आश्रयो यत्र यत्र याति, तत्रतत्रावस्थानं पारतन्त्र्यम्, अथवाविसंवादिपरस्परसाकांक्षरूपरूपिणोर्नियमेन सहोपलब्धिर्लिङ्गम् । ननु कस्मात्प्रत्यक्षस्याप्रामाण्यमित्यत्राह—**प्रत्यक्षेणेति** । इन्द्रियसन्निकर्षाभावान्न प्रत्यक्षं प्रमाणम्, न तावदिन्द्रियेण सन्निकर्षस्संयोगः । संयोगस्य गुणत्वेन द्रव्यैकाश्रयत्वात् । समवायस्याद्रव्यत्वात् । नापि संयुक्तसमवायस्य समवायान्तरानभ्युपगमात् । अतस्त्रिविधसन्निकर्षाभावान्न प्रत्यक्षता, प्रयोगस्तु—समवायो न प्रत्यक्षः, क्वचिदसमवेतत्वात् यत्क्वचिदसमवेतं न तत्प्रत्यक्षम्, यथा परमाण्वाकाशादिङ्मनां-

सत्ताजातिनिराकरणम् ।

अत्र केचिद्द्रव्यत्वादितुल्यतया द्रव्यगुणकर्मस्वपि सत्ताजातिमङ्गीकुर्वन्ति, भवति हि सर्वेष्वेव सत्सदिति प्रत्ययानुवृत्तिरिति संवदन्तः ।

तदिदमपरामृष्टजातितत्त्वानामुपर्युपरि जल्पितम्[१] । पूर्वरूपानुकारिणी यदि धीरुदीयते, ततोऽभ्युपेयेतैव जातिः । न च नानाजातीयेषु द्रव्येषु सर्षपमहीधरादिषु, गुणेषु गन्धरसादिषु वा समानाकारानुभवो भवति । केवलं तु सत्सदिति शब्दमात्रमेव प्रयुज्यते । भवति च विनापि जात्या पाचकमीमांसकादिशब्दप्रवृत्तिः । नन्वेवं शब्दप्रवृत्तिरपि नैकनिबन्धनमन्तरेणोपपद्यते । सत्यं, अस्त्येवोपाधिरेकः प्रमाणसम्बन्धयोग्यता नाम ।[२]

सीति । तस्मात्समवायो न प्रत्यक्ष इति । ननु समवायवदाकृतेरप्यप्रत्यक्षतैवेत्यत्राह— **आकृतिस्त्विति ।** समवायस्य ग्राहकसन्निकर्षाभावान्न प्रत्यक्षता, आकृतेस्तु समवायसंभवात्संयुक्तसमवायेन ग्रहणमिति प्रत्यक्षतैवेति ।

इदानीं सत्ताजातिवादिनां मतं निराकर्तुमुपन्यस्यति—**अत्र केचिदिति ।**

परिहरति—**तदिदमिति ।** नानाजातीयेषु द्रव्येषु पूर्वाकारानुभवबुद्ध्यभावान्न सत्ता जातिरिति । नानाजातीयेषु पूर्वाकारानुभवाभावमेव दर्शयति—**न च नानाजातीयेष्विति ।** सत्सदितिशब्दमात्रमित्यर्थः । शब्दप्रयोगश्च जात्यभावेऽपि दृष्ट इत्याह— **भवति चेति ।** चोदयति—**नन्वेवं शब्दप्रवृत्तिरिति ।** एकशब्दप्रवृत्तिरप्येकनिबन्धन-

---

[१] कल्पितमिति-मु-पु-पाठः ।

[२] सत्त्वं नाम सत्तापरपर्यायं महासामान्यं द्रव्यगुणकर्मवृत्ति वैशेषिकसूत्रकारेणाङ्गीक्रियते । सामान्यादित्रितयेऽपि सद्व्यवहारदर्शनात् तत्तद्वस्तुस्वरूपापरपर्यायं सत्त्वं भवतीति प्रशस्तपादेन न्यरूपि । दर्शनान्तरे सत्त्वनिरूपणावसरे गुरुमताभिमतं स्वरूपसत्त्वं तैर्थिकैरन्यैर्द्वेधानूद्यमानं विलोक्यते—स्वरूपसत्त्वं प्रमाणसंबन्धः, प्रमाणसंबन्धयोग्यता चेति । तत्राद्यं प्रभाकरमिश्राभिमतम् । यदेव ब्रह्मसिद्धौ मण्डनमिश्रेण महता प्रबन्धेनादूष्यत । मीमांसकमूर्धन्यस्य मण्डनमिश्रस्य प्रभाकरमतखण्डने महानभिनिवेशो लक्ष्यते । तदग्रेऽस्माभिः प्रदर्शयिष्यते । इत्थमेव पञ्चपादिकाविवरणे सौगतमतसाङ्कर्यप्रतिपादनावसरे "क्षणिकप्रमाणसंबन्धस्य सत्त्वाभ्युपगमाल्लोकायतबौद्धांशद्वयपरिणतः प्रभाकरः,' (वि.प्र.सं. पृ-८४) इति तन्मतमनूदितमस्ति । अतः प्रमाणसंबन्धस्सत्त्वमिति जरत्प्राभाकरमतमित्यभियुक्ता वर्णयन्ति । अत्र जरत्प्रभाकरपदेन प्रभाकरमिश्रा एव विवक्षिता इति युक्तम् । द्वितीयन्तु शालिकनाथमिश्रस्येति वयं मन्महे । प्रभाकरमिश्राभिहिते सत्त्वलक्षणे ब्रह्मसिद्धिकृता दूषिते तद्दोषनिरसनाय योग्यताघटितस्य तस्यैव लक्षणस्य समर्थनात् । अतः प्रकरणपञ्चिकाकारस्य मते प्रमाणसंबन्धयोग्यत्वं स्वरूपसत्त्वमङ्गीक्रियते, न तु तदतिरिक्तं सत्तानामकं महासामान्यमिति बोध्यम् ॥

[१]तत्रान्यः पण्डितम्मन्यो मन्यते—नन्विदमसमञ्जसमुच्यते सर्वत्र ह्युपाधिभेदमवगम्यौपाधिकशब्दानुविद्धः प्रत्ययो भवति, न पुनः प्रागेव, सह वा। इह च प्रमाणमेव जायमानमस्तीत्येवमेव जायते। प्रमाणोदयोत्तरकालं ह्यनया भवितव्यम्। किञ्च सत्यपि प्रमाणयोगे किञ्चिदस्तीति गम्यते, किञ्चिच्चासीदिति, तथान्यद्भविष्यतीति। तत्र प्रमाणसम्बन्धस्य वर्तमानत्वात् सर्वत्र वर्तमानसत्ताप्रत्ययेन भवितव्यम्। तदतिरेकिणि तु सत्त्वे तस्य त्रेधा व्यवस्थानाद्युक्तस्त्रिधाऽवभासः। अपि च भूमितलनिखातेषु चिरतरकालवर्तिषु प्रलीनज्ञातृपुरुषेषु लिङ्गादिरहितेषु सकलप्रमाणप्रत्यस्तमयेऽपि वर्तमानसत्तासन्देहः। स च प्रमाणसम्बन्धातिरेकिणीं सत्तामन्तरेणानुपपन्न इति।

तदिदमनाकलितपरवचनस्य केवलं गलगर्जितम्। उक्तमस्माभिः प्रमाणसम्बन्धयोग्यतोपाधिरिति। यदि हि प्रमाणसम्बन्ध उपाधिरिति वदेम, तत इत्थमुपालभ्येमह्यपि। योग्यता तु प्रमाणसम्बन्धातिरिक्ता प्रमाणेनाऽवसीयत इति युक्त एवास्तीति प्रमाणोदयः। तस्याश्च त्रैकाल्यात् त्रैकाल्यावगमोऽपि समर्थित एव। तस्याश्च संशायिततापि युक्तैव।

मन्तरेणानुपपद्यमाना जातेः कल्पिकेति। परिहरति—सत्यमिति। प्रमाणसंबन्धयोग्यतोपाधिकस्सच्छब्दप्रयोग इत्यर्थः।

[२]उक्तमेवार्थं कृत्स्नमबुध्वा मण्डनाचार्येणात्र किंचिद्दूषणमुक्तम्, तन्निराकर्तुं सोपालम्भमाह—तत्रान्य इति। प्रमाणसंबन्धयोग्यतोपाधिकस्सच्छब्दप्रयोग इत्यसमञ्जसमुच्यत इत्याह—नन्विदमिति। कथमसामञ्जस्यमित्याशंक्यैतदेवोपपादयति—सर्वत्रेति। पाचकादिषु पचनक्रियायोगमवगतस्यैव पाचक इत्यौपाधिकशब्दानुविद्धप्रत्ययो भवतीत्यर्थः। ततः किमित्यत आह—इह चेति। तथापि किमित्याह—प्रमाणोदयेति। अभ्युच्चयत्वेन दूषणान्तरमाह—किंच सत्यपीति। भवतु को विरोध इत्यत्राह—तत्र प्रमाणसंबन्धस्येति। नैवमस्मिन्मते प्रसङ्ग इत्याह—तदतिरेकिणीति। दूषणान्तरमाह—अपि चेति। प्रमाणसंबन्धादेव निश्चितत्वात्सन्देहाभावादित्यर्थः।

एतत्सर्वं परिहरति—तदिदमनाकलितेति। प्रमाणसंबन्धयोग्यतोपाधिकः सर्वत्र सच्छब्दप्रयोगो न प्रमाणसंबन्धमात्रोपाधिक इत्युक्तत्वादिति योग्यतायास्त्रैकाल्यात्-

---

[१] अत्र मण्डनमिश्रमतमनुवदति निरसितुम्।

[२] नियोगकाण्डे मण्डनमिश्रेणोक्तमर्थमनुवदति शालिकनाथः ३९ श्लोकेऽयमर्थः स्पष्टस्तत्रैव द्रष्टव्यः।

का पुनरियं प्रमाणसम्बन्धयोग्यता नाम। ननु नामान्तरेण महासामान्यमेवेदमुररीकृतम्। नैतदेवम्; यो हि महासामान्यं सत्तां सङ्गिरते, सोऽपि स्वरूपसत्तां पदार्थानां मन्यत एव। अन्यथा शशशृङ्गादीनामनुत्पन्नातिवृत्तानाञ्च किमिति महासामान्येन सम्बन्ध एव न स्यादिति पर्यनुयोगे, कः परिहारः? तेन स्वरूपसत्त्वैव प्रमाणसम्बन्धयोग्यता। यस्य हि स्वरूपमस्ति, तत् प्रमाणेन परिच्छिद्यते। त्रैकाल्यमपि स्वरूपस्यैव युक्तम्, न च महासामान्यस्य, नित्यत्वात्। तथा संशयिततापि तस्यैव, न पुनरसंशयिते स्वरूपेऽपरः सत्तासन्देहो भवति। अथ नित्याया अपि सत्तायाः कः सम्बन्धो यः स त्रिकालः। तस्यैव त्रैकाल्यं कुतः? नान्यदत्रोत्तरं स्वरूपत्रैकाल्यादित्यतः। तस्मात्स्वरूपसत्तोपाधिक एव सच्छब्दो न पुनरेक आकारः सत्ता नाम द्रव्यगुणकर्मणाम्। [1]अपि च काश्यपीयानां जातिसमवायविशेषेषु

त्रैकाल्यग्रहोऽपि युक्त इत्याह—तस्याश्चेति। योग्यताया उपाधित्वात्। भूतलनिखातेषु संशयोऽपि युक्त एवेत्याह—तस्याश्च संशयितेति।

का पुनः प्रमाणसंबन्धयोग्यता इति पृष्टे परिहरति—नैतदेवमिति। प्रमाणसंबन्धयोग्यता च मितिक्रियायोग्यतैव, योग्यतापि न स्वरूपातिरिक्ता, स्वरूपमात्रे मितिदर्शनात्। तेन मितिक्रियोपलक्षितस्वरूपमेव सच्छब्दवाच्यमित्यर्थः। स्वरूपासत्ता नाङ्गीकृता इति चेत्तत्राह—अन्यथेति। सामान्यस्य नित्यत्वेन त्रैकाल्यमपि स्वरूपस्यैव संभवति, न सामान्यस्येत्याह—त्रैकाल्यमपीति। तथा संशयिततापीत्यादि सुगमम्। सत्तासामान्याभावे हेत्वन्तरमाह—अपि च काश्यपीयानामिति। येषां महासामान्यमस्ति, तेषामवान्तरसामान्यमप्यस्ति। अतो महासामान्यसंबन्धोऽवान्तरसामान्यसंबन्धेन व्याप्तः। सोऽवान्तरसामान्यसंबन्धो निवर्तमानो महासामान्यसंबन्धमपि निवर्तयति, सत्तावदित्यभिप्रायः। प्रयोगस्तु सामान्यादीनि महासामान्यशून्यानि, अवान्तरसामान्यविरहितत्वात्, सत्तावदिति। नहि सत्तायां सत्तास्तीति, सति चैवं सर्षपमहीधरादिष्वनुवृत्ताकारप्रत्ययविरहे सति स्वरूपसत्त्वनिबन्धन एव सच्छब्दप्रयोगः न जातियोगादित्यैकरूप्यमेव युक्तम्।

नन्वेवंसति प्रतिपदार्थं स्वरूपभेदान्न मित्यर्हत्वमेकम्। उच्यते—यद्विधे हि द्रव्यगुणादौ मित्युत्पत्तिः तत्सत्त्वमित्युपलक्षणोपाधिरेकः। एतदुक्तं भवति यद्यपि पदार्थस्य

[1] "सामान्यादीनाँ त्रयाणां स्वात्मसत्त्वं बुद्धिलक्षणत्वमकार्यत्वमकारणत्वमसामान्यविशेषत्वं नित्यत्वमर्थशब्दानभिधेयत्वञ्च" इति प्रशस्तपादभाष्यम् (पृ० ६) अत्र स्वात्मसत्त्वमित्यनेन स्वरूपसत्त्वं विवक्षितम्। तथा च स्वरूपसत्त्वमादाय सत्ताजातिमन्तरेणैव सामान्यादौ सद्व्यवहारोऽङ्गीकृतो वैशेषिकभाष्यकृता। तथा प्रकृतेऽपि सर्वत्रास्तु किं महासामान्यस्वीकारेणेत्याशयेनाह—अपि चेति।

स्वरूपसत्तोपाधिक एव सच्छब्द इत्यभ्युपगमः। तस्य च द्रव्यगुणकर्मस्वपि तथाभावोऽस्त्विति। तदेवमपाकृते पदार्थस्वरूपातिरेकिणि महासामान्ये सत्ताख्ये यत् स्वमनीषानिर्मितकुतर्कबलेन सन्मात्रविषयं प्रत्यक्षमिति साधितं, तदतिदूरोत्सारितम्।

एतेनैव न्यायेन शब्दत्वमपि निरस्तं वेदितव्यम्। नहि ककारगकारयोरेकमाकारमनुगतं परामृशन्ती मनीषा समुन्मिषति। योऽपि चायं शब्दशब्दः, सोऽपि श्रोत्रग्रहणोपाधिलब्धप्रवृत्तिरिति न जातु जातिकल्पनायै विभवति। तदिदमपहस्तितम्, यदाहुः [२]"शब्दत्वमेव तत्तदसाधारणाभिव्यञ्जकध्वनिनिबन्धनतया नानावर्णरूपेण विषयीभवत् तस्य तस्यार्थस्यावगमाय कल्पत" इति।

ब्राह्मणत्वादिजातिनिराकरणम्।

अनयैव च दिशा ब्राह्मणत्वादिजातिरपि निवारिता। नहि नानास्त्री-

धर्मो न भवति योग्यता, तथापि प्रमाणमात्रं भवतीत्यनेन प्रमाणसाधारण्येनैकरूपतयाऽलब्धपरामर्शनानापदार्थानां स्वरूपमेवोपाधित्वं वाच्यत्वं च नानुपपन्नम्। योग्यत्वमितिर्हि सकृदवगतिगोचरापन्नस्वरूपमुपाधिरेकैकं च प्रातिस्विकं रूपं वाच्यम्। अयं च प्रकारः सत्तासामान्यवादिभिरप्यभ्युपगतः। भावाभावयोरप्येकसामान्येऽपि वस्तुशब्दप्रवृत्तेरिष्टत्वात्। तदेवमनुवृत्ताकारप्रत्ययविरहादेव निराकृते पदार्थस्वरूपातिरेकिणि महासामान्ये सत्ताख्ये द्वैतप्रतिपादनपरतया चोदनायां प्रत्यक्षाविरोधं दर्शयितुं मण्डनाचार्येण सन्मात्रविषयं प्रत्यक्षमिति साधितम्—

[१]आहुर्विधातृप्रत्यक्षं न निषेद्धृ विपश्चितः।
नैकत्वमागमस्तेन प्रत्यक्षेण विरुध्यते॥
[ब्रह्म. सि. का. २. श्लोक. १.] इति।

तदपि निराकृतमित्याह—तदेवमपाकृत इति। किं च सन्मात्रविषयत्वे प्रत्यक्षस्यान्धबधिरादिव्यवस्था न स्यादिति प्रत्यक्षपरिच्छेदे वक्ष्यामः।

तथा गकारवकारादिषु शब्दपदानुवृत्तिः श्रोत्रोत्थधीक्रियोपलक्षिता योग्यतैवेति शब्दत्वजातिरपि नास्तीत्याह—एतेनैव न्यायेनेति। अनन्यथासिद्धानुवृत्ताकारप्रत्ययाभावादित्यर्थः। यच्छब्दतत्त्वं स्फोटाख्यं तत्तदभिव्यंजकनिबन्धनतया नानावर्णरूपेण विषयीभवत्तस्य तस्यार्थस्यावगमकमिति, [१]तदपि निरस्तं वेदितव्यं स्फोटनिराकरणादित्याह—तदिदमपहस्तितमिति।

अनुवृत्ताकारप्रत्ययादेव ब्राह्मणत्वजातिरपि नास्तीत्याह—अनयैव दिशेति।

पुरुषव्यक्तिषु पुरुषत्वादर्थान्तरभूतमेकमाकारमात्मसात्कुर्वन्ती मतिराविर्भवति। नहि क्षत्रियादिभ्यो व्यावर्तमानं सकलब्राह्मणेष्वनुवर्तमानमेकमाकारमतिचिरमनुसन्दधतोऽपि बुध्यन्ते। यदप्याहुः-[1]'यद्यप्यापातसंजातया धिया ब्राह्मण्यं नावसीयते, तथापि ब्राह्मणभूतमातापितृसम्बन्धानुसन्धानप्रभवायां बुद्धौ तच्चकास्तीति। तदपि च स्वमानसविसंवादि। अनुसन्दधानोऽपि मातापितृसम्बन्धं को जात्वेकमाकारमवबोद्धुं प्रभवति। यच्चोपदर्शितम्—यथा विलीनमाज्यं तैलादव्यतिरिच्यमानं गन्धग्रहणसहकारिणा चक्षुषैव भिन्नमवगम्यत—इति। तदपि न सुन्दरम्। नहि तदानीं चाक्षुषस्य संवेदनस्य विषयातिरेकः, किंत्वनुमानमेव तत्र सर्पिषः। यस्तु निपुणदर्शी सूक्ष्ममपि रूपमीक्षितुं क्षमः, स चक्षुषैवाज्यजातिमपि प्रत्येति, न गन्धग्रहणमपेक्षते।

नन्वेवं बह्ववहीनम्, किंनिबन्धनो हि तदानीमाहवनीयादिसाध्यकर्मसु केषांचिदधिकारो, नान्येषाम्; किंनिबन्धना च ब्राह्मणशब्दस्य प्रवृत्तिव्यवस्था इति।

[2]अत्रोच्यते। अनादौ संसारे जन्यजनकभावेन व्यवस्थितास्तावत् काश्चि-

एतदेवोपपादयति—नहि नानास्त्रीपुरुषव्यक्तिष्विति। नहि नानानरेषु नरत्वातिरिक्तं शूद्रादिव्यावृत्तमनुगतमाकारमुपलभामहे इति। तदेव विवृणोति—नहि क्षत्रियादिभ्य इति। अनुभाषते—यदप्याहुरिति। आपाततो ब्राह्मण्यानवगमेऽपि ब्राह्मणभूतमातापितृसंबन्धानुसन्धानोत्तरकालं स्फुटं ब्राह्मण्यमवसीयत इति। परिहरति—तदपि चेति। मातापितृसंबन्धानुसन्धानेऽपि चाक्षुषप्रतीतावाकारावबोधाभावादित्यर्थः। यदपि तैर्दृष्टान्ततयोक्तम् तन्निराकर्तुमुपक्रमते—यच्चोपदर्शितमिति। सुगमम्। परिहरति—तदपि न सुन्दरमिति। तदानीं गन्धलिङ्गेनानुमानमेवेत्यर्थः। ननु किमनुमेयैवाज्यत्वजातिरित्यत्राह—यस्त्विति।

---

[1] वार्तिककारैरर्थवादाधिकरणे शास्त्रदृष्टविरोधादिति सूत्रे तन्त्रवार्तिके ब्राह्मणत्वजातिः प्रत्यक्षसिद्धा तस्या ग्रहणे उत्पादकजातिस्मरणं सहकारिकारणमित्युक्तम्। तन्मतं दूषयितुमनुवदति—यदप्याहुरिति।

[2] अत्रेदं बोध्यम्—अस्मिन् प्रकरणे ब्राह्मणत्वादिजातिं निराकृत्य ब्राह्मणत्वादिरुपाधिरिति प्रतिपादयति शालिकाचार्यः। अनेन न्यायेन क्षत्रियत्वं रथकारत्वञ्च न जातिरपि तूपाधिरेव तत्तन्मातापितृप्रभवत्वाभिव्यंग्या तद्रूपा वेति वक्तव्यमापतति। परन्त्ववेष्ट्यधिकरणे (मी. द. २-३-२) राजन्शब्दस्य जनपदपरिपालनोपाधिकत्वं प्रत्याख्याय क्षत्रियत्वजातिवाचित्वं व्यवस्थापितं दृश्यते। तथा रथकाराधिकरणे (मी. द. अ. ६ पा. १ अधि १२) रथकारशब्दस्य रथकरणनिमित्तत्वं निराकृत्य सौधन्वनां ऋभवस्सूरचक्षसः इति वर्णानुसारेण जातिविशेषवाचित्वं निर्धारितं लक्ष्यते। प्राभाकरमतेऽवेष्ट्यधिकरणे रथकाराधिकरणे च

देव स्त्रीपुरुषसन्ततयः सन्ति, तासामन्योन्यव्यतिकरेण जाताः स्त्रीपुंसव्यक्तयो ब्राह्मणशब्दवाच्याः। अनिदम्प्रथमतया च सन्ततेः सर्वेषां तत्सन्ततिपतितत्वात् सिद्धा ब्राह्मणशब्दवाच्यता। तेन सन्ततिविशेषप्रभवत्वमेव ब्राह्मणशब्दप्रवृत्तावुपाधिः। तत्प्रभवानामेव कर्मस्वधिकार इति न किञ्चिदवहीनम्। के पुनस्ते सन्ततिविशेषाः। न ते परिगणय्य निर्देष्टुं शक्यन्ते, किन्तु लोकत एव प्रसिद्धाः प्रत्येतव्याः। तथा च तज्जन्यत्वेऽवगते ब्राह्मणशब्दं प्रयुञ्जते लोकाः। कथं पुनस्तज्जन्यत्वमेव शक्यमवगन्तुम्, स्त्रीणामपराधसम्भवात्? संभवन्ति हि पुंश्चल्यो स्त्रियः परिणेतारं व्यभिचरन्त्यः। उच्यते। उक्तमेतत् दृश्यादर्शनमेवाभाव इति। यत्र यावत्युपलब्धिसामग्री, तावत्यां सत्यामपि यासां व्यभिचारो न दृश्यते, तासां नास्त्येव व्यभिचार इति लोकप्रमाणकमेतत्। अपि च अप्रमत्तैः स्त्रियो रक्षणीयास्तासु नास्त्येव व्यभिचारसम्भावनावकाशः। यासु त्वस्ति, माभूत् तदपत्येषु तत्सन्ततिप्रभवत्वनिश्चयः। न चैतावता यत्रापि निश्चयः शक्यस्तत्राप्यनिश्चय इति वक्तुं युक्तमिति।

यच्च बह्वीषु ज्वालास्वेकवर्तिवर्तिनीषु ज्वालात्वं सामान्यं प्रत्यभिज्ञागोचरः कैश्चिदिष्यते। तदपि गुरुरस्माकं न मृष्यति। स खल्वेवं निरीक्षाञ्चक्रे अनन्यथासिद्धा बुद्धिः सामान्यकल्पनाबीजम्। इयं तु भेदाग्रहणेन

चोदयति—नन्वेवं बह्ववहीनमिति। ब्राह्मणत्वादिजात्यभावे आहवनीयादिसाध्येषु वैदिकेषु कर्मस्वपशूद्राणां त्रयाणामेवाधिकारो न शूद्राणामित्यपशूद्राधिकरणव्यवस्था न स्यात्। तथा पुरुषविशेषे ब्राह्मणशब्दप्रवृत्तिश्च किंनिमित्तेति। परिहरति—अत्रोच्यत इति। ब्राह्मणशब्दप्रवृत्तौ तु ब्राह्मणशब्दप्रवृत्तिमत्सन्ततिजत्वमेवोपाधिः। ब्राह्मणशब्दानुवृत्तिस्तु सन्ततिविशेषः स्त्रीपुंसव्यतिकरजन्मक्रियोपलक्षणादेव। सन्ततिविशेषास्तु लोकत एवावगन्तव्याः। ब्राह्मणत्वाद्यवान्तरसामान्यवादिनामपि अनादौ संसारे भृगुभरद्वाजादिगोत्रशब्देष्वयमेव मार्गः। स एव ब्राह्मणत्वादावपीत्यर्थः। के पुनस्ते सन्ततिविशेषा इत्यादि सुगमम्।

पुनरपि परोक्तमनुभाषते—यच्च बह्वीषु ज्वालास्विति। एकवर्तिकावर्तिनीषु ज्वालात्वं सामान्यं यदुक्तमित्यर्थः। परिहरति—तदपीति। गुरुः—प्रभाकरगुरु-

---

जातिवाचित्वं निरस्य तत्तन्मातापितृप्रभवत्वं सिद्धान्त्यत इति वर्णयितव्यमिति प्रतिभाति। शास्त्रदृष्टविरोधादित्यर्थवादाधिकरणे गुणसूत्रे अवेष्ट्यधिकरणे रथकाराधिकरणे वा बृहतीऋजुविमलानयविवेकेषु जातिविचारो न दरीदृश्यते। तत्सर्वमुपाधिपरतया नेयम्। यद्यपि कण्ठतो नोक्तमिति सुधीभिर्विभावनीयम्।

शुक्तिकारजतप्रत्ययवदुपपद्यत इति नालं सामान्यमुपस्थापयितुम् । तेन भेदग्रहणपुरस्सरमभेदज्ञानं भिन्नेषु जात्यभ्युपगमे शरणमिति निरवद्यम् ।

शालिकनाथेन कृतं कृतमतिना जातिनिर्णयाख्यमिदम् ।
बहुविधविवादहरणं प्रकरणमुरुणाऽवधानेन ॥

इति श्रीमहामहोपाध्यायशालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां जातिनिर्णयो नाम चतुर्थं प्रकरणं समाप्तम् ।

रित्यर्थः । एकवर्तिकावर्तिनीषु बह्वीषु ज्वालासु ज्वालात्वसामान्यं न युक्तम्, [१]भेद-प्रतीतिपुरस्सरमभेदज्ञानं जातिकल्पनायां प्रमाणम् । इयन्तु शुक्तिकारजतवद्भेदाग्रहणेनाप्युपपद्यत इति न सामान्यकल्पना । तेन वृक्षत्वमहासामान्ययोगिनीष्वेव व्यक्तिषु खदिरत्वाद्यवान्तरासामान्यवज्ज्वालात्वमहासामान्यव्यतिरेकेणावान्तरसामान्यं नास्त्येवेति सिद्धम् । उपसंहरति—तेनेति । अतो जात्यादिसिद्धेः तत्कल्पनापि तत्संप्रयोगजेति सिद्धं प्रमाणं स्मृतिश्च प्रत्यय इति ।

एवं प्रत्यक्षस्य व्यभिचाराभावाच्चोदनाप्रामाण्यप्रतिज्ञायां निमित्तपरीक्षा न कर्तव्येति ।

इदानीं प्रकरणकर्तुः प्रकरणस्य च संज्ञां प्रकरणप्रयोजनं चैकेन श्लोकेनाह—शालिकनाथेनेति ।

॥ इति प्रकरणपञ्चिकाव्याख्यायां जयपुरिनारायणविरचितायां न्यायसिद्धौ जातिनिर्णयो नाम चतुर्थं प्रकरणं समाप्तम् ॥

---

[१] अयं भावः—तत्रैव सामान्यमंगीक्रियते यत्र भेदग्रहणपूर्वकमभेदग्रहणं भवति यथा गवादिषु । यत्र भेदग्रहो नास्ति तत्र भेदाग्रहनिबन्धनोऽभेदावसायव्यपदेशस्स्वीक्रियते यथा इदं रजतमित्यादौ । तथैव सेयं ज्वाला इत्यत्राप्युपपत्तेर्न ज्वालात्वसामान्यकल्पना संघटते । अत एव ज्वालादिषु तत्त्वाभिमानो भ्रान्तिरित्युच्यते । अन्यथा सामान्यविषयत्वादभ्रान्ततैव स्यादिति ध्येयम् ।

# अमृतकला नाम पञ्चमं प्रकरणम्[1] ।

## प्रमाणलक्षणम् ।

[2]अनुभूतिः प्रमाणं सा स्मृतेरन्या स्मृतिः पुनः ।
पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ॥१॥
न प्रमाणं स्मृतिः पूर्वप्रतिपत्तेरपेक्षणात् ।
अन्योन्यनिरपेक्षास्तु धारावाहिकबुद्धयः ॥२॥

## प्रभाकरसम्मतं प्रमाणजातम् ।

तत्र पञ्चविधं मानं प्रत्यक्षमनुमा तथा ।
शास्त्रं तथोपमानार्थापत्ती इति गुरोर्मतम् ॥३॥

## प्रत्यक्षनिरूपणम् ।

साक्षात्प्रतीतिः प्रत्यक्षं मेयमातृप्रमासु सा ।
मेयेष्विन्द्रिययोगोत्था द्रव्यजातिगुणेषु सा ॥४॥
सविकल्पाऽविकल्पा च प्रत्यक्षा बुद्धिरिष्यते ।
आद्या विशिष्टविषया स्वरूपविषयेतरा ॥५॥
सर्वविज्ञानहेतूत्था मितौ मातरि च प्रमा ।
साक्षात्कर्तृत्वसामान्यात्[3] प्रत्यक्षत्वेन सम्मता ॥६॥

---

[1] इदञ्च प्रकरणं मुद्रितपुस्तके प्रमाणपारायणानन्तरं षष्ठं प्रकरणमिति दृश्यते । इदमनुपपन्नम् । यतो हि प्रभाकरसम्मतं प्रमाणजातं संक्षेपेण निरूपयितुमनुपलब्धेः प्रमाणान्तरत्वं निरासितुं चेदममृतकलानामकं प्रकरणमरीरचच्छालिकनाथमिश्रः । अस्यैव विशदव्याख्यानरूपं प्रमाणपारायणं नाम षष्ठं प्रकरणं प्रणीतम् । अपि च काशिकसरस्वती-भवनस्थे कोशे जातिनिर्णयानन्तरमिदं प्रकरणं निवेशितमस्ति । अतोऽत्रैवास्य प्रकरणस्य संलग्नतां पश्यद्भिरस्माभिः पञ्चमस्थाने सन्निवेशः कृतोऽस्येति सुधीभिः विभावनीयम् ।

[2] अस्य प्रकरणस्यादौ स्वरूपेत्यादिपद्यं मुद्रितपुस्तके समुपलभ्यते । परमिदं पद्यं प्रमाणपारायणस्यादौ पठनीयम् । तत्रैवास्य संगतत्वात् । "प्रमाणपारायणमारभामहे" इति तुरीयचरणस्य तदनुरूपत्वादिति ज्ञेयम् ।

[3] साक्षात्कारत्वसामान्यादिति गपुस्तके पाठो दृश्यते । क.ख.पुस्तकयोः साक्षा-त्कर्तृत्वसामान्यादित्येव दर्शनात्स एव पाठो मले निवेशितः इति ।

प्रमाणफलभावनिरूपणम् ।

मानत्वं संविदां बाह्यं हानादानादिकं फलम् ।
ज्ञानस्य तु फलं सैव व्यवहारोपयोगिनी ॥७॥
आपेक्षिकश्च करणं मन इन्द्रियमेव वा ।
तदर्थसन्निकर्षो वा मानश्चेत् पूर्वकं फलम् ॥८॥

अनुमाननिरूपणम् ।

ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनात् ।
एकदेशान्तरे बुद्धिरनुमानमबाधिते ॥९॥
यः कश्चिद्येन यस्येह सम्बन्धो निरुपाधिकः ।
प्रत्यक्षादिप्रमासिद्धः स तस्य गमको मतः ॥१०॥
प्रमेयमनुमानस्य दृष्टादृष्टस्वलक्षणम् ।
परप्रत्यायनेच्छूनामनुमोदयसाधनम्[१] ॥११॥
वचनं दूषणैस्सार्धमर्थादेतेन वर्णितम् ।
प्रत्यक्षवच्च [२]वक्तव्या प्रमाणफलवर्णना ॥१२॥

शास्त्रनिरूपणम् ।

शास्त्रं तु शब्दविज्ञानात् यदसन्निकृष्टार्थविज्ञानम् ॥१३॥

उपमाननिरूपणम् ।

स दृश्यदर्शनोत्थं ज्ञानं सादृश्यविषयमुपमानम् ।
[३]विषयोऽस्य वित्तिसिद्धो भिन्नो द्रव्यादिभावेभ्यः ॥१४॥
सादृश्याद्दृश्यमानाद्यत् प्रतियोगिनि जायते ।
सादृश्यविषयं ज्ञानमुपमानं तदुच्यते ॥१५॥

---

[१] अयं श्लोकोऽनुमानपरिच्छेदे उपलभ्यते । परन्त्वत्र मुद्रिते परित्यक्तः । स तु संशोधकस्य प्रमाद एवेति ध्येयम् ।

[२] कर्तव्येति मु. पु.

[३] इदं श्लोकार्धं मु० पु० अमृतकलायां नोपलभ्यते । परन्तूपमानपरिच्छेदे दृश्यते । अतोऽत्रेदं निवेशितमिति मन्तव्यम् ।

अर्थापत्तिनिरूपणम् ।

विना कल्पनयाऽर्थेन दृष्टेनाऽनुपपन्नताम् ।
नयता[1] दृष्टमर्थं या साऽर्थापत्तिस्तु कल्पना ॥१६॥
अभावेन गृहे भावो बहिष्कल्पनया विना ।
नयताऽनुपपन्नत्वं कल्प्यमानो[2] बहिर्यथा ॥१७॥
गम्यस्यानुपपन्नत्वमिह कल्पनया विना ।
मानान्तरविरोधेन सन्देहापत्तिलक्षणम् ॥१८॥
देशेन हि विनाभावो न कदाचन दृश्यते ।
विनाभावेन सिद्धोऽपि तेन सन्देहमृच्छति ॥१९॥
तत्सन्देहव्युदासाय कल्पना या प्रवर्त्तते ।
सन्देहापादकादर्थादर्थापत्तिरसौ[3] स्मृता ॥२०॥
[4]यत्कल्पनां विना योऽर्थः प्रतीतोऽप्येति संशयम् ।
तेन तत्कल्पनामेके त्वर्थापत्तिं प्रचक्षते ॥२१॥
गमकस्यानुमाने तु विपक्षाऽसत्त्वलक्षणम् ।
गम्यतेऽनुपपन्नत्वं विना गम्येन वस्तुना ॥२२॥
तत्सामग्रीविभेदेन भिन्ने एते परस्परम् ।
अर्थापत्त्यनुमानाख्ये प्रमाणे इति निश्चितम् ॥२३॥

अनुपलब्धिप्रमाणनिराकरणम् ।

अभावाख्यं[5] प्रमाणं ये षष्ठमाहुर्मनीषिणः ।
तेषां प्राभाकरैरेवं प्रत्यादेशोऽयमुच्यते ॥२४॥

---

१ अर्थान्तरं कल्प्यते यत्तदर्थापत्तिगोचर इति ऋजुविमलापञ्चिकायां दृश्यते इति ।

२ कल्पनातः इति. ऋ. वि. पं. पा. ।

३ ०दर्थात्सन्देहोत्पत्तिर० ऋ. वि. पं. पा. ।

४ अयं श्लोको मुद्रितपुस्तकेऽमृतकलायां न दृश्यते । प्रमाणपारायणे अर्थापत्तिपरिच्छेदे त्वस्ति । अतस्सोऽत्र निवेशित इति वेदितव्यम् ।

५ "अभावोऽपि प्रमाणाभावः नास्तीत्यर्थस्यासन्निकृष्टस्य" इति भाष्यवाक्यं अनुपलब्धिप्रमाणतद्विषयोभयप्रदर्शनपरतया कुमारिलभट्टैर्व्याख्यातम् । तत्राऽभाव इति लक्ष्यनिर्देशः । प्रमाणाभाव इति तल्लक्षणम् । तत्र प्रमाणशब्दः पूर्वोक्तसदुपलम्भकप्रत्यक्षादिप्रमाणपञ्चकपरः । अभावशब्दश्चऽन्योन्याभावपरः । तथा च सदुपलम्भकप्रत्यक्षादिप्रमाणपञ्चकभिन्नत्वे सति प्रमाणत्वमभावापरपर्यायस्यानुपलब्धिप्रमाणस्य लक्षणम् । नास्तीत्यर्थस्याभावस्यासन्निकृष्टस्य प्रत्यक्षादिभिरनवगतस्येत्यर्थः । तन्मतं निरसितुमनुवदति—अभावाख्यमित्यादिना ।

प्रमाणं खलु कस्यापि प्रमेयस्यावबोधकम् ।
[1]तत्राऽभावस्य किं तावत् प्रमेयमिति चिन्त्यताम् ॥२५॥

ननु नास्तीति बुद्ध्या[2] तु बोध्यं यदुपकल्पितम् ।
अभावस्य प्रमाणस्य प्रमेयं तत् भविष्यति ॥२६॥

भूतलेऽत्र घटो नास्तीत्येषा या जायते मतिः ।
सा न भूतलमात्रे स्यात् प्रसक्तेर्घटवत्यपि ॥२७॥

केवले भूतले चेत्स्यात्कैवल्यं तत्र कीदृशम् ।
स्वरूपमात्रं नो तावद्धर्मान्तरमथोच्यते ॥२८॥

प्रमेयान्तरमेवात्र तावताऽङ्गीकृतं भवेत् ।
तच्च नेन्द्रियविज्ञेयं तद्व्यापारानपेक्षणात् ॥२९॥

स्वरूपमात्रे दृष्टेऽपि भावे दूरगतोऽपि सन् ।
कथंचिज्ज्ञातजिज्ञासो नास्तित्वं प्रतिपद्यते ॥३०॥

तेन यत्राऽपि नास्तित्वं बुध्यते व्यापृतेन्द्रियः ।
भावांशमात्रे तत्रापि प्रत्यक्षस्य प्रमाणता ॥३१॥

नास्तित्वं च प्रमाणानामनुत्पत्त्यैव गम्यते ।
नास्तित्वप्रतिपत्तिर्हि तां विना नास्ति कुत्रचित् ॥३२॥

योग्यप्रमाणानुत्पत्तेः कारणत्वपरिग्रहात् ।
अतिप्रसङ्गदोषोऽपि नावकाशमुपाश्नुते ॥३३॥

अनुत्पत्तिश्च न ज्ञाता सती कारणमक्षवत् ।
तेन लिङ्गत्वशङ्काऽपि दूरादेव निराकृता ॥३४॥

अनुत्पत्तिश्च विज्ञाता हेतुश्चेल्लिङ्गवद्भवेत् ।
अनवस्था प्रसज्येत नास्तित्वं न च सिद्ध्यति ॥३५॥

किञ्च पादविहारादिव्यवहारश्च भूतले ।
न भूतलपरिच्छेदमात्रेणैव प्रवर्तते ॥३६॥

प्रसङ्गस्तत्र दुर्वारः कण्टकाद्यन्वितेऽपि हि ।
अथ केवलभूभागपरिच्छेदात् प्रवर्तते ॥३७॥

---

[1] तस्याभा० इति मु० पु० पाठः

[2] बुद्धौ इति मु० पु० पाठः

विकल्प्यं तत्र कैवल्यं ग्राह्यस्य ग्रहणस्य वा ।
ग्राह्यस्य चेत्पुरैवोक्तो दोषस्तर्हि प्रसज्यते ॥३८॥
ग्रहस्य चेत्तदा सूक्ष्मजिज्ञासा निष्फला भवेत् ।
जाता हि केवला [१]संविद् व्यवहारस्य कारणम् ॥३९॥
तेन भावं परिच्छिद्य व्यवहारे चिकीर्षति ।
दृश्यादर्शनसिद्ध्यर्थं युक्तं सूक्ष्मनिरीक्षणम्[२] ॥४०॥
अत्रोच्यते द्वयी संविद्-वस्तुनो भूतलादिनः ।
एका संसृष्टविषया तन्मात्रविषया परा ॥४१॥
तन्मात्रविषया या च द्विधा साऽऽपि प्रसज्यते ।
प्रतियोगिन्यदृश्ये च दृश्ये च प्रतियोगिनि ॥४२॥
तत्र तन्मात्रधीर्येयं दृश्ये च प्रतियोगिनि ।
नास्तित्वं सैव भूभागे घटादिप्रतियोगिनः ॥४३॥
ननु संसृष्टबुद्ध्या यः पुरस्तादवधारितः ।
कथं तन्मात्रधीस्तत्र जाता भावो[३] न तत्र चेत् ॥४४॥
शक्यते तदभावेऽपि वक्तुं यो यत्र सन्नभूत् ।
तस्याभावः कथं तत्र ब्रूयाच्चेत्तत्र कारणम् ॥४५॥
तन्मात्रधिय एवास्तु [४]वरं तत्कारणं ततः ।
तस्याः सम्प्रतिपन्नत्वाद्वादिनोरुभयोरपि ॥४६॥
चक्षुर्वदपरामृष्टं न कारणमदर्शनम् ।
स्वापावस्थागतस्यापि [५]प्रमाणत्वप्रसङ्गतः ॥४७॥
विशेषापादिका तस्य न निषेधस्य दृश्यता ।
भावरूपो विशेषो हि नाभावस्योपपद्यते ॥४८॥

---

[१] संविदित्यादिर्द्वयीत्यन्तः पाठो मुद्रितपुस्तके न दृश्यते। ख पुस्तकानुसारेणाऽयं पाठो मूले निवेशितः इति ध्येयम् ।

[२] परीक्षणमिति ग. पु. पाठः ।

[३] भावेन तस्य चेदिति मु. पु. पा.

[४] परमिति मु. पु. पा.

[५] कारणत्वेति मु. पु. पा.

अदर्शने निवृत्तेऽपि पुनर्भावस्य कस्यचित् ।
प्राङ्नास्तित्वं व्यपदिशन्त्यदृष्टस्य पुरा क्वचित् ॥४९॥

दृश्यस्यादर्शनं तेन ज्ञातं सदवबोधकम् ।
दृश्यादर्शनतस्तस्य ज्ञानं चेदव्य[१]वस्थितिः ॥५०॥

यदि तन्मात्रसंवित्तिरूपं स्यात्तददर्शनम् ।
तदा तस्याः स्वसंवित्तेरनवस्था निवर्तते ॥५१॥

तेनाऽवश्याभ्युपेतव्यो विमर्शो दृश्यगोचरः ।
अदर्शनमभावो हि तन्मात्रानुभवात्मकम् ॥५२॥

तन्मात्रानुभवश्चायं यददर्शनरूपितः ।
विमृश्यते भूतलादौ तदभावोऽ[२]पदिश्यते ॥५३॥

तन्मात्रानुभवश्चायं न मेयः फलभावतः ।
किञ्च स्वयं प्रकाशोऽसाविति न्यायविदो विदुः ॥५४॥

नास्तीति शब्दस्तत्रैव स्वसंवेद्ये प्रवर्तते ।
तेन नास्तीति विज्ञानन्यायेन न समागतम् ॥५५॥

मेयाभावे ततो मानमभावाख्यं कथं भवेत् ।
घटसत्ता न लभ्या हि नासत्ता चोदितात्क्रमात् ॥५६॥

अभावव्यवहारो हि निःशङ्कगमनादिकः ।
तन्मात्रानुभवेनैव यथोक्तेन प्रवर्तते ॥५७॥

यदा यस्य च दृश्यत्वे सत्यप्यनुपलम्भनम् ।
तदभावव्यवहृतिस्तदानीं संप्रवर्तते ॥५८॥

सूक्ष्मकण्टकजिज्ञासाऽप्यतः सार्थकतां गता ।
तां विना न हि दृश्यत्वं सूक्ष्मसत्ताऽधिरोहति ॥५९॥

व्यवहारप्रवृत्तिश्च दृश्यादृष्टिनिबन्धना ।
तेन दृश्यत्वसिद्ध्यर्थं [३]युक्तं तस्मिन्निरीक्षणम् ॥६०॥

---

[१] अव्यवस्थितमिति मु. पु. पा.

[२] प्रपद्यते, इति मु. पु. पा.

[३] सार्थकं सूक्ष्मवीक्षणम् इति मु. पु. पा.

नन्वेवं लक्षणग्रन्थस्यार्थस्तर्ह्यस्य कीदृशः ।
मीमांसार्णवसम्भूतं पीयतां [1]समयामृतम् ॥६१॥
प्रत्यक्षाद्यपरिच्छेद्यमभावाख्यं [2]चतुर्विधम् ।
प्रमेयं साधयत् मानमभावाख्यं वदन्ति ये ॥६२॥
तन्निराकरणार्थोऽयं यत्नो भाष्यकृता कृतः ।
अभावोऽसंनिकृष्टस्य नास्तीत्यस्यावबोधकः ॥६३॥
प्रमाणं न भवतीति प्रमाणाभाव[3] उच्यते ।
किं निराकरणस्येह फलमित्यथ चेन्मतम् ॥६४॥
उच्यते लक्षणग्रन्थः प्रत्यक्षादेः समर्थ्यते ।
प्रमाणं कार्यगम्यं हि सर्वत्रेति विनिश्चितम् ॥६५॥
निश्चयश्च प्रमाणस्य कार्यमित्यपि संमतम् ।
निश्चयश्चेयमेवेति संवित्तिः सर्ववस्तुषु ॥६६॥
सा च वस्त्वन्तराभावसंवित्त्यनुगमे सति ।
प्रमाणानुदयस्तत्र यत्राभावोऽवसीयते ॥६७॥
तदा तेन सहैव स्यात् प्रत्यक्षादेः प्रमाणता ।
लक्षणं क्रियमाणं च तथाभूतस्य युज्यते ॥६८॥
न कृतं च तथा तेन न कृतं साधुलक्षणम् ।
इमां शङ्कां निराकर्तुं निराकरणमुच्यते ॥६९॥
कथं पुनरियं शङ्का भवत्यत्र निराकृता ।
अभावाख्यो न मेयोऽस्ति यदर्थं प्रार्थ्यते पुनः ॥७०॥
प्रमाणानामनुत्पादः साधु तल्लक्षणं कृतम् ।
इति पूर्वप्रमाणानां लक्षणानि समादधत् ॥७१॥
भाष्यकार इमं ग्रन्थं चक्रे नाऽऽभावलक्षणम् ।
नन्वेवमपि[4] पश्चाह शब्दं हित्वा कथं पुनः ॥७२॥

[1] मन्मतामृतम्, इति मु० पु० पाठ
[2] चतुर्विधा इति मु० पु० पाठः
[3] प्रमाणाभावतोच्यते इति मु० पु० पाठः
[4] "अभावोऽपि प्रमाणाभाव" इत्यादिभाष्यं नाभावप्रमाणस्य लक्षणपरम्, किन्तु अभावः

भाष्यकारः प्रमाणानि चित्राक्षेपं समादधत् ।
उच्यते व्यवहारस्य हेतुभूतप्रसिद्धये ॥७३॥
एवमाहोभयात्मापि व्यवहारः प्रतिष्ठितः ।
तत्र भावव्यवहृतिः पञ्चस्वेवोपलभ्यते ॥७४॥
अभावव्यवहारस्तु दृश्यादृष्टिविमर्शजः ।
सा हि भूभागसद्भावमात्रावच्छेदबन्धना ॥७५॥
तदभावव्यवहृतिरिति प्रागेव दर्शितम् ।
मीमांसाजलराशेरशेषनयरत्ननिकषनिजधाम्नः ॥७६॥
इति शालिकनाथ इमाममृतस्य कलामुदाहरद्धीरः[१] ।

इति महामहोपाध्यायश्रीशालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायाममृतकला नाम पञ्चमं प्रकरणं समाप्तम् ॥

---

केनाऽपि प्रमाणेन नावगम्यते । अतः प्रमेयस्यैवाभावादभावः प्रमाणं न भवतीत्येवं परम् । पञ्चैव प्रमाणानि प्राङ्निरूपितानि । चित्राक्षेपपरिहारावसरे "यदि पञ्चैव प्रमाणान्यभविष्यन्" इति भाष्यम् । अस्य भाष्यस्यायमर्थः । तथाहि—भाष्येणानेन शब्दातिरिक्तानि पञ्च प्रमाणानि नोपन्यस्यन्ते प्रमाणपञ्चकाभ्युपगमस्य पूर्वमेवोक्तत्वात् । तेषाञ्च प्रत्यक्षादीनां प्रमाणानामयमेवेत्यर्थनिश्चायकतया प्रमाणत्वमभिमतम्, न तु प्रमाणान्तरतया । नास्तीति शब्दप्रयोगात्मको निश्शङ्कगमनलक्षणश्च व्यवहारो न स्वरूपावगममात्रेण सम्भवति । अतः पञ्च व्यवहारास्स्वरूपावगतिनिबन्धना भवन्ति । अपरस्तु व्यवहारोऽवच्छेदनिबन्धनश्च भवति । यस्मात्कारणात् व्यवहारमात्रपरिज्ञानायेदमभिहितम् न त्वनुपलब्धिप्रमाणनिरूपणाय । अतएव व्यवहारान्तरसिध्यर्थं व्यवहारनिरूपणावसर एव पञ्चसंख्योपन्यस्ता, न तु प्रमाण स्वरूपवर्णनावसरे । तथा च व्यवहारप्रदर्शनावसरे पञ्चसंख्योपन्यासादभावव्यवहारस्य भेदिकेयं पञ्चसंख्या, न तु प्रमाणस्वरूपस्येति विषयभेदान्न पूर्वापरग्रन्थविरोध इत्याशयं मनसि निधायाह—नन्वेवमित्यादिना व्यवहारः प्रतिष्ठितः इत्यन्तेन ।

[१] इति शालिकनाथेन मीमांसोदधिमन्थनात् ।
कृताऽमृतकला विश्वविबुधानन्ददायिनी ॥

इति ग० पु० अधिकं दृश्यते

# अथ [1]प्रमाणपारायणं नाम षष्ठं प्रकरणम् ।

प्रकरणार्थप्रतिज्ञा ।

स्वरूपसंख्यार्थफलेषु वादिभिः
यतो विवादा बहुधा वितेनिरे ।
ततो वयं तत्प्रतिबोधसिद्धये
प्रमाणपारायणमारभामहे ॥ १ ॥

न्यायसिद्धौ प्रमाणपारायणप्रकरणम् ।

प्रारिप्सितप्रकरणस्य संज्ञां प्रयोजनं चाह—स्वरूपसंख्यार्थेति । प्रमाणपारायणमिति प्रकरणसंज्ञा, स्वरूपादिषु वादिनां विप्रतिपत्तौ सत्यां तेषां प्रतिबोधः प्रयोजनम् । प्रमाणस्वरूपे प्रमाणसंख्यायां प्रमाणविषयभूतार्थे प्रमाणफले च वादिनां विप्रतिपत्तिः दृश्यते । प्रमाणस्वरूपे तावदविसंवादि विज्ञानं प्रमाणमिति बौद्धाः । सम्यगनुभवसाधनं प्रमाणमिति नैयायिकाः । दृढमविसंवाद्यगृहीतार्थग्राहकं प्रमाणमिति भाट्टाः । अनुभूतिः प्रमाणमिति प्राभाकराः । तथा प्रमाणविशेषे विप्रतिपत्तिः । प्रत्यक्षं कल्पनापोढमभ्रान्तमिति बौद्धाः । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति नैय्यायिकाः । अर्थसंप्रयुक्तार्थगोचरं विज्ञानं प्रत्यक्षमित्यपरे । सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमित्यन्ये । साक्षात्प्रतीतिः प्रत्यक्षमिति प्राभाकराः । एवमनुमानादिष्वपि विवादो बहुलं दृश्यते ।

तथा संख्यायामपि । चार्वाकः प्रत्यक्षमेवैकं मन्यते । प्रत्यक्षमनुमानञ्च द्वे एव प्रमाण इति बौद्धाः, वैशेषिकाश्च । शास्त्रमपि तृतीयं सांख्या आहुः । उपमानमपि चतुर्थं नैय्यायिकाः । अर्थापत्तिलक्षणमपि पञ्चमं प्राभाकराः । अभावं षष्ठं भाट्टाः । संभवाख्यमपि सप्तममपरे । ऐतिह्यमष्टममन्ये । तथा लोकाख्यं नवमं केचित् । अन्ये त्वार्षमपि दशमं मन्यन्ते ।

तथा प्रमाणविषयभूतार्थेऽपि विप्रतिपत्तिः । परमार्थतः स्वयंप्रकाशं ज्ञानमेव, न पुनर्विषयाख्यं समस्तीति मायावादिनः । स्वलक्षणमात्रमिति बौद्धाः । जात्यादयोऽपीत्यपरे ।

तथा प्रमाणफलेऽपि विप्रतिपत्तिः । प्रतीतिः प्रमाणं, हानोपादानादयः प्रमाणफलमिति केचित् । अन्ये पुनरिन्द्रियसन्निकर्षादिसामग्री प्रमाणं, तज्जन्यं सर्वं फलमिति । अपरे तु प्रमितिः प्रमाणं, तत्साधनं ज्ञानं प्रमाणफलमिति । तथा तत्फलं

---

[1] अमृतकलाया विशदव्याख्यानरूपं प्रमाणपारायणं नाम षष्ठं प्रकरणम् । वस्तुतस्तु नेदं पञ्चमात्प्रकरणादतिरिच्यत इति ध्येयम् ।

**किं पुनरिदं प्रमाणं नाम? न तावदविसंवादि ज्ञानं प्रमाणम्। स्मृतेरपि तथाभावप्रसक्तेः। अथ स्मृतिर्विकल्परूपतया परमार्थसत् स्वलक्षणमगृह्णन्ती संवृतिसन्तमाकारमवस्तुभूतमुल्लिखन्ती द्विचन्द्रादिबोधवन्नाविसंवादिनीति मतम्।**

प्रमाणस्वरूपं प्रमेयस्थं जडश्चेति। अन्ये तु [1]प्रमातृस्थमित्यादि। एवं बहुविधविवाद-दर्शनात्तन्निर्णयार्थं प्रमाणपारायणाख्यं प्रकरणमारभ्यत इत्यर्थः।

तत्र प्रमाणसामान्यलक्षणाभिधानपूर्वकत्वात्तद्विशेषलक्षणस्यावसरप्राप्तं स्वाभिमतं प्रमाणसामान्यलक्षणं दर्शयितुं वाद्यन्तरपरिकल्पितानां लक्षणान्तराणामसंभवं तावद्दर्शयितुं पृच्छति—**किं पुनरिति**। किमाक्षेपे। न किञ्चित् प्रमाणस्य लक्षणं संभवतीत्यर्थः। तत्र प्रतिपत्तिसौकर्यार्थमसङ्कीर्णव्यवहारार्थं च लक्षणमुच्यते। लक्ष्यते येन तल्लक्षणम्—पदार्थान्तरेभ्यो विवेचकम्।

नन्वविसंवादि ज्ञानं प्रमाणमिति सौगता मन्यन्ते। यद्विज्ञानं स्वेनोपदर्शितमर्थं पुरुषं प्रापयति, तत्संवादरूपत्वात् अविसंवादकमित्युच्यते। प्रदर्शिते चार्थे प्रवर्तकत्वमेव प्रापकत्वं नान्यत्, प्रवर्तकत्वमपि प्रवृत्तिविषयप्रदर्शकत्वमेव। तत्र येनैव ज्ञानेन प्रथममधिगतोऽर्थः तेनैव पुरुषः प्रवर्तितः प्रापितश्चार्थः। प्रापिते चार्थे ज्ञानान्तरेण कृत्यं नास्त्येव, अतोऽनधिगतविषयमेव प्रमाणत्वम्। तत्राधिगतिरेव प्रमाणफलमित्यर्थात्समाप्तः प्रमाणव्यापार इति सौगताः। अतः कथं लक्षणासंभव इत्यत्राह—**न तावदिति**। कुत इत्याह—**स्मृतेरपीति**। तत्र लक्षणदूषणं त्रिप्रकारम्, अव्याप्तिरतिव्याप्तिरसंभाव्यमानता चेति। अप्रमाणभूते स्मृतिज्ञानेऽपि प्रमाणत्वप्रसंगादत्रातिव्याप्तिरुच्यते, केषांचित्स्मृतिज्ञानानामर्थाविसंवादात्प्रामाण्यप्रसक्तेरित्यर्थः। ननु लक्षणानुगतिबलात्स्मृतिरपि प्रमाणमेव। अतः किमिदमतिव्याप्तिर्नामदूषणमिति चेत्, मैवम्। लौकिकपरीक्षकाणां तथा प्रसिद्ध्यभावात्। नच लक्षणानुगतिमात्रेण प्रसिद्धेरन्यथाभावश्शक्यते कर्तुम्। प्रसिद्धमेव हि लक्षणमुद्दिश्याऽसंकीर्णव्यवहारार्थं सर्वत्र लक्षणमुच्यते। तदुक्तं बृहट्टीकायां[2]—

यथालोकप्रसिद्धं च लक्षणैरनुगम्यते।
लक्ष्यं न लक्षणैरेव तदपूर्वं प्रसाध्यते॥ इति।

स्मृतावतिव्याप्तिमाशंकते—**अथ स्मृतिरिति**। अत्र विकल्पशब्देन शब्दज्ञानानुपाती वस्तुशून्यः प्रत्ययविशेष उच्यते। यथा—शशविषाणं खपुष्पमिति। उक्तञ्च—

शब्दज्ञानानुपाती यो वस्तुशून्यस्स उच्यते।
विकल्प इति तत्त्वज्ञैः खरशृङ्गखपुष्पवत्॥ इति।

---

[1] स्वमतमाह। अयं विषयोऽत्रैव प्रत्यक्षपरिच्छेदान्ते मूलकृतैव विवरिष्यते।

[2] कुमारिलभट्टैः शाबरभाष्यस्य तिस्रः टीकाः प्रणीताः। बृहट्टीका, मध्यमटीका, लघ्वी टीका चेति। बृहट्टीकामध्यमटीके साम्प्रतं नोपलभ्येते। तत्रत्याः श्लोकाः परमत्र दर्शने दर्शनान्तरेषु चोध्रियन्ते प्रमाणतयाऽभियुक्तैः। तृतीयैव टीका साम्प्रतं श्लोकवार्तिकतन्त्रवार्तिकटुप्टीकादिभेदभिन्ना प्रसिद्धा इति ध्येयम्।

**एवमपि नानुमानं प्रमाणं स्यात्। तस्यापि विकल्परूपत्वात्। तर्हि विकल्परूपमनुमानमवस्तुविषयमपि वस्तुविषयमिवाध्यवसीयते, इत्यध्यवसीयमानवस्तुभूतस्वलक्षणाविसंवादितया तत्प्रमाणम्। स्मृतिरपि तथा स्यात्। सापि हि स्वलक्षणाध्यवसायिन्येव जायते। अपि चावस्तुभूतं स्वविषयं वस्तुतयाऽध्यवस्यच्छुक्तिकारजतबोधवत् कथमनुमानमविसंवादि।**

स्वलक्षणशब्देनापि स्वमसाधारणं तत्त्वं यस्यात्मनो लक्षणं नान्यत्, तदेवोच्यते, तदेव परमार्थसत्। एवंभूतपरमार्थसल्लक्षणाच्छादको विचार्यमाणशून्यो वस्तुविशेषस्संवृतिसन्नित्युच्यते।

ननु लोके प्रसिद्ध्यभावात्किं तदिति न विज्ञायते। यद्यभिलापसंसर्गनिमित्तमनुवृत्तं जातिगुणादिरूपं स्वलक्षणे योजितमिव भाति, तत्कृत्रिमत्वेन संवृतिसदित्युच्यते। यद्यपि तस्य स्वारसिकबाधो नास्ति, तथापि यौक्तिकबाधो ज्वालायामिवाऽस्त्येवेति विचार्यमाणशून्यत्वं तस्योच्यते। तदुक्तम्—

सत्याभासः परं तत्र न सत्यं परमार्थतः।
विचार्यमाणशून्यत्वे संवृतिश्चेति गीयते॥ इति।

अक्षरार्थस्तु **स्मृतिज्ञानं विकल्परूपतया**—सविकल्पकज्ञानतया आरोपितसन्तानविषयतया वस्तुशून्यप्रत्ययतया **परमार्थसत् स्वलक्षणं** निर्विकल्पकज्ञानविषयं जात्यादिरहितं वस्तुमात्रम**गृह्णती अवस्तुभूतम्**—असत्यभूतं **संवृतिसन्तमाकारम**कृत्रिमस्वलक्षणाच्छादकं जात्याकार**मुल्लिखन्ती द्विचन्द्रादिबोधवत्**—एकस्मिन्नेव चन्द्रमसि द्वौ चन्द्राविति बोधवत्, **नाविसंवादिनी** इत्यतिव्याप्तिर्नास्त्येवेति मतमित्यर्थः।

परिहरति-**एवमपीति**। कुत इत्याह—**तस्यापीति**। अनुमानस्यापि विकल्परूपत्वादित्यर्थः,। अनेनाव्याप्तिर्लक्षणस्योच्यते। अनुमानस्याव्याप्त्यभावमाशंकते—**तर्हि विकल्परूपमिति**। [१]द्विविधो हि ज्ञानानां विषयः ग्राह्यो अध्यवसेयश्च। निर्विकल्पकज्ञानस्य स्वलक्षणं ग्राह्यं, विकल्पज्ञानानामध्यवसेयः। अध्यवसायो नाम व्यक्त्या तद्व्यावृत्तिसाम्येन भेदाग्रहः। एवमगृहीतभेदो विकल्पः स्वलक्षणत्वेनाध्यवसीयत इति स्वलक्षणमेवाध्यवसितमनुमानस्येत्यध्यवसितस्वलक्षणाविसंवादात्प्रामाण्यमनुमानस्येति नाव्याप्तिरिति।

---

[१] सौगतमतानुयायी धर्मोत्तराचार्यः प्रमाणस्य ग्राह्याध्यवसेयभेदेन विषयद्वैविध्यमङ्गीकृत्य निर्विकल्पकसविकल्पकयोर्विषयव्यवस्थां वर्णयामास। अयं हि तत्रत्यो ग्रन्थः—"द्विविधो हि प्रमाणस्य विषयो ग्राह्योऽध्यवसेयश्च। यदाकारमुत्पद्यते। प्रापणीयश्च यमध्यवस्यति। अन्यो हि ग्राह्योऽन्यश्चाध्यवसेयः। प्रत्यक्षस्य हि क्षण एको ग्राह्यः। अध्यवसेयस्तु प्रत्यक्षबलोत्पन्नेन निश्चयेन सन्तान एव। सन्तान एव च प्रत्यक्षस्य प्रापणीयः।" इति [न्या. बि. टी. पृ. १६.] इदमेव न्यायसिद्धिकारो धर्मोत्तराचार्यस्य मतमत्र निर्दिशति। इति ध्येयम्।

किञ्च यद्यनुमानं विकल्परूपतया स्वलक्षणं न गृह्णाति, कथं तर्ह्यध्यवस्यत्यपि। नहि ग्रहणादन्योऽध्यवसायो नाम। यो ह्याकारो न गृह्यते स कथमध्यवसीयेतापि। प्रतीतिविरुद्धं चेदमुच्यते "स्मृतिरनुमानवद् बाह्यं वस्तु न विषयीकुरुते" इति। विकल्पभूतयोरपि तयोः प्रत्यक्षप्रतीतवस्तुग्राहकत्वप्रतीतेः। अथोच्येत—न वयं यथावस्थितार्थग्राहकमविसंवादकमभिदध्महे, किन्त्वर्थक्रियासमर्थवस्तुपरिप्रापकम्। यथाभूतं हि येन वस्तूपदर्शितं, प्रवृत्तोऽपि यदि तथाभूतमेव प्रतिलभते; तदा तदविसंवादिज्ञानं प्रमाणमुच्यते। तथा चोक्तम्—

परिहरति—तर्हीति। कथमित्याह—सापि ह्येति। सापि—स्मृतिरप्यनुमानवत्स्वलक्षणाध्यवसायिन्येव जायते। किंच विकल्पज्ञानेनालीकभूतेनासत्यभूतः प्रदर्शितः वस्तुभूतश्च प्राप्यते, अन्यः प्रदर्शितोऽन्यस्तु प्राप्यत इति शुक्तिकारजतबाधवद्विसंवादितया कथमनुमानस्य प्रामाण्यमित्याह—अपि चेति। ग्रहणाध्यवसाययोर्भेदोऽस्तीति कृत्वेदमुक्तम्, 'परमार्थतस्तु भेदो नास्तीत्याह—किंचेति।

ननु को विरोध इत्यत्राह—नहीति। एतदेव विवृणोति—यो ह्याकार इति। जातिसद्भावस्य जातिनिर्णये प्रतीतिबलेन साधितत्वात्, न प्रतीतिविरोध इत्याह—प्रतीतिविरुद्धं चेति। कथं प्रतीतिविरोध इत्यत्राह—विकल्पभूतयोरिति। तयोः स्मृत्यनुमानयोरित्यर्थः। शंकते—अथेति। अविसंवादिशब्देन नार्थाविसंवादमात्रमुच्यते, किन्तु अर्थक्रियाविसंवादः। अतएव हिमशिलायां जलज्ञाने भ्रान्तिव्यवहारः, तथा मरीचिकायां जलज्ञाने भ्रान्तिव्यवहारश्च। बौद्धैरप्युक्तम्—

---

१ अत्र यद्यपि पञ्चिकाकारः "न हि ग्रहणादन्योऽध्यवसायो नाम" इति वदन् धर्मोत्तरस्य मतं प्रतिक्षिपतीति प्रतीयते। तथापि वाचस्पत्येषु निबन्धेषु भदन्तधर्मोत्तरेणेति नामग्राहं तन्मतस्य खण्डनमुपलभ्यते। अतस्तदेव प्रदर्श्यते। तथाहि न्यायबिन्दुटीकाकारस्य धर्मोत्तराचार्यस्य ग्राह्याध्यवसेयद्वैविध्यं विकल्प्यादूदुषत् वाचस्पतिमिश्रः—केयमध्यवसेयता बाह्यस्येत्यादिना। तथा हि—अध्यवसेयता ग्राह्यतातोऽतिरिच्यते नवेति। यदि नातिरिच्यते ग्राह्यतैवाध्यवसेयतेति द्वैविध्यं कुतस्त्यम्। यद्यतिरिच्यते तस्य स्वरूपं किमिति वक्तव्यम्। अध्यवसायो नाम करणमुत योजनमथवाऽऽरोप इति त्रेधा विकल्पः। तत्र नाद्यः पक्षो युज्यते। न ह्यन्यदन्यत्कर्तुं शक्यते। न द्वितीयः। न ह्यान्तरं बाह्येन योजयितुं शक्यते। किञ्च तथा सति युक्त इति प्रत्ययस्स्यात्। न च तथास्ति। न तृतीयः। किं गृह्यमाणे बाह्ये उतागृह्यमाण इत्यवान्तरविकल्पे निर्विकल्पकेन सविकल्पकेन वेति इति विकल्पजालेनाध्यवसायपदार्थं 'अनुस्मृतेः' इति सूत्रभामत्याम्। [२० ४. २५] 'न निरालम्बनं ज्ञानमि'ति विधिविवेकव्याख्यायां न्यायकणिकायाम्। [पृ० २४७] न्यायवार्तिकतात्पर्यटीकायाञ्च [६५७] विस्तरेण निराचकारेति। प्राचीनैः स्वयूथ्यैर्बहुपराक्रान्तमस्मिन्विषय इत्याशयं मनसि निधायाह—'परमार्थतस्तु भेदो नास्तीत्यादिना'।

"प्रमाणमविसंवादिज्ञानमर्थक्रियास्थितिः ।
अविसंवादनं......[प्र. वा. परि. १-श्लो. ३]" इति ।

तथा—"नः ह्याभ्यामर्थं परिच्छिद्य प्रवर्त्तमानोऽर्थक्रियायां विसंवाद्यत" इति च । एवमपि स्मृतेः प्रामाण्यापत्तिः ।

अथ मतं स्मृत्वाऽर्थं प्रवर्तमानो नियमेनाऽर्थं न प्रतिलभते इति। एवमपि भूतार्थविषयमनुमानमप्रमाणं स्यात् । नहि तदुपदर्शितार्थस्य प्रतिलम्भोऽस्ति । अथ यद्यप्यनुमानप्रतीतस्य भूतस्य वस्तुनः प्राप्तिर्नास्ति, तथापि तत्प्रतिबद्ध-लिङ्गजन्मतया तस्य प्राप्तियोग्यता तावदस्त्येव, तावता च तस्य प्रामाण्यमिति । एवमपि स्मृतिः प्रमाणमापद्यते । स्मृतिरपि ह्यनुमानवदर्थे पारम्पर्येण प्रति-बद्धैव । यथा वह्निस्वलक्षणाद्धूमस्वलक्षणम्, ततश्च धूमदर्शनम्, ततश्च धूमविकल्पः, तस्माच्चानुमानमित्यनुमानमर्थेन पारम्पर्येण प्रतिबद्धत्वादर्थावि-

[२]प्रमाणमविसंवादिज्ञानमर्थक्रियास्थितिः ।
अविसंवादनं शब्देऽप्यभिप्रायनिवेदनात् ।। इति

तदाह—तथा चोक्तमिति । तथा तैरेव प्रदेशान्तरेऽप्युक्तमित्याह—नह्याभ्या-मिति । अस्मिन्पक्षेप्यव्याप्तिरतिव्याप्तिश्च मयूरनृत्तन्यायेनापद्यत इत्यभिप्रायेण परिहरति—एवमपि स्मृतेरिति । स्मृत्वाऽर्थं प्रवर्तमानस्यार्थप्रतिलम्भदर्शनादित्यर्थः ।

शंकते—अथ मतमिति । प्रतिलम्भनियमाभावादित्यर्थः । परिहरति—एव-मपि भूतार्थविषयमिति । कुत इत्याह—नहि तदुपदर्शितेति । भूतत्वादेवास-न्निधानादित्यर्थः । चोदयति—अथ यद्यपीति । भूतार्थविषयानुमानस्य स्मृतिज्ञान-स्येव साक्षाद्वस्तुग्राहित्वाभावेऽपि तत्प्रतिबद्धलिङ्गजन्मतया पारंपर्येण वस्तुसंबन्धाद्योग्यता तावदस्ति, तावता च योग्यतामात्रेण प्रामाण्यम् ।

परिहरति—एवमपि स्मृतिरिति । कुत इत्याह—स्मृतिरपीति । भूतार्थ-विषयानुमानस्य स्मृतिज्ञानस्य च पारंपर्येण वस्तुसंबन्धदर्शनात् । अनुमानस्य

---

[१] हेतुबिन्दुटीकायामर्चटेनेदं वाक्यमुद्धृतमस्ति [हेतु. बि. टी. पृ. ४०]

[२] प्रमाणपारायणे प्रमाणसामान्यलक्षणं निरूपयितुं प्रवृत्तश्शालिकाचार्यः बौद्ध-सम्मतं प्रमाणलक्षणं निराचिकीर्षुः धर्मकीर्तिनाभिहितं प्रमाणलक्षणमनुवदति—अविसंवादिज्ञानं प्रमाणमिति । लक्षणं तदीयेन वचनेन द्रढयति—प्रमाणमिति । व्याख्याकारस्तु तुरीयं पादं पठन् श्लोकं पूरयति शब्देपीत्यादिना । अस्यायमर्थः—ज्ञानं प्रमाणमिति वदन् ज्ञानभिन्नस्येन्द्रिय-सन्निकर्षादेः प्रामाण्यं वारयति । विसंवादनं विसंवादो वञ्चनम् तद्योगाद्विसंवादि । तद्विपरीतमित्यर्थः । [ प्र० वा० परि० १ श्लो० ३ ]

संवादि अर्थप्रापणसमर्थम्, तथा स्मृतिरपि—अर्थादनुभवः, ततः संस्कारः, संस्काराच्च स्मृतिरित्यर्थप्रतिबद्धैवेति तत्प्राप्तियोग्यतया प्रमाणमापद्येत ।

यदि मन्वीत सत्यामपि प्राप्तियोग्यतायां स्मृतेर्यत् तया प्रापयितव्यं स्वलक्षणं, तदनुभवेनैव प्रापितमिति न प्रमाणं स्मृतिः, अनुमानं त्वप्राप्तस्वलक्षणप्रापकतया प्रमाणमिति । एवमप्यर्थक्रियासमर्थवस्तुपरिप्रापकतामात्रं न प्रमाणलक्षणम्, किन्तु विशेषणमुपादेयम्, [१]अप्राप्तप्रापकमविसंवादिज्ञानं प्रमाणमिति । अथोच्यते प्राप्तं प्रति प्रापकत्वमेवापरस्य नास्तीति । तदसत् । अर्थप्रतिबद्धता हि प्रापकता, सा च ज्ञानान्तरस्यापि नानुपपन्ना । यद्युच्येत न प्रापकतामात्रेण प्रामाण्यम्, अपि तु प्रवर्तकतयापि । तथा सति यत् प्रापयति प्रवर्तयति च, तत् प्रमाणमिति । एतदपि न किञ्चित् । प्रवर्तकतापि ज्ञानान्तरस्यापि घटत एव । प्रवृत्ति योग्यार्थोपदर्शकत्वमेव प्रवर्तकत्वम्; तच्च भूतार्थविषयानुमानस्येव स्मरणस्याप्यस्ति । प्रवर्तकत्वे च प्रमाणलक्षणानुप्रवेशिनि निर्विकल्पकज्ञानानामप्रमाणता स्यात्, स्वयं व्यवहारप्रवर्तकत्वाभावात् । तदुत्थास्तु विकल्पा एव प्रापकतया प्रवर्तकतया च प्रमाणभूताः स्युः ।

धारावाहिकज्ञानेषु च पूर्वज्ञानविषयार्थत्वादुत्तरेषां प्रमितित्वं न स्यात् । अथोच्येत । इष्यत एव तेषामप्रमाणतेति । तदयुक्तम् । लोके तेषु पूर्वस्माद-

तावद्दर्शयति—यथा वह्निस्वलक्षणादिति । स्मृतिज्ञानस्यापि संबन्धं दर्शयति—तथा स्मृतिरपीति ।

शंकते—यदि मन्वीतेति । स्मृतिज्ञानस्य पूर्वानुभवगृहीतार्थविषयत्वादप्राप्तप्रापकत्वाभावादप्रामाण्यम् । अनुमानस्याप्राप्तस्वलक्षणप्रापकतया प्रामाण्यमेवेति न स्मृतिसादृश्यमित्यर्थः । परिहरति—एवमप्यर्थक्रियेति । तर्हि यथोक्तं न लक्षणम्, किन्तु विशेषणान्तरमुपादेयम् । पुनः शङ्कते—अथोच्येतेति । उत्तरज्ञानानां पूर्वज्ञानप्राप्तविषयत्वादेवाप्राप्तप्रापकत्वं नास्तीति । परिहरति—तदसदिति । अर्थप्रतिबद्धतैव प्रापकता, नान्या । सा च पूर्ववदुत्तरस्यापि नानुपपन्नेति । पुनः शंकते—यद्युच्येतेति । प्रवर्तकत्वमपि प्रामाण्ये हेतुः, स्मृतेरतथाविधत्वादप्रमाणतेति । परिहरति—एतदपि न किंचिदिति । पुनरव्याप्तिमाह—प्रवर्तकत्वे चेति । कुत इत्याह—स्वयं व्यवहारेति । अतिव्याप्तिमाह—तदुत्थास्त्विति । निर्विकल्पकोत्थास्सविकल्पका एव प्रवर्तकतया प्रापकतया च प्रमाणभूताः स्युः न निर्विकल्पकाः, अतोऽतिव्याप्तमिति । पुनरव्याप्ति-

---

[१] अप्राप्तप्रापकत्वमिति पाठान्तरम् ।

**विशिष्टत्वात् प्रमाणभावस्य। लौकिकं च [१]प्रामाण्यं परीक्षकैरप्यनुसरणीयम्। अथ भिन्नत्वादर्थक्षणानां सर्वेषामप्यप्राप्तप्रापकत्वमस्तीति। तदसत्। क्षणभेदस्यापरामर्शान्न तदपेक्षा प्रमाणतोचितेति। क्षणिकता च [२]मीमांसाजीवरक्षायां प्रतिक्षिप्तैवेति कृतमतिविस्तरेण।**

माह—[३]**धारावाहिकज्ञानेषु चेति।** शंकते—**अथोच्येतेति।** अप्रमाण्यं तेषामिष्टमेवेति परिहरति—**तदयुक्तमिति।** तेषु—उत्तरज्ञानेष्वित्यर्थः।

ननु न वयं लौकिकाः, अतो लोकप्रसिद्धिर्नास्माकं बाधिकेत्यत्राह—**लौकिकं चेति।** शंकते—**अथ भिन्नत्वादिति।** बौद्धमते सर्वपदार्थानां क्षणिकत्वांगीकारादेव भिन्नत्वादर्थक्षणानां सर्वेषां धारावाहिकोत्तरज्ञानानामप्यप्राप्तप्रापकत्वमस्त्विवति न तेषामप्रामाण्यमिति। परिहरति—**तदसदिति।** ज्ञाने क्षणभेदस्यापरामर्शान्न क्षणभेदापेक्षया ज्ञानस्य प्रमाणतोचितेति। किंच क्षणभेदोऽपि नास्तीत्याह—**क्षणिकता चेति।** किंच यदाकारं विज्ञानं तेनाऽविसंवादस्त्वयेष्यते। स्थूलाकारं च सर्वं प्रत्यक्षज्ञानम् न च स्थूलस्य वस्तुत्वं त्वया अंगीकृतम्। न च स्थूलाकारं मुक्त्वाऽन्यत्प्रत्यक्षमस्ति, तस्मात्प्रत्यक्षस्यापि अप्रमाणत्वमेव। प्रत्यक्षमूलत्वादेवानुमानादीनामप्यप्रमाणत्वमेवेत्येतदभिप्रेत्य **कृतमतिविस्तरेणे**त्युपेक्षितम्।

---

[१] प्रमाणमिति. मु. पु.

[२] मीमांसाजीवरक्षाख्ये दशमे प्रकरणे पदार्थानां बौद्धाभिमतं क्षणिकत्वं सहेतुकं निरस्याबाधितप्रत्यभिज्ञानबलेन स्थायित्वं व्यवस्थापितमिति ध्येयम्।

[३] धारावाहिकज्ञानस्य प्रामाण्यं भाट्टाः प्राभाकराश्च मन्वते। परं तत्प्रतिपादनप्रकारः परस्परं भिद्यते। तथा हि—एकमेव विषयमवलम्ब्य यत्र चिरकालपर्यन्तं तैलधारावदविच्छेदेनाऽयं घटः अयं घट इति ज्ञानं जायते, तदेव धारावाहिकज्ञानमित्युच्यते। तत्रानधिगतार्थबोधकत्वं प्रमाया लक्षणमिति प्रमालक्षणमभिदधानानां भाट्टानां द्वितीयादिज्ञानेषु प्रथमज्ञानेन विषयीकृतस्यैव घटस्य भानात्कथं प्रामाण्यमित्याशङ्क्य—

"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते"

इत्यभियुक्तोक्त्या सर्वं ज्ञानं स्वाधिकरणक्षणावच्छिन्नमेव स्वविषयं गृह्णाति। अतः कालविशेषस्याधिक्यात् प्रामाण्यं सिध्यति द्वितीयादिज्ञानानाम्। अयं विषयश्शास्त्रदीपिकायास्तर्कपादे औत्पत्तिकसूत्रे पार्थसारथिना प्रत्यपादि। वासुदेवदीक्षितास्तु मीमांसाकुतूहलवृत्तौ प्रकारान्तरमाहुः। तथाहि—धारावाहिकज्ञानस्थले तावत्कालव्यापकमेकमेव ज्ञानम्। अतो न ज्ञातविषयत्वमिति। इदमेव मतं धर्मराजाध्वरीन्द्रेण प्रमालक्षणकथनावसरे वेदान्तपरिभाषायामुपन्यस्तम्। इदं पद्यार्धमद्वैतब्रह्मसिद्धौ प्रथममुद्गरप्रहारे अद्वैतसिद्धिव्याख्यायां लघुचन्द्रिकायां परिच्छिन्नत्वहेतुनिर्वचनावसरे चोपलभ्यते। आकरस्त्वस्य नोपलभ्यते।

प्राभाकरास्तु—धारावाहिकज्ञानानामुत्तरेषां प्रकारान्तरेण प्रामाण्यं प्रतिपादयन्ति। तेषामयमभिप्रायः। तथाहि—धारावाहिकज्ञानेषु उत्तरेषां ज्ञानानां कालविशेषस्याधिक्येन प्रामाण्य-

भाट्टाभिमतप्रमाणलक्षणखण्डनम् ।

नापि [१]दृढमविसंवाद्यगृहीतार्थग्राहकं प्रमाणमिति प्रमाणलक्षणमुपपद्यते । धारावाहिकज्ञानानामुत्तरेषां पुरस्तात्तनप्रतीतार्थविषयतया प्रामाण्यापाकरणात् । न च कालभेदावसायितया प्रामाण्योपपत्तिः । सतोऽपि कालभेदस्यातिसौक्ष्म्यादनवग्रहात् ।

ननु तर्हि दृढमविसंवाद्यगृहीतार्थग्राहकं प्रमाणमिति लक्षणमुपपद्यत इति चेत्तत्राह—**धारावाहिकज्ञानानामिति** । धारावाहिकोत्तरज्ञानानां पूर्वप्रतीतार्थविषयतया प्रामाण्यापाकरणादिति ।

ननु पूर्वज्ञानगृहीतकालव्यतिरिक्तकालविशिष्टार्थग्रहणादुत्तरेषामपि प्रामाण्यं युक्तमेवेत्यत्राह—**नचेति** । कालस्यैकत्वादेव भेदाभावात् । एकः कालः अनात्मत्वे सति विभुद्रव्यत्वादाकाशवत् । परमार्थतः कालभेदो नास्ति ।

कौमारिलमतानुसारेण कालभेदमभ्युपेत्याह—**सतोऽपीति** । द्रव्येषु रूपवत्स्पर्शवन्महत्त्ववत् वा प्रत्यक्षम् । न च कालस्तथाविधः अरूपत्वादस्पर्शत्वाच्च । तस्मान्न कालभेदः प्रत्यक्षः ।

ननु सूर्यगत्याद्युपाधिभेदादौपाधिको भेदः कालस्येति चेत् । मैवम् । अनुमेयत्वादेव कर्मण उपाध्यग्रहणे औपाधिकभेदाग्रहणात् । अथ ज्ञानस्यैव उपाधितेति चेत् । मैवम् । तस्यापि कालप्रत्यक्षवादिनो मतेऽनुमेयत्वात् । भवतु वा कालभेदः प्रत्यक्षः । तथापि प्राप्ताप्राप्तविवेकेन कालांशे प्रामाण्यं नार्थस्वरूपे तस्य भेदाभावात् । किंच येषां नित्यानां

---

वर्णनं न घटते । कालविशेषस्य क्षणादेरवेद्यत्वात् । अतो नायं प्रकारः । किन्तु प्रकारान्तरमेवैषितव्यम् । पूर्वविज्ञानकारणकलापे व्याप्रियमाणे सत्येवोत्तरेषामुत्पत्तिः तानि च परस्परं नातिशेरते, न वा तेषां सापेक्षत्वम् । तस्मादनुभूतेः प्रमाणत्वात्, तल्लक्षणस्य संस्कारातिरिक्तकारणजन्यत्वे सति ज्ञानत्वरूपस्य द्वितीयादिज्ञानेषु सत्वेन तेषां प्रामाण्ये न काप्यनुपपत्तिः । बृहतीटीकायां ऋजुविमलायामपि "अनुभूतिश्च नः प्रमाणम्" इत्यनुमानप्रकरणस्थं बृहतीवाक्यं व्याचक्षाणो शालिकाचार्यो धारावाहिकेषु येऽपि प्रामाण्यमाहुस्तेऽपि निराकृताः क्षणभेदस्यावेद्यत्वादिति प्रतिपादयतीति ध्येयम् ।

[१] चोदनासूत्रे मीमांसावार्तिककारेण कुमारिलभट्टेन स्वतःप्रामाण्यनिरूपणावसरे परिष्कृत्योपवर्णितं प्रमाणलक्षणं दूषयितुमनुवदति—दृढमविसंवादि अगृहीतार्थग्राहकं प्रमाणमिति । अत्रेदमाकूतम्—यद् ज्ञानं ज्ञानान्तरेण न संवाद्यते, न वा बाध्यते न वा सन्दिग्धार्थबोधकं, तदेव ज्ञानं प्रमाणमिति । तस्यार्थस्य सङ्ग्राहकं वार्तिकम् ।

तस्माद्दृढं यदुत्पन्नं न विसंवादमृच्छति ।
ज्ञानान्तरेण तज्ज्ञानं प्रमाणमिति मीयताम् ॥ [चो० सू० श्लो ८०] इति ।

अत्र दृढमित्यनेन संशयव्यावृत्तिर्न भवति । कोटिद्वयावगाहिसंशयज्ञानमित्यन्यैर्दार्श-

**अपि च दृढमिति किं निवर्त्त्यम् ? संशयज्ञानमिति चेत्, कः पुनरयं संशयः ? साधारणधर्मदर्शनादेकत्र अनेकधर्मावगमाद्वादिनामध्यवसीयमान-विशेषाणां विप्रतिपत्तेश्चानध्यवसितविशेषे वस्तुन्यनियतविशेषविषयं विज्ञानं**

आकाशदिगात्ममनसां कालत्रये स्थायित्वमवगतम्, तद्विषयाणामुत्तरेषां ज्ञानानां कथं प्रामाण्यसमर्थनम्। नित्यत्वप्रमितिसमय एवाधिगतविषयत्वेनाऽनधिगतार्थगन्तृ-त्वाभावात्।

किंच लक्षणवर्त्तिदृढशब्देन किं निवर्त्यत इत्याह—**अपि चेति**। शंकते—**संशय-ज्ञानमिति**। कः पुनरित्यादिना स्मृतिद्वयव्यतिरेकेण कोट्यन्तरमेकं ज्ञानं संशयाख्यं न ज्ञायत इति पृष्टे तार्किकैरुक्तं [1]तल्लक्षणमुदाहरति—**साधारणेति**। नानाकोट्य-वलम्ब्येकः प्रत्ययविशेषः संशय इत्युच्यते। न चेदं स्मरणद्वयम्, कोटिद्वयावलम्ब्येक-संवेदनानुभवात्, स्मरणाभिमानाभावाच्च।

---

निकैर्व्यवह्रियते। तत्र नैकमिदं विज्ञानं किन्तु द्वे विशेषणस्मरणे। तयोर्गृहीतग्राहित्वेन न प्रामाण्यमित्याशयेन दृढ़पदव्यावर्त्य व्यजीघटत् अपि चेत्यादिना पञ्चिकाकारः।

[1] प्रमालक्षणे दृढपदं संशयव्यावृत्त्यै देयमिति वार्तिककारस्य कुमारिलभट्टस्य मतम्। तन्निराकरणाय प्रवृत्तश्शालिकनाथमिश्रः नैयायिकैरुक्तं संशयलक्षणं प्रदिदर्शयिषुः महर्षे-र्गौतमस्य सूत्रं केनचिदंशेन शब्दतोऽशान्तरेणार्थतश्चानुवदति स्म साधारणधर्मदर्शनादित्यादिना तार्किका इत्यन्तेन। विप्रतिपत्तिशरीरे वादिनामित्यादिविवरणदर्शनात्। तथा च सूत्रम्—"समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शस्संशयः"। [अ. १. आ. १. सू-२३] इति। तत्र विमर्शस्संशय इति संशयसामान्यलक्षणम्। एकधर्मिविशेष्यकविरुद्धनानाधर्मप्रकारकज्ञानं संशय इति। सूत्रस्यायमर्थः—उपपत्तिशब्दस्स-त्तार्थकः, प्रकृते तस्य लक्षणया प्रतीतिरूपोऽर्थो ग्राह्यः। साधारणधर्मप्रतीतिः संशयहेतुः। अनेकधर्मोपपत्तेरिति पदं द्वेधा व्याचचक्षे न्यायवार्तिके उद्द्योतकराचार्यः। अनेकस्य धर्मः अनेकस्माद्वा धर्मोऽनेकधर्म इति। तत्रानेकप्रत्ययहेतुर्धर्मस्तस्यावगमादित्यर्थः। यथा—शब्दस्य विभागजत्वम्। अत्र सामान्यादिभ्यस्सत्तादिना विशेषेण विभक्तश्शब्दः द्रव्यं, गुणः, कर्म वेति विभागजत्वात्संशयो भवति। द्वितीयपक्षेऽनेकस्माद्व्यावृत्तो धर्मोऽनेकधर्मः—असाधारणधर्म इत्यर्थः तस्य प्रतीतेरिति। अत्रोभयत्रापि शाकपार्थिवादित्वान्मध्यमपदलोपी समासः। द्वितीयस्योदाहरणं—परमाणुरूपा भूर्नित्या गन्धवत्त्वादिति। शालिकाचार्यस्तु वायोस्स्पर्शवत्त्वारूपवत्त्वाभ्यां प्रत्यक्षत्वाप्रत्यक्षत्वसंशयमुपान्यस्थत्। विप्रतिपत्तेस्संशयहेतुत्त्वं मूल एव सुविशदम्। अत्र पञ्चिकाकारः आद्यं पक्षमंगीचकार। द्वितीयः पक्षोऽर्वाचीनै-स्तीर्थकरैस्स्वीकृतः। मीमांसकमूर्धन्या अप्पय्यदीक्षितेन्द्रा अपि समन्वयसूत्रे कल्पतरुपरिमले द्वितीयमेव पक्षमास्थिषत। पञ्चकारणकस्संशय इत्येकं मतम्, त्रिकारणकस्संशय इत्यपरं मतम्। वार्तिकमते उपलब्ध्यनुपलब्ध्यव्यवस्थातः—साधकबाधकप्रमाणाभावादित्यर्थः। तत्राद्यं भाष्यकृतो वात्स्यायनस्य मतम्। द्वितीयन्तु न्यायवार्तिककारस्य भारद्वाजस्योद्योतकरा-चार्यस्य मतमिति आन्वीक्षकीविचक्षणाः समाचक्षते।

[1]संशय इति तार्किकाः। यथा सन्तमसतिरोहितविशेषे वस्तुन्यूर्ध्वतामात्रदर्शनेन किमयं स्थाणुरुत पुरुष इति। तथा—प्रत्यक्षो वायुः स्पर्शवत्त्वात् पृथिवीवत्। तथा—अप्रत्यक्षो वायुररूपवत्त्वात् गगनवदिति। केचिन्नित्यं शब्दमाहुः, केचिदनित्यं इति वादिनां विवादात् जिज्ञासोस्तत्त्वे संशयो भवति इति। तदसत्। यौ हि धर्मौ संशय्येते, तयोरेकमिदं ज्ञानं नोदीयते, किन्तु द्वे एते विज्ञाने विशेषणस्मरणे। तयोश्च विशेषणयोरेकस्यापि तस्मिन् धर्मिणि निश्चयो नास्तीत्येकान्ततो व्यवहारं प्रतिपत्ता प्रवर्तयितुमशक्नुवन् संशेत इव भवतीति, भवति संशयव्यवहारः। ये च स्मरणे तयोर्गृहीतग्राहितयैव

नानाकोट्यवलम्ब्येकप्रत्ययस्संशयो मतः।
साधारणविशेषाभ्यां विवादेन च स त्रिधा॥ इति।

साधारणधर्मदर्शनात् संशयोदाहरणमाह—यथा सन्तमसेति। असाधारणधर्मोदाहरणमत्रैवान्तर्भवतीति पृथङ्नोक्तमिति भावः। वादिनां विप्रतिपत्तौ सत्यां संशयोदाहरणमाह—केचिदिति। अत्र संशीतिस्संशय इति भावसाधनं, संशय्यतेऽनेनेति करणसाधनं वा संशयशब्दः इति।

एतत्सर्वं परिहरति—तदेतदसदिति। यौ हि तौ धर्मौ संशय्येते, तयोरेकमिदं विज्ञानं नोदीयते। एकज्ञानपक्षे, ऊर्ध्वताधर्मिणि स्थाणुपुरुषयोर्यौगपद्यं स्यात्, इह न यौगपद्यम्। ननु यदि स्मृतिद्वयमेतत्, तर्हि संशयव्यवहारः किंनिबन्धन इत्यत्राह—तयोश्चेति। ननु स्मृतिद्वयपक्षे स स्थाणुः स पुरुष इति स्यात्, न तु स्थाणुर्वा पुरुषो वेति। मैवम्। स्मृतिप्रमोषत्वात्। ननु स्मृतिप्रमोषोऽप्यनुभवहेतोरभावादयुक्तः। इह संस्कारसहितमिन्द्रियमनुभवहेतुर्विद्यते। मैवम्। संस्कारसहितेन्द्रियजन्यत्वे प्रत्यभिज्ञावत्, सोऽयं स्थाणुः, सोऽयं पुरुष इति स्यात्, न पुनः स्थाणुर्वा पुरुषो वेति। ननु स्थाणुपुरुषः इत्येषा तर्हि स्मृतिः स्यात्, न स्थाणुर्वा पुरुषो वेति। उच्यते। स्मर्यमाणस्थाणुत्वपुरुषत्वयोरेकस्यापि पुरोवर्तिन्यनिर्धारणादिह तथात्वम्। एवं स्मृति-

---

शङ्करमिश्रस्तु "सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशय" इति सूत्रं काणभुजं व्याचक्षाणः भाष्यमतस्य वार्तिकमतस्य च साधारणधर्मेण गतार्थतां मन्वानः साधारणधर्मस्यैव संशयप्रयोजकतामाह। यथा—"समाने तन्त्रे गौतमीये इत्यादिना संशयत्वावच्छिन्नकार्यं प्रति समानधर्मत्वेनैव कारणतायाः कल्पनात्। तथा च संशयो न पञ्चविधः न वा त्रिविधः, किन्त्वेकविध एव" इत्यन्तेन ग्रन्थेन [ वै. उ. पृ. १०८ ]। इदमेव मतमनुवर्तमानो न्यायसिद्धिकारोऽसाधारणधर्मोदाहरणं "अत्रैवान्तर्भवतीति पृथङ नोक्तमिति भाव" इत्याह इति। अत्र टीकाकारो मूलग्रन्थेन विरुन्धे। असाधारणधर्मस्य संशयहेतुत्वमस्वीकुर्वाणस्याशयं न वयमाकलयाम इति।

[1] संशयज्ञानमिति गपुस्तके।

प्रामाण्यं निरस्तमिति किं दृढग्रहणेन। [1]अविसंवादिग्रहणमपि सर्वज्ञानानामर्थाव्यभिचारादविशेषकम्।

ननु शुक्तिकायां रजतमिदमिति ज्ञानं, प्रतिबिम्बज्ञानं च व्यभिचारि दृश्यते। नैतदेवम्। यदि रजतज्ञानं रजतविषयं न स्यात्, ततो व्यभिचरत्यर्थम्। रजतविषयत्वे तु को व्यभिचारः? ननु नेदं ज्ञानं रजतविषयम्, किन्तु शुक्तिकाविषयमेव। उच्यते। शुक्तिकाविषयमित्यस्य कोऽर्थः? किं याऽसौ शुक्तिकाव्यक्तिस्तामेव विषयीकरोति? उत शुक्तिकात्वमेव। न तावद्शुक्तिव्यक्तिरनेन विषयीकर्तुं शक्या। भिन्नत्वादाकारस्याकारिणश्च। न च समीचीनरजतव्यक्तिरपि न रजतत्वबुद्ध्या गोचरीभवति, किं पुनः शुक्तिका व्यक्तिः? शुक्तिकात्वं पुनरभासमानमेव विषय इति नोपपद्यते। अथोच्येत

द्वयरूपसंशयस्य गृहीतग्राहित्वादेव प्रामाण्यप्रसंगाभावात् दृढग्रहणं अपार्थकमित्याह—ये चेति। तथा लक्षणवत्यविसंवादिपदमप्यख्यातौ सर्वज्ञानानामर्थाव्यभिचारस्य साधितत्वादपार्थकमित्याह—अविसंवादिग्रहणमपीति।

विपर्ययादिज्ञाननिवर्तकत्वेन सप्रयोजनत्वान्न निरर्थकमिति मत्वा चोदयति—नन्विति। प्रतिबिम्बज्ञानं नाम मणिकृपाणदर्पणजलादौ भासमानं मुखादिज्ञानम्। परिहरति—नैतदेवमिति। रजतज्ञानस्य रजतविषयत्वमख्यातौ [2]साधितमिति भावः।

इदानीं विषयत्वमप्यख्यातौ निरूपितमिति, तत्र विकल्प्य दूषणान्तरं वक्तुं चोदयति—ननु नेदमिति। इदं रजतज्ञानमित्यर्थः। परिहरति—उच्यते इति। रजतज्ञानं शुक्तिविषयमिति वदता शुक्तिव्यक्तिविषयत्वमुच्यते, उत शुक्तित्वजातिविषयत्वमिति? [3]प्रथमपक्षे दूषणमाह—न तावदिति। कुत इत्याह—भिन्नत्वादिति। न ह्यन्यदवभासमानमन्यो विषय इति वक्तुं शक्यते, अवभासमानव्यवस्थाप्यत्वाद्विषयत्वस्येति।

ननु सम्यग्रजते रजतज्ञानं रजतव्यक्तिगोचरमित्यवगम्यते, तत्रैव प्रवृत्तिदर्शनात्। तेन कथं व्यक्तेरविषयत्वमित्यत्राह—समीचीनेति। सम्यग्रजतेऽपि रजतव्यक्तिर्न रज-

---

[1] अविसंवादीत्यनेनार्थव्यभिचारिणां ज्ञानानां व्यावृत्तिरिति वक्तुं न शक्यते। यतो हि प्राभाकरमते सर्वेषां ज्ञानानामर्थाव्यभिचारित्वात् अविसंवादिग्रहणमनर्थकमित्याशयेनाह—अविसंवादिग्रहणमिति।

[2] नयवीथ्याख्ये तृतीयप्रकरणे विप्रतिपन्नानां सन्देहविभ्रमाणां यथार्थत्वं व्यवस्थापितम्। तत्रेत्यर्थः।

[3] आद्यपक्षे इति ग. पुस्तके पा।

व्यवहारयोग्यतापत्तिर्विषयत्वमिति, तथापि शुक्तिकात्वमविषय एव। न हि तद् व्यवहारयोग्यतामापद्यते। अवभासमानतैव विषयत्वम्। तेन रजतत्वमेव विषयः। तच्च पुरोवर्तिनि न सम्भवतीति तद्विषयिणी स्मृतिरेवेयं कुतोऽस्या व्यभिचारः।

प्रतिबिम्बज्ञानं तु मुखाद्यवभासं मुखादिविषयमेव। भास्वरे हि दर्पणादौ नयनरश्मिर्निपतितः प्रतिहतः परावृत्तो मुखादिना संयुक्तस्तदेव मुखादि गृह्णाति। नन्वेवमपि सव्यदक्षिणविपर्यासो, देशविशेषान्यत्वपरिमाणाल्पत्वमहत्त्वप्रतिभासश्च निर्निबन्धनः।

तत्वबुद्ध्या गोचरीभवति। किन्तु जातिव्यक्त्योरेकधीवेद्यत्वाज्जातिमात्रे प्रवृत्त्यसंभवाच्चेत्यर्थः।

द्वितीयपक्षे दूषणमाह—**शुक्तिकात्वमिति**। अनवभासमानस्यापि विषयत्वे सर्वेषां विषयत्वप्रसंगादिति भावः।

पुनश्शंकते—**अथेति**। व्यवहारयोग्यतापत्तिरेव विषयत्वं नावभासमानत्वम्। अवभासमानस्य विषयत्वे घटाभावज्ञाने घटस्याप्यवभासमानत्वादेव घटविषयत्वप्रसंगादिति परिहरति—**तथापीति**। येयमवभासमानस्यैव शुक्तित्वस्य व्यवहारयोग्यतापत्तिः। व्यवहारो द्विविधः-मानसः—कायिकश्चेति। मानसो बुद्धिसुखदुःखे[१]च्छादिरूपो, वाचकशब्दप्रयोगात्मा वा सर्वार्थेषु संभवति। वर्तमानेषु महत्सु चतुर्विधेषु द्रव्येषु कायिक उपादानादिः। सति चैवं शुक्तिकात्वं न साक्षादुपादानं प्रत्येव योग्यतामापद्यते। न च विशिष्टद्रव्योपादानमेव धर्माणामुपादानमिति योग्यतापत्तिः, तथात्वे सति चाक्षुषज्ञाने गन्धरसादीनामपि विषयत्वापत्तिः, सर्वधर्मविशिष्टस्यैव द्रव्यस्योपादानात्। न चेच्छाद्वेषशब्दप्रयोगादिमानसव्यवहारं प्रति योग्यतापत्तिः, अनवभासमाने शुक्तिकात्वे तेषामभावात्। तेनानवभासमानस्यैव शुक्तिकात्वस्य व्यवहारयोग्यतापत्तिरूपं प्रतीतिविषयत्वमस्तीति विरुद्धमित्यर्थः।

किं तर्हि विषयलक्षणमित्यत्राह—**अवभासमानतैवेति**। अवभासमानत्वमपि नार्थगतं किंचित्। किन्तु अर्थव्यवहारानुगुणायाः प्रतीतेः पुरुषे वर्तमानत्वमेव। यथा—रजतज्ञाने शुक्तेरनवभासादविषयत्वं, तथाऽभावज्ञाने भावस्यानवभासादविषयत्वमेवेति, न किंचिदेतत्। निगमयति—**तेनेति**।

ननु तर्हि प्रतिबिम्बज्ञानमयथार्थमेवेति तन्निवर्तकतयाऽविसंवादिपदं सार्थकमेवेत्यत्राह—**प्रतिबिम्बज्ञानं त्विति**। एतदेवोपपादयति—**भास्वरे हीति**। नन्वेवमित्यादिना सव्यदक्षिणविपर्यासः, परिमाणाल्पत्वमहत्त्वप्रतिभासश्च किनिबन्धन इति चोदिते

---

[१] द्वेषप्रयत्नरूपः इति ग० पुस्तकेऽधिकम्।

अत्राभिधीयते। मुखादेर्देशो न गृह्यते दर्पणादीनां त्वग्रहणमिति मुखाद-यस्तद्देशा इव भान्ति। अभिमुखेन मुखादिना नयनरश्मिः संयुक्त इति तथैव तदवगमात् सव्यदक्षिणविपर्यासो युक्त एव। अल्पत्वमहत्त्वे च दर्पणादे रश्मिप्रतिघातहेतोरल्पतया महत्तया च दोषभूतया मुखादिपरिमाण-ग्रहणाद्दर्पणादिपरिमाणग्रहणाच्च मुखादिष्ववभासेते। तेन नास्ति व्यभिचारः। एवमादि च नयवीथ्यां निपुणतरमुपपादितमित्यनयैव दिशा सर्वत्र[१] व्यभिचारो वर्जनीय इति नेदमपि प्रमाणलक्षणम्।

प्राभाकरसम्मतं प्रमाणलक्षणम्।

इदानीं स्वाभिमतं प्रत्यक्षलक्षणमाह। "प्रमाणमनुभूतिः"[२]। न च स्मृतेः प्रामाण्यापत्तिरिति दर्शयति—"सा स्मृतेरन्या" इति। अथ का स्मृतिः।

"स्मृतिः पुनः—पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते"। नचैवं धारा-

परिहरति—अत्राभिधीयत इति। सुगमम्। एवमादिकं सर्वमख्यातौ सम्यगेवोपपा-दितमित्याह—एवमादीति।

एवं वाद्यन्तरोक्तानां लक्षणान्तराणामसंभवे प्रतिपादिते स्वाभिमतं प्रमाण-सामान्यलक्षणं दर्शयितुं सिद्धान्तमारभते—इदानीमिति। स्वाभिमतं लक्षणं श्लोकेन दर्शयति—अनुभूतिः प्रमाणमिति। स्वरूपपरिच्छित्तिरनुभूतिरित्युच्यते। काऽनु-भूतिरित्यपेक्षायां सा स्मृतेरन्येत्युत्तरं दत्तमिति मन्दमतीनां शंका स्यात्। तन्निवृत्त्यर्थं स्वयमेव व्याचष्टे—सा स्मृतेरन्या इति। सा स्मृतेरन्येति नानुभूतिस्वरूपप्रदर्शनं, किन्त्वविसंवादिज्ञानं प्रमाणमित्यादिपरोक्तलक्षणे अव्याप्तिरतिव्याप्तिश्च दोष उक्तः, स इह नास्तीत्येवंपरम्। न च स्मृतेः प्रमाण्यापत्तिरिति दर्शयतीत्युपक्रमादेवमेवेत्यव-गम्यत इति।

अथ का स्मृतिरित्यत्राह—स्मृतिः पुनः, इति। स्मृतिस्तु यदर्थविषया तदर्थ-

---

[१] अव्यभिचारो वर्णनीय इति मु. पु. पा.।

[२] अनुभूतिः प्रमाणमित्यत्र प्रमाणमिति लक्ष्यनिर्देशः। अनुभूतिरिति लक्षणपरम्। अनुभवत्वं प्रमाणसामान्यलक्षणमिति फलति। अनुभवत्वञ्च स्मृतिभिन्नत्वे सति ज्ञानत्वम्। स्मृतिश्च संस्कारजन्यं ज्ञानम्।

भातस्य कस्यचित्पूर्वं भासमानस्य साम्प्रतम्।
सोऽयमित्यनुसन्धानं प्रत्यभिज्ञानमुच्यते॥ मानसोल्लास. वा. श्लोक. ७.३.

इत्युक्तलक्षणे तदेवेदमिति प्रत्यभिज्ञाप्रत्यक्षे तत्तांशे संस्कारजन्यतयाऽतिप्रसङ्गवारणाय मात्रपदं स्मृतिलक्षणे निवेशनीयम्। तथा च संस्कारातिरिक्तकारणाजन्यत्वे सति संस्कार-

वह्निकज्ञानानां स्मृतित्वम्। इन्द्रियार्थसन्निकर्षजत्वात् पूर्ववत्। मात्रग्रहणाच्च प्रत्यभिज्ञानस्य न स्मृतित्वम्, इन्द्रिय[१]सचिवसंस्कारजत्वात्। अथ कथं स्मृतिर्न प्रमाणम्। तत्राह "न प्रमाणं स्मृतिः पूर्वप्रतिपत्तेरपेक्षणात्"। स्मृतिर्हि तदित्युपजायमाना प्राचीं प्रतीतिमनुरुद्ध्यमाना न स्वातन्त्र्येणार्थं परिच्छिनत्तीति न प्रमाणम्। स्मृतिप्रमोषस्तर्हि प्रमाणम्। न। सोऽपि पूर्वप्रतीति-

विषयानुभवाहितसंस्कारमात्रजा। परमार्थतस्तु ज्ञप्तौसापेक्षं ज्ञानं स्मृतिरिति लक्षणं द्रष्टव्यम्। तर्कादिज्ञानानां संस्कारमात्रजत्वाभावेऽपि स्मृतित्वेनांगीकारात्, संस्कारजं तु प्रायिकमिति द्रष्टव्यम्।

ननु धारावाहिकोत्तरज्ञानानामनुभूतार्थविषयत्वेन स्मृतित्वं स्यादित्यत्राह—**नचैवमिति**। तत्र कारणमाह—**इन्द्रियार्थेति**। पूर्ववदिति ग्रन्थच्छेदः।

ननु श्लोके मात्रग्रहणात्किं निवर्त्यत इत्यत्राह—**मात्रग्रहणाच्चेति**। कुत इत्यत्राह—**इन्द्रियार्थेति**। नन्वनुभूतरूपस्यानुभवाभावात्कथं स्मृतेरप्रामाण्यमिति पृच्छति—**अथेति**। उत्तरयति—**न प्रमाणमिति** श्लोकेन। पूर्वार्धं स्वयमेव व्याचष्टे—**स्मृतिर्हीति**। स्मृतिर्हि न स्वातन्त्र्येणार्थं परिच्छिनत्तीत्येतदप्यनुभूतिविपरीतत्वाभिधानमेव। न प्रमाणं स्मृतिरित्यस्य—नानुभूतिरित्यर्थः। स्मृतेः पूर्वप्रतिपत्तिसापेक्षत्वमर्थपरिच्छेदं प्रत्येवेति मातृस्वरूपसाधकत्वं सर्वबुद्धिषु अनुवर्तमानं स्मृतावपि न संस्काराधीनमिति तत्रानुभूतित्वमेवेत्यभिप्रायः।

ननु तदित्युल्लेखाभावात्स्मृतिप्रमोषः तर्हि प्रमाणं प्रसक्तमित्याह—**स्मृतिप्रमोष इति**। परिहरति—**न प्रमाणं स्मृतिः इति**। पूर्वप्रतिपत्तेरपेक्षणादिति ग्रन्थच्छेदः। कुत इत्याह—**तज्जन्यसंस्कारेति**। स्मृतिर्यदर्थविषया तदर्थविषयानुभवाहितसंस्कारमात्रजा। अनुभूतांशप्रमोषेऽपि स्मृतेः परवेद्यवेदनशक्तिनियमः कारणानुसारादवगम्यते। लोके यथा कश्चित्पशुवत्सगर्भदोषादवालधिरेवोत्पन्नः, तस्यापि कारणतः पशुत्वमेव, तद्वत्सापेक्षस्वभावस्मृतिरूपकार्यगम्यः संस्कारः प्रमोषेऽपि तथास्वभावमेव कार्यं प्रसूत इति कारणतः पराधीनकोटावन्तर्भूत इत्यर्थः।

---

जन्यत्वे सति ज्ञानत्वं प्रमाणसामान्यलक्षणमिति परिनितिष्ठति। भ्रमज्ञानञ्च तन्मते नास्त्येवेति तत्रातिव्याप्तेरभावेन तत्रातिव्याप्तिवारकं न विशेषणमुपादेयम्। पराभिमतभ्रमस्थले सर्वत्र विभिन्नविषयकं ज्ञानद्वयमिति तैस्स्वीक्रियत इति प्रागवादिष्म। स्मृतिविषये मूलकारटीकाकारयोर्मतभेदो दरीदृश्यते। संस्कारमात्रजं ज्ञानं स्मृतिरिति पञ्चिकाकारो मेने। शास्त्रदीपिकायास्तर्कचरणेऽप्येवमेव स्मृतिलक्षणमनूदितं वयं पश्यामः। परन्त्वत्र न्यायसिद्धिकारस्तु ज्ञप्तौ सापेक्षत्वं स्मृतेर्लक्षणमिति वदन् मूलोक्तं प्रायिकमित्यभिप्रेयाय। अत्रत्योऽन्यो विशेषः नीतिपथे ३९, ४०, श्लोकयोरधस्ताट्टिप्पण्यां द्रष्टव्यः।

१ इन्द्रियार्थसन्निकर्षस० मु. पु. पाठः

सव्यपेक्ष एव। तज्जन्यसंस्कारमात्राधीनजन्मत्वात्। धारावाहिकविज्ञानेषु तर्ह्युत्तरविज्ञानानि स्मृतिप्रमोषादविशिष्टानि कथं प्रमाणानि इत्यत्राह—

"अन्योन्यनिरपेक्षास्तु धारावाहिकबुद्धयः"।

व्याप्रियमाणे हि पूर्वविज्ञानकारणकलापे उत्तरेषामप्युत्पत्तिरिति न उत्पत्तितः प्रतीतितो वा धारावाहिकविज्ञानानि परस्परस्यातिशेरत इति युक्ता सर्वेषामपि प्रमाणता।

यद्यनुभूतिमात्रं प्रमाणं, ततो रजतमिदमिति यद् भ्रान्तिविज्ञानं, तदपि प्रमाणं स्यात्। अत्रोच्यते। रजतमिदमिति नेदमेकं विज्ञानम्, किन्तु द्वे एते विज्ञाने ग्रहणस्मरणरूपे। तत्र रजतमिति स्मरणं तस्यानुभवरूपत्वाभावान्न प्रामाण्यप्रसङ्गः। इदमिति विज्ञानमनुभवरूपं प्रमाणमिष्यत एव। भ्रान्तिरूपता रजतज्ञानस्यैव, ग्रहणव्यवहारप्रवर्तकतया [1]व्यवहारे विसम्वादकत्वात्।

येऽपि चैकमिदं विज्ञानं मिथ्याभूतमित्यास्थिषत; तेऽपि बाधकप्रत्ययाधीनं मिथ्यात्वमभ्युपगच्छन्तो नेदमंशस्य मिथ्याभावं वदितुमीशते, तत्र बाधकप्रत्ययाभावात्। बाधकप्रत्ययदशायामपीदमंशस्यानुवृत्तेः। एकमपि विज्ञानमर्थावच्छेदसमाश्रितभेदं प्रमाणमप्रमाणं च युक्तमेव। पीतशङ्खादिज्ञानं

उत्तरार्धस्याशंकामाह—धारावाहिकविज्ञानेष्विति। उत्तरार्धमुदाहरति—अन्योन्यनिरपेक्षास्त्विति। स्वयमेव व्याचष्टे—व्याप्रियमाणे हीति। धारावाहिकोत्तरज्ञानानामधिकार्थानवगाहित्वेऽप्यन्यूनानतिरिक्तपूर्वज्ञानसामग्र्यधीनोत्पत्तिकत्वात् पूर्वस्मादविशिष्टानि—प्रमाणभूतानीत्यर्थः।

चोदयति—यद्यनुभूतिमात्रमिति। सुगमम्। परिहरति—अत्रोच्यत इति। इदं रजतमिति नेदमेकं विज्ञानम्, किन्तु द्वे एते ज्ञाने इति। ततः किमित्याह—तत्रेति। इदमपीत्यारभ्य इष्यत एवेति ग्रन्थच्छेदः। भ्रान्तिरूपता चेत्यारभ्य रजतज्ञानस्येति ग्रन्थच्छेदः। इष्यत एवेति शेषः। तत्र कारणमाह—स्मरणरूपस्यैवेति। इदं रजतमित्यत्र ज्ञानद्वयमंगीकृत्योक्तम्।

इदानीमेकज्ञानत्वेऽपि पूर्वांशस्येदमंशस्य प्रामाण्यं, उत्तरांशस्य रजतमित्यस्याप्रामाण्यमेवेत्याह—येऽपीति। तत्र कारणमाह—तत्र बाधकाभावादिति। कुतो बाधकाभाव इत्यत्राह—बाधकप्रत्ययदशायामिति। नन्वेकस्य ज्ञानस्य प्रामाण्यमप्रामाण्यं च विरुद्धमित्यत्राह—एकमपि चेति। प्रत्यभिज्ञानवदेकस्यापि ज्ञानस्य प्रामाण्यमप्रामाण्यं च युक्तमेवेत्यर्थः।

---

[1] व्यवहारकाले इति मु. पु. पाठः

तर्हि प्रमाणं प्रसक्तम् । तत्र हि पीतिमा शङ्खस्वरूपञ्च द्वयमनुभूयत एव । नयनगतपित्तद्रव्यवर्त्ती हि पीतिमाप्यनुभूयत एवेति नयवीथ्यां निपुणतरमुपपादितम् । शङ्खस्वरूपे चानुभूतिरविसंवादैव । नायं दोषः । को नाम पीतशङ्खज्ञानमप्रमाणमाह, प्रमाणमेव हि तद्, यथार्थविषयत्वात् । विज्ञानद्वयन्त्वेतदेकविज्ञानसाधारणरूपम् , तत्रैकविज्ञानसाधारणरूपावमर्शादेकविज्ञानसदृशव्यवहारप्रवर्तकतया व्यवहारदशायां विसम्वादमावहत् प्रमाणमपि सद् भ्रान्तमित्युच्यते । यत्र तु व्यवहारविसम्वादो नास्ति, तत्र भ्रान्तिरपि न व्यपदिश्यते । यथोष्णजलज्ञाने । तत्रापि न जलगतमौष्ण्यमनुभूयते, किन्तु वन्ह्यवयवगतमेव । जलगतस्यौष्ण्यस्य च वन्ह्यसंयोगेनोत्पादनानभ्युपगमात् । पाकजो हि गुणः पाकान्तरेणैव निवर्तते । जलगतस्यौष्ण्यस्यानपेक्षितपाकस्यैवाग्निसंयोगविच्छेदेनैव निवृत्तिः । गत्वरा हि तत्र तेजोऽवयवाः सञ्चारितास्तेष्वन्यत्र गतेष्वपरतेजोऽवयवसञ्चरणविच्छेदे युक्तैवाऽपाकजत्वे पाकान्तरानपेक्षा औष्ण्यस्य निवृत्तिरिति, न पीतशङ्खादिज्ञानतुल्यत्वमुष्णजल-

ननु यद्यनुभूतिः प्रमाणं, तर्हि पीतशङ्खज्ञानं प्रमाणं प्रसक्तमिति चोदयति—**पीतशङ्खादिज्ञानमिति**। कथमित्याह—**तत्र हीति**। ननु शङ्खे पीतिमाभावात्कथमनुभूयत इत्युच्यत इत्यत्राह—**नयनगतेति**। परिहरति—**नायमिति**। तदिति ग्रन्थच्छेदः। कुत इत्याह—**यथार्थेति**। पीतिमविषयं शङ्खविषयं च विज्ञानद्वयमित्याह—**विज्ञानद्वयमिति**। ततः किमित्याह—**एतदिति**। सर्वत्र व्यवहारविसंवादान्मिथ्यात्वं नायथार्थत्वात्। अत एव लोके वस्त्ररक्तिमादावर्थासत्यत्वेऽप्यनुभूतता व्यवहाराविसंवादात्। तथा हिमशिलातले जलबुद्धावर्थसत्यत्वेऽपि जलप्रयुक्तस्नानादिव्यवाहाराभावाद्भ्रान्तता। तथोऽष्णजलज्ञाने मिथ्यात्वे सत्यपि व्यवहारविसंवादाभावान्मिथ्यात्वव्यवहाराभाव इत्याह—**यत्र त्विति**।

ननु जलगतमेवौष्ण्यमनुभूयते, कदापि व्यवहारविसंवादाभावादित्यत्राह—**तत्रापि हीति**। जलस्य शैत्यगुणत्वादग्नेरुष्णगुणत्वाच्चेत्यर्थः।

ननु तर्ह्यग्निसंयोगाज्जले पाकजमेवौष्ण्यं जायत इत्यत्राह—**पाकजो हीति**। पाकजो गुणः पाकान्तरेण निवर्तत इत्येतावन्मात्रे उक्ते, आज्यगतद्रवत्वस्य पाकजगुणत्वेऽप्यनपेक्षितपाकजस्यैव निवृत्तिदर्शनादपाकजधर्मिगुणो यः पाकजः, स पाकान्तरेण निवर्त्यत इति विशेष्यम्। आज्यस्य पाकजत्वादेव द्रवत्वस्य नापाकजधर्मिगुणत्वम्।

यद्वैकेन्द्रियग्राह्यो यः पाकजो गुणः स पाकान्तरेण निवर्तत इति व्याप्तिः, आज्यगतद्रवत्वन्तु नैकेन्द्रियग्राह्यमिति न विरोधः।

ननु भवत्वेवं व्याप्तिः ततः किमित्याह—**जलगतस्येति**। उपसंहरति—

ज्ञानस्य। तस्मात् पीतशङ्खादिज्ञानं प्रमाणमेव भ्रान्तश्चेत्यनवद्यम्। यस्तु विपरीतख्यातिवादी उष्णजलज्ञानमप्रमाणं भ्रान्तश्चाह, तस्य सर्वलोकविरोधः।

प्रमाणसंख्यानिरूपणम्।

कतिविधं पुनः प्रमाणमित्यत्राह—"तत्र पञ्चविधं मानम्"। अनेनैकादि-संख्या, षडादिसंख्या च [1]व्यवच्छिन्ना। काः पुनस्ता विधा इत्यत्राह—

... ... ..."प्रत्यक्षमनुमा तथा
शास्त्रं तथोपमानार्थापत्ती इति गुरोर्मतम्"।

गौतमोक्तप्रत्यक्षलक्षणस्यानुवादः।

किं पुनः प्रत्यक्षस्य लक्षणम्। केचिदाहुः—[2]इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति। इन्द्रियस्यार्थेन सन्निकर्षाद्यदुत्पद्यते ज्ञानं तत् प्रत्यक्षम्। तत्र स च सन्निकर्षः षोढा भिद्यते—

तस्मादिति। उष्णजलज्ञानेऽन्यथाज्ञानाङ्गीकारे दूषणमाह—यस्त्विति। अनुभूतिः प्रमाणमित्यत्र प्रमाणमिति लक्ष्यनिर्देशः। अनुभूतिग्रहणेन स्मृतिर्निरस्यते।[3] अतः प्रमाणं स्मृतिश्च प्रत्यय इति सूक्तं भवति।

एवं स्वाभिमतं प्रमाणसामान्यलक्षणमुक्त्वेदानीं परोक्तां प्रमाणसंख्यां निराकर्तुं पृच्छति—कतिविधमिति। इदानीं स्वाभिप्रेतां प्रमाणसंख्यां श्लोकेनाह—तत्रेति। स्वयमेव व्याचष्टे—अनेनेति। तेषां स्वरूपं वक्तुं कानि पुनस्तानीति पृष्टे स्वरूपमाह—प्रत्यक्षमिति।

किं पुनः प्रत्यक्षस्य लक्षणमिति पृष्टे स्वाभिमतं लक्षणं वक्तुं प्रथमं नैय्यायिकोक्तं प्रत्यक्षलक्षणं निराकर्तुं तल्लक्षणमाह—केचिदाहुरिति। परोक्तमपि लक्षणं व्याचष्टे—इन्द्रियस्येति। प्रत्यक्षज्ञानहेतुभूतार्थेन्द्रियसन्निकर्षः षोढेत्याह—तत्रेति। कथ-मित्याह—संयोग इति। संयोगस्य विषयमाह—तत्रेति।

---

[1] व्यावर्तिता इति मु. पु. पा.।

[2] गौतमोक्तं प्रत्यक्षलक्षणं व्युदसितुं तदीयं सूत्रमुपन्यस्यति। इन्द्रियार्थेत्यादि। अत्र ज्ञानं प्रत्यक्षप्रमाणमित्येवंपरं सूत्रं प्रमाणाधिकारात्। भाष्यकारो वात्स्यायनमुनिरुद्योतकराचार्यः टीकाकारो वाचस्पतिमिश्रश्च यतस्तदिति यत्तच्छब्दयोरध्याहारेणेन्द्रियप्रमाणपरकतया व्याचख्युः। तदेव विश्वनाथवृत्तौ परिणतं दृश्यते। इदं सूत्रोक्तं प्रत्यक्षलक्षणमव्यभिचारिपदानां व्यावर्त्या-भावेनालक्षणमिति दूषयाम्बभूवेति मन्तव्यम्।

[3] अत्र व्याख्याकारः जातिनिर्णये सिद्धान्तोपवर्णनावसरे ग्रन्थकृताऽभिहितमर्थं नयवीथ्यां प्रमाणं स्मृतिश्च प्रत्यय इति पृ० ७७ निर्णीतं तदीयवचनेन स्वहस्तयति—अत इत्यादिना सूक्तमित्यन्तेन।

**संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, संयुक्तविशेषणता चेति, । तत्र संयोगात् पार्थिवाप्यतैजसवायवीयानां द्रव्याणां चक्षुःस्पर्शनाभ्यां ग्रहणम् । प्राप्यकारि चक्षुः वहिरिन्द्रियत्वात् त्वगिन्द्रियवत् । तैजसं तद् रूपप्रतीतिहेतुत्वात् दीपवत् । तस्य रश्मयः प्रसरन्तो द्रव्येण संयुज्यन्ते । ते च पृथ्वग्रा इति पृथून्यपि द्रव्याणि [1]प्राप्नुवन्ति । नन्वेवं दूरे अर्थ इति सान्तरालग्रहणं न स्यात्, प्राप्तौ सत्यां दूरत्वासंभवात् प्राप्यकारित्वात् स्पर्शनवत् । किञ्च संयोगस्य गतिनिबन्धनत्वाद् गतिमतां च क्रमेणासन्नदूरगमनात् समकालमासेदुषां दवीयसां चार्थानां ग्रहणं नोपपद्यते । उच्यते—[2]भोगायतनापेक्षया सान्तरालग्रहणं तावदुपपन्नम् ।**

ननु संयोगात् द्रव्याणां चक्षुस्पर्शनाभ्यां ग्रहणमिति कथमुच्यते । चक्षुषः प्राप्यकारित्वे प्रमाणाभावादित्याशंक्य प्राप्यकारित्वे प्रमाणमाह-**प्राप्यकारीति** । ननु चक्षुषः संयुक्तग्राहकत्वं प्रत्यक्षविरुद्धम् । शरीरस्थचक्षुर्गोलकेन देशान्तरस्थस्य असंयोगे ग्रहणादर्शनादित्यत्राह—**तैजसमिति** । रूपप्रतीतिहेतुत्वादिति हेतुः । रूपप्रतीतौ सम्बन्धद्वाराऽसाधारणहेतुमात्रत्वादिति विशेषणीयम् । रूपप्रतीतिहेतुत्वादित्येतावन्मात्रे उक्ते, रूपस्यापि प्रतीतिहेतुत्वादेव तैजसत्वप्रसङ्गात् । तन्निवृत्त्यर्थं हेतुमात्रत्वादिति विशेषणीयम् । रूपस्य रूपप्रतीतिविषयत्वमपि विद्यत इति हेतुमात्रत्वाभावात् । रूपप्रतीतिहेतुमात्रत्वादित्युक्तेऽप्यर्थेन्द्रियसंयोगेष्वपि रूपप्रतीतिमात्रत्वस्य सत्वात् तैजसत्वप्रसंगात् । तन्निवृत्त्यर्थमसाधारणहेतुमात्रत्वादिति विशेषणीयम् । तेषां साधारणत्वादेवासाधारणत्वाभावात् । रूपप्रतीतावसाधारणहेतुमात्रत्वादित्युक्तेऽपि दीपसंयोगस्यासाधारणहेतुमात्रत्वादेव तैजसत्वप्रसङ्गात् । तन्निवृत्त्यर्थं संबन्धद्वारेति विशेषणीयम् । संबन्धद्वारत्वाभावात् । तस्माद्रूपप्रतीतिहेतुत्वादित्यस्य रूपप्रतीतौ संबन्धद्वाराऽसाधारणहेतुमात्रत्वादित्यर्थः । ननु दीपस्य स्वाश्रयस्पर्शज्ञानहेतुत्वेन रूपप्रतीत्यसाधारणत्वाभावात्साधनविकलो दृष्टान्तः । सत्यम् । तर्ह्यन्याश्रितेष्विति विशेषणीयम् । द्रव्यत्वे सति पञ्चसु रूपादिष्वन्याश्रितेषु रूपप्रतीतौ संबन्धद्वाराऽसाधारणहेतुमात्रत्वादित्यर्थः ।

नन्वस्तु तैजसत्वम् । कथमिन्द्रियत्वमित्यत्राह—**तस्य रश्मय इति** । तैजसत्वानुमानादेव गोलकातिरिक्तचक्षुरिन्द्रियं सिद्धम् । तत्र रश्मयः प्रसरन्तो द्रव्येण संयुज्यन्ते, ते च पृथ्वग्रा इति, पृथून्यपि द्रव्याणि प्राप्नुवन्तीति[3] प्राप्यकारित्वं युक्तमित्याह—**ते च पृथ्वग्रा इति** । चोदयति—**नन्वेवमिति** । चक्षुषः प्राप्यकारित्वे ग्राह्येण वस्तुना चक्षुषः प्राप्तत्वादेवान्तरालाभावादन्तरालग्रहणं न स्यात् । यथा—प्राप्यकारित्वेन संप्रतिपन्नेन स्पर्शेन्द्रियेणान्तरालं न गृह्यते तद्वदित्यर्थः । प्राप्यकारित्वे दूषणान्तरमाह—

[1] व्यश्नुवते इति मु. पु. पा.

[2] शरीरापेक्षयेति ग. पु. पाठः ।

[3] व्याप्नुवन्तीति ग. पु. पा. ।

समसमयसंवेदने तु केचित्परिहारमेवं वर्णयन्ति। सकलानर्थान्प्राप्य युगपदुपस्थितेन बाह्येन तेजसा सहैकीभूतास्ते चाक्षुषा रश्मयो युगपद्ग्रहणहेतव इति।

[1]तदन्ये दूषयन्ति—इत्थं प्राप्तावभ्युपगम्यमानायामतिदूरव्यवहितानामप्यर्थानां ग्रहणं दुर्निवारम्।

अन्येत्वाहुः—क्षेपीयस्तया तेषां रश्मीनां कालभेदानवग्रहाद्यौगपद्याभिमान इति।

तदपरे नानुमन्यन्ते। अतिसन्निकृष्टेषु वस्तुषु गतिकालभेदः पद्मपत्रशतभेदवत् मा नाम अवसायि। [2]अनेकयोजनसहस्रान्तरितेषु भूमिष्ठेष्वर्थेषु ध्रुवे च सदैव कालभेदानवसायो न बुद्धिमनुरञ्जयति।

[3]वयन्तु वदामः—अदृष्टसापेक्षत्वाददोषः। नयनरश्मिभिरेकीभूतेऽपि बाह्ये तेजसि यावानेव तस्य भागोऽदृष्टवशेनोपलब्धिहेतुतयोपात्तः। तावानेवोपलब्धये प्रभवति, न सर्व इति, न सर्वोपलम्भो युगपत् भौमध्रुवादिसिद्धिश्च।

किंच संयोगस्येति। प्राप्यकारित्वे [4]समकालम्—एककालम्, आसेदुषाम्—आसन्नानाम्, दवीयसाम्,-दूरस्थानां भौमध्रुवादीनां दर्शनं नोपपद्यत इति।

चोद्यक्रमेण परिहारमाह—उच्यत इति। शरीरदेशापेक्षया सान्तरालग्रहणमुपपन्नमिति। भौमध्रुवादीनां समकालग्रहणेऽन्यैरुक्तं परिहारं दूषयितुं दर्शयति—समसमयेति। बाह्यं तेजस्सकलानर्थान्युगपदेव प्राप्य तिष्ठति, गोलकान्निर्गताश्चाक्षुषा रश्मयस्तेन सहैकीभूता युगपद्ग्रहणहेतव इति।

एतं पक्षमन्ये दूषयन्तीत्याह—तदन्ये इति। तदा मेरुस्थस्याप्यतिदूरव्यवहितलङ्कावर्तिपदार्थानां तत्रस्थानां ग्रहणं दुर्निवारमिति सर्वस्सर्वदर्शी स्यादित्यर्थः।

अत्र पुनरप्यन्यैरुक्तं परिहारं दूषयितुमाह—अन्येत्वाहुरिति।

[5]नयनरश्मीनामत्यन्तशीघ्रगमनादेव पद्मपत्रशतव्यतिभेदवत्कालभेदानवग्रहाद्यौगपद्याभिमान इति दूषयति—तदपरे इति। अतिसन्निकृष्टेषु भुवनस्थादतीव विप्रकृष्टध्रुवादिषु कालभेदानवग्रहो नास्माकं रोचत इत्यर्थः।

ननु कस्तर्हि परिहारः। किं नास्त्येवेत्यत्राह—वयन्तु वदाम इति। एतदेवोपपा-

---

[1] तत्रेति ग. पु. पा.

[2] भौमध्रुवादिष्वर्थेषु, इति, ग. पु. पा.

[3] स्वमतेन परिहारमाह—अदृष्टेत्यादिना।

[4] समकालमित्यस्य प्रतिपदव्याख्यानमेककालमिति बोध्यम्।

[5] "नयनरश्मीनामित्यादि, यौगपद्याभिमान" इत्यन्तः पाठो ग पुस्तके न दृश्यते।

**ननु प्राप्यकारिणि नायने तेजसि काचाभ्रपटलतिमिरान्तरितेषु कथमुपलब्धिः। तैर्नयनरश्मेरप्रतिघातात्। ये[१] पुनरप्राप्यकारि चक्षुराहुस्तेषां व्यवहितविप्रकृष्टार्थग्रहणं दुर्निवारम्। सन्निधान इव विप्रकर्षेऽपि स्फुटतरमणीयांसोऽप्यर्था गृह्येरन्। प्राप्य गृहणे तु तेजोवयवानामप्रचुरतया युक्तमस्फुटदर्शनं दवीयसाम्, क्षोदिष्ठानामदर्शनम्। अथ कस्मादणु पार्थिवादि आकाशकालदिगात्मानश्च न प्रत्यक्षेण गृह्यन्ते। उच्यते—महत्वमनेकद्रव्यत्वं रूपविशेषश्च सन्निकर्ष इव प्रत्यक्षहेतुः। [२]अनेकद्रव्याभावात्परमाणोरदर्शनम्। अमहत्त्वाद्द्व्यणुकस्य। आकाशादीनां त्वरूपत्वाददद्रव्यद्रव्यत्वाच्चेति वेदितव्यम्।**

दयति—**नयनरश्मिभिरिति**। अदृष्टमाहात्म्यात्सर्वमुपपन्नमिति भावः। पुनश्चोदयति **ननु प्राप्यकारिणीति**। काचादिना पिहितत्वादेव नयनरश्मेर्निर्गमनाभावादिति। प्रयोगस्तु चक्षुरप्राप्यग्राहकं काचाभ्रपटलादिभिर्व्यवहितानां ग्राहकत्वान्मनोवदिति। परिहरति—**तैरिति**। अत्युच्छ्रयत्वादेवाप्रतिघातकत्वात्, अप्राप्यकारित्वे दूषणमाह—**ये पुनरिति**। प्राप्यकारि चक्षुः अप्राप्यकारित्वे व्यवहितविप्रकृष्टानामपि ग्रहणप्रसङ्गादिति। दूषणान्तरमाह—**सन्निधान इवेति**। सुगमम्। प्राप्यकारित्वे नेमौ दोषावित्याह—**प्राप्यग्रहणेत्विति**। दवीयसां—दूरस्थानाम्। क्षोदिष्ठानाम्—अस्थूलानामित्यर्थः।

ननु बाह्यतेजसो नयनरश्मिभिरेकीभूतस्यापि न सर्वोपलब्धिहेतुत्वम्, किन्तु अदृष्टसापेक्षतया किंचिदेवोपलभ्यते, किंचिन्नेति यथाऽश्रीयते, तथा प्राप्यकारित्वेऽपि किंचिदेवादृष्टवशादुपलभ्यते, किंचिन्नेत्याश्रीयताम्, तेन वृथा प्राप्यकारित्वाश्रयणम्। मैवम्। प्राप्यकारित्वं बहिरिन्द्रियत्वेनानुमानसिद्धं न बाधार्हम्। किंच प्राप्यकारित्वे ह्यदृष्टस्य दृष्टसादृगुण्यजननद्वारेण हेतुत्वमंगीकृतं भवति। तथाहि—गत्वरस्वभावत्वेन तेजसां बाह्येनैकीभावे सति यावन्तः पदार्था उपलभ्यन्ते, [३]तत्प्रदेशवर्तितेजोभागानामेवादृष्टवशेनेन्द्रियभाव इति दृष्टानुगुणैव कल्पना।

पृच्छति—**अथ कस्मादिति**। आदिशब्देनाऽऽप्यतैजसवायवीयानामणूनां ग्रहणम्। निरवयवानां द्रव्याणां कस्मादग्रहणमित्यर्थः। परिहरति—**उच्यत इति**। महत्त्वं—महत्त्वगुणयोगः, अनेकद्रव्यत्वम्, रूपविशेषश्च रूपवतस्सन्निकर्ष इव प्रत्यक्षत्वे हेतुरित्यर्थः। भवत्वेवं, परमाणोरदर्शनं केन कारणेनेत्यत्राह—**अनेकेति**।

ननु तर्हि अनेकद्रव्याश्रितस्य द्व्यणुकस्य कथमप्रत्यक्षत्वमित्यत्राह—**अमहत्वा-**

---

[१] सौगतमतेन आशङ्कते ये पुनरित्यादिना।

[२] अनेकद्रव्यानाश्रितत्वादिति मु. पु. पा.

[३] तत्तदिति ग पुस्तके पा.

तत्रेदं बोध्यम्—त्रिविधं द्रव्यं संयोगाद्दर्शनस्पर्शनाभ्यां गृह्यते। संयुक्त-समवायाच्च तद्गतगुणानां रूपादीनां कर्मणाश्च गृहणम्। संयुक्तसमवेतसम-वायाच्च गुणत्व-कर्मत्व-रूपत्वादीनाम्। समवायात् शब्दगृहणम्। कर्णशष्कु-लीपरिच्छिन्नगगनमेव श्रोत्रम्, तद्गुणश्शब्द इति तत्त्वालोके निपुणतरमुक्तम्। समवेतसमवायाच्च शब्दत्वप्रतीतिः। संयुक्तविशेषणतयाऽभावगृहणम्, अफ-लवती शाखेति।

नैयायिकमतखण्डनम्।

[1]तदयुक्तम्—यदि महत्त्वानेकद्रव्यत्वरूपवत्त्वान्येव प्रत्यक्ष[2]निमित्तम्, तदा वायोरप्रत्यक्षता स्यात्। न च वाच्यमिष्यत एवेति। स्पर्शनेन तदुपलम्भात्। स्पर्शमात्रं तेनोपलभ्यते, न वायुद्रव्यमिति चेत्। शीतोष्णा-नुष्णाशीतस्पर्शेषूपलभ्यमानेषु प्रत्यभिज्ञायमानत्वाद्द्रव्यस्य। यदा हि

दिति। अदर्शनमिति शेषः। ननु तर्हि महतामाकाशादीनां कथमप्रत्यक्षत्वमित्यत्राह—आकाशादीनान्त्विति। अरूपत्वान्निरवयवत्वाच्चेत्यर्थः। इदं त्रिविधं पृथिव्यप्तेजोरूपं द्रव्यं संयोगा[3]दर्शनस्पर्शनाभ्यां—चक्षुस्स्पर्शनेन्द्रियाभ्यां गृह्यत इत्याह—तत्रेदमिति। तद्गतानाम् द्रव्याश्रितानां गुणकर्मणां संयुक्तसमवायाद्ग्रहणमित्याह—संयुक्तसमवा-याच्चेति।

ननु प्राभाकराणां कर्मणोऽनुमेयत्वात्प्रत्यक्षवचनं विरुद्धम्। सत्यम्। नैयायिक-मतमास्थायोपन्यासाददोषः। गुणकर्माश्रितानां गुणत्वकर्मत्वादीनां संयुक्तसमवेतसमवा-याद्ग्रहणमित्याह—संयुक्तसमवेतसमवायादिति। रूपत्वादीनामिति ग्रन्थच्छेदः। ग्रहणमिति शेषः। शब्दग्रहणं समवायाख्यसंबन्धादित्याह—समवायादिति। ननु कुत्र समवायाच्छब्दो गृह्यते, श्रोत्रेन्द्रियसमवायादिति चेत्। मैवम्। कर्णशष्कुल्याख्ये श्रोत्रे अदर्शनादित्यत्राह—कर्णशष्कुलीति। तत्वालोके—आत्मवाद इत्यर्थः। शब्दत्वं केन संबन्धेन शब्दे गृह्यत इत्यत्राह—समवेतसमवायादिति। संयुक्तविशेषणत्वेना-भावग्रहणमित्याह—संयुक्तविशेषणतयेति।

एवं नैयायिकमतमुपन्यस्य दूषयति—तदयुक्तमिति। यदा महत्त्वमनेकद्रव्यत्वं रूपवत्त्वं च समुदितं प्रत्यक्षत्वे हेतुः। तदाऽप्रत्यक्षो वायुः स्यादिति वायोरप्रत्यक्षत्वमे-वेत्यत्राह—न च वाच्यमिति। कुत इत्याह—स्पर्शनेनेति। शङ्कते स्पर्शमात्रमिति।

[1] तदेतत्, इति. मु. पु. पा.

[2] निमित्तानि, इति, मु. पु. पा.

[3] अस्य प्रतिपदव्याख्यानं चक्षुःस्पर्शेन्द्रियाभ्यामिति बोध्यम्।

तैजसमुष्णत्वं जलगतञ्च शीतत्वं वायोश्चानुष्णाशीतत्वं स्पर्शनेन वायौ वाति सति प्रतीयते, तदा प्रत्यभिज्ञायते द्रव्यं तदेवेदमिति। तेन न स्पर्शमात्रप्रतीतिः।

तस्माद्रूपवत्त्वमिव स्पर्शवत्तापि प्रत्यक्षे हेतुरित्युपसंख्यानं कर्तव्यम्। यच्च संयुक्तसमवेतत्वात्कर्मणां प्रत्यक्षत्वमुक्तम्, तदप्ययुक्तम्। तस्य संयोगविभागलक्षणफलानुमेयत्वात्[1]। एतच्च पञ्चिकाद्वये प्रपञ्चितम्, अत्रापि चानुमानपरिच्छेदे वक्ष्यामः। [2]यच्च संयुक्तसमवेतसमवायाद्गुणत्वादीनां ग्रहणमिष्टं, तदपि तेषामभावादेवायुक्तम्। समवेतसमवायाच्च शब्दत्वग्रहणमप्येवमेवानुपपन्नम्। संयुक्तविशेषणतयाभावग्रहणमत्रैव[3] [4]निराकरिष्यामः।

परिहरति—**शीतोष्णेति**। [5]द्रव्यस्येति विच्छेदः। स्पर्शेन्द्रियेण शीतोष्णानुष्णाशीतेषु नानास्पर्शेषूपलभ्यमानेष्विन्द्रियान्वयव्यतिरेकानुविधायिनी वायुप्रतीतिः वायोः प्रत्यक्षतां व्यवस्थापयति। न स्पर्शमात्रे प्रत्यभिज्ञा, स्पर्शस्य स्पर्शान्तराभावादित्यर्थः।

नन्वनुष्णाशीतस्पर्शवतः पृथिवीत्वमेव, न द्रव्यान्तरत्वम्। मैवम्। पृथिवीत्वे चाक्षुषतापि स्यात्, पृथिव्यादेः क्रियाहेतोश्चाक्षुषत्वदर्शनात्, अचाक्षुषञ्च तदिति न पृथिवीत्वम्। किञ्चायं स्पर्शो न पृथिव्याः। गन्धेन गन्धरसाभ्यां वा असहचारित्वात्, अप्तेजस्स्पर्शवत्। किञ्चास्य पृथिवीत्वपक्षे स्पर्शस्य पाकजत्वमपि स्यात्, पार्थिवस्पर्शः पाकजः बाह्येन्द्रियग्राह्यः पृथिवीगुणत्वात् गन्धवत्, अयमुपलभ्यमानोऽनुष्णाशीतस्पर्शो न पाकजः गन्धादिभिरसहचारित्वात्। अप्तेजस्स्पर्शवत्, अतोऽष्टद्रव्यव्यतिरेकेण द्रव्यान्तरमनिलाख्यं परिशेषात्सिद्धम्, तस्मादित्युपसंहारः। तेन स्पर्शवत्त्वमहत्त्वप्रयुक्तं द्रव्यस्य प्रत्यक्षत्वमिति।

यच्चेत्यनुभाष्य परिहरति—**तदप्ययुक्तमिति**। पञ्चिकाद्वये—ऋजुविमलायां दीपशिखायां चेत्यर्थः। यदि पंचिकाद्वये प्रपञ्चितं, किमिति [6]तर्ह्यत्र नोक्तमित्यत्राह—**अत्रापिचेति**। अनुभाषते—**यच्चेति**। परिहरति—**तदपि तेषामिति**। तेषां गुणत्वादीनामित्यर्थः। शब्दत्वाभावादेव तस्य समवेतसमवायाद्ग्रहणमपि नास्तीत्याह—**समवेतसमवायादिति**।

नन्वफलवती शाखेत्यत्राभावग्रहणार्थं संयुक्तविशेषणताख्यं इष्टमेवेत्यत्राह—**संयुक्तविशेषणतयेति**। अत्रैव—प्रमाणपारायण एव अभावपरिच्छेद इत्यर्थः। यदि-

---

[1] 'अनुमानं द्विविधम्'—इति भाष्यव्याख्यानावसरे वृहतीव्याख्याने [पृ. ९७] कर्मण अनुमेयत्वं व्यवस्थापितम् इति ध्येयम्।

[2] यत्त्विति मु. पु. पा.।

[3] अभावनिराकरणपर्वणीत्यर्थः।

[4] निराकरिष्यते इति मु. पु. पा.।

[5] अवच्छेदः इति क. पुस्तके।

[6] अत्र नोक्तमिति क. पुस्तके।

अन्यच्च समवायविशेषणता नाम सन्निकर्षान्तरं किमिति नेष्यते। यथा गोरश्वस्य चान्योन्याभावप्रतीतये संयुक्तविशेषणता नाम सन्निकर्षान्तरमाश्रीयते[1]; तथा [2]ककारखकारयोरपीतरेतराभावावगमाय समवेतविशेषणतालक्षणं सन्निकर्षान्तरमभ्युपगन्तुमुचितम्। तस्मात्त्रिविध एव सन्निकर्षः प्रत्यक्षहेतुः—संयोगः, संयुक्तसमवायः, समवायश्चेति।

अव्यपदेश्यमिति किमर्थम्? इन्द्रियार्थसन्निकर्षोत्पन्नस्य शाब्दताशङ्का-

संयुक्तविशेषणता नाम सन्निकर्षान्तरं स्वीक्रियते, तर्हि समवेतविशेषणता नाम सन्निकर्षान्तरमधिकं किमिति नेष्यत इत्यत्राह—अन्यच्चेति। उक्तमेवार्थं स्पष्टीकरोति—यथेति। गवाश्वयोरितरेतराभावावगमाय संयुक्तविशेषणता नाम सन्निकर्षान्तरवत्ककारखकारयोरितरेतराभावावगमाय समवेतविशेषणता नाम सन्निकर्षान्तरमभ्युपगन्तुमुचितम्। तदा द्वादशधा सन्निकर्षः स्यात्। न षोढैवेति निष्कर्षः। तथाहि—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, संयुक्तविशेषणता, संयुक्तसमवेतविशेषणता, संयुक्तसमवेतसमवेतविशेषणता, समवेतविशेषणता, समवेतसमवेतविशेषणता, संयुक्तविशेषणविशेषणता चेति। इह शाखायां बलाकाभाव इत्यत्र अभावस्य विशेष्यतया ग्रहणार्थं संयुक्तविशेष्यता नाम सन्निकर्षान्तरमपि स्यात् तदा त्रयोदशधा सन्निकर्षः स्यात्।

अथ तत्परिहाराय सर्वव्यापितया संबन्धविशेषणतालक्षणं सन्निकर्षान्तरं स्वीक्रियत इति चेत् तर्हि संयुक्तसमवायाद्यभावप्रसङ्गः, सम्बन्धविशेषणतयैव रूपादिप्रतीतेरुपपन्नत्वात्। उपसंहरति—तस्मादिति। त्रैविध्यमेव दर्शयति—संयोग इति।

ननु गुणादिगत[3]संख्यासादृश्यावगत्यर्थं संयुक्तसमवेतसमवायाख्यं त्वत्पक्षेऽप्यङ्गीकरणीयमिति न त्रैविध्यमेव सन्निकर्षस्य। उच्यते। गुणगतसंख्यासादृश्यादिप्रतीतिरन्यथाप्युपपन्ना, यत्र तावद्द्रव्यं सुसदृशं, तत्र तावत्सादृश्यं गुण उपचर्यते, वैसादृश्ये तु द्रव्यस्य गुणेनासंबन्धग्रहणात्संबन्धग्रहणव्यवहारः।

यद्वा गुणानां गन्धादीनां सामान्यवदेकत्वात्सादृश्यासंभवाद्भेदाग्रहणम्।

यद्वाऽनुमेयम्,—गुणगतसादृश्यादिप्रतीतिसाम्यात्, तत्साम्यमपि समानरोमाख्यादि, दर्शनादनुमीयते।

यद्वा—संयुक्तसमवायादेव गुणाद्याश्रयमपि सादृश्यं गृह्यते, गुणादिसादृश्यमपि द्रव्ये समवेतम्। इतरथा गुणस्यापि द्रव्यत्वप्रसङ्गात्। गुणानान्तु स्थितिहेतुत्वमेव, नाश्रयत्वमपि। तस्मात्त्रिविध एव सन्निकर्ष इति सूक्तम्।

---

[1] आस्थीयत इति मु. पु. पा.। [2] सकार इति मु. पु. पा.।

[3] संख्याद्यवगत्यर्थमिति ग० पुस्तके।

**[1]निराकरणार्थम्। यदा हि—रूपं रूपमिति [2]जानाति रसं रस इति जानाति तदा शब्दसञ्जल्पसम्भवात् शाब्दताशङ्का कस्यचित् स्यात्। तन्निरा-**

इदानीं नैयायिकोक्तलक्षणवर्त्यव्यपदेश्यपदस्य किं प्रयोजनमिति पृच्छति—**अव्यपदेश्यमिति।** प्रयोजनं न दृश्यत इति भावः। नैयायिकोक्तं प्रयोजनमाह—**इन्द्रियार्थेति।** व्यपदेश्यादन्यदव्यपदेश्यमित्युच्यते। शब्दसहायादिन्द्रियार्थ—सन्निकर्षादुत्पन्नं व्यपदेश्यम्। यथा विस्फारिताक्षः किञ्चिदभिमुखीकृत्य कथयति

---

[1] निवृत्यर्थम्, इति मु. पु. पा.। [2] प्रतिपद्यते, इति मु. पु. पा.।

[3] न्यायभाष्यवार्तिककाराभ्यां 'इन्द्रियार्थेति' सूत्रं प्रत्यक्षलक्षणपरतया व्याख्यातम्। अव्यपदेश्यं अव्यभिचारि व्यवसायात्मकमिति त्रयाणां विशेषाणां शब्दकर्मतापन्ने इदमिति ज्ञाने, इदं रजतमित्यादौ विपर्यये, स्थाणुर्वा पुरुषो वेति संशये, चातिव्याप्तिवारणाय क्रमेण त्रीणि विशेषणानि इति चोक्तम्। तत् क्रमेण उपपाद्य निरस्यति पञ्चिकाकारः—'अव्यपदेश्यमिति किमर्थमित्यादिना। जरन्नैयायिका—व्यपदिश्यत इति व्यपदेश्यमिति व्युत्पत्त्या व्यपदेश्यशब्दः शब्दकर्मतापन्नं ज्ञानमभिधत्ते। यत् इन्द्रियार्थसन्निकर्षादुत्पन्नं सत् विषयनाम्ना व्यपदिश्यते रूपज्ञानं रसज्ञानमिति तत् व्यपदेश्यं ज्ञानम्, तदेव प्रत्यक्षफलमित्याहुः। तत्र इन्द्रियार्थसन्निकर्ष-जन्यत्वरूपस्य प्रत्यक्षलक्षणस्य तत्र गमनादतिव्याप्तिः। जरन्नैयायिकमतनिराकरणाय अव्यप-देश्यमिति। तदेव दर्शयति अव्यपदेश्यमित्यादिना। तन्निरासप्रकारश्च इत्थम्—लोके सजातीयविजातीयव्यावर्तकः लक्ष्यगतः धर्मविशेषः लक्षणमित्युच्यते अभियुक्तैः। प्रकृते इन्द्रियसन्निकर्षोत्पन्नं इत्यनेनैव इतरव्यावृत्तं प्रत्यक्षं लक्षयितुं शक्यतेऽतो नेदमव्यपदेश्यविशेषण-फलम्।

किञ्च-अयं रसः, इदं रूपमिति ज्ञानं इन्द्रियजन्यं शब्दजं वा भवितुमर्हति न तूभय-रूपम्। तज्ज्ञानं रूपरसादिगोचरं वा रूपरसादिवाच्यत्वगोचरं वा वाच्यत्वविशिष्टरूप-रसादिगोचरं वेति त्रेधा विकल्पः। तत्र द्वितीयतृतीयपक्षौ अस्य ज्ञानस्य शाब्दत्वमेव स्थाप-येयातां न तु प्रत्यक्षत्वम्, अतः प्रथमपक्ष एव परिशिष्यते। तस्मात् इन्द्रियसन्निकर्षज—त्वात्प्रत्यक्षमेवेति। अत एवोक्तं प्राभाकरैः—

शब्दजत्वेन शाब्दञ्चेत्प्रत्यक्षञ्चाक्षजत्वतः।
स्पष्टग्रहणरूपत्वाद्युक्तमैन्द्रियकं हि तत्॥ इति

अपि च प्राभाकरमते सर्वज्ञानानां विषयाव्यभिचारित्वेन विपर्ययस्यैवाभावात्, स्थाणुर्वा-पुरुषो वेति संशयस्य विशेषणस्मृतिद्वयरूपत्वेन च अव्यभिचारि व्यवसायात्मकमिति द्वयोर्विशेषण-योर्वैफल्यमुपपादयन्नैयायिकानां प्रत्यक्षलक्षणमदूदुषत्। स्वमतेन च 'साक्षात्कारि प्रत्यक्षमि'ति वक्ष्यति मूलकारः। 'शालिकनाथोक्तं दूषणजातं कृत्स्नशः परिहरन्वाचस्पतिमिश्रः इन्द्रियार्थ-सन्निकर्षजन्यं अव्यभिचारि ज्ञानं प्रत्यक्षं तच्च निर्विकल्पकसविकल्पकभेदेन द्विविधमित्याद्यर्थ-जातं भाष्यवार्तिककाराभ्यामव्याख्यातमपि सूत्रभाष्यवार्तिकारूढं वर्णयामासेति सुधीभिर्वि-भावनीयम्।

करणायाव्यपदेश्यमित्युक्तम्। न हीन्द्रियार्थसन्निकर्षजे ज्ञाने शब्दस्य व्यापृतिरस्ति, यतश्शाब्दता स्यादिति। [1]तदिदमसङ्गतम्। लक्षणं हि प्रत्यक्षस्य वक्तव्यम्। येन रूपेण सजातीयविजातीयेभ्यो भेदस्तदेव लक्षणम्। तत्र तावत् शाब्दाद्भेद इन्द्रियार्थसन्निकर्षजत्वेनैव सिद्धः। शब्दसञ्जल्पनानुविद्धस्य प्रत्यक्षस्य शाब्दत्वाशङ्का शाब्दपरीक्षापर्वणि निराकर्तुमुचिता [2]अनुमानशङ्केव सर्वस्य [3]शाब्दस्य। अव्यभिचारिपदञ्च विपर्ययनिराकरणाय यदुक्तम्, तत् सर्वज्ञानानामव्यभिचारित्वादविशेषकमित्युक्तम्। व्यवसायात्मकतापि संशयनिवृत्त्यर्थं न वक्तव्या। स्थाणुर्वा पुरुषो वेति हि स्मृतिज्ञानद्वयम्; एतच्च नेन्द्रियार्थसन्निकर्षजमिति न तस्य प्रत्यक्षताप्रसक्तिः। किञ्चाव्यभिचारिपदेनैव संशयस्यापि व्यावृत्तिः

इदं रूपमिति। तत्र वाक्याद्रूपनयनसन्निकर्षसहायादुत्पन्नमिदं रूपमिति विज्ञानं शब्दोत्पन्नत्वाच्छाब्दमेव, तथापीन्द्रियसन्निकर्षोत्पन्नत्वमप्यस्तीति प्रत्यक्षं प्राप्तम्, तन्माभूदित्यव्यपदेश्यग्रहणं कृतमिति। परिहरति—**न हीन्द्रियार्थेति**।

न हि शब्दसहायादिन्द्रियार्थसन्निकर्षादुत्पन्नं ज्ञानमस्ति, शब्देन्द्रिययोः संभूय कार्यकारित्वाभावात्। तत्रान्यदेव हि वाक्यादुत्पन्नमिदं रूपमिति ज्ञानम्, अन्यच्च नयनरूपसंप्रयोगोत्पन्नम्। तयोरन्यतरभावित्वादेकमेवेदं रूपमिति विज्ञानमिति। किंच लक्षणमात्राभिधानसमये शाब्दत्वाभिधानमसंगतमेवेत्यत्राह—**तदिदमसंगतमिति**। एतदेवोपपादयति—**लक्षणं हीति**। किं तल्लक्षणस्य स्वरूपं तत्राह—**येन रूपेणेति**। भवत्वेवं लक्षणस्य स्वरूपम्, ततः किमित्यत्राह—**तत्र तावदिति**।

किंच शब्दसंजल्पसंभवेन शाब्दताशङ्का शाब्दपर्वणि निराकर्तुमुचिता, प्रत्यक्षमनुमानमेकदेशाग्रहणादुपलब्धेरनुमानाशङ्केव सर्वस्य प्रत्यक्षस्येत्यत्राह—**शब्दसंजल्पनानुविद्धस्येति**। तस्माल्लक्षणाभिधानसमये नेदं वक्तुमुचितमित्यर्थः। तथाऽव्यभिचारिपदमप्यपार्थकमित्याह—**अव्यभिचारिपदञ्चेति**। अख्यातौ सर्वज्ञानानामव्यभिचारित्वसाधनादपार्थकमित्यर्थः। तथा व्यवसायात्मकमित्येतदप्यपार्थकमित्याह—**व्यवसायात्मकतेति**। कुत इत्याह—**स्थाणुर्वा पुरुषो वेति**। द्वयमिति ग्रन्थच्छेदः। ततः किमित्याह—**एतच्चेति**। दूषणान्तरमाह—**किञ्चेति**। कथमित्याह—**तस्या-**

[1] अयुक्तम्, इति मु. पु. पा.। [2] अनुमानत्वशङ्केति. मु. पु. पा.।

[3] पञ्चिकाकारोक्तमिममाक्षेपं वाचस्पतिमिश्रः "परीक्षापर्वणि वचनार्हमपि सुभाषितरुचितया तद्विलम्बमसहमानो भाष्यकारः लक्षणावसर एव आह" इत्यनेन वाक्यसन्दर्भेण परिजहार। इदञ्च विचारचातुरीचर्चितचेतसां विचक्षणानां न मनोऽनुरञ्जयति इति विभावयन्तु सुधियः। न्या. वा. ता. टी. पृ. १२७

सिद्धा। तस्यापि यथाज्ञायमानार्थव्यभिचारित्वात्। अपि चाव्यभिचारिता व्यवसायात्मकता च न प्रत्यक्षलक्षणम्, किन्तु प्रमाणलक्षणम्। तेन सामान्यतः प्रमाणलक्षणं कृत्वा, तद्विशेषस्य प्रत्यक्षस्य प्रातिस्विकं सजातीय-विजातीयव्यावृत्तिसमर्थं लक्षणं वाच्यम्—'इन्द्रियार्थसन्निकर्षोत्पन्नं प्रत्यक्ष-मिति। अस्मिन्नपि लक्षणेऽनुमानादिप्रमितिः स्वात्मनि, प्रमातरि च न [1]प्रत्यक्षा स्यादनिन्द्रियजत्वात्।

धर्मकीर्तीयस्य प्रत्यक्षलक्षणस्यानुवादः।

[2]अपरे पुनराहुः—'कल्पनापोढमभ्रान्तं प्रत्यक्षमिति। कल्पना—

पीति। दूषणान्तरमाह—अपि चेति। नेदं प्रमाणविशेषस्य लक्षणम्, किन्तु प्रमाण सामान्यस्य लक्षणमिति। निगमयति—तेनेति। तेन नैयायिकोक्तं लक्षणं न समञ्जसमिति।

नन्विन्द्रियार्थसन्निकर्षोत्पन्नम्—संप्रयुक्तार्थगोचरं विज्ञानं प्रत्यक्षमिति लक्षणं स्यादित्यत्राह—इन्द्रियार्थसन्निकर्षोत्पन्नमिति। अस्मिन्नपि पक्षे अनुमानादिप्रमितिः स्वात्मनि, मातरि च न प्रत्यक्षा स्यात्, अनिन्द्रियजत्वादित्यर्थः।

अपरे पुनरिति [3]सौगतपक्षोपन्यासः। सौगतपक्षं निराकर्तुं सौगतानां लक्षणं दर्शयति—कल्पनापोढमिति। कल्पनाशब्दस्यार्थमाह—कल्पनेति। कल्पनया—

---

[1] प्रत्यक्षमिति मु. पु. पा.।

[2] न्यायबिन्दौ धर्मकीर्तिनोक्तं प्रत्यक्षलक्षणमुन्मूलयितुं तदनुवदति—अपरे इति। कल्पनापोढमभ्रान्तं प्रत्यक्षमिति न्यायबिन्दौ पाठो दृश्यते। परमत्र, न्यायकणिकायाञ्च प्रत्यक्षं कल्पनापोढमभ्रान्तमिति पाठस्समुद्धृतो विलोक्यते। अत आकरग्रन्थानुसारेण कल्पनापोढम-भ्रान्तं प्रत्यक्षमिति पाठो मूले सन्यवेशि। अत्र प्रत्यक्षमिति लक्ष्यनिर्देशः, अवशिष्टं लक्षणमिति विवेकः। दिङ्नागेन कल्पनापोढं प्रत्यक्षमिति प्रत्यक्षलक्षणमुक्तम्, तदेवाभ्रान्तत्वघटितं धर्मकीर्तिनोपवर्णितम्। इदञ्च सर्वतन्त्रस्वतन्त्रो वाचस्पतिमिश्रो विधिविवेकव्याख्यायां न्याय-कणिकायां सुस्पष्टं "ब्रवीति दिङ्नागस्यैव कल्पनापोढं प्रत्यक्षलक्षणम्, तदेवाभ्रान्तत्वघटितं प्रत्यक्षलक्षणं मन्यते स्म कीर्तिः—प्रत्यक्षं कल्पनापोढमभ्रान्तम्"। वि. वि. पृ. १९२ ] इति।

जयन्तभट्टोऽपि श्लोकेनैकेनामुमेवार्थं संञ्चिक्षेप—

इति सुनिपुणबुद्धिर्लक्षणं वक्तुकामः
पदयुगलमपीदं निर्ममे नानवद्यम्।
भवतु मतिमहिम्नश्चेष्टितं दृष्टमेतत्
जगदभिभवधीरं धीमतो धर्मकीर्तेः॥ चौ. सं. न्या. मं. पृ. ९३

तथा च बौद्धाचार्येण दिङ्नागेनोक्तं धर्मकीर्तिना परिष्कृतमिदं लक्षणमिति सुधीभि-र्विज्ञेयम्।

[3] सिद्धान्त इति क. पुस्तके पा.।

जात्यादियोजना, तया रहितं यद्विज्ञानं, तत्प्रत्यक्षम्। तथाभूतमेव तैमिरिकादीनां केशोण्ड्रकादिज्ञानं प्रत्यक्षं मा प्रसाङ्क्षीदित्युक्तमभ्रान्तमिति।

[1]तच्चतुर्विधम्—इन्द्रियज्ञानम्, सर्वचित्तचैत्तानां स्वसंवेदनम्, मानसम्, योगिज्ञानञ्चेति। यदिन्द्रियाणामर्थेन सन्निकर्षादुपजायते, तदिन्द्रियज्ञानं पञ्चसु रूपादिषु पञ्चविधम्। सर्वज्ञानानां स्वसंवेदनं विकल्पविरहात्प्रत्यक्षम्। सुखादयस्तु [2]विज्ञानाभिन्नहेतुकतया न तस्माद्भिद्यन्त इति तेऽपि

जात्यादियोजनया अपोढम्—अपेतं कल्पनास्वभावरहितं यद्विज्ञानम्, तत्प्रत्यक्षमित्यर्थः। अभ्रान्तपदस्य प्रयोजनमाह—तथाभूतमेवेति। तैमिरिकानां नेत्रे अल्पनिमीलिते सत्याकाशे मयूरपत्रमिव प्रतिभाति यत्, तत्केशोण्ड्रकादिज्ञानम्, तन्निवृत्त्यर्थमभ्रान्तपदम्। यन्न भ्राम्यति तदभ्रान्तम्, ग्राह्ये—अर्थक्रियासमर्थवस्तुस्वरूपे यदविपर्यस्तं तदभ्रान्तमित्युच्यते।

तत्प्रत्यक्षं चतुर्विधमित्याह—तच्चतुर्विधमिति। चातुर्विध्यमेव दर्शयति—इन्द्रियज्ञानमिति। प्रत्यक्षस्य चातुर्विध्याभिधानप्रयोजनं धर्माधर्मयोरपि योगिप्रत्यक्षग्राह्यत्वसिद्धिः। किमिदमिन्द्रियज्ञानं नामेत्यत्राह—यदिन्द्रियाणामिति। तत्रेन्द्रियज्ञानं नाम रूपरसगन्धस्पर्शशब्देषु पञ्चस्विन्द्रियसन्निधानाद्यज्ज्ञानं जायते, तदिन्द्रियज्ञानमित्यर्थः।

ननु किमिदं सर्वचित्तचैत्तानां स्वसंवेदनमित्याह—सर्वज्ञानानामिति। चित्त[3]शब्देनार्थग्राहि ज्ञानमुच्यते। चैत्ताः—तद्विशेषावस्थाग्राहिणः सुखादयः। सर्वे च ते चित्तचैत्ताश्च स्फुटानुभवत्वात्स्वसंविदिता इति प्रत्यक्षभूताः। एतदुक्तं भवति-चित्तरूपार्थमात्रग्राहिज्ञानानां स्वसंवेदनं चैत्तरूपसुखादिज्ञानानां स्वसंवेदनं च प्रत्यक्षमित्यर्थः। चित्ते जाते सुखोदय इति—चैत्ता इत्यर्थः। सुखादीनां संवेदनात्मत्वे किं प्रमाणम्? उच्यते—सुखादीनि विज्ञानानि विज्ञानाभिन्नहेतुत्वान्नीलविकल्पवत्। किञ्च सुखाद्याकारस्त्वन्तरेव वेद्यते, तेन विज्ञानात्मत्वमेवेति।

---

[1] तच्चतुर्विधं—इन्द्रियज्ञानम्, स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितम्, तन्मनोविज्ञानम्, सर्वचित्तचैत्तानामात्मसंवेदनम्, भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानञ्चेति, न्यायबिन्दौ पाठो दृश्यते। अत्र ग्रन्थकारो न्यायबिन्दुप्रकरणस्थं वाक्यसन्दर्भं शब्दतोऽर्थतश्चानुवदन् क्रमविपर्ययं तन्निरूपणे समाशिश्रिये। आकरवाक्यसन्निवेशे ग्रन्थवाक्यसन्दर्भभङ्गभीरुणा न्यायबैन्दवं पाठक्रमं परित्यज्य ग्रन्थकृताऽवलम्बित एव क्रमो मया मूले सन्निवेशित इति ध्येयम्।

[2] विज्ञानहेतुकतया, इति ग. पु. पा.।

[3] अत्र टीकाकारो नारायणो न्यायबिन्दुव्याख्यातुर्धर्मोत्तराचार्यस्य वचांस्येवान्यूनानतिरेकं निर्दिशतीति मन्तव्यम्। [ न्या. बि. पृ. १४ ]

स्वसंविदिता एव। मानसन्त्विन्द्रियज्ञानेन स्वविज्ञेयक्षणानन्तरक्षणसह-कारिणा जन्यते। तस्य चेन्द्रियज्ञानग्राह्यस्यानन्तर एव क्षणो ग्राह्यः।

ननु जन्यज्ञानसमये जनकस्यार्थक्षणस्यातीतत्वात्कथमर्थस्य[1] प्रत्यक्ष-ग्राह्यता। उच्यते—एतदेव ग्राह्यत्वमर्थानां यदुत्पादकत्वं स्वरूपार्पकत्वञ्चेति। अर्थाकारं प्रत्यक्षं ज्ञानम्। अन्यथा निराकारा संवित्तिः कथं रूपादिसंवित्ति-व्यवस्थां लभेत। अत एवार्थसारूप्यं प्रमाणम्, तस्यैव व्यवस्थाहेतुत्वात्।

अर्थेन सारूप्यं विज्ञानं घटयति नेन्द्रियादि, इति न तत्प्रमाणम्। नन्वेकस्याकारस्य प्रतीतेस्तस्य च ज्ञान एव [2]अवस्थितत्वात्कथमर्थस्य प्रत्यक्षता। उच्यते—योऽर्थो ज्ञानस्याकारमात्मनोऽन्वयव्यतिरेकावनु-कारयति, स प्रत्यक्ष इति न दोषः।

ननु किमिदं मानसं नाम प्रत्यक्षमित्याह—**मानसन्त्विति**। यद्विज्ञानेन स्वविज्ञेय-क्षणानन्तरक्षणसहकारिणेन्द्रियव्यापारोपरमे सति यज्ज्ञानमेकसन्तानान्तर्भूतं जन्यते, तदुच्यते। तत्र क्षणिके वस्तुन्यतिशयाधानायोगादेककार्यकारित्वेन सहकारी गृह्यते। अतो विषयविज्ञानाभ्यां हि मनोविज्ञानमेकं क्रियते, तच्च स्पष्टावभासत्वात्प्रत्यक्षम्। एतदुक्तं भवति—बौद्धानां हि सर्वेऽपि भावाः क्षणिका इति सिद्धान्तः। तत्र ग्राह्य-भूतार्थक्षणमर्थक्षणान्तरं जनयित्वा नश्यति, तदपि तथैवेति सन्तानरूपेण वर्तते, तथेन्द्रिय-क्षणमपि इन्द्रियक्षणान्तरमर्थक्षणरूपसहकारिसहितं ज्ञानक्षणञ्च जनयित्वा नश्यति, तदप्युत्पन्नमिन्द्रियक्षणान्तरमर्थक्षणरूपसहकारिसहितं ज्ञानक्षणान्तरञ्च जनयित्वा नश्यति। तदपि तथैव, तदपि तथैवेति सन्तानरूपेण वर्तते। एवं द्वाभ्यां कञ्चित्कालं वर्तमानाभ्यां केनापि हेतुनेन्द्रियव्यापारोपरमे सत्यन्तिमं ज्ञानक्षणमर्थक्षणं चैकं ज्ञानं जन-यति, तन्मानसमिति। अक्षरार्थस्तु मानसं नाम ज्ञानमिन्द्रियविज्ञानेनान्तिमेनेन्द्रियविज्ञानेन स्वविज्ञेयक्षणानन्तरक्षणसहकारिणा स्वोत्पादकभूतपूर्वक्षणान्तरभूतस्वकालीनक्षणसह-कारिणा यज्जन्यते तन्मानसमित्यर्थः। तस्य मानसरूपज्ञानस्य स्वोत्पादकभूतेन्द्रिय-ज्ञानस्य ग्राह्यभूतक्षणस्यानन्तरक्षणोत्तरक्षणः स्वोत्पादकभूतो ग्राह्य इत्याह—**तस्य चेति**।

चोदयति—**ननु जन्यज्ञानेति**। सुगमम्। परिहरति—**उच्यत इति**। सुगमम्। स्वरूपार्पकत्वमेव विवृणोति—**अर्थाकारमिति**। ज्ञानानां निराकारत्वे कस्येदं ज्ञानं कस्य नेति न ज्ञायते, सर्वसाधारणत्वादित्याह—**अन्यथेति**। यत एवऽन्याकारं ज्ञानम्, अत एवार्थसारूप्यं प्रमाणमिति बौद्धानां प्रसिद्धिरित्याह—**अत एवेति**। कुत इत्याह—**तस्यैवेति**। तस्यैव—अर्थसारूप्यस्यैवेत्यर्थः। एतदेवोपपादयति—**अर्थेन हीति**। चोदयति—**नन्वेकमिति**। परिहरति—**उच्यत इति**।

---

[1] मुद्रितपुस्तके ग्राह्यता इत्येव पाठो दृश्यते। [2] व्यवस्थितत्वादिति ख. पु. पा.।

[1]किञ्च साकारता ज्ञानस्याश्रयणीया। अन्यथा स्वप्नादिष्वसति बहिरर्थे कस्याकारः प्रकाशेत। प्रकाशात्मकज्ञानाद्बहिर्भूतश्चाकारः कथं प्रकाशेत, जडस्य प्रकाशायोगात्।

अपि चार्थस्य वित्तेश्च सहोपलम्भो नियतः। स च भेदादनियमव्याप्ताद्व्यापकविरुद्धोपलब्ध्या[2] निवृत्तोऽभेदेऽवतिष्ठमानोऽभेदमनुमापयति। [3]भेदावभासस्तु द्विचन्द्रादिप्रतीतिवदनादिवासनानिबन्धन इति परिकल्पनीयम्।

भूतार्थभावनाप्रकर्षपर्यन्तजञ्च योगिज्ञानम्। प्रमाणप्रतीतमर्थं परोक्षमपि भावयतो यद्भावनायाः परमे प्रकर्षे सत्यपरोक्षावभासं ज्ञानं जायते, तत्प्रत्यक्षम्। स्पष्टप्रतिभासत्वेन निर्विकल्पकत्वात्। न हि विकल्पानुविद्धस्य प्रत्ययस्य-स्पष्टार्थप्रतिभासतास्तीति।

ज्ञानानां साकारत्वे हेत्वन्तरमाह—अपि चेति। स च सहोपलम्भः स्वव्यापकभूतनियमविरुद्धानियमोपलब्ध्या अनियमव्याप्ताद्भेदान्निवृत्तोऽभेदेऽवतिष्ठमानस्तमभेदमनुमापयतीत्यर्थः। ननु तर्हि ज्ञानार्थयोर्भेदावभासः कथमुपपद्यते ? इत्यत्राह—भेदावभासस्त्विति। तदुक्तम्—

[4]सहोपलम्भनियमादभेदो नीलतद्धियोः।
भेदश्च भ्रान्तिविज्ञानैः दृश्येतेन्दाविवाद्वये ॥ [प्र-वा] इति

ननु किमिदं योगिज्ञानं नामेत्यत्राह—भूतार्थेति। एतदेवोपपादयति—प्रमाणप्रतीतमिति। योगः—समाधिः स यस्यास्ति स योगी, भूतार्थस्य भावना—पुनःपुनश्चेतसि निवेशनम्, भावनायाः प्रकर्षो—भाव्यमानार्थावभासस्य ज्ञानस्य स्फुटाहत्वारम्भः। यावद्धि स्फुटाहमप्यपरिपूर्णं तावत्तस्य प्रकर्षगमनमेव संपूर्णम् यदा, तदा नास्ति प्रकर्षगतिः। ततस्संपूर्णावस्थायाः प्राक्तन्यवस्था—स्फुटाहताप्रकर्षपर्यन्त उच्यते। संपूर्णे प्रकर्षे करतलामलकावभासवत्स्फुटावभासं वस्तु योगिनो भवति। अत एव धर्माधर्मयोरपि साक्षात्करणम्। योगिनज्ञानग्राह्यत्वमपि वस्तुनः पूर्वकालस्य तदाकारार्पणहेतुत्वमेवेति।

---

[1] अवश्यञ्च, इति मु. पु. पा.।

[2] व्यापकविरुद्धोपलभ्यं निरस्तो भेदो व्यवतिष्ठमानमर्थमिति, ग. पु. पा.।

[3] भेदावसायस्तु; इति. मु. पु. पा.।

[4] इदं पद्यं सर्वैरपि ग्रन्थकृद्भिर्विज्ञानवादस्य खण्डनायावतार्यते स्वग्रन्थेषु। कुत्रापि प्रमाणवार्तिकादिबौद्धग्रन्थेष्वेतादृशी चानुपूर्वी नोपलभ्यते। किन्तु पूर्वार्धमन्यस्य पद्यस्य, उत्तरार्धमन्यस्येत्येव प्रतिभाति।

तन्निराकरणम्।

[1] एतदनुपपन्नम्। सविकल्पकविज्ञानानां[2] जात्यादियोजनयोदीयमानानामिन्द्रियज्ञानानां प्रत्यक्षतापाकरणात्। अथोच्येत जातिगुणयोर्द्रव्यात्पृथक्त्वेनाग्रहणाद्भेद एव नास्ति। तेन ताभ्यामविद्यमानाभ्यां योजयित्वा जायमानं जातिगुणकल्पनाज्ञानं न प्रत्यक्षमिति। तदप्यसत्। [3]एकैकद्रव्यव्यतिरेकेण द्रव्यान्तरे ग्रहणात्पृथक्त्वेनाऽग्रहणस्याऽसिद्धेः। एकस्मिन्नपि द्रव्ये द्रव्यान्तराद्व्यावर्तमाने अनुवर्तमानयोर्जातिगुणयोर्भेदावगमादिति जातिनिर्णये निर्णीतम्। कर्मकल्पना तु न प्रत्यक्षमित्यनुमतमेव, अनुमेयत्वात्कर्मणः। द्रव्यकल्पना तु विषाणी, दण्डीति च न प्रत्यक्षतामतिवर्तते, [4]इन्द्रियव्यापारानुविधायित्वात्।

नामकल्पनापि देवदत्तोऽयमिति प्रत्यक्षा, इन्द्रियव्यापारानुविधायित्वात्। तत्र यद्यपि वर्णात्मकं नाम स्मरणनिविष्टम्; तेन सह वाच्यवाचकभावोऽपि स्मृतिसमारूढ एव।

तथापि [5]संज्ञी प्रत्यक्षतां न मुञ्चति। न हि संज्ञा, तत्सम्बन्धो वा

एवमुपपादितं बौद्धमतं निराकर्तुमुपक्रमते—एतदनुपपन्नमिति। ऐन्द्रियकानाम्—सर्वसविकल्पकज्ञानानां प्रत्यक्षत्वापाकरणादिति। शङ्कते—अथोच्येतेति। जातिगुणयोर्नियमेन द्रव्येण सहोपलम्भादभेद एव। तेनाविद्यमानाभ्यां ताभ्यां योजयित्वा जायमानं जातिगुणकल्पनाज्ञानं न प्रत्यक्षमिति। परिहरति—तदप्यसदिति। एकैकद्रव्यव्यतिरेकेण पृथक्त्वेन ग्रहणान्नियमेन सहोपलम्भो नास्तीत्यर्थः। पृथक्त्वेन ग्रहणमेवोपपादयति—एकस्मिन्नपीति। न विशेषणैः जात्यादिभिरभेदाध्यासो भवति, सोऽयमिति अभेदप्रत्ययाभावात्। अतो विशेषणानां जात्यादीनां पारतन्त्र्यमात्रं प्रतीयते। अतो युक्तिबाधस्याप्यभावात्समीचीना एव सविकल्पकाः। कर्मकल्पनायामप्रत्यक्षत्वमनुमतमेवेत्याह—कर्मकल्पनात्विति। विषाणी दण्डीत्यादिद्रव्यकल्पनायाः प्रत्यक्षत्वमेवेत्याह—द्रव्यकल्पनात्विति। कुत इत्याह—इन्द्रियेति।

नामकल्पनायां वर्णात्मकं नाममात्रं, तेन सह वाच्यवाचकभावश्च स्मृतिसमारूढः, संज्ञी त्विन्द्रियसंयोगात्प्रत्यक्ष इत्याह—नामकल्पनापीति। नामनामिनोस्त्वभेदबुद्धि-

---

[1] तदेतदप्यनुपपन्नम्, इति मु. पु. पा.।

[2] प्रयोजकतयाऽऽद्रियमाणानां ज्ञानानाम्, इति. ग. पु. पा.।

[3] द्रव्यातिरेकेण, इति, मु. पु. पा.।

[4] इन्द्रियानुविधायित्वात्, इति मु. पु. पा.।

[5] संज्ञा इति, मु. पु. पा.।

तदानीमेकविज्ञाने विशेषणत्वेन प्रतिभातः। किन्तु एतौ स्मृतिसमारूढावेव। संज्ञिनि हि दृश्यमाने प्रागनुभूतौ तौ स्मृतिमारोहतः। अत एवोक्तम्—

संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते।
संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा॥ इति

अतः नामयोजनया जायमानं ज्ञानं न प्रत्यक्षमिति [1]ये वदन्ति तेऽप्यनयैव दिशा निराकृताः। ऐन्द्रियके ज्ञाने नामयोजनायाः सम्भवात्।

अपि च जातिगुणयोरप्रत्यक्षत्वमिच्छतो न किञ्चित्प्रत्यक्षमवकल्पते[2]। न हि रूपशून्या काचिद्रूपिबुद्धिरस्ति। जातिगुणौ[3] च रूपिणां रूपे। सर्वा हि प्रतीतिः एवमित्युपजायते, प्रकारश्चैवंशब्दार्थः। जातिगुणौ चार्थानां प्रकारभूतौ। अतस्ताभ्यां योजयन्त्येव सर्वा इन्द्रियप्रतीतिस्समुत्पद्यत इति निर्विषयं कल्पनापोढपदम्।

अभ्रान्तपदमपि सर्वज्ञानानां स्थूलावभासित्वात् ग्राह्यग्राहकसंवित्तिभेदयोगित्वात्सौगतानां निर्विषयमेव।

यच्च मानसं नाम प्रत्यक्षमुक्तं [4]तद्धारावाहिकविज्ञानान्नातिरिक्तं मन्यामहे। स्यान्मतम्। [5]अनुपरते इन्द्रियव्यापारे इन्द्रियज्ञानम्, उपरते त्वनन्तरक्षणप्रभवं मानसमिति। तदयुक्तम्—इन्द्रियव्यापारोपरमस्याप्यपरोक्षार्थप्रतीतिफलसम्भवे सत्यसिद्धत्वात्।

नास्तीति संप्रतिपन्नम्। देवदत्ते शब्दोऽयमिति प्रतीत्यभावादित्याह—न हि संज्ञेति। उक्तमेवार्थं वृद्धैरप्युक्तमित्याह—अत एवोक्तमिति। निगमयति—अत इति।

जातिगुणयोः प्रत्यक्षत्वे हेत्वन्तरमाह—अपि चेति। एतदेवोपपादयति—न हि रूपशून्येति। निगमयति—अतस्ताभ्यामिति।

तथा लक्षणवर्त्यभ्रान्तपदमपि निर्विषयमित्याह—अभ्रान्तपदमपीति।

अन्यदप्यनुभाषते—यच्च मानसमिति। परिहरति—तद्धारावाहिकेति। शङ्कते—स्यान्मतमिति। अनुपरते इन्द्रियव्यापारे धारावाहिकज्ञानम्, उपरते मानसमिति। परिहरति—तदयुक्तमिति। मानसे अपरोक्षार्थप्रतीतिफलसंभवे सति इन्द्रियव्यापारोपरमस्यासिद्धत्वादित्यर्थः।

---

[1] येऽपि मन्यन्त इति, मु. पु. पा.।
[2] अवतिष्ठत इति. मु. पु. पा.।
[3] गुणावेव, इति मु. पु. पा.।
[4] धारावाहिकैन्द्रियमिति, मु. पु. पा.।
[5] अनुपरतेन्द्रियस्य इति मु. पु. पा.।

यच्चातीतार्थविषयं मानसमित्युक्तम्। तदप्ययुक्तम्। वर्तमानस्याकारस्य प्रतीतेः। न चायमाकारो वित्तेरेव; वेद्यतया वित्तेः [1]पृथगवभासनात्, वित्तिर्हि वित्तितया, वेद्यश्चाकारो वेद्यतयाऽवभाति इति, न तयोस्तदात्मकतोपपद्यते।

यच्चोक्तं भेदावभासो भ्रम इति। तदपि कारणाभावादयुक्तम्। न चार्थवित्तिव्यवस्थैव भेदहेतुः, निराकाराणामपि वृत्तीनां स्वभावत एव विशिष्टार्थसम्बन्धितया स्फुरणात्।

अर्थसारूप्यञ्च यद्व्यवस्थाकारणमुक्तम्। तदसिद्धम्। स्थूलावभासित्वाज्ज्ञानानाम्, अणुरूपत्वाच्चार्थस्य। किञ्च यदि [2]तत्सारूप्यं तदुत्पत्तिसंवेद्यतालक्षणम्, ततस्समानाकारस्य समनन्तरप्रत्ययस्यापि वेद्यता स्यात्। स्वप्नादिष्वपि बाह्यस्यवार्थस्याकारः स्मृतौ प्रथत इति नयवीथ्यां साधितम्।

यच्च जडस्य प्रकाशायोगादित्यभेदकारणमुक्तम्। तदप्ययुक्तम्। जडस्यैव प्रकाशसम्बन्धो घटते। [3]तदात्मकता तु नेष्यत एव।

अपि च यदि ज्ञानानतिरिक्तस्यैव प्रकाशः, तदा ग्राह्यग्राहकवित्तीनां

पुनरप्यनुभाषते—यच्चेति। परिहरति—तदप्ययुक्तमिति। ननु वर्तमानस्याकारस्य ज्ञानाकारत्वादेवार्थाकारत्वाभावात्प्रतीतिरविरुद्धेत्यत्राह—**न चायमाकार** इति। वित्तेरेवेति ग्रन्थच्छेदः। कुत इत्याह—**वेद्यतया** इति। तयोः पृथग्भावमेव दर्शयति—**वित्तिर्हीति**। ननु वृक्षत्वशिंशपात्वयोरिव वित्तिवेद्ययोस्तादात्म्यं स्यादित्यत्राह—**न तयोरिति**। विरुद्धरूपयोर्वित्तिवेद्ययोः तादात्म्याभावादिति भावः।

अनुभाषते—**यच्चेति**। परिहरति—**तदपीति**। नन्वस्येदं ज्ञानम्, नान्यस्येति व्यवस्थैवाभेदहेतुरित्यत्राह—**न चेति**। कुत इत्याह—**निराकाराणामिति**।

पुनरप्यनुभाषते—**अर्थसारूप्यञ्चेति**। परिहरति—**तदसिद्धमिति**। असिद्धमेव दर्शयति—**स्थूलेति**। सारूप्यतदुत्पत्त्योर्वेद्यलक्षणत्वे दूषणान्तरमाह—**किञ्चेति**। समानाकारस्य समनन्तरप्रत्ययस्य निर्विकल्पकज्ञानस्यापि वेद्यता स्यादिति। ननु स्वप्नादिज्ञाने बाह्यार्थस्याभावाज्ज्ञानस्यैव साकारत्वमङ्गीकर्तव्यमित्यत्राह—**स्वप्नादिष्वपीति**। आदिशब्देन संशयज्ञानस्य ग्रहणम् , तत्रापि साकारत्वं स्यादित्यर्थः।

**यच्च जडस्य प्रकाशायोगादिति** यदुक्तम्। तदनुभाष्य परिहरति—**तदप्य-**

---

[1] प्रागवभासनात् इतिः ग. पु. पा.।

[2] तत्समुत्पत्ति, इति मु. पु. पा.। [3] तादात्म्ये तु, इति मु. पु. पा.।

भेदस्य कथं प्रकाशः। तस्यालीकस्य [1]ज्ञानस्वरूपाननुप्रविष्टत्वात्।

यच्च सहोपलम्भनियमादभिन्नत्वमाकारस्य वित्तेश्चोक्तम्। तदप्यसारम्। वित्तेर्भेदेऽप्यर्थस्य नियमोपपत्तेः। यैव हि संवित्तिः, सैव तस्यार्थस्योपलब्धिरिति कथमसौ तां विना प्रकाशेत।

यच्च स्वसंवेदनं सर्ववित्तीनां प्रत्यक्षमुक्तम्। तदनुमन्यामहे एव। सुखादीनां यत् तदभिन्नहेतुतया तदभेदात्स्वसंवेदनमिष्टम्। तदनुपपन्नम्। हेत्वभेदस्यासिद्धेः। अर्थस्य ज्ञानहेतुत्वात्। ज्ञानस्य सुखादिनिमित्तत्वात्। असन्निहितेऽप्यर्थे ज्ञानमात्रात् स्वप्नादिषु सुखाद्युपपत्तेः।

यच्च योगिज्ञानं प्रत्यक्षमिति मतम्। तदप्यसत्। प्रमाणविशेषो हि प्रत्यक्षम्। न च भूतार्थभावनाप्रकर्षपर्यन्तजस्य योगिज्ञानस्य प्रमाणतैव सम्भवति, स्मृतिरूपत्वात्। प्रमाणेन हि भूतमर्थं परिच्छिद्य या भावना, सा स्मृतिसन्ततिरेव। तत्प्रकर्षजमपि ज्ञानं स्मृतिविशेष एवेति न प्रमाणम्, न वा प्रत्यक्षमित्यलमतिविस्तरेण।

युक्तमिति। तदात्मकता—प्रकाशात्मकतेत्यर्थः। दूषणान्तरमाह—अपि चेति। ज्ञानाव्यतिरिक्तस्यैव प्रकाशः, तर्हि ग्राह्यतया ग्राहकतया संवित्तितया च भेदप्रतिभासो न स्यात्। भेदस्य तुच्छरूपस्य प्रकाशानन्तर्गतत्वादिति [2]कीर्त्युक्तयुक्त्याऽऽकारस्याभिन्नत्वं यदुक्तम्, तदप्यग्राह्यमित्याह—यच्चेति। अर्थस्य वित्तेर्भिन्नत्वेऽपि नियमोपपत्तेः। उपपत्तिमेव दर्शयति—यैव हीति। वित्तिरेव ह्यर्थस्योपलब्धिरिति तां विना—उपलब्धिं विना कथमर्थः प्रकाशेत—उपलम्भं विनोपलभ्येत व्याहतत्वादित्यर्थः।

प्रत्यक्षस्य चातुर्विध्याभिधानसमये चित्तचैत्तानां स्वसंवेदनं प्रत्यक्षमित्युक्तम्, विज्ञानाभिन्नहेतुत्वाच्चैत्तानां सुखादीनां संवेदनात्मकत्वं चोक्तम्। तदनूद्य दूषयति—यच्चेति। वृत्तीनां स्वसंवेदनमङ्गीक्रियत एव। सुखादीनान्तु विज्ञानाभिन्नहेतुकत्वमसिद्धम्, असिद्धिं दर्शयति—अर्थस्येति। ज्ञानस्य सुखादिनिमित्तत्वमाह—असन्निहिते इति।

योगिज्ञानस्य प्रत्यक्षत्वं बौद्धाभिमतमनूद्य दूषयति—यच्चेति। प्रमाणत्वे सति तद्विशेषः प्रत्यक्षम्। भूतार्थभावना—पुनः पुनः चेतसि निवेशनम्, तस्याः प्रकर्षपर्यन्तजस्य प्रमाणतैव न संभवति, स्मृतिरूपत्वात्। स्मृतिरूपत्वमेव दर्शयति—प्रमाणेन हीति। भावना नाम—प्रमाणेन भूतार्थस्य चेतसि पुनः पुनर्निवेशनम्, तच्च स्मृतिरूपमेव।

---

[1] ज्ञानरूपाननुप्रविष्टत्वादिति मु. पु. पा.।

[2] ज्ञानानतिरिक्तमिति ख० पुस्तके।

वृत्तिकारमतस्यानुवादतन्निरासौ ।

[1]यदपि केचिन्मन्यन्ते "तत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत् प्रत्यक्षम्" [१-१-४] इति प्रत्यक्षलक्षणम् । तदप्यव्यापकत्वादलक्षणम् । स्वात्मनि लिङ्गादिजापि प्रतीतिः प्रत्यक्षत्वेनेष्यते, सकलप्रतीतीनाञ्च स्वरूपं प्रति प्रत्यक्षताऽभिमतेति, [2]किमिदमुच्यते—तत्सम्प्रयोग इति ।

उच्यते—ये शुक्तिकारजतादिज्ञानादिष्वपि प्रत्यक्षतामाहुः, ते निराक्रियन्ते । प्रमेयेषु हि लोके तदेव प्रत्यक्षमित्युच्यते यद्विषयं ज्ञानम्, तेनैवेन्द्रियाणां सम्प्रयोगे पुरुषस्य यद् ज्ञानं जायते । न च शुक्तिकासम्प्रयुक्ते चक्षुषि यद्रजतज्ञानं जायते तदेवंविधम् । तस्मान्न रजतज्ञानं प्रत्यक्षम् । रजतज्ञानं हि रजतविषयम्, न च रजतेनेन्द्रियं सम्प्रयुक्तम्, रजतस्य तत्रासन्निहितत्वात् । [3]तस्मान्न रजतज्ञानं प्रत्यक्षम् । किन्तर्हि स्मरणं तत्, इति

प्रकर्षजमपि स्मृतिविशेष एव । प्रकर्षोऽपि ज्ञानस्य स्फुटार्हत्वारम्भ इति न प्रमाणम्, न वाऽनुभूतिः, अत एव न प्रत्यक्षमित्यर्थः ।

तत्सम्प्रयोगे पुरुषस्येन्द्रियाणामित्यन्योक्तं प्रत्यक्षलक्षणमव्यापकत्वादलक्षणमित्याह—**यदपीति** । कथमव्यापकत्वमित्यत्राह—**स्वात्मनीत्यादिना, प्रत्यक्षताऽभिमतेत्यन्तेन** । सत्यर्थेन्द्रियसम्प्रयोगे—सम्प्रयुक्तार्थगोचरं विज्ञानं प्रत्यक्षमस्तु, तत्सम्प्रयोग इति तत्सद्व्यत्ययेन सम्प्रयोगस्य स्वीकृतत्वादित्याह—**किमिदमुच्यत इति** । शुक्तिकासम्प्रयुक्ते चक्षुषि यद्रजतज्ञानम्, तत्प्रत्यक्षमिति मतं निराकर्तुमिदमित्यर्थः । कथं तेन तन्निराकरणम् । तत्राह—**प्रमेयेष्विति** । ज्ञानविषयेणैव सम्प्रयोगे प्रत्यक्षव्यवहारो लोके इत्यर्थः । अत्रापि सम्प्रयोगोऽस्त्वित्यत्राह—**न चेति** । अन्यसम्प्रयोगजनिते ज्ञाने अन्यविषयज्ञानं न तत्सम्प्रयोगजनितम् । अतो न तत् प्रत्यक्षमित्यर्थः । विषयाभावात्कथं रजतज्ञानम् । तत्राह-**रजतज्ञानं हीति** । संविदि भासमानत्वं विषयत्वमिति, रजतमेव

---

[1] वृत्तिकारेण प्रत्यक्षसूत्रं यथाश्रुतं न प्रत्यक्षलक्षणनिरूपणपरं भवितुमर्हति, अतिव्याप्त्यादिदोषात् । अतस्तत्सतोर्व्यत्यासमङ्गीकृत्य प्रत्यक्षस्य लक्षणं वर्णनीयमित्युक्तम् । तदेव दर्शयति—"यदपीत्यादिना प्रत्यक्षमि"त्यन्तेन ग्रन्थेन । तत्सम्प्रयोगे जायमानं ज्ञानं प्रत्यक्षम् । अन्यसम्प्रयोगे तु जायमानं प्रत्यक्षाभासः इति तदर्थो बोध्यः ।

[2] किन्तर्हीति ख. पु. पा. ।

[3] प्रत्यक्षसूत्रं लोकसिद्धप्रत्यक्षलक्षणानुवादकमिति कुमारिलभट्टस्य मतम् । वृत्तिकारमतन्तु पूर्वमुदाहृतम् । प्राभाकरास्तु—इदं रजतमित्यत्र अनुभवसामग्रीविरहेण रजतज्ञानस्य प्रत्यक्षतां निरस्य पारिशेष्यात्तत्तांशे प्रमोषमभिदधानाः स्मृतिरूपतामुररीकुर्वन्ति । अत्र-

दर्शयितुं सूत्रमिदमिति वर्णनीयम् ।

गुरुमतेन प्रत्यक्षलक्षणम् ।

स्वाभिमतमिदानीं प्रत्यक्षलक्षणमाह—"साक्षात्प्रतीतिः प्रत्यक्षमि"ति ।

विषयः । तथापि किमित्याह—न चेति । रजतस्येन्द्रियसम्प्रयोगो नास्ति, तस्य तत्राऽभावात् । उपसंहरति—तस्मादिति । कथं प्रतीतिरिति प्रश्नपूर्वकं निर्वाहमाह—[1]किन्तर्हीति । मेयप्रत्यक्षं सम्प्रयुक्तविषयमिति दर्शयितुं सूत्रम्, न प्रत्यक्षलक्षणपरमित्यर्थः ।

एवं परोक्तानि प्रत्यक्षलक्षणानि दूषयित्वा स्वाभिमतं प्रत्यक्षं दर्शयितुमाह—स्वाभिमतमित्यादिना । तत्र श्लोके साक्षात्त्वमुक्तम् । किमिदं साक्षात्त्वं नाम ? [2]अर्थधर्मः ? उत ज्ञानधर्मः ? अथ ज्ञातृधर्मः ? इति, सर्वदा सर्वज्ञानानां प्रत्यक्षत्वप्रसङ्गो दूषणम्, अतो न ज्ञायत इत्याशङ्क्य स्वयमेव श्लोकं व्याचष्टे—साक्षात्प्रतीतिरिति । [3]साक्षात्त्वमपि स्वेन रूपेण वस्तुभानम्, लिङ्गादिभिः न स्वेन रूपेण वस्तु प्रथते, किन्तु परसंबन्धितारूपेण । अक्षमक्षं प्रति वर्तत इति प्रत्यक्षम् । सविकल्पकज्ञाने नामादिरूपतो यद्यपि वस्तु भाति, तथापि स्वरूपतो भानात्साक्षात्त्वमस्त्येव ।

अथवा—स्वोत्पत्तौ स्वविषयानन्तर्गतार्थान्तरज्ञानानपेक्षस्वभावज्ञानं साक्षाज्ज्ञानम्, सविकल्पकज्ञानस्य निर्विकल्पकापेक्षत्वेऽपि स्वविषयानन्तर्गतार्थान्तरविषयत्वाभावान्नास्ति व्यभिचारः । ननु सादृश्यज्ञानस्य स्वविषयानन्तर्गतार्थान्तरभूतप्रतियोगिज्ञानापेक्षत्वान्न [4]प्रत्यक्षत्वम् । मैवम् । तत्रापि भेदादिव्यवहार एव प्रतियोगिज्ञानापेक्षा, न ग्रहणे इत्युक्तत्वात् ।

[5]अथवा—स्वकाले विद्यमानवस्तुसत्तावबोधस्वभावं ज्ञानं साक्षाज्ज्ञानम्, अनुमानादि तु [6]व्याप्तिकालावच्छिन्नवस्तुसत्तावबोधस्वभावमिति न प्रत्यक्षमिति ।

---

त्योऽधिको विशेषो नयवीथ्यां द्रष्टव्यः । इत्याशयवान्स्वाभिमतमर्थं सूत्रस्य दर्शयति तस्मादित्यादिना…वर्णनीयमित्यन्तेन ।

[1] किन्तु इति मु. पु. पा. ।

[2] अत्र पक्षत्रये प्रथमः पक्षो भाट्टानामभिमतः, द्वितीयः अन्येषाम्, अन्तिमपक्षस्तु गुरूणामभिमतः । अयमर्थो मूल एव स्फुटीभविष्यतीत्यवधेयम् ।

[3] अत्र टीकाकारः साक्षात्प्रतीतिः प्रत्यक्षमिति प्रत्यक्षलक्षणघटकं साक्षात्त्वम्—स्वरूपप्रतीतिः, स्वोत्पत्तौ स्वविषयानन्तर्गतार्थान्तरज्ञानानपेक्षस्वभावम्, स्वकालाकलितवस्तुसत्तावबोधकत्वं वेति त्रेधा वर्णयामास । अस्य मूलं प्रभाकरविजयस्य पञ्चमं प्रत्यक्षलक्षणप्रकरणम् । [ पृ. २६ ] त्रेधा निरुक्तस्यास्य साक्षात्त्वस्य निरासश्चिदानन्दपण्डितेन व्यधायि, अस्य विस्तरस्तत्रैव द्रष्टव्यः । (नीति—तत्त्व पृ. ४३-४४.)

[4] प्रत्यक्षप्रसङ्गः ।

[5] ग० पु० अथेत्यधिकः ।

[6] कालादिषु अवच्छिन्नेति क० पुस्तके पाठः ।

ननु भावनाप्रकर्षपर्यन्तजा स्मृतिरपि साक्षात्कारवती प्रत्यक्षं प्रसज्यते । न । प्रमाणाधिकारात् । अनुभूतिः प्रमाणम्, तद्विशेषश्च प्रत्यक्षमिति न [1]स्मृतेः प्रत्यक्षत्वापत्तिः ।

प्रत्यक्षस्य [2]विषयमाह—"मेयमातृप्रमासु सा" । तत्र विभागमाह—"मेयेष्विन्द्रिययोगोत्था" द्रव्यजातिगुणेष्विन्द्रियसंयोगोत्था सा-प्रत्यक्षा प्रतीतिः मेयेष्विन्द्रियसंयोगेन, तत्संयुक्तसमवायेन, समवायेन च जायते ।

कानि पुनरिन्द्रियाणि ? घ्राण-रसन-नयन-त्वक्-श्रावणानि बाह्यानि, आन्तरश्च मनः । किं पुनरेषामस्तित्वे, भेदे च प्रमाणम् ? उच्यते—विषयावबोधस्तावत्कादाचित्को दृश्यते, तस्य चात्मा समवायिकारणम्, असमवायि-

इदानीं योगिज्ञाने अतिव्याप्तिमाशङ्कते—ननु भावनेति । परिहरति—नेति । उत्तरपादं दर्शयितुमाह—प्रत्यक्षस्येति । द्वितीयं पादमाह—मेयमातृप्रमास्विति । साक्षात्प्रतीतिः मेयमातृप्रमास्वित्यर्थः । तृतीयं पादं दर्शयितुमाह—मेयेष्विति । पादस्याध्याहार्यं शेषमाह—प्रत्यक्षा प्रतीतिरिति । इन्द्रिययोगशब्देन [3]संयोगः[3] संयुक्तसमवायः समवायश्चेति त्रिविधस्सन्निकर्षो गृह्यत इत्याह—मेयेष्विति । ततस्संयोगाद्रूपवन्महत्त्ववत् स्पर्शवद्द्रव्यं प्रतीयते, संयुक्तसमवायात् तदाश्रयजातिगुणसंख्यासादृश्यादीनां ग्रहणम्, समवायाच्छब्दग्रहणमिति ।

कानि पुनरिति पृष्टे—उत्तरम्—[4]घ्राणरसनेति ।

किंपुनरिति पृष्टे—उत्तरमुच्यत इति । सर्वेन्द्रियसाधारणत्वात्स्वस्यान्येन्द्रियानपेक्षत्वाच्च प्रथमं मनस्सद्भावं वक्तुमारभत इत्यभिप्रायः । तस्य—विषयबोधस्येत्यर्थः ।

ननु कारणभूतस्यात्मनो नित्यत्वादेव सर्वदा सद्भावात्सर्वदा कार्योत्पत्तिप्रसङ्ग इत्यत्राह—असमवायिकारणेनेति ।

---

[1] स्मृताविति, मु. पु. पा. । [2] विशेषमिति, मु. पु. पा. ।

[3] संयोगादयो इति ग० पुस्तके ।

[4] अनागतावेक्षणन्यायेन गौतमोक्तप्रत्यक्षलक्षणखण्डनावसरे संयोगादीन् षट् सन्निकर्षान्निरस्य सन्निकर्षत्रयं मूले प्रतिपादितम् । तदेव व्याख्याकारोऽत्र निर्दिशतीति ध्येयम् ।

[5] घ्राणादीनां पञ्चानां बाह्येन्द्रियाणां मध्ये आद्यानि चत्वारि पृथिव्यप्तेजोवायुप्रकृतीनीति तार्किकवद् भाट्टैः प्राभाकरैश्च मीमांसकैः स्वीक्रियन्ते । श्रोत्रविषये परं विवादः । तत्र भाट्टाः—दिशः श्रोत्र [तै. ब्रा. का. ३-६-६] मिति अध्रिगुप्रैषगतं वाक्यं प्रमाणयन्तः दिगात्मकं श्रोत्रमित्याचक्षते । अत एव कुमारिलः सोत्प्रासमिदमाह—

यदि ह्यवश्यं कर्तव्यः तार्किकोक्तिविपर्ययः ।
ततो वेदानुसारेण कार्या दिक्श्रोत्रता मतिः ।। श्लो. वा. श. अं. १४९-५० ।

कारणेन विना कार्यं न जायते। तच्चासमवायिकारणं समवायिकारणप्रत्यासन्नं भवति। प्रत्यासत्तिश्च द्विधा दृष्टा—कार्यसमवायस्तत्कारणसमवायश्च। अग्निसंयोगो हि पाक्यद्रव्यसमवेतोऽसमवायिकारणभूतस्तत्रैव गन्धादिकमारभते। तन्तुरूपाणि पटकारणभूतेषु तन्तुषु समवेतानि पटरूपारम्भेऽसमवायिकारणानि। तत्र तावदात्मनो नित्यत्वात्तत्कारणसमवेतमसमवायिकारणं न भवतीत्यात्मसमवेतमेव गुणान्तरमसमवायिकारणमाश्रयणीयम्।

तत्र नित्यद्रव्यसमवायिनो वैशेषिकगुणस्य द्रव्यान्तरसंयोग एवासमवायिकारणत्वेनावधारितः। पार्थिवपरमाणुषु रूपादयोऽग्निसंयोगमेवासमवायिकारणमाश्रित्योत्पद्यमानाः प्रतीता इत्यात्मनोऽपि बोधाख्यो धर्मो द्रव्यान्तरसंयोगमेवासमवायिकारणमाश्रयते। तस्य च द्रव्यस्याश्रयभूतद्रव्यान्तरसद्भावे प्रमाणाभावादद्रव्यद्रव्यत्वं निश्चीयते। द्विविधं चाद्रव्यद्रव्यम्—परममहदाकाशादिकम्, परमाणुरूपश्च। तत्रास्य द्रव्यान्तरस्य परममहत्त्वोपगमे संयोग एवानुपपन्नः। संयोगकारणाभावात्। यो हि संयोगः साक्षात्प्र-

ननु किमिदमसमवायिकारणं नामेत्यत्राह—तच्चेति। ननु केयं प्रत्यासत्तिरित्यत्राह—प्रत्यासत्तिश्चेति। तत्समवायस्य उदाहरणमाह—अग्निसंयोगो हीति। तत्कारणसमवायोदाहरणमाह—तन्तुरूपाणीति। तन्तुसमवेतानि शौक्ल्यादिरूपाणीत्यर्थः।

ननु किमिह पुनस्तत्समवेतमसमवायिकारणं तत्कारणसमवेतं वेत्यत्राह—तत्र-तावदिति। ननु भवत्वेवमसमवायिकारणम्, ततः किमित्याशङ्क्य नित्यद्रव्यसमवायिनो वैशेषिकगुणस्य मूर्तद्रव्यान्तरसंयोग एवासमवायिकारणत्वेनावधारित इत्याह—तत्रेति। ननु कुत्रेदं दृष्टम्। तत्राह—पार्थिवपरमाणुष्विति। प्रयोगस्तु—विवादाध्यासिता बुध्यादयो गुणा मूर्तद्रव्यान्तरसंयोगासमवायिकारणजन्याः [1]नित्यद्रव्यगतवैशेषिकगुणत्वात्, पार्थिवपरमाणुषु गन्धादिवदिति।

ननूभयमूर्तत्वे मूर्तद्रव्यसंयोगोऽसमवायिकारणतया व्याप्तः, अन्यतरमूर्तत्वे वा आत्मनोऽमूर्तत्वादेव मूर्तद्रव्यसंयोगो भवतु, किं मनस एव मूर्तत्वम्? उच्यते—वैभव-

---

यावांश्च कणभुङ्न्यायः नभोभागप्रकल्पने।
दिग्भागेऽपि समस्तोऽसावागमात्तु विशिष्यते॥ १५३ श्लो. वा. श. अं. इति च।

प्राभाकरास्तु तार्किकमतमनुवर्तमानाः आकाशात्मकमेव श्रोत्रमाचक्षते। अस्य विस्तरः तत्त्वालोके द्रष्टव्यः।

[1] समवेतेति ग० पुस्तके।

तीयते, सोऽन्यतरकर्मजः, उभयकर्मजः, संयोगजो वा। तेन नियतकारणत्वेन संयोगस्यावगतत्वात्, तदभावे संयोग एव नास्तीति निश्चीयते। न च परम-महतोः साक्षात्संयोगो [१]भवति, न वाऽनुमातुं शक्यत इति पारिशेष्यादणुत्वमेव तस्य [२]द्रव्यस्याश्रीयते।

साधकप्रमाणविरोधादात्मनो मूर्तत्वं कल्पयितुं न शक्यते, उभयमूर्तत्वेन व्याप्तौ कार्यस्याकारणत्वापत्तेर्मनस एव मूर्तत्वं कल्प्यते। यथा—आत्मेन्द्रियार्थाः कारणान्तरसापेक्षाः सद्भावेऽप्यनुत्पाद्योत्पादकत्वादाद्यतन्तुसंयोगवत्। तथा—प्रयत्नज्ञानेच्छादयः कारणान्तरसापेक्षाः क्रमेणैवोत्पद्यमानत्वात्, यस्तु पुनः कारणान्तरनिरपेक्षः, स युगपदुत्पद्यते। यथा—तुलाया नमनोन्नमने इति।

तच्च द्रव्यं न पार्थिवम्, आप्यम्, तैजसम्, वायवीयं वा संभवति, तत्संयोगस्य ज्ञानासमवायिकारणत्वेनान्यत्रादर्शनात्। किञ्च पार्थिवादीनां चतुर्णां द्रव्यारम्भकत्वनियमोऽपि दृष्टः, न चेदं तथाविधम्, तदारभ्यद्रव्यान्तराभावात्। अतस्तद्व्यतिरिक्तं द्रव्यान्तरं स्वीकरणीयम्। ननु किं तद् द्रव्यं सावयवं? उत निरवयवमित्यत्राह—**तस्य चेति**। अवयवसद्भावे प्रमाणाभावान्निरवयवत्वमेवेत्यर्थः। तच्च नित्यं द्रव्यत्वे सति निरवयवत्वादाकाशादिवत्। निरवयवद्रव्यमपि द्विविधमित्याह—**द्विविधमिति**। ततः किमित्याह—**तत्रास्येति**। कुत इत्याह—**संयोगकारणाभावादिति**। यत्र यत्र संयोगः प्रत्यक्षेण गृह्यते, तत्र सर्वत्रान्यतरकर्मजत्वम्, उभयकर्मजत्वम्, संयोगजत्वं वा दृष्टमिति विभुद्वयस्योक्तकारणाभावादप्राप्तयोः प्राप्तिलक्षणः संयोगो नास्तीति निश्चीयते। ननु यद्यपि क्रियागर्भ एव सर्वस्संयोगः, तथापि कार्यसंयोगे एवायं नियमः, न नित्ये, यथा अवयवमहत्त्वबहुत्वव्याप्तं महत्त्वं कार्यद्रव्य एव, न नित्य इति, नित्येऽवयवबहुत्त्वमहत्त्वाभावेऽपि महत्त्वमस्ति, तथा क्रियाभावेऽप्यजसंयोगो विभुद्वयस्य निरन्तरावस्थानात् सत्वेना नुमातुं शक्यते। प्रयोगस्तु-विभू अपि संयुक्तौ निरन्तरावस्थितद्रव्यत्वात्, घटद्वयवत् इति। अत्राह—**न वानुमातुं शक्यत इति**। निरन्तरावस्थितद्रव्यत्वे सत्यवयवावयविनोस्संयोगाभावेनानेकान्तत्वान्न निरन्तरावस्थितद्रव्यत्वादजसंयोगानुमानम्।

किञ्च विशेषविरोधोऽपि। तथाहि—यथा निरन्तरावस्थितानां संयोगो दृष्टः, तथा साक्षात्परम्परया वा क्रियावत्त्वमपि व्याप्तावन्तभूतं जगन्निर्माणकर्तरि विग्रहादिवत्, तस्माद्विशेषविरोधः। किञ्च अजसंयोगस्यासमवायिकारणत्वमन्यत्रादृष्टम्, प्रत्युत कार्यभूतस्यैव। परमाण्वादिष्वसमवायिकारणत्वं दृष्टमित्यजसंयोगाभ्युपगमो व्यर्थ एव। यदि सर्वगतं मनस्स्यात्, तदा बाह्येन्द्रियग्राह्यता स्यात्। सर्वगतद्रव्यस्यात्मव्यतिरिक्तस्य भवन्मते करणग्राह्यत्वेन व्याप्तत्वान्मनसोऽपि करणग्राह्यत्वप्रसङ्गो दुर्निवारः। ततश्च करणग्राह्यत्वं निवर्त्तमानं तस्य सर्वगतत्वमपि निवर्तयति।

---

[१] भाति इति ग. पु. पा.। [२] द्रव्यान्तरस्येति. मु. पु. पा.।

[३] अनुपपन्नो न भवति, इति. मु. पु. पा.।

**अणुत्वे च तत्कर्मवशादेव संयोगोदयो नानुपपन्नः।**

**तत्कर्मोत्पत्तौ च प्रयत्नवदात्मनः संयोग एव कारणम्, शरीरकर्मवत्।**

तथा—धर्मिग्राहकप्रमाणविरोधादेव विभुत्वसाधकानां [1]परैरुक्तानां ज्ञानासमवायिकारणसंयोगाश्रयत्वात्, द्रव्यत्वे सत्यस्पर्शत्वात्, निरवयवद्रव्यत्वे सति द्रव्यान्तरानारम्भकत्वात्, द्रव्यत्वे सत्यरूपत्वात्। स्पर्शशून्यत्वे सतीन्द्रियत्वादाकाशादिवदिति हेतूनामनवतार एव।

किञ्च असर्वगतं मनः संयोगकारणत्वात्, परमाणुवत्। किञ्च सर्वगतत्वे मनसो नानात्वं गगनवन्न सिध्येत्, आत्मव्यतिरिक्तस्य नानाभूतस्य विभुद्रव्यस्यानङ्गीकारात्। न च वाच्यं नानाभावाभावे व्यवस्था न स्यादिति नानात्वमङ्गीक्रियते। एवं तर्हि गगनस्य नानात्वं कर्णशष्कुल्याद्यौपाधिकं भिद्यत एवेति चेत्तर्हि धर्माधर्मबलादेव मनसोऽपि भेदो गगनवत्स्यात्। न चैकत्वं मनसो भवतामपि सम्मतम्, एकस्मिन्मुक्ते संसाराभावप्रसङ्गात्।

ननु यदि न विभुत्वं तर्हि मध्यमपरिमाणमेवास्त्विति चेन्मध्यमपरिमाणे व्यवस्थाऽनिरूपणात्। परिशेषादणुत्वमेवेत्याह—पारिशेष्यादिति[2]। मनो अणु नित्यद्रव्यत्वे

---

[1] मानमेयोदयकारोक्तान् विभुत्वसाधकान् हेतून्निरस्यति—परैरित्यादिना—अनवतारइत्यन्तेन।

[2] प्राभाकरास्तु—नैयायिकमतमनुवर्तमानाः कर्णशष्कुल्यवछिन्नं आकाशमेव श्रोत्रं मन्वते। अत एवाष्टमे प्रकरणे "यत् शब्दगुणकं दव्यमाकाशपदावेदनीयं तदेव श्रोत्रमिति सिद्धमि"त्यत्र कण्ठरवेणाकाशात्मकं श्रोत्रमिति ग्रन्थकारः कथयति। मनोविषये पृथिव्यादीनामेवान्यतमात्मकं तेभ्योऽन्यद्वा इति उभयेषां भाट्टानां प्राभाकराणाञ्च मीमांसकानां समानम् इति ध्येयम्।

मनसः परिमाणविषये प्रायशो मतद्वयं वर्तते। विभु, अणुपरिमाणञ्चेति। तत्राद्यं मतं भट्टमतानुयाभिरङ्गीकृतम्। तत्रानुमानमेव प्रमाणम्। तथाहि—मनो विभु स्पर्शानर्हद्रव्यत्वात्। अनारभ्यारम्भद्रव्यत्वात् ज्ञानासमवायिकारणसंयोगाधारत्वादात्मवदित्यादि। एतैर्हेतुभिर्विभुत्वं साधयन्ति। एतदुपपादनाय विभुद्वयसंयोगोऽङ्गीक्रियते, स च नित्य इति।

प्राभाकरास्तु "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्।" [न्या. सू. १-१-१६.] "आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्" [वै. सू. ३-२-१] इति न्यायवैशेषिकमतमनुसरन्तो विभुनात्मनाधिकृतेषु चक्षुरादिन्द्रियेषु नानार्थसम्बद्धेष्वपि यत्संयोगक्रमवशाद् ज्ञानोत्पत्तिक्रमः प्रक्रमते, तन्मनः। एवञ्चाणुनो मनसस्सिद्धिः।

भाट्टमतानुयायी मण्डनाचार्यः "मनोभूतपरिस्पन्द आत्मनस्तत्प्रयत्नजः" [भा. वि. श्लो. ४९] इति कथयन् मनसोऽणुत्वमभिप्रैति। इन्द्रियभावस्त्वणुन एव मनस इति ब्रुवाणो न्यायकणिकाकारोऽपि मनसोऽणुत्वमेवातिष्ठते। तथा च प्राभाकरमतेऽणुपरिमाणं मनः। प्राभाकरैर्विभुद्वयसंयोगो नाङ्गीक्रियते। अजसंयोगं टीकाकारस्स्वयमेवाग्रे निरसिष्यति। तथा च विभुत्वसाधकहेतवस्सर्वे धर्मिग्राहकप्रमाणबाधिता भवन्तीति ध्येयम्।

प्रयत्नाभावे[1] चादृष्टवदात्मसंयोगकारणता वायुतिर्यक्पवनवत्। तदुक्तम्—"[2]अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्म अदृष्टकारित, [वै. द. अ. ५. आ. २. १३.] मिति। सुखदुःखेच्छाद्वेषप्रयत्नानुभवे यत्, तत् द्रव्यान्तरं मनश्शब्दाभिधेयं निरपेक्षं कारणम्, सर्वस्मृतिषु[3] पूर्वग्रहणजनित-संस्कारोद्बोधसहकार्यनुगृहीतमिति [4]विवेक्तव्यम्।

एतेन [5]यदाहुः—

षण्णामनन्तरातीतं विज्ञानं यद्धि तन्मनः। [अभि. ध. को. स्था.-१७] इति,

सति मूर्तत्वात्, परमाणुवत्। मनोऽणु मूर्तद्रव्यत्वे सति निरवयत्वात्परमाणुवत्। मनसोऽणुत्वे सिद्धे अण्वाश्रितकर्मवशादेव संयोगोप्युपपन्न इत्याह—अणुत्व इति। तत्कर्मोत्पत्तौ चेति। यथा प्रयत्नवदात्मशरीरसंयोगाच्छरीरे कर्म जायते। तथा प्रयत्नव दात्ममनस्संयोगान्मनसि क्रिया जायत इत्यर्थः।

ननु कर्मोत्पत्तौ प्रयत्नापेक्षा विद्यते। तर्हि सुषुप्त्यादौ प्रयत्नाभावे कथं कर्मोत्पत्ति-रित्यत आह—[1]प्रयत्नाभावे चेति। अदृष्टस्य कारणत्वे दृष्टान्तमाह—वायुतिर्यगिति। ननु तिर्यक्पवनं कथमदृष्टनिबन्धनमित्यत्राह—तदुक्तमिति। भगवता काश्यपेन पदार्थविदामग्रगण्येनैवमुक्तमित्यर्थः।

ननु यदि इन्द्रियत्वेन तत्कल्पनम्, तर्हि तेन कल्पितेनान्येन्द्रियानपेक्षेण किं गृह्यत इत्यत्राह—सुखदुःखेच्छाद्वेषेति। मनसस्सुखादिसंबन्धात्सुखादिज्ञानोत्पत्तौ निरपेक्ष-कारणत्वम्, स्मृतिज्ञानोत्पत्तौ तु पूर्वानुभवजनितसंस्कारोद्बोधसहकार्यनुगृहीतस्य कारण-त्वमित्याह—सर्वस्मृतिष्विति।

[6]एतेनाष्टद्रव्यव्यतिरेकेण मनश्शब्दाभिधेयस्य द्रव्यान्तरस्याभ्युपगमेन बौद्धोक्तं निराकृतमित्याह—एतेनेति।

षण्णामनन्तरातीतं विज्ञानं यच्च तन्मनः। इति,

बौद्धग्रन्थस्यायमर्थः—रूपादिविज्ञानान्यैन्द्रियकाणि पञ्च, तज्जन्यं मानसमेक-मित्यर्थः। षण्णां मध्ये यदनन्तरातीतं विज्ञानमैन्द्रियकम्, तन्मन इति।

---

[1] प्रयत्ने चासति. इति. मु. पु. पा.।

[2] 'अणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितान्येतानि' इति मु. पु. पा. दृश्यते। आकरग्रन्था-नुसारी पाठोऽस्माभिरुपरि निवेशित इति ध्येयम्।

[3] सर्वार्थस्मृताविति. मु. पु. पा.। [4] चिन्तनीयमिति. मु. पु. पा.।

[5] प्रयत्ने असति इति ख पाठान्तरम्। [6] अष्टद्रव्यातिरिक्तमनश्शब्देति ग. पुस्तके।

[7] अत्र बौद्धग्रन्थशब्देन वसुबन्धुना प्रणीतः, अभिधर्मकोशो विवक्षितः। तत्र शालि-

तदपि निराकृतम् । द्रव्यान्तरसंयोगस्यैव नित्यद्रव्यगतवैशेषिकगुणारम्भेऽसमवायिकारणत्वेन दृष्टत्वात् ।

रूपग्रहणे रूपवदालोकस्य निमित्तत्वदर्शनाद्रूपवदेवेन्द्रियं रूपग्रहणनिमित्तमिति कल्पनीयम् । तथा—गन्धवदेव गन्धग्रहणे निमित्तम् । तथा—स्पर्शवच्च स्पर्शग्रहणे निमित्तम् । रसवच्च रसग्रहणे निमित्तम् । शब्दवदेव शब्दग्रहणे निमित्तम्, इति वेदितव्यम् । तेन गन्धवत्पार्थिवं घ्राणं गन्धग्रहण-

यद्वा विज्ञानेन्द्रियार्थक्षणाः कारणभूतास्त्रयः, कार्यभूतास्त्रय इति षण्णां मध्ये यदनन्तरातीतं विज्ञानम्, तन्मन इति ।

कथमित्याह—द्रव्यान्तरसंयोगस्यैवेति ।

तत्र वैशेषिकगुणलक्षणमप्येकेन्द्रियग्राह्यत्वमेव । रूपग्रहणहेतुभूतं चक्षुरिन्द्रियं रूपवत्, बहिरिन्द्रियत्वे सति रूपग्रहणहेतुत्वात्, आलोकवदित्येवमिन्द्रियाणां तत्तदसाधारणगुणवत्त्वमुपपादयन्प्रथमं चक्षुषो दर्शयति—रूपग्रहण इति । तथा – गन्धवदेव घ्राणेन्द्रियं गन्धग्रहणे कारणमित्याह—तथा—गन्धवदिति । तथा – स्पर्शवच्च त्वगिन्द्रियं स्पर्शग्रहणे कारणमित्याह—स्पर्शवच्चेति । तथा – रसवदेव रसनेन्द्रियं रसग्रहणे कारणमित्याह—रसवच्चेति । तथा शब्दवदेव आकाशं शब्दग्रहणे कारणमित्याह—शब्दवदेवेति । ननु सुखाद्युपलम्भकतया मनसः सुखादिमत्त्वं स्यात्, मैवं; बहिरिन्द्रियत्वे[1] सतीति विशेषितत्वात् ।

यद्वा—भूतासाधारणरूपादिगुणग्राहकत्वेन तत्तद्गुणवत्त्वमुच्यते । अतएव परिमाणादिग्राहकत्वे परिमाणादिमत्त्वमपि नेष्यते । एवं तत्तदसाधारणत्वे उपपादिते तत्तदसाधारणगुणवत्त्वात्तत्तद्भूतविकारत्वं दर्शयन् गन्धज्ञानकार्यानुमेयं गन्धवद्घ्राणेन्द्रियं पार्थिवं इन्द्रियत्वे सति नियमेन गन्धाभिव्यञ्जकत्वात्, हिङ्ग्वादिद्रव्यवत् इत्याह—गन्धवत्पार्थिवमिति । पृथिव्याः रसरूपस्पर्शवत्वेऽपि तेषामनुपलम्भकत्वादाप्यत्वं तैजसत्वम्, वायवीयत्वञ्च निरस्तमेव । गन्धाभिव्यञ्जकत्वात् गन्धोत्कर्षवत्पार्थिवमेव जलाद्यभिभूतैः पार्थिवपरमाणुभिः गन्धस्यानारभ्यत्वं द्रष्टव्यम् ।

---

कनाथेन सप्तदशस्य श्लोकस्य पूर्वार्धमुद्धृतम्, तस्योत्तरार्धन्तु—

[ षष्ठाश्रयप्रसिध्यर्थं धातवोऽष्टादशा स्मृताः ] इति ।

अनेन श्लोकेन वसुबन्धुराचार्यो मनः प्रासीसधत् । मनस्साधनप्रकारस्य पूर्वमुक्तत्वाद्वसुबन्धुनोक्तो मनस्साधनप्रकारो निरस्त इति विभावनीयम् । एतत्सदृशमेव पद्यं तत्त्वसङ्ग्रहे शान्तरक्षितेनोक्तम्—

चक्षुराद्यतिरिक्तन्तु मनोऽस्माभिरपीष्यते ।
षण्णामनन्तरोद्भूतप्रत्ययो यो हि तन्मनः ।। इति । ६३१ श्लो.

[1] बहिरिन्द्रियत्वेन विशेषितत्वादिति ग. पुस्तके ।

**कारणम्, रसवच्चाम्भसं रसनं रसानुभवनिमित्तम्। रूपवच्च तैजसं चक्षू—रूपदर्शनहेतुः।**

**वायवीयं स्पर्शवत् त्वगिन्द्रियं[१] स्पर्शग्रहणहेतुः। शब्दगुणवच्चाकाशं श्रोत्रेन्द्रियं शब्दग्रहणहेतुः।**

**इन्द्रियसम्बन्धापन्नस्यापि[२]चार्थस्य विषयान्तरासक्तचित्तस्याप्रतिपत्तेः[३] मनस्संयोगापेक्षा इन्द्रियाणामाश्रीयते। तेनाभ्यन्तराणां सुखादीनां ग्रहणे सन्निकर्षद्वयं कारणम्—आत्ममनस्संयोगाख्यः[४] सन्निकर्षः, सुखादिमनस्सन्निकर्षश्च संयुक्तसमवायलक्षणः। बाह्यरूपादिग्रहणे च सन्निकर्षचतुष्टयं**

तथा—रसज्ञानकार्यानुमेयं रसवद्रसनेन्द्रियं आप्यं इन्द्रियत्वे सति नियमेन रसाभिव्यञ्जकत्वात् लालावदित्याह—**रसवच्चाम्भसमिति**। अत्रापि पूर्ववद्गन्धस्पर्शानुपलम्भकत्वात्पार्थिवत्वाद्यभावो द्रष्टव्यः।

तथा—रूपोपलब्धिकार्यानुमेयम्—रूपवच्चक्षुरिन्द्रियं तैजसं इन्द्रियत्वे सति नियमेन रूपाभिव्यञ्जकत्वाद्दीपवदित्याह—**रूपवच्चेति**। अस्यापि गन्धरसस्पर्शानुपलम्भकत्वात्पार्थिवत्वाद्यभावो द्रष्टव्यः।

तथा—स्पर्शोपलब्धिकार्यानुमेयं स्पर्शवत्स्पर्शनेन्द्रियं वायवीयं इन्द्रियत्वे सति नियमेन स्पर्शाभिव्यञ्जकत्वात्, व्यजनवीजितवायुवदित्याह—**त्वगिन्द्रियमिति**। गन्धरसरूपाद्यनुपलम्भकत्वात्पूर्ववत्पार्थिवत्वाद्यभावो द्रष्टव्यः।

तथा—शब्दोपलब्धिकार्यानुमेयं शब्दगुणवच्छ्रोत्रेन्द्रियं, शब्दगुणमाकाशमेव शब्दाभिव्यञ्जकत्वात् भेर्याकाशवदित्याह—**शब्दगुणवच्चेति**। तेन कर्णशष्कुलीवलयपरिच्छिन्नमाकाशमेव श्रोत्रेन्द्रियम्, न तत् विकारभूतं, परममहतो द्रव्यस्य द्रव्यारम्भकत्वाभावात्।

बाह्येन्द्रियाणां सत्यप्यर्थसंबन्धे विषयान्तरासक्तचित्तस्याप्रतिपत्तेः मनस्संयोगापेक्षा बाह्येन्द्रियाणां ज्ञानहेतुत्वेनाश्रीयत इत्याह—**इन्द्रियसम्बन्धापन्नस्येति**। तथा—आभ्यन्तरेषु सुखादिषु मनसो ज्ञानहेतुत्वे न बाह्यापेक्षा, किन्तु सन्निकर्षद्वयापेक्षैवेत्याह—**तेनाभ्यन्तराणामिति**। मनसा संयुक्तात्मनि सुखादीनां समवायात्संयुक्तसमवाय इत्यर्थः। बहिरिन्द्रियाणां बाह्यरूपादिग्रहणे सन्निकर्षचतुष्टयं कारणमित्याह—**बाह्यरूपादिग्रहणे चेति**। चतुष्टयमेव दर्शयति—**आत्ममनः इति**।

---

[१] स्पर्शवत्त्वादिति. एवं सर्वत्रापि पञ्चम्यन्तः पाठो दृश्यते, गन्धवत्वात्, रसवत्वात्, शब्दगुणवत्वादिति मु. पु. पा.।

[२] सम्बन्धापन्नस्येति मु. पु. पा.। [३] आसक्तचित्तेनाप्रतीतेः, इति ग. पु. पा.।

[४] आत्ममनस्सन्निकर्षः संयोगाख्य इति मु. पु. पा.।

कारणम्—आत्ममनस्सन्निकर्षः, मन इन्द्रियसन्निकर्षः, द्रव्येन्द्रियसन्निकर्षः रूपेन्द्रियसन्निकर्षश्च ।

[1]प्रमेयविभागमाह–"द्रव्यजातिगुणेषु सा" इति । सा–इन्द्रियसंयोगोत्था प्रतीतिः द्रव्यजातिगुणेषु भवति । स्पर्शवन्महत्त्वयुक्तं द्रव्यं पार्थिवम्, आप्यम्, तैजसम्, वायवीयञ्च, चतुर्विधमैन्द्रियकम् । तथाविधद्रव्योदयकारणम्, तत्र प्रमाणञ्च जातिनिर्णये निर्णीतम् ।

इदानीमुत्तरपादमवतारयितुमाह—प्रमेयविभागमिति । प्रमेयविभागं दर्शयति—द्रव्यजातिगुणेष्विति । सा—इन्द्रिययोगोत्था प्रतीतिः द्रव्यजातिगुणेषु भवति, तत्र प्रत्यक्षद्रव्यवर्तिनः सादृश्यस्य प्रत्यक्षत्वेऽपि, यद् विषयत्रैविध्यगणनं द्रव्यजाति—गुणेष्विति, तत् पदार्थवित्प्रसिद्धयोक्तम्, तत्प्रतीतेरेव सार्वजननीत्वात् ।

यद्वा–गुणग्रहणेन संख्यासादृश्यादेरपि ग्रहणम्, परतन्त्रत्वसाम्यात् । "यथा—चतुर्विधमङ्गजातं जातिगुणद्रव्यभावार्थात्मक" [ अङ्ग. पा. प्र. परि ] मित्यत्र । अत एवेहापि प्रत्यक्षगुणगणनायां संख्यापि गणिता—संख्यापरिमाणपृथक्त्वमिति । ननु किं गुणभूतैव संख्या, नैवम् । शक्तिवत्संख्यावच्च पदार्थान्तरमेवे[उप. परि.]त्युक्तत्वात् ।

अथ द्रव्यनिरूपणम् ।

समवायिकारणं द्रव्यमिति द्रव्यलक्षणम् । तानि–पृथिव्यप्तेजोवायुराकाशः कालो दिगात्मा मन इति नव द्रव्याणि । तत्र—गन्धवती पृथिवी । शीतस्पर्शवत्य आपः । उष्णस्पर्शवत्तेजः । अपाकजानुष्णाशीतस्पर्शवान्वायुः । तानि चतुर्विधानि द्रव्याणि नित्यानित्यरूपेण द्विविधानि । परमाणुलक्षणानि नित्यानि, द्व्यणुकत्रसरेण्वादयोऽनित्याः । परमाणुद्व्यणुकयोरनुमानमेव प्रमाणम् । त्रसरेण्वादीनां महताञ्च स्पर्शवतां प्रत्यक्षं प्रमाणम् । तत्रारम्भकं पृथिव्यादिकं चतुर्विधं द्रव्यं गुणकर्मणां समस्तानां कारणम् ।

तत्र रूप–रस–गन्ध–स्पर्श–परिमाण–पृथक्त्व–संयोग–विभाग–परत्वा–परत्व–गुरुत्व–द्रवत्व–संस्कारवती पृथिवी, रूप–रस–स्पर्श–द्रवत्व–स्नेह–परिमाण–पृथक्त्व–संयोग–विभाग–परत्वा–परत्व–गुरुत्व–संस्कारवत्य आपः, रूप–स्पर्श–परिमाण–पृथक्त्व–संयोग–विभाग–परत्वा–परत्व–लघुत्व–संस्कारवत्तेजः, स्पर्श–परिमाण–परत्वा–परत्व–लघुत्व–संस्कारवान्वायुरित्येवं चतुर्विधं द्रव्यमैन्द्रियकमिति । तथाविधद्रव्योदये कारणम्, तत्र प्रमाणञ्च जातिनिर्णये निर्णीतमित्याह—स्पर्शवन्महत्त्वयुक्तमिति ।

तथा शब्दगुणानुमेयमाकाशमित्यात्मवादे प्रतिपादयिष्यते । तच्च नित्यं निरवयवत्वात्, तच्च निरवयवं अस्पर्शद्रव्यत्वात् तच्चास्पर्शं विभुत्वात्, तच्च विभु कारणगुणपूर्वकविशेषगुणाश्रयत्वे सति महत्त्वात् आत्मवदिति सर्वत्र दृष्टान्तः, तच्च महत् प्रत्यक्ष-

---

[1] प्रमेयमाह इति ग. पु. पा. ।

**जातिसद्भावोऽपि जातिनिर्णय एवोक्तः ।**

**[1]गुणास्तु—रूपरसगन्धस्पर्शाः संख्यापरिमाणपृथक्त्वानि संयोगविभागौ परत्वापरत्वे बुद्धिसुखदुःखेच्छाप्रयत्नाश्च प्रत्यक्षग्राह्याः ।**

विशेषगुणाश्रयत्वात् घटादिवत्, तच्चैकमेव एकस्यैव नानाश्रयत्वसंभवात्कल्पना—लाघवाच्च । तस्य गुणाः—शब्द—परिमाण—पृथक्त्व—संयोग—विभागाः ।

चिर—क्षिप्र—पूर्वा—परादिप्रत्ययानां यदेकं निमित्तकारणत्वेनानुमीयते, स कालः । स च नित्यः, अनाश्रितद्रव्यत्वात्, आकाशवत् । स च विभुः, इन्द्रियव्यतिरिक्तत्वे सति द्रव्यं प्रत्यनारम्भकोऽनारभ्यद्रव्यत्वात्, आकाशवत् । स च निरवयवः, परममहद्-द्रव्यत्वात्, आकाशवत् । तस्य गुणाः—परिमाण—पृथक्त्व—संयोग—विभागाः ।

पूर्वेण दक्षिणेन पश्चिमेनोत्तरेणेति दृश्यमानाः प्रत्ययविशेषाः दिशं कल्पयन्ति । आकाशवदेव तस्याः नित्यत्वपरममहत्त्वे व्याख्येये ।

आत्मनस्स्वरूपम्, प्रमाणञ्च तत्त्वालोके वक्ष्यते । बुद्धि—सुख—दुःखेच्छा—द्वेष—प्रयत्न—संस्कार—धर्मा—धर्म—परिमाण—पृथक्त्व—संयोग—विभागास्तस्य गुणाः ।

मनोऽन्त्यावयवि विभु च द्रव्यं गुणकर्मणां कारणम्, परिमाण—पृथक्त्व—संयोग—विभाग—संस्कारास्तस्य गुणाः ।

इति द्रव्यनिरूपणम् ।

अथ सामान्यनिरूपणम् ।

नित्यैकत्वे सति निरतिशयेनानेकत्र समवायेन वर्तमानं सामान्यम्, अनन्यथा-सिद्धानुवृत्तप्रत्ययवेद्यं वा । जातौ प्रत्यक्षमेव प्रमाणम्, संयुक्तसमवायेन ग्रहणमिति च जातिनिर्णय एवोक्तमित्याह—जातिसद्भावोऽपीति ।

गुणलक्षणम् ।

द्रव्याश्रयो अगुणवान् कर्मभिन्नो गुण इति गुणलक्षणम्, तरतमभावेन द्रव्य एव वर्तमानो वा गुणो द्रष्टव्यः । तत्र प्रत्यक्षभूतान् गुणानाह—गुणास्त्विति ।

रूपं शुक्ल—नील—हरितादिप्रभेदलक्षणं चक्षुर्ग्राह्यं, पृथिव्यप्तेजसां गुणभूतम् । पृथिव्या रूपं शुक्लत्वमेव । तेजसस्तु भास्वरत्वविशिष्टं शुक्लत्वमेव । तत्र भास्वरत्वं नाम—प्रकाशकतेजोन्तरानपेक्षत्वम् । पृथिव्यां पाकजं साक्षात्परम्परया वा ।

रसः रसनेन्द्रियग्राह्यो गुणः । स मधुरा—म्ल—लवण—कटु—तिक्त—कषायभेदात्षड्विधः । पृथिव्यामेव षड्विधो रसः, अप्सु मधुररस एव ।

---

[1] अत्र "रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ।" इति काणभुजं सूत्रं प्रत्यक्षग्राह्या इति शब्दयोजनेन पञ्चिकाकारो निर्दिशतीति बोध्यम् ।

गन्धो घ्राणग्राह्यो गुणः। स सुरभिरसुरभिश्चेति द्विविधः, उभयविधोऽपि पृथिव्यामेव।

स्पर्शस्त्वगिन्द्रियग्राह्यः गुणः, सः शीतोष्णानुष्णाशीतभेदात्त्रिविधः। अनुष्णाशीतो द्विविधः-पाकजोऽपाकजश्च। पाकजोऽनुष्णाशीतस्पर्शः पृथिव्याम्, अपाकजोऽनिले अनुष्णाशीतस्पर्शः, उष्णस्पर्शः तेजसि। खरत्वमृदुत्वादयः संयोगविशेषाः न स्पर्शविशेषा इति [1]पदार्थनिरूपणे प्रतिपादितम्। तत्र रूपरसगन्धस्पर्शानां चतुर्णां पार्थिवपरमाणुषु निवृत्तिः, पाकान्तरात्, कार्यद्रव्ये आश्रयनाशान्निवृत्तिः, आप्यतैजसवायवीयपरमाणुषु रूपस्पर्शाः नित्याः, कार्यद्रव्ये कारणगुणपूर्वकाः, पूर्ववदाश्रयनाशान्नाशः।

शब्दः श्रोत्रेन्द्रियग्राह्योऽम्बरगुणः। स द्विविधः वर्णात्मकोऽवर्णात्मकश्चेति, स पुनर्द्विविधो नित्योऽनित्यश्च। अकारादिवर्णलक्षणः समुद्रघोषादिलक्षणश्च। तत्र [2]पुरुषस्य वर्णविशेषोच्चारणेच्छया वर्णविशेषे स्मृतिर्भवति, तयात्ममनस्संयोगो जायते, संयोगादात्मनि प्रयत्नः तदपेक्षमाणादात्मवायुसंयोगाद्वायौ शरीरे च कर्मोत्पद्यते। स च वायुर्नाभेरूर्ध्वं गच्छन् कण्ठादीनवयवानभिगच्छति, [3]एवमष्टविधस्थानाभिघातलक्षणसंयोगवान्वायुः कर्णशष्कुलीमनुप्राप्तस्तिमितवाय्ववयवापनोदं कुर्वन्वर्णस्याभिव्यञ्जकः। समुद्रघोषादौ वीच्यभिघातप्रेरितबाह्यवायुसंयोगादेवाभिव्यक्तिः, शङ्खध्मानादौ शङ्खबिलाभिघाताख्यसंयोगविशेषापेक्षैव, भेरीघोषादावपि भेरीदण्डाभिघाताख्यसंयोगविशेषप्रेरितबाह्यवायुविशेषादेवाभिव्यक्तिरिति द्रष्टव्यम्।

[4]पृथक्त्वनिवेशिनी संख्या, अत एवैकत्वस्य न संख्यात्वम्।

---

[1] "काठिन्यप्रशिथिलत्वादयस्तु संयोगविशेषाः न स्पर्शान्तरम्, उभयेन्द्रियग्राह्यत्वा"दिति गुणग्रन्थे [न्यायकन्दली. पृ. १०६] श्रीधराचार्येणोक्तमर्थं व्याख्याकारोऽत्रोपन्यस्यतीति विज्ञेयम्।

[2] अत्रेदं बोध्यम्—

"आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥१॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः"।

वर्णाञ्जनयते······इति पाणिनीयशिक्षावचनम्। अस्यायमर्थः—आत्मा—अन्तःकरणम्, संस्काररूपेण स्वगतानर्थान् बुद्ध्या—स्ववृत्त्या समेत्य—एकबुद्धिविषयान् कृत्वा तद्बोधनेच्छया युक्तं मनः करोति। तन्मनः कायाग्निमाहन्ति। सोऽग्निः मारुतं प्रेरयति। सोदीर्णः—सः मारुतः। सोचिलोपे चेत् पादपूरणम् [पा. सू. ६-१-१३४] इति सुलोपः। उदीर्णः—ऊर्ध्वं प्रेरितः, मूर्ध्न्यभिहतः परावृत्य वक्त्रतालवादिस्थानं प्राप्य वर्णानभिव्यनक्ति। एतमर्थमेव न्यायसिद्धिकारस्ववचनैरनुवदतीत्यवधातव्यम्।

[3] अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च [पा. शि.] इति श्लोकोऽत्रानुसन्धेयः।

[4] एकत्वादिव्यवहारहेतुरिति संख्यां लक्षयन्ति तार्किकाः। सा च रूपादिव्यति-

परिमाणं मानव्यवहारकारणम्, तदप्यणुत्वं महत्त्वञ्चेति द्विविधं, पुनर्द्विविधम्, नित्यमनित्यं च, परमाणुषु मनसि चाणुत्वं नित्यम्। तदेव पारिमाण्डल्यम्, द्व्यणुके अनित्यम्, महत्त्वं कार्यद्रव्येषु त्रसरेण्वादिषु अनित्यम्। आकाशकालदिगात्मसु तदेव परममहत्त्वम्, तत्र द्व्यणुगताणुत्वोत्पत्तौ[1] परमाणुगतद्वित्वसंख्या कारणम्, नाणुत्वम्। यदि परमाणुगताणुत्वाभ्यामणुत्वान्तरं जन्यते, ततस्ताभ्यामपि अपकृष्टं परिमाणं द्व्यणुके ह्युत्पद्यते, यथा—महदारब्धं महत्तरं, तथा—अण्वारब्धमप्यणुतरं स्यात्, महत्त्वन्तु कारणबहुत्वात्, कारणमहत्त्वात्प्रचयविशेषाच्चोत्पद्यते, यथा त्र्यणुकादिलक्षणे कार्यद्रव्ये तद्गतरूपाद्युत्पत्तिसमकालं महत्त्वमुत्पद्यते, तत्र द्व्यणुकादि द्रव्यं समवायिकारणं द्व्यणुकगतत्रित्वादिसंख्या असमवायिकारणम्, धर्माधर्मौ च निमित्तकारणम्, तथा द्वाभ्यां तन्तुभ्यां महद्भ्यां द्वितन्तुकः पटः आरभ्यते, तत्र द्वयोर्बहुत्वाभावादेव महत्त्वमेवात्रासमवायिकारणम्, प्रचयः—प्रशिथिलावयवसंयोगविशेषः, द्वितूलकद्रव्यारम्भकयोः स्थूलपिण्डयोः वर्तमानः द्वितूलकद्रव्यगतमहत्त्वोत्पत्तावसमवायिकारणम्। अनेकमूर्तिमद्भिः युगपत्संयोगि महदुच्यते, सर्वमूर्तिमद्भिर्युगपत्संयोगि परममहदुच्यते।

[2]इदमतः पृथग्भूतमिति वा, इदमस्मात्पृथगितिव्यवहारस्य यत् कारणम् तत् पृथक्त्वम्। तदपि व्यवच्छिन्नाकारबुद्धिबोध्यत्वमेवेति, बुद्धिलक्षणमेव, रूपरसादिवत्। कश्चित्तु भेदो वस्तुनोऽवस्थामात्रम्, न गुणान्तरमिति मन्यते।

---

रेकादर्थन्तरमित्यभ्युपगच्छन्ति। तथा च काणभुजं सूत्रम्—रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तिरम्। [ वै. द. ७. २-१ ] इति

भूषणकारो भासर्वज्ञस्तु स्वरूपाभेदलक्षणमेकत्वम्। स्वरूपभेदलक्षणं द्वित्वादिकमित्यभिप्रैति। यस्य मतं श्रीधराचार्यः कन्दल्यां, उदयनाचार्यश्च किरणावल्यां खण्डयन्ति। तन्मतमनुसरन् न्यायसिद्धिकारः एकत्वं पृथक् नाङ्गीकरोति, द्वित्वादिकमेव संख्या इति प्रतिपादयति, लक्षयति च पृथक्त्वनिवेशिनी संख्येति। तत्र च पारमर्षं सूत्रमप्यनुकूलम्। "पृथक्त्वनिवेशात् संख्यया कर्मभेदस्स्यात्" [मी. द. २-२-२०] इति। पृथक्त्वनिवेशिनीत्यपि क्वचित् सूत्रपाठो दृश्यते। तस्य चायमर्थः—पृथक्त्वे-भेदे स्वाश्रयप्रतियोगिकस्वाश्रयानुयोगिके निवेशात्समन्वयात् संख्यायाः। अतः पृथक्त्वनिवेशिनी संख्या द्वित्वादिकेमेव, न त्वेकत्वमिति टीकाकृतोऽभिप्राय इति बोध्यम्।

[1] प्रायशोऽस्मिन् प्रकरणे टीकाकारो गुरुमतपारदृश्वा नारायणपण्डितः पदार्थनिरूपणे वैशेषिककन्दलीकारयोरेव, प्रक्रियामङ्गीकरोति। यतः वैशिषिकदर्शनप्रणेतारं कणादमुनिम्, कन्दलीकारञ्च-पदार्थवित्त्वेन प्रशंसितीत्यतः तद्वासनयेदं कथनमिति बोध्यम्। "द्वित्वसंख्या अण्वोर्वर्तमाना द्वयणुकेऽणुत्वमारभत" इति प्रशस्तपादवचनमनुसन्धेयम् [ गुणग्रन्थ १३१ पृ ]

[2] पृथक्त्वविषये भाट्टानां प्राभाकराणां मतभेदो दृश्यते। तथाहि—भेदव्यवहारकारणं सर्वद्रव्यवर्ती सामान्यगुणः पृथक्त्वमिति भाट्टमीमांसकास्स्वीकुर्वन्ति। प्राभाकर—मीमांसकाः पुनः नित्यद्रव्येषु परमाणुषु पृथक्त्वं गुणोऽस्ति, परं कार्यद्रव्येषु नास्तीति मन्वते। तदुक्तं पदार्थदीपिकायाम्—

[१]अप्राप्तयोः प्राप्तिस्संयोगः, सोऽन्यतरकर्मजः, उभयकर्मजः, संयोगजश्चेति त्रिविधः। तत्र क्रियावतां निष्क्रियस्य च संयोगोऽन्यतरकर्मजः, यथा-स्थाणोश्श्येनेन, विभूनाञ्च मूर्तेन विरुद्धदिक्क्रिययोः सन्निपातलक्षणः उभयकर्मजः, विरुद्धदिगभिमुखे क्रियेयोर्द्रव्ययोः, ते विरुद्धदिक्क्रिये, तयोस्सन्निपातः परस्पराभिमुखत्वेनोभयकर्मजः, यथा—मल्लयोर्मेषयोर्वा। तन्तुतुरीसंयोगादुत्पन्नमात्रस्य पटस्य तुरीसंयोगः संयोगजः,

संयोगप्रध्वंसहेतुभूतो गुणो विभागः। सोऽप्यन्यतरकर्मज, उभयकर्मजो, विभागजश्चेति त्रिविधः। क्रियावतां निष्क्रियस्य विभागोऽन्यतरकर्मजः, यथा—स्थाणौ श्येनेन। विरुद्धक्रिययोरुभयकर्मजः, यथा—मल्लयोः मेषयोश्च, वेणुदलविभागात् खदलविभागो विभागजो विभागः।

ननु संयोगप्रध्वंस एव विभागः किमिति न भवति। उच्यते; संयोगप्रध्वंसा—नुपपत्तिरेव प्रमाणम्। तथाहि—कार्यद्रव्येषु गुणनाशः समवायिकारणनाशात्, विरोधि-गुणान्तरप्रादुर्भावाद्वा नियतः। इह समवाय्यसमवायिनोर्नाशाभावे विरोधिगुणान्तर—प्रादुर्भावादेव संयोगनाश इति स्वीकरणीयम्। स एव विभागाख्यः। क्रियायाः संयोग-विनाशकत्वाभावात्, विरोधिगुणान्तरप्रादुर्भावान्नाश इत्युक्तत्वाच्च।

परमिदं द्रव्यम्, अपरमिदमिति च विशिष्टप्रत्ययलक्षणं परत्वापरत्वम्। तत्-दिक्कृतम्, कालकृतञ्चेति द्विविधम्। तत्रैकस्य द्रष्टुरेकस्यां दिशि सन्निकृष्टामवधिं कृत्वा एतस्माद्विप्रकृष्टोऽयमिति परत्वाधारे बुद्धिरुत्पद्यते, एवं विप्रकृष्टामवधिं कृत्वा इतरस्मिन्नपरत्वबुद्धिरुत्पद्यते, तथा वर्तमानकालयोरनियतदिग्देशयोरेकस्य, एकं वा युवानमवधिं कृत्वा स्थविरे विप्रकृष्टबुद्धिरुत्पद्यते, स्थविरञ्चावधिं कृत्वा यून्यपरत्वबुद्धि-रुत्पद्यते, परत्वापरत्वयोर्विनाशस्त्वपेक्षाबुद्धिविनाशात्, आश्रयविनाशाद्वा द्रष्टव्यः।

अर्थप्रतिबद्धव्यवहारानुगुणो हि पुरुषस्य धर्मविशेषः संवेदनम्। तदेव च बुद्धि—रुपलब्धि-र्ज्ञानं-प्रत्ययो-मति-र्मनीषेत्यादिशब्दैरुच्यते। तत्तु-प्रमाणस्मृतिभेदेन द्विवि-धम्। अनुभूतिः प्रमाणं, परिच्छेदे सापेक्षज्ञानं स्मृतिः।

यस्मिन्नुपजातेऽनुगृहीतोऽहम्, तृप्तोऽस्मीति मन्यते, तत्सुखम्। [२]तदतीतविषये स्मृतिजम्, अनागतेषु सङ्कल्पजम्, वर्तमानविषये चानुभवजम्।

यस्मिन्नुपजाते पीडितोऽहम्, उपहतोऽहमिति मन्यते, तद् दुःखम्। तदपि सुख-

---

पृथक्त्वन्तु गुणो नित्यद्रव्येषु परमाणुषु।
भवेद्व्यावर्तको धर्मो कार्यद्रव्येषु नेष्यते॥ इति

अमुं विषयं शालिकनाथ उपमानपरिच्छेदे एव विविच्य दर्शयिष्यति, विशेषपदार्थं कणभुगभिप्रायमनुसरतामभिमतं परासिष्यतीत्यवधातव्यं मनीषिभिः।

[१] संयोगविषये यद्वक्तव्यम्, तत्सर्वं जातिनिर्णय एवा [पृ. ७८] स्माभिर्विवेचितम्, तत् तत्रैव द्रष्टव्यमिति नेह प्रतन्यते।

[२] "अतीते विषये स्मृतिज"मित्यादि प्रशस्तपादभाष्यवचना [पृ. २५९] न्यत्रानुसन्धेयानि।

वदेव त्रिविधम्, सुखदुःखयोश्च मानसत्वम्, परस्परविनाशकत्वम्, मदमूर्च्छादिभिश्च द्वयोरपि विनाशः।

स्वार्थं परार्थं वा अप्राप्तप्रार्थनेच्छा–कामः। [1]अभिलाषो–राग–स्संकल्पः–कारुण्यं–वैराग्यं–उपधा–भाव इत्यष्टविधमैथुनेच्छा[2] कामः। अभ्यवहारेच्छा–अभिलाषः। पुनः पुनर्विषयानुरञ्जनेच्छा—रागः, अनासन्नक्रियेच्छा—संकल्पः। स्वार्थमनपेक्ष्य परदुःखप्रहरणेच्छा कारुण्यम्। 'दोषदर्शनाद्विषयपरित्यागेच्छा–वैराग्यम्। परवञ्चनेच्छा–उपधा, डम्भशब्देनापि तदेवोच्यते। अन्तर्गूढेच्छा—भावः। चिकीर्षा, जिहीर्षेति क्रियाभेदादिच्छाभेदो भवति।

यस्मिन्सति ज्वलितमिवात्मानं मन्यते, स द्वेषः। द्रोहः–क्रोधो–मन्युः–अक्षमा–अमर्षः इति द्वेषभेदाः।

संरम्भः—उत्साहापरपर्यायः प्रयत्नः। स ज्ञानपूर्वकः, इच्छाद्वेषपूर्वकश्च। स प्रत्यक्ष इत्येवं पदार्थवित्प्रक्रियया दिङ्मात्रेणोक्तम्।

[3]गुणान्तराण्यपि—धर्माधर्मौ गुरुत्वलघुत्वस्नेहसंस्कारादयो विद्यन्ते। आत्मगुणभूतौ धर्माधर्मौ शास्त्रप्रमाणवेद्यौ। धर्मशब्देनापूर्वमुच्यते[4]। अधर्मशब्देनावगोरणाद्यदृष्टमन्यज्जन्यते।

कार्यानुमेयं गुरुत्वम्, तत् भूजलाश्रयम्। तस्य क्वचित्संस्कारात्प्रतिबन्धः। यथा-शरादौ स्पर्शवद्द्रव्यसंयोगात्संस्कारस्य नाशे सति गुरुत्वं पतनकर्म करोति, क्वचित्प्रयत्नविशेषात्प्रतिबन्धः। शरीरगतगुरुत्वस्य कार्यभूतं पतनं प्रयत्नवशात्प्रतिबध्यते, सुषुप्तस्य-प्रयत्नाभावे गुरुत्वाच्छरीरपतनमपि।

ऊर्ध्वतिर्यग्गतिकार्यानुमेयं लघुत्वम्, तत् ज्वलनानिलाश्रयम्।

[5]पतितस्य स्यन्दनकर्मकारणं द्रवत्वम्। तत्–सांसिद्धिकं नैमित्तिकञ्चेति

---

१ "कामादयोऽष्टौ इच्छाभेदा" इति प्रशस्तपादभाष्यस्यानुवाद(२६०-पृ.)इति ध्येयम्।

२ स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः [दक्ष सं. ७-३१-३२] इत्युक्तलक्षणं बोध्यम्।

३ शङ्करमिश्रः—रूपरसेत्यादिसूत्रं व्याचक्षाणः प्रयत्नाश्चेति चकारेण गुरुत्वद्रवत्व—स्नेहसंस्कारधर्माधर्मशब्दान् समुच्चिनोति; ते हि प्रसिद्धगुणभावा एवेति कण्ठतो नोक्ताः। गुणत्वञ्चामीषां यथास्थानं लक्षणतस्स्वरूपतश्च वक्ष्यते इत्याह। तत्सर्वं संक्षिपन्नाह—गुणान्तराणीत्यादिना—

४ धर्मशब्दः भाट्टमीमांसकैः यागादिक्रियायामेव शक्त्या प्रयुज्यते। अपूर्वे धर्मशब्दो-लाक्षणिकः। प्राभाकरास्तु—यागादिजन्यं कालान्तरस्थायि स्वर्गादिसाधनमपूर्वं धर्मशब्दार्थं मन्वते। तदेवाह—धर्मशब्देनेति।

५ क्षितौ पतितानां जलबिन्दूनां परस्परसंयोगेन महज्जलावयवि स्रोतोरूपं यज्जायते, तस्य यत्स्यन्दनं कर्म, तस्यासमवायिकारणं द्रवत्वमित्यर्थो बोध्यः। "द्रवत्त्वात्स्यन्दनम्" [वै. द.] इति सूत्रमनुसन्धेयम्।

**क्वचिद्द्रव्याग्रहणेऽपि रूपादीनां ग्रहणम्, रूपाद्यग्रहणेऽपि द्रव्यस्येति, नास्ति द्रव्यगुणयोर्ग्रहणं प्रति नियमः ।**

**द्विविधा चेयं [1]द्रव्यादिप्रतीतिः ।**

**"सविकल्पाऽविकल्पा च प्रत्यक्षा बुद्धिरिष्यते" । इति ।**

द्विविधम्। स्यन्दनम्—स्रवणम्। सांसिद्धिकमप्सु विद्यते, नैमित्तिकं पृथिव्यामग्निसंयोगेनोत्पद्यते ।

**चिक्कणत्वं**—स्नेहः, स जले वर्तते। तस्य कार्यमनेकविधम्, रूक्षद्रव्याणां स्निग्धता, स्नेहेन सम्बद्धानां पार्थिवानामणूनां पिण्डभावापत्तियोग्यस्संग्रहाख्यस्संयोगविशेष इत्यादि द्रष्टव्यम् ।

**संस्कारो** नाम—स्वोत्पादकसमानजातीयकार्यारम्भक उच्यते। स च ज्ञानजः, कर्मजश्चेति द्विविधः। ज्ञानजो ज्ञानहेतुः। स चात्मगुणः, तस्य ज्ञानेन मदद्दुःखादिभिश्च निवृत्तिः। कर्मजः कर्महेतुः, स च मूर्तद्रव्यगुणः, तस्य स्पर्शवद्द्रव्यसंयोगान्निवृत्तिः, [2]स्थितस्थापकं केचित् कर्मजेऽन्तर्भूतमिति मन्यन्ते ।

इति गुणनिरूपणम् ।

ननु गुणानां संयुक्तसमवायाख्यसन्निकर्षेण द्रव्ये ग्रहणान्नियमेनाश्रयग्रहणपूर्वकमेव गुणग्रहणमिति सहोपलम्भादभेदोऽपीत्यत्राह—[3]**क्वचिद्द्रव्याग्रहणेऽपीति** । दीपप्रभायां द्रव्याग्रहणेऽपि रूपग्रहणात्, अन्धकारान्तर्हिते द्रव्ये रूपाग्रहणेऽपि द्रव्यग्रहणाच्च, द्रव्यगुणयोर्न परस्परं ग्रहणे नियमः। तथा गन्धवहे वहति सत्यतिदूरस्थ एव गन्धः आश्रयद्रव्यव्यतिरेकेणोपलभ्यते । तथा जात्यन्धेन द्रव्यमात्रं गृह्यते, अतस्सहोपलम्भाभावान्नाभेद इत्यर्थः। प्रत्यक्षभूतानां द्रव्याणां गुणानां चोदाहरणादेवाप्रत्यक्षाणां द्रव्यगुणानामनुदाहरणमिति द्रष्टव्यम् ।

द्रव्यजातिगुणेषु या साक्षात्प्रतीतिरुक्ता, सैव सविकल्पकनिर्विकल्पकरूपेण द्विविधेत्याह—**द्विविधा चेयमिति**। द्वैविध्यमेव श्लोकेन दर्शयति—"**सविकल्पाऽविकल्पा चे**"ति। तत्र विकल्पो नाम—भेदको धर्मः जात्यादिः, तैस्सह विकल्पेन वर्तत—

[1] द्रव्यजातिगुणेषु इति मु. पु. पा. ।

[2] स्थितस्थापकाख्यं तृतीयं संस्कारं प्रशस्तपादाचार्यः प्रत्यक्षतोऽनुपलभ्यमानमपि कार्यतस्साधयति । श्रीधराचार्यस्तु स्थितस्थापकस्याभावं केषाञ्चिन्मतेनाशङ्क्य तत्सद्भावं साधयति । परमत्र न्यायसिद्धिकारः स्थितस्थापकं कर्मजेऽन्तर्भावयन् तस्य पार्थक्यं न स्वीकरोतीति वेदितव्यम् ।

[3] कस्तूरिकादिद्रव्यस्याग्रहणेऽपि केवलो गन्धोऽनुभूयते । प्रदोषकाले शौक्ल्यगुणस्याग्रहणेऽपि बलाकाऽनुभूयते । अतः द्रव्यस्याग्रहणेऽपि गुणस्य ग्रहणं, गुणस्याग्रहणेपि द्रव्यस्य पृथक्त्वेन ग्रहणं भवतीत्याशयेनाह—क्वचिदिति ।

[१]विभजति—

"आद्या विशिष्टविषया स्वरूपविषयेतरा"। इति।

प्रथमं हि स्वरूपमात्रग्रहणं द्रव्यजातिगुणेषूपपद्यते[२]। तच्च स्वानुभवसिद्धम्। समाहितमनस्को हि विषयान्तरानुसन्धानशून्य इन्द्रियसंयुक्तं वस्तु साक्षादुपलभत इति स्वसंविदेवात्र प्रमाणम्।

इति सविकल्पकम्। तच्च जात्यादिभिर्व्यावृत्तं शब्दोल्लेखि पञ्चधा। यथा–घटोऽयम्, शुक्लोऽयम्, गच्छति गौतमः, देवदत्तोऽयम्, दण्डीति विशिष्टः प्रत्ययः।

निर्गतो विकल्पो यस्मिन्निर्विकल्पकम्। अविकल्पशब्देन—निर्विकल्पकमुच्यते। प्रथममक्षसन्निपातोत्पन्नमापातजं वस्तुमात्रग्राहकं विकल्पावस्थात्प्रागवस्थं निर्विकल्पकम्। "सविकल्पाऽविकल्पा चे"त्यस्मिञ्छ्लोके प्रथमोपात्तं सविकल्पकमेवोपादानक्रमादाद्यमुच्यते, न पुनः परमार्थतः। प्रथमभूतं हि तत् निर्विकल्पकम्।

इदानीं ज्ञानोत्पत्तिक्रमेण स्वरूपविषयेतरेत्येतद्व्याचष्टे—**प्रथमं हीति**। द्रव्यजातिगुणेषु प्रथममक्षसन्निपाते सति स्वरूपमात्रज्ञानं प्रथमं जायत इति।

नन्वेवंभूतज्ञानोत्पत्तौ किं प्रमाणमित्यत्राह—**तच्चेति**। **स्वानुभवसिद्धम्**—स्वसंवेद्यमित्यर्थः। एतदेवोपपादयति—**समाहितमनस्क** इति। तदुक्तम्—

अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥

[ मी॰ श्लो॰ वा॰ प्रत्यक्ष सूत्र ११२ श्लो॰ ] इति।

तथा

"आलोच्यते वस्तुमात्रं ज्ञानेनापातजन्मना।
अचेत्यमानो भेदोपि चकास्तीत्यतिसाहसम्॥" इति।

ननु सर्वा हि प्रतीतिरित्थमित्येवं जायते, इत्थंभावश्च जातिर्वा गुणो वा संस्थानं वा देशकालादिभिर्व्यावृत्तिर्वा। तत्रापातजमपि ज्ञानमिहेदम्, इदानीं किञ्चिदित्यादि व्यावृत्तमेवोपजायत इति, [३]इदमपि विज्ञानं सविकल्पकमेव।

---

[१] विभजते इति मु. पु. पा। [२] उत्पद्यते इति मु. पु. पा।

[३] सौगता निर्विकल्पकस्य प्रामाण्यमभ्युपगच्छन्तस्सविकल्पकस्य निर्विकल्पकगृहीतार्थ—ग्राहित्वेन प्रामाण्यं नेच्छन्ति। शाब्दिकशिरोमणिः हरिस्तु शब्दानुविद्धस्यैव सविकल्पकत्वमङ्गीकुर्वन् निर्विकल्पकं न स्वीकरोति। यथोक्तम्—

न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ [वा-प-१-१२४] इति।

इदं मतद्वयमनुपपन्नमिति मन्यमानः उभयोरावश्यकताम्, नान्यतरेणान्यतरस्य चारितार्थ्यञ्च भवतीत्याशयं मनसि निधायोभयमपि स्वाभिमतमिति दर्शयति—इदमित्यादिना।

निर्विकल्पकनिरूपणम् ।

**तस्य न स्वलक्षणमात्रं विषयः । जात्याद्याकारावभासस्य[1] स्पष्टत्वात् । नापि सामान्यमात्रं[2] विषयः । भेदग्रहणस्य प्रतीतिसिद्धत्वात् ।**

यस्तु किञ्चिद्व्यवच्छेदकापरित्यागादिति स्वानुभवमप्यपलपति, तं प्रत्यर्थापत्तिर्वक्तव्या, प्रत्यक्षस्य सविकल्पकनिर्विकल्पकविभागो लौकिकपरीक्षकाणां दृश्यते, तेन चायं विभागः सर्वस्य सविकल्पकत्वेऽनुपपन्न इत्यर्थापत्त्या निर्विकल्पकसिद्धिर्वक्तव्या । तथाहि—सविकल्पकं ह्यनुवृत्तिव्यावृत्तिविशिष्टार्थविषयं शब्दसंजल्पानुविद्धञ्च जायते । तत्र च नेन्द्रियं केवलं समर्थमिति, संस्कारसहायस्यैकत्र व्यापारो वक्तव्यः । सति चैवं संस्कारोद्बोधसिद्ध्यर्थं पूर्वं पदार्थग्रहणमवश्यमाश्रयणीयम्, दृष्टे सत्यदृष्टस्यायुक्तत्वात् । तथाभावे सर्वस्यादृष्टादेव कार्योत्पत्तिप्रसङ्गात् । [3]चिन्ता तु दूरनिरस्तैवेति । तयोरभावे पारिशेष्यात्प्रमेयात्मना सदृशशुद्धवस्तुदर्शनमेव व्याप्रियते, तेन विशिष्टप्रत्ययान्यथानुपपत्त्या सविकल्पकात्पूर्वं स्वरूपग्राहि ज्ञानमवश्यमाश्रयणीयम्, तस्य च विकल्पज्ञानमेव व्यवहारभूतमिति द्रष्टव्यम् ।

ननु यदि निर्विकल्पकज्ञानस्य वस्तुस्वरूपमात्रमेव विषयः, न सामान्यविशिष्टम्, तर्हि स्वलक्षणमात्रमेव सर्वज्ञानानां विषय इति सौगतसिद्धान्तसमाश्रयणं स्यादित्यत्राह—**तस्य चेति** । कुत इत्याह—**जात्याद्याकारावभासस्येति** ।

ननु यदि निर्विकल्पके जात्याद्याकारावभासः तर्हि न सामान्यमात्रविषयत्वं स्यादित्यत्राह—**नापि सामान्यमिति** । न चैतावता सामान्यमात्रविषयत्वं प्रत्यक्षस्य वक्तुं शक्यत इति । कुत इत्याह—**भेदग्रहणस्येति** । स्पष्टदृष्टस्य निराकरणायोगात्, निराकरणे सति न कस्यचिदपि सिद्धिरित्यव्यवस्थैव स्यात् । अतश्चिदानन्दादिलक्षणस्य ब्रह्मणोऽप्यसिद्धिरेवेति प्रतीतिशरणैर्भेदो न निराकर्तव्य इत्यर्थः ।

धर्मभेदपक्षे भेदभेदिनोरपि भेदान्तरप्रसङ्गेनानवस्थापातात्, भेदप्रतिपत्तिव्यवहारयोः स्वरूपमात्रेणाप्युपपन्नत्वाच्च, स्वरूपमेव भेदः, न धर्मः ।[4] ननु यदि स्वरूपञ्चेद्भेदः, तर्हि स्वरूपग्रहणे प्रतियोग्यपेक्षाभावात्, भेदग्रहणे प्रतियोग्यपेक्षा न स्यात्, सत्यम्, ग्रहणे न प्रतियोग्यपेक्षा, किन्तु व्यवहार इत्युक्तत्वात् ।

---

[1] अवग्राहित्वस्य इति मु. पु. पा. । [2] सामान्यमात्रविषयता इति मु. पु. पा. ।

[3] अत्र काणादं प्रणिधानसूत्र [न्या. द. ३.२.४१] मनुसन्धेयम् ।

[4] भेदविषये मतद्वयमस्ति—धर्मलक्षणो भेदः, स्वरूपलक्षणो वेति । तत्र धर्मभेदवादे भेदस्य भेदान्तरभेद्यत्वादनवस्था प्रसजेत्, अतो धर्मलक्षणो भेदः प्राभाकरैर्नाङ्गीक्रियते, किन्तु स्वरूपलक्षणो भेद एवाङ्गीक्रियते । तत्र इतरेतराभावभेदयोः प्रतीतिदशायां प्रतियोग्यपेक्षाराहित्यम् समानम् । व्यवहारदशायान्त्वितरेतराभावः प्रतियोगिनमपेक्षते, न स्वरूपमित्यनयोरस्ति विशेष इति ध्येयम् ।

[1]"लब्धरूपे क्वचित् किञ्चि[ब्र. सि.]दित्यादि" यदुच्यते, तदितरेतराभावविषयम्, न तु वस्तुभेदविषयम्। [2]वस्तुभेदप्रतीत्युत्तरकालं हि परस्पराभावोऽवसीयते। घटं घटाकारतया, पटञ्च पटाकारतया विदित्वाऽयं स न भवतीति [3]तयोरितरेतराभावं प्रतिपद्यते। घटादिविज्ञानञ्च[4] वस्त्वन्तरग्रहणानपेक्षमित्यप्रतीतेऽपि[5] वस्त्वन्तरे, तद्ग्रहो नानुपपन्नः। तस्मात्सामान्यविशेषौ द्वे वस्तुनी प्रतिपद्यमानं प्रत्यक्षं प्रथममुपपद्यते[6]। किन्तु वस्त्वन्तरानुसन्धान-

यदुक्तं ब्रह्मसिद्धिकारेण—"इतरेतराश्रयप्रसङ्गादेव सर्वत्र भेदो ग्रहीतुं न शक्यते। तथाहि—घटपटयोरिह भेदो न गृह्यते, तत्र घटात्पटस्य भेदो ग्रहीतुमिष्टश्चेत्पूर्वमेव घटस्यापि भेदो गृहीतव्यः, इतरथा कस्मात्पटस्य भेदो गृह्यत इति न ज्ञायते, तेन पूर्वमेव घटस्य भेदं गृहीत्वा घटात्पटस्य भेदे गृहीतव्ये स्पष्टमितरेतराश्रयं भवति। तन्न। भेदस्य धर्मत्वाभ्युपगमेन, स्वरूपभेदवादेऽपि स्वरूपग्रहणस्यानन्यापेक्षत्वात्।

नन्वेवमपि भेदेतरेतराभावयोर्भेदादभावस्य चान्यापेक्षत्वात्, पुनरपि भेदग्रहणेऽन्योन्याश्रयमापद्येत इत्यत्राह—लब्धरूपे क्वचित्किञ्चिदिति।

लब्धरूपे क्वचित्किञ्चित्तादृगेव निषिध्यते।
विधानमन्तरेणातो न निषेधस्य सम्भवः॥

[ब्र. सि. त. का. श्लो—२]

इत्यादिना प्रपञ्चेन ब्रह्मसिद्धिकारेण यदुच्यते, तदितरेतराभावविषयम्, न वस्तुभेदविषयम्, भेदशब्देन पदार्थस्वरूपमुच्यते, दृश्ये प्रतियोगिनि तन्मात्रोपलब्धिरभावशब्देनोच्यते इति भेदेतरेतराभावयोरैक्यं नास्तीत्यर्थः। कुत इत्याह—वस्तुभेद इति। एतदेवोपपादयति—घटञ्च घटाकारतयेति। भेदे गृहीते सत्येवेतरेतराभावावसायः, न पूर्वकालम्, नापि समकालमित्यर्थः।

नन्वितरेतराभाववद्भेदस्यापि सप्रतियोगिकत्वाद्भेदग्रहणेऽपि वस्त्वन्तरग्रहापेक्षा युक्तैवेत्यत्राह—घटादिविज्ञानञ्चेति। सर्वत्र विलक्षणभूतपदार्थस्वरूपाण्येवान्योन्यापेक्षया भेदशब्दवाच्यानीति स्वरूपग्रहणे प्रतियोग्यपेक्षाभावाद्भेदग्रहणेऽपि न प्रतियोग्यपेक्षा। तत्रैकमेव वस्तुस्वरूपं प्रतियोगिभेदेन व्यवहारभेदमनुभवति—

---

[1] प्रत्यक्षं सन्मात्रग्राहि, न भेदग्राहि, इति प्रतिपादनार्थं पद्यमिदं मण्डनमिश्रेणाऽवतारितम्। अयं भावः तथाहि—भेदवस्तुनोरेकैकग्राहकं प्रत्यक्षम्, अथवा द्वयमपि गृह्णाति, तत्रापि युगपद् गृह्णाति, क्रमेण वा, क्रमपक्षेऽपि किं पूर्वम्, किमुत्तरमिति विकल्पजालेन प्रत्यक्षस्य भेदग्राहित्वं न सम्भवतीति प्रतिपादयन्, तदर्थसङ्ग्राहकमिदं 'लब्धरूपेत्यादि' पद्यमिदमवतारयामास, अस्य विस्तरस्तत्रैव द्रष्टव्यः। [ब्र. सि. पृ. ४४]

[2] प्रतीत्यनन्तरमिति, मु. पु. पा.

[3] भवतीतेतरेतराभावमिति, मु. पु. पा.

[4] घटाकारेति मु. पु. पा.

[5] अप्रतिपद्यापीति, मु. पु. पा.

[6] उत्पद्यते इति मु. पु. पा.

शून्यतया सामान्यविशेषतया न प्रतीयते। अनुगतं हि सामान्यमुच्यते, व्यावृत्तिश्च विशेषः। न च वस्त्वन्तरानुसन्धानमन्तरेणानुगतिव्यावृत्ती प्रत्येतुं शक्येते। अप्रतिपद्यमानोऽपि च ते, शक्नोत्येव स्वरूपं तयोः प्रतिपत्तुमिति, निर्विकल्पकमसामान्यविशेषविषयम्।

सविकल्पकनिरूपणम्।

सविकल्पकन्तु तत्पृष्ठभावि त एव वस्तुनी सामान्यविशेषात्मना प्रतिपद्यते। ननु वस्त्वन्तरानुसन्धाने नेन्द्रियं समर्थम्। इन्द्रियसामर्थ्यसमुत्थञ्च प्रत्यक्षमिति, कथं सामान्यविशेषात्मकं प्रत्यक्षस्य विषयः। उच्यते—भवेदेतदेवं यदीन्द्रियाण्येव चेतनानि स्युः; ज्ञानानि वा। आत्मा त्वेकः सर्वानुभवि-

घटाद्भिन्नः, पटाद्भिन्नः इति। तत्र व्यवहार एव प्रतियोग्यपेक्षा, न स्वरूपग्रहण इति, स्वरूपग्रहणादेव गृहीतेऽपि भेदे, तदानीं प्रतियोगिग्रहणवैकल्याद्भेदो न व्यवहृतः, कालान्तरे प्रतियोगिनं गृहीत्वा व्यवहार इत्येतावान् विशेषः। ननु व्यवहारे वा किमित्यर्थान्तरापेक्षा। उच्यते—स्वरूपावगमादेव भेदे गृहीतेऽपि प्रतियोग्यपेक्षया विलक्षणधर्मयुक्तं स्वरूपानुसन्धानं तदवगमापेक्षम्, ततो भेदव्यवहारस्तस्येति सर्वत्रान्वयव्यतिरेकसिद्धमेतत्। तद्ग्रहः—भेदरूपः विलक्षणस्वरूपग्रह इत्यर्थः। उपसंहरति—तस्मादिति। सामान्यविशेषयुक्तं स्वरूपं प्रथमं प्रत्यक्षेण प्रतिपद्यते।

एवं सामान्यविशेषविषयत्वेऽपि वस्त्वन्तरानुसन्धानाभावात्सामान्यविशेषरूपता न प्रतीयत इत्याह—वस्त्वन्तरानुसन्धानेति। ननु सामान्यविशेषौ विषयभूतावपि न प्रतीयेते इति कथमवगम्यते इत्यत आह—अनुगतं हीति। धर्मिभूतमनुगतम्, हि सामान्यं न पुनर्धर्मभूतानुगतिमात्रम्, तथा व्यावृत्तश्च विशेषः न व्यावृत्तिः, तस्माद्वस्त्वन्तरानुसन्धानाभावेन धर्मभूतानुगतिव्यावृत्तिप्रतिपत्त्यभावेऽपि धर्मिभूतमनुगतस्वरूपम्, विशेषस्वरूपञ्च प्रतिपत्तुं शक्नोतीति निर्विकल्पकमपि सामान्यविशेषविषयमित्यर्थः।

ननु निर्विकल्पकानन्तरभावि सविकल्पकमपि किमेवमेवेत्याह—सविकल्पकन्त्विति। निर्विकल्पकानन्तरभावि सविकल्पकं ज्ञानं सामान्यं सामान्यरूपेण, विशेषञ्च विशेषरूपेण विषयीकरोतीत्यर्थः।

चोदयति। ननु वस्त्वन्तरानुसन्धानेति। इन्द्रियाणां केवलं संबद्धार्थग्राहकत्वमेव, न पुनरनुवृत्तिव्यावृत्त्योरनुसन्धानशक्तिरपीति। ततः किमित्याह—इन्द्रियसामर्थ्यसमुत्थमिति। इन्द्रियाणां तत्र सामर्थ्याभावादेव सामान्यविशेषयोरनुवृत्तिव्यावृत्त्यंशौ कथं प्रत्यक्षविषयभूताविति।

परिहरति—उच्यत इति।

तव्यानुभविता संस्कारवशेन वस्त्वन्तरमनुसन्दधदिन्द्रियेण[१] सामान्यविशेषात्मना वस्तु शक्नोत्येव प्रत्येतुम् ।

तथा निर्विकल्पकेन सामान्यविशेषौ द्वे वस्तुनी प्रतिपद्यमानेनापि तयोर्भेदो गृहीतुं न शक्यते । न हि वस्तुभेदमात्रेण भेदबुद्धिः[२], किन्तु धर्मान्तरग्रहोऽपि[३] भेदबुद्धौ सहकारी । तेनानुगतिव्यावृत्ती धर्मान्तरभूतेऽगृह्णतः सत्यपि सामान्यविशेषयोर्भेदे भेदबुद्धिर्नासीत्, उत्तरकाले च वस्त्वन्तरानुसन्धानेन ते प्रतिपद्य भिन्नत्वमवसीयते । भेदे सति विशेषणविशेष्यभावावसाय इति, न निर्विकल्पकदशायां विशिष्टबुद्धिः ।

[४]सविकल्पकदशायान्तु विशेषणविशेष्यभावमवगच्छति ।

गुणप्रतीतावपि निर्विकल्पकं न विशिष्टतया द्रव्यमवच्छिनत्ति, द्रव्यगुणयोर्भेदानवगमात् । अन्वयव्यतिरेकाभ्यां हि गुणजात्योर्द्रव्याद्भेदोऽवगम्यते[५] । न च निर्विकल्पकेऽन्वयव्यतिरेकाद्यनुसन्धानमस्तीति, तेन न [६]भेदग्रहः, अगृहीतभेदश्च तत् न विशिष्टतां ग्रहीतुमीष्टे इति सविकल्पक एव विशिष्टप्रत्ययः ।

ननु निर्विकल्पकेऽपि सामान्यविशेषौ प्रतिपद्येते, तर्हि तस्यां दशायां, विशिष्टबुद्धिरेवेत्यत्राह—**तथा निर्विकल्पकेनेति** । तयोस्सामान्यविशेषयोर्भेदो ग्रहीतुं न शक्यते, भेदज्ञानं न जायत इत्यर्थः । एतदेवोपपादयति—**न हीति** । केन तर्हि भेदबुद्धिरित्यत्राह—**किन्तु धर्मान्तरग्रहोऽपीति** । कुत इत्याह—**भेदबुद्धौ सहकारीति** । निगमयति—**तेनानुगतीति** । ततः किमित्याह—**उत्तरकाले चेति** ।

न केवलं जातिबुद्धावेव भेदबुद्धिर्नासीत्, गुणप्रतीतावपीत्याह—**गुणप्रतीतावपीति** । कुत इत्याह—**द्रव्यगुणयोरिति** । कथमवगम्यत इत्यत्राह—**अन्वयव्यतिरेकाभ्यामिति** । ततः किमित्याह—**न च निर्विकल्पक इति** । निगमयति—**तेनेति** । निर्विकल्पकदशायामिति शेषः । ततः किमित्याह—**अगृहीतभेदश्चेति** । तेन सविकल्पकदशायां भेदावगतिः, विशेषणविशेष्यावगतिरिति, गौरयम् शुक्लोऽयम, गच्छति गौतमः, देवदत्तोऽयं दण्डीति पञ्चविधास्वपि कल्पनासु सविकल्पक एव विशिष्टप्रत्यय इति ।

---

१ संयोगी इति मु. पु. पा. ।
२ सिद्धिरिति मु. पु. पा. ।
३ ग्रहे इति मु. पु. पा. ।
४ सविकल्पकमित्येव मु. पु. पा. ।
५ अवसीयत, इति मु. पु. पा.
६ ग्रहणमिति, मु. पु. पा.

नामकल्पनायामपि शब्दवाच्यतायाः स्मर्यमाणाया एव [1]विशेषणत्वम् । कर्मकल्पनाप्येवमेव व्याख्येया । [2]प्रत्ययान्तरोपस्थापितेऽपि विशेषणे विशिष्टप्रत्ययो भवत्येव । आत्मनः प्रमातृत्वान्निर्विकल्पकपृष्ठभाविनश्च सविकल्पकस्य गृहीतग्राहित्वेऽपि धारावाहिकन्यायेन [3]प्रमाणत्वं वेदितव्यम् । विशेष्यविशेषणभावातिरेकेणागृहीतग्राहकतापि सम्भवत्येव सविकल्पकस्य । अस्य च बाह्यवस्तुविषयत्वं जातिनिर्णये निर्णीतम् । न चेदमनिन्द्रियजं ज्ञानम्,

नामकल्पनायां शब्दवाच्यतायाः स्मर्यमाणाया एव विशेषणत्वसम्भवाद्देवदत्तोऽयमित्यादिविशिष्टप्रत्ययविषयं विज्ञानं प्रत्यभिज्ञावज्जन्यत इत्याह—**नामकल्पनायामपीति**।

ननु भिन्नविषययोः संस्कारेन्द्रिययोः नैकज्ञानजनकत्वं दृष्टम्, सत्यम्, संज्ञिप्रत्यक्षम्, संज्ञा च स्मर्यते, तयोर्भेदाग्रहाद्विशिष्टज्ञानकरत्वाज्ज्ञानैक्यमपि युज्यत इत्यविरोधः । तदुक्तम्—

"संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते ।
संज्ञिनः प्रागवस्थानान्न रूपाच्छादनक्षमा ॥ इति ।

गच्छति गौतम इति कर्मकल्पनाप्येवमेवेत्याह—**कर्मकल्पनेति** । ननु कर्मकल्पने कर्मप्रत्ययोऽप्रत्यक्ष इति कथं तन्निमित्तको विशिष्टप्रत्ययः, अन्यत्र तु प्रत्यक्षेण विशेषणे दण्डादौ दण्डीति प्रत्ययो युक्त एवेत्यत्राह—**प्रत्ययान्तर इति** । प्रत्ययान्तरेण विजातीयेनोपस्थापितस्यापि विशेषणत्वाविरोधाद् बुद्धिस्थत्वमेव विशेषणप्रयोजकम् नैकजातीयप्रत्ययोपस्थापितत्वमपीत्यनु[4]मेयेऽपि कर्मणि गच्छत्ययमिति विशिष्टप्रत्ययो भवत्येवेति । नन्वेकज्ञाने भासमानोऽर्थः ज्ञानान्तरार्थे कथं विशेषणं भवतीत्यत्राह—**आत्मनः प्रमातृत्वादिति** । नन्वनुभवगृहीतार्थविषयत्वाद्यथा स्मृतेरप्रामाण्यम्, तथा निर्विकल्पकेन गृहीतार्थविषयत्वात्सविकल्पकस्याप्यप्रामाण्यं स्यादित्यत्राह—**निर्विकल्पकेति** ।

यद्वा निर्विकल्पकात्सविकल्पकस्य विशेषणविशेष्यभावरूपार्थाधिक्यादगृहीतार्थग्राहित्वमुपपद्यते इत्याह—**विशेष्येति** ।

ननु सविकल्पकज्ञानस्य न बाह्यविषयत्वं सम्भवति, विकल्पाकारस्य बाह्यवस्तुत्वाभावात् "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इत्युक्तत्वादित्यात्राह—**सविकल्पकस्येति** । ननु निर्विकल्पकेन गृहीतार्थविषयत्वे स्मृतिवदेवाप्रामाण्यमित्यत्राह—

[1] विषयत्वमिति, मु. पु. पा.

[2] प्रत्ययान्तर उपस्थिते चापीति, मु. पु. पा.

[3] प्रामाण्यमिति, मु. पु. पा.

[4] स्वसिद्धान्तं स्मारयति—अनुमेये त्विति ।

**इन्द्रियाधीनप्रवृत्तित्वात् । अपरोक्षार्थविभासो ह्ययं सविकल्पकप्रत्ययः । स तादृशो नेन्द्रियव्यापारमन्तरेणास्ति ।**

त्रिपुट्या निरूपणम् ।

**सम्प्रति मातरि मितौ च प्रत्यक्षं व्याख्यातुमाह—**

**"सर्वविज्ञानहेतूत्था मितौ मातरि च प्रमा ।**
**साक्षा[1]त्कर्तृत्वसामान्यात्प्रत्य[2]क्षत्वेन सम्मता" ॥ इति ।**

इन्द्रियाधीनेति । सविकल्पकस्यैन्द्रियकत्वमेवोपपादयति—**अपरोक्षार्थेति** । ततः किमित्याह—**स तादृश इति** ।

"**मेयमातृप्रमासु सेत्यत्र मेये प्रत्यक्षत्वं दर्शयित्वा न चेदमित्यादिना,** इदानीं मितिमात्रोः प्रत्यक्षत्वं दर्शयितुं, सर्वज्ञानानां मितौ मातरि च प्रत्यक्षत्वं श्लोकेन प्रतिजानीते—**सर्वविज्ञानेति** । अतश्चेन्द्रियसंप्रयोगपूर्वानुभवजनितसंस्कारंव्याप्तिलिङ्ग-मित्येवमादिसर्वविज्ञानहेतूत्था—जायमाना संवित्तिः साक्षात्कर्तृत्वसामान्यात्—साक्षा-त्कारित्वेनेत्यर्थः ।

---

[1] अत्र मूले साक्षात्कर्तृत्वसामान्यादिति पाठो दृश्यते । इदं च साक्षात्कारित्वमिति व्याख्यातं व्याख्यात्रा । केषुचित् कोशेषु, दर्शनान्तरेषु च साक्षात्कारत्वसामान्यादिति, पाठो दृश्यते इति ।

[2] अत्रेदमवधेयम्—तार्किकाः घटचक्षुस्संयोगे सति अयं घट इति ज्ञानं जायते, इदं व्यवसायरूपमिति वदन्ति । ततो घटमहं जानामीत्यपरं ज्ञानमुत्पद्यते, अयमेवानुव्यवसाय इति गीयते । अनेन व्यवसायो गृह्यत इत्यङ्गीकुर्वन्ति ।

प्राभाकरमीमांसकास्तु—सर्वेषु स्मृत्यनुभवरूपेषु ज्ञानेषु त्रिपुटीमुररीकुर्वाणा घटमहं जानामि, घटमहं स्मरामीत्यनुव्यवसायात्मकमेव ज्ञानमभ्युपगच्छन्ति, नत्वयं घट इति । ज्ञानं ज्ञाता ज्ञेयम्, मितिर्माता मेयमिति चैतत्त्रितयं त्रिपुटीत्यभिधीयते । सर्वेषु ज्ञानेषु आत्मा कर्तैव, न तु कर्म । परसमवेतक्रियाफलशालित्वं कर्मणो लक्षणमिति गीयते । अतस्स जडो भवति । घटादिर्विषयो जड इत्यत्र न कोऽपि विप्रतिपद्यते । यदि ज्ञानमपि जडं स्यात्तर्हि समस्तस्य जगत आन्ध्यं प्रसज्येत । तथा चाभाणकः—

"अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे" । इति ।

तस्मात् ज्ञानं स्वप्रकाशं अर्थात्मनोः प्रकाशकमित्येषितव्यम् ।

तच्च ज्ञानमाश्रयविधयाऽऽत्मानं, विषयविधया घटादिकञ्च प्रकाशयति । तत्र मतद्वयमस्ति । तत्राद्यमते ज्ञानं यद्यपि न स्वात्मानं विषयीकरोति, न वाऽऽत्मानम्, तथापि तादात्म्येन स्वस्मिन्व्यवहारं प्रयोजयति, स्वसमवायेन आत्मनि च व्यवहारं प्रयोजयति । इदमेव प्रभाकरमिश्रीयं प्राचीनप्राभाकरमतमिति व्यवहरन्त्यभियुक्ताः ।

[1]या काचिद्ग्रहणस्मरणरूपाऽर्थप्रतीतिः, तत्र साक्षादात्मा भाति। न ह्यर्थावभासिन्यात्मन्यनवभासमाने विषया भासन्ते। सर्वा हि प्रतीतिरेवमुपजायतेऽहमिदं जानामीति, न पुनर्जानातीत्येवं काचिद्बुद्धिरस्ति।

तदा[2] च स्वपरसंवेद्ययोरनतिशय सङ्गस्स्यात्। न च [3]प्रत्ययान्तर-

मितिमात्रोरपि मातुः प्राधान्यात्तस्यैव प्रथमं प्रत्यक्षत्वं दर्शयन् स्वयमेव श्लोकं व्याचष्टे—**या काचिदिति**। याऽत्र ग्रहणस्मरणरूपा प्रतीतिः—प्रमाणरूपा, स्मृतिरूपा च या प्रतीतिः, तत्र साक्षादवगतरूपेषु प्रयोगेषु इदमहं जानामीति, इदं स्मरामीति मातृतयानुगमात्, कल्पनालाघवाच्च, **सर्वत्र प्रमातृप्रमितिप्रमेयेषु त्रिषु[4] संविदेकैव**। अतश्च, मम घटः प्रकाशते नान्यस्य, तथा घटः प्रकाशते न पटः, तथा न सुप्तः, किन्तु जानामीति व्यावृत्ततया प्रकाशमानेषु निर्देशाच्च। यथा अर्थप्रतिबद्धव्यवहारजनकतयार्थसंवेदनमित्युच्यते, तथा अर्थसंवित्कालीनमात्मप्रतिबद्धमहमित्यादिशब्दप्रयोगरूपव्यवहारदर्शनात्मकसंवेदनमपि तदेव ज्ञानमित्यर्थः।

नन्वात्मनोऽर्थस्य च भाने, कथं विषयत्वप्रतिषेध इत्यत्राह—**नेति**। आत्मन्यनवभासमाने कदाचिन्न विषया भासन्ते, उत्तरकाले वेत्तृविषयज्ञानोत्पत्तिसमये विषयावभासाभावादित्यर्थः।

किञ्च प्रतीतिस्वभावादपि विषयवित्तावेवात्माऽवभासत इत्यभ्युपगम्यत इत्यत्राह—**सर्वा हि प्रतीतिरिति**। आत्मनो ज्ञानान्तरेणावभासमाने जानातीत्यवभासनं स्यात्, न पुनर्जानामीति।

ज्ञानान्तरेण वेद्यत्वे दूषणान्तरमाह—**तदाचेति**। घटवित्तिव्यवहारविषयत्व-

---

अपरञ्च मतम्—ज्ञानं स्वं स्वाश्रयञ्च विषयीकुर्वत् स्वव्यवहारम्, स्वाश्रयव्यवहारञ्च प्रयोजयतीति। इदमेव पूर्वमतादस्य मतस्य वैलक्षण्यम्। एतदेव नव्यप्राभाकरमतं पञ्चिकाकर्तुर्मतमिति बोद्धव्यम्। एतत्सर्वं तत्वचिन्तामणिपर्यालोचनेनावगम्यते। यदुपज्ञं नव्यन्यायशास्त्रम्, सः सर्वतन्त्रस्वतन्त्रः गङ्गेशोपाध्यायः स्वग्रन्थारम्भे इत्थं प्रत्यज्ञासीत् यथा—

अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतम्।
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलम्॥
तन्त्रे दोषगणेन दुर्गमतरे सिद्धान्तदीक्षागुरु—
र्गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिम्॥ [श्लो-२] इति।

अत्र श्लोके गुरूणाम्—प्राभाकराणां मतं ज्ञात्वा इत्यर्थः। ज्ञानस्य स्वप्रकाशत्वम्, तत्र प्रमाणञ्चानुपदमेव वक्ष्यते।

[1] यावतीति मु. पु. पा. [2a] तथा हि इति मु. पु. पा.

[2b] "तदा च स्वपरवेद्ययोरनतिशयस्स्या"दिति पञ्चिकावचनं चतुर्धा व्याख्यातं नारायणभट्टेन न्यायसिद्धिकृता। अस्य मूलं प्रभाकरविजयस्य १९ तमं प्रकरणम्।

[3] प्रमाणान्तरेति मु. पु. पा [4] आत्मसु आत्मप्रमेयेषु इति क. पुस्तके।

**विषयत्वेन नियमः सम्भवति। एकप्रतीतिविषयत्वे युक्त एव सहोपलम्भनियमः। [1]तस्मात्सर्वैरेव ज्ञानहेतुभिरात्मनि साक्षात्कारवती धीरुत्पद्यते।**

मेवात्मनः परवेद्यत्वादतिशय इत्युच्यते, यदि विषयवित्तावात्मा न प्रकाशते, ततो ज्ञानानां कर्मतया प्रकाशमाने परात्मवत्स्वात्माप्ययमित्यनेनाकारेण प्रकाशेत, न पुनरहमिति परात्मनो विलक्षणाकारेण। तदा स्वस्य वेद्यभूतपरात्मनश्चातिशयो न स्यादित्यर्थः।

अथवा स्वपरवेद्ययोरनतिशयस्स्यादित्यस्यायमर्थः,—यदि विषयवित्तावात्मा न प्रकाशते, तदा मयेदं विदितमित्यनवभासे सति घटात्स्वस्य विशेषाभावात्परवेद्याद्घटात्स्वस्यातिशयो न स्यादित्यर्थः।

अथवा विषयवित्तावात्मानवभासे स्ववेद्यपरवेद्ययोरतिशयो न स्यात्, अन्यस्यापि साधारणत्वात्, स्वस्य व्यवहारो न स्यादित्यर्थः।

अथवा ज्ञानान्तरवेद्यत्वे स्वात्मनो ज्ञानान्तरवेद्यघटादेः, स्वस्यातिशयाभावाद्घटादिवदिदन्तया प्रकाशनं स्यात्, न पुनरहन्तयेत्यर्थः।

ननु यथा चाक्षुषं रूपम्, श्रावणश्शब्द इत्यत्र चक्षुश्श्रोत्रयोरप्रत्यक्षत्वेऽपि ज्ञानान्तराधीन एव तद्गोचरव्यवहारः, तथाऽत्राहमादिशब्दप्रयोगो ज्ञानान्तराधीन एव भविष्यतीत्यत्राह—**न च प्रत्ययान्तरेति**। प्रत्ययान्तरनिबन्धनत्वे प्रमेये सहोपलम्भनियमो नोपपद्यते, किञ्च ज्ञानान्तरनिबन्धनत्वे घटज्ञानोत्पत्यनन्तरं तावत्तद्वेत्तृविषयज्ञानान्तरमित्येकस्मिन्नेव ज्ञाने आयुषः पर्यवसानं स्यात्, न विषयज्ञानान्तरावकाशः। किञ्चात्मविषयज्ञानान्तरोदये कारणं न दृश्यते। अत्र बाह्येन्द्रियाणां कारणत्वमिति चेत्, मैवम्। आत्मनो द्रव्यत्वे सत्यस्पर्शत्वादेव इन्द्रियाणां कारणत्वासंभवात्, नापि मनसः, प्रमाणाभावात्।

नन्वात्मा मानसप्रत्यक्षवेद्यः सुखसम्बन्धाश्रयत्वात्, सुखवदिति चेत्, मैवम्, सत्प्रतिपक्षत्वात्—आत्मा मानसप्रत्यक्षो न भवति, संस्कारसंबन्धाश्रयत्वात्संस्कारवदिति। किञ्च मानसत्वे सुखादिवदविभुत्वं ग्राह्यत्वञ्च स्यात्, तदात्मज्ञानपरंपरायामेवायुषः पर्यवसानं स्यात्।

किञ्च कल्पनालाघवाच्च विषयवित्तेरेव वेत्तृव्यवहारानुगुण्यमात्रं कल्प्यताम्, धर्मिकल्पनातो धर्मकल्पनैव लघीयसीति न्यायात्। तेन घटज्ञानस्य व्यवहारकाल एवाहं जानामीति वर्तमानज्ञानज्ञातृत्वप्रतिभासनिबन्धनोऽयं वित्तिव्यवहार एव घटज्ञानस्यात्मज्ञानत्वे प्रमाणम्। अन्यथा ज्ञात इति स्यादित्यर्थः। उपसंहरति—**तस्मादिति**।

[1] आत्मनः प्रमेयत्वं भाट्टानामभिमतम्। तन्निरसनं मनसि निधायात्मनः प्रमेयत्वनिवृत्तिनिदानभूतं सर्वार्थधीनिष्ठं भाननियमं दर्शयितुमस्य वाक्यस्य प्रवृत्तिः। अयं भावः—सर्वविषयबोधे आत्मा आश्रयतया भासत इत्यवश्यमेषितव्यम्। इतरथा मयेदं विदितमिति

विषयापेक्षया प्रमाणान्तरत्वनिरूपणम् ।

**नन्वेवं तर्हि सर्वं प्रत्यक्षं प्रसक्तम्? यदि मात्रभिप्रायम्। इष्टमेव। प्रमेयाभिप्रायमिति चेत्। न। सर्वत्र प्रमेयस्यापरोक्षत्वनियमाभावात्। स्मृतिष्वनुमानादिषु[1] च न प्रमेयमपरोक्षम्। तेन [2]प्रमेयापेक्षयैव प्रमाणान्तरत्वव्यपदेश इति मन्तव्यम्। सर्वाश्च प्रतीतयः स्वयं प्रत्यक्षाः प्रकाशन्ते। तेन तासां स्वात्मनि युक्तमेव प्रत्यक्षत्वम्, प्रमाणत्वञ्च।**

ज्ञानस्य स्वप्रकाशत्वनिरूपणम्।

**मेय-मातृ-प्रमाणानां [3]प्रतीतौ विशेषः कः? उच्यते—**

**मेये मातरि च व्यतिरिक्ता प्रतीतिः साक्षात्कारवती, मितौ त्वव्यतिरिक्ता।**

चोदयति—**नन्वेवमिति**। सर्वेषु ज्ञानेष्विदमहं जानामीति प्रयोगात्त्रयाणां प्रत्यक्षत्वाङ्गीकारात्सर्वमपि ज्ञानं प्रत्यक्षमेवेति, नानुमानादिविभाग इत्यर्थः। परिहरति—**यदि मात्रभिप्रायमिति**। शङ्कते—**प्रमेयाभिप्रायमिति**। परिहरति—**सर्वत्रेति**। नियमाभावमेव दर्शयति—**स्मृतिषु अनुमानादिष्विति**। निगमयति—**तेनेति**। प्रमेयापेक्षयानुमानादिप्रमाणभेदव्यवहारः, मात्रपेक्षया सर्वं प्रत्यक्षमेवेत्यर्थः।

एवमात्मनः प्रत्यक्षत्वमुपपाद्येदानीं सर्वज्ञानानां प्रत्यक्षत्वं वक्तुमुपक्रमते—**सर्वाश्च प्रतीतय इति**। तत्रेदमहं गृह्णामि, स्मरामि इति वा त्रितयमेव भासते, इन्द्रियसंस्कारलिङ्गादिकारणैर्जायमान संवित्—मेयमात्रोरिव साक्षात्कर्तृत्वसामान्यात् स्वात्मन्यपि प्रत्यक्षेत्यर्थः। **प्रमाणत्वञ्चेति** ग्रन्थच्छेदः। प्रत्यक्षप्रमाणत्वञ्चेत्यर्थः।

ननु यथा मितौ स्वापेक्षया स्वस्य मानत्वम्, तथा मेये मातरि च स्वापेक्षया तयोः

---

प्रतिभासाभावप्रसङ्गात्। दृश्यते च विषयवित्तौ मयेदं विदितमिति सर्वदा सर्वत्र सर्वेषां प्रतिभासः। आत्मानवभासे स्वपरवेद्ययोरतिशयो न स्यात्। अस्ति च वैलक्षण्यं स्वरूपतः कार्यतश्च। स्ववेद्यं स्वप्रतियोगितया प्रकाशते, परवेद्यं परप्रतियोगितया। यथा स्ववेद्यः स्वव्यवहारः कार्यम्, तथा परवेद्यः परव्यवहारः कार्यम्। योऽयं स्ववेद्यस्य परवेद्यादतिशयः, सोऽसति स्वभावे न सञ्जाघटीतीत्यर्थापत्तिरेव ग्राहकसिद्धौ प्रमाणमिति।

तथा घटमहं जानामीति वर्तमानप्रतीतिव्यवहारौ आश्रयमन्तराऽनुपपद्यमानौ आत्मानं समर्थयतः। आत्मसाधिका संवित् स्वाश्रयव्यतिरिक्तकर्मिका सकर्मकक्रियात्वात् पाकादिवत्। अतस्सर्वार्थवित्तिषु आत्मा ग्राहकतया भासत इति प्रघट्टकार्थः। अस्य निराकरणं शास्त्रदीपिकानीतितत्त्वाविर्भावयो[पृ. १२५-१३०]र्द्रष्टव्यम्।

[1] अनुमानान्तरेष्विति मु. पु. पा. [2] प्रमेयसापेक्षयेति ख. पु. पा.

[3] एष प्रतीतौ विशेषः इति. मु. पु. पा., गपुस्तकानुसारी पाठ उपरि सन्निवेशित इति ध्येयम्।

**इदमहं गृह्णामीति वा, इदमहं स्मरामीति वा त्रितयमेवावभासते। [1]मेयमात्रवभासरूपा संविदेका। न तु [2]तस्यां संविदन्तरं चकास्ति। न च सा नावभाति? [3]तदनवभासे सर्वानवभासप्रसङ्गात्।**

किं प्रमाणत्वं विद्यत इत्यत्राह—**मेयमातृप्रमाणानामिति**[3]। विशेषमेव दर्शयति—**उच्यते इति**। मेये मातरि च स्वव्यतिरिक्त एवोपलम्भः, मितौ त्वव्यतिरिक्त इत्यर्थः। एतदेवोपपादयति—**इदमहमिति**।

ननु मितेर्मातुश्च संविदन्तरेण सिद्धिरित्यत्राह—**मेयमात्रवभासरूपेति**। उपलम्भस्योपलम्भार्थमुपलम्भकान्तरं नास्तीति। अस्तिचेदुपलभ्येत। किञ्च उपलम्भस्यैवोपलम्भार्थमुपलम्भान्तरापेक्षायामनवस्था स्यात्, नन्वेवं तर्हि संविद्विषयसंविदन्तराभावे संविदोऽनुपलब्धिरेवेत्यत्राह—**न च सेति**। कस्मादित्याह—**तदनवभास इति**। प्रमेयं हि जडत्वात्प्रमाणायत्तां सिद्धिमाशास्ते, तत्रावश्यं किंचित्स्वतस्सिद्धमेष्टव्यम्, अन्यथा [4]जगदान्ध्यमविचिकित्स्यमापद्यते। तस्मादनन्याधीनसिद्धत्वात्स्वयंप्रकाशा संविदिति।

अथवा ज्ञानं स्वयंप्रकाशं न संभवति, सत्त्वाद्घटवदित्यत्राह—**तदनवभास इति**। परेण प्रकाश्यं परं प्रति प्रकाशं न भवति, प्रकाश्यत्वाद्घटवदिति। प्रकाश्यस्य प्रकाशत्वायोगात् सर्वानवभास इत्यर्थः।

अथवा परावभासस्याप्यवभासो भवितुमर्हति, स्वस्यानवभासे घटादिवत् सर्वानवभासप्रसङ्गादिति [5]प्रसङ्गेनाऽनुमानमुच्यते।

---

[1] मेयमात्रुभयरूपेति मु. पु. पा. [2]A तस्या इति मु. पु. पा.

[3] प्रमाणेषु इति आदर्शे पाठो दृश्यते। [4] जगदान्ध्यमापद्येत इति कपुस्तके पाठः।

[5] तदनवभासे सर्वानवभासप्रसंगादित्यादिना मूले ज्ञानस्य स्वयंप्रकाशत्वे प्रसङ्गापरपर्यायाऽर्थापत्तिस्सूचितेति व्याख्याकारः स्वयमेवाग्रे वक्ष्यति। अतः प्रसङ्गेनाऽनुमानमित्येव पाठस्साधीयानिति स एवोपरि निवेशितः इति बोध्यम्।

[2]B ज्ञानं स्वयं प्रकाशमिति प्रागवादिष्म। स्वप्रकाशत्वञ्च स्वसम्बद्धव्यवहारे सजातीयज्ञानान्तरापेक्षानियतिरहितत्वमिति टीकाकृदलिलक्षत्। ज्ञानस्य स्वव्यवहारे संविदन्तरनैरपेक्ष्येण स्वप्रकाशत्वमव्याहतम्। प्रमातृप्रमेययोः स्वव्यवहारे संविदपेक्षा विद्यते, अतस्तयोर्न स्वप्रकाशत्वम्। तत्र च प्रमाणमनुमानम्, तथाहि—घटादिसंविद्व्यवहारः संविन्निबन्धनस्तदनन्तरं जायमानत्वात्, घटव्यवहारवत्। संवित् स्वप्रतिबद्धव्यवहाररूपकार्ये स्वसमानजातीयपरानपेक्षा, तथाभूतपरगतकार्यकारित्वात्, यत् यथाभूतं परगतकार्यं करोति, तत् स्वगततथाभूतकार्यजननार्थं तथाभूतपरानपेक्षम्, यथा दीपो दीपान्तरानपेक्ष इति च।

एवं संविदः स्वयम्प्रकाशत्वेऽर्थापत्तिरपि प्रमाणं मन्तव्यम्। घटसंविद्व्यवहारः घटज्ञानहेतुतां विना नोपपद्यत इति घटसंविद्विषयसंविद एव सिद्धेः। न चान्योपपत्तिर्वक्तुं शक्यते, तस्मात् संविदः स्वयम्प्रकाशत्वेऽनुमानमर्थापत्तिश्चेति प्रमाणद्वयं बोध्यम्। तदनवभासे सर्वानवभासप्रसङ्गादिति मूलं व्याचक्षाणो व्याख्याकृत् उपर्युक्तमर्थमसूसुचत्। अत्र प्रकाशशब्देन

**किञ्चाप्रकाशस्वभावानि मेयानि, माता च प्रकाशमपेक्षन्ताम् । प्रकाशस्तु प्रकाशात्मकत्वान्नान्य[1]मपेक्षते । जाग्रतो हि मेयानि माता च प्रकाशन्ते । सुषुप्तस्य तदा न तत् द्वयमपि प्रकाशते । न च तदानीं**

हेत्वन्तरमाह—किञ्चेति । नन्विदमहं जानामीति त्रितयमवभासते, तस्य स्वयम्प्रकाशत्वाभ्युपगमे इतरयोरपि प्रकाशत्वमेवेत्यत्राह—जाग्रतो हीति । ननु

---

व्यवहारहेतुत्वमुच्यते, घटप्रकाश इति घटव्यवहारहेतुरित्यर्थः । स्वप्रकाश इति च स्वयमेव स्वव्यवहारहेतुरित्यर्थो बोध्यः । एतेन ज्ञानं स्वप्रकाशमित्यत्र स्वस्य प्रकाशः स्वप्रकाश इति षष्ठीतत्पुरुषो वा, स्वश्चासौ प्रकाशश्चेति कर्मधारयो वेति विकल्पोक्तं दूषणजातं नावकाशमासादयति । अतो लक्षणप्रमाणसिद्धत्वात् ज्ञानस्वप्रकाशत्वस्य न किञ्चिदनवद्यम् ।

तत्र ज्ञानानां स्वप्रकाशविषये मतत्रयं दार्शनिकेषु प्रथते । तत्राद्यं ताथागतानां विज्ञानवादिनाम्, द्वितीयमद्वैतवेदान्तिनाम्, चरमञ्च प्राभाकराणामिति । तत्रादिमो ज्ञानातिरिक्तं बाह्यं वस्त्वपलपन् क्षणिकं विज्ञानं स्वप्रकाशं नानेत्यातिष्ठते । तच्च ज्ञानमनादिना वासनावैचित्र्येणोपप्लवेन ग्राह्यग्राहकाकाररूपेण प्रकाशते । तत्र कर्तृकर्मभावविरोधो ज्ञानातिरिक्तस्थल एव पदं निधत्ते । अतः स्वविषयत्वरूपं स्वप्रकाशत्वं तेषां निर्विवादम् । परमत्र शालिकनाथो मीमांसाभाष्यपरिशिष्टे [पृ. १८] तन्मतमनुवदन्नित्थं तन्मतमवतारयति "न हि परे कर्मकर्तृभावं ज्ञानस्येच्छन्ति, ज्ञानं स्वरससिद्धप्रकाशं स्वसन्तानवाहीति मन्यन्ते । न च स्वरससिद्धप्रकाशस्य परापेक्षास्ति येन कर्मकर्तृभावो भवेत्" इति । यद्वा तद्वा भवतु स्वविषयत्वरूपं स्वप्रकाशत्वं सौगतानामभिमतं इत्यत्र नास्ति विप्रतिपत्तिः ।

अद्वैतवेदान्तिनस्तु ज्ञानं द्विविधम् ब्रह्मणः स्वरूपभूतं वृत्तिरूपञ्चेति । वृत्तेरन्तःकरणपरिणामरूपत्वेन अन्तःकरणस्य जडत्वात् वृत्तेर्जडत्वम्, स्वरूपभूतं तु स्वयम्प्रकाशमेकं उत्पत्तिविनाशरहितमिति वदन्तः नामरूपाभ्यां व्याकृतस्यास्य प्रपञ्चस्य सदसद्भ्यां निर्वक्तुमशक्यत्वेन अनिर्वचनीयतां सङ्गिरन्ते । तन्मतेऽवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वयोग्यत्वं स्वप्रकाशत्वमिति परिष्कृतं प्राज्ञैः ।

प्राभाकरमीमांसकास्तु सर्वदा ज्ञानमुत्पद्यमानं विषयात्मानौ प्रकाशयदेव प्रकाशते दीपवत् इति वदन्तः सविषयकविज्ञानस्वप्रकाशतां मन्यन्ते । अतस्तन्मते विषयात्मानौ विहाय ज्ञानं कदापि नोदेति, यदा ज्ञानं प्रकाशते, तदार्थात्मानौ सहैव प्रकाशेते । अतः संवित्प्रकाशेन सहार्थात्मनोः प्रकाशः । विषयवर्तमानतादशायां ज्ञानस्य विषयसहभाव उपपद्यते । अतीतानागतविषयसहभावो ज्ञानस्यानुमानविधया सिध्यति । यथा—अतीतबुद्धिः अतीतविषयसहिता तद्विषयहानादिबुद्धिजनकत्वात् वर्तमानबुद्धिवदिति । एतेन केवलं ज्ञानं प्रत्यक्षमिति वदन्तो योगाचारा निरस्ताः । यतो हि ज्ञानप्रकाशनवेलायां ज्ञानातिरिक्तौ विषयात्मानौ सह प्रकाशेते । अतः केवलस्य ज्ञानस्यैव प्रत्यक्षता इति न घटते । इदं मतं ज्ञानस्यानुमेयत्वेनार्थस्य प्रत्यक्षत्वमङ्गीकृत्य निराकारि कुमारिलभट्टैः । प्रभाकरमिश्रस्तु बौद्धसम्मतं स्वप्रकाशत्वमनुसरन्नपि त्रिपुट्याख्यया निशितयाऽसिधारया विज्ञानवादमच्छिनत्, अहो बुद्धिकौशलं प्रभाकरमिश्रस्येत्यवदधतु धीधना सुधिय इति ।

[1] अपेक्षन्ते इति ग. पु. पा.

तद् द्वयमपि नास्त्येव, प्रबोधे प्रत्यभिज्ञानात्। तत्र प्रकाशात्मकत्वे तु सुषुप्तिदशायामपि तत् द्वयं प्रकाशेत। तस्मादप्रकाशात्मकं तत् द्वयमप्यङ्गीक्रियते। प्रकाशस्य त्वप्रकाशमानस्य सत्तैव नाभ्युपेयते। तस्मात्स्वयंप्रकाशसमय[1] एव मेयमातृप्रकाशः।

किञ्च स्वत एव यदुपपद्यते, न तत्र परापेक्षा युक्ता। मेयानां मातुश्च स्वयं प्रकाशो नोपपद्यत इति, युक्ता तयोः परापेक्षा। मितौ च काचिदनुपपत्तिर्नास्तीति स्वयम्प्रकाशैव मितिः।

सौत्रान्तिकमतेन पूर्वपक्षः।

तत्राहुः—[2]स्वयम्प्रकाशा चेन्मितिरभ्युपेयते, तदा निराकारस्य प्रकाशायोगादवश्यमाकारोऽभ्युपगमनीयः। [3]एकश्चायमाकारोऽवभासते, तेन प्रकाश एव तदाकार इति युक्तम्।

सुषुप्त्यवस्थायां तयोः किं नास्तित्वमेवेत्यत्राह—**न च तदानीमिति**। कुत इत्याह—**प्रबोध इति**। मेयमात्रोरपि प्रकाशात्मकताभ्युपगमे सुषुप्तिदशायामपि प्रकाशेतेत्यत्राह—**तत्र प्रकाशात्मकत्व इति**। उपसंहरति—**तस्मादिति**। ननु यदि मेयमात्रोरप्रकाशात्मकत्वम्, तर्ह्येकप्रकाशाधिरूढत्वान्मेयमात्रोरिव मितेरपि प्रकाश्यत्वमेवेत्यत्राह—**प्रकाशस्य त्विति**। तस्मादित्युपसंहारः।

हेत्वन्तरञ्चाह—**किञ्चेति**। कल्पनालाघवादिति भावः। किमतो भवतीत्यत आह—**मेयानां मातुश्चेति**। **स्वप्रकाशत्वं नाम—स्वप्रतिबद्धव्यवहारे सजातीयज्ञानान्तरापेक्षानियतिरहितत्वम्**। अर्थापत्तिस्तत्र प्रमाणम्। तथाहि—उत्पन्नज्ञानसम्बन्धिज्ञानमित्येवंरूपो वर्तमानव्यवहारस्तावदविप्रतिपन्नः, स च ज्ञानान्तरेण नोपपद्यते, ज्ञानान्तरेण चैतज्ज्ञानसमये ज्ञानान्तराभावाज्ज्ञात इति स्यात्, न पुनर्जानामीति, तस्माद्वर्तमानव्यवहारान्यथानुपपत्तिः स्वप्रकाशत्वं साधयति। तदुक्तम्—

[4]स्वप्रकाशा च संवित्तिरर्थापत्त्याऽवगम्यते।
वर्तमानावभासस्तु तस्य स्यादन्यतः कुतः॥ इति।

अर्थापत्तिरेव [5]तदनवभासे सर्वानवभासप्रसङ्गादित्यनेनोक्तं द्रष्टव्यम्।

तत्राधिकारितारतम्येनेत्थं बौद्धाश्चत्वारो भवन्ति—सौत्रान्तिको वैभाषिको हीनपथिको माध्यमिकश्चेति। तत्र सौत्रान्तिकमतं वक्तुमारभते—**तत्राहुरिति**। यदि मीमांसकस्यापि ज्ञानानां स्वयंप्रकाशत्वमिष्टम्, तदा निराकारस्य प्रकाशायोगादेव साका-

---

१ प्रकाशात्मकत्वादिति पाठो खपुस्तके न दृश्यते। २अप्रकाशक एव इति मु.पु. पा.

३ कश्चायमिति मु. पु. पा.

४ स्वयम्प्रकाशे चेति ख. पु. पा. ५ प्रसंगानुमानेनेति. ग. पु. पा.।

किञ्च निराकारत्वे प्रकाशस्य प्रतिकर्मव्यवस्था नोपपद्यते, न हि तस्य सर्वार्थेषु कश्चिद्विशेषः। अर्थाकारत्वे तु यस्याकारोऽसौ, तस्येति घटते प्रतिविषयव्यवस्था। तदाहुः—"न हि [1]संवित्तिसत्तयैव तद्वेदना[2] युक्ता, तस्याः सर्वत्राविशेषादविशेषप्रसङ्गात्, तान्तु सारूप्यमाविशत् तत्सरूपयद् घटयेत्" इति। अत अर्थसारूप्यमेव प्रमाणमिति युक्तम्। व्यवस्थापकतया हि प्रमाणानां प्रमाणत्वम्। अर्थसारूप्यञ्च व्यवस्थाहेतुः, न चक्षुरादिकम्, तस्यानेकार्थसाधारणत्वात्।

किञ्च वित्तिसंवेद्ययोः सहोपलम्भो नियत उपलभ्यते, न कदाचिदपि वित्तिमन्तरेण वेद्यस्योपलब्धिः, नापि वित्तेर्वेद्यरहितायाः।

रत्वमवश्यमाश्रयणीयमिति। ततः किमित्याह—एकश्चायमिति। एकस्यैवाकारस्य भानात्प्रकाश एव तदाकार इति युक्तमिति।

ज्ञानस्य निराकारत्वे दूषणान्तरमाह—किञ्च निराकारत्व इति। निराकारत्वे प्रकाशस्य घटज्ञानं पटज्ञानमिति प्रतिकर्मव्यवस्था नोपपद्यत इति। कुत इत्याह—न हि तस्येति। तस्य—प्रकाशस्येत्यर्थः। [3]प्रकाशस्यार्थान्तरत्वेऽभ्युपगम्यमाने प्रतिकर्मव्यवस्था युक्तैवेत्यत्राह—अर्थाकारत्वे त्विति। उक्तेऽर्थे साक्षित्वेन सौत्रान्तिकग्रन्थमुदाहरति—तदाहुरिति। न हि वित्तिसत्तामात्रेणार्थविशेषप्रतिपत्तिः युक्ता। कुत इत्याह—तस्या इति। तस्याः—वित्तेः सर्वत्राविशेषादेव—विशेषाभावादेव। तां वित्तिं प्रविशदर्थसारूप्यं सरूपयितुं—अर्थसमानरूपतां प्राप्तुं घटयेदित्याह—तान्त्विति। यतो व्यवस्थापकत्वं सारूप्यस्यैव, अत एवार्थसारूप्यस्य प्रमाणत्वमित्याह—अत इति। व्यवस्थापकतया हि प्रमाणानां प्रमाणत्वं, अर्थसारूप्यञ्च व्यवस्थाहेतुः, न चक्षुरादिकं, तस्यानेकार्थसाधारणत्वादित्याह—व्यवस्थापकतयेति।

---

[1] अत्र संवित्तिसत्तैव इति प्रथमान्तपाठो दृश्यते, शास्त्रदीपिकायां न्यायरत्नाकरे च सत्तयेति तृतीयान्तपाठो दृश्यते, तत्रैव स्वारस्यमनुभवद्भिरस्माभिस्स एव पाठो मूले निवेशित इति ध्येयम्।

[2] अस्यायमर्थः—यत्किञ्चद् ज्ञानसत्वेन इदं नीलं इदं पीतमिति वक्तुं न शक्यते। संवित्तिसत्तायास्सर्वत्रार्थे नीलपीतादावविशेषेण सत्त्वात्, अविशेषप्रसङ्गात् संवित्तिसत्तामात्रं निखिलज्ञेयसाधारणं यतः, तस्मादिदं नीलमिदं पीतमिति विशेषो न स्यादित्यर्थः। किन्तु तत् बाह्यं वस्तु स्वेन रूपेण संवित्तिं कुर्वत् घटयेत्—ज्ञानेन विषयभावेन योजयेदित्यर्थः। विषयः ज्ञाने स्वाकारमर्पयन् ज्ञानं स्वसमानाकारं कुर्वत् निरूपणीयं करोतीति भावः।

अत्र वेदान्तकल्पतरुकारोऽमलानन्दः सरूपयदित्यत्र स्वरूपयन्तमिति पाठान्तरं दर्शयन् अर्थशब्दं नित्यपुल्लिङ्गं विशेष्यमध्याहृत्य व्याचख्यौ इति ध्येयम्।

[3] अर्थाकारत्वे इति ग. पु. पा।

ये च [1]परस्परं व्यतिभिन्नावभासा भावाः, तेषां न सहोपलम्भनियमः। न घटस्य पटस्य नियमेन सहोपलम्भः, तेन भेदादनियमव्याप्तात् नियमो व्यावर्तमानोऽभेद एवावतिष्ठमानोऽभेदं साधयति। तदुक्तम्—

"सहोपलम्भनियमादभेदो नीलतद्धियो। [प्रमाण. वा.] रिति"

एतेनैव न्यायेनाहमित्याकारकस्यालयविज्ञानस्य[2] वित्तेश्चाभेदस्समर्थनीयः।

[3]कथं तर्हि [4]ग्राह्यग्राहकाकारबुद्धयः परस्परं भिन्नाः प्रतिभासन्त इति।

तदाहुः—

"[5]भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये।"

प्र. वा. परि. ३ श्लो. ३८९। इति

वित्तिवेद्ययोरभेदे हेत्वन्तरमाह—किञ्च वित्तिवेद्ययोरिति। वेद्यभूतस्य नीलाद्याकारस्य वित्तेश्च सहोपलम्भः। नियममेव दर्शयति—न कदाचिदपीति। वेद्यरहिताया उपलम्भ इति शेषः। ये परस्परं भिन्ना—अत्यन्तंभिन्ना घटपटाद्याः, तेषां न सहोपलम्भ इत्याह—ये च परस्परमिति। एतदेवोपपादयति—न घटस्येति। निगमयति—तेनेति। असहोपलम्भनियमाद्व्याप्ताद्भेदाद्व्यावर्तमानोऽभेद एवावतिष्ठमानो भेदं साधयति। अमुमेवार्थं सौत्रान्तिकेनोक्तमित्याह—तदुक्तमिति। सहोपलम्भनियमादेव ग्राहकगृहीत्योरप्यभेदो युक्त इत्यत्राह—एतेनैव न्यायेनेति।

ननु ग्राह्यग्राहकगृहीतयो न भिन्नाः, तर्हि वित्तिवेत्तृवेद्यानां परस्परं भिन्नप्रतिभासः कथमुपपद्यत इति पृच्छति—कथं तर्हीति। तत्रोत्तरत्वेन तैरुक्तं ग्रन्थमुदाहरति—तदाहुरिति। तस्यायमर्थः—न परमार्थतो ग्राह्यग्राहकत्वाकारः, एकस्य [6]द्व्यात्मकत्वविरोधात्। विकल्पौ त्वेतावेव तज्ज्ञानस्वलक्षणावलम्बिनौ। यथैकमेव स्वलक्षणं वृक्षत्वशिंशपात्वविकल्पयोराश्रयभूतं भवति, तद्वदेकमेकस्वभावमेव सच्छक्तिविशेषाद्ग्राह्यग्राहकविकल्पौ प्रवर्तयतीति।

---

[1] व्यतिभिन्नाभावा इति मु. पु. पा.

[2] अहङ्कारास्पदीभूतस्यांशस्य वित्तेरभेदो युक्त इति मु. पु. पा.

[3] यदि विज्ञानमात्रमेव तत्त्वम्, ततस्तस्य चिन्मात्ररूपत्वान्नीलादेर्ग्राह्याकारस्य इदं नीलमिति कथमवभासः? तथाऽस्मदर्थस्य ग्राहकाकारस्य कथञ्चावभासः इत्याशङ्कामुत्थापयति कथन्तर्हीति।

[4] ग्राह्यग्राहकगृहीतय इति मु. पु. पा.

[5] यश्चायं ग्राह्यग्राहकाकारबुद्धीनां इदं नीलम्, अहं इत्यादीनां पृथगवभासः, सः एकस्मिन् चन्द्रमसि द्वित्वावभास इव बोध्यः। तत्र अनादिरविच्छिन्नप्रवाहा भेदवासनैव निमित्तमित्याशयेनाह—भेदश्चेति।

[6] द्वयाकारत्वविरोधादिति क. पुस्तके।

तथाऽपरमुक्तम्—

"[1]परिच्छेदोऽन्तरन्योऽयं[2] भागो बहिरवस्थितः।
ज्ञानस्याभेदिनो भिन्नप्रतिभासो ह्युपप्लवः॥"

प्र.वा. परि. २. श्लो. २१२। इति।

भेदभ्रान्तौ चानादिभेदवासनैव निमित्तम्।

एतद्विचारणीयम्—येयमाकारविशेषयोगिनी प्रतीतिः, सा किं [3]बाह्यादर्थादुपजायते, किं वा समनन्तरप्रत्ययादिति। तदुक्तम्—

पुनरपि सौत्रान्तिकोक्तश्लोकमुदाहरति—तथाऽपरमुक्तमिति। ननु तर्हि भेदभ्रान्तौ किंनिमित्तमित्याह—भेदभ्रान्तौ चेति।

अतः केवलमेतदेव विचारणीयम्, साकारज्ञानं किं बाह्यादर्थादुपजायते? किंवा समनन्तरप्रत्ययादित्याह—एतद्विचारणीयमिति। एतदप्युक्तमित्याह—तदुक्तमिति। एवं विचारे कृते सौगता मन्यन्ते समनन्तरप्रत्ययमात्रादाकारविशेषोदयो नोपपद्यते, किन्तु देशकालप्रतिनियमबलेन समनन्तरप्रत्ययव्यतिरिक्तादेव बाह्यार्थाज्ज्ञानोत्पत्तिरस्तु, समनन्तरप्रत्ययमात्रात्साकारज्ञानोत्पत्तौ घटज्ञानानन्तरमपि पटज्ञानं जायेतेत्याह—

---

[1] विज्ञानवादे भेदः काल्पनिक इति तन्मतोपपादनावसरेऽयं श्लोकोऽवतारितः शालिकाचार्येण—परिच्छेद इति। अस्यायमर्थः—विज्ञानवादिनां मते सुखाद्यात्मकं स्वप्रकाशं विज्ञानमेकमिदमिति व्यवहारः सङ्गच्छते। परिच्छेदो ग्राहकाकारः सुखादेरन्तरन्यः। परिच्छेदादन्योऽयं भागो ग्राह्यः नीलादिर्बहिःस्थित इवाभाति सर्वेषाम्, यस्मात् कारणात् ज्ञानस्याभिन्नस्य भिन्नाकारौ परमार्थतो न युक्तौ, तस्मात्कारणादन्तर्बहिर्देशसम्बद्धतया भेदप्रतिभासः उपप्लवः, न सत्य इत्यर्थः।

[2] परिच्छेदोन्तराग्योऽयमिति मु. पु. पा, परिच्छेदान्तराघोऽयमिति ख. पु. पा.। अत्राकरग्रन्थानुसारी पाठो मूले सन्निवेशितोऽस्माभिरिति ध्येयम्।

[3] विज्ञानवादिनां मतमुपपादयन् तेषां विचारसरणिं बाह्यार्थविषयिणीमुपचिक्षेप पञ्चिकाकारः। योऽयं घटः पटः इति घटाकारादिकं ज्ञानं जायते, तत्किं बाह्यं घटादिकमादायोपजायते, अथवा समनन्तरप्रत्ययापरपर्यायान्निर्विकल्पकादिति। तत्रैव प्रमाणत्वेनोपन्यस्तोऽयं श्लोकः। अस्यायमर्थः—यदि बुद्धिर्बाह्यं नीलादिकमादाय बाह्यनीलाद्याकारा इत्युच्यते, सत्यमस्ति सा बुद्धिर्नीलाद्याकारविशेषयुक्ता। किन्तु सा बुद्धिर्बाह्यादर्थादुपजायते, अथवा वासनाप्रतिनियमाद्वेति विचारमर्हति। अयं भावः—इदं नीलमित्यादौ ज्ञानातिरिक्तः कश्चनोऽर्थो हेतुतया नोपलभ्यते, बुद्धिस्वरूपमात्रवेदनात्। कादाचित्कतया तस्याः किञ्चित्कारणं व्यवस्थापनीयम्। तच्च बाह्यम्, वासना वा स्यादिति विचारप्रकारः। अत्र पञ्चिकाकारः समनन्तरप्रत्ययं संशयकोटौ निवेशयति, ग्रन्थस्तु वासनाम्, इति सुधियो विभावयन्तु।

[1]यदि बुद्धिस्तदाकारा सास्त्याकारविशेषिणी[2] ।
सा बाह्यादन्यतो वेति विचारमिदमर्हति ॥

प्र. वा. परि. ३. श्लो. ३३४ । इति ।

तत्र सौत्रान्तिका मन्यन्ते—समनन्तरप्रत्ययमात्रादाकारविशेष इति न घटते, देशकालप्रतिनियमायोगात् । घटज्ञानानन्तरमपि पटज्ञानं जायते । [3]यत्र च यदा बहिर्देशे घटोऽस्ति, तत्र यदि घटज्ञानमात्रमेव पटज्ञानोत्पत्तौ हेतुः, तर्हि यदा यत्र पटो नास्ति, तत्र तदापि पटज्ञानं स्यात् । न चैवमस्ति। अतोऽस्ति समनन्तरप्रत्ययादप्यधिकोऽर्थो ज्ञानाकारोत्पत्तिहेतुः ।

किञ्च यथा मरीचिकाजलज्ञाने जलार्थिनः प्रवृत्तस्यार्थक्रिया न सम्भवति, तथा सम्यग्जलज्ञानेऽपि[4] न स्यात् । न ह्यर्थशून्यत्वाविशेषे सम्यग्जलज्ञानमिदम्, इदं नेति विभागोऽत्रकल्पते[5] तस्माद्बाह्योऽर्थोऽप्यङ्गीकर्तुमुचितः[6] ।

विज्ञानवादिमतेन सौत्रान्तिकमतस्य निरासः ।

तदपरे[7] भ्रान्तमिति मन्यन्ते । तथा हि—न तावत्क्वचिदर्थस्याकारवि[8]-

तत्रेति । एतदेवोपपादयति—यत्र च यदा चेति । घटज्ञानमात्रस्य पटज्ञानोत्पत्तौ हेतुत्वे पटसन्निधान इवासन्निधानेऽपि पटज्ञानं स्यात्, ज्ञानव्यतिरेकेणापेक्षणीयाभावादिति हेत्वन्तरमाह—यथा मरीचिकाजलज्ञान इति । कुत इत्याह—न ह्यर्थशून्यत्वाविशेष इति । मत्पक्षेऽर्थसदसद्भावाद्भ्रान्तिरविवेकोऽपि युक्त इत्यर्थः । तेन ज्ञानाकारत्वेन बाह्योर्थोऽप्यङ्गीकर्तुमुचित इति । उपसंहरति—तस्मादिति ।

एवमुपपादितं सौत्रान्तिकमतं माहायानिकमतेन निराकर्तुमुपक्रमते—तदपरे भ्रान्तमिति । न तावत्क्वचिदर्थस्य विशेषाधायकत्वं साक्षादवगतम्, किन्तु कल्प्येत, तत्र धर्मिकल्पनातो धर्मकल्पना लधीयसीति न्यायेन दृष्टे समनन्तरप्रत्यय एव वरं कल्प्य-

[1] अथ बुद्धिस्तथाकारा इति पञ्चिकायां पाठो दृश्यते । 'अर्थबुद्धिस्तदाकारा साक्षात्कारविशेषणा,' इति न्यायकन्दलीकारादिभिरादृतः पाठः । प्रमाणवार्तिके त्वन्यादृशः । तदनुसारी पाठो मूले निवेशितोऽस्माभिरिति ध्येयम् ।

[2] निवेशिनी इत्यपि क्वचित्पाठोदृश्यते ।

[3] यत्रेत्यादिः—घटोऽस्तीत्यन्तः पाठः मुद्रितपुस्तके नोपलभ्यते, ग पुस्तकानुसारेण वाक्यसंल्लग्नतायै निवेशित इति ध्येयम् ।

[4] ज्ञानादपीति मु. पु. पा.

[5] परिकल्पते इति मु. पु. पा.

[6] अर्थोऽस्तीति स्वीकर्तुमिति मु. पु. पा.

[7] तदप्यपरे आकाशभ्रान्तमिति मु. पु. पा.

[8] विशेषोपधायकत्वमिति मु. पु. पा.

शेषाधायकत्वं साक्षादवगतम्, कल्पनीयन्तु तत्। तच्च दृष्टे समनन्तरप्रत्यय एव वरं कल्प्यम्। कार्यभूतज्ञानानां वैलक्षण्ये समनन्तरप्रत्ययवैलक्षण्यं हेतुरस्तु। तेन किञ्चिदेव ज्ञानं कस्यचिदेव कुत्रचिदेव कदाचिदेव हेतुरिति प्रतिनियमसिद्धिः। [1]विज्ञानवादी चार्थक्रियामपि ज्ञानरूपामेव मन्यते। तेन किञ्चिदेव जलज्ञानमर्थक्रियाजननसमर्थं,[2] किञ्चिच्च न इत्यपि प्रतिनियमसिद्धिः।

अवश्यञ्चार्थमन्तरेण विशिष्टाकारज्ञानोत्पत्तौ समनन्तरप्रत्ययस्य सामर्थ्यमास्थेयम्। अन्यथा स्वप्नादिष्वाकारप्रतिभासप्रतिनियमो न स्यात्। न च देशान्तरकालान्तरवर्तिनामेव तत्र सामर्थ्यम्, अविद्यमानस्य सामर्थ्यायोगात्।

[3]अथानुभवजनितसंस्कारात्तत्राकारप्रतिभासनियम इति चेत्, अस्तु

तामिति हेत्वन्तरमाह—कार्यभूतेति। नन्वर्थसंबन्धाभावे नीलज्ञानं पीतज्ञानमिति ज्ञानानामयं व्यवहारः कथमुपपद्यत इत्यत्राह—तेन किञ्चिदेवेति। न नीलार्थसम्बन्धान्नीलज्ञानम्, किन्तु स्वत एव नीलपीताद्यात्मनः, नान्यसंबन्धात्। तथा ज्ञानानामेव तत्स्वभावोऽस्तु, किं व्यर्थकल्पितैरर्थैः। प्रयोगस्तु—यद्यत्प्रकाशते तत्तत्प्रकाशादभिन्नं यथा—नीलविकल्पः, प्रकाशते चेदं रूपादिकमिति स्वभावहेतुः। यथा वा—यत्प्रकाशं न भवति, न तत्प्रकाशते, यथा—शशविषाणं, न भवति च प्रकाशस्वभावमसति ज्ञानत्वे नीलादिकमिति व्यापकानुपलब्धिरिति।

ननु ज्ञानानामर्थशून्यत्वे सत्यर्थशून्यत्वाविशेषात्सम्यग्ज्ञानमिदं, नेदमिति विभागः कथमवगम्यत इत्यत्राह—न ह्यर्थशून्येति। विज्ञानवादी माहायानिकोऽर्थक्रियामपि विज्ञानरूपां मन्यते, तेन हेतुभेदात्किञ्चिदर्थक्रियाजनकम्, किञ्चिन्नेतीत्ययमपि प्रतिनियमस्सिद्ध इत्याह—तेनेति। अर्थमन्तरेण समनन्तरप्रत्ययमाहात्म्यादेव स्वप्नादिषु विशिष्टाकारज्ञानोत्पत्तिः, नार्थवशादित्यवश्यमङ्गीकरणीया इत्याह—अवश्यञ्चेति। अनङ्गीकारे दोषमाह—अन्यथेति। तद्वज्जाग्रद्दशायामपि युक्तमाश्रयितुमित्यर्थः।

ननु स्वप्नज्ञानानां स्मृतित्वाद्देशान्तरे विद्यमानस्यार्थस्य विशिष्टाकारज्ञानोत्पत्तौ सामर्थ्यमिति, न तत्रार्थमन्तरेण ज्ञानोत्पत्तिरित्याह—न च देशान्तरेति। कुत इत्याह—अविद्यमानस्येति।

---

[1] बाह्यार्थशून्य इत्यधिकः पाठो मुद्रितपुस्तके दृश्यते।

[2] क्रियाकारि समर्थमिति मु. पु. पा.

[3] अर्थानुभवेति मु. पु. पा.।

तावदेवम् । योऽसावनुभवः, सोऽपि तद्वत्रानुभवान्तरजनितसंस्कारादेवास्त्वित्यनया दिशा किमर्थाभ्युपगमेन । [1]संस्कारोऽपि च संस्कारादिति, अनुभवपूर्वकमेव विज्ञानं कार्यकारणभावेन प्रवर्तते, तेनार्थानुभवाकारात् ज्ञानात् यदपरं विज्ञानं जायते, तत् विशिष्टस्वभावम्, ततोऽपि यदपरम्, तदपि विज्ञानं विशिष्टस्वभावमेवेति, विज्ञानस्वभावविशेष एव भावना, वासना, संस्कार इत्यादिभिश्शब्दैर्व्यपदिश्यते । अर्थक्रियासम्वादयोग्यश्च ज्ञानं प्रमाणम्, इतरच्च नेति प्रमाणाप्रमाणभेदोप्युपपन्नः । तस्माद्विज्ञानान्याकारविशेषयोगीनि हेतुफलभावेन [illegible]हीनि सन्तु; तदतिरेकी न कश्चिदर्थो नामेति ।

विज्ञानवादिमतनिराकरणम् ।

अत्रोच्यते—यत्तावदुक्तं ज्ञानस्य साकारत्वसिद्धये नार्थसारूप्यमन्तरेण प्रतिकर्मव्यवस्थासिद्धिरिति । तदयुक्तम्; न हि [2]कस्यचिदप्यर्थस्य स्वरूपमनुभूतं साकारविज्ञानवादिना । ज्ञानाकारपर्यवसितवृत्तित्वात्सर्वज्ञानानाम् । यस्य च स्वरूपमेव नावसितं, न तेन सह कस्यचित्सारूप्यपरिकल्पनम् । न चापि ज्ञानाकारोदयवशेनार्थो व्यवस्थाप्यमानः सरूपतया परिकल्पयितुं शक्यते । असरूपादपि [3]कार्यगताकारोपपत्तेः । लाक्षारक्तबीजाङ्कुरावस्थाया

शङ्कते—अथानुभवेति । इदानीमर्थाभावेऽपि तदानीमेवार्थेन्द्रियसम्प्रयोगजानुभवज्ञानेन संस्कारो जातः, तेन संस्कारेण तत्राकारप्रतिनियम इति परिहरति—अस्तु तावदेवमिति । तद्वनुभवज्ञानमपि पूर्वानुभवजनितसंस्कारादेवास्तु, किमर्थेनेत्यर्थशून्यमेव सर्वविज्ञानमिति । ननु तर्हि ज्ञानादर्थाच्च व्यतिरिक्तस्संस्कारः किं विद्यत इति चेत्तत्राह—संस्कारोऽपीति । ननु यदि सर्वमपि ज्ञानमर्थशून्यं, तर्हि सर्वज्ञानानामर्थक्रियासंवादाभावात्, प्रमाणाप्रमाणभेदो न स्यादित्यत्राह—अर्थक्रियेति । उपसंहरति—तस्मादिति ।

एवमुपन्यस्तं बौद्धमतं निराकर्तुमुपक्रमते—अत्रोच्यत इति । यत्तावदित्यनुभाष्य परिहरति–तदयुक्तमिति । कुत इत्याह–ज्ञानाकारेति । ततः किमित्याह—यस्य चेति ।

ननु येन रूपेण ज्ञानमुदीयते तेनैव रूपेणार्थ इति ज्ञानाकारादेव कारणरूपमवगम्यत इति चेत्तत्राह—न चापीति । कुत इत्याह—असरूपादपीति । एतदेवोप-

---

[1] अत्र मुद्रितपुस्तकेऽसंल्लग्नकोऽशुद्धप्रायश्च पाठो दृश्यते । ग पुस्तकानुसारी पाठः पाठसंल्लग्नतायै मूले सन्निवेशित इति बोध्यम् ।

[2] कदाचिदप्यर्थस्येति मु. पु. पा.

[3] आकारोदयोपपत्तेः ।

विशेषानवगमेपि रक्तकार्यस्योत्पत्तिर्दृश्यते। न हि यदाकारं ज्ञानमुत्पद्यते, तदाकार एवार्थोज्ञानस्योत्पत्तौ निमित्तमित्यत्र [1]किञ्चित्प्रमाणं प्रक्रमते।

अपि च स्थूलाकारं ज्ञानमुत्पद्यते, [2]परमाण्वाकारश्चार्थः। साधारणाकारा बुद्धिः, [3]असाधारणाकारश्चार्थः इति, सारूप्यं[4] किं भवति? किञ्च सारूप्यमात्रेण वेद्यत्वे [5]वेद्यवेदकभावव्यवस्था नोपपद्यते। एकार्थविषयाणां सन्तत्यन्तरविज्ञानानां वेद्यवेदकत्वानुपपत्तेः।

अथोत्पादकम् [6]स्वरूपार्पकञ्च वेद्यम्, तथापि धारावाहिकज्ञानं पूर्वं पूर्वं उत्तरस्य उत्तरस्य वेद्यं स्यात्। अथाकारविशेषाधायकं वेद्यम्; एवमपि पूर्वपूर्वविज्ञानमात्रं वेद्यमापद्यते। पूर्वं पूर्वं हि विज्ञानमाकारविशेषोदयकारणमित्युक्तम्।

अपि च निराकारत्वे संविदां प्रतिकर्मव्यवस्था नानुपपन्ना। अर्थप्रतिबद्धव्यवहारविशेषप्रवृत्त्यनुगुणो हि पुरुषस्य धर्मविशेषः—संवेदनम्, तच्च स्वयम्प्रकाशम्। यत् अर्थप्रतिबद्धव्यवहारानुगुणतया प्रकाशते, तत् तदर्थसंवेदनमिति व्यवस्थाप्यते।

सहोपलम्भनियमश्च भेदेऽप्युपपद्यते। यैव हि नीलधीः, सैव नीलस्यो-

पादयति—न हि यदाकारमिति।

ज्ञानार्थयोः परस्परं वैरूप्यं दर्शयति-अपि च स्थूलाकारमिति। ज्ञानार्थयोः सारूप्याङ्गीकारे वेद्यवेदकव्यवस्थापि नोपपद्यत इत्याह—किञ्च सारूप्येति। कुत इत्याह—एकार्थविषयाणामिति। शङ्कते-अथोत्पादकमिति। परिहरति-तथापीति। पुनश्शङ्कते—अथाकारविशेषेति। परिहरति—एवमपीति। कुत इत्याह--पूर्वमिति।

ज्ञानानां निराकारत्वेऽपि प्रतिकर्मव्यवस्था युक्तैवेत्याह—अपि चेति। एतदेवोपपादयति—अर्थप्रतिबद्धेति। ततः किमित्याह—तच्चेति। किमतो भवतीत्यत आह—यदिति।

किञ्च सहोपलम्भनियमो विज्ञानार्थयोर्भेदेऽप्युपपद्यत इत्याह—सहोपलम्भेति। नीलधीरेव नीलस्योपलम्भः, अतस्सोपलम्भमन्तरेण कथमुपलभ्यत इत्याह—

---

[1] किञ्चित्प्रमाणमस्ति इति ग. पु. पा.

[2] परमाण्वात्मकश्चेति मु. पु. पा. [3] असाधारणश्च विषय इति ग. पु. पा.

[4] वेद्यत्वापत्तेः इति मु. पु. पा. [5] स्वरूपञ्चेति, मु. पु. पा.

**पलम्भः। [1]कथं नीलोपलम्भमन्तरेण नीलमुपलभ्यते। किञ्चानेनेदमप्यनिष्टमापद्यते। उपलम्भमन्तरेणाप्युपलभ्येतेति। सर्वस्यैव हि वस्तुनो न उपलम्भमन्तरेणोपलम्भ इष्यते। न ह्युपलम्भत एवोपलम्भः।**

**[3]किञ्चोपलम्भोपलभ्ययोर्भेदोऽसहोपलम्भनियमन्यात्म इति, नियमस्ततो यैव ह्रीति। उपलम्भमन्तरेणोपलम्भं छलेन दर्शयति—किंचानेनेदमप्यनिष्टमिति।**

---

[1] नीलमन्तरेणेति मु. पु. पा.

[2] विज्ञानवादिना ज्ञानाकारातिरिक्तं बाह्यं वस्तु व्यासेधताऽवश्यमेव तदभ्युपेतव्यम्। अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात्। किञ्च विषयसारूप्यस्य विषयस्वीकारमन्तरेणासम्भवात्। आन्तरं ज्ञानं बहिर्वदभासत इति वत्कारं प्रयुञ्जानेन बाह्योऽर्थः स्वीकर्तव्यः। अन्यथार्थसादृशस्य प्रतियोगिसापेक्षतया प्रतियोगिनोऽनङ्गीकारे सादृश्यप्रतीतिरेव नोपपद्येत। तस्माद्बाह्यं वस्त्ववश्यमेवानिच्छताप्येषितव्यमिति।

अपि च ज्ञानज्ञेयभेदेन द्विविधं वस्तु प्रथत इति समेषां वादिनां सम्प्रतिपन्नम्। तज्ज्ञानं ज्ञेयासम्बद्धमेव प्रकाशकमुत सम्बद्धं वेति द्वेधा विकल्पः। तत्र नाद्यः पक्षः क्षोदक्षमोऽतिप्रसङ्गात्। द्वितीयपक्षेऽपि गुणस्य ज्ञानस्य ज्ञेयेन सह संयोगसमवाययोरभावात्। न च विषयविषयिभावः सम्बन्धश्शङ्कनीयः। तस्य विषयित्व-विषयत्वरूपस्यैकैकमात्रनिष्ठत्वेन द्विष्ठसम्बन्धात्मकत्वाभावात्। अतो विषयस्य ज्ञानेन सह तादात्म्यमेव सम्बन्ध इति कल्पनीयम्। सहोपलम्भनियमोऽपि ज्ञानज्ञेययोस्तादात्म्यमेवोपपादयति। अतो ज्ञानाकारातिरिक्तस्य बाह्यस्य वस्तुनोऽसिद्ध्या क्षणिकं विज्ञानमेव तत्त्वमिति। इदमनुपपन्नम्—संविदि भासमानत्वं विषयत्वम्, न तु सत्त्वं कारणत्वं वेति, नयवीथ्याम्—"अत्र ब्रूम" इत्यस्य श्लोकस्य व्याख्यायां अयमर्थः कणेहत्य विवेचितम्। अतो ज्ञानविषययोः संबन्धे न काप्यनुपपत्तिः।

किञ्च ज्ञानज्ञेययोः सहोपलम्भनियमो बौद्धैरुपन्यस्तः कीदृशः इति विचारणीयः। तत्र साहित्येनोपलम्भः, एकोपलम्भो वेति द्वेधा विकल्पः। तत्राद्यः पक्षो न विचारमर्हति, यतो भिन्नयोरेव साहित्यं घटते, नत्वभिन्नयोः। अतः सहोपलम्भहेतुरभेदसाधकत्वेन बौद्धैरुपन्यस्तोऽभेदं साधयितुमशक्नुवन् तद्विरुद्धं भेदमेव साधयति, 'विनायकं प्रकुर्वाणो रचयामास वानरमिति न्यायात्। न द्वितीयः—लोके वेदे वा सहशब्दस्यैकत्ववाचकत्वं न प्रसिद्धम्। किञ्चास्मिन्पक्षेऽर्थस्य बहिरुपलम्भात् एकत्वेनोपलम्भो बाधितः। सहोपलम्भनियमश्च ज्ञानज्ञेययोरुपायेपेयमादाय चोपपन्नो नाभेदं साधयितुमीष्टे। अतोऽर्थज्ञानयोः सहोपलम्भनियमः सुदूरपराहतः।

अपि च क्वचिद्विषयभेदेऽपि ज्ञानं न भिद्यते। यथा—घटज्ञानं पटज्ञानमिति, क्वचिच्च विषयभेदाभावेऽपि ज्ञानभेदो दृश्यते। यथा—घटानुभवः, घटस्मरणमिति।

अत एवमादिभिर्हेतुभिर्ज्ञानज्ञेययोस्तादात्म्यासम्भवात् ज्ञानं स्वातिरिक्तं बाह्यं वस्तु विषयविधया गृह्णातीत्येव सुन्दरमित्याह—'किञ्चेति'।

[3] उपलब्धोपलभ्ययोर्भेदः इति मु. पु. पा.। खपुस्तकानुसारी पाठः मूले निवेशित इति ध्येयम्।

निवर्तमानोऽभेद एवावतिष्ठमानस्तेन व्याप्तस्तं गमयेत्। उपलभ्योपलम्भयोस्तु भेदेऽपि नियम उपपद्यते। उपलभ्यमन्तरे[1]णोपलम्भासम्भवात्। तेन तयोर्भेदेऽपि सहोपलम्भनियमो दृष्टो नाभेदं साधयितुं [2]क्षमः।

किञ्च—वित्तिवेद्ययोर्भेदेनापि सहोपलम्भनियमोऽस्तीति, तस्यापि वित्तिरूपत्वापत्तेर्वित्तेरेकत्वं हीयते, ततश्च भेद एव सहोपलम्भनियम [3]इत्युपपद्यते।

किञ्च योऽपि वित्तेर्वेद्यस्याभेदमाह, सोऽपि तावद्वेद्यप्रतिभासं [4]नाऽवजानीते। तथा सति कथमनुमानमुत्पद्यते[5]। न हि प्रतीतिविपर्ययेणानुमानस्यात्मलाभोऽस्ति।

यदपि ज्वालादिष्वभेदानुमानम्, तदपि न प्रतीतिं [6]स्वार्थात्प्रच्यावयति, किन्तु सैवेयं ज्वालेति ग्रहणस्मरणरूपे द्वे प्रतीती व्यवस्थितविषये दर्शयति।

उपलम्भविधुरस्य पदार्थमात्रस्योपलम्भादुपलम्भमन्तरेणोपलम्भोऽपि युज्यत इति। यथा—शुक्लो घट इति शौक्ल्यविशिष्टो घटः उपलभ्यते, न तथोपलम्भविशिष्टः पदार्थ उपलभ्यते, किन्तु पदार्थमात्रमेवेत्यर्थः।

अभ्युच्चयमाह—किञ्चोपलम्भोपलभ्ययोरिति। उपलम्भोपलभ्ययोर्भेदः सहोपलम्भनियमव्याप्त इति विरुद्धव्यापकोपलब्ध्या उपलब्धयोर्भेदो निवर्तमानो भेदेऽवतिष्ठमानः तेनाभेदोव्याप्तस्सहोपलम्भोनियमस्तमभेदं गमयेदित्यर्थः। तस्मादुपलभ्भोपलभ्ययोर्भेद एव नियमो नोपपद्यते, न पुनरुपलभ्योपलम्भयोरित्याह—उपलभ्योपलम्भयोरिति। कुत इत्याह—उपलम्भमन्तरेणेति। कुत इत्याह—तयोर्भेदे। उपलभ्योपलम्भयोर्भेद इत्यर्थः।

किञ्च भेदे सहोपलम्भनियमः, नाभेद इत्यपि वक्तुं शक्यमित्यभ्युच्चयत्वेनाह—किञ्च वित्तिवेद्ययोरिति। सहोपलम्भदर्शनात्, तस्यार्थस्यापि वित्तिरूपत्वापत्तेः यदेकत्वमुक्तं वित्तेस्तद्धीयेत। निगमयति—ततश्चेति। यद्येन नियतसहोपलम्भम्, तत्ततो न भिद्यते, यथैकस्माच्चन्द्राद्द्वितीयचन्द्रनियतसहोपलभ्भश्च विज्ञानम्।

ज्ञानार्थयोरभेद एवेत्याह—किञ्च योऽपि वित्तेर्वेद्यस्येति। द्वितीयस्य चन्द्रस्य काल्पनिकत्वेनाभेदाभावात्साध्यविकलो दृष्टान्तः। विज्ञानस्य स्वपरप्रकाशतयान्यतरमात्रानुपलम्भोपपत्तेर्न भेदयुक्तता सहोपलम्भस्य।

ननु ज्वालादिषु सैवेयं ज्वालेत्यभेदप्रतीतौ सत्यामनुमेयभेदानुमानमिति प्रतीति-

---

[1] उपलम्भनासम्भवादिति गपुस्तके पाठः। [2] अलम् इति गु. पु. पा.

[3] इत्यापद्यते इति मुं. पु. पा. [4] नापजानीते इति मु. पु. पा.

[5] उत्पत्स्यत इति मु. पु. पा. [6] स्वार्थाच्यावयतीति खपुस्तके पा.।

इह तु भेदप्रतीतिः प्रत्येतव्यादेव व्यावर्तनीयेति, न तद्विरोधेनानुमानमुत्पद्यते।

"भेदश्च[1] भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये"। इति चानुपपन्नम्। न हि तत्र भेदो दृश्यते, किन्त्वेकस्मिन्नेव चन्द्रमसि नेत्रवृत्तिभेदेन द्वे प्रतीती जायेते।

तयोरिन्द्रियवृत्तिभेदादभिन्नेऽपि चन्द्रमस्यर्थद्वयविषयं[2] व्यवहारं विमूढाः प्रवर्तयन्तीति, तत्र तत्रोक्तम्।

यच्चेदमुक्तम्—स्वयम्प्रकाशायाः संविदोऽभ्युपगताया नीलाद्याकारोऽस्तीति। तदप्ययुक्तम्। संविदभिन्नतयाऽवभासमानस्याकारस्य [3]संविद्रूपत्वानुपपत्तेः। निराकारा संवित्कथं प्रकाशेतेति चेत्। निराकारेति किमुक्तम्? निःस्वभावेति चेत्। [4]तदसत्, संविदः संवित्स्वभावत्वाभ्युपगमात्। अथ नीलाद्याकारेति चेत्। केयं राजाज्ञा नीलाद्याकारेणैव प्रकाशितव्यम्,

विपर्ययेणानुमानोत्पत्तिः दृष्टेत्याह—यदपीति। [5]निगदव्याख्यातमेतत्। प्रकृतम् निगमयति—**इह भेद प्रतीतिरि**ति। अतो भेदप्रतीतिः भ्रान्तिरेवेत्यत्रोक्तं ग्रन्थमनुपपन्नमित्याह—**भेदश्चे**ति। किञ्च इन्दावपि न भेदो दृश्यत इत्याह—**न हि तत्रे**ति। किं तर्हि दृश्यते? इत्यत्राह—**किं त्वेकस्मिन्नि**ति। ततः किमित्याह—**तयोर्भेदादि**ति। तत्र तत्रोक्तम्—अख्यातावुक्तमित्यर्थः।

अनुभाषते—**यच्चेदमुक्तमि**ति। परिहरति—**तदप्ययुक्तमि**ति। सुगमम्। शङ्कते—**निराकारे**ति। किमुक्तमिति शङ्कते—**निःस्वभावे**ति। परिहरति—**तदि**ति। तत्—निस्स्वभावत्वम्। कथमित्याह—**संविद** इति। पुनरपि शङ्कते—**अथ नीलाद्याकारे**ति। परिहरति—**केयमि**ति। **तदप्ययुक्तमि**ति।

---

[1] 'सहोपलम्भनियमात्' इत्यादि पद्यं ईदृशानुपूर्वीकं प्रमाणवार्तिकादिबौद्धग्रन्थेषु नोपलभ्यत इति प्रागेवावोचाम। परन्तु एतदर्थप्रतिपादकाश्लोकाः प्रमाणवार्तिके, प्रमाणवार्तिकभाष्ये चोपलभ्यन्ते। यथा—

सकृत् संवेद्यमानस्य नियमेन धिया सह।
विषयस्य ततोऽन्यत्वं केनाकारेण सिध्यतीत्याद्याः।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये। इत्यस्योत्तरार्धम्।
संवित्तिनियमो नास्ति भिन्नयोर्नीलपीतयोः (प्र० वा० भा० ३।३८९) इति।

[2] प्रतिपत्तिद्वयमिति मु. पु. पा.।

[3] संविद्रूपाश्रयणानुपपत्तेरिति मु. पु. पा.।

[4] तन्नास्तीति, मु. पु. पा.।

[5] व्याख्यानमिति क. पुस्तके।

नान्येनेति। प्रकाशे तु सति [१]यद् यथाभूतं प्रतीयते, तत्, तथाभूतमित्यभ्युपगमो युक्तः ।

यच्चोक्तं—स्वप्ने ज्ञानस्याकारोऽवभासत[२] इति। तदप्ययुक्तम्। तत्रापि [३]बहिरवभासित्वात्संविदः। न च सा बहिर्विषया न भवति। तस्याः [४]पूर्वानुभवाहितसंस्कारोद्बोधवशेन पूर्वानुभूतवस्तुविषयत्वात्। कथं तर्हि पूर्वानुभूतत्वं नानुसन्धीयते, [५]कथं वानुभूयमानत्वाध्यवसानमिति। उच्यते। संस्कारोद्बोधनिमित्तेयं स्मृतिरिष्यते। संस्कारोद्बोधश्चाऽदृष्टनिबन्धनः। तस्य सुखदुःखहेतुत्वात्। स्वप्नेऽपि सुखदुःखानुभवात्। तेन [६]तावत्येवांशे तददृष्टं संस्कारमुद्बोधयति, यावत्येव सुखं दुःखं वोपपद्यते। न चानुभूतांश-स्मरणे सुखदुःखोदय इति, न च तत्र संस्कारोद्बोधः, नापि स्मृतिः। अत एव च गृहीतांशानवधारणेऽनुभवमात्रमेवाशिष्यत[७] इत्यनुभवाध्यवसायोऽपि समर्थितः।

यत्पुनराहुः—जडस्य प्रकाशायोगात्प्रकाशात्मक एवाकार इति। तदपि न चतुरस्रम्। जड इति किमुक्तम्? अप्रकाशात्मक इति चेत्, न। अप्रकाशात्मकस्यैव प्रकाशाद्व्यतिरिक्तस्य एष प्रकाश इति प्रकाशादेव सिद्धम्।

तत्रापि—स्वप्नेऽपीत्यर्थः। कथमित्याह—पूर्वानुभवेति। पृच्छति—कथं तर्हीति। परिहरति—उच्यते। संस्कारोद्बोधेति। ततः किमित्याह—तस्येति। ततः किमित्याह—स्वप्नेऽपीति। निगमयति—तेनेति। यत्र सुखं दुःखं वोत्पद्यते। तत्रैवा-दृष्टं संस्कारमुद्बोधयतीत्यर्थः। नापि स्मृतिरिति। संस्कारोद्बोधकाभावान्न स्मृति—ज्ञानमपीत्यर्थः। यतोऽनुभवसत्त्वानुसन्धाने सुखं दुःखं च नास्ति, अत एवावभास-मात्ररूपतयाऽनुभवाध्यवसायोपीत्याह—अत एव चेति।

पुनरप्यनुभाषते—यत्पुनराहुरिति। परिहरति—प्रकाशाद्व्यतिरिक्तस्यैव प्रका-शापेक्षा, न प्रकाशस्येत्यर्थः।

---

[१] यद्यथाभूतं प्रकाशत इति मु. पु. पा.।

[२] क्वचित् ज्ञानस्यैवाकार इति पाठो दृश्यते।

[३] बहिरवभासत्वादिति मु. पु. पा.।

[४] भावनोद्बोधेनेति मु. पु. पा.।

[५] तथा इति ख पुस्तके पाठः।

[६] नेयमिति ख. पु. पा.।

[७] तावत्येवाकारे इति. ख पुस्तके पा.।

किञ्च चित्रपटज्ञाने[१] नानाभूतानामाकाराणामेकप्रकाशात्मकत्वविरोधादसद्भूतत्वमेवाभ्युपगतम् ।

चित्रावभासेष्वर्थेषु यद्येकत्वं न युज्यते ।
सैव तावत्कथं बुद्धिरेका चित्रावभासिनी ॥

[ प्र. वा. द्वि. प. श्लो. २०८ ] इति 'चोदयित्वा,' उक्तम्—

[२]इदं वस्तु बलायातं यद्वदन्ति विपश्चितः ।
यथा यथाऽर्थाश्चिन्त्यन्ते विविच्यन्ते तथा तथा ॥

[ प्र. वा. द्वि. प. श्लो. २०५ ] इति ।

यथा यथाऽऽकारा विचार्यन्ते, तथा तथाऽघटमाना विविच्यन्ते—शून्या भवन्ति—असद्भूता भवन्ति इत्यर्थः। एवञ्च ते तावदाकारा असद्भूताः प्रकाशात्मानो न भवन्तीति, कथं प्रकाशन्ते। तथा ग्राह्यग्राहकसंवित्तीनां भेदोऽत्यन्तासद्भूतः प्रकाशाननुप्रवेशी कथं प्रकाशेत? तथा [३]प्रमेयविमर्शो-

किञ्च चित्राद्याकारे ज्ञानाद्बहिर्भूतस्य जडस्य प्रकाशाङ्गीकारादेव, जडस्य प्रकाशायोगात्प्रकाशात्मक आकार इति नोपपद्यत इत्याह—**किञ्चेति**। नानाभूतानां नीलाद्याकाराणामेकज्ञानाकारत्वविरोधादित्यर्थः। एतदपि तैरेवोक्तमित्युक्तं ग्रन्थमुदाहरति—**चित्रावभासेष्वर्थेष्विति**। तैरेव परिहृतमित्याह—**इदं वस्तु बलायातमिति**। बौद्धग्रन्थं स्वयमेव व्याचष्टे—**यथा यथाऽऽकारा इति**। निगमयति—**एवञ्चेति**। ग्राह्यग्राहकवित्तीनां भेदस्यासद्भूतस्य प्रकाशाङ्गीकारादेव ज्ञानाद्बहिर्भूतस्य प्रकाशस्त्वयाप्यङ्गीकृत इत्याह—**तथा ग्राह्यग्राहकसंवित्तीनामिति**। मितिमात्रोरपह्नवपरिहारः प्रदर्शितः। प्रमेयापह्नवपरिहारप्रकारा जातिनिर्णय एवोक्ता इत्याह—**तथा प्रमेयविमर्शोत्था इति**।

---

[१] चित्रज्ञाने इति मु. पु. पा.।

[२] एका बुद्धिः विचित्राकारावभासिनी कथं घटत इति शङ्कां निराकुर्वन् तदीयमेव वचनं प्रमाणयति 'इदं वस्त्वि'त्यादिना। अस्यायमर्थः—इदं वस्तु अव्यभिचारिलिङ्गबलात् आयातमिति बुधा भवन्तः यद्वदन्ति, तत् येन येन प्रकारेण अर्थादेकत्वेनानेकत्वेन वा अर्थाः नीलादयः विचिन्त्यन्ते, तथा तथा विशीर्यन्ते—न क्वचिदपि व्यवतिष्ठन्ते इत्यर्थः। परं पञ्चिकाकारः अन्यथा श्लोकार्थं विवृणोति—यथा यथा आकारा विचार्यन्त इति।

[३] अत्रेदं बोध्यम्—शाबरभाष्ये निरालम्बनवादः, शून्यवादश्चेति वादद्वयं दृश्यते, तत्र 'शून्यस्तु' इत्यादिना माध्यमिकदर्शनं न पूर्वपक्षितम्, किन्तु योगाचारप्रस्थानमेव। अत एकमेवेदं वादस्थानमिति मन्तव्यम्। तत्र योगाचारः प्रमेयपरीक्षया ज्ञानातिरिक्तं बाह्यं वस्तु निराकुर्वन् ज्ञानमेकमेव तत्त्वमित्यङ्गीकरोति। माध्यमिको बाह्यमर्थमपह्नुत्य निर्विषयज्ञानासम्भवेन ज्ञानमप्यपलपति। अत एवानन्तरोक्तः सर्वशून्यवादीति गीयते। योगाचा-

**त्थास्तु बाह्यार्थापह्नवप्रकारा जातिनिर्णय एव प्रायशो विकल्प्य निराकृता इति, ते नेह प्रस्तूयन्ते ।**

**ये पुनर्जाग्रत्प्रत्ययानां स्वप्नप्रत्ययदृष्टान्तेन प्रत्ययत्वादित्यनेन हेतुना बाह्यार्थशून्यत्वं प्रतिपादयन्ति, तेषां बाह्यविषयसकलप्रतीतिविरुद्धः पक्षः । [1]दृष्टान्तीकृतस्यापि स्वप्नादिप्रत्ययस्य बाह्यग्राह्यसमर्थनेन हेतोर्विरुद्धत्वं दोषः, दृष्टान्तस्य साध्यविकलत्वञ्चोद्भावनीयम् । तस्मात्स्वयम्प्रकाशत्वेऽपि संविदो**

जाग्रत्प्रत्ययो मिथ्या, प्रत्ययत्वात्स्वप्नादिप्रत्ययवदिति, [2]शून्यवादिनोक्तमनुमानमर्थतोऽनुभाषते—**ये पुनर्जाग्रदिति** । परिहरति—**तेषामिति** । [3]प्रतिज्ञा तावत्प्रत्यक्षबाधितेत्यर्थः । तथा हेतुरपि विरुद्ध इत्याह—**दृष्टान्तीकृतस्येति** । स्वप्नप्रत्ययानामन्येषाञ्च यथार्थत्वसाधनादेव विरुद्ध इत्यर्थः । तथा दृष्टान्तोऽपि साध्यविकल

---

रमाध्यमिकयोर्बाह्यार्थापह्नवः साधारणः, ज्ञानापलापस्य तन्मूलभूतार्थापलापनिराकरणेनैव निराकरणं भवतीति मन्यमानो मीमांसाभाष्यकारः प्रमाणविरोधेन महता युक्तिजालेन विज्ञानवादमेव निरास्थत् । अयमेव पन्था भाट्टैः प्राभाकरमीमांसकैश्च स्वग्रन्थेषु समाद्रियते स्म । तत्र बाह्यार्थापलापः प्रमेयपरीक्षामुखेन प्रमाणपरीक्षामुखेन चेति द्वेधा भवति । तत्रभवान् भाष्यकारः प्रमाणपरीक्षामुखेन बाह्यार्थापलापपक्षं निरस्य, प्रमाणबलेन बाह्यं वस्तु स्थिरीचकार । य इदमवयविद्रव्यमवयवव्यतिरेकेणानुपलम्भात्परमाणूनामतीन्द्रियत्वेन नैव बाह्यं वस्तु प्रतिषेधमर्हतीति पर्यनुयोगः, सः प्रमाणबलेनैव निराकृतो भवतीति मत्वा, प्रमाणपरीक्षाद्वारेण बाह्यार्थापलापपक्षं प्रतिचिक्षेप, प्रमेयपरीक्षाञ्च सूचयामास । शालिकाचार्यस्तु जातिनिर्णयाख्ये प्रकरणे प्रमेयपरीक्षामुखेन बह्वीभिर्युक्तिभिस्तदपह्नवं निराकृत्याऽवयवि द्रव्यं प्रसाधयति स्मेत्याशयेनाह—'प्रमेयविमर्शोत्थास्तु' इत्यादिना ।

[1] दृष्टान्तीभूतस्येति मु. पु. पा. ।

[2] विज्ञानवादिनो योगाचारा द्विविधाः प्रथन्ते । तत्र केचन ज्ञानं निराकारमितिवदन्तोऽनुमानेन ज्ञानानां बाह्यालम्बनशून्यत्वापरपर्यायं निरालम्बनत्वं साधयन्ति । अपरे तु ज्ञानं साकारमिति ब्रुवाणाः विज्ञानवादिनः एव शून्यवादिन इति मीमांसका आशेरते । न तु माध्यमिकाः प्रकृते विवक्षिता इति ध्येयम् ।

[3] विज्ञानवादिनो योगाचारा ज्ञानाकारातिरिक्तस्य बाह्यस्य वस्तुनो निराकरणाय प्रकारद्वयमातिष्ठन्ते प्रमाणपरीक्षाद्वारं, प्रमेयपरीक्षाद्वारञ्चेति । तत्रापि प्रकारद्वयमस्ति, आद्यं निरालम्बनत्वसाधकानुमानम्, द्वितीयञ्च—बाह्यग्रहणे प्रत्यक्षस्यासामर्थ्यम् । तत्रानुमानम्-सर्वे प्रत्ययाः निरालम्बनाः प्रत्ययत्वात्, स्वाप्निकप्रत्ययवदिति । अत्र प्रत्ययमात्रस्य पक्षत्वे सिद्धसाधनं, दृष्टान्तासिद्धिश्च स्याताम् । अतो जाग्रत्प्रत्यया इति पक्षविशेषणं, तथा च न पूर्वोक्तदूषणलेशावकाशः । तथा च सर्वे जाग्रत्प्रत्यया इति पक्षनिर्देशः । अत्र निरालम्बनशब्देन ज्ञानाकारातिरिक्तबाह्याकारशून्यत्वं विवक्षितम् । तथा च सर्वे जाग्रत्प्रत्यया ज्ञानाकाराति-

न बाह्यग्राह्यापन्हव इति स्थितम् ।

संविदः स्वयम्प्रकाशत्वे शङ्कानिरासौ ।

[१]ये त्वाहुः—

[२]अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति ।
स्वांशेन ज्ञानमप्येवं नात्मना ज्ञातुमर्हति ॥ [बृ.टी] इति ।

तत्र यदि कर्मकर्तृत्वानुपपत्तिरुच्यते, ततो न किञ्चिदवहीयते । न हि वयं कर्मकर्तृभावमभ्युपेमः । अथार्थप्रकाशरूपायाः स्वयम्प्रकाशता विनि-

इत्याह—**दृष्टान्तस्येति** । स्वप्नादिष्वपि यथार्थत्वसाधनेन मिथ्यात्वाभावात्साध्य-विकल इत्यर्थः । सर्वप्रत्ययानां मिथ्यात्वे मिथ्यानुमानस्यापि मिथ्यात्वात्सर्वस्यापि मिथ्यात्वम्, सर्वस्यामिथ्यात्वेऽनुमानस्याप्यमिथ्यात्वात् सर्वस्य मिथ्यात्वं तदाऽनुमा-नस्यामिथ्यात्वमिति *चक्रकं स्यात् । उपसंहरति—**तस्मादिति** । संविदः स्वयं प्रकाशत्वे, न बाह्यार्थोपह्नव इत्यर्थः ।

स्वयम्प्रकाशो न संभवतीत्यत्र परैः दृष्टान्ततयोक्तं श्लोकं परिहर्तुमनुभाषते—**ये त्वाहुरिति** । परिहरति—**तत्र यदीति** । एकस्य कर्मकर्तृभावासंभवोऽनेनोच्यते, ततो नास्माकं विरोधः । अनभ्युपगमादिति शङ्कते—**अथार्थप्रकाशेति** । परिहरति—

---

रिक्तबाह्यालम्बनशून्याः, प्रत्ययत्वात्, स्वाप्निकप्रत्ययवदित्यनुमानं परिनितिष्ठति । अनेन चानुमानेन प्रत्ययत्वेन हेतुना सर्वेषु अयं घट इत्यादिजाग्रत्प्रत्ययेषु बाह्यालम्बनशून्यत्वं साध्यते । अतो ज्ञानातिरिक्तं बाह्यं वस्तु नास्तीत्यत्रेदमेवानुमानं प्रमाणमिति तेषामाशयः ।

अत्र प्रतिविधीयते तथा हि—अस्मिन्ननुमाने पक्षत्वेनाभिमतो यः प्रत्ययः, सः कर्तृ-करण-कर्म-भावसाधनेषु व्युत्पन्न इति वक्तुं न शक्यते, तत्र कर्तृभावादिषु स्ववाग्विरोधः, यतः कर्तृकरणा-दिवाचकत्वे धर्मधर्मिप्रतिपादकयोश्शब्दयोर्विवक्षावशेन प्रतीतौ करणत्वसम्भवात् । तयोर्निरा-लम्बनत्वं केन वार्येत । शब्दस्य निरालम्बनत्वञ्चाभिधेयशून्यत्वं विना नान्यत् । अतो वाग्विरोधः । कर्मणि तु सिद्धसाधनम् ।

किञ्चात्मधर्मः प्रत्ययः पक्षीक्रियते, उत स्वतन्त्रो वा इत्यादिविकल्पे सति दूषणा-सहत्वात् । एवं साध्यस्वरूपमपि प्रत्यक्षविरुद्धं सर्वेषां प्रत्ययानां सालम्बनत्वेन निरालम्बन-त्वस्य शशविषाणवदत्यन्ताप्रसिद्धत्वात् । एवञ्च प्रत्ययत्वहेतुर्निरालम्बनत्वं साधयितुमशक्नु-वन्तद्विरुद्धं तदभावं साधयेत्, कार्यत्वमिव शब्दनित्यत्वसाधनाय प्रयुक्तम् । अतः साध्या-भावव्याप्तत्वाद्धेतोर्विरुद्धतेत्याद्याशयं मनसि निधायाह—प्रतिज्ञेत्यादिना ॥

१ यत्त्वाहुः इति. मु. पु. पा. ।

* स्वग्रहसापेक्षग्रहसापेक्षग्रहसापेक्षग्रहविषयत्वं चक्रकमित्युक्तलक्षणं चक्रकं बोध्यम् ।

२ ज्ञानस्य स्वयं प्रकाशत्वे ज्ञानानुमेयत्ववादिना कर्मकतृभावविरोधस्सदृष्टान्तमुपन्यस्तः । यथा—अंगुलिः परगतस्पर्शकार्यं करोति । अथ स्वगते स्पर्शेऽङ्गुल्यन्तरमपेक्षते, तथा घटादिकं

वार्यते, ततः प्रतीतिविरोधः। किञ्च प्रतीतिबलेन [1]यैरेकस्यात्मनः कर्तृकर्मभावोऽभ्युपगम्यते, कथमिव ते संविदोऽपह्नुवीरन्।

अपि च ज्ञानमनुमेयमिष्यते। तदनुमाने नार्थसत्तामात्रं लिङ्गम्, तस्य तदविनाभावनियमाभावात्। अथार्थज्ञानमित्युच्यते, तदपि नोत्पत्तिमात्रेण लिङ्गम्। अनवभासमाने उत्पन्नानुत्पन्नयोरविशेषात्। न ह्यनवभास-

ततः प्रतीतिविरोध इति। किञ्च यथैकस्यात्मनः कर्मत्वं कर्तृत्वञ्च प्रतीतिबलेन त्वयाङ्गीक्रियते, तथा प्रतीतिबलादेव संविदोऽप्यङ्गीकर्तुमुचितमित्याह—किञ्च प्रतीतिबलेनेति।

ननु विज्ञानक्रियाशक्तिस्वभावभेदेन द्रव्यभेदरूपत्वादात्मनस्तथात्वं युक्तमेव, न तु संविदः स्वरूपद्वयाभावात्। उच्यते—एवमपि विज्ञानांशस्य ग्राहकैकरसत्वाद्, द्रव्यांशस्य ग्राह्यैकरसत्वाद्, एकस्य वस्तुनो ग्राह्यग्राहकत्वमनुपपन्नमेवाभ्युपगतं स्यात्।

किञ्च लिङ्गाभावाज्ज्ञानस्यानुमेयत्वं न संभवतीत्यभ्युच्चयत्वेनाह—अपि चेति। कुत इत्याह—तस्य तदविनाभावेति। अर्थसत्ताया ज्ञानाभावेऽपि संभवादित्यर्थः। किञ्च नित्यभूतानां पदार्थानां सर्वदा सत्त्वादेव सर्वज्ञानेऽपि लिङ्गत्वं स्यात्। पुनश्शङ्कते—अथार्थज्ञानमिति। अर्थाश्रितया ज्ञाततया ज्ञानानुमानमित्यर्थः। परिहरति—तदपीति। एतन्नोत्पत्तिमात्रेण लिङ्गम्, उत्पत्त्यसंभवात्। तथाहि-अतीतानागतविषये तस्योत्पत्तिर्नोपपद्यते, नह्याश्रयमन्तरेण तदाश्रितस्योत्पत्तिस्संभवति, किञ्च विषयगतत्वे तु तद्गतरूपादिवत्सर्वसाधारण्यात्सर्वैरुपलभ्येत।

ननु शतं पिप्पल्यो भक्षिता इत्यसदाश्रयापि संख्योत्पद्यते, तथा ज्ञातताऽप्युत्पद्यते, यथा चोत्पन्नापि द्वित्वादिसंख्या न रूपादिवत्सर्वैरुपलभ्यते, किन्तु यस्यैवापेक्षाबुद्धिः, स एवोपलभते, तथेहापि भविष्यति। तथा द्वित्वादिकमपेक्षाबुद्धिविनाशाद्विनश्यति, एवं ज्ञाततापि जनकविज्ञाननाशाद्विनङ्क्ष्यति, यथा च द्वित्वं प्रत्यक्षद्रव्यवर्ति प्रत्यक्षम्, अनुमेयेत्वनुमेयम्, तथा ज्ञाततापि भविष्यतीति न कश्चिद्विरोधः।

---

प्रकाशयदपि ज्ञानं स्वस्य प्रकाशनायाऽन्यदपेक्षेत। अतो ज्ञानस्वप्रकाशत्वं न युज्यत इत्याशयेनाह—अङ्गुल्यग्रमिति। अस्येदं समाधानम्। कर्मकर्तृभावविरोधः कारकस्थल एव प्रसरति, न ज्ञापकस्थले। तत्र दीपादिदृष्टान्तेन स्वपरनिर्वाहरीत्या न विरोधः इति विषमोऽङ्गुल्यादिदृष्टान्तः। यतो हि संयोगस्य द्विष्ठत्वेन स्पर्शासंभवात् कर्मकर्तृभावविरोधःकारकस्थल एव। अतः घटः प्रकाशते, घटमनुभवतीत्येकस्य कर्मकर्तृभावः, स्वदते रोचते इत्यादिवत् धातुभेदनिबन्धनः, नार्थभेदनिबन्धन इति ध्येयम्।

[1] शून्यवादनिरासप्रस्तावे भाष्यकारो ज्ञानातिरिक्तवस्तुसाधनाय "स हि बहिर्देशसम्बद्धः प्रत्यक्षमुपलभ्यते" इत्यादिभाष्यसन्दर्भेण ज्ञानाकारातिरिक्तं बाह्यं वस्तु प्रसाधयाम्बभूव। इदञ्च भाष्यं धर्मकीर्तिना दूषितम्। ज्ञानव्यतिरिक्तप्रतिभासो ज्ञानापेक्षया, संविदपेक्षया, आत्मापेक्षया वेति विकल्पजालेन। तत्र वार्तिककारो दूषणमिदं निराचिकीर्षुः प्रकारान्तरं

मानं लिङ्गं लिङ्गिनमनुमापयति। न चार्थज्ञानस्य ज्ञानन्तराधीनमवभासनम्। न च ज्ञानान्तरादवगमः। ज्ञानान्तरादवगमेन अवगमे चाऽनवस्थाप्रसङ्गात्। तस्मादर्थज्ञानं स्वयम्प्रकाशमेवाभ्युपेतव्यम्।[१]

एतेन ये सुखादिवन्मानसप्रत्यक्षं ज्ञानान्तरमेव ज्ञानसद्भावे प्रमाणमाहुः, तेऽपि निराकृताः। स्वयम्प्रकाशत्वेनाऽप्युपपत्तौ पराधीनत्वकल्पनाऽनुपपन्नेत्युक्तमेव।

उच्यते-न खलु संख्या भूतभविष्यद्विषया जायते, किन्तु योग्यतामात्रात्स्मृत्यैव तदाश्रयसंख्याव्यवहारः क्रियते, प्रतियोगिभावस्त्वविद्यमानस्यापि संभवति, अभावे तु अविद्यमानस्यैव प्रतियोगित्वदर्शनात्।

अथ ममापि ज्ञात्राश्रयं प्रमेयप्रतियोगिकमिति चेत्तर्हि नामान्तरेण विज्ञानमेवाङ्गीकृतं स्यात्, तस्यानुत्पत्तिर्नोपपद्यते। तथापि किमुत्पन्नमात्रेण ज्ञानानुमाने लिङ्गमुत ज्ञातं वेति विकल्पौ हृदि निधाय, प्रथमपक्षे दूषणमाह—**अनवभासमान** इति। किञ्चानवभासमानस्य लिङ्गत्वमपि न संभवतीत्याह—**न ह्यनवभासमानमिति**। द्वितीयपक्षे दूषणमाह—**न चार्थज्ञानस्येति**। कुत इत्याह—**ज्ञानान्तरादिति**।

ननु स्वजनकज्ञानवेद्यं किमिति न भवति। उच्यते-तदिन्द्रियसंयोगाज्जायमानत्वात्। यदिन्द्रियसंयोगाद्यज्ज्ञानं जायते, सोऽर्थस्तज्ज्ञानेन विषयीकृत इति नियमात्। अथ ज्ञानान्तरेण वेद्यता, तर्ह्यनवस्था स्यात्। [२]तथा सति ज्ञानफलभूतं प्राकट्यं प्रतिपन्नमेव। ज्ञानानुमापकत्वेन प्रतिपन्नस्यैव लिङ्गत्वात्तत्प्रतिपत्तये तद्विषयं प्राकट्यान्तरमवश्यमाश्रयणीयम्। तज्ज्ञानान्तरं तदुत्पादकं तदपि प्राकट्यं प्रतिपन्नमेव ज्ञानानुमापकमिति, तत्सिद्धये प्राकट्यान्तरं ज्ञानान्तरञ्चेत्यनवस्था स्यात्।

ननु ज्ञातो घट इति व्यवहारान्यथानुपपत्या ज्ञानजन्यमर्थाश्रयं ज्ञातत्वं कल्प्यत इति चेत्तर्हि इष्टो घट इति व्यवहारेऽपीच्छाजन्योऽर्थाश्रितोऽतिशयः कल्प्यताम्। तदकल्पनायां को विशेषः। उपसंहरति—**तस्मादिति**।

---

समाशिश्रिये। तस्यायमभिप्रायः। तथा हि—एकस्य ज्ञानस्य ग्राह्यग्राहकभावो नोपपद्यते। स्वात्मनि वृत्तिविरोधात्। यथा आत्मन्यहमिति प्रत्ययः कर्तृविषयः आत्मानं जानामीति कर्मत्वमुपपादयन् विरोधं दूरीकरोति, तथा न नीलादिषु प्रत्ययो भवति। न हि नीलमहमिति प्रत्ययो जायते, तस्मादात्मनः कर्मकर्तृत्वे न विरोधः, ज्ञाने त्वयं विरोधो दुरुद्धरः। तथा च वार्तिककारः प्राह—

अहम्प्रत्ययसम्भिन्ना ज्ञानस्यैव तु कर्तरि ॥
भवन्ती तत्र संवित्तिर्युज्येताप्यात्मकर्तृका ॥ [श्लो. वा.शू. श्लो.७०] इति।
तन्मतं निरसितुमनुवदति "यैरिति"

१ अभ्युपगन्तव्यमिति मु. पु. पा.।

२ तथा हीति क० पुस्तके

**किन्तर्ह्यनुमीयते ? ज्ञानम् । ननु न तत् संविदः स्वयम्प्रकाशाया भिन्नमुपलभ्यते । सत्यम्, अत एवानुमीयते । ननु किं तदिति न [1]विद्मः । [2]संविदुत्पत्तिकारणमात्ममनःसन्निकर्षाख्यं तदित्यवगम्य परितुष्यतामायुष्मता ।**

यदप्युक्तं नैयायिकैरपि—ज्ञानं मानसप्रत्यक्षं क्षणिकत्वे सति आत्मविशेषगुणत्वात् सुखादिवदिति । तदपि निराकृतमित्याह—**एतेनेति** । विज्ञानस्य जिज्ञासानिरपेक्षोत्पत्तिरुपलम्भो वा । न प्रथमः, मनोमात्रग्राह्यदुःखादेरुत्पन्नमात्रस्य जिज्ञासानिरपेक्षस्योपलम्भदर्शनात् । नापि द्वितीयः, उत्पन्नमात्रस्य जिज्ञासानपेक्षस्य विज्ञानस्य विषयस्याप्युपलम्भ एव । तदुपलब्धेश्चोपलब्धिरित्येकस्मिन्नेव विज्ञाने आयुषः पर्यवसानं स्यात् । किञ्च विज्ञानस्य क्षणिकत्वादेव विज्ञानान्तरकाले संभवाभावान्न मनोवेद्यत्वमिति । किञ्च स्वत एवोपपन्नस्य पराधीनत्वकल्पनानुपपन्नेत्याह—**स्वयम्प्रकाशत्वेनापीति** । **तस्माज्ज्ञानं स्वयम्प्रकाशमिति सिद्धम् ।**

यदि स्वयम्प्रकाशा संवित्, भाष्यकारेण ज्ञानमनुमेयमिष्यत इति, किमुच्यत इति पृच्छति—**किं तर्ह्यनुमीयत इति** । परिहरति—**ज्ञानमिति** ।

ननु तज्ज्ञानं स्वयम्प्रकाशायास्संविदो भिन्नं नोपलभामह इति चोदयति—**ननु न तत् संविद इति** । परिहरति—**अत एवेति** । प्रतिवादिरूपं विहाय शिष्यभावेन पुनः पृच्छति—**ननु किं तदिति** । सौहार्देनोत्तरमाह—**संविदुत्पत्तीति** ।

---

[1] तद्विद्मः इति मु. पु. पा. ।

[2] अत्रेदं बोध्यम्—'अर्थप्रतिबद्धव्यवहारविशेषप्रवृत्त्यनुगुणः पुरुषस्य धर्मस्संवेदनम्' इति पञ्चिकावाक्यम् । "तदेव—बुद्धिः, उपलब्धिः, ज्ञानमिति च" न्यायसिद्धिव्याख्यासन्दर्भः । तयोरवलोकनेन ज्ञानसंवेदनयोः पर्यायत्वमवगम्यते । भाट्टैर्यस्या अनुमेयत्वमिष्यते, तस्या एव संविदस्स्वयम्प्रकाशत्वं प्रभाकरमतानुसारिभिरभ्युपगम्यते । अत एव शालिकाचार्यो भाट्टानामभिमतं ज्ञानानुमेयत्वम्, तार्किकमतं मानसप्रत्यक्षविषयत्वञ्च निराकुर्वाणः संविदः स्वप्रकाशत्वं निरचैषीत् । तत्र भाष्ये ज्ञानमनुमेयमित्युक्तम् । किन्तदिति प्रश्नं समुत्थाप्य, पयति 'किन्तदिति न विद्म' इति । अनन्तरं स्वयमेव ब्रूते—"संविदुत्पत्तिकारणमात्ममनस्सन्निकर्षाख्यं तदिति परितुष्यतामायुष्मता" इति प्रकरणपञ्चिकापर्यालोचनेन स्वयम्प्रकाशा संवित्, अनुमेयञ्च ज्ञानं ततो विलक्षणमवगम्यते । अस्मिन्पक्षे "संवित् न संवेद्या" इति बृहतीवाक्यमपि न सामञ्जस्यमश्नुते ।

अस्यां परिस्थितौ इत्थं ग्रन्थयोस्सामञ्जस्यमुपपादनीयम् । यथा—'आयुर्वै धृतम्' इत्यत्र कार्यकारणयोरभेदोपचारमङ्गीकृत्य निर्वाहः क्रियते, तथा ज्ञानसंवित्त्योः कार्यकारणयोः ( प्रमाणफलयोः ) अभेदोपचारमादायात्र प्रतीयमानो विरोधः परिहरणीयः, तथा प्रमाणफलभावस्यानियममादायापि । अत्रार्थे उपष्टम्भकानि ऋजुविमलापञ्चिकायाश्शून्यवादप्रकरणस्थानि वाक्यानि विषयमिमं दूरूहं परिशोध्य निश्चिन्वन्ति । अतस्तानि वाक्यान्यधस्तादुद्धरामः—

"तत्र चायमाशयः—संविदर्थश्च द्वयं तावत्प्रत्यक्षम्, न तु ज्ञानम् । तत्र यद्यप्येक

**प्रमाणफलभावं [1]विवृणोति—**
**"मानत्वे संविदो बाह्यं हानादानादिकं फलम् ।**
**ज्ञानस्य तु फलं सैव व्यवहारोपयोगिनी" ॥ इति ।**

**प्रमाणफलभावविवेकार्थमाह—प्रमाणफलभावमिति । तत्र श्लोकं दर्शयति—मानत्वे संविद इति । स्वयंप्रकाशायास्संविदो मानत्वे बाह्यं हानोपादानादिकं फलम् ।**

---

आकारः प्रतिभाति; तथापि न संविदद्वैतम्; अर्थस्य संवित्तेश्च भेदेनावभासनात् । न च भेदो मिथ्येति युक्तम्, बाधकारणदोषाभावेऽपि मिथ्यात्वेऽभ्युपगम्यमानेऽतिप्रसङ्गदोषसमापत्तेः । न च वाच्यं नीलाद्याकारातिरेकिणी निराकारा संवित् कथमध्यक्षेति, तस्याः फलमात्ररूपत्वात् । न च फलस्य रूपान्तरापेक्षा, अपेक्षायां फलत्वानुपपत्तेः । कथमिदानीं ज्ञानसिद्धिः ? उच्यते—फलभूतायास्संविदः कार्यरूपत्वात्, कार्यस्य च कारणमन्तरेणानुपपत्तेः, नित्यकार्योदयापत्त्या चात्मनः स्थिरस्य कारणत्वे निरस्ते, कदाचित्कं ज्ञानमनुमीयते" इति । [ ऋजु० वि० पञ्चि० पृ० ८० ]

"एवं शालिकनाथोपज्ञो मीमांसाभाष्यपरिशिष्टोऽपि ज्ञानं प्रमाणम्, योग्यता तु संवेदनं फलमिति पूर्वोक्तमेवार्थमुपोद्बलयति । तत्रत्योऽयं ग्रन्थसन्दर्भः—"ननु केयं संवित्तिर्नाम ? ज्ञानफलं प्रकाशः । क्व पुनरसौ वर्तते ? ज्ञातरि, न तु ज्ञेये । स्मर्तुरनुमातुर्वा अतीतानागतार्थे संवेदनानुपपत्तिप्रसङ्गात् । तर्हि ज्ञानमित्युच्यते; तद्ध्यनुमेयम्, स्वरसप्रकाशन्तु संवेदनाख्यं ज्ञानफलम् । कस्माज्ज्ञानमनुमेयमात्ममनःसंयोगाख्यं ? सकलात्मविशेषगुणोत्पत्त्यसमवायिकारणकं संवेदनाख्यं ज्ञानफलं कादाचित्कं तस्य लिङ्गभूतम् । ननु अस्तु नात्ममनस्संयोगः, मा भूत्तत् आत्मसमवायि संवेदनाख्यं ज्ञानव्यतिरेकि स्वप्रकाशम्, किन्तु व्यवहारयोग्यता नाम धर्म आत्मसमवेतो जायते; स एव च ज्ञानं संवेदनञ्च; अत एवानुमेयम्, व्यवहारसिद्धिश्च फलभूता तस्य लिङ्गम् । यद्विषयसंवेदनं जायते, तत्रैवात्मा व्यवहारयोग्यो भवति, सात्ववस्था आत्मनो न व्यवहारानुमेया, प्रागपि व्यवहाराद्योग्यतावभासात्; अव्यवहरमाणोऽपि वेदितारमात्मानं लोको मन्यते । पश्चात्तु व्यवहरति स एव; तात्पर्यपर्यवसायी च प्रमाणव्यापारः; व्यवहारस्येच्छाद्वेषरूपकारणान्तरायत्तत्वेन तदेव प्रमाणफलम्; ततोऽन्यत्तत्कारणं ज्ञानरूपम्, तच्चात्ममनःसंयोगातिरेकि, नापरमुपलभ्यते । अतस्तत्प्रमाणम्, योग्यता तु संवेदनं फलमिति" । [ भाष्य. परि. पृ. १७-१८. ]

अस्य निरासः—

"नान्यथा ह्यर्थसद्भावो दृष्टः सन्नुपपद्यते ।

ज्ञानं चेन्नेत्यतः पश्चात्प्रमाणमुपजायते" । [शून्य. वा. १८२] इति श्लोकस्य व्याख्याने न्यायरत्नाकरे "तत्र केचिदाहुः" इत्यारभ्य संवित्तिरूपक्रियाकल्पनासिद्धेः, अलं स्वप्रकाशतया" इत्यत्र द्रष्टव्यः । एतेन प्रभाकरविजयसम्पादकैः ३४ पृष्ठे, आप्तमीमांसासम्पादकै श्चोक्तं [ टि. पृ. १३१ ] ग्रन्थविरोधदूषणं निरवकाशीकृतमिति ध्येयम् ।

[1] विविनक्ति इति. मु. पु. पा. ।

यदा प्रमितिः प्रमाणमिति भावसाधनमाश्रीयते, तदा संविदेव [1]प्रमाणम्। तस्याश्च व्यवहारानुगुणस्वभावत्वाद्धानोपादानोपेक्षाः फलम्। प्रमीयतेऽनेनेति करणसाधने प्रमाणशब्दे आत्ममनःसन्निकर्षाद्यात्मनो ज्ञानस्य प्रमाणत्वे तद्बलभाविनी संविदेव बाह्यव्यवहारोपयोगिनी सती फलम्।

[2]"आपेक्षिकश्च करणं मन इन्द्रियमेव वा।
तदर्थसन्निकर्षो वा मानश्चेत्पूर्वकं फलम्" ॥ इति।

यदा तु साधकतमस्य करणत्वात्तमपश्चातिशयार्थकत्वादतिशयस्य बाह्यापेक्षत्वादालोकाद्यपेक्षमिन्द्रियमेव प्रमाणम्, तस्य विषयसन्निकर्षः, तस्य वा

आत्ममनस्संयोगारब्धस्य ज्ञानस्य प्रमाणत्वे व्यवहारोपयोगिनी सैव—स्वयम्प्रकाशा संविदेव फलमित्यर्थः।

स्वयमेव व्याचष्टे—यदा प्रमितिरिति। प्रमितिः प्रमाणमिति भावसाधने प्रमाणशब्दे स्वयंप्रकाशा संविदेव प्रमाणमिति। कुत इत्याह—तस्याश्चेति। हानोपादानादयस्तथाभूता इत्याह—हानोपादानेति।

प्रमीयतेऽनेनेति करणसाधने प्रमाणशब्दे आत्ममनस्सन्निकर्षादयः प्रमाणम्। तत्कार्यभूता संवित् फलभूतेत्याह—प्रमीयतेऽनेनेति। व्यवहारोपयोगिनी सती फलमिति।

ननु किमात्ममनस्सन्निकर्षाख्यमेव कारणमित्यत्राह—आपेक्षिकञ्चेति श्लोकेन। पूर्वकं—मानश्चेत्, संविदेव फलमित्यर्थः। स्वयमेव व्याचष्टे—यदा त्विति। साधकतमं

---

[1] मानं स्वं इति. मु. पु. पा.।

[2] ग्रन्थकारः प्रमाणफलभावेऽनियमं वर्णयाञ्चकार। तस्य च मूलं प्रत्यक्षसूत्रगतं "बुद्धिर्वा जन्म वा सन्निकर्षो वेति नैषां कस्यचिदवधारणार्थमेतत्सूत्र"मिति भाष्यसन्दर्भः। अस्यायं भावः–इन्द्रियादेरिन्द्रियार्थसन्निकर्षस्य तत्तदर्थविषयकबुद्धेस्तज्जन्यहानोपादानबुद्धेर्वा पूर्वपूर्वस्य प्रमाणत्वे, उत्तरोत्तरस्य फलत्वमिति। अत एवेदं शाबरं वाक्यं व्याचक्षाणः कुमारिलभट्टः एवमाह—"प्रमाणफलभावस्तु यथेष्टं परिकल्प्यता[प्र. सू. श्लो. ५९]"मिति।

इयमेव रीतिः न्यायतन्त्रेऽपि दृश्यते। यथा—"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी-[न्या. द. १-१-३]"ति अक्षपादीयं सूत्रं व्याख्यातुं प्रवृत्तः वात्स्यायनमुनिरित्थमभाषिष्ट—"अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम्। वृत्तिस्तु सन्निकर्षो ज्ञानं वा। यदा सन्निकर्षस्तदा ज्ञानं प्रमितिः। यदा ज्ञानं, तदा हानोपादानोपेक्षाबुद्धयः फल" [वात्स्या. भा. पृ. ५४]मिति। इमामेव शैलीमवलम्ब्य शालिकाचार्यः प्रमाणफलभावस्यानियममबीभषत्। भावसाधने हानादिबुध्यपेक्षया प्रमा स्वयमेव करणम्। करणसाधने तु मन इन्द्रियं तदर्थसन्निकर्षो वापेक्षिकं करणम्, सर्वत्र ज्ञानमेव फलम्। सर्वत्र ज्ञानाज्ञानविभागाभिप्रायेण पक्षद्वयविभाग इति बोध्यम्।

मनःसन्निकर्षः प्रमाणम्, तदापि संविदेव फलम्, तदर्थप्रवृत्तत्वात् साधनानाम् ।

[1]ये पुनः प्रमाणादभिन्नं फलमाहुः, तेऽपि वादिनः कार्यकारणयोरैक्याभावादेवोपेक्षणीयाः ।

इति महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितायां प्रकरणपञ्चिकायां प्रमाणपारायणे प्रथमः प्रत्यक्षपरिच्छेदः समाप्तः ।

करणमिति, साधकतमस्यैव करणत्वात्, मनो बाह्येन्द्रियसंयोगो वा प्रमाणम्, सर्वस्मिन्नपि पक्षे संविदेव प्रमाणफलमिति । कुत इत्याह—तदर्थप्रवृत्तत्वादिति ।

ननु संवेदनमेवार्थसारूप्येण प्रमाणं भवति, प्रमीयतेऽनेनेति व्युत्पत्त्या, अर्थोपलब्ध्यात्मा तदेव प्रमाणमिति सौगता मन्यन्ते । तान् प्रत्याह—ये पुनः प्रमाणादभिन्नमिति । तत् प्रत्यक्षज्ञानं प्रमाणफलम् । अर्थप्रतीतिरूपत्वात् अर्थसारूप्यस्य प्रमाणत्वं, तत एवार्थप्रतीतिसिद्धेः, कथमेतस्यार्थाकारज्ञानस्य कारणत्वमुच्यत इत्युपेक्ष्यत इत्यर्थः ।

इति जयपुरिजनुषा श्रीनारायणेन कृतायां प्रकरणपञ्चिकाव्याख्यायां न्यायसिद्धौ प्रमाणपारायणे प्रथमः प्रत्यक्षपरिच्छेदः समाप्तः[2] ॥

---

[1] ताथागता विषयैकत्वतृष्णया ज्ञानमेव प्रमाणं फलञ्चेति वर्णयन्ति । इदं लोकविरुद्धम् । तथाहि—क्रियाकारकयोस्स्वरूपभेदो लोकसिद्ध एव । एवं सति बौद्धैः क्रियाकारकयोस्स्वरूपभेदहानेन विषयैकत्वमेव स्वीकृतम्, मीमांसकैस्तु विषयैकत्वं विहाय प्रमाणफलयोस्स्वरूपभेद एवाङ्गीकृतः । लौकिकाः कार्यकारणरूपेणाकारद्वयं प्रतिपद्यन्ते, न पुनरेकतां कार्यकारणयोर्मन्यन्ते, तन्न घटत इत्याशयेनाह—ये पुनरित्यादिना ।

[2]श्रीशालिकप्रकरणव्याख्यायां नारायणस्य जयपुरिजनुषः ।
प्रत्यक्षपरिच्छेदः पूर्णोऽस्मिन् यावदादितः प्रारभ्य ॥१॥
विनायकोऽम्बुजासनो हरिर्हरो हरात्मजः ।
सरस्वती रमाऽम्बिका दिशन्तु मङ्गलानि मे ॥२॥
इति गपुस्तकेऽधिकः पाठो दृश्यते ।

# प्रत्यक्षपरिच्छेदस्य परिशिष्टम् ।

प्रमाणलक्षणकथनावसरे पूर्वानुभवजन्यसंस्कारमात्रजन्यं ज्ञानं स्मृतिरिति शालिकनाथोक्तं निरस्य, सापेक्षं ज्ञानं स्मृतिरिति स्मृतिलक्षणं वर्णयामास न्यायसिद्धिव्याख्याता। इदमविचारितरमणीयमिति वयं मन्महे। तथा हि—ज्ञानस्य सापेक्षत्वमुत्पत्तौ ज्ञप्तौ वेति द्विधा विकल्पः। तत्राद्यपक्षेऽपि विकल्पद्वयं ज्ञानमात्रापेक्षत्वम्, वस्तुमात्रापेक्षत्वं वेति। तत्र नाद्यः पक्षः—अनुमानादीनां व्याप्तिज्ञानसापेक्षत्वेन स्मृतित्वमापद्येत। न द्वितीयः—प्रत्यक्षादेरपि स्वोत्पत्तौ इन्द्रियार्थसन्निकर्षसापेक्षत्वेन स्मृतित्वं कथङ्कारं वारयितुं शक्येत। ज्ञप्तौ सापेक्षत्वमित्यत्रापि द्वेधा विकल्पः वस्त्वन्तरापेक्षत्वं ज्ञानान्तरापेक्षत्वं वेति। न प्रथमः कल्पः—प्रत्यक्षादेरपि स्वज्ञप्तौ प्रमात्रादिसापेक्षत्वेन स्मृतित्वापत्तेः। न द्वितीयः—ज्ञानस्य ज्ञानान्तरापेक्षत्वे प्रभाकरमीमांसकमते ज्ञानस्वप्रकाशत्वसिद्धान्तो व्याकुप्येत। उक्तप्रकारेण सापेक्षं ज्ञानं स्मृतिरिति नन्दीश्वरोपज्ञं नारायणेनानूदितं चेदं स्मृतिलक्षणं न सञ्जाघटीति दुष्टत्वात्, शालिकनाथोक्तलक्षणानुगुण्याभावाच्च। अतो मूलोक्तलक्षणमेव—

"प्रमाणमनुभूतिः सा स्मृतेरन्या स्मृतिः पुनः।
पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यत"॥ इति युक्ततमं वयमुत्पश्यामः।

षट्केन युगपद्योगात्परमाणोष्षडंशता।
षण्णां समानदेशत्वे पिण्डस्स्यादणुमात्रकः॥ [ विं. का. ] इति।

समग्रं वासुबन्धवं पद्यम्। विंशतिकारिकाविज्ञप्तिमात्रतासिद्धौ वैनाशिकमूर्धन्येन प्राचीनेन योगाचारमतानुयायिना वसुबन्धुना वैभाषिकमतदूषणप्रसङ्गे यद्दूषणमुक्तम्, तदधर्वैनाशिकस्य दूषणं भवति। अस्यायमर्थः—षड्भ्यो दिग्भ्यः षड्भिः परमाणुभिः षट्सु पार्श्वेषु एकस्य परमाणोर्युगपद्योगे सति परमाणोः षडंशता प्राप्नोति। एकस्य यो देशस्तत्रान्यस्यासम्भवात्। यदि य एव एकस्य परमाणोः, स एव षण्णां परमाणूनां देशः। तेन सर्वेषां समानदेशत्वात् सर्वः पिण्डः परमाणुमात्रकस्स्यात्। अणुमात्रक इति स्वार्थे कः, परमाणुपरिमाणः इत्यर्थः। परस्परव्यतिरेकादिति न कश्चित्पिण्डो दृश्यस्स्यादिति।

विषयेन्द्रियनिरूपणावसरे जैनाचार्येण हेमचन्द्रेण केषां प्राणिनां कानि इन्द्रियाणीति प्रत्यपादि। पाठकानां सुखावगतये तत्रत्यो ग्रन्थसन्दर्भोऽधस्तादुद्ध्रियते। तथाहि—स्पार्शनरसनेन्द्रिये कृमि-अपादिका-नूपुरक-गण्डूपद-शङ्ख-शुक्तिका-शम्बुका-जलूका-प्रभृतीनां त्रासानाम्, स्पर्शनरसनघ्राणानि पिपीलिका-रोहणिका-उपचिका-कुन्थु-तुबरक-त्रपुसबीज—कार्पासास्थिका-शतपदी-अयेनक-तृणपत्रकाष्ठहारकादीनाम्, स्पर्शनरसनघ्राणचक्षूंषि भ्रमर-बटर-सारङ्ग-मक्षिका-पुत्तिका-दंश-मशक-वृश्चिक-नन्द्यावर्त-कीटक-पतङ्गादीनाम्, श्रोत्रेण सहितानि मत्स्य-उरग-भुजग-पक्षि-चतुष्पादानां तिर्यग्योनिजानां सर्वेषाञ्च नारकमनुष्यदेवानामिति॥

"संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि" [वै. द. ४-१-११] इति सूत्रमत्र स्मर्तव्यम्। अत्र कर्मणश्चाक्षुषत्वकथनं वैशेषिकदर्शनानुसारेण, न तु गुरुमतानुसारेण, तन्मते कर्मणोऽनुमेयत्वादिति बोध्यम्।

जातिनिर्णयाख्ये चतुर्थे प्रकरणे पृथिव्यादीनां द्रव्याणां लक्षणमभिदधानः अपाक-जरसवत्त्वम्, सांसिद्धिकद्रवत्ववत्त्वं वाऽपां लक्षणमाह—[ पृ-८० ] अत्र शीतस्पर्शवत्य आपः इति सुप्रसिद्धं लक्षणमाचख्यौ न्यायसिद्धिकार इति वेदितव्यम् ।

शालिकाचार्यः—"द्रव्यजातिगुणेषु", इत्यनेन ग्रन्थेन प्रमेयत्रैविध्यं वर्णयामास । अत्रेय-माशङ्का समुन्मिषति—यत् सत्सु संख्यासादृश्यादिषु कथं प्रमेयत्रैविध्यमिति । न्यायसिद्धिकारः प्रकारद्वयेन शङ्कामिमां पर्यहार्षीत् । तथाहि—तत्राद्यः प्रकारः पदार्थविदामग्रगण्यस्य प्रशस्त-पादस्य प्रक्रियावलम्बनम् । द्वितीयस्तु गुणादीनां द्रव्यपारतन्त्र्यस्वाभाव्यम् । आभ्यां प्रकाराभ्यां शङ्कां नारायणो निरस्यति स्मेति बोध्यम् ।

टीकाकारस्त्रेधा गुणानां लक्षणमाह—द्रव्याश्रयः कर्मभिन्नो गुण इति, द्रव्येषु तरतम-भावेन वर्तमानो गुण इति, द्रव्यपरतन्त्रो गुण इति च बोध्यम् ।

अत्र "नास्ति अजसंयोगः, नित्यपरिमण्डलवत्पृथगनभिधानात्" [ प्रशस्त-भा. ] इति । सर्वज्ञेन महर्षिणा सर्वार्थोपदेशाय प्रवृत्तेन पृथगनभिधानान्नास्ति अजसंयोगः खपुष्प-वदिति [ न्या-कन्द. ] चानुसन्धेये । अजसंयोगो जातिनिर्णये निराकृतः । अत्र तदेव स्मारयति व्याख्यातेति बोध्यम् ।

# अथानुमानपरिच्छेदः ।

"ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनात् ।
एकदेशान्तरे बुद्धिरनुमानमबाधिते" ॥१॥ इति ।

ज्ञातः सम्बन्धनियमो यस्य, तस्यैकदेशस्य दर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे या बुद्धिः, [1]साऽनुमानमित्यर्थः ।

चोदनाप्रामाण्यप्रतिज्ञायां निमित्तपरीक्षा कर्तव्येत्यस्यार्थस्य सर्वप्रमाणेष्वव्यभिचारिषु सिद्धिरिति, सर्वेषां लक्षणतो व्यवस्थितत्वेनाव्यभिचारित्वात् तत्र प्रत्यक्षापेक्षत्वेनेतरप्रमाणानाम्, प्रत्यक्षस्य प्रथमं लक्षणं विषयञ्चोक्त्वा, बहूनामभिमतत्वेनानन्तरमनुमानलक्षणम्, अवयवदूषणानि च सङ्गृह्य श्लोकेन दर्शयति—[2]ज्ञातसम्बन्धेति । अत्रानुमानमिति लक्ष्यनिर्देशः । ज्ञातसम्बन्धनियमस्येत्यादि लक्षणं संबन्धनियमज्ञानादेकदेशस्य दर्शनाद्धर्मिग्रहाच्च, यत्पश्चाज्जायते ज्ञानं, तदनुमानमित्यर्थः ।

तदुक्तमाचार्यैः—

प्रत्यक्षमानादनुजायमानमन्यैर्मिते धर्मिणि वा पुरस्तात् ।
लिङ्गञ्च मित्वा प्रथमं स्वमानात्पश्चाद्भवेल्लिङ्गिनि चानुमानम् ॥ इति ।

एवमन्वर्थसंज्ञासिद्धमनुमानस्वरूपं लोकप्रसिद्धमुद्दिश्य तदाभासविवेचनार्थं लक्षणमुच्यते इति ।

तत्र—

'प्रमाता ज्ञातसम्बन्ध एकदेश्यथवोच्यते' ॥ [ श्लो. वा. अनु. श्लो. २ ] इति परोक्तं मा भूदिति, स्वमतेनानुमानमाह, ज्ञात इति ।*

---

*एतावत्पर्यन्तमेव न्यायसिद्धेर्मातृकाऽस्माभिरुपलब्धा । इतः परं विषमस्थलटिप्पण्येव स्थास्यतीति विज्ञैर्ध्येयम् ।

[1] अनुमानमिति मु. पु. पा. ।

[2] "यन्निरूपणानन्तरं यन्निरूप्यते, तत् तेन सङ्गतं" भवेदिति न्यायेन प्रत्यक्षं निरूप्यानन्तरमनुमाननिरूपणे काचन सङ्गतिर्वक्तव्या । अनुमानस्य वादिपरिग्रहभूम्ना प्रत्यक्षं निरूप्यानन्तरं बहुवादिसम्मतत्वेनानुमानं निरूपयितुमुपक्रमते 'ज्ञातेति' । तत्रभवान्भाष्यकारः शबरस्वामी वृत्तिकारमतानुवादावसरे प्रत्यक्षसूत्रे तत्सतोर्व्यत्यासेन प्रत्यक्षलक्षणपरत्वमुपवर्ण्यानुमानादिलक्षणकरणस्येदमुपलक्षणमिति मन्वानोऽनुमानलक्षणं न्यरूपयत् । तथा हि—"अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः," इति भाष्यसन्दर्भः । तत्र भाष्यवाक्ये अनुमानमिति लक्ष्यनिर्देशः, ज्ञातसम्बन्धस्येत्यादिकमवशिष्टं लक्षणवाक्यं

सौगतमतानुवादः ।

**कः पुनरयं [1]सम्बन्धनियमः ? अविनाभावः । स च तादात्म्यतदुत्पत्तिनिबन्धन इति केचित् । द्विविधो ह्यर्थः—स्वविषयकबोधजनकः, अतज्जनकश्च । तत्राद्ये प्रत्यक्षमेव प्रमाणम्, इतरस्य तु सत्तानिश्चयो दुर्लभ एव । यज्जनितं हि यज्ज्ञानं, तत्तेन विना सत्तामलभमानं तस्य सत्तां निश्चाययितुमलम् । यस्य तु न स्वजनितं ज्ञानमस्ति, तस्य सत्ता कुतो निश्चीयेत । न चार्थान्तरजनितं ज्ञानं तत्सत्तां निश्चाययितुं [2]समर्थम्, अविसंवा**

---

भाष्यकारीयं नियम अबाधित इति पदद्वययोजनेन लक्षणं निरदिक्षत्, हेत्वाभासव्यावृत्तिपूर्वकं शालिकनाथः ।

अत्र ज्ञातसम्बन्धनियमस्येति पदं ज्ञातस्सम्बन्धनियमो येनेति व्युत्पत्या बुद्धिशब्दसान्निध्यात्पुरुषपरतया, ज्ञातस्सम्बन्धो यस्येति व्युत्पत्त्या देशपरतया समुदायिपरतया च कुमारिलभट्टैर्व्याख्यातम् । अत्र व्याख्याने ऽनुपात्तस्य पुरुषस्य देशस्य समुदायिनश्च गम्यमानस्य सम्बन्धोऽनुपपन्न इति दोषं, 'गम्यमानस्य चार्थस्य नैव दृष्टं विशेषण'मिति । तदीयवचनविरोधञ्च पश्यन् टीकाकारः प्रभाकरमिश्रः तदीयं व्याख्यानं प्रतिचिक्षेप, व्याचख्यौ च प्रकारान्तरेण—दर्शनस्य दृश्यप्रधानत्वादाकांक्षितं पूरणसमर्थञ्च सम्बन्धितामश्नुतेऽतो ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनादित्यर्थं भाष्यस्य वर्णयाम्बभूव । इदञ्च व्याख्यानमुम्वेकभट्टः [ ता. टी. पृ. ३०३. ३०४. ] अनुपासितगुरुव्याख्यानमुपेक्षणीयमित्यादिग्रन्थेन प्रतिक्षिपन्, कौमारिलं व्याख्यानं समर्थयामास । अस्य च निराकरणं प्राभाकरमतसमर्थनञ्च ऋजु० वि० पं० पृ० ९२–९३ योः द्रष्टव्यम् ।

श्लोकार्थः—अत्र—एकदेशस्य एकदेशान्तरे चेति द्वाभ्यां शब्दभ्यां आश्रितौ हेतुसाध्यौ उच्येते । ताभ्यामेक आश्रय आक्षिप्यते । अतः समानाश्रयाश्रितयोरेव द्वयोर्गम्यगमकभाव इति फलति । अन्तरशब्दोऽपि पूर्वोक्तस्यैवार्थस्योपोद्बलकः । असन्निकृष्टपदं स्मरणाभिमाननिरासार्थमित्युक्तं पञ्चिकायाम् । तदनुपदमेवात्र मूले स्फुटीभविष्यति । शालिकनाथोपज्ञे भाष्यपरिशिष्टे त्वसन्निकृष्टपदं जिज्ञासितधर्मपरतया व्याख्यातम् । सम्बन्धशब्देन—निरूपाधिकसम्बन्धो ग्राह्यः । सम्बन्धमात्रग्रहणे बौद्धाभिमतानां तादात्म्यादीनां ग्रहणापत्त्या नियमपर्यन्तानुसरणम् । दर्शनशब्देन निश्चयोऽभिप्रेतः । तेनार्थापत्तितोऽस्य वैलक्षण्यं सूचितम् । विशेषस्तु—अर्थापत्तिपरिच्छेदे वक्ष्यते । तथाचायं संपिण्डितोऽर्थः—समानाश्रयाश्रितयोरेकदेशिनोर्ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थेबुद्धिरनुमानमिति । भवनाथस्तु—असन्निकृष्टपदस्यानुमानोत्पत्तिहेतुपरिगणनार्थमिति मन्यते । [न. वि. १२७–१२८ पृ. ] अनुमानलक्षणघटकैरेव विशेषणैर्हेत्वाभासानां यथानिर्देशस्तथात्रैवाऽग्रे व्यक्तीभविष्यतीति ध्येयम् ।

[1] सम्बन्ध इति मु. पु. पा. । [2] अलमिति मु. पु. पा. ।

दनियमे कारणाभावात् । [१]यत् स्वविषयकं ज्ञानम्, जनयति तस्य तदविनाभावित्वे तज्ज्ञानस्य युक्तोऽविसंवादनियमः ।

पारम्पर्येणापि यत् यत्प्रतिबद्धम्, तत् तदविसंवादकं भवत्येव । धूमादिजन्यं पावकादिविज्ञानं धूमाद्यविनाभावि, धूमादिकमपि पावकाद्यविनाभावीति, तदविसंवादनियमोपपत्तिः । अविनाभावनियमश्च नाऽप्रतिबद्धस्योपपद्यते । प्रतिबन्धश्च[२] तादात्म्येन, [३]तदुत्पत्त्या वा सम्भवेत्, नान्यथा । तदुक्तम्—

[४]कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमोऽदर्शनान्न न दर्शनात् ॥

[प्र. वा. परि. ३. श्लो. ३०.] इति ।

[५]विपक्षेऽदर्शनमात्रान्नाऽविनाभावनियमः, नापि सपक्षे दर्शनमात्रादऽविनाभाव इत्यर्थः ।

---

[१] यदित्यादि ज्ञानमित्यन्तः, मुद्रितपुस्तके नास्ति, खपुस्तकानुसारेणायं पाठो निवेशितो इति ध्येयम् ।

[२] प्रतिबद्ध इति मु. पु. पा. । [३] तत्कार्यतयेति मु. पु. पा. ।

[४] अनुमानपरिच्छेदे अविनाभावनियमरूपा व्याप्तिः द्वेधा सम्भवति तादात्म्येन, तदुत्पत्त्या वा, नान्यः प्रकारः समस्ति भावस्थले, प्रतिषेधश्चानुपलब्धिनिबन्धन इति सौगता मन्यन्ते। अत्र द्वयोरविनाभावस्तादात्म्येन स्वभावहेतुर्विवक्षितः । तदुत्पत्त्या च कार्यकारणभावः, बौद्धैरेतयोरेव अविनाभावरूपव्याप्तिनिश्चयं प्रति हेतुत्वस्य स्वीकारात्, इति बौद्धमतमवतारयन् धर्मकीर्तीयं पद्यमुपन्यस्यति—कार्यकारणभावेति ।

अस्यायमर्थः—साधनस्य साध्याव्यभिचारित्वनियमः क्वचित्कार्यकारणभावेन ज्ञायते । यथा—वह्निधूमयोः। क्वचित्स्वभावात् वृक्षशिंशपयोः। तथा च कार्यकारणभावः स्वभावश्चेति, द्वयमेवेदं साधनस्य साध्याव्यभिचारित्वं नियच्छति । न तु निश्चितसाध्याभाववति विपक्षे हेतोरदर्शनात् व्याप्तिग्रहः, न वा निश्चितसाध्यवति सपक्षे हेतोर्दर्शनात् व्याप्तिग्रहः, किन्तु पूर्वोक्ताभ्यामेव द्वाभ्यां नियामकाभ्यामिति ।

अत्रेदं बोध्यम्—प्रशस्तपाददेवः पदार्थसङ्ग्रहाभिधे ग्रन्थे पक्षवृत्तित्वसपक्षवृत्तित्वविपक्षव्यावृत्तत्वविशिष्टं धूमादि व्याप्यम्, तत् यस्य वन्ह्यादेरस्ति, तत् व्यापकं भवति, तेन व्यापकमनुमीयत इति बभाषे । यथोक्तं तेन—

**अनुमेयेन संबद्धं प्रसिद्धञ्च तदन्विते ।**
**तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥** इति ।

तन्निरसनमुखेन स्वमतमुपस्थापयति धर्मकीर्तिरित्याह—विपक्ष इति ।

[५] अत्र मूले श्लोकोक्तो विपर्यस्तक्रमः अयं "सपक्षे दर्शनमात्रान्नाविनाभावनियमः, नापि

कार्यं[१] हि कारणायत्तात्मलाभं न कारणेन विना भवितुमलमिति [१]नियत-कारणविनाभावम् ।

यदात्मा यो भावः, स तं विना कथं भवेदिति तादात्म्येऽपि युक्त एवा-विनाभावनियमः । कार्यकारणभावावगमः [२]प्रत्यक्षानुपलम्भाभ्यां सर्वत्र सम्भवति । सत्येवाग्नौ धूम उपलभ्यते, असत्यग्नौ सत्स्वपि तदितरकारणेषु नोपलभ्यत इति, [३]इदमेव कार्यस्य कार्यत्वं, यत्तस्मिन्सत्येव भावोऽसति च तस्मिन्नभाव एव । तन्मात्रानुबन्धसिध्या च तादात्म्यसिद्धिः । तन्मात्रा-नुबन्धसिद्धिरपि विपक्षे बाधकप्रमाणप्रवृत्त्यायत्ता । बाधकञ्च प्रमाणमनुप-लब्धिरूपमेव[४] । [५]सर्वत्र निषेधानामनुपलब्धिनिबन्धनत्वात् । [६]तदाहुः—
"यावत् कश्चित्प्रतिषेधः स सर्वोऽनुपलब्धेरेव" ।

[प्र. वा. तृ. प. ३० श्लो.] इति ।

तन्निरासः ।

तदिदमनुपपन्नम् । तथाहि—अग्नौ सति धूम इति तावत्प्रत्यक्षेणाव-गम्यताम्; असति त्वग्नौ धूमो नास्तीत्यत्र किं प्रमाणम् ? नन्वनुपलब्धि-लिङ्गकानुमानमेव । अनुपलब्धावपि तर्ह्यविनाभावः पर्येषितव्यः । स तावन्न तादात्म्येन, तन्मात्रानुबन्धसिध्या[७] हि तादात्म्यं सिध्यति । तन्मात्रा-नुबन्धसिद्धिरपि [८]विपर्यये बाधकप्रमाणप्रवृत्त्यायत्ता[९] । अनुपलब्धिरेव च बाधकं प्रमाणम् । [१०]सर्वत्र निषेधानामनुपलब्धिसाधनकत्वात् । बाधक-प्रमाणभूतानुपलब्धावपि चोक्तेन न्यायेनानुपलब्ध्यन्तरापेक्षायामनवस्था-प्रसङ्गात् । नापि तदुत्पत्त्या, अनुपलब्धावविनाभावसिद्धिः । कार्यकारण-

---

विपक्षेऽदर्शनमात्रात्" इति दृश्यते, इदमनुपपन्नमिति मन्यमानैरस्माभिः श्लोकानुसारी पाठः अनुसृत इति ध्येयम् ।

[१] अविनाभावनियमकारणम् इति. मु. पु. पा. ।
[२] प्रत्यक्षानुपलम्भदर्शने इति. मु. पु. पा. ।
[३] एतावदेव इति मु. पा. ।
[४] अनुपपत्तिरूपमेव इति. ख. पु. पा. ।
[५] सर्वप्रतिषेधानामिति मु. पु. पा. ।
[६] तदाह, अनुपलब्धित इति च पाठभेदो दृश्यते ।
[७] तन्मात्रानुबन्धेन हि. इति मु. पु. पा. ।
[८] विपक्षे इति. मु. पा. ।
[९] प्रवृत्तेः इति. ख. पुस्तके पा. ।
[१०] सर्वप्रतिषेधानां इति मु. पु. पा. ।

भावस्यविपक्षानुपलब्धिसापेक्षत्वेनाऽनवस्थाप्रसङ्गादेव, तदेवं तदुत्पत्तेरविनाभावावसायो दुर्लभः। तादात्म्येनापि तादात्म्यस्यानुपलब्धिनिबन्धनतया तन्मात्रानुबन्धसिद्धयधीनत्वादनवस्थाप्रसङ्गादेवाविनाभावो [1]दुरवसायः।

किञ्च यदपि यस्य कार्यम्, तदपि तेन विना किमिति न भवति? कारणाभावादिति चेत्। कारणाभावे कार्यं न भवतीत्येतदेव कुतः? अकारणस्य नित्यं सत्त्वमसत्त्वं वा स्यादिति कादाचित्कत्वात् कार्यस्य कारणेन विना कार्यं न भवतीति निश्चीयते। तदुक्तम्—

[2]नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः॥

[प्र. वा. प. ३ श्लो. ३४। इति।]

अत एव कारणान्तरादपि कार्यस्य सम्भवो निरस्तो वेदितव्यः। कारणान्तरजन्मनो हि कार्यस्य द्वयमपि कारणं न स्यात्। एकत्र भवतोऽन्यत्राभावेऽपि भावात्, ततश्चाकारणत्वापत्तेः। कादाचित्कत्वविरोध इति चेत्, न, अनपेक्षितस्य नित्यं सत्त्वमसत्त्वं वेत्यस्य [3]नियमस्य प्रमाणाभावेनाऽनवक्लृप्तेः। सापेक्षत्वं हि कादाचित्कत्वस्य व्यापकमुपलब्धम्। व्यापकाभावे व्याप्यं न भवतीत्यनपेक्षस्य कादाचित्कत्वानुपपत्तेः, नित्यं सत्त्वमसत्त्वं वा स्यादिति निश्चीयत इति चेत्, न; व्यापकाभावे व्याप्यं न भवतीत्यस्यैव [4]नियमस्यानवकल्पनात्।

किञ्चातदात्मनोऽतत्कार्यभूताच्च रसाद्रूपानुमानं न स्यात्, यदि तादात्म्यतदुत्पत्तिभ्यामेवाविनाभावनियमः। अथोच्येत रसस्तावत्कार्यतया रसहेतुमनुमापयति। प्रवृत्तिसामर्थ्यरूपोपादानकारणसहकारी च सः रसहेतू रसं न जनयतीति तादृशस्वहेत्वनुमानेन रसाद्रूपहेतोः प्रवृत्तिसामर्थ्यस्यानुमानम्।

---

[1] दुरवसेय इति मु. पु. पा.।

[2] अनुमाने कार्यकरणभावेन अविनाभावनियमो ग्रहीतुं न शक्यते, इति प्रतिपादनावसरे कारणाभावे कार्यं न भवतीति एतदेव कुतः? इत्याक्षिप्याकारणस्य नित्यं सत्त्वमसत्त्वं वा स्यात्। इत्यत्राप्रमाणतया श्लोकमिममुदाजहार—नित्येति। विना कारणं कार्योत्पत्त्यभ्युपगमे धूमादेराकाशादिवन्नित्यं सत्त्वमेव स्यात्, शशविषाणादेरिवासत्त्वं वा स्यात्। तत्र हेत्वन्तरापेक्षाभावात्। अपेक्षाकृत एव भावानां कादाचित्कत्वस्य सम्भव इत्यर्थः।

[3] निश्चयस्येति मु. पु. पा.। [4] निश्चयस्येति मु. पु. पा.।

प्रवृत्तिसामर्थ्याच्च कारणात्कार्यभूतस्य रूपस्यानुमानमिति, तन्न; लोकस्येत्थमप्रतीतेः। रूपमेव रसाल्लोकः प्रतिपद्यते, लौकिकी च प्रतीतिः परीक्षकैरनुसरणीया।

किञ्च यत्र तावत् कारणात्कार्यानुमानम्, तत्र न हेतोः कार्यत्वम्, नापि तादात्म्यमिति नाऽविनाभावनियमस्स्यात्। अपि च चन्द्रोदयात्समुद्रवृद्ध्यनुमाने, कृत्तिकोदयाच्च रोहिण्यासत्त्यनुमाने नैषापि कल्पना सम्भवति। तादात्म्येनापि यदनुमानं, तदपि न साधीयः। सिद्धं हि लिङ्गं, साध्यं हि लैङ्गिकम्। न हि सिद्धस्य साध्यस्य च तादात्म्यमुपपद्यते। ननु परमार्थतो वृक्षत्वशिंशपात्वयोर्भेदो नास्तीति चेत्; न, वस्तुभूतसामान्यवादिनां भेदाभ्युपगमात्। काल्पनिकसामान्यवादिनां त्वभेदोऽपि नास्ति; भेदाभेदयोर्वस्तुविषयत्वात्।

[1]अपि च कथं काल्पनिकमेव धर्मधर्मिविभागमाश्रित्यानुमानानुमेयव्यवहारः, ततश्च कल्पनावशाद्भेद एव वृक्षत्वशिंशपात्वयोः। अथ भेदेऽपि शिंशपात्वमात्रानुबन्धित्वाद्वृक्षत्वस्य, शिंशपात्वं वृक्षत्वाविनाभावि।

एवं तर्हि साधनधर्ममात्रानुबन्धित्वेनैवाविनाभावित्वं सिद्धम्। तच्चाकार्यस्याऽतदात्मनोऽपि यदि सम्भवति, तदा तस्यापि गमकत्वमुपपन्नम्। सम्भवति चान्यस्यापि तदिति, इहैव वक्ष्यामः।

वैशेषिकमतानुवादः।

एतेनैव न्यायेन [2]येऽपि कार्यकारणभावसंयोगसमवायैकार्थसमवायविरोधाख्यान् पञ्च सम्बन्धान् "[3]अस्येदं कार्यं, कारणं, संयोगि, समवायि,

---

[1] पक्षसाध्यहेतुदृष्टान्तानां बहिरसत्त्वेऽपि बुद्ध्यारोहेणैव सर्वोप्यनुमानादिव्यवहारस्सङ्गच्छते। अत एव दिङ्नागेनोक्तं "सर्व एवानुमानानुमेयव्यवहारः बुद्ध्यारूढेन धर्मधर्मिन्यायेन न बहिस्सत्तामपेक्षते" इति। एतत्सर्वं मनसि निधायाह—अपि चेति।

[2] वैशेषिकसम्मतं सम्बन्धनियमप्रकारं दूषयितुं सौगतमतनिराकरणे प्रयुक्तेनैव हेतुना निरस्तो भवति इत्याशयेनाह—एतेनेति।

[3] वैशेषिकदर्शने "अस्येदं कार्यं, कारणं, संयोगी, विरोधी, समवायी, चेति लैङ्गिकम्" इति सूत्रस्य पाठो दृश्यते। परमयं ग्रन्थकारोऽन्यथा किञ्चिद्व्यत्यासेन सूत्रमिदं पठति। ऋजुविमलायामपि—"एतेन येऽपि समवाय—संयोग—एकार्थसमवाय—कार्यकारणभावविरोधाख्यान् पञ्च सम्बन्धाननुमानाङ्गमाहुः, तेऽपि पराकृताः" इत्येव पाठो दृश्यते। स एव पाठो मूले सन्निवेशित इति सूधीभिर्विभावनीयम्।

एकार्थसमवायि, विरोधि चेति लैङ्गिकम्'' [ वै. द. ६-२-१ ] इत्यनुमानकारणमाहुः, तेऽपि निराकृताः । समुद्रवृद्ध्यादौ यथोदितसम्बन्धाभावेऽप्यनुमानदर्शनात् । संयोगसमवायैकार्थसमवायास्तु नानुमानोत्पत्तौ कारणम् । न हि कमण्डलुना[१] च्छत्रानुमानम् । नापि रूपादेः [२]पृथिव्यनुमानम् । नापि रूपाद्रसानुमानम् । यच्च विरुद्धस्यानुमापकत्वोदाहरणम् । यथा—भूतं वर्षणकर्माभूतस्य वाय्वभ्रसंयोगस्यानुमापकम्, तथाऽभूतं वर्षणकर्म भूतस्य वाय्वभ्रसंयोगस्यानुमापकमिति ।

तन्निरासः ।

तदनुपपन्नम्, भावाभावयोर्ह्यत्र गम्यगमकता । न च तयोर्विरोधोऽस्ति । [३]अनुगमननियमनव्याप्तिरूपास्तु सम्बन्धा एवायुक्ताः,[४] क्रियागर्भत्वात्सम्बन्धस्य । अग्न्यादीनां धूमादीन्प्रतित्यनुगमननियमनव्यापनक्रियासंभवात्[५] ।

स्वमतेन व्याप्तिकथनम् ।

तस्मात्कार्यकारणभावादय एव सम्बन्धा यस्य येन नियता-अव्यभिचारिणः, स हेतुरिति दर्शयितुं ''ज्ञातसम्बन्धनियमस्ये''त्युक्तम् । धूमस्य कार्यस्य कारणसम्बन्धो नियतः, अग्नेस्त्वनियतः । तथा रसस्य रूपेण सहैकार्थसमवायलक्षणः सम्बन्धो नियतः, न रूपस्य रसेन । गन्धस्य पृथिव्या सह समवायलक्षणस्सम्बन्धो नियतः, न रसादीनाम्, अनया दिशा सर्वहेतुषु सम्बन्धनियमोऽनुसरणीयः ।

सम्बन्धनियमे प्रमाणविचारः ।

किं पुनः सम्बन्धनियमावगमे प्रमाणम् ? न तावत्प्रत्यक्षम्, तस्य सन्निहितदेशवर्तमानकालवस्तुविषयत्वनियमात् । येन हि प्रमाणेन सर्वदेशेषु सर्वकालेषु च धूमादीनां वह्न्यादिसम्बन्धोऽवगम्यते, तेन तेषां सम्बन्धनियमोऽवसीयते[६] । न च प्रत्यक्षं तत्र समर्थम्, [७]कतिपयदेशकालावगतसम्बन्धमात्रेण च नियमो नावगम्यते, अग्नेरपि तथा सम्बन्धनियमप्रसङ्गात् । नाप्यनुमानेन

---

[१] च्छात्रानुमानमिति मु. पु पा ।
[२] पृथिव्याद्यनुमानमिति मु. पु. पा. ।
[३] नियमानुगम इति. मु. पु. पा. ।
[४] अनुपपन्ना ति. मु. पु. पा. ।
[५] असम्भवादिति मु. पु. पा. ।
[६] अवगम्यत इति. मु. पु. पा. ।
[७] सम्बन्धावगमेति. मु. पु. पा. ।

सम्बन्धनियमावसायः, अनवस्थाप्रसङ्गात्। शास्त्रं त्वपूर्वकार्यार्थविषय-नियतप्रामाण्यमत्र शङ्कामपि न[1] याति। तथोपमानमपि नात्र प्रमाणम् सादृश्यमात्रविषयत्वात्[2]।

अर्थापत्तिरपि सम्बन्धनियमसापेक्षाऽनवस्थाप्रसङ्गादेव[3] न प्रमाणम्। सम्बन्धनियमकल्पनया च विना कस्याऽनुपपत्तिः। धूमादीनामग्न्यादि-कार्यत्वस्येति चेत्, न; वह्निकार्यस्यापि धूमस्यान्यकार्यत्वसम्भवात्। न दृश्यते तावदन्यकार्यतेति चेत्, सत्यम्; तथापि शङ्कानिराकरणमशक्यम्। कारणभेदे कार्यभेदादेकस्यानेकस्मादुद्भवो नोपपद्यते इति चेत्। न। यद्यपि क्वचित्कारणभेदात् कार्यभेदो दृश्यते, तथापि न सर्वत्र तथैवेति न शक्यमव-धारयितुम्। अतोऽग्निकार्यस्यापि धूमस्य देशान्तरे कालान्तरे वा कारणान्त-रादपि[4] सम्भवाशङ्कया न सम्बन्धनियमाध्यवसानं युक्तम्। शतशोऽग्नौ धूमस्य दर्शनं, अनग्नावदर्शनञ्च सम्बन्धनियममन्तरेण नोपपद्यत इति यद्युच्येत, तन्न, यत्र यदा च दर्शनमदर्शनं वा, तदा तत्र तेन सम्बन्धभावा-भावाभ्यां तदुपपत्तेर्देशान्तरे कालान्तरे च भावाभावनिश्चयायोगादिति नार्थापत्त्या सम्बन्धनियमसिद्धिः।

सम्बन्धनियमे मानसप्रत्यक्षशङ्कानिरासौ।

[5]कश्चित्—मानसं प्रत्यक्षमत्र प्रमाणमित्याह। [6]तदयुक्तम्, मनश्चेद्बहिर्विषये कारणान्तरनिरपेक्षं प्रवर्तेत, तदा सर्वः सर्वदर्शी स्यादविशेषात्। अथ भूयोदर्शनसंस्कारसचिवं मनो बहिरपि प्रवर्तत इत्युच्यते। तन्न। संस्कारस्य स्मृतिमात्रहेतुत्वादधिकार्थपरिच्छेदासम्भवात्। यद्यपि [7]सर्वप्रमाणसाधारणं मनः, तथापि सर्वं न मानसं प्रत्यक्षं, किन्त्वसाधारणकारणानुप्रवेशेन प्रमाणा-न्तरत्वव्यवहारः। एवञ्चेदसाधारणभूतभूयोदर्शनसंस्कारानुप्रवेशात्प्रमाणा-

---

[1] नायाति, इति. मु. पु. पा.। [2] सादृश्यमात्रविषयमिति. मु. पु. पा.।

[3] नानुमानवदिति. मु. पु. पा.। [4] कारणान्तरस्यापीति. मु. पु. पा.।

[5] अयंमर्थो न्यायरत्नमालाकारेण व्याप्तिवादाख्ये प्रकरणेऽनूद्य निराकृतः। विस्तरस्तु तत्रैव द्रष्टव्यः [पृ. ३२७.]। ऋजुविमलायां यदपि "कोऽपि परिपक्वपदप्रक्रियया भाषया भाषते मानसमिदं प्रत्यक्षमुदीयत" [पृ. ९५.] इति पाठो दृश्यते। तदनुसारेणात्र कश्चिदिति पाठो मया मूले सन्निवेशितः। मुद्रितपुस्तके केचिदिति पाठो दृश्यते।

[6] तदनुपपन्नमिति. मु. पु. पा.। [7] सर्वप्रमाणासाधारणमिति. मु. पु. पा.।

न्तरमिदमापतति। अपि च भूयोदर्शनविशेषादग्नावपि सम्बन्धनियमज्ञानं किं न स्यात्? तथाभूतमपि धूमादि अग्निं न व्यभिचरति, ततो नानुमानमिति चेत्; धूमोऽपि वह्निं न व्यभिचरिष्यतीति किं प्रमाणं? किं चासत्यां गतौ मानसं प्रत्यक्षमिति [१]कल्प्यते, अस्ति चान्या [२]गतिरिति वक्ष्यामः।

प्रभाकरसम्मतसम्बन्धनियमावधारणम्।

अत्रोच्यते—अग्निधूमादीनां तावत्संयोगसम्बन्धः प्रत्यक्षादिभिरवसीयते। तत्र संयोगो विशेषणत्वेन, गुणानां द्रव्यपरतन्त्रत्वस्वभावत्वात्। विशेष्यतया च स्वतन्त्रभूतं द्रव्यं प्रकाशते। देशकालावपि च विशेषणतयैवावभातः। सन्निहितदेशवर्तमानकालता हीदन्ता, सा तु विशेषणमेव। एवञ्च देशकालाभ्यां संयोगसम्बन्धस्य विशिष्टस्याऽवगतिः। तथा हि—संयुक्ताविमाविति हि [३]प्रतिपत्तिः, न पुनरयमनयोः संयोग इति। तथा च देशकालानवच्छिन्नः प्रथममग्निधूमयोः संयोगलक्षणः सम्बन्धो द्वयोरप्यवगम्यते। तत्राप्यग्नेः कदाचिद्धूमासंयुक्तस्याप्यवगमात् संयोगासंयोगयोश्च परस्परविरोधात्कालभेदमाश्रित्याविरोधः परिकल्प्यते। तेनाग्नेर्धूमसम्बन्धस्य कालावच्छेदोऽनुप्रवेश्यते। धूमस्य तु कदाचिदप्यग्निसंयोगरहितस्यावगमो नास्ति।

यद्यपि घटादिवत् धूमो विनाप्यग्निसंयोगं प्रवर्तते, तथापि यादृशस्याविच्छिन्नोदयस्य गगनतलवर्तिनो लिङ्गत्वमिष्यते, तादृशस्य नास्त्येवाग्निसंयोगविरहिणो दर्शनमिति, तस्याग्निसंयोगो देशकालावच्छिन्नो धूममात्रानुबन्धो नियत इति निश्चीयते। तथा च धूमसत्त्वं कालान्तरे देशान्तरे वा प्रमाणमपेक्षते, न तु तस्यां सत्यामग्निसंयोगः। तस्य धूममात्रानुबन्धित्वेनावगमात्। नन्वग्नावसंयोगस्यापि दर्शनाददृष्टोऽप्यस्यासंयोगो धूमं प्रत्याशङ्कामावहति[४]। उच्यते—वन्हेरार्द्रेन्धनसंयोगोपाधिको [५]धूमसंयोग इति, तदभावे भवेत् वह्नेर्धूमसंयोगाभावः। धूमस्य तु वह्निसंयोगो नौपाधिकः,

---

[१] आश्रीयत इति. मु. पु. पा.।
[२] अस्ति च गतिरिति ख. पु, पा.। [३] प्रतियन्तीति. मु. पु. पा.।
[४] शङ्कामर्हतीति, मु. पु. पा.। [५] धूमसंयोगसम्बन्धयोग इति. मु. पु. पा.।

अग्नेर्धूमेन सह संबन्धो धूममात्रानुबन्धीति प्रतीयते। अतस्संबन्धमात्रावसायसमये एव यावद्धूमाधिकरणं अग्निसम्बन्धस्यावगतत्वात् गृहीतग्राहित्वेऽपि प्रत्युत्पन्नकारणजन्यत्वेन

कथमसौ न सम्भवतीत्याशङ्क्येत। कथमनौपाधिकत्वावगमः ? प्रयत्नेनाप्यन्विष्यमाणे औपाधिकत्वानवगमात्। [1]तच्चैतद्भूयोदर्शनायत्तमिति मन्वाना आचार्या भूयोदर्शनमाद्र[2]तवन्तः।

नन्वेवं[3] सम्बन्धनियमावसायसमय एव यावद्धूमादिभावितया अग्न्यादिसम्बन्धस्यावगमात्, धूमादिसत्तानिश्चयादधिकं निश्चेतव्यं नावशिष्यत इत्यनुमानं न प्रमाणं स्यात्। [4]सत्यम्। स्यादेतत् यद्यनधिगतार्थगन्तृ भवेत्प्रमाणलक्षणम्, अनुभूतिस्तु प्रमाणमित्युक्तम्। धूमाच्चाग्निज्ञानमनुभवाकारं जायते धारावाहिकवत्। नात्र स्मृतिप्रमोषकल्पना, प्रत्युत्पन्नकारणसम्भवात्। अनुभवकारणासम्भवेन हि शुक्तिकारजतादिषु स्मृतिप्रमोषः प्रतीत्यनारूढोऽप्याश्रीयते[5]। इह तु सम्बन्धनियमस्मरणमेकदेशदर्शनं चानुभवकारणमस्तीति यथाप्रतीति अनुभूतिरूपतैवाश्रयितुमुचितेति युक्तमेवानुमानस्य प्रामाण्यम्।

अनुमानस्य प्रत्यभिज्ञारूपत्वनिरासः।

केचित्तु देशकालातिरेकेण प्रत्यभिज्ञानरूपमनुमानमाहुः। तदपि निरस्तम्, लिङ्गस्य लैङ्गिकसम्बन्धनियमः सम्बन्धनियमावधारणसमय एव समवधृतः, अन्यथा सम्बन्धनियम एवानवगतः स्यात्।

एतेन—

---

धारावाहिकन्यायेन प्रामाण्यमनुमानस्य। अतः प्राथमिकं प्रत्यक्षमेव वह्निधूमयोस्संबन्धनियमेप्रमाणम्, निरूपाधिकत्वनिश्चयश्च पश्चात्तस्य भूयोदर्शनेन, यत्नेनान्विष्यमाणेपि उपाधेरदर्शनात्। अतो भूयोदर्शनमर्थवदिति गुरुमतनिगर्व इत्यवधेयम्।

[1] स्वमतमाह, अत्रत्योः विषयो ऋजुविमलायां विस्तरशो द्रष्टव्यः [पृ. ९६]।

[2] आद्रियन्ते इति मु. पु. पा.।

[3] भाष्योक्तानुमानलक्षणघटकासन्निकृष्टपदप्रयोजनं वक्तुकामः शङ्कते नन्वित्यादिना।

[4] तद्वत्तया तदभाववत्तया वा निश्चितेऽर्थेऽनुमानव्यावृत्त्यर्थमसन्निकृष्टमिति विशेषणदानमिति कौमारिलव्याख्यानम्।

असन्निकृष्टवाचात्र द्वयमत्र जिहासितम्।

ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा। [श्लो. वा. अ. श्लो. ५४] इति।

प्राभाकरास्तु तदनिच्छन्तः पर्वतो वह्निमानित्यत्र स्मरणाभिमाननिरासार्थमिति वर्णयन्ति। तमेवार्थं ऋजुविमलादौ प्रपञ्चितं प्रमृष्टतत्ताकस्थलपर्युदासेन प्रत्युत्पन्नकारणजन्यत्वेनानुमानस्य प्रामाण्यप्रकारमुपपादयति—सत्यमित्यादिना प्रामाण्यमित्यन्तेन।

[5] आश्रित इति मु. पु. पा.।

"[1]विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता"। इति। एतदपि प्रत्युक्तम्, धूमवत्त्वाद्युपलक्षितानां देशविशेषाणां सम्बन्धनियमावधारणात्। यो यो धूमवान्, स सोऽग्निमानिति।

"*यः कश्चिद्येन यस्येह सम्बन्धो निरुपाधिकः।

प्रत्यक्षादिप्रमासिद्धः स तस्य गमको मतः"॥ इति सङ्ग्रहश्लोकः।

[2]ज्ञातसम्बन्धनियमत्वश्चैकदेशस्य स्मरणेनोपकारकम्। लैङ्गिकैकदेशसम्बन्धनियमं स्मरतः पुरुषस्य नियतसम्बन्धस्यैकदेशस्य दर्शनादेकदेशान्तरे या बुद्धिः, साऽनुमानम्। एकदेशश्चाश्रित उच्यते, एकदेशान्तर इत्यत्राप्येकदेशशब्द आश्रितवचन एव। न चाश्रितस्याश्रयमन्तरेण सम्भवोऽस्तीत्याश्रयापेक्षायामेकदेशाभ्यां न भिन्नस्याश्रयस्याक्षेपः, एकाक्षेपेणैवोपपत्तेः। अपि च "अन्तरशब्दोऽपि समानाश्रय एव समर्थितो भवति। अतश्चैकाश्रयाश्रितयोरेव गम्यगमकतोक्ता। [3]उदाहरणे महानसादौ ज्ञाताग्नि-

---

[1] सामान्यतः अनुमीयते, अथवा विशेषतः इति द्वेधा विकल्प्य, पक्षद्वयेऽपि अनुगमाभावसिद्धसाधनतयोः दोषयोः सम्भवादनुमानप्रामाण्यम अभ्युपगन्तुं न शक्यते इति वदन्तश्चार्वाका अनुमानस्य प्रामाण्यं निराकुर्वन्ति। तत्प्रतिपादवचनमुदाहरति विशेष, इति। अस्योत्तरार्धम्—"अनुमाभङ्गपङ्केऽस्मिन्निमग्ना वादिदन्तिनः" इति। तत् पूर्वोक्तेन हेतुना निराकृत मित्यर्थः।

[2] अनुमानपरिच्छेदादौ अनुमानलक्षणपरं श्लोकमवयवशो व्याचष्टे-ज्ञातेति,।

[3] उदाहरणन्तु मु. पु. पा,

* अत्रेदं बोध्यम्—प्रमाणविचारपारदृश्वानः सम्बन्धो व्याप्तिरिति वदन्तः सम्बन्धं अनौपाधिकत्वेन विशिषन्ति, तत्र उपाधिशून्यता अन्वयव्यतिरेकाभ्यां ज्ञायते। यस्य हि यत्र उपाधित्वं सम्भाव्यते, तदपगमेऽपि चेदुपलभ्यते, तर्हि ज्ञायते नायं तदुपाधिक इति। एतच्च असकृद्दर्शनप्रभावात्। अतः यस्य येन सह निरुपाधिकः सम्बन्धोऽवगम्यते, सः तस्यानुमापको भवतीत्यर्थः। स च प्रत्यक्षादिप्रमाणसिद्ध, इति। सङ्ग्रहश्लोकोऽयं ग्रन्थकारस्य इति मन्तव्यम्, न तु ग्रन्थान्तरादुद्धृत इति। एवमेव प्राचां ग्रन्थकाराणां शैली दृश्यते। इति।

निरुपाधिकसम्बन्धो व्याप्तिरिति प्राभाकरमीमांसका मन्यन्ते। तत्र सम्बन्धे निरुपाधिकत्वञ्चोपाधिशून्यत्वम्। तत्रोपाधेः किं लक्षणमिति जिज्ञासायां साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधेर्लक्षणमाचक्षते आन्वीक्षिकीविचक्षणाः। अस्य लक्षणस्य सङ्ग्राहकं प्राचीनपद्यमुद्धरति हर्षमिश्रो व्याप्तिलक्षणखण्डनावसरे यथा—

एकसाध्याविनाभावे मिथस्सम्बन्धशून्ययोः॥

साध्याभावाविनाभावी स उपाधिर्यदत्ययः॥ इति।

एतत्पद्यं चित्सुखमुनिरपि द्वितीयपरिच्छेदे भेदखण्डनप्रसङ्ग उपन्यस्यति। खण्डन-

सम्बन्धनियमस्य धूमस्य पर्वतोपरिवर्तिनो दर्शनात्पर्वतनितम्बगतेऽग्नौ ज्ञानम् । ननु पर्वतनितम्बोपरिदेशयोर्भेदान्नैकाश्रयाश्रयित्वं धूमाग्न्योरिति, कथमनुमानम् ? [1]तस्माद्यदाश्रितोऽग्निसंयोगस्साध्यते, तदाश्रितश्च धूमत्वं हेतुरिति युक्तम् । उच्यते, न तावदेवं सर्वस्य लोकस्य प्रतीतिः, किन्तु पर्वतादिगतमप्यग्निं लोकोऽनुमिनोति । न चाश्रयभेदः, एकत्वात्पर्वतावयविनः, तदाश्रितत्वाच्च धूमाग्न्योः । नितम्बोपरिभागौ तु तस्यावयवाविति न कश्चिद्दोषः ।

[2]अत्र च "ज्ञातसम्बन्धनियमस्ये"त्यनेन ज्ञातशब्देनासाधारणस्याहेतुत्वमुक्तम् । यथा-पृथिवी रसवती गन्धवत्त्वात् । अस्त्येव हि गन्धाख्यस्यैकदेशस्य रसाख्येनैकदे[3]शान्तरेणैकार्थसमवायलक्षणः सम्बन्धो नियतः । स तु सम्बन्धनियमो न प्रतीतपूर्वः । पृथिवीव्यतिरेकेणान्यत्र गन्धस्यावर्तमानत्वात् । पृथिव्याश्च जिज्ञासितधर्मत्वात् ।

---

खण्डखाद्यव्याख्याता शङ्करमिश्रः कुमारिलभट्टवार्तिकमिति कथयति । नयनप्रसादिनीकारस्त्विदमुदयनाचार्यस्येति वदति । दञ्च श्लोकवार्तिकेऽदर्शनाद्बृहट्टीकास्थमिति निश्चिनुमो वयम् । स च समव्याप्तयोरेवेत्याचार्याः केचन मन्यन्ते । उद्योतकराचार्यस्तु विषमव्याप्तमप्युपाधिमङ्गीकरोति । अत एव-समवायः समवेतः सम्बन त्वात्, संयोगवदिति प्रयोगे सम्बन्धत्वे सति समवेतत्वे कार्यत्वमुपाधिरित्युदाहारि तेन । अतोउभयविधोऽप्युपाधिर्विदुषामभिमतः । श्लोकस्यायमर्थः—यदत्ययः—यदभावः, साध्याभावाविनाभावी-साध्याभावेन व्याप्तः, साध्याभावव्याप्त्यभावप्रतियो ी—साध्यव्यापक इति यावत् । मिथस्सम्बन्धशून्ययोरित्यनेन साधनाव्याकत्वमुक्तम् । स पुनस्त्रिविधः—शुद्धसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकश्चेति । आद्यस्योदाहरणम्—धूमवान्वन्हेरित्यत्रार्द्रेन्धनवत्त्वम् । द्वितीयस्योदाहरणम्—यथा—वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र, द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वम् । आत्मा प्रत्यक्षः जन्यद्रव्यत्वादित्यत्र प्रत्यक्षपरिमाणवत्त्वम् । ते च पुनर्द्विविधाः—निश्चिताः सन्दिग्धाश्च । तत्राद्यः—साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितो व्यभिचारनिश्चयाधायकत्वेन निश्चितोपाधिर्वन्हिमत्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्नित्वम् । यत्र साधनाव्यापकत्वसंशयः, साध्यव्यापकत्वसंशयः, तदुभयसंशयो वा, तत्र हेतुव्यभिचारसंशायकत्वेन सन्दिग्धोपाधिः । यथा—सश्श्यामो मित्रातनयत्वादिति श्यामत्वे साध्ये शाकाद्याहारपरिणतिजत्वम् । ईदृशोपाधिविरहो भूयोदर्शनगम्य इति ग्रन्थकारो मूल एवाह । निरुक्तोपाधिविरहितो हेतुर्गमकत्वेनेष्ट इत्याशयेनाह-निरुपाधिरिति ।

[1] धूमाश्रित इति मु. पु. पा.

[2] अनुमानलक्षणघटकविशेषणानां प्रयोजनं विवक्षुरादौ ज्ञातसम्बन्धनियमस्येति विशेषणस्य प्रयोजनं दर्शयति—अत्रेत्यादिना ।

[3] एकदेशेनेति. मु. पु. पा. ।

असाधारणस्य संशयहेतुत्वनिरासः।

स चायमसाधारणः संशयहेतुरिति [1]केचित्। तदयुक्तम्, यो हि येन सह सम्बद्धो दृष्टः, स तत्र स्मृतिमुत्पादयितुमलम्, यश्चोभयधर्मसम्बद्धः प्रतीतः, उभयोः स्मृतिं जनयन्नेकस्योभयात्मकत्वविरोधात्सन्देहमापादयति। यस्य तु केनचिदपि न सम्बन्धोऽवधारितः, स क्वचिदपि स्मृतिं जनयितुं समर्थ इति कथं संशयं प्रसुवीत? तस्माद्धर्मिस्वरूपवदसाधारणोऽपि न संशयहेतुः।

"सम्बन्धग्रहणेन" च बाधकस्य हेत्वाभासत्वमुक्तम्। यथा—शब्दः नित्यः कृतकत्वादिति। कृतकत्वस्य नित्यत्वेन सम्बन्ध एव नास्ति, किन्त्वनित्यत्वेनैव सहाऽयं प्रतीतसम्बन्धनियमः, स्वसामर्थ्येनानित्यत्वमुपस्थापयन्नित्यत्वं बाधत इति सिषाधयिषितधर्मबाधाद्बाधको हेत्वाभासः।

"नियमग्रहणेन" हि साधारणस्य निरासः। यथा—शब्दः नित्यः प्रमेयत्वादिति। प्रमेयत्वस्य हि नित्यत्वेन सम्बन्धोऽस्ति, ज्ञातश्च, किन्त्वनियतः, अनित्येष्वपि प्रमेयत्वदर्शनात्। संशयहेतुश्चायं नित्यत्वानित्यत्वोभयसम्बन्धावगमात्। उभयत्र स्मृतिजनकत्वादेकस्य च धर्मिणो नित्यानित्यत्वविरोधात्। स चायमनैकान्तिक इति गीयते।

तथा"एकदेशदर्शनादि"त्यनेकदेशभूतस्य हेत्वाभासत्वमुक्तम्। यथा—व्योम प्रत्यक्षं रूपवत्त्वादिति। रूपवत्त्वं व्योमैकदेशत्वेनासिद्धम्। उन्मीलिते हि चक्षुषि गृहोदरादिषु[2] यद्रूपमुपलभ्यते, तत्तैजसमौदकं वेत्युक्तं तच्चालोके। तथा यस्य पक्षे प्रत्येकदेशत्वमनेकदेशत्वञ्च, तस्याप्यत एव निरासः। [3]यथा—वेदः कृतकः उपाख्यानात्मकत्वादिति, विधिभागन्तूपाख्यानात्मकता न व्याप्नोति। ननु धूमोऽपि न हेतुः स्यात्। कृत्स्नपर्वतव्यापकत्वाभावात्।

---

[1] वार्तिककारेण—

ज्ञातसम्बन्धवचनात्त्रयस्संशयहेतवः [ श्लो. वा. अनु. श्लो. सं. ८४. ] इति वार्तिकेऽनैकान्तिकस्य साधरणासाधारणविरुद्धाव्यभिचारिभेदेन त्रैविध्यं, संशयहेतुत्वञ्चोक्तम्। तस्य संशयहेतुत्वं दूषयितुं तन्मतमनुवदति—केचिदिति।

असाधरणस्य संशयहेतुत्वं वार्तिकाभिमतमत्र निराक्रियते। पार्थसारथिना न्यायरत्नाकरेऽस्य ग्रन्थस्य शाक्याभिमतसंशयहेतुत्वानुवादतात्पर्यमित्यभिधाय, असाधारणस्य संशयहेतुत्वं निराकारि। अस्य विस्तरस्त्रैव द्रष्टव्य इति बोध्यम् [ न्या. र. पृ. ३७५ ]

[2] गृहोदारादिषु. इति मु. पु. पा.

मैवम् । तत्रावयवी पर्वत एकः, तस्यैकदेश एव धूमः । इह तु न वेदावयव्येक इति युक्तं भागासिद्धत्वम् ।

"दर्शनग्रहणेन" स्वरूपासिद्धं हेत्वाभासं दर्शयति । यथा,—बुद्धो धर्माधर्मौ प्रत्यक्षमीक्षते सर्वज्ञत्वादिति । न हि बुद्धस्य सर्वज्ञत्वं केनचिदपि प्रमाणेनावगन्तुं शक्यत इत्युक्तम् । तथा विद्यमानस्याप्येकदेशस्य यावद्दर्शनं नास्ति, तावदहेतुत्वम् । यथा—अन्धकारे धूमस्य ।

"एकदेशान्तरे" इति [1]स्वतन्त्रस्याग्नेर्गम्यत्वं निराकरोति । "अन्तरग्रहणेन" च भिन्नाधारयोर्गम्यगमकभावो निराकृतः ।

ननु चन्द्रोदयात्समुद्रवृद्ध्यनुमाने,कृत्तिकोदयाच्च [2]रोहिणीसन्निधानानुमाने कथं समानाश्रयत्वम् ? अत्रोच्यते—एककालवर्तित्वं चन्द्रोदयसमुद्रवृद्ध्योः सम्बन्धः, तत्र काल एवैक आश्रय इति । तथा कृत्तिकोदयरोहिण्यासत्त्योरप्येकाहोरात्रवर्तित्वमेव सम्बन्धः, तेन कृत्तिकोदयादहोरात्र एवासन्नरोहिण्युदयोऽनुमीयते । एतेन मध्यगतनक्षत्रदर्शनादष्टमनक्षत्रास्तमयोदयानुमानमुक्तम् । अधोनदीपूराच्चोपरिवर्षणानुमानमप्येवं वर्णयितव्यम् । एका हि नदी तत्राप्याश्रय इति ।

पित्रोस्तु[3] ब्राह्मणतया यत् पुत्रस्य ब्राह्मण्यज्ञानम्, तदप्यनुमानमिति केचिदिच्छन्ति[4], तत् प्राभाकरा नानुमन्यन्ते । ब्राह्मणभूताभ्यां[5] पितृभ्यामुत्पत्तिरेव ब्राह्मणता, नान्या । तेन ब्राह्मणशब्दवाच्यस्त्रीपुंसप्रसूतत्वादन्यद् ब्राह्मण्यं नास्तीति [6]नास्त्यनुमानस्यावकाशः ।

प्रत्यक्षबाधोदाहरणम् ।

"अबाधिते" इत्यनेन प्रमाणान्तरबाधिते विषये नानुमानमुत्पद्यत इति

---

[1] अग्न्यादेरिति मु. पु. पा. । [2] कल्पत इति मु. पु. पा. ।

[3] ब्राह्मण्यानुमानमिति मु. पु. पा. ।

[4] वार्तिककारः कुमारिलभट्टः मातापित्रोर्ब्राह्मणत्वज्ञानेन पुत्रस्यापि ब्राह्मण्यं प्रत्यक्षेण गृह्यत इति शास्त्रदृष्टविरोधा[ मी. द. १–२–१–सू० २ ]दिति सूत्रवार्तिके प्रत्यपीपदत्, तदेव दूषयितुमनुवदति पित्रोस्त्वित्यादिना केचिदिच्छन्तीत्यन्तेन ।

[5] प्राभाकरा ब्राह्मणत्वं सन्ततिप्रभवत्वरूपा उपाधिः, न तु जातिरिति जातिनिर्णये सोपपत्तिकं वर्णयन्तीत्युक्तम् । तदेव समाधानं मनसि निधायाह—तदिति ।

[6] नास्त्यनुमानानुमेयभाव इति मु. पु. पा. ।

दर्शयति । [1]यथा—[2]वन्हिरनुष्णो द्रव्यत्वादिति । ननु द्रव्यत्वस्यानुष्णत्वेन सह [3]सम्बन्धनियम एव नास्ति, [4]वह्नावसत्यनुष्णत्वे द्रव्यत्वस्य दर्शनात् तेन सम्बन्धनियमाभावादनुमानानुदयः, न [5]पुनर्बाधितविषयत्वादिति । उच्यते, यदि बाधितविषयेऽप्यनुमानमुत्पद्यते, तदा द्रव्यत्वस्य अनुष्णत्वेन सह सम्बन्धनियमाभाव एव न भवेत् । वह्नेरप्यनुमानेनानुष्णत्वस्यासिद्धत्वात् । सर्वत्र ह्यनुमानेऽनुमित्सितविषयनिरपेक्षमेव [6]सम्बन्धनियमावधारणमुपयोगि । द्रव्यत्वस्य च वह्निनिरपेक्षं सर्वत्राऽनुष्णत्वेन सह सम्बन्धनियमावधारणं जातमिति, तद्बलेनानुमानोदये पाश्चात्योऽपि सम्बन्धनियमभङ्गो नात्मानं लभते । तस्माद्बाधितविषयत्वादेवानुमानानुदयात्सम्बन्धनियमोऽपि भज्यत इत्यबाधितविषयत्वमप्यनुमानस्य कारणम् । अतो द्रव्यत्वं वह्नौ प्रत्यक्षबाधितविषयं नानुमानमुत्पादयति ।

अनुमानबाधोदाहरणम् ।

शब्दः श्रोत्रग्राह्यो न भवति गुणत्वादित्यनुमानस्य विषयोऽनुमानेन बाधितः । यद्विषया हि प्रतीतिर्यत्कारणिका, तदिन्द्रियं तस्य ग्राहकमुच्यते । शब्दविषयायाश्च प्रतीतेरन्वयव्यतिरेकाभ्यां श्रोत्रकारणकत्वमवगम्यते । अनुपहते श्रोत्रे शब्दप्रतीतिरुपजायते, उपहते च नोपजायत इति श्रोत्रान्वयव्यतिरेकानुकारिणी शब्दप्रतीतिः श्रोत्रकारणिका; तदन्वयव्यतिरेकानुविधायित्वं हि [7]तत्कारणत्वेन नियतसम्बन्धम् । अतः शब्दप्रतीतिः श्रोत्रकारणिका श्रोत्रान्वयव्यतिरेकानुविधायित्वादित्यनुमानेन श्रोत्रग्राह्यत्वमवधृतम्,

---

[1] अत्रेदं बोध्यम्—शीघ्रप्रवृत्तेन प्रत्यक्षेण मन्थरप्रवृत्तमनुमानं बाध्यत इति, न केवलमनुमानविषयमिदम्, अपि तु षण्णां प्रत्यक्षादीनां मध्ये येनैव शीघ्रप्रवृत्तिना प्रमाणेन प्रथममर्थोऽवधार्यते, तेनैवोत्तरकालं मन्थरप्रवृत्तस्योत्पत्तिनिरोधलक्षणो बाधो भवति । न च विकल्पस्संभवति, नियतैकस्वभावत्वाद्वस्तुनः, न वा समुच्चयः विरोधात्, अतः पारिशेष्याद्बाध इति । तदेव क्रमेण दर्शयति यथेत्यादिना ।

[2] अनुमानस्य विषयः प्रत्यक्षानुमानोपमानशास्त्रार्थापत्तिभिर्बाधितो भवति । तेनानुमितिर्न भवतीति विवक्षुरादौ प्रत्यक्षबाधितविषयमुदाहरति—वह्निरिति ।

[3] सम्बन्ध एवेति मु. पु. पा. । [4] द्रव्यत्वे सति अनुष्णत्वादिति क्वचित्पाठो दृश्यते ।

[5] बाधितत्वादिति मु. पु. पा. । [6] सम्बन्धावधारणमिति मु. पु. प्रा. ।

[7] तत्कारणत्वे इति सप्तम्यन्तः पा. मु. पु. ।

दिङ्नागमतन्निरासौ ।

तद् यो हि[1] वादी नास्तीत्याह, तस्यानुमानमनुमानेन बाध्यते। ननु सम्बन्धनियमग्रहणतत्स्मरणैकदेशदर्शनसापेक्षस्यानुमानस्यार्थान्तरावगमनिरपेक्षोत्पत्तिकं प्रत्यक्षं शीघ्रजन्मतयाऽवश्यम्भावि विषयापहारादुत्पत्तिं [2]प्रतिबध्नातु, अनुमानस्यानुमानेन कथमुत्पत्तिप्रतिबन्ध इति वक्तव्यम्। उच्यते, येन नाम श्रोत्रग्राह्यत्वं शब्दस्य निराकर्तव्यम्, तेनावश्यं ग्राह्यग्राहकभावसम्बन्धः प्रथममवगन्तव्यः, अन्यथा निषेधानवकल्पनात्। अवगतमेव वस्तु विषयान्तरे प्रतिषिध्यते, न तु सर्वथाऽनवगतम्। तेनास्य [3]ग्राह्यग्राहकभावसम्बन्धमभ्युपगच्छताङ्गीकृता तावदन्वयव्यतिरेकानुविधायिलिङ्गकस्यानुमानस्य प्रवृत्तिरिति, शीघ्रभाव्यनुमानमनुमानान्तरस्य विषयमपहरद्बाधकतां प्रतिपद्यते। यथाऽनुमानपूर्वकादनुमानात्प्रत्यक्षपूर्वकमनुमानं शीघ्रभावि, तथा प्रसिद्धाङ्गकमप्यनुमानं प्रसाध्याङ्गकादनुमानादाशुतरभावीति वेदितव्यम्।

शास्त्रेणानुमानबाधोदाहरणम्।

शास्त्रेण चानुमानस्य विषयापहारः। यथा—नास्ति [4]कर्मफलसम्बन्ध इति। अवश्यम्भाविता च प्रत्यक्षवदागमस्याप्यनुसरणीया।

उपमानबाधस्तु यथा—गौर्गवयसदृश इति। अर्थापत्त्या चानुमानस्य विषयापहारः। यथा—जीवन्नेव देवदत्तो वेश्मन्यविद्यमानो बहिरपि नास्तीति।

असाधितविषयत्वस्यानुमितिहेतुत्वशङ्कानिरासौ।

केचित्तु अबाधितविषयत्वमिवासाधितविषयत्वमप्यनुमानकारणमित्याहुः। प्रमाणान्तरसिद्धेऽपि विषये नानुमानं प्रवर्तते, यथा प्रत्यक्षावगते वह्नावौष्ण्येन न तदनुमानम्। तत् प्राभाकरमतानुसारिणो नानुमन्यन्ते। सिद्धविषयमेव सर्वमेवानुमानमित्युक्तम्। यथा सम्बन्धनियमावधारणं-

---

[1] दिङ्नागः शब्दः अश्रावणः गुणत्वात् इतिप्रत्यक्षविरोधस्योदाहरणमिदमिति वर्णयामास। इदमनुपपन्नम्, यतः श्रोत्रग्राह्यत्वापरपर्यायं श्रावणत्वं न श्रोत्रेणावसीयते, अपि तु बधिरादिगतान्वयव्यतिरेकलिङ्गावसेयमित्यमानबाधस्योदाहरणम्, न तु प्रत्यक्षबाधस्येत्याशयेनाह—यो हीति। [2] प्रतिबध्नाति, इति. मु. पु. पा. [3] अन्यत्र इति मु. पु. पा.

[4] अत्र यागादयस्स्वर्गसाधनं न भवन्ति क्रियात्वात् गमनवदित्यनुमानं बोध्यम्।

सिद्धविषयम्, तथा प्रत्यक्षादिसिद्धविषयमपि किमिति [1]नोपपद्यते। प्रमातारस्तु निवृत्तप्रमित्साः सम्बन्धनियमानुसन्धानं प्रति नाद्रियन्त इति, नानुमानमुदेति। यदि चानुसंहितसम्बन्धनियमैकदेशदर्शनेऽपि विषयसिद्धौ नानुमानमुत्पद्यते, ततो भवेदेवासाधितविषयत्वमनुमानकारणम्, न चैवमस्ति।

स्वमतेनानुमानकारणपरिगणनम्।

तस्मात्पूर्णमिदमनुमानकारणरिगणनम्—नियतसम्बन्धैकदेशदर्शनम्, सम्बन्धनियमस्मरणम् [2]अबाधितविषयत्वञ्चेति[3]।

यद्यबाधितविषयत्वमप्यनुमानकारणम्, कथं तर्हि [4]ज्वालाभेदग्राहिणोऽनुमानस्योदयः। प्रत्यक्षेण हि सैवेयं ज्वालेत्यभेदे प्रतीतेऽपि पश्चात् गृहोदरवर्तिप्रभामण्डलदर्शनाद्[5] भेदोऽनुमीयते। प्रभावितति र्हि तेजोवयवविशरणमन्तरेण नोपपद्यते। अवयवविशरणे चावयविनो नियतो विनाशः। दृष्टो हि तन्तुविनाशे[6] पटविनाशः। तेन विनष्टायां पूर्वज्वालायां, दृश्यमाना ज्वाला ततो भिन्नाऽनुमीयते। यथा पटे विनष्टे, दृश्यमानः पटस्ततो[7] भिद्यते। [8]पूर्वज्वाला विनष्टा विशीर्णावयवत्वात् पटवत्। दृश्यमाना ज्वाला विनष्टाया[9] भिन्ना, तस्यां विनष्टायामप्युपलभ्यमानत्वात्, पटविनाशे पटान्तरवदिति।

उच्यते—बाधितविषयत्वं यत्र निश्चितं, तत्रानुमानं नोत्पद्यते, यत्र तु विषयबाधा सन्दिग्धा, तत्रानुमानमुत्पद्यत एव। इह तु सैवेयं ज्वालेतिप्रतीतौ जातायामपि शङ्काऽवतरत्येव। सादृश्येन[10] शुक्तिरजतयोरिव भेदानवसाथादेवंविधा प्रतीतिर्भेदेऽपि दृष्टा। तेन किं भेदेऽपि सादृश्येन भेदाग्रहणादेवंविधा प्रतीतिरुताऽभेदे[11] वेति शङ्कोदयाद्बाधितविषयत्वं सन्दिग्धमिति

---

[1] नोत्पद्यत इति मु. पु. पा.।

[2] अत्रेदं बोध्यम्—ज्ञातसंबन्धस्येत्यादिना हेत्वाभासव्यावृत्तिपूर्वकमनुमानस्य लक्षणमभ्यधायि, न त्वनुमानोत्पत्तिसामग्री परिगणिता, अत्रानुमानसामग्री परिगणितेति ध्येयम्।

[3] अबाधकञ्चेति मु. पु. पा.।

[4] भेदाग्राहिण इति मु. पु. पा.।

[5] दर्शनीद्भेदः इति मु. पु. पा.।

[6] तन्तुविभागादिति मु. पु. पा.।

[7] तन्तुरिति मु. पु. पा.।

[8] पूर्वस्य विनाशे, उत्तरस्य ततो भेदे च क्रमेणानुमानमुपन्यस्यति-पूर्वेति।

[9] ततो भिन्ना इति. ख. पु. पा.।

[10] शुक्तिरजतयोर्भेदेति मु. पु. पा.।

[11] भेदेनैवेति मु. पु. पा.।

[1]नानुमानोत्पत्तिप्रतिबन्धः। अत एव समानवर्तिकावर्तिनीषु बह्वीष्वपि ज्वालासु ज्वालात्वं सामान्यं नाश्रीयते, भेदाग्रहेणापि प्रतीतेरुपपन्नत्वात्। वह्नावुष्णत्वप्रतीतिरन्यथा सम्भावयितुमशक्येति, निश्चितं बाधितविषयत्वम्। अतस्तत्र युक्त [2]एवानुमानोदयविरोधः।

असत्प्रतिपक्षस्यानुमितिहेतुत्वशङ्कानिरासौ।

[3]अन्ये पुनरसत्प्रतिपक्षत्वमप्यनुमानकारणमाहुः[4]। यथोदितलक्षणो हि [5]हेतुर्यथोदितलक्षणहेत्वन्तरप्रतिबद्धो नानुमानं जनयति, किन्तु संशयम्। यथा-अप्रत्यक्षो वायुर्द्रव्यत्वे सत्यरूपत्वादित्यनेन प्रतिपक्षेण हेत्वन्तरेण प्रतिबद्धः प्रत्यक्षो वायुर्महत्त्वे सति स्पर्शवत्त्वादित्ययं हेतुर्वायौ प्रत्यक्षत्वा-प्रत्यक्षत्वसंशयमापादयति, न त्वनुमानं जनयितुमलमिति।

[6]तदनुपपन्नम्; यथोदितलक्षणयोर्हेत्वोरेकत्र समवायाभावात्, भावे वा वस्तुनो [7]नित्यं संशयितधर्मत्वापत्तेः। तथाहि—अरूपत्वादियं हेतुः स्पर्शनेन्द्रियान्वयव्यतिरेकानुविधायितया वायुप्रतीतेरनुमानबाधितविषयः। इदञ्चानुमानं यथा शीघ्रभावि, तथोदितमेव[8] प्राक्। प्रत्यक्षत्वं हि निषेधता क्वचिदवश्यं प्रत्यक्षत्वमङ्गीकरणीयम्, इन्द्रियान्वयव्यतिरेकानुविधायि प्रत्यक्ष-मिति चाभ्युपेयम्। ननु न स्पर्शनेन वायुः प्रतीयते, किन्तु स्पर्शमात्रमेव। नेत्युच्यते; स्पर्शान्तरप्रत्ययेऽपि द्रव्यप्रत्यभिज्ञानात्। यदि स्पर्शमात्रमेव स्पार्शनं भवेत्, तदा स्पर्शभेदे किं प्रत्यभिज्ञायेत? ननु न वायोः स्पर्शभेदः सम्भवति। अनुष्णाशीतैकस्पर्श एव वायुः। तस्य तु तोयसम्पर्कात् तोयगतः शीतस्पर्शः प्रतिभाति, एवं तेजःसंयोगादुष्णस्पर्श इति। उच्चते—सत्यं

---

[1] विरोध इति ख. पु. पा।  [2] अनुमानविरोध इति मु. पु. पा.।

[3] भाट्टमीमांसकाः—साध्याभावसाधकहेत्वन्तरवत्पक्षस्सत्प्रतिपक्ष इति तार्किकैर्व्यपदिश्यमानं सप्रतिसाधनमाचक्षाणस्तस्य संशयहेतुत्वं स्वीकुर्वन्ति। तन्मतमपाकरिष्णुस्तदनुवदति—अन्य इति।

[4] इच्छन्ति इति ख. पु. पा.।  [5] यथोदितहेत्वन्तरेति मु. पु. पा.।

[6] अनूदितं मतं निराकरोति। अस्य दूषणभूषणे शास्त्रदीपिकायास्तर्कचरणे द्रष्टव्ये।

[7] नित्यसंशयितेति मु. पु. पा.।

[8] अनुमानलक्षणप्रतिपादकश्लोकस्थस्याबाधित इति विशेषणस्य सार्थक्यकथनावसरे "यथा—अनुमानपूर्वकानुमानात् प्रत्यक्षपूर्वकमनुमानं प्रथमभावि" इत्यादिग्रन्थे[पृ० २११]नेति शेषः।

वायोरनुष्णाशीत एव स्पर्शः, तोयतेजोगतौ च शीतोष्णस्पर्शौ, तथापि ताभ्यामभिभूतेऽनुष्णाशीतस्पर्शे शीतोष्णस्पर्शावपि प्रतीयेते, तदन्वयिनी प्रतिपत्तिश्च स्पर्शमात्रप्रत्यये नोपपद्यत इति वदामः। तस्मादनुमानबाधितविषयत्वादरूपत्वादित्यप्रत्यक्षत्वं नोपस्थापयति, स्पर्शवत्त्वादित्येतदेव निष्प्रतिपक्षमनुमानं जनयति। तस्माद्यथोदितलक्षणस्सर्व एव सत्प्रतिपक्ष इति नेदं पृथग्लक्षणम्।

अनुमानस्य विषयभेदनिरूपणम्।

"प्रमेयमनुमानस्य दृष्टादृष्टस्वलक्षणम्" ॥३॥ इति

[1]द्विविधमनुमानस्य प्रमेयम्, किञ्चिद्दृष्टस्वलक्षणम्, यथा [2]वह्न्यादि। किञ्चिच्चादृष्टस्वलक्षणम्, यथा—[3]कर्मादि। कथं पुनर्यस्य स्वलक्षणं न प्रतीतम्, तदनुमातुं शक्यते। येन सह हेतोः [4]सम्बन्धनियमः प्रतिपन्नः, स तस्माद्धेतोरनुमातुं शक्यते। न चादृष्टस्वलक्षणेन सह सम्बन्धनियमावधारणं कस्यचित्सम्भवतीति, नादृष्टस्वलक्षणमनुमातुं शक्यते। उच्यते—सामान्यतोऽपि सम्बन्धनियमावगमो भवत्येवानुमानोत्पत्तौ निमित्तम्। यथा—यत् कादाचित्कं, तदागन्तुकाज्जायमानं दृष्टम्। यथा—तन्तुसंयोगेभ्यः पटः। कादाचित्कौ च द्रव्यस्य संयोगविभागाविति, ताभ्यामागन्तुकं किञ्चिद् वस्तु प्रतीयते।

न च द्रव्यमेवागन्तुकम्, तस्य प्रत्यभिज्ञानेन स्थिरत्वावगमात्। न च शक्यं वक्तुं भिन्नान्येव द्रव्याण्यत्यन्तसादृश्येनाप्रतीयमानभेदानि तत्प्रत्ययविषयाणीव भासन्ते ज्वालावदिति, द्रव्यभेदे प्रमाणाभावात्। ज्वालादिभेदे प्रमाणमुपन्यस्तमेव। संयोगविभागादिकार्योत्पत्तिस्तु यथाप्रतीते द्रव्यस्थैर्ये सत्यप्यागन्तुककर्माभ्युपगमेनाप्युपपद्यत इति, न द्रव्यभेदे प्रमाणमस्ति।

---

[1] "तत्तु द्विविधं प्रत्यक्षतोदृष्टसंबन्धं सामान्यतोदृष्टसंबन्धञ्चे"ति भाष्यसन्दर्भः कौमारिलैः विशेषविषयपरतया, सामान्यविषयपरतया च व्याख्यातः। प्रभाकरमिश्रैः—दृष्टस्वलक्षणादृष्टस्वलक्षणपरतया चायं ग्रन्थो योजितः। सामान्यतः—सामान्यरूपेण अनवधृतस्वलक्षणं नैव किञ्चिदनुमानेन गृह्यते इति ये वदन्ति, तन्मतमपाकृत्यादृष्टस्वलक्षणविषयमनुमानमस्ति क्रियायां शक्तौ च। तदेव दर्शयति—द्विविधमिति।

[2] वह्न्यादिकमिति. मु. पु. पा.।

[3] कर्मादिकमिति. मु. पु. पा.।

[4] सम्बन्ध इति मु. पु. पा.।

मण्डनाचार्यमतस्यानुवादः ।

[१]अत्र कश्चिदाह—न कर्मादृष्टस्वलक्षणम्, प्रत्यक्षत्वात्कर्मणः । तदाह भगवान्काश्यपः—"संख्याः परिमाणानि पृथकत्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि" (वै. द. ४-१ ११) इति । तथाहि—या गच्छत्ययमिति प्रतीतिः, सा इन्द्रियान्वयव्यतिरेकानुकारिणी, तदेव कर्मणः प्रत्यक्षत्वे प्रमाणम् । न च वाच्यं कर्मफलभूतसंयोगविभागविशेषबलेनैवेयं प्रतीतिरिति । तन्निबन्धनत्वे स्थाणावप्येकश्येनवियुक्ते श्येनान्तरसंयुक्ते चापत्तेः, चलित्वा स्थिते न चलतीति वर्तमानावभासप्रसक्तेः,

---

[१] कर्मतत्त्वं प्रत्यक्षमिति भाट्टप्रस्थानमङ्गीकरोति । प्राभाकरप्रस्थानन्तु तत्खण्डयदनुमेयत्वं तस्य स्थिरीकरोति । मण्डनमिश्रो भावनाविवेके कर्मणोऽनुमेयत्वं निराकृत्य प्रत्यक्षत्वं निरदीधरत् । तद्दूषयितुं तेनोक्तमनुवदति "अत्र कश्चिदाहेत्यादिना तयोरेवास्तु तेन किम्" इत्यन्तेन । पाठकानां सुखावगतये तत्रत्यो ग्रन्थसन्दर्भोऽधस्तादुद्ध्रियते—

"स खलु परिस्पन्दोऽक्षगोचरः पूर्वोत्तरदेशसंयोगविभागफलोऽभ्युपगम्यते । तथा च तावेव गोचरयत्वेषः प्रत्ययः । न खलु पूर्वोत्तरदेशहानोपादानेऽप्रतिपद्यमानश्चलतीति बुध्यते । न च स्थितान्निपुणतोऽपि निरूपयद्भिरन्यो विशेषश्चलतीति लक्ष्यते । ननु चलित्वा स्थितोऽपि संयोगविभागयोर्द्विष्ठत्वेनोभयत्र क्रियाप्रत्ययप्रसङ्गः । स्थाणुश्येनयोर्विभागमात्रम्, एकत्र समुदितयोस्तद्धेतुत्वमिति चेत्—अन्यतरकर्मजन्मनोरुभयोरपि प्रसङ्गः, यदा स्थाणुरेकेन श्येनेन संयुज्यते, ऽन्यतश्च वियुज्यते । न च क्रमविशेषवन्तौ तदालम्बनम् । पुरस्संयुक्तश्येनान्तरविभागपुरस्सरेऽपि श्येनान्तरसंयोगेऽभावात् ।

उच्यते—

अच्छिन्नोत्पत्तयो देशविशेषत्यागसङ्गमाः ॥
तद्गोचरः पदार्थानामाकाशो देश इष्यते ॥ भा. वि: श्लो. १८॥

न खलु संयोगविभागमात्रे चलतीति प्रत्ययः, अपि त्वविच्छिन्नोत्पादसंयोगविभागप्रबन्धे स्थिते च तदभावः । न च स्थाणौ देशविशेषविषयौ संयोगविभागौ संयोगिमात्रस्यादेशत्वात् । न हि श्येनौ स्थाणोर्देशाविति प्रतियन्ति लौकिकाः । आकाश एव तु सकलदेशिपदार्थानां देश ति प्रतीमः । अतस्तत्प्रदेशसंयोगविभागावेव तदालम्बनमिति स्थाणौ न प्रसङ्गः ।

ननु व्योम्नोऽप्रत्यक्षत्वाद्वायुवनस्पतिसंयोगविभागवत्तत्संयोगविभागानां प्रत्यक्षावृत्तित्वेनानैन्द्रियकत्वादिन्द्रियजन्मनः प्रत्यक्षस्य विषयता न युक्ता ।

ननु युक्ता, अन्यथा ।

कथं गम्येत वयसो नियताधारदेशता ॥
चलतोऽक्षातिवृत्ताश्चेद्विहायोदेशसङ्गमाः ॥भा. वि. श्लो. १९॥ इति

अप्रत्यक्षत्वे हि नभोविभागसंयोगादीनां कथं पतति पतत्रिणि देशभेदाधितरज्ञानम्, क्रियया कारणेन कार्यानुमानादिति चेत् न; नियतदेशाधिकरणप्रतीतेः । इह प्राप्तः, नेह

विभागसंयोगयोर्वर्तमानत्वात् । अतीन्द्रियस्य व्योम्नः संयोगविभागयोरप्यतीन्द्रियत्वात् पतति पतत्रिणि [3]पततीति प्रत्ययानुत्पत्तिप्रसङ्गात् ।

न च कर्मानुमातुं शक्यते । तद्धि न नित्यं, संयोगविभागयोः सर्वदोदयप्रसक्तेः । अनित्यत्वे तस्याप्यवश्यमसमवायिकारणमाश्रयणीयम् । तद्वरं संयोगविभागयोरेवास्त्विति न कर्मानुमाने किञ्चिदपि लिङ्गं समर्थम् ।

तदुक्तम्—

नित्यत्वे [1]सर्वदा जन्म स्यात्संयोगविभागयोः ॥
अनित्यत्वेऽस्य यो हेतुस्तयोरेवास्तु तेन किम् ॥

[भा. वि. श्लो. २०] इति

तन्निरासः ।

तदिदमसारम्—प्रत्यक्षेण गच्छति द्रव्ये, संयोगविभागातिरिक्त-

---

इति नियतप्रत्ययो न देशविशेषसंयोगाप्रत्यक्षतायामवकल्पते । वियद्वितितालोकनिवहभेदादुपपन्न इति चेत्—स एव तर्ह्याकाशदेश इति तद्वर्तिसंयोगविभागौ प्रत्यक्षौ । अपि च प्रत्यक्षाप्रत्यक्षवृत्त्योरपि संयोगविभागयोः सिद्धयोः प्रत्यक्षत्वकल्पना युक्ता, न स्वतस्सिद्धस्य कर्मणः । ताभ्यामेव तर्हि संयोगविभागाभ्यां क्रियामनुमिमीमहे, कादाचित्कयोरहेतुत्वानुपपत्तेः । कादाचित्कत्वादेव चाश्रयमात्रहेतुत्वायोगात् हेत्वन्तरापेक्षणात् ।

नैतत्सारम् :—

[1] नित्यत्वे सर्वदा जन्म स्यात्संयोगविभागयोः ।
अनित्यत्वेऽस्य यो हेतुस्तयोरेवास्तु तेन किम् ॥ भा. वि. २०॥ इति

तद्धि कर्म संयोगविभागाभ्यां नित्यमनित्यं वा अनुमीयते । नित्यत्वे हेतुसन्निधानाद्धेत्वन्तरानपेक्षत्वाच्च सदा संयोगविभागोत्पादप्रसङ्गः । अनित्यत्वे तु तस्यापि हेतुमत्त्वात्तद्धेत्वभिमतादेव तत्सिद्धिरिति किमन्तर्गडुना कर्मणा ।

[2] ऋजुविमलापञ्चिकायाञ्च मण्डनाचार्यमतानुवादतन्निरासौ द्रष्टव्यौ [ बृ. ९८, ९९, १०० ]

शस्त्रदीपिकायास्तर्कपादे [पृ. ६९] श्लोकवार्तिकव्याख्याने न्यायरत्नाकरे च शालिकोक्तं दूषणं व्युदस्य भाट्टसम्मतं कर्मणः त्यक्षत्वं समर्थयामास पार्थसारथिः । नन्दीश्वरस्तु प्रभाकरविजयस्य नवमे प्रकरणे पार्थसारथिनोक्तं दूषणमपाकुर्वन् प्रभाकराभिमतं कर्मणोऽनुमेयत्वं व्यवस्थापयामास । चिदानन्दपण्डितो नीतितत्त्वाविर्भावे प्रभाकरविजयोक्तं पराकुर्वन् भाट्टसम्मतं कर्मणः प्रत्यक्षत्वं स्थिरीचकार, अनेन प्रकारेण भाट्टप्रस्थानप्राभाकरप्रस्थानयोर्खण्डनमण्डनप्रणाली प्रसरीसर्तीति ध्येयम् ।

[3] पञ्चिकाकोशे नित्यत्वे च सदा' इति पाठो दृश्यते, आकरे तु सर्वदा इति, स एव मूले सन्निवेशित इति ध्येयम् ।

विशेषानुपलब्धेः। यस्त्वयं गच्छतीति प्रत्ययः, स संयोगविभागानुमितक्रियावलम्बनः। सा च क्रिया न स्थाणावनुमीयते। उत्पततश्श्येनस्य यो देशान्तरसंयोगः, तस्य ततो निष्पत्त्यनवकल्पनात्, [1]तद्गतकर्मानुमानप्रसङ्गात्। निपततश्श्येनान्तरस्य प्राग्देशविभागोत्पत्तये कर्मान्तराश्रयणापत्तेश्च, श्येनगतयोः कर्मणोरनुमितयोरुपपद्येते तयोर्देशान्तरसंयोगविभागौ। तस्मात् [2]स्थाणुश्चलतीति न युज्यते। चलित्वा स्थितस्यापि देशान्तरसंयोगेन क्रियाविनाशात् वर्तमानक्रियाप्रत्ययानुत्पादः। अतीन्द्रियत्वेऽपि व्योम्नः, वियति विततालोकावयवसंयोगविभागनिबन्धनात्पतति [4]पतत्रिणि पततीति विशिष्टबुद्धिः, [5]तद्वशेन क्रियानुमानमपि तत्र सुकरमेव।

[6]न च [7]कर्मानवकल्पनमपि दोषः। कर्महेतोस्संयोगविभागोत्पत्त्यसम्भवात्। तथाहि—शरीरदेशे तावत्प्रयत्नापेक्षादात्मशरीरसंयोगात्कर्मोत्पत्तिरवकल्पते। न च ततश्शरीरदेशसंयोगविभागयोरुत्पत्तिरवकल्पते। संयोगो हि स्वाश्रये, स्वाश्रयसमवेते वा द्रव्यान्तरे कार्यमारभत इति नियतम्। [8]स्वाश्रये यथा—तन्तुसंयोगस्तन्तुषु[9] पटमारभते। प्रचयाख्यश्च संयोगोऽवयवेषु समवेतस्स्वाश्रयसमवेतेऽवयविनि महत्त्वं जनयति, योऽपि संयोगस्संयोगं जनयति, सोऽपि तस्य स्वाश्रयस्वाश्रयसमवेतयोर्जनकः। तन्तुतुरीसंयोगो हि पटतुरीसंयोगस्य जनयितेष्यते। तस्य तुरी तावदाश्रय एव। पटोऽपि तन्त्वाश्रितत्वात्स्वाश्रयसमवेतः। आत्मशरीरसंयोगश्चात्मनि शरीरे च समवेतः, स कथं शरीरदेशे कार्यमारभेत ? तत्राऽसमवेतत्वात्, तेन सहैकार्थसमवायाभावाच्च। कर्म तु स्वाश्रये शरीरे जनयितुं शक्नुयादेवेति, कर्महेतोस्संयोगविभागावनुत्पद्यमानौ ततोऽन्यत्कारणं कल्पयन्तौ कर्मानुमापयतः।

एतेन नोदनाभिघातात्मकौ कर्महेतू [10]संयोगविभागौ व्याख्यातौ। नोदनाख्यो हि शरज्यासंयोगस्तयोः, तत्समवेते वा कार्यमाविर्भावयितुम-

---

[1] कर्मान्तरानुमानेति मु. पु. पा.।
[2] स्थाणौ इति. मु. पु. पा.।
[3] प्रयुज्यते इति. मु. पु. पा.।
[4] पतत्रिणी इति. मु. पु. पा.।
[5] तद्बलेन इति मु. पु. पा.।
[6] अयमंशः मुद्रितपुस्तके खपुस्तके च न दृश्यते।
[7] कर्मान्तिरकल्पनमपि इति. मु. पु. पा.।
[8] स्वाश्रयेषु इति. मु. पु. पा.।
[9] तन्तुसंयोग इति. मु. पु. पा.।
[10] संयोगौ इति. ग. पु. पा.।

लमिति, न ततश्शराकाशगतौ विभागसंयोगावुत्पत्तिं लभेयाताम् । तथाऽभिघातात्मकोऽपि वेगवन्मुसलोलूखलसंयोगो मुसलोलूखलसमवेतः कथमूर्ध्वमुत्पततोमुसलस्याकाशस्य च विभागसंयोगावारभेत ।

यश्च वेगाख्यस्संस्कारः कर्महेतुरिष्यते, न ततोऽपि संयोगविभागावुपपन्नौ[१] । संस्कारस्य स्वाश्रय एव कार्यारम्भनियमात् । भावनाख्यो हि संस्कार आत्मनि समवेत आत्मन्येव [२]स्मृतिलक्षणं कार्यं जनयन्दृष्ट इति, कथं वेगात्मा [३]संस्कारश्शरवर्ती ज्याकाशेन तेजोवयवैस्स्तिमितैश्च वायुभिः सह संयोगविभागावारभत इति शक्यमाश्रयितुम् । अतो न कर्महेत्वभिमतादेव संयोगविभागावुत्पद्येते इति, युक्तमेव ताभ्यां कर्मानुमानम् ।

न च कर्मणः प्रत्यासन्नद्रव्यवर्तिकार्यारम्भनियमोऽवधारितः, तस्य कार्यावगम्यत्वात् । यादृशेन हि कार्येण यदनुमीयते, तादृशमेव तस्य कारणम् । यदि च तस्याश्रयनियमस्स्यात्, तदा कार्यमेव ततो नोपपद्येत । तच्च कर्म सर्वमेव विभागपूर्वकं संयोगमारभते, किञ्चित्तु वेगाख्यं संस्कारमपि । अस्ति वेगाख्यस्संस्कारः, संयोगाच्च तस्योपरतिः, मूर्तद्रव्याणि च तस्याश्रयभूतानीत्यादि प्रमेयपारायणे प्रपञ्चितम् ।

### शक्तिनिरूपणम् ।

[४]सर्वभावानां शक्तिरदृष्टस्वलक्षणापि कार्येणानुमीयते । अग्नेर्यथाभूतादेव दाहो दृष्टः, तथाभूतादेवाग्नेर्मन्त्रौषधिप्रणिधाने कार्यं न दृश्यते । न तत्र दृष्टमेव स्वरूपं कारणम् । यद्धि दृष्टं कारणं तस्याऽजनकावस्थातो विलक्षणत्वाभावात्कार्यानुदयप्रसङ्गात् । [५]यच्च खल्वजनकदशातो निरतिशयम्, ततः कार्यं नोत्पद्यते, कुण्ठादिव कुठारात् । यदा तु तत एव कार्यं दृश्यते, तदा तदवस्थातोऽस्त्येव वैलक्षण्यं तीक्ष्णत्वम् । अग्नौ च कार्यानुदयदशातो

---

[१] उत्पन्नौ इति. ख. पु. पा. । [२] स्मरणलक्षणमिति. मु. पु. पा. ।

[३] शरीरवर्तीति मु. पु. पा. ।

[४] शालिकाचार्योऽतीन्द्रियविषयमप्यनुमानं भवतीति कर्मणः प्रत्यक्षत्वं निरस्यानुमेयत्वं व्यवातिष्ठिपत् । एवमेव शक्तिरपि कार्यावगम्यत्वादनुमातव्येति प्रतिपिपादयिषुश्शक्तिविषयेऽदृष्टस्वलक्षणानुमानं समर्थयन्नाह-सर्वभावानामित्यादिना ।

[५] अत्रेदमनुमानं बोध्यम्—अग्न्यादिकमजनकदशातो जनकदशायामतिशयवत् कार्यजनकत्वात्, कुठारवदिति ।

विलक्षणं न कार्योदयसमये प्रत्यक्षदृश्यं रूपमुपलक्ष्यते। भवितव्यञ्च वैलक्षण्येन, अन्यथा कार्यानुत्पत्तिप्रसङ्गादिति, कार्योत्पत्तेरतीन्द्रियं किञ्चिद्रूपं वह्नेरनुमीयते। तस्य मन्त्रौषधिप्रयोगेण विनाशात्कार्यं नोत्पद्यते। न च वाच्यं मन्त्रौषधादिभिरतीन्द्रियं रूपं न किञ्चिद्विनाश्यते, किन्तु मन्त्रौषधादि-सन्निधानेनैव [1]कार्यानुदय इति, कारणावैगुण्ये कार्योदयविघातासम्भवात्।

अथोच्येत—मन्त्राद्यप्रयोगोऽपि कार्योत्पत्तिनिमित्तम्, सम्प्रयोगे चाप्र-योगो निवर्तत इति, अस्ति कारणवैगुण्यमिति। तन्न। अप्रयोगस्य च प्रयोगाभावरूपत्वात्, [2]सर्वभावकार्याणाञ्च भावकारणनियतत्वदर्शनात्।, [3]अभावस्य क्वचिदपि कार्ये जनकत्वाश्रयणानुपपत्तेः। यच्च तदतीन्द्रियमग्नेः स्वरूपम्, तत् शक्ति-सामर्थ्यादिशब्दवाच्यतया लोके प्रतीतम्। तस्य च कार्यानुत्पत्तौ द्वयी गतिरभिभवः, विनाशो वा। यत्र कदाचिदपि कार्यं न दृश्यते, तत्र विनाश एव। यत्र पुनः प्रतीकारवशेन कार्योदयः, तत्रा-भिभवमात्रम्। तस्य चैवं वह्न्यादौ प्रसिद्धस्य सर्वभावेषु कार्योदयानुकूलं कार्योत्पादकत्वादेवानुमानेन परिकल्पनीयम्। तस्य च नित्याश्रयाश्रितस्य नित्यत्वम्, अनित्याश्रयाश्रितस्य तदुत्पत्तिकारणादेवोत्पत्तिः। संस्काराच्चा-स्याऽयमेव विशेषः। संस्कारो हि नाम नित्येषु नित्यः, अनित्येषु च कारणान्तरायत्त इति।

---

[1] कार्यान्वय इति. मु. पु. घ.। [2] भावानाञ्चेति मु. पु. पा.।

[3] अभावस्य कारणत्वं तार्किकैरङ्गीक्रियते। प्रतिबन्धकसंसर्गाभावस्य भावकार्यसा-मान्यं प्रति कारणत्वाभ्युपगमात्। भाट्टमीमांसकैरप्यनुपलब्धेः प्रमाणान्तरत्वस्वीकाराच्च। प्राभाकरमीमांसकैरभावस्य कारणवं नाभ्युपगम्यते। अत एव नित्याकरणस्य साक्षान्न प्रत्यवा-यजनकत्वम्। तत्काले तूष्णीमुपवेशनादेरेव तज्जनकतोररीक्रियते। यथोक्तं भवनाथमिश्रेण-"अत एव गुरुनये संयोगाभावात्पतनम्, भेदाग्रहात्प्रवृत्तिः, विध्यतिक्रमात्प्रत्यवायः, नञर्था-न्नियोगसिद्धिरित्याद्यननुयोगः। भावभेदादेव सर्वत्र कार्यम्। अभावस्य कारणतानुपगमात्। एकदेश्यपि शक्तिवादी विध्यतिक्रमे नाभावात्प्रत्यवायमाह—

स्वकाले यदकुर्वंस्तु करोत्यन्यद्धि चेतनः।
प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते"॥ नय. वि. पृ. १३५। इति।

अतः प्राभाकरमतेऽभावस्य स्वविपरीतभावनिष्पादकस्वभावाभावात् प्रधानकारणत्वमेव निषिद्धयत इत्येष एव तेषामाशयः।

कौमारिलमतानुयायिभिरभावप्रामाण्यवादिभिश्शक्तिसमर्थद्वारमभावस्य साक्षादकारण-व्युत्पादनमङ्गीक्रियत एव। अन्यथा प्रतिबन्धकसंसर्गाभावस्य कारणत्वनिराकरणं कथं

### परार्थानुमाननिरूपणम् ।

"परप्रत्यायनेच्छूनामनुमोदयसाधनम् ॥ ११ ।
वचनं दूषणैस्साधमर्थादेतेन वर्णितम्" ॥ इति ।

### अनुमानस्य द्वैविध्यनिरूपणम् ।

द्वेधाऽनुमानमुत्पद्यते-स्वयमनुसंहितयाऽनुमानोत्पादकसामग्र्या, परप्रयुक्त-वाक्योद्बोधितया वा । तत्रानुमानोत्पत्तिसामग्रीप्रतिपादनेनैव तत्प्रतिपादक-वाक्यस्वरूपमपि सूचितमेव । "तत्राबाधित[1]" इति प्रतिज्ञा । ज्ञात-सम्बन्धनियमस्ये" त्यनेन दृष्टान्तवचनम् । "एकदेशदर्शनादिति" हेत्वभि-धानम् । तदेवं [2]त्र्यवयवं साधनम् । साध्यनिर्देशः प्रतिज्ञा । यथा-शब्दो

---

सङ्गच्छेत । अतो भावव्यावर्तकतया तत्सहकारित्वमङ्गीकृतमेवाऽप्रतिबद्धा सामग्री कारण-मित्यादिवदद्भिः । कारणतयाऽभिहितविध्यतिक्रमरूपाभावस्य स्वकालावस्थितभावनिरू-पकतयैव कारणत्वम्, न तु साक्षात् । अतोऽभावस्य साक्षात्कारणत्वं नास्तीत्याशयेनाह—अभावस्येति ।

[1] "ज्ञातसंबन्धनियमस्यैकदेशस्य दर्शनात् ।

एकदेशान्तरे बुद्धिरनुमानमबाधिते" ॥ इति पद्यस्थेनाबाधित इति विशेषणेनेति शेषः ।

अत्रेदं बोध्यम्—यदा धूमत्वं लिङ्गम्, तदा अग्निविशिष्टस्यानुमेयत्वम् । यदाऽग्निज्ञानं फलम्, तदा धूमतज्ज्ञानसंबन्धस्मृतिचतुष्टयस्य विकल्पेन प्रामाण्यम्, प्रत्यक्षपरिच्छेदान्तेऽभि हितोऽनियमस्सर्वत्रापि योजनीयः । यद्यपि भाष्यकारोऽनुमानमसन्निकृष्टेऽर्थे बुद्धिरिति वदन् प्रमेयबुद्धेः प्रामाण्यमभिप्रैतीति गम्यते, इदञ्चोपलक्षणं धूमतज्ज्ञानादेरिति ।

[2] अत्रेदमवधातव्यम्—अनुमानं स्वार्थपरार्थभेदेन द्वेधा भिद्यते । यत्र स्वयमेव हेतुं दृष्ट्वा व्याप्त्यादिस्मृत्या साध्यमनुमीयते, तत् स्वार्थानुमानमित्युच्यते । यस्तु प्रतिपन्नमर्थं परमनुमानेन बुबोधयिषति, तेन साधनं प्रयोक्तव्यम्, येन वाक्येन परस्यानुमानबुद्धिरुत्पद्यते पर्वतो वन्हिमानित्यादि, तदेव वाक्यं साधनमित्युच्यते ।

तत्र नैयायिकाः प्रतिज्ञाहेतूदाहरणोपनयनिगमनरू पञ्चावयवं साधनं मन्यन्ते । तथा चाक्षपादीयं सूत्रम्—"प्रतिज्ञाहेतूदाहरणोपनयनिगमना अवयवाः" [न्या. सू. १-१-३२] इति ।

प्रतिज्ञाहेतू द्वावेवावयवाविति सौगता मन्यन्ते । तत्र प्रतिज्ञया निगमनकार्यस्य, हेतु-नोपनयकार्यस्य च सिद्धेरवयवान्तरस्वीकारोऽनर्थकः । सौगतमतेऽत्यन्तसाकांक्षमेव साधन-वाक्यं क्लेशगम्यार्थं भवतीति त्र्यवयवं साधनं मीमांसकैरङ्गीक्रियते । तत्र प्रकारद्वयम्—उदाहरणपर्यन्तम्, यद्वोदाहरणादिकमिच्छानुसारेण प्रयोक्तव्यम् । तत्रोदाहरणपर्यन्तं यथा—पर्वतो वन्हिमान् धूमवत्वात्, यो धूमवान् स वह्निमान् । यथा—महानस इति । उदाहरणादिकं यथा—यो धूमवान् । स वन्हिमान् यथा—महानसम् । अयञ्च धूमवान् तस्माद्वन्हिमानिति ।

नित्य इति । अनेन चानुमानस्य विषयो निर्दिश्यते । निर्दिष्टे च विषये तस्याऽबाधितत्वं शक्यतेऽवगन्तुम्। तथा "एकदेशान्तरे" इत्यनेनापि एकदेशान्तरभूतस्यानुमानविषयत्वमित्युक्तम्[१] । तदपि प्रतिज्ञावचनेन गम्यते । तेन साधनप्रयोगे प्रथमं साध्यनिर्देशाय प्रतिज्ञा कर्तव्या । एतेनैव प्रत्यक्षादिबाधितपक्षादिनिर्देशः पक्षाभास इत्युक्तो भवति । दर्शितानि [२]प्रत्यक्षादिबाधोदाहरणानि । एकदेशस्य च साध्यत्वं दर्शयितुं सिद्धं धर्मिणमुद्दिश्य साध्यविधिर्दर्शयितव्य इति । अप्रसिद्धिविशेष्यकः पक्षाभासः । यथा—सर्वज्ञो वीतराग इति ।

प्रतिज्ञाभासस्तु-माता मे वन्ध्येति, उद्दिश्य हि मातरं न वन्ध्यात्वं विधातुं शक्यते, तस्या अन्वयायोग्यत्वेनान्विताभिधानस्यासम्भवात् । यावज्जीवमहं मौनीत्यत्रानुमानबाध एव, न स्ववचनबाधः । शब्दश्रवणाद्धि कार्याच्छब्दोच्चारयितृत्वमनुमीयते । शब्दानुच्चारकत्वञ्च मौनित्वमित्यनुमानबाध एव । स्ववचनन्तु मौनितामाह, न पुनरमौनितामिति न तेन बाधः ।

गम्यैकदेशान्तरसम्बन्धनियमश्च गमकैकदेशस्य दर्शनीयः परस्येति, तदर्थं दृष्टान्तवचनं प्रयोक्तव्यम् । यावद्धि कस्मिंश्चिद्धर्मिणि एकदेशस्यैकदेशान्तरेण

---

तथाचोक्तं—"केचित्पञ्चतयं प्राहुर्द्वयमन्ये वयं त्रयम् ॥
उदाहरणपर्यन्तं यद्वोदाहरणादिक" ॥ मिति

तत्र भगवान्भाष्यकारश्शबरस्वामी "इन्द्रियकामाधिकरणे" अथ यत् कर्म, तत् फलवद्दृष्टम्, होमोऽपि कर्म, तेनापि फलवता भवितव्यम्" [शा. भा. पृ. ५४४] इति वदन्, उदाहरणादित्रयं उदाजहार ।

कुमारिलभट्टस्तु—
"वेदस्याऽध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाऽध्ययनं यथा ॥" [ वा. अ. श्लो. ३६६ ]
इति वदन् प्रतिज्ञादित्रयं प्रदर्शयति ।

इदमेव च युक्तम व्याप्तिपक्षधर्मतयोरेवंप्रदर्शने बोधसौकर्यात् । यद्यपि भाट्टप्राभाकरप्रस्थानयोर्बहुषु विषयेषु भूयान्भेदोऽनुभूयते, परमस्मिन्विषये न किञ्चिद्द्वैमत्यम्, तस्मात् वार्तिकमतमनुसृत्याऽभ्युपगमसिद्धान्तन्यायेन प्रतिज्ञादिकं त्र्यवयवं साधनं प्रत्यपीपदच्छालिकाचार्यः । परं तत्राप्यनियमः, एवं प्रतिज्ञया सह हेतुदृष्टान्तयोः पौर्वापर्येऽनियमः । अयमर्थोऽत्रैव परिच्छेदान्ते मूल एव स्पष्टीभविष्यतीति ज्ञेयम् ।

१ अनुमानमिति मु. पु. पा. । २ अबाधित इति पदप्रयोजनकथनावसरे "प्रमाणान्तरबाधिते विषये नानुमानमुत्पद्यत इति दर्शयती" त्यत्रेति बोध्यम् ।

प्रमाणसिद्धस्सम्बन्धनियमो न प्रदर्श्यते, तावदनुमानमेवोत्पादयितुं न शक्यते। यत्र धर्मिणि सम्बन्धनियमो दृश्यते, स दृष्टान्तः। यथा—महानसादिः। स चेत्थं दर्शयितव्यः—पर्वतोऽग्निमानिति प्रतिज्ञाय, यो यो धूमवान्, स सोऽग्निमान्, यथा—महानसादिरिति।

यस्तु साध्यविकलः, साधनविकलः, तदुभयविकलः, सम्बन्धनियमविकलश्च, स दृष्टान्ताभासः। यथा—शब्दः प्रयत्नोत्थस्तदनन्तरमुपलब्धेः, [1]मूलोदकादिवत्। मूलोदकादिषु प्रयत्नोत्थत्वं नास्तीति, तत्सम्बन्धनियमो हेतोस्तत्र दर्शयितुमशक्यः, तथा—शब्दो नित्योऽमूर्तत्वाद् घटवदिति। घटस्य मूर्तत्वादमूर्तत्वं नास्तीति, तस्य नित्यत्वेन सम्बन्धनियमो दर्शयितुं न शक्यते। तथा-शब्दोऽनित्यः कृतकत्वाद् गगनवदिति। गगनेऽनित्यत्वं कृतकत्वञ्च नास्तीति, न तत्र सम्बन्धनियमशशक्यो दर्शयितुम्। यथा—शब्दोऽनित्यः प्रमेयत्वात् द्रव्यवदिति। किञ्चिद्द्रव्यं नित्यं परमाण्वाकाशात्ममनोदिक्कालादिरूपम्; किञ्चिच्चाऽनित्यं द्व्यणुकादि। तत्र प्रमेयत्वस्याऽनित्यत्वेन सह सम्बन्धनियमो नास्तीत्यशक्यमेव दर्शयितुम्।

येन च वचनेन सन्नपि साध्यसाधनयोस्सम्बन्धनियमो नाभिधीयते, तदप्याभास एव। तद्द्विविधम्-अप्रदर्शितसम्बन्धनियमम्, विपरीतसम्बन्धनियमश्च। यथा—पर्वतोऽग्निमान् धूमवत्त्वान्महानसवदिति। यद्यपि महानसे वह्निधूमौ स्तः, तथापि यावत् धूमस्याग्निना सह सम्बन्धो नोच्यते, तावदगमक एव। तथा तस्मिन्नेव प्रयोगे यदैवमुच्यते—यो योऽग्निमान्, स स धूमवानिति, तदापि गमकत्वेनाऽभिमतस्य धूमस्य गम्यत्वेनाऽभिमतेनाग्निना सह सम्बन्धनियमस्याऽप्रदर्शितत्वाद् धूमस्य न समर्थितं गमकत्वमिति, साधनाभासत्वम्।

सम्बन्धनियमं स्मरत [2]एकदेशदर्शनादनुमानमुत्पद्यत इत्येकदेशं दर्शयितुं हेतुवचनं प्रयोक्तव्यम्; यथाऽग्निमत्त्वे साध्ये धूमवांश्चायमिति। तेन यस्यैकदेशत्वं नास्ति, तस्याभासत्वमुक्तमेव,। येन वचनेन सदपि दर्शयितुं न शक्यते, तदप्याभास [3]एव। यथा—अवाचकशब्दप्रयोगादयः। असाधारणादयश्च हेत्वाभासास्सर्व एवात्रापि योजयितव्याः।

---

[1] मनोमोदकादिवदिति मु. पु. पा.। [2] एकदेशत्वमिति मु. पु. पा.।
[3] आभासभूतमेवेति. मु. पु. पा.।

हेतुदृष्टान्तयोः क्रमेऽनियमवर्णनम् ।

दृष्टान्तहेतुवचनयोश्च प्रयोगे क्रमनियमो नादरणीयः । एकदेशदर्शनपूर्वकादपि सम्बन्धनियमस्मरणादनन्तरं [1]साध्यज्ञानं जायते, तथा सम्बन्धनियमस्मरणपूर्वकमप्येकदेशदर्शनमनुमानमुत्पादयत्येव, तत्रैकदेशदर्शनपूर्वक सम्बन्धनियमस्मरणं कुर्वता प्रतिज्ञानन्तरं हेतुवचनं प्रयोक्तव्यम्—पर्वतोऽग्निमान्धूमवत्त्वादिति ।

दृष्टान्तश्च यो यो धूमवान्, स स वह्निमानिति पश्चादुदाहर्तव्य इति । दृष्टान्तपुरस्सरे तु प्रयोगे प्रतिज्ञामुपादाय, यो यो धूमवान्, स सोऽग्निमान्महानसादिवदिति चाभिधाय, धूमवांश्चायमिति हेतुवचनं वक्तव्यम् ।

उपनयनिगमनयोर्वैयर्थ्यनिरूपणम् ।

[2]अन्ये तु प्रतिज्ञानन्तरं धूमवत्वादिति हेतुमभिधाय, दृष्टान्तवचनं, ततोऽप्यनन्तरमुपनयं प्रयुञ्जते-धूमवांश्चायमिति । तत्र [3]हेतूपनययोरन्यतरप्रयोगेणापि साध्यसिद्धेरुभयोपादानमनर्थकमिति [4]मीमांसकाः । तस्माद् धूमवत्त्वादयमग्निमानिति निगमनमप्यनर्थकमेव, यथोदितहेतुबलसिद्धत्वादर्थस्य ।

वैधर्म्यदृष्टान्तनिराकरणपूर्वकं साधर्म्यदृष्टान्तनिरूपणम् ।

वैधर्म्यदृष्टान्तोपादानं [5]केचित्साधनवाक्ये कुर्वन्ति । यथा—यत्राग्नि-

---

[1] शब्देत्यधिकः मु. पु. पा. ।

[2] अत्रायं नयविवेकवाक्यसंदर्भोऽनुसन्धेयः प्रकरणार्थसंशुद्धये । "पञ्चावयवता तार्किकोवता न मता । प्रतिज्ञाहेतुदृष्टान्तानन्तरं 'धूमवांश्चायं' इत्युपनयः 'तस्मादयमग्निमा' निति निगमनञ्चेति द्वयं व्यर्थम्, धूमवत्वादित्युक्तेः । 'धूमवांश्चायमिति' पुनरुक्तिः; तस्मादयमग्निमानिति च पुनरुक्तिः । [ नयविवेक पृ. १३९ ] अमुमर्थं प्रागेवादिष्म, इति ।

[3] मुद्रितपुस्तके हेतूपनयनयोरिति. पाठः ।

[4] प्राभाकरमीमांसकाः वयं मन्यामहे इत्यर्थः ।

[5] तार्किका अन्वयदृष्टान्तो व्यतिरेकदृष्टान्तश्चेति द्वयमाद्रियन्तेऽनुमानप्रक्रियायाम् । अन्वयदृष्टान्तेनैव व्याप्तिनिश्चये सति व्यतिरेकदृष्टान्तो न प्रयोक्तव्यः । यदि कश्चिदन्वयदृष्टान्तेन न परितुष्यति, तस्य कृते व्यतिरेकदृष्टान्तस्समादरणीयो भवतीति भाट्टमीमांसका आशेरते । प्राभाकरमीमांसकास्तु—अन्वयदृष्टान्तेनैव सर्वं सेत्स्यति । अन्वयव्यतिरेकदृष्टान्तयोर्विकल्पोऽपि नाऽङ्गीकर्तव्यः, ऋजुवक्रयोर्विकल्पासम्भवात् ।

"ऋजुमार्गेण सिध्यन्तं को नु वक्रेण साधयेदिति" ।

इदमेव वैशेषिकोपस्कारकृता शङ्करमिश्रेणाऽऽत्मसात्कृतमिति मन्तव्यम् ॥ [ वै. उ. पृ ६२ ]

र्नास्ति, तत्र धूमोऽपि नास्ति। यथा—जलह्रद इति। तदनुपपन्नम्—साध्यधर्मसम्बन्धबलेन हेतोर्गमकत्वम्, तच्च साधर्म्यदृष्टान्तेनैव समर्थितम्। अथोच्येत तच्च साधर्म्यदृष्टान्तमात्रेण साध्यधर्मवति हेतोर्वृत्तिरवगम्यते, न तद्विरहिणो निवृत्तिः। न च तया विना हेतोस्साध्यसम्बन्धनियमोऽवकल्पते। अतस्तदर्थं वैधर्म्यदृष्टान्तोऽप्युपादेय इति। तन्न। न हि साध्यधर्मवति हेतोर्वृत्तिमात्रं साधर्म्यदृष्टान्तेनोच्यते, किन्तु नियत एव साध्यधर्मसम्बन्धो [1]निर्दिश्यते। तथाहि—साधनधर्मोद्देशेन साध्यधर्मविधिस्साधर्म्यदृष्टान्तेन क्रियते, तत्र धूमवत्तयोपलक्षणेन सर्वधूमवतामुद्दिष्टत्वात् प्रत्युद्देश्यं वाक्यपरिसमाप्तेस्सर्वेषां धूमवतामग्निमत्ता विहितेति, नास्ति सम्भावना विनाप्यग्निना धूमो भवेदिति। उद्देश्यता च क्वचित् प्रथमप्रयोगेणाऽवगम्यते धूमवानयमग्निमानिति, क्वचिच्च यच्छब्दप्रयोगेण, यो धूमवान्, स वह्निमान् इति। प्रत्युद्देश्यविधानबलेनैव सिद्धां व्याप्तिमन्यतो निवृत्तिश्च स्पष्टीकर्तुं वीप्सावधारणवचनयोः प्रयोगः क्रियते—यो यो धूमवान् स सोऽग्निमानेवेति। तस्मात् सम्यक् साधर्म्यदृष्टान्तप्रयोगेणैव सम्बन्धनियमावगतेरनर्थकं वैधर्म्यदृष्टान्तोपादानमिति।

साधर्म्यवैधर्म्ययोर्विकल्पशङ्का।

अथोच्येत—मा भूत् दृष्टान्तद्वयोपादानम्, किन्तु विकल्पोऽस्तु, वैधर्म्यदृष्टान्तेनापि हि साध्यधर्मविरहिणमुद्दिश्य साधनधर्मविरहविधौ कृते सर्वसाध्यविरहिणां साधनधर्मविरहव्याप्त्यवगमादन्यत्र साधनधर्मोऽवकाशमलभमानः साध्यधर्मवत्येव वर्तत इति, साध्यधर्मसम्बन्धनियमावगतेर्वैधर्म्यदृष्टान्तेनापि हेतुत्वं समर्थितमेव भवतीति, तुल्यकार्यतया साधर्म्यवैधर्म्यदृष्टान्तयोर्विकल्पो न्याय्य इति।

तन्निरासः।

तदयुक्तम्—ऋजुमार्गेणाऽर्थसिद्धौ न [2]वक्रमार्गश्रयणं युक्तम्। यतः, साधर्म्यदृष्टान्तश्च साध्यसम्बन्धाव्यभिचारावगतौ ऋजुमार्गः, वैधर्म्यदृष्टान्तो वक्र इति [3]नानयोर्विकल्पो युक्तः, अतुल्यत्वादुपायभावस्य। स्यान्मतं

---

[1] दृश्यत इति. मु. पु. पा.। [2] वक्रमार्गमाश्रयते इति मु. पु. पा.।
[3] न विकल्पः इत्येव मु. पु. पा।

यथा साध्यसम्बन्धाविनाभावोऽनुमानमार्गः, तथा तदभावाद्व्यावृत्तत्वमपि, तच्च वैधर्म्यदृष्टान्तेनोच्यत इति, विकल्पाश्रयणमिति। तन्न। व्यावृत्तेरभावरूपायाः क्वचिदपि कारणत्वासम्भवात्। सर्वकार्याणि[१] भावसाधनानीत्युक्तम्। न च विपक्षव्यावृत्तिश्शक्यतेऽवगन्तुम्, विपक्षाणामनन्तत्वात्, साध्यधर्मसम्बन्धाव्यभिचाररूपस्तु सम्बन्धनियमो यथाऽवगन्तुं सुकरः, तथोदितमेव। तस्मात्सर्वत्र साधर्म्यदृष्टान्त एव[२] प्रयोक्तव्य इति स्थितम्।

यत एवंविधं समानम्। अतो दूषणमपि पक्षस्य प्रत्यक्षादिबाधितविषयत्वम्, अप्रसिद्धविशेष्यता च। हेतोर्दूषणमसिद्धत्वं (स्वरूपासिद्धत्वमेकदेशा-

---

**हेत्वाभासविषये न्यायसूत्र-भाष्य-वार्तिकमतम्।**

हेतोराभासाः, हेतुवदाभासन्त इति द्वेधा हेत्वाभासशब्दव्युत्पत्तिः। तत्राद्यव्युत्पत्तौ हेतुदोषा बोध्याः, द्वितीयव्युत्पत्तौ दुष्टा हेतव इति च बोध्याः।, "सव्यभिचार-विरुद्ध प्रकरणसम—साध्यसम—कालातीता हेत्वाभासाः"। [न्या. द. १. २. ४.] इत्यक्षपादीयं सूत्रं प्रमाणयन्तः पञ्च हेत्वाभासानान्वीक्षिकीनिष्णातास्सङ्गिरन्ते। भारद्वाजीये न्यायवार्तिके हेत्वाभासानामवान्तरभेदा बहवो वर्णिताः। तथा चेदं न्यायवार्तिकं—"अनेकधा प्रसृतस्य हेत्वाभासस्य विस्तरस्संक्षेप्तव्यमिति। कियता पुनर्विस्तरेणायं हेत्वाभासः प्रसृत इति। कालपुरुषवस्तुभेदानुविधानेनापरिसंख्येयस्सामान्यतः साध्यवस्तूपग्रहणहेतुहेत्वाभासभेदः प्रपञ्च्यमाणष्षटसप्ततिशत" [न्या. वा. पृ. १६५] मिति। अन्ते च लक्षणसूत्रानुसारेण पञ्च हेत्वाभासा इति निर्णयो दरीदृश्यते। विस्तरस्त्वस्य तत्रैव द्रष्टव्यः।

**हेत्वाभासविषये बौद्धदिङ्नागमतम्।**

बौद्धाचार्यो दिङ्नागस्तु—

"सपक्षे सन्नसन्न द्वेधा पक्षधर्मः पुनस्त्रिधा।

प्रत्येकमसपक्षे च सदसद्द्विविधस्ततः"॥ ति पद्येनैकेन नव पक्षधर्मान् हेतुतदाभासानुपवर्ण्य—

"तत्र यस्सन् सजातीये द्वेधा चासंस्तदत्यये।

स हेतुर्विपरीतोऽस्माद्विरुद्धोन्यत्वनिश्चितः॥" इति हेतुतदाभासविवेकं प्रादीदृशत्। अस्य विशदं व्याख्यानं न्यायवार्तिकतात्पर्यटीकायां [पृ. २८९. २९०.] द्रष्टव्यम्। प्रमाणमीमांसासम्पादकैर्दिङ्नागप्रणीतहेतुचक्र-न्यायमुखानुसारेण प्रकोष्टकप्रदानेन कृतं विवेचनमधिकमवजिगमिषुभि [हि. टि. पृ० १४१] र्द्रष्टव्यम्।

[१] शक्तिनिरूपणावसरे विषयोऽयमुपापादि। तदत्र स्मर्तव्यम्।

[२] केवल इति मु. पु. पा.।

सिद्धत्व) मसाधारणत्वं साधारणत्वं [1]बाधितविषयत्वञ्चेति । दृष्टान्तस्य

---

### धर्मकीर्तिमतम् ।

धर्मकीर्तिस्तु—"असिद्धो विरुद्धोऽनेकान्तिक" इति त्रीन् हेत्वाभासान् न्यायबिन्दा—वुदाजहार ।

अनुकूलतर्काभावे हेतोः प्रयोजकत्वं नास्तीति षष्ठं हेत्वाभासान्तरं केचिदातिष्ठन्ते । इदमनुपपन्नम् । यतो हि—अयं व्याप्यत्वासिद्धया गतार्थो भवति । सर्वेष्वप्यनुमानेष्वनुकूलतर्केणा प्रयोजकशङ्कां निरस्य निरूपाधिकत्वस्थापनमभिमतं समेषां तैर्थिकानाम् । तदभावे निरूपाधिकसम्बन्धानिश्चयात्, व्याप्यत्वासिद्धिरेवाप्रयोजको न षष्ठ इति ।

### भूषणमततन्निरासौ ।

न्यायसार—न्यायसारभूषणकर्त्ता भासर्वज्ञस्त्वनध्यवसितषष्ठ इति वदन् तं लक्षयामास साध्यासाधकः पक्षे वर्तमानो हेतुरनध्यवसित इति । यथा—नित्या भूर्गन्धवत्वादिति, सर्वं क्षणिकं सत्त्वादिति च । तत्रादिमोऽसाधारणान्न भिद्यते, द्वितीयन्तु सर्वस्य पक्षत्वेन सपक्षभूतं विपक्षभूतं वा किञ्चिदपि नास्तीति व्याप्यत्वासिद्धिरेवायं, न ततोऽतिरिच्यते ।

### वैशेषिकमतम् ।

वैशेषिकदर्शनभाष्यकारश्श्लोकेनैकेन हेतुलक्षणमभिदधानः, द्वितीयेनानैकान्तिकासिद्धविरुद्धान्त्रीन्हेत्वाभासान्बभाषे । यथा—

"यदनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते ।<br>
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥१॥<br>
विपरीतमतो यत्स्यादेकेन द्वितयेन च ।<br>
विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्" ॥२॥ [वै. द. प्र. भा. पृ. १००] इति

"अप्रसिद्धोऽनपदेशः । सन्दिग्धश्चानपदेशः" [वै. द. उ. १–१५.] इति सूत्रस्थचकारेण गौतमीयतन्त्रोक्तयोस्सत्प्रतिपक्ष-बाधितयोस्सङ्ग्रहः । "विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत् ।" इति प्रशस्तपादवचनमप्यस्यार्थे उपलक्षणम् । वृत्तिकारोप्येवमेव मनुते ।

### उपस्कारकृतो मतम् ।

अत्रोपस्कारकृच्छङ्करमिश्रः प्रशस्तपादोक्तं हेत्वाभासत्रैविध्यपक्षमेवाद्रियते । "यथा वृत्तिकारस्त्वित्यादिना पञ्च हेत्वाभासा" इति गौतमीयमनुधावतीति वदन् स्वाभिप्रायं दर्शयति । "परन्तु विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीदित्याद्यभिधानात् सूत्रकारस्वरसो हेत्वाभासत्रित्व" इति ।

### भाट्टमतम् ।

कुमारिलभट्टास्तु—असिद्धिरनैकान्तिको बाधक इति हेत्वाभासत्रयमङ्गीकुर्वन्ति । अत्रैव शास्त्रदीपिकायास्तदुपष्टम्भकतया प्रवृत्तानामन्येषां ग्रन्थानाञ्च स्वारस्यं प्रतीयते ।

[1] बाधकत्वञ्चेति मु. पु. पा. ।

च साध्यविकलता, साधनविकलता, संबन्धनियमविकलता उभयविकलता, विपरीतनियमता [1]प्रतिज्ञादीनामवाचकपदप्रयोगश्चेति ।

**प्रतिज्ञासन्यास-प्रतिज्ञाहान्योर्भेदनिरासः ।**

[2]प्रतिज्ञासन्यासाच्च [3]प्रतिज्ञाहानिरभिन्नैव । प्रतिज्ञासन्यासोऽपि दूषणान्तरपूर्वकत्वाद्दूषणमेव । दूषितपक्षो हि वादी प्रतिज्ञामपह्नुते । अत एव

---

चिदानन्दपण्डितेन तु नीतितत्वाविर्भावेऽसाधारणेन सह चतुष्टयं हेत्वाभासानां वर्णितम् [पृ. १४२] नारायणभट्टस्तु मानमेयोदये चिदानन्दोक्तमेव स्वहस्तयति स्म । रामकृष्णभट्टस्तु—पार्थसारथ्युक्तहेत्वाभासत्रैविध्यं वार्तिकविरुद्धम् ।

स्वबुद्ध्या ग्रन्थकारस्य यद्धेत्वाभासवर्णनम् ।
वार्तिकव्यतिरेकेण किमर्थं तन्न वेद्म्यहम् ।। [सि. च. पृ. ६६.]

इति वदन् हेत्वाभासानां चातुर्विध्यमातिष्ठते स्म ।

**शालिकमतम् ।**

शालिकाचार्यस्तु—अनुमानलक्षणघटकज्ञातसम्बन्धेतिविशेषणानां प्रयोजनकथनावसरेऽसाधारणसाधारणासिद्धबाधकानां व्यावृत्तिं प्रादीदृशत् । अत्रैव परिच्छेदान्ते पक्षदोषानभिधाय हेतुदोषान् पर्यजीगणत्—"असाधारणादयश्च हेत्वाभासास्सर्व एवाऽत्रापि योजयितव्या" इति । तथा हेतोर्दूषणमसिद्धत्वं "(स्वरूपासिद्धत्वमेकदेशासिद्धत्वञ्च) साधारणत्वम—साधारणत्वम् बाधितविषयत्व"मिति च । ऋजुविमलापञ्चिकाप्यमुमेवार्थमुत्तभ्नाति । अतः प्राभाकरमते चत्वारो हेत्वाभासा इति सम्प्रधारयामो वयम् ।

अत्र तार्किकैः यस्सत्प्रतिपक्ष इत्युच्यते, तमनैकान्तिकभेदे सप्रतिसाधनेऽन्तर्भावयन्ति भाट्टमीमांसकाः । प्राभाकरमीमांसकास्तु—प्रकरणसमत्वं दूषणान्तरं न सम्भवति । प्रबलदुर्बलयोर्विरोधे दुर्बलस्य प्रबलापहृतविषयत्वेन दुर्बलमात्मानमेव न लभते । तुल्यबलयोर्विरोध एव नोपपद्यते । उपपत्तौ वा वस्तुनो द्विरूपत्वापत्तिर्बाधकस्तर्कः । तस्मात्सत्प्रतिपक्षस्य न दूषणान्तरत्वमित्यलमक्षरक्षरणेन ।

[1] अवाचकता प्रयोगश्चेति मु. पु. पा. ।

[2] 'प्रतिज्ञाहानिः-प्रतिज्ञान्तरं-प्रतिज्ञाविरोधः-प्रतिज्ञासन्यासो—हेत्वन्तर-मर्थान्तरं—निरर्थकम-विज्ञार्थं-मपार्थकमप्राप्तकालं-न्यूनमधिकं-पुनरुक्त-मननुभाषण-मज्ञानम-प्रतिभा-विक्षेपो-मतानुज्ञा-पर्यनुयोज्योपेक्षणं-निरनुयोज्यानुयोगो-ऽपसिद्धान्तो-हेत्वाभासाश्च-निग्रहस्थानानि" [न्या. द. ५. २. १. ]। इति गौतममुनिः प्रतिज्ञाहानिप्रतिज्ञासन्यासयोर्निग्रहस्थाने पार्थक्येनापाठीत् । प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृटान्ते प्रतिज्ञाहानिः । पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्यासः" । इति च द्वयोर्लक्षणं सूत्रयामास गौतमः । ग्रन्थकारस्त्वेतयोः पार्थक्यं न मनुते इति बोध्यम् ।

[3] प्रतिज्ञासामान्यादिति मु. पु. पा. ।

प्रतिज्ञान्तरमपि पृथग् दोषो न भवति। दूषितपूर्वप्रतिज्ञस्यैव [१]प्रतिज्ञान्तरा-[२]लम्बनात्। हेतुप्रतिज्ञाविरोधोऽपि न दूषणान्तरम्। अप्रसिद्धत्वे हेतोरसिद्धतैव दोषः, सिद्धत्वे वा तद्ग्राहकप्रमाणबाधात्पक्षस्य दोषः। [३]अप्रसिद्धविशेषणतात्वदृष्टस्वलक्षणस्याप्यनुमानान्न दोषः।

अनुमानफलनिरूपणम्[४]।

"[५]प्रत्यक्षवच्च वक्तव्या प्रमाणफलवर्णना।" १२॥ इति।

यदाऽनुमितिरनुमानमिति, प्रमितिः प्रमाणमिति भावव्युत्पत्तिराश्रीयते, तदाऽग्न्यादिविषया लिङ्गदर्शनसापेक्षादात्ममनस्सन्निकर्षादुत्पन्नाऽधिगतिरेवानुमानं प्रमाणम्, फलञ्चोपादानादिक्रिया।

यदा चाऽनुमीयतेऽनेनेत्यनुमानम्, प्रमीयते चाऽनेनेति प्रमाणमिति करणव्युत्पत्त्याश्रयणम्, तदाऽऽत्ममनस्सन्निकर्षोऽनुमानम्, सम्बन्धनियमस्स्मरणम्, एकदेशदर्शनञ्च इतिकर्तव्यता,[६] फलञ्च लैङ्गिकविषया प्रतीतिः। साधकतमस्य करणत्वात्तमबर्थस्य चातिशयरूपत्वाद्व्यवहितापेक्षया च सन्निहितस्याऽतिशययोगाल्लिङ्गदर्शनादीनां प्रमाणत्वम्।

इति महामहोपाध्यायश्रीशालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां प्रमाणपारायणे द्वितीयोऽनुमानपरिच्छेदस्समाप्तः।

---

१ प्रतिज्ञातं इति मु. पु. पा.। २ अवलम्बनत्वात् इति मु. पु. पा.।

३ पक्षदोषाणां परिगणनावसरेऽप्रसिद्धविशेष्यता, अप्रसिद्धविशेषणता, अप्रसिद्धविशेष्यविशेषणोभयता चेति दूषणत्रयमुपवर्णितं भट्टवार्तिके। अप्रसिद्धविशेष्यतायाः, अप्रसिद्धोभयतायाश्चोदाहरणे निरालम्बनवाददूषणावसरे प्रदर्शिते। यथा—

"अग्राह्यत्वाच्च भेदेन विशेषणविशेष्ययोः

"अप्रसिद्धोभयत्वं वा बाध्यमन्यतरस्य वा" [ श्लो. वा. नि. वा. श्लो ३५ ] इत्यत्र।

अदृष्टस्वलक्षणस्यापि कर्मणस्संयोगविभागाभ्यामनुमानादप्रसिद्धविशेषणत्वमपि दोष इति तार्किकवद्भाट्टमीमांसका अपि मन्वते। प्राभाकरमीमांसकास्तु वदन्ति यत् कर्मस्वरूपमप्यदृष्टत्वादनुमानेनैव गृह्यते। अतोऽप्रसिद्धविशेषणता भूषणमेव; न तु दूषणमित्याशयवानाह "अप्रसिद्धेत्यादिना न दोष" इत्यन्तेन। अस्य निरासप्रकारः [ न्या-रत्न पृ. ३७० द्रष्टव्यः। ]

४ अत्र यद्वक्तव्यम्, तदनागतावेक्षणन्यायेन प्रत्यक्षपरिच्छेदान्तेऽस्माभिः प्रपञ्चितमिति पुनरत्रापि तन्न प्रतायते।

५ प्रत्यक्षवच्चास्य प्रमाणफलवर्णन कर्तव्या इति मु. पु. पा.।

६ फलञ्च लैङ्गिकविषयाऽनुमितिरिति. मु. पु. पा.।

# अथ [1]शास्त्रपरिच्छेदः ।

**"शास्त्रं[2] शब्दविज्ञानाद्यदसन्निकृष्टार्थविज्ञानम् ।" इति ।**

**शब्दविज्ञानापेक्षादात्ममन[3]स्सन्निकर्षाद्यददृष्टार्थविषयं *विज्ञानम्, तत् शास्त्रं नाम प्रमाणम् ।**

---

[1] शब्दपरिच्छेद इति मुद्रितपुस्के पाठो दृश्यते । प्रकरणार्थपर्यालोचनया शास्त्र-परिच्छेद इत्येव युक्तमिति प्रतीयते । "शास्त्रं तथोपमान" इत्यमृतकलावचनमप्यत्रानुकूल-मिति मन्वानैरस्माभिश्शब्दस्य स्थाने शास्त्रपदं निवेशितमिति ध्येयम् ।

*बुद्धिरिति मु. पु. पा. ।

[2] शास्त्रमित्यादिभाष्यवाक्यमादाय शास्त्रलक्षणमाचक्षाणश्शालिकाचार्यश्शाब्दिकसम्मतं स्फोटरूपं शब्दतत्त्वं पराकृत्य, क्रमवन्तो वर्णाः पदमिति शब्दस्वरूपम्, अर्थविशेषं, प्रत्याय्यप्रत्याय-कभावरूपं सम्बन्धमौत्पत्तिकं, शक्तिग्रहोपायं सकलप्रमाणशिरोमणिभूतं वृद्धव्यवहारम्, असन्निकृष्टपदेन सपरिकरापूर्वस्थितिं, शास्त्रमित्यस्य शास्त्रभेद—तदुपयोग्यनुबन्धभेदं शब्दान्त-रादिभिः, साध्यभेदञ्चेति, वक्ष्यमाणप्रपञ्चस्य शास्त्रपरिच्छेदस्य शास्त्रलक्षणग्रन्थशेषतां प्रति-पिपादयिषुश्शास्त्रपरिच्छेदनामकं तृतीयमुपक्रमते—शास्त्रमिति ।

इमञ्च भाष्यसन्दर्भं दूषयित्वा शब्दसामान्यस्य लक्षणमभिधाय, शब्दविशेषस्य शास्त्रस्य लक्षणं वक्तव्यम्, तत्तु नोक्तमित्याक्षिप्य, सांख्योक्तस्यानुमानशाब्दयोर्भेदहेतोरस्फुटत्वात्, वैशेषिकोक्तस्याभेदहेतोरव्यक्तात्वाच्च तदुभयं निरस्य, अनुमानाच्छब्दस्य प्रमाणान्तरत्वव्य-वस्थापनायेति भाष्यवाक्यस्य तात्पर्यं वर्णयामास कुमारिलभट्टः । तन्मतमपाकुर्वन्, सपरिकर-शास्त्रलक्षणपरतया शाबरवचनमयूयुञ्जच्छालिकनाथः ।

इदं शाबरं वचोऽभिहितान्वयवादिभिर्भाट्टमीमांसकैरित्थं व्याख्यातम् । तथा हि—शब्द-विज्ञानादित्यत्र ज्ञानपदं ज्ञानहेतुपरम्, असन्निकृष्टेऽर्थे इति सप्तम्यन्तयोर्न सामानाधिकरण्यम् किन्तु वैयधिकरण्यम् । ततश्चायमर्थः फलति—प्रमाणान्तरानधिगतेऽबाधितेऽर्थे ज्ञापकं शब्द-ज्ञानजन्यमर्थज्ञानं तच्छब्दप्रमाणमिति । प्रत्ययान्तपदार्थज्ञानं शब्दजन्यं वाक्यार्थज्ञाने कारण-मिति यावत् । अभिहितान्वयवादे वाक्यार्थज्ञानं प्रति पदोपस्थापितपदार्थज्ञानस्य हेतुत्वात् ।

अन्विताभिधानवादिभिः प्राभाकरैरित्थं व्याख्यातमिदं भाष्यम् । अन्वितार्थप्रतिपाद-कैराकांक्षादिविशिष्टैः पदैरन्वयस्याप्यभिधानमिति । पदस्यैवार्थस्वरूपेऽन्वये च शक्तिः, तत्र चायं विशेषः—पदार्थांशे ज्ञाता सती शक्तिः कारणम् । अन्वयांशे स्वरूपसती शक्तिः कारणम्, अत एव कुब्जशक्तिवादिन इति प्रभाकरमीमांसकास्सङ्गीर्यन्ते । तथाचायं भाष्यार्थः—शब्दज्ञानं प्रमाणान्तरेणाऽप्रमितं वाक्यार्थधीजनकमिति । तद्भूताधिकरणसूत्रा-दियोजनं वाक्यार्थमातृकायामुपपादयिष्यामः ।

[3]रामानुजाचार्यश्श्रीभाष्यकृतो भिन्नश्शाब्दं लक्षयित्वा, लौकिकस्य शाब्दस्य सन्निकृष्टा-

शब्दत्वस्योपाधित्वनिरूपणम् ।

कश्शब्दोऽभिमतः ? वर्णाः, तेषामेव श्रोत्रग्राह्यत्वात् । श्रोत्रग्राह्ये हि वस्तुनि शब्दपदं वर्तते । न च सत्त्वशब्दत्वयोरतिप्रसङ्गः, सत्तादिसामान्याभावात् । अनुवृत्ताकारावभासिनी हि बुद्धिस्सामान्यसिद्धौ निबन्धनम् । न च द्रव्यगुणादिष्वनुवृत्तमाकारं परामृशन्ती बुद्धिरुदेति, यतो महासामान्यं सत्ताख्यं प्रसिध्येत् । नापि ककारखकारादिष्वेक अकारोऽवभासते, यतश्शब्दत्वमभ्युपगच्छेम । सदादिप्रतीतिस्त्वौपाधिकी । प्रमाणग्रहणयोग्यतौपाधिकः सच्छब्दः । [१]श्रोत्रग्राह्यतौपाधिकश्च शब्दशब्दः ।

स्फोटवादस्योपन्यासः ।

ननु वर्णारिक्तं पदमपि श्रोत्रमेव । तथाहि—वन-नव *नदी दीनेत्या-

---

र्थत्वेन, शास्त्रस्यासन्निकृष्टार्थत्वेन च वैलक्षण्यमभिधाय पञ्चिकोक्तलक्षणं व्यशीशदत् । यथोक्तम्—"शाब्दं प्रमाणं निरूप्यते । सम्बन्धवशेनार्थप्रत्यायकं पदजातं शाब्दम् । तदेव प्रत्यक्षाद्यसन्निकृष्टार्थं शास्त्रमिति" [तन्त्ररहस्य, पृ० २२] । शास्त्रलक्षणे भाष्योक्ते शब्दविज्ञानादित्येव दृश्यते, परं इदं भाष्यं शालिकाचार्येण शब्दज्ञानसापेक्षादात्ममनस्सन्निकर्षादिति पदयोजनेन विवृतं दृश्यते । पूर्व० तं० सिं० र० परि० पृष्ठे १६५ अभियुक्तैरयमेव पाठस्समादृतो दृश्यते । तन्त्ररहस्यकारोऽपि पञ्चिकोक्तं प्रकारमनुसरति ।

इदन्त्विह वक्तव्यम् । आत्ममनस्सन्निकर्षस्य ज्ञानसामान्यं प्रति कारणत्वेन शास्त्रलक्षणे इदं पदं विशेष्यते, तर्हि अनुमानादावपि वक्तव्यमासीत् । अपि चान्विताभिधानवादे पदानामेव व्यतिषक्ताभिधायित्वस्य तद्भूताधिकरणे प्रतिपादनात् । आत्ममनस्सन्निकर्षादित्यधिक इत्येव यद्यपि प्रतिभाति ।

तथापि पञ्चिकाकारः प्रमाणादिषु सर्वत्रापि भावव्युत्पत्तिः करणव्युत्पत्तिरिति व्युत्पत्तिद्वयं सर्वत्र व्यवहरति । भावव्युत्पत्तिमङ्गीकृत्य शब्दविज्ञानसापेक्षादात्ममनस्सन्निकर्षादित्याह । "प्रत्यक्षवच्च वक्तव्या प्रमाणफलवर्णना" इति श्लोकव्याख्यायामनुमानपरिच्छेद एवाऽयं विषयो विविच्य प्रदर्शितश्शालिकाचार्येणेति बोध्यम् ।

*नदीदीनेत्यादि तु इति मु. पु. पा. ।

[१] तार्किकाश्शब्दत्वजातिमभ्युपगच्छन्ति । कौमारिलमतानुसारिणः केचित्—

"एतयैव दिशा वाच्या शुक्लादेरपि नित्यता ॥
संसर्गमात्रभेदेन स्यात्तत्रापि हि भेदधीः ॥ श्लो. वा. अ. ६.
स्वरूपन्तु तदेवेति को जातिं कल्पयिष्यति ॥" (श्लोक ४११-१२)

इति वचनानुसारेण शब्दव्यक्तिमेकामेवाभ्युपगच्छन्ति । अयं शब्दोऽयं शब्द इति भेदप्रतीतिस्त्वाश्रयभेदनिबन्धनेति ।

अपरे तु न्यायमतमनुसरन्तश्शब्दोऽयं शब्दोऽयमित्यनुगताकारबुद्धिदर्शनात् शब्दत्व-

दिषु वर्णाभेदेऽपि पदान्यत्वं प्रतीयते। न च वाच्यं वर्णा एव पदम्। वन-नव-नदी-दीनेत्यादिषु क्रमभेदेन पदभेदबुद्धिरिति, वर्णानामक्रमिकत्वात्। देशनिबन्धनो वा क्रमो भवेत्, कालनिबन्धनो वा। उभयविधोऽपि न वर्णेष्वास्पदं लभते, तेषां सर्वगतत्वान्नित्यत्वाच्च। बुद्धिस्तु तेषां क्रमवती। तदनुरोधेन वर्णा अपि क्रमवन्त इति प्रत्येकं श्रवणेष्ववभासन्ते। एकक्षणवर्तिन्यान्तु पदबुद्धावेकस्यां बुद्धिनिबन्धनोऽपि क्रमो नोपपद्यत इति, कुतस्तद्भेदेनापि भेदप्रतिभासोपपत्तिः? किञ्च वर्णा बहवः, एकविषया च पदबुद्धिरिति, वर्णेभ्यो भिन्नं पदम्। [1]किञ्च यदि वर्णेभ्यो भिन्नं पदं नाऽवभासते, ततस्तेभ्योऽर्थप्रत्यय एव नोपपद्यते। एकैकवर्णप्रतीतौ तावदर्थस्य नावगमः। न च सकलवर्णोपलम्भो युगपत्सम्भवति, वर्णानां क्रमोच्चारणात्। उच्चारणानुसारित्वाच्चोपलब्धेः। वर्णानाञ्च वाचकत्वे क्रमभेदे वक्तृभेदे चार्थप्रत्ययस्स्यात्। तस्माद्वर्णेभ्योऽसम्भवन्नर्थप्रत्ययस्तदतिरेकिस्वनिमित्तपदप्रतीतिं प्रसाधयति।

### तन्निरासः।

उच्यते—वन-नव-नदी-दीनेत्यत्रापि वर्णातिरिक्तवस्त्वन्तरावभासो नास्ति, नकारादय एव हि प्रतीयन्ते। बुद्धिभेदस्तु क्रमभेदनिबन्धनः। न चेयमेका बुद्धिर्यतो वर्णानां बुद्धिभेदनिबन्धनोऽपि क्रमो न स्यात्। भिन्नवर्णविषया भिन्ना एव हि बुद्धयो निरन्तरतयैकतामिवापद्यन्ते। तथा हि—श्रवणेन्द्रियनिबन्धनास्तावद्वर्णोच्चारणानुबन्धिन्यो बुद्धय उच्चारणभेदेन [2]भिद्यन्ते। एवं स्मृतिरपि प्रत्येकवर्णोपलम्भप्रभावितभावनाबोध भवन्ती, सर्वविषयैकाऽवकल्पते, भावनानां भेदात्। एकपदबुद्धिस्त्वेकार्थप्रतिपत्त्युपाधित्वनिबन्धना[3], एकार्थप्रतिपत्तिश्च[4] प्रत्यक्षं तावन्निमित्तं न शक्नोति

---

जातिमुररीकुर्वन्ति। प्राभाकरमीमांसकास्तु—यथा सत्प्रतीतिरौपाधिकी, तथा शब्दशब्दोऽप्यौपाधिक एव, न जातिनिमित्तः। अयमर्थो मूल एव स्पष्ट इति ध्येयम्। "योऽपि चायं शब्दशब्दश्श्रोत्रग्रहणोपाधिबललब्धप्रवृत्तिरिति न जातु जातिकल्पनायै विभवति" इत्यादि ग्रन्थेन शब्दत्वजातिं निराकृत्य, तस्योपाधिरूपत्वं जातिनिर्णये उक्तम्। तदेव स्मारयति—श्रौत्रेत्यादिना।

[1] किञ्चेति पाठो मुद्रिते पुस्तके न दृश्यते। [2] उत्पद्यन्त इति मु० पु० पा०। [3] उपायत्वनिबन्धनेति. मु. पु. पा.। [4] अर्थप्रतिपत्तिश्चेति मु. पु. पा.।

कल्पयितुम्, तस्य निमित्तत्वानुपपत्तेः। न तस्य सत्तामात्रेण निमित्तता, सर्वदाऽर्थप्रत्ययापत्तेः। प्रत्यक्षं [1]वर्णेभ्यः भिन्नपदावभासि न भवतीत्युक्तमेव। तेन वर्णेष्वेव प्रत्यक्षेष्वर्थप्रतिपत्त्युपपत्तये कश्चिद्विशेष आश्रयितुं युक्तः। स च पूर्वपूर्ववर्णोपलम्भसापेक्षत्वादन्त्यवर्णस्य, उपलम्भस्य च क्षणिकतया स्वतो विशेष्टुमशक्यत्वात्पूर्वपूर्ववर्णोपलम्भजन्यस्संस्कार एवाश्रीयते।

स्मृतिहेतोस्संस्कारादस्य वैलक्षण्यनिरूपणम्।

स च स्मृतिहेतोस्संस्काराद्भिन्न एव। स्मृतिहेतुर्हि संस्कारो यदुपलम्भप्रभावितस्तत्रैवोपलम्भान्तरं जनयितुमलं, नार्थान्तरे, इत्यर्थविषया ततः प्रतीतिरनुपपन्नेति, तदतिरेकिणस्संस्कारस्याश्रयणम्। तस्य च कार्यकल्प्यत्वाद्यथाभावेऽर्थप्रतीतिकार्यदर्शनं[2], तथाभाव एवोत्पत्तिरनुमीयते। तेन क्रमविपर्यये [3]वक्तृभेदे व्यवधाने च कार्यादर्शनात्तत्र संस्कारस्यादर्शनादर्थप्रत्ययाभावः। यस्य यस्य चार्थस्य प्रतीतौ यस्य वर्णस्य निमित्तभावः, तस्य तदर्थप्रतीत्यनुगुणसंस्काराधायकत्वं[4] स्वाभाविकम्। सहायविरहात्तु कार्यानुदयः, सहायावाप्तेश्च[5] कार्योत्पत्तिरिति, तेभ्य एवार्थप्रत्ययः। तस्मान्न प्रत्यक्षतः, नाप्यनुमानतो वा वर्णव्यतिरिक्तपदोपपत्तिरिति वर्णात्मकमेव पदमिति।

सम्बन्धस्यौत्पत्तिकत्वाक्षेपः।

कः पुनरर्थः? अभिधेयः। अभिधेय एव कः? येन सह शब्दस्याऽपौरुषेयस्सम्बन्धः। अथ कस्सम्बन्धः? प्रत्याय्यप्रत्यायकभावः। न तर्ह्यपौरुषेयस्सम्बन्धः, स्वभावतश्शब्दस्याऽप्रत्यायकत्वात्। यदि हि स्वभावत एव शब्दोऽर्थं प्रत्याययेत्, ततः प्रथमश्रुतः किं न प्रत्याययेत्? ततोऽवगच्छामः, अपेक्षते किञ्चिच्छब्द इति। देवदत्तादिपदेषु च पुरुष-

---

[1] वर्णेभ्य इति मुद्रितपुस्तके पाठो न दृश्यते। गपुस्तकानुसारेण निवेशित इति मन्तव्यम्।

[2] प्रतीतिदर्शनमिति मु. पु. पा.।

[3] व्यक्तिभेदे इति मु. पु. पा.।

[4] संस्कारार्थकत्वमिति मु. पु. पा.।

[5] सहायाप्तेरिति—मु. पु. पा.।

सङ्केतायत्ताऽर्थप्रतीतिर्दृष्टेति, [1]गवादिपदेष्वपि तदपेक्षैवाश्रीयते। तदपेक्षा-चेदर्थावगतिः, न तर्ह्यपौरुषेयं [2]शब्दस्याऽर्थप्रत्यायकत्वम्।

तत्समाधानम्।

उच्यते; यद्यपि प्रथमश्रुताच्छब्दादर्थं नाऽवबुध्यते, तथापि स्वाभाविक-मेव शब्दस्याऽर्थप्रत्यायकत्वम्, न पुनस्सङ्केतापेक्षम्। तथा हि—वृद्धयोर्व्य-वहरतोरेकस्य वाक्यं श्रुत्वा, परस्य प्रवर्तमानस्य प्रवृत्त्या बुद्धिमनुमाय[3], तस्याश्च [4]शब्दश्रवणानन्तरभावित्वाच्छब्दस्य तद्धेतुतां तावदवधारयति। किन्तु तेषां पार्श्ववर्तिनां व्युत्पित्सूनां ततश्शब्दात् स्वयमर्थमप्रतियतामेषां पुनरियं विचिकित्सोदयते—यदि प्रत्यायकश्शब्दः, ततोऽस्मानपि किमिति नार्थं प्रतिपादयति? अथाऽप्रत्यायक एव, ततो वृद्धमपि कथमवबोधयतीति विचिकित्सतां तेषामेव पुनरेषा कल्पना प्रसरति—नूनमस्ति कश्चिदस्य वृद्धस्य विशेषो यतोऽयमर्थमवबुध्यत इति, कोऽसौ विशेष इति [5]निर्णयतां पुनः शब्दश्रवणे वृद्धव्यवहारावगतार्थप्रत्यायकत्वमात्रेण स्वयमर्थावगमदर्शनादर्थ-प्रत्यायकत्वावगम एव विशेष इति निर्धारणा जायते, न पुनस्सङ्केतप्रतीति-र्वृद्धस्य विशेष इति कल्पना शक्या, सङ्केतस्यैव तदानीमप्रतीतेः। व्युत्पन्ने-तरशब्दार्थो हि सङ्केतादर्थमवबुध्यमानस्सङ्केतं प्रतिपद्यते, नान्यथा। ननूत्तर-कालं सङ्केतदर्शनात्किमिति [6]सङ्केतस्य प्रत्यायकत्वं नाश्रीयते। न। शब्दस्व-भावत एवार्थप्रतीतिरूपकार्यसिद्धेः। यदि हि शब्दमात्रादर्थप्रतीतिर्न सम्पद्यते, ततस्सङ्केतोऽपि [7]तत्कारणमिति कल्प्यते, नान्यथा। उपपद्यते तु शब्द-मात्रादेवार्थावगतिः प्राच्येन मार्गेण।

नन्वेवं सति देवदत्तादिपदेष्वपि कथं सङ्केतस्य [8]कारणत्वम्? उच्यते—प्रत्यक्षपरिदृष्टस्तत्र सङ्केतः, न तु कल्पयितव्यः। तेन देवदत्तादिपदे-

---

[1] गवादिष्वपीति. मु. पु. पा.। [2] प्रत्यायकत्वमित्येव मु. पु. पा.।

[3] अनुमापयतीति मु. पु. पा.।

[4] मध्यमवृद्धस्य प्रवृत्तिर्ज्ञानपूर्विका प्रवृत्तित्वात् मदीयप्रवृत्तिवदित्यनुमानाकारो बोध्यः। यद्यस्मात्प्रतीयते, तत्तस्य वाच्यमिति नियममूलकेन "तदुदितस्स हि यो यदनन्तरः" इति न्यायेनेति शेषः।

[5] निर्णीयतामिति. मु. पु. पा.। [6] संकेतमूलमेवेति. मु. पु. पा.।

[7] तत्कालमिति. मु. पु. पा.। [8] तत्करणत्वमिति. मु. पु. पा.।

तस्यैवाऽर्थप्रतीतिकारणत्वम्। गवादिपदेषु तु केवलकार्यदर्शनमात्रकल्पनीयो नावकाशं लभत इति, अपौरुषेयशब्दानामर्थेन[1] प्रत्याय्यप्रत्यायकभाव-लक्षणस्सम्बन्ध इति सिद्धम्।

शास्त्रलक्षणेऽसन्निकृष्टविशेषणप्रयोजननिरूपणम्।

"असन्निकृष्ट" इति [2]किमिदम्? [3]प्रमाणान्तरेणाऽप्रतीत इति। यद्येवम्, कथमसौ शब्दैरवबोध्यते? उक्तम्—वृद्धव्यवहारावगतसम्बन्धः [4]शब्दोऽर्थस्याऽवबोधक इति। यश्चाऽर्थो न प्रमाणान्तरेणावगम्यते, कथं तद्विषयो वृद्धव्यवहारोऽवसीयते? कथन्तराश्च तद्विषया प्रतीतिरनुमीयते? कथन्तमाश्च तद्वाचकत्वशक्तिश्शब्दस्य कल्प्यत इति? [5]वाक्यार्थमातृकायामभ्यासो विधीयतामिति, अत्रोत्तरम्।

---

[1] एतेषामिति. मु. पु. पा.।

[2] शास्त्रलक्षणे असन्निकृष्टेत्यर्थविशेषणं दत्तं भाष्यकारेण, तस्य प्रयोजनं वक्तुकामः पृच्छति—किमिति।

[3] स्वयं असन्निकृष्टपदं व्याचष्टे प्रमाणेत्यादिना। असन्निकृष्टपदमनुमानलक्षणे शास्त्रलक्षणे च निवेशितमस्ति। तत्पदञ्च व्याख्यातं भाट्टैः—तद्वत्तया तदभाववत्तया वा निश्चितेऽनुमानं न प्रवर्तत इति। तथा च वार्तिकम्—असन्निकृष्टवाचेत्यादिकमुदाहृतचरम्। तदेव व्याख्यानं शाब्देऽप्यन्वसारि तैः। असन्निकृष्टग्रहणञ्च पूर्वोक्तताद्रूप्यतद्विपर्ययपरिच्छेद-निरासार्थम्। एकदेशिनान्तु तदनर्थकमेव स्यात् (शा. दी. त. पा. पृ. २८०) इति।
अत एव ब्रह्मानन्दगौडैरद्वैतश्रुतेर्बाधोद्धारप्रसङ्गे तथाचोक्तं वार्तिककारैरित्यादिसिद्धि-वाक्यं व्याचक्षाणै "यद्यपीत्यादिना……तुल्यन्यायत्वादत्रापि सम्बध्यते" इत्यन्तेन वाक्यजातेनाऽयमर्थो विशदीक्रियते स्म (लघु. चं. पृ. ५१५)। प्राभाकरास्तु—अनुमानलक्षणेऽसन्निकृष्टपदं स्मरणाभिमाननिवृत्त्यर्थमातिष्ठन्ते। अयमर्थश्शालिकाचार्येणाऽनुमानपरिच्छेदे स्पष्टीकृतः। शास्त्रलक्षणघटकमसन्निकृष्टविशेषणस्य प्रमाणान्तराप्रतीत इत्यर्थो वर्णित इति विदाङ्कुर्वन्तु विबुधा इति।

[4] नीतिपथे—लोकावगतसामर्थ्यश्शब्दो वेदेऽपि बोधक इत्युक्तमर्थं, वेदशब्दं विहायार्थपदं योजयित्वा स्मारयति। ब्रह्मसिद्धावपि श्लोकार्धमीदृशमेव दृश्यत इति ध्येयम्।

[5] एकादशे प्रकरणे वाक्यार्थमातृकानामनि, तद्वृत्तौ च साक्षात्परम्परया वा सर्वेषां शब्दानां शक्त्या कार्यपरत्वं वेदवाक्यविमर्शेन, लोके क्रियाकार्यत्वं लक्षणया निश्चीयत इत्युक्तं शालिकनाथेन। तथाहि—"अथातो धर्मजिज्ञासेति" सूत्रेण धर्मपदवाच्यो वेदार्थो विचार्यत्वेन सूत्रकृता प्रत्यज्ञायि। प्रतिज्ञातस्य वेदार्थस्य कार्यरूपत्वं चोदनासूत्रेण प्रत्यपादि। तत्र चोदनाशब्दार्थं विवृण्वता भाष्यकृता शबरस्वामिना "चोदनेति क्रियायाः प्रवर्तकमाहुरि"त्य-

चोदनासूत्रतात्पर्यवर्णनम् ।

**स पुनरसन्निकृष्टोऽर्थो नियोगार्थ एव । †नियोगो हि प्रमाणान्तरानवगतमपूर्वमर्थमवबोधयतीति वाक्यार्थमातृकायामुक्तम् । न च नियोग एवैकस्तस्याऽवबोधकः, विषयव्यतिरेकेण तदप्रतीतेः । पदान्तराणामपि**

---

भ्यधायि । तत्र वचनस्य प्रवर्तकत्वं प्रवृत्तिहेतुभूतार्थाभिधायित्वेन युज्यते, न स्वभावतः । अन्यथा वाक्यमात्रश्रवणेन प्रवृत्तिः प्रसज्येत ।

तत्र प्रवृत्तिहेतुभूतोऽर्थः क इति विचारणायां, प्रवर्तनापरपर्याया शाब्दभावनेति कुमारिलभट्टः प्रासीसधत् । [भा. अ. २. १. १.] कर्तुस्समीहितसाधनत्वं मण्डनाचार्योऽकथयत् । कृतिसाध्यत्वसमानाधिकरणसमीहितसाधनत्वमिति वाचस्पतिमिश्रः—

"कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लोकधीः ॥" (विधि वि. श्लो. ३२) इति कारिकाव्याख्यायां न्यायकणिकायां, समन्वयसूत्रभामत्याञ्च (३१५–३१९) समर्थयामास । आप्ताभिप्रायो विध्यर्थ इत्युदयनाचार्यः । सन्ति चान्ये पक्षाः, तदुपपादनमस्मत्पूज्यपादविरचिताद्विधितत्त्वसङ्ग्रहादवगन्तव्याः । तन्निरसनपूर्वकं वृद्धव्यवहारानुगुणकार्यमेव प्रवृत्तिहेतुभूतोऽर्थ इति टीकाकारैः प्रभाकरमिश्रैश्शालिकाचार्येण च चोदनासूत्रे बृहती-ऋजुविमलादिषु व्यवस्थापितम् । तथा चायं भाष्यार्थः–प्रवृत्तिहेतुभूतार्थाभिधायकत्वेन वाक्यं प्रवर्तकमिति, प्रवर्तकस्यैव वाक्यार्थत्वात् ।

तच्च कार्यरूपम् । कार्यस्य प्रवर्तकत्वं "य एव लौकिकाश्शब्दास्त एव वैदिकास्त एव तेषामर्थाः" इति लोकवेदाधिकरणसिद्धम्, तच्च कार्यं वृद्धव्यवहारबलात्क्रियात्मकं लोकतस्सिद्धम् । वेदे तु वृद्धव्यवहाराभावात्क्रियात्मकं वा स्यात्, अन्यद्वेति संशयो जायते । स च स्वर्गकामपदसमभिव्याहारान्यथानुपपत्त्या क्रियातिरिक्तकार्यार्थत्वसम्प्रधारणेन पराक्रियते । पदार्थनिर्णयो, यववराहाधिकरणे [१. ३. ४,] सन्दिग्धे तु वाक्यशेषादि [१. ४. २२.] त्यधिकरणे च पदान्तरसमभिव्याहारबलात् प्रसिद्धः । तत्र त्वेतावान्विशेषः—यववराहाधिकरणवाक्यशेषाधिकरणयोर्वाक्यशेषः पदार्थनिर्णयहेतुः, अत्र तु स्ववाक्यस्थमेव स्वर्गकामपदं क्रियातिरिक्तकार्यरूपपदार्थान्तरनिर्णयहेतुरिति । अतोऽलौकिके कार्ये शक्तिः, लौकिके क्रियाकार्ये लक्षणा । तज्ज्ञानस्य प्रवृत्तिहेतुत्वम् । तच्च कृतिसाध्यत्वे सति कृतिनिरूपितोद्देश्यताशालित्वात् कार्यमित्युच्यते । प्रमाणान्तरागोचरत्वादपूर्वमिति ख्यायते, पुरुषं नियुञ्जानं सत् नियोग इति गीयते गुरुनये । कार्यरूपवाक्यार्थोपयोगिप्रमेयमनेकाधिकरणविप्रकीर्णत्वेन न पर्यवसितमेकत्र । अतस्संक्षेपेण तदत्र प्रदर्श्यंते । तथाहि—विषयनियोज्याभ्यां नियोगो निरूप्यते । तत्र स्वर्गकामाधिकरणे यो ममेदं कार्यमित्यवबुध्यते, स नियोज्य इत्युच्यते । अतस्स्वर्गकामो नियोज्यतया सम्बध्यत इति व्यवस्थापितम् । तस्य नियोगस्य नियोज्यविशेषणीभूतकाम्योत्पादकत्वं बादर्यधिकरणे निरणायि [मी. द. ३. १. ३]।

तच्च क्रियारूपं न भवति, तस्य क्षणिकत्वेन फलसाधनत्वायोगात् कर्मणस्तच्छक्तेर्वा स्थायित्वं न सम्भवतीति नियोज्यान्वयमुखेन प्रमाणान्तरागोचरमात्मसमवायि कार्यं लिङादि

†नियोगो-विधिश्शास्त्रमिति पर्यायस्तन्मत इति बोध्यम् ।

[1]तदन्वितस्वार्थपरतयैव व्युत्पत्तेः, तेन वाक्येनैव नियोगार्थः प्रतीयते। तत्र लिङादिप्रत्ययो [2]नियोगार्थमेवाभिदधाति, प्रकृतिस्तद्विषयम्, पदान्तराणि च विषयविशेषणं नामधेयम्, नियोज्यञ्चाभिदधति[3] सन्ति नियोगार्थप्रतीतौ व्याप्रियन्ते।

सन्निपत्योपकाराङ्गवाक्यानि च यद्यपि नियोगान्तरशून्यानि, तथापि प्रधाननियोगान्वितस्वार्थाभिधायकतया प्रधाननियोगप्रतिपत्तावेव पदान्तरवत् [4]व्याप्रियन्ते। विनियुक्तमन्त्रसमाम्नायोऽपि द्रव्यभूतं [5]मन्त्रजातं नियोगाङ्गतया समर्पयन्; तद्विशिष्टनियोगावगतावेवोपक्षीयते। नियोगाङ्गता तु योग्यतया प्रयोगकाले नौयोगिककर्म-तत्साधनस्मारणेन मन्त्रजातस्य। [6]अर्थवादा अपि विधेयस्तुतिमुत्पादयन्तस्स्तुतिविषयविधेयान्वितनियोगप्रतिपत्तिपरा एवेति; कृत्स्न एव [7]वेदोऽपूर्वे कार्यात्मनि प्रमाणम्। अत

---

भिरभिधीयत इत्यपूर्वाधिकरणे निरचायि [मी. द. २. १. २.]। देवताराधनमुखेन साधनत्वं न सम्भवतीति नावमिके देवताधिकरणे [मी. द. ९-१-४] व्युदपादि। पुरुषसंस्कारमुखेन न भवतीति तन्त्रलक्षणस्य प्रथमचरणे "कर्माण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्युरि- [मी. द. ११. १. ४.] त्यत्राऽवोचि।

कार्यञ्च कृतिसाध्यम्, कृतिश्च पुरुषप्रयत्न एव। न चासाववच्छेदकीभूतधात्वर्थमन्तरेण प्रत्येतुं शक्यत इति, भावार्थापरपर्यायधात्वर्थसम्बद्ध एव कृतिः प्रतीयत इति भावार्थाधिकरणे न्यरूपि। स च भावार्थो विषयत्वेन सम्बध्यत इति शब्दान्तराधिकरणे [मी. द. २-२-१] प्रासाधि। अत एवोक्तं भवनाथमिश्रेण—

"कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः।
कार्येऽसङ्घटिताकारे करणत्वेन सम्मतः" ॥इति॥

विषयभूतो धात्वर्थः करणं भवतीति बादर्यधिकरणे निरधारि। फलं प्रति करणीभूतस्यैव यागस्यापूर्वं प्रति विषयत्वं सर्वशक्त्यधिकरणे प्रासाधि। फलकरणत्वमौपादानिकम्, न शाब्दमिति प्रयुक्तिलक्षणे लिप्सासूत्रे[ मी. द. ४. १. २. ]ऽभ्यधायि।

अयञ्च विषयो वाक्यार्थमातृकावृत्तौ द्वितीयपरिच्छेदे शालिकाचार्येण कणेहत्य विवेचयिष्यते। अस्य विस्तरस्तत्रैव द्रष्टव्यः। तत्राऽभ्यासे विधीयमाने सर्वेषामाक्षेपाणां परिहारो भविष्यतीत्याशयेनाह—वाक्यार्थमातृकायामिति।

[1] तदन्वयीति मु. पु. पा.
[2] नियोगार्थशरीरम्, इति. मु. पु. पा.।
[3] शत्रन्तं बोध्यम्।
[4] वर्तन्त इति. मु. पु. पा.।
[5] नियोगजातं इति. मु. पु. पा.।
[6] अनुवादा इति. मु. पु. पा.।
[7] अवबोधे इति. मु. पा.।

[1]एव को वेदार्थ इति जिज्ञासमानेभ्यः 'चोदनालक्षणोऽर्थो धर्मः' [ मी. द.

---

[1] चोदनासूत्रेण धर्मस्य लक्षणप्रमाणे निरूप्य, लौकिकवाक्यदृष्टान्तेन विधिवाक्यानाम-प्रामाण्यमाशङ्कितं भाष्यकारेण—"ननु अतथाभूतमप्यर्थं ब्रूयाच्चोदना" इत्यादिभाष्येण। "विप्रतिषिद्धमिदमुच्यते ब्रवीति वितथञ्चेत्या"दिना पूर्वोक्तमाक्षेपं प्रतिक्षिप्य प्रमाणानां प्रामाण्यं स्वतः परतो वेत्युपक्षिप्य सांख्य-नैयायिक-सौगताभिप्रेतान् पक्षान् सन्दूष्य प्रामाण्यं स्वतः, अप्रामाण्यं कारणदोषबाधकज्ञानयोरायतत इति व्यवस्थापितम् ।

इदमनुपपन्नमिति टीकाकारो मेने। वृत्तिकारग्रन्थे प्रत्यक्षादिविज्ञानानां परतस्त्व-प्रतिषेधात् । उत्तरभाष्यमपि वक्तव्योपेक्षणादवक्तव्याभिधानाच्चासम्बद्धार्थम्" । इति सौगतसम्मतमर्थास्पर्शि शाब्दज्ञानमित्यभिप्रायेणैव पूर्वपक्षभाष्यं व्याख्यातम् । शब्दस्यार्था-संस्पर्शित्वशङ्कापरिहारेण सिद्धान्तभाष्यं व्याख्यातम् । प्रामाण्यविचारस्यौत्पत्तिकसूत्रे निरूप-णाच्च । अमुमर्थं न्यायसिद्धिकारो व्याख्याता व्याख्यायाँ [पृ. ६३] निरदिक्षत् ।

स्वमतेन च चोदनासूत्रं व्याचचक्षे। यद्यपि विषयो बृहतीटीकायां नोक्तः। किन्तु मीमांसाभाष्यपरिशिष्टे [पृ. ४०९] सुविशदं प्रतिपादितः। भट्टमते विचारविषयीभूतस्य धर्मस्य लक्षणप्रमाणप्रतिपादनपरमिदं सूत्रम् । प्राभाकरमते तु—सर्ववेदार्थस्य कार्यरूपता-प्रतिपादनार्थमिति स्थितिः। तत्र जिज्ञासासूत्रे चोदनासूत्रे च पठितेन धर्मशब्देन वेदार्थो विव-क्षितः। चोदनाशब्देन कार्यम् । कार्यमेव लक्षणं रूपं यस्येति विग्रहः। अयमर्थः पर्यव-स्यति कार्यरूपो वेदार्थः, न सिद्धरूप इति। इदञ्च वाक्यार्थमातृकायां शालिकाचार्येण स्फुटं विवरिष्यत इत्याह—अत एवेति ।

अत्रेदमवधेयम्—"अर्थैकत्वादेकं वाक्यं साकांक्षञ्चेद्विभागे स्यादिति [मी. द. २. १. ४२.]" सूत्रेण भगवाञ्जैमिनिरेकवाक्यताया लक्षणं वर्णयाम्बभूव। सा चार्थवादादीनां विध्यतिरिक्तवेदभागानां विधिवाक्येनैकवाक्यतेति "विधिना त्वेकवाक्यत्वादि"त्यर्थवादाधि-करणसिद्धान्तसूत्रेणेति व्यवस्थामकृत। सा चैकवावाक्यता द्वेधा पदैकवाक्यता, वाक्यैक-वाक्यता चेति। तत्र विध्यर्थवादयोः पदैकवाक्यता। अङ्गविधीनां प्रधानविधेश्च वाक्यैक-वाक्यतेति। तत्र पदैकवाक्यतेऽत्यस्यायमभिप्रायः, यद्यपि अर्थवादवाक्यं पदसमूहात्मकत्वेन वाक्यलक्षणयोगि, "तिङसुबन्तचयो वाक्यमि"ति कोशात्। तथापि वाक्यकार्यं पदार्थसंसर्गं संसृष्टपदार्थं वा न बोधयति, अर्थवादात्प्रतीयमानस्य शक्त्या कथानकस्य प्रवृत्तिनिवृत्त्यो-रनुपयोगात्। अध्ययनविधितात्पर्यानुपपत्तिप्रसूतया लक्षणया प्राशस्त्यरूपं निन्दारूपं वार्थं प्रतिपादयति। अतो वाक्यकार्यकारित्वाभावात् पदकार्यकारित्वाच्च पदस्थानीयतां भजते। पदस्थानीयस्यार्थवादस्य विधिवाक्येनैकवाक्यत्वात्पदैकवाक्यतेत्युच्यते । अतोविध्यर्थवादयोः पदैकवाक्यतेति फलति। तत्र भाष्यमते उत्थाप्याकांक्षया विध्यर्थवादयोरेकवाक्यता रक्तपट-न्यायेन। वार्तिकमते विध्यर्थवादयोरुत्थिताकांक्षया नष्टाश्वदग्धरथन्यायेन वाक्यैकवाक्य-तैवाऽभिमता। पार्थसारथिमाधवाचार्यप्रभृतिभिरङ्गीकृतेयं सरणिः। अत एवोक्तं न्यायमाला-विस्तरे—"मा भूत्पदैकवाक्यता, अस्तु तर्हि वाक्यैकवाक्यते"ति। खण्डदेवाचार्यस्तु सर्वत्र प्रकारमिममभ्युपगच्छन् "यजमानः प्रस्तर" इत्यादौ तु गौणीगर्भलक्षणया वाक्यैकवाक्यता-मातस्थे। [भा. र. पृ. २५]

१-१-२ ] इति सूत्रेण कार्यात्मा वेदार्थ इत्युक्तम् ।

अक्ताधिकरणवार्तिके वाक्यैकवाक्यताया लक्षणमानुष्टुभेन पद्येन समग्राहिभट्टैः ।

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया ।

वाक्यानामेकवाक्यत्वं पुनस्संहत्य जायते ॥ [तन्त्र वा. १. ४. १९ पृ. ] इति ।

इयञ्च "समिधो यजति" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यादौ उपकार्योपकारकाकांक्षया समिदादिभिरुपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्ग भावयेदित्येवं रूपा ।

प्राभाकरास्तु—पूर्वोक्तमेव सिद्धान्तं प्रकारान्तरेणोपपादयन्ति । तथाहि—एकवाक्यत्वं द्विविधं, प्रयोजनान्वितस्वार्थबोधकानां लिङ्पदकरणेतिकर्तव्यतानियोज्यपदानां प्रथमम् । प्रयोजनान्वितप्रतिपत्तिनिमित्तत्वमर्थवादादीनां चरमम् । तत्राद्यं यथा—लिङ्लोट-तव्य-तव्यदनीयरादिप्रत्ययाः करणाद्यन्वितं नियोगमभिधते । करणादिपदानि नियोगान्वित-करणादीन्यभिदधते । तेषां नियोग एवैकं प्रयोजनम् । नियोगश्च स्वसिद्धयन्यथानुपपत्त्या साधनानुष्ठानमाक्षिपति । नियोगेऽवगते नियोज्यविशेषस्य नियोगसाधनीभूतयागाद्यनुष्ठान-बुद्धिर्जायते, जातानुष्ठानबुद्धिश्चानुतिष्ठति । अनुष्ठानेन यागादयस्समुत्पद्यन्ते, निष्पन्नाश्च यागा अवान्तरापूर्वाणि जनयन्ति । तानि चाधिकारापूर्वापरपर्यायं परमापूर्वमित्यनेन प्रकारेण प्रयोजनभूतनियोगनिष्पत्तौ परम्परया निमित्तभूतानामेकप्रयोजनतया भवत्येकवाक्यत्वं सिध्यति ।

समिदाद्यारादुपकारकाणां समिदाद्यन्वितनियोगबुद्धिर्जायते । समिदाद्यन्वयनिर्वाहका-वान्तरापूर्वप्रतिपादकतया समिदाद्यन्वितनियोगप्रतिपत्तिनिमित्तत्वमवसीयते ।

सन्निपत्योपकारकाङ्गवाक्यस्थलिङ्ग घटकानां पदानामपूर्वतत्साधनविशेषान्वितस्वार्थ-प्रतिपादकतया तदेकवाक्यता ।

ऋत्विग्वरण—पश्वेकत्व-मुष्टीकरणादीनां अधिकारापूर्वीयपदार्थस्वरूपेणान्वयः, नाधि-कारापूर्वेण ।

एवं मन्त्रेषु किञ्चित्पदमननुष्ठेयार्थं, निर्वपत्यादिपदमनुष्ठेयार्थकम् । तेनानुष्ठेयार्थकेन निर्वपत्यादिनाऽन्तर्भावितापूर्वसाधनभावोऽनुष्ठेयार्थंपरपदार्थान्वितोऽभिधीयते । तत्रेतराणि पदानि स्वार्थान्वितापूर्वीयसाधनप्रतिपत्तिनिमित्तानि । तैर्विना प्रतियोगिसान्निध्याभावात् अन्वितापूर्वीयसाधनाभिधानानुपपत्तेः । अनुष्ठेयपदञ्च निर्वपत्यादिकं साक्षादपूर्वसम्बन्धिसाधन-मभिधत्ते । तदभिधानञ्च प्रणाल्या नियोगोपकारकमिति तेषां नियोगशब्देनैकवाक्यत्वात् ।

यानि विधिवाक्यस्थानि पदानि लाक्षणिकानि गौणानि वा तेषामपि स्वोपस्थापित-पदार्थान्वितनियोगप्रतिपत्तिनिमित्तत्वान्नियोगशब्देनैकवाक्यता ।

अर्थवादपदानि यद्यपि नान्वितनियोगं प्रतिपादयन्ति न वा नियोगान्वितस्वार्थं, तथापि विधेयानां यागादीनां कर्मणामभ्युदयविशेषनिमित्तत्वं प्रत्यवायपरिहारनिमित्तत्वं वाऽर्थवादै-र्लक्षणया प्रतिपाद्यन्ते । तच्च द्वयं कृत्युद्देशार्हतया, नियतं कृत्युद्देश्यतां स्मारयति । सा च विधिविषयत्वयोग्यताम् । कृत्युद्देशार्हतैव प्राशस्त्यम् । तथा चार्थवादगतं प्राशस्त्यं कार्य-साधनयोग्यतां, सा विधिविषत्वयोग्यताम् । ततो विधेयपदात्स्वार्थस्य विधियोगोऽवगम्यत इति विधेयपदाधीनबोधोपयोगितया विधिपदेनैकवाक्यत्वमर्थवादानामिति प्राभाकरमतनिगर्वं इत्याशयं विस्तरेणोपपादयितुमुपक्रमते "नियोग इत्यादिना स्तुतिविषयविधेयान्वितनियोगप्रति-पत्तिनिमित्तपरा" इत्यन्तेन ।

ब्रह्मसिद्धिकारस्य मतानुवादः ।

[1]ननु कथं पुनः कार्यरूप एव वेदार्थः ? यावता वेदान्तानां सिद्ध एवाऽर्थो ब्रह्मात्मकः "विज्ञानमानन्दं ब्रह्म" इति प्रतीयते। अथोच्येत व्युत्पत्त्यपेक्षश्शब्दोऽर्थमवबोधयति; व्युत्पत्तिश्च शब्दानां वृद्धव्यवहारे, व्यवहारश्च प्रवृत्तिनिवृत्त्यात्मकः कार्यप्रतीतिनिबन्धन इति कार्यप्रतिपादकतयैव शब्दव्युत्पत्तिः ।

तत्रापि कश्चिच्छब्दस्साक्षादेव [2]कार्यपरतया व्युत्पद्यते, कश्चिच्च कार्यान्वितस्वार्थपरतया । विनापि व्यवहारं सिद्धार्थप्रतिपत्तिपरादपि लौकिकवचनात्सम्भवत्येव कार्ये व्युत्पत्तिः; यथा पुत्रस्ते जात इत्यादिषु कार्यान्वयरहितेषु सिद्धार्थेष्वपि शब्देषु । अत्र हि मुखप्रसादादिभिर्लिङ्गैर्लौकैश्श्रोतुर्हर्षोत्पत्तिरनुमीयते, हर्षोत्पत्तिश्च हर्षहेतुमन्तरेण न सम्भवति; प्रियार्थप्रतीतिश्च हर्षहेतुरिति स्वात्मनि प्रतीतम्, तेन पुत्रस्ते जात इति वाक्येन प्रियोऽर्थो बोधित इति कल्प्यते । पुत्रजन्मैवास्य [3]प्रियमिति प्रमाणान्तरावगतमिति तदभिधायकत्वमेव कल्प्यते । प्रतिपदमावापोद्धाराभ्यां व्यवहार इव स्वार्थविशेषसम्बन्धाध्यवसायः ।

तथा व्युत्पन्नेतरपदविभक्त्यर्थाः काष्ठैः पचतीति [4]वर्तमानापदेशेऽपि यत् पाके [5]करणं तत् काष्ठशब्देन प्रतिपाद्यत इत्यवगम्य, प्रत्यक्षेण काष्ठानां करणभावमवगच्छन्तः काष्ठशब्दार्थे कार्यान्वयरहित एव व्युत्पद्यन्ते । किञ्चास्य शब्दस्याऽयमर्थ इत्यपि व्युत्पत्तिर्दृश्यते, न तत्र शक्यते वक्तुं कार्यान्वय्येव शब्दस्याऽर्थ इति ।

---

[1] मुद्रितपुस्तके ननु सिद्धोऽपि ब्रह्मात्मको वेदान्तानामर्थः प्रतीयत इत्येव पाठो दृश्यते । अस्य प्रकरणस्य ऋजुविमलापञ्चिकायामनुवाददर्शनात्पूर्वग्रन्थसङ्गत्यर्थञ्चायमंशो योजित इति ध्येयम् ।

इदानीं सिद्धब्रह्मपरत्वं प्रतिपादयतो मण्डनमिश्रस्य मतमुत्थापयति—नन्विति । अयं भावः—यदि लोके वृद्धव्यवहारवशाद्व्युत्पित्सोर्बालकस्य कार्ये एव व्युत्पत्तिस्स्यात्, तर्हि वैदिकवाक्यानामपि यया कयाचिद्रीत्या कार्यपरता स्वीक्रियेत । न चैवं भवितुमर्हति । किन्तु लोके व्युत्पित्सोः पुत्रस्ते जातः इत्यादौ पुत्रजन्मनि सिद्धेऽपि सङ्गतिग्रहोऽस्ति । अतस्तद्बलाद्वेदान्तवाक्यानां सिद्धब्रह्मपरत्वं नानुपपन्नमित्याशयेन शङ्कते—नन्विति ।

[2] कार्यप्रतिपादकतया इति. मु. पु. पा. । [3] उत्पन्नमिति मु. पु. पा. ।

[4] वर्तमानोपदेश इति. मु. पु. पा. । [5] कारणमिति मु. पु. पा. ।

[1]अपि च येन नाम कार्याभिधायित्वमभ्युपगम्यते, तेनापि तावदर्थान्तरान्विताभिधायित्वमभ्युपगतमेव, तावता च कार्यान्विताभिधानस्याप्युपपत्तेर्न शक्यते विशेषान्वितभिधानशक्तिः कल्पयितुम्। लोके च सिद्धार्थान्येव प्रायशो वाक्यानि प्रश्नोत्तररूपाणि दृश्यन्ते। कुशलंते, कुशलं ममेत्येवमादीनि[2]।

[3]किञ्च—कार्यमपि तदुच्यते यत् अपेक्षितोपायः, तेन सिद्धेैव कर्मणामपेक्षितोपायता कार्यपरेषु गम्यते, अतः सिद्ध एव वेदार्थ इति।

अत्रोच्यते—सर्वपुरुषाणां तावद्वृद्धव्यवहारे एव प्रथमं शब्दानां व्युत्पत्तिरङ्गीकरणीया। न खलु व्यवहारमन्तरेण सिद्धार्थान्वाख्याने व्युत्पत्तिरवकल्पते। यद्यपि मुखप्रसादादिभिर्हर्षोत्पत्तिरनुमीयते। हर्षोत्पत्त्या च हर्षहेत्ववगमः, तन्निमित्तता च शब्दस्य, तथापि पुत्रस्ते जात इति वाक्यस्य पुत्रजन्माख्यहर्षहेतुप्रतिपादकता [4]हर्षहेतूनामानन्त्याद्दुरनुमाना। न च [5]पारिशेष्येण तत्प्रतिपादकत्वाध्यवसायः, भूतभविष्यद्वर्तमानानां सन्निहितव्यवहितानां पारिशेष्येणावधारणाया अत्यन्तदुष्करत्वात्। व्यवहारः पुनः

---

[1] अपि च यो हि विशेषान्विताभिधानमिच्छति, इच्छत्येवासावर्थान्तरान्विताभिधानम्। तावता च प्रयोगप्रतिपत्त्युपपत्तौ न शक्यते विशेषान्विताभिधानकल्पना। इति. ख. पु. पा.।

[2] ब्रह्मसिद्धिनियोगकाण्डस्थमिदमनूद्यते शालिकाचार्येण, ऋजुविमला-पञ्चिकायां ब्रह्मसिद्धिकृन्मतोपन्यासतन्निरासौ द्रष्टव्यौ। [पृ. २१-२३]

[3] मूले—"इत्येवमादीनि" इत्यन्तः पाठो दृश्यते। अग्रे च 'अत्रोच्यत' इत्यादिना ब्रह्मसिद्धिकारमतमनूदितं निराक्रियमाणं दृश्यते। उपक्रमे कथं पुनरित्यादिना प्रतीयन्त इत्यनेन सिद्धपरत्वमुपक्रम्यते। अन्ते ग्रन्थस्योपसंहारादर्शनेनाऽत्रत्यो ग्रन्थसन्दर्भ उपसंहारमाकांक्षमाणस्तददर्शनेनाऽसंल्लग्नको भाति, ऋजुविमलापञ्चिकायां नयविवेकादिषु तन्मतस्योपसंहारे यो वाक्यसन्दर्भो दृश्यते, सः प्रकृतानुगुण इत्युपसंहारे सन्निवेशित इति सुधीभिरवधातव्यम्।

[4] सुभगागर्भविमोक-सुखप्रसव-शुभलग्न-जन्मादीनामिति शेषः।

[5] गौतममुनिना "अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टञ्च" इति सूत्रेणानुमानस्य त्रैविध्यमुपवर्णितम्। तत्र शेषवत्पदस्य भाष्यमाभाषमाणो वात्स्यायनमुनिश्शेषवन्नाम परिशेषः, स च प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्यय इत्याह। स एव परिशेषशब्दार्थः प्रकृते विवक्षित इति बोध्यम् (वात्स्या० भा० पृ० ७७।)।

प्रत्यक्षो विशिष्टार्थविषय एव उपलभ्यमानस्तद्बुद्ध्यनुसारेण तद्गतामेव शब्दस्य वाचकतामनायासेनापादयन् व्युत्पत्तावुपायतां गन्तुमलम्। व्यवहारश्चेद्व्युत्पत्त्युपायः, कः कार्यान्विताभिधानं शब्दानामपहरेत्? न हि [1]कार्यावगमं विना व्यवहारोऽवकल्पत इत्युक्तं वाक्यार्थमातृकायाम्। एवञ्च लोके यस्सिद्धार्थपरतया पदानां प्रयोगः, स लाक्षणिको भविष्यति। कार्यान्वयो हि परस्परं पदार्थाव्यभिचारीत्यविवक्षित्वा कार्यान्वयं परस्परपदार्थान्वयविवक्षयापि लोकाश्शब्दं प्रयुञ्जते। विवक्षाबलेन च लक्षणया तत्परतापि तत्र निर्वहति। वेदे तु [2]लक्षणानिमित्तं किञ्चिन्नास्तीति, स्वाभाविककार्यपरत्वं नापहर्तुं शक्यते।

[2]न चापेक्षितोपायतैव कार्यता, कृतिसाध्यं हि कर्यम्, साधनमुपायः। साध्यत्वोपायत्वे च भिन्ने, किन्तु क्लेशात्मकं कर्म, अपेक्षितोपायतया कार्यं प्रतीयत इति कार्यता साधनतां न व्यभिचरतीति तादात्म्यभ्रमो मन्दधियाम्। तथा च सुखं स्वयमेव कार्यं, एवं सर्वपदानां कार्यान्विताभिधायकत्वात्, यदि वेदान्तेषु कार्यं योग्यमभ्याहारादिभिर्लभ्यते, तदा कार्यर्थतैव वेदान्तवाक्यानामपि। अथ न, ततोऽनभिधायकतैव, व्युत्पत्तिविरहात्। अतो विधिनिराकरणमपि वेदान्तेषु न क्षतिमावहति। तस्मात्सिद्धं कार्य एव वेदस्य प्रामाण्यम्।

### वेदान्तानामुपासनाविधिपरत्वसमर्थनम्।

अतश्च वेदान्तानामपि "आत्मा ज्ञातव्य" इत्यपुनरावृत्तये समाम्नातेन

---

[1] प्रवृत्त्यादिव्यवहारः कार्यताज्ञानपूर्वकः लोकवेदाधिकरणसिद्धः। य एव लौकिका इत्यादिकं टीकाकृता तथैव व्याख्यातम्। अतोऽन्वयव्यतिरेकाभ्यां वृद्धव्यवहारं प्रति कार्यस्यैव प्रवर्तकता निश्चीयते।

अत एवोक्तम्—अहोबिलसूरिणा—

"अन्वयव्यतिरेकाभ्यां यतो लोके प्रवर्तकम्॥
कार्यमेव ततो वेदे तदेवेष्टं प्रवर्तकम्॥" [वा. र. प. १ श्लो. ४०] इति

शालिकनाथोऽपि लिङादिपदस्याभिधायकत्वेनैव कार्यपरत्वं, इतरपदानामपि कार्यान्वितस्वार्थाभिधायकत्वेनैव कार्यपरत्वं सेत्स्यति, अन्विताभिधानस्य सम्प्रदायतस्सप्तमाद्यसिद्धत्वाद्वाक्यार्थमातृकायामुपोद्घातात्मकप्रथमपरिच्छेदे निपुणतरं प्रत्यपीपदत्, इत्याशयेनाह—"कार्यावगमं विना" इति।

[2] अयमर्थो वाक्यर्थमातृकायां निराकरिष्यते।

विधिनैकवाक्यतामाश्रित्य कार्यपरत्वमेव वर्णनीयम् । अन्यथा सिद्धार्थप्रतिपत्तिपरत्वे व्युत्पत्तेरभावाद्वृद्धव्यवहारावगतायाः पदानामन्विताभिधायिताया एवानुपपत्तेः । कार्यपरत्वे च प्रमाणान्तरावगतात्मस्वरूपप्रतिपत्तिपरत्वेनैव वर्णनं कर्तव्यम् ।

अपि च सिद्धार्थपरत्वेऽपि शब्दस्य, न वेदान्तानां परमानन्दादिरूपत्वे ब्रह्मणः प्रामाण्यमवकल्पते । तत्र हि ब्रह्मस्वरूपानुवादेनानन्दादिविधिरास्थेयः । ब्रह्मस्वरूपञ्च प्रमाणान्तरसिद्धमेवाश्रयणीयम् । ब्रह्मन्शब्दस्य च लोके प्रमाणान्तरसिद्धात्मवाचित्वेन प्रसिद्धेर्वेदेऽपि स एवार्थः । तथा सति नित्यप्रकाशपरमानन्दरूपविधिस्सकलप्रतीतिविरुद्धः ।

सर्वप्रतिपत्तिषु हि प्रमाणस्मृतिभूतास्वात्मा प्रकाशते । न च तत्र परमानन्दस्संवेद्यते । न च सांसारिकदुःखाभिभूतत्वात्तस्याऽप्रकाशः, अभिभवानुपपत्तेः । अवच्छिन्नं हि दुःखम्, अनवच्छिन्नश्चानन्द इति, नाल्पीयसा महतोऽभिभवस्सम्भवति । स्वप्रकाशस्य चाभिभवावरणानभिव्यक्तीनामसम्भव एव । [1]अभिन्नैकात्मतत्त्वप्रतिपादनमपि [2]प्रमाणान्तरविरुद्धमेवेति वक्ष्यते तत्त्वालोके । सकलविकारशून्यतापि विज्ञानादिविकारोत्पत्तेः प्रमाणान्तरविरुद्धैवेति परस्परान्वयायोग्यतया नानन्दादिपरत्वम् । अजरामरत्वयोस्तु प्रमाणान्तरप्रसिद्धेरेवानुवादत्वादप्रामाण्यमिति ।

लौकिकशब्दस्य प्रमाणान्तरत्वशङ्का ।

[3]नन्वशास्त्रमपि शाब्दमस्ति लौकिकम्, तत्किमिति न लक्षितम् ? उच्यते—न शास्त्रव्यतिरिक्तं शाब्दमस्ति । शब्दाद्धि यद्विज्ञानमसन्निकृष्टेऽर्थे तत् [4]शास्त्रं स्यात् । न च वेदव्यतिरेकेण तत् सम्भवति; लौकिकं वाक्यं नार्थे स्वयं [5]निश्चयमुत्पादयति, लौकिकवचसामनृतभूयिष्ठत्वादर्थव्यभिचारस्य

---

[1] अभिन्नात्मत्वप्रतिपादनमिति मु. पु. पा. । [2] विरुद्धमेवेत्युक्तम् इति मु. पु. पा. ।

[3] अत्रेदं बोध्यम्—शाब्दं प्रमाणं द्विविधम्, पौरुषेयम्, अपौरुषेयञ्चेति । तत्र पौरुषेयम्—आप्तवाक्यम्, अपौरुषेयञ्च वेदवाक्यम् । इदं द्वयमप्यनाप्तप्रणीतत्वरूपदोषशून्यत्वेन स्वतश्शब्दस्यादुष्टत्वात् प्रमाणमेव । तत्र शास्त्रं प्रमाणं, न लौकिकं वचनमित्यसहमानः प्रत्यवतिष्ठते—नन्विति ।

[4] शाब्दमिति ख. पु. पा. । [5] आपादयतीति मु. पु. पा. ।

शङ्कितत्वात् । [1]नन्वेवं वैदिकमपि वचो नार्थनिश्चायकं स्यात्, शब्दोत्थापितस्याऽर्थज्ञानस्य लोकेऽर्थव्यभिचारित्वात् । अथोच्येत वैदिकाद्वचनात् स्वतस्तावन्निश्चयो जायते, पश्चात्तनस्तु संशयस्तद्विरोधादात्मानं न लभते । यथा—स्थाणौ समीपवर्तिनि स्थाणुरूपतया निश्चिते, न पुनरूर्ध्वता स्थाणुपुरुषसंशयं प्रसूते । [2]उपलब्धौ ह्यव्यवस्थितायां सन्देहो जायते । यदा च निश्चितोऽर्थः, तदोपलब्धिर्व्यवस्थितेति संशयो न युक्तः । न चाव्यभिचारनिश्चयपूर्वकं शब्दस्य निश्चायकत्वम्, येन [3]व्यभिचारनिश्चयो न स्यात् । किन्तु स्वभावत इन्द्रियवच्छब्दो निश्चयहेतुरिति, तन्न; शब्दजनितं निश्चयमेवोभयथा दृष्ट्वा यस्संशयः, स निश्चयेनैव न शक्यते निरोद्धुम् । [4]बाह्यहेत्वन्तरो हि संशयो निश्चयेन विरुध्यते । यः पुनस्तत्प्रभव एव, नासौ तेन विरुध्यते ।

तन्निरासः ।

उच्यते—युक्तस्तावल्लौकिके वचसि सन्देहः । पुरुषा हि प्रायेणाऽनन्वितार्थान्येव पदान्याशयदोषेण, भ्रमेण, प्रमादेन, अशक्त्या वा प्रयुञ्जाना दृश्यन्ते । ततश्च यद्यपि तदुक्तानां पदानामन्विताभिधानसामर्थ्यमस्ति, तथाप्यनन्वितार्थत्वशङ्कया नान्वयो निश्चीयते । कथं तर्हि लौकिकवाक्येभ्यो व्यवहारप्रवृत्तिः ? उच्यते—अर्थसंशयेनापि लोको व्यवहरति । सन्दिग्धायामपि वृष्टौ वृष्ट्यायत्तफले कृष्यादिकर्मणि प्रवर्तन्ते ।

अथवाऽस्त्येव निश्चयोपायः । यो हि पुरुष एवमवधारितो, नायमशक्तो, न प्रमादी, सम्भवदेतदर्थविषयभ्रमाभावस्सकलाशयदोषरहितश्च, नायमविज्ञायान्वयमर्थानामन्वितार्थानि प्रयुङ्क्त इति तद्वाक्यप्रयोगस्यान्वयज्ञानपूर्वकत्वादन्वयज्ञानं तावदनुमीयते । अन्वयज्ञानाच्चान्वयोऽप्यनुमीयते । ज्ञानं हि ज्ञेयाविनाभावि ज्ञेयानुमाने भवत्येव लिङ्गम् । तदेवं लौकिकाद्वचसो

---

[1] नन्वेवमपीति मु. पु. पा. ।

[2] अत्र साधारणासाधरणधर्मदर्शनाद्विप्रतिपत्तेश्च उपलब्ध्यनुपलब्ध्यव्यवस्थातः विशेषापेक्षः विमर्शः संशय इति । अक्षपादीयं संशयसूत्रं अर्थतोऽनुवदति ग्रन्थकारः उपलब्धाविति । अस्य विशेषव्याख्यानद्वयं भाट्टसम्मतप्रमाणलक्षणघटितदृढपदनिरासावसरे द्रष्टव्यम् ।

[3] व्यभिचारे इति मु. पु. पाः । [4] वाक्येति मु. पु. पा. ।

लिङ्गभूताद्वक्तृज्ञानमनुमीयते। ततोऽर्थं निश्चित्य व्यवहारः प्रवर्तते। एवञ्च निश्चितेऽन्वये निवृत्तानन्वयाशङ्काद्वाक्यादप्यर्थनिश्चयो जायते। किन्तु [१]तस्यां दशायां तद्वाक्यस्याऽनुवादकतैव। अत एव [२]लौकिकं वचनं न शाब्दं प्रमाणम्। [३]अभिप्राये शब्दो लिङ्गम्, अभिप्रायोऽप्यर्थे लिङ्गम्, शब्दस्त्वर्थे पश्चान्निश्चयं जनयन्नप्यनुवादकत्वान्न प्रमाणम्।

नन्वशक्तप्रमादिभ्रान्तदुष्टाशयपुरुषप्रयुक्तानां[४] पदानामनन्वितार्थत्वदर्शनाद् या पुरुषान्तरवचनेष्वनन्वितार्थत्वशङ्का जायते, तन्निवृत्तिमात्र एव पुरुषस्य वक्तुश्शक्तत्वाप्रमादित्वाभ्रान्तत्वशुद्धाशयत्वज्ञानं व्याप्रियताम्। अर्थनिश्चयस्तु वाक्यादेवापास्तसन्देहादस्तु। मा भूद्वक्तृज्ञानादनुमितादर्थनिश्चये जाते, वाक्यस्यानुवादकत्वमिति। उच्यते—अभ्रान्तत्वं नाम पुरुषस्य यथार्थज्ञानयोगित्वम्। आशयदोषविरहश्च यथाविदितार्थविवक्षायोगः। शक्तत्वञ्च यथाविवक्षितपदप्रयोगसमर्थत्वम्। शक्तस्यापि यथाविवक्षितार्थाविक्षेपश्चाप्रमादः, यस्यैतच्चतुष्टयमस्ति, स प्रत्ययितः। यस्यैतदवगतम्, सम्यग्ज्ञाननियतोऽस्य वाक्यप्रयोग इति। तेन तस्य तदीयवाक्यश्रवणे तद्गतसम्यग्ज्ञाननिश्चयो जायत एव। समीचीनं तज्ज्ञानमुच्यते[५], यत् अर्थाविसंवादि। [६]तच्चाविसंवादि, यस्य यथाप्रतीयमानोऽर्थोऽस्ति। तेन समीचीनज्ञाननिश्चयोऽन्तर्भावितार्थनिश्चय एवेति न संशयनिवारणमात्रे पुरुषविशेषविज्ञानं व्याप्रियते, किन्त्वर्थनिश्चय एवेति, निश्चितेऽर्थे, निवृत्ते च संशये, वाक्यमर्थनिश्चयं कुर्वदप्यनुवादकत्वान्न प्रमाणम्।

ननु तर्हि यत्र [७]वक्तृज्ञानस्याऽन्यतोऽनवगतस्याऽवगमकं पौरुषेयं वाक्यम्, तत्रैव शाब्दं प्रमाणमस्तु, न, तत्रानुमानत्वात्। वक्तृज्ञानेन हि निश्चितसम्बन्धं प्रत्ययितवचनम्। वक्ता तु धर्मी, ज्ञानविशेषयोगिता-वाक्यप्रतियोगिते तस्यैकदेशाविति। अत एव च भगवान्काश्यपो वेदान्पौरुषे-

---

[१] तस्यां दशायां अनुवादकतैवेति मु. पु. पा.।

[२] लौकिके वचने इति सप्तम्यन्तो पाठो दृश्यते।

[३] अभिप्राय इति मु. पुस्तके प्रथमान्तः पा.।

[४] अत्र दुष्टाशयप्रयुक्तानामित्येव पाठो मु. पु. दृश्यते। खपुस्तके पुरुषेति श्रवणात् स पाठोऽत्र निवेशितः।

[५] उत्पद्यत इति मु. पु. पा.।

[६] तच्चाविसंवादीति नास्ति मु. पु.।

[७] यत्रेति मु. पु. नास्ति।

यान्मन्यमानश्शाब्दमनुमानेऽन्तर्भूतमुवाच । "अस्येदं कार्यं कारणमिति" लैङ्गिकमुक्त्वा "एतेन शाब्दं व्याख्यात" [९–२–३] मिति । वक्तृज्ञानं हि कारणम्, वाक्यञ्च कार्यम् । अत एव [1]अन्यत्राप्युक्तम्—वक्तुरभिप्रायन्तु सूचयेयुश्शब्दा[2] इति । स एव [3]तथाप्रतिपद्यमानोऽर्थनिश्चयहेतुरिति ।

ननु यदि वाक्याद्वक्तृज्ञानानुमानम्, वक्तृज्ञानाच्चार्थानुमानम्, तर्ह्यनवगतेऽर्थे कथं ज्ञानविशेषोऽनुमातुं शक्यः ? [4]अर्थेनैव निराकारस्य ज्ञानस्य विशेषः । न चानिर्ज्ञातोऽर्थो ज्ञाने विशेषमापादयति । उच्यते—अनवगतेऽप्यर्थे ज्ञानविशेषोऽनुमातुं शक्यत एव । यादृशार्थप्रतिपादनयोग्यानि पदानि प्रयुक्तानि, तादृशार्थविषयं ज्ञानमनुमीयते ।

वेदस्याप्रामाण्यशङ्कानिरासौ ।

नन्वेवं वेदस्य प्रामाण्यमपास्तम् । व्युत्पत्त्यपेक्षो हि वेदे शब्दादर्थावगमः, वृद्धव्यवहारे च व्युत्पत्तिः । वृद्धवाक्यानि चेल्लिङ्गभूतानि, न तर्हि स्वार्थे प्रमाणतया व्युत्पन्नानि । उच्यते—यावद्धि [5]पदानामर्थविशेषवाचकत्वं नाश्रीयते, तावद्वक्तृज्ञानविशेषोऽपि नानुमीयते । विशिष्टाद्धि वाक्याद्विशिष्टं ज्ञानमनुमातव्यम् । न चार्थविशेषप्रतिपादकत्वादन्यो वाक्यस्य विशेषोऽस्तीत्याश्रयणीयमर्थविशेषप्रतिपादनसामर्थ्यं [6]शब्दानाम्, अर्थविशेषप्रतिपादनसामर्थ्यावधारणमेव च व्युत्पत्तिः, तावतैवाऽर्थप्रतीतिः । अनुवादकत्वेऽपि च शब्दानामस्त्येव प्रतिपादकत्वम् । वेदे च व्युत्पत्तिवशेनार्थप्रतिपत्तौ जातायां प्रामाण्यमुपपद्यत एव ।

ननु वेदेऽपि शङ्कया भवितव्यमित्युक्तम्, सत्यमुक्तम्, अयुक्तं तत्; न तावदन्वयनिश्चयानुपपत्तिर्वेदे सम्भवति । [7]अशक्त्यादिवक्तृदोषवशेन[8] ह्यनन्वितार्थप्रयोगो लोके दृष्टः । न च वेदे कर्ता पुरुषोऽस्ति, तेन तदा-

---

[1] अन्येनाप्युक्तमिति मु. पु. पा. । [2] शब्दानामिति मु. पु. नास्ति ।

[3] प्रतिपाद्यमानतया आश्रय इति मु. पु. पा. ।

[4] अर्थेनैव विशेषो हि निराकारतया धियाम्, नीतिपथोक्तमर्थतो निर्दिशति । अर्थेनैव विशेष इत्यत्राभेदे तृतीया अर्थाभिन्नो विशेष इत्यर्थः ।

[5] प्रतिपादनसामर्थ्यमिति ख. पु. पा. ।

[6] एतेषामिति मु. पु. पा. । [7] अशक्यादिति मु. पु. पा. ।

[8] कर्तृदोषवशेन इति मु. पु. पा. ।

श्रितास्तावद्दोषा अनन्वितार्थपदरचनादिहेतवो वेदे शङ्कामपि नावतारयन्तीत्यन्वयनिश्चयस्तावज्जायते । न च पौरुषेयवाक्यजन्यनिश्चयस्य व्यभिचारदर्शनात् वैदिकेऽपि निश्चये [१]व्यभिचारशङ्का, शाब्दस्य क्वचिदपि व्यभिचारादर्शनात् । लैङ्गिको हि वक्तृज्ञाननिश्चयो लोके व्यभिचारी दृष्टः । न चान्यत्र व्यभिचारदर्शनादन्यत्र व्यभिचारशङ्कोचिता । शङ्काया दर्शनमूलत्वात् । यथाभूते हि यद्दृष्टम्, तत् तथाभूत एव पुनश्शङ्कामवतारयति । अपि च लैङ्गिकस्यापि तत्र व्यभिचारो नास्ति । प्रत्ययितवचनाद्व्यप्रत्ययितवचनमपि भेदेनाऽप्रतिपद्यमानः प्रत्ययितवचने दृष्टं ज्ञानपूर्वकत्वं स्मरन्, तच्च स्मरणं ग्रहणाद्विवेकेनाऽनवबुध्यमानो ग्रहणव्यवहारं प्रवर्तयतीति, तत्र न [२]कस्यचिद्व्यभिचारः ।

वेदानां पौरुषेयत्वशङ्का ।

ननु [३]पदसङ्घातात्मकतया वेदा अपि पौरुषेया एव । पदसङ्घाता हि पौरुषेया एव दृश्यन्ते, भारतादिवत् । तथा काठकादिसमाख्यापि वेदे प्रवर्तते । न चेयं प्रवचननिमित्ता समाख्येति कल्पयितुं युक्तम्, साधारणत्वात्प्रवचनस्य । बहवोऽपि प्रब्रूयुः, कर्ता पुनरसाधारणो भवति, कृतस्य करणायोगात् । असाधारण्येन व्यपदेशा भवन्ति । यथा—वैयासिकी भारतसंहितेति । अतः पौरुषेयत्वेन वेदानाम्, तदर्थस्य प्रमाणान्तराविषयत्वात्तद्विषये वक्तुः प्रमाणाभावादनन्वितार्थत्वाशङ्का तत्पदेषु भवन्ती, केन वार्यते ?

तन्निरासः ।

उच्यते—पुरुषकृतत्वं तावद्वेदानां साक्षाद्भारतादिवन्न स्मर्यते । [४]समाख्या तु पौरुषेयी प्रमाणान्तरानुसारिणी न शक्नोति स्वयमर्थव्यवस्थां

---

[१] व्यभिचारशङ्केत्यादिः, अन्यत्रेत्यन्तः पाठो मुद्रितपुस्तके नास्ति । खपुस्तकानुसारी पाठोऽत्र न्यवेशीति ज्ञेयम् ।

[२] विचार इति मु. पु. पा. ।

[३] "वेदांश्चैके सन्निकर्षं पुरुषाख्या" इति सूत्रस्थचकारेण सूचितं वाक्यत्वहेतुकमनुमानमभिनीय दर्शयति—वेदाः पौरुषेयाः वाक्यत्वाद्भारतादिवदित्याह—पदसंघातात्मकतयेति ।

[४] अत्रेदं बोध्यम्—समाख्या योगिकश्शब्दः । सा च सामान्यप्राप्तौ सत्यां विशेषनियमे व्याप्रियते । यथा परिक्रयेणोपात्तानामृत्विजां होत्रादिपदार्थेषु अनियमेन कर्तृत्वप्राप्तौ

कर्तुम् । यदि विचारयन्तः कृतकतामेव निर्णेष्यामः, ततः करणनिबन्धना समाख्येत्यध्यवसास्यामः[१] । अथ तु यत्नेनान्विष्यन्तोऽपि पौरुषेयतां नोपलप्स्यामहे, ततः प्रवचननिबन्धनेति वक्ष्यामः । तदपि ह्यसाधारणं स्यात्, प्रकृष्टं हि वचनं कस्यचिदेव कुत्रचिदेव । तन्न तावत्पदसङ्घातात्मकत्वं पौरुषेयतामनुमापयितुमलम् ।

वेदार्थविषये पुरुषाणां वाक्यविरचनासामर्थ्यानुपपत्तेः । [२]परस्परासङ्गतार्थतया तावद्वेदा उन्मत्तप्रणीता इति न शक्यते वक्तुम् । उन्मत्तप्रणीतस्य चैयतो ग्रन्थराशेः प्रथममध्ययनं कथं प्रवर्तते ? के हि सचेतस उन्मत्तोक्तमेतावन्तं ग्रन्थराशिं महता क्लेशेनाऽधीयीरन् ? धारयेयुरध्यापयेयुश्च ? न च बुद्धादिग्रन्थवद्बुद्धिपूर्वकारिणा वक्त्रा प्रोत्साहिता महत्यप्यायासे प्रवर्तेरन्, अतो बुद्धिपूर्वकारिप्रणीता वेदा इति वाच्यम् ? न हि बुद्धिपूर्वकारी वेदान् विरचयितुमलम्, तदर्थस्य बुद्धावारोपयितुमशक्यत्वात् । प्रमाणान्तराविषयो ह्यपूर्वात्मा वेदार्थः, स प्राग्वेदवचनेभ्यो बुद्धिस्थतामापादयितुमशक्यः ।

बुद्धवचसामपौरुषेयत्वशङ्कानिरासौ ।

ननु बुद्धादिवचनान्यप्येवमेवापौरुषेयाणि स्युः, न, तेषां साध्यसाधनभावस्य कल्पयित्वापि बुद्धावारोपयितुं शक्यत्वात् । ज्योतिष्टोमादिषु दृष्टं स्वर्गसाधनत्वं, चैत्यवन्दनादावारोपयितुं शक्यते । अपूर्वन्त्वपूर्वत्वादेवारोपेणापि नावतरति । अथ कथं तुल्येऽपि लिङादिप्रयोगे बुद्धादिवचनानि साध्यसाधनभावमात्रपराणि, न वेदवाक्यानि ? उच्यते—बुद्धादिवचनानि तावत् साक्षाद् दृष्टकर्तृपुरुषाणि, तेन यदेव पुरुषाः प्रमाणान्तरेण बुद्धिस्थीकर्तुमीशते, अतस्तद्विवक्षाप्रयुक्तान्येवेति निश्चीयते । पुरुषाश्च नापूर्वं बुद्धौ निवेशयितुमलम्, साध्यसाधनभावं त्वन्यत्र दृष्टं बुद्धीस्थीकृत्य [३]वाक्यं विरचयितुं क्षमन्ते । वेदेषु तु साक्षात्कर्ता नोपलब्धः । तेन स्वमहिमानुसारेण

---

आध्वर्यवादिसमाख्यया नियमः क्रियते । न तथेह वेदानां कर्तृमात्रं प्राप्तम्, येन काठकादिसमाख्यया कठादयो वेदकर्तृत्वेन नियम्येरन् । अपि च समाख्या प्रवचननिमित्तत्वेनोपपन्ना नैकान्तेन कठादीनां कर्तृत्वं नियन्तुं प्रभवतीत्यशयमाविष्करोति—समाख्येति ।

[१] अध्यवस्याम इति मु. पु. पा. । [२] संहतार्थतयेति मु. पु. पा. ।

[३] वाक्यमिति मु. पु. पाठो नास्ति, ख पुस्तके दृश्यते । अतो मूले निवेशित इति ध्येयम् ।

तावदर्थो बोद्धव्यः । [1]न चापूर्वात्मको वेदार्थः प्रमाणान्तरेण प्रतीयते । अप्रतीते च तस्मिन् न शक्तता तद्विषयवाक्यरचने बुद्धिपूर्वकारिणामिति, पौरुषेयत्वं नानुमीयते । य एव हि पदसङ्घाताः [2]पुरुषैर्विरचयितुं शक्यन्ते, तत्रैव पौरुषेयत्वं दृष्टमित्यशक्यविरचनेषु पौरुषेयत्वानुमानं न क्रमते । न च पौरुषेयत्वं विना पदसंघातात्मकतैव नोपपद्यते । उच्चारणवशेन हि पदानि संहततामापद्यन्ते । तच्चोच्चारणमुच्चारणान्तरपूर्वकं वा स्यात्, स्वबुद्धिप्रभवं वा । दृश्यते ह्यन्येनापि प्रयुक्तमन्येनाधीयमानं भारतादिवत्, यथा अद्यतनाः पुरुषा भारतादिकमुच्चारणान्तरदर्शनपूर्वकमधीयते, तथा वेदानपि सर्वपुरुषा एवेति किमनुपपन्नम् । अतस्सिद्धमपौरुषेया [3]वेदा इति । अपौरुषेयाश्चेन्नास्ति प्रमाणान्तरापेक्षा प्रत्यक्षवत् । अतः प्रमाणमनपेक्षत्वा-दित्युक्तम्[4] ।

चित्राक्षेपः ।

[5]ननु "चित्रया यजेत पशुकामः" [तै. सं. २. ४. ६. १] इत्यादिचोदनाः पश्वादिफलानुबद्धस्वार्थं बोधयन्ति । न च कर्मानन्तरं फलमुपलभ्यते । न च कालान्तरे फलं भविष्यतीति [6]शक्यते वक्तुम् । तदानीं कर्माभावात् । अतः प्रमान्तरबाधादप्रमाणमिदं शास्त्रम् ।

तत्परिहारः ।

उच्यते—न तावच्छास्त्रेणानन्तरभावितया फलं श्राव्यते, येनानन्तर-फलादर्शनेन बाधस्स्यात् । न च कालान्तरे कर्माभावात्फलोत्पादासम्भवः, कालान्तरावस्थायिनोऽपूर्वादेव फलोत्पत्त्यवगमात् । न च कालान्तरे प्रति-

---

[1] स चेति मु. पु. पा. । [2] पौरुषेयैरिति मु. पु. पा. । [3] वेदा इति मु. पु. पा. ।

[4] औत्पत्तिकसूत्रे अनपेक्षत्वादिति पदेनेतिशेषः । अत्रेदं बोध्यम् । प्रमाणानां प्रामाण्यं स्वतः परतो वेति चोदनासूत्रेण वार्तिककृता परपक्षनिरसनपूर्वकं स्वाभिमतं स्वतः प्रामाण्यमप्रामाण्यञ्च कारणदोषबाधकाभ्यां परत इति सप्रपञ्चं प्रपञ्चितः । गुरुमते तु औत्पत्तिके सूत्रे स्वतः प्रामाण्यं व्यचारीति संप्रदायः । प्रभाकरमते सविषयकज्ञानस्य स्वप्रकाशत्वाभ्युपगमेन तेनैव प्रामाण्यं गृह्यते इत्यन्यत्र विस्तरः ।

[5] "अथ यदुक्तमनिमित्तं शब्द" इति भाष्योक्तमाक्षेपमिष्टेरनन्तरं फलादर्शनेन चित्रेष्ट्यादिविषयं संक्षेपेण दर्शयति—नन्वित्यादिना ।

[6] शक्यमिति मु. पु. पा. ।

ग्रहादिकारणान्तरदर्शनमपूर्वस्य फलसाधनतां बाधते। कामं प्रमाणद्वयसमर्पितमुभयं फलसाधनमस्तु—शास्त्रेणाऽपूर्वं फलसाधनमवबोधितम्, प्रत्यक्षादिभिः प्रतिग्रहादिकम्। न च कालान्तरभाविनि फले कर्तुर्भोक्तृत्वमनुपपन्नम्, नित्यत्वात् [1]पुरूषस्य। बुद्धीन्द्रियशरीरेभ्यो हि भिन्नः पुरुषः कर्मणां[2] कर्ता। स च नित्यतया कालान्तरभावीन्यपि फलानि भोक्तुमलमिति, न प्रमाणान्तरबाधादपि शास्त्रस्य प्रामाण्यमाक्षेप्तुं शक्यम्।

स्मृतेर्नित्यानुमेयवेदमूलत्वनिरूपणम्।

[3]अत्रापि शिष्टिश्शास्त्रमिति ज्ञानम्, शास्त्रम्—शिष्यतेऽनेनेति तु शब्दः। स च द्विविधः—प्रत्यक्षोऽनुमेयश्च। किं पुनश्शब्दानुमाने लिङ्गम्? "अष्टकाः कर्तव्या" इति [4]स्मृतिवचनम्। कथम्? इयं तावत्स्मृतिस्त्रैवर्णिकैरेवाऽविगानेन परिगृहीता। न च निर्मूलायाः परिग्रह उपपद्यते। मूलञ्च प्रत्यक्षादि न सम्भवति, तस्य कार्यविषयत्वाभावात्। स्मृतौ चापूर्वकार्यावगमात् शास्त्रं सम्भवति मूलम्। ननु तदपि मूलं नावकल्पते। प्रयत्नेनाप्यालोच्यमानस्याऽनुपलम्भात्। न चानुपलब्धश्शब्दोऽर्थमवबोधयति। न चार्थमनवगमयन्मूलं भवितुमर्हति। [5]उच्यते—सत्यम्,

---

[1] पुंस इति मु. पु. पा.।

[2] "बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः।
नानाभूतः प्रतिक्षेत्रमर्थवित्तिषु भासते"। इति।

पद्यव्याख्यामिषेण मतान्तरनिरसनपूर्वकं प्रभाकरमतेनात्मस्वरूपं तत्त्वालोके वक्ष्यते। तदेवात्रानागतावेक्षणन्यायेन दर्शयति—कर्तेति।

[3] अत्रेदमवधेयम्—शास्त्रशब्दस्य प्रमाणशब्दवत् द्वेधा व्युत्पत्तिः भावव्युत्पत्तिः करणव्युत्पत्तिरिति। तदेव क्रमेण दर्शयितुमुपक्रमते—अत्रापीति। अत्रत्यो विशेषो [टि. पृ. १९२] द्रष्टव्यः।

[4] वचनमित्येव मु. पु. पा.।

[5] "अष्टकाः कर्तव्या" इत्यादीनां पौरुषेयीणां स्मृतीनां वेदमूलकत्वकल्पनेन प्रामाण्यमिति भाट्टमीमांसकानां प्राभाकरमीमांसकानां समानमेव। परं तत्प्रतिपादनशैली भिद्यते। स्मृतीनां प्रत्यक्षादिमूलकत्वं, उत्सन्नवेदशाखामूलत्वं, नित्यानुमेयवेदमूलत्वं कल्पितवेदमूलत्वं वेति चत्वारः प्रायशः पक्षाः प्रसरन्ति। तत्र तौतातितमतानुसारिणः—आद्यपक्षत्रयं प्रतिक्षिप्य चरमपक्षमभ्युपगच्छन्ति। तेषामयमाशयः—

प्रत्यक्षसूत्रे प्रत्यक्षस्य विद्यमानार्थग्राहित्वेन धर्मस्य भावित्वेन प्रत्यक्षस्य धर्माधर्मयोः प्रामाण्यं न सम्भवति। प्रत्यक्षपूर्वकत्वादनुमानादीनां प्रामाण्यं सुदूरमपसारितम्।

न द्वितीयः पक्षः—महाभाष्यकृता पतञ्जलिमुनिना वेदशाखानां परिगणितत्वात्,

**वयमिव मन्वादयोऽपि तच्छास्त्रं प्रत्यक्षं नोपलभन्ते । [१]अनुमानन्तु तेषामप्यस्माकमिव सम्भवति । स्मृत्यन्तरं हि महाजनपरिगृहीतं दृष्ट्वा, ते पि तत्कर्तुस्स्मृत्यन्तरानुमितं शास्त्रं मूलभूतमनुमातुं शक्नुवन्तीत्येवमनादित्वात्स्मृतिपरम्पराया लिङ्गभूतायास्सम्भवान्नानुमानविघातः ।**

---

वैदिकैर्मात्रामात्रात्यागेन परिपाल्यमानानां वेदवाक्यानामुत्सादकल्पना विचारर्चचितचेतसां न मनोऽनुरञ्जयति ।

न तृतीयः—स्मृतेर्मूलभूतानि वेदवाक्यानि यथाऽस्माकमप्रत्यक्षाणि, एवं मनोरप्य—प्रत्यक्षाणीति कल्पनं न युक्तिमत् , अन्धपरम्परान्यायात् ।

अतो मूलान्तरासम्भवाद्वेदमूलकत्वं स्मृतिरूपकार्यान्यथानुपपत्या कल्प्यते । तत्र मन्वादिभिर्मूलभूतानि वेदवाक्यान्युपलब्धानि । ततोऽर्वाचीनानामध्येतॄणान्तूत्सादेन वेदवाक्यान्युत्सन्नानि । अतोऽर्वाचीनैर्वेदवाक्यानि नोपलभ्यन्ते । वेदमूलकत्वकल्पनेन स्मृतीनां प्रामाण्यमित्यातिष्ठन्ते भाट्टमीमांसकाः । अत्र भाष्यमतेऽनुमानस्य सर्वलोकप्रसिद्धस्य ग्रहणम्, वार्तिकमते तु—अनु—पश्चान्मानम्—अनुमानमिति व्युपत्त्याऽर्थापत्तिर्विवक्षिता विस्तरस्तु वार्तिके इति ।

प्राभाकरमीमांसकास्तु—स्मृतिलिङ्गेन मूलभूताश्श्रुतीः कल्पयन्ति । यथा लिङ्गादिभिः श्रुतिः कल्प्यते, सा श्रुतिः कदापि कस्यापि न प्रत्यक्षा । किन्तु सर्वदाऽनुमेयैव भवति, तथा स्मृतिलिङ्गेन कल्प्यमानाश्श्रुतयोऽनुमेया एव । तत्र मन्वादीनां प्राचामर्वाचीनानाञ्च न कश्चिद्विशेषः । अतो यथाऽस्माकं लिङ्गेनानुमेयाश्श्रुतयः, तथैव मन्वादीनां स्मृत्यन्तरेणानुमेयाः, एवं ततः परमपि, न तु केनापि स्मृतीनां मूलभूताश्श्रुतयो दृष्टा इति सर्वदा स्मृतीनां नित्यानुमेयश्रुतिमूलत्वमिति समर्थयन्ति, अवशिष्टपक्षत्रयनिराकरणेन ।

[१] अत्रेदं—बोध्यम् मन्वादिस्मृतीनां नित्यानुमेयवेदमूलत्वेन प्रामाण्यमित्युक्तम् । तत्रेदमनुमानं बोध्यम्—अष्टकादिस्मृतयो वेदप्रमापूर्वका अनादिकालप्रवाहायातनिर्विचिकित्सशिष्टानुष्ठीयमानार्थत्वे सत्यपूर्वकार्यपरपौरुषेयवाक्यत्वात् सूत्रकारादिवाक्यवदिति । अतः माऽभूत्प्रत्यक्षो वेदो मूलमष्टाकादिस्मृतीनाम् । परोक्ष एव तु वेदो मूलं भविष्यति । आद्यस्य स्मृतिकारस्य कथं वेदावगतिरिति न शङ्कनीयम् । नास्त्याद्या स्मृतिरनादित्वात्स्मृतिपरम्परायाः । ननु स्मृतिपरम्पराया अनादित्वं कथमवगम्यते ? इति चेदुच्यते—अनुमानमेव । पूर्वपूर्वस्मृतिकाराः पूर्वपूर्वस्मृतिलिङ्गवशेनाष्टकादिश्रुतिमुपलब्धवन्तः अष्टकादिस्मृत्यवगतिमत्पुरुषत्वात्, अस्मद्वत् इति । नन्वेवं सत्यन्धपरम्परा स्यात् पूर्वप्रमाणापेक्षामात्रान्नान्धपरम्पराप्राप्तिः । पुरुषवाक्यं श्रुत्यनुमाने लिङ्गतयोपयुज्यते, न व्यापारतया । न च लिङ्गं स्वव्यतिरिक्तप्रमाणपरिच्छिन्नत्वावधारणाधीनं शङ्कानिरासमपेक्षते । तस्मान्नान्धपरम्परा ।

अयञ्च नित्यानुमेयवेदमूलत्वपक्षो भट्टवार्तिके उपन्यस्य निरस्तः । यथा—"यत्तु किमर्थं चोदना नोपलभ्यत इति तत्र केचिदाहुः । नित्यानुमेयास्ता न कदाचिदुच्चार्यन्ते ।

शब्दार्थसम्बन्धवत्। यथा हि—वृद्धव्यवहारदर्शनेन प्रयोज्यवृद्धस्याऽर्थप्रतिपत्तिं प्रकल्प्य, तस्याश्च शब्दश्रवणानन्तरभावित्वेन शब्दस्य तत्कारणतां प्रतीत्य, कथं पुनर्ममाऽप्रतिपादकश्शब्दोऽस्याऽर्थप्रतिपादकः ? इति च वितर्क्य, पुनस्स्वयं ततश्शब्दादर्थमवगम्य, अर्थप्रतिपादकत्वेनाऽवगतश्शब्दोऽर्थमवबोधयतीति निश्चित्य, वृद्धस्याऽर्थप्रतिपत्तिसामर्थ्यं कल्पयित्वा, स कथमनेन वृद्धेनाऽर्थप्रतिपादकतया शब्दोऽवधारित इति विचिन्त्य, नूनमस्यापि वृद्धव्यवहारान्तरदर्शनमेव व्युत्पत्त्युपायभूतं ममेव वृद्धान्तरस्याप्यपरवृद्धव्यवहारान्तरदर्शनमेवेत्यनादिवृद्धव्यवहाररूपलिङ्गपरम्परां परिकल्प्य, लोको व्युत्पद्यते। तथा स्मृतिपरम्परामनादिमेव कल्पयित्वा शास्त्रानुमानमपि कुर्वन्ति। न चानुमितस्य शास्त्रस्याऽर्थप्रतिपादकत्वमनुपपन्नम्, लिप्यनुमितिवत्। सर्वदा च तस्याऽश्रवणम्, अनाम्नातत्वात्। अनाम्नानमेव कस्मादिति चेद्, आचार्यैरनाम्नातत्वात्। तदपि कथमिति चेत् ? आचार्यान्तरैरनाम्नातत्वादिति, नित्यवदनाम्नानमपि न दोषः। न च तस्याऽशब्दत्वम्, वर्णात्मकत्वात्। प्रत्येकञ्च वर्णानां श्रोत्रेन्द्रियग्राह्यत्वात्। वेदत्वञ्च तस्याप्यपौरुषेयवाक्यरूपत्वात्, तन्मात्रवर्तित्वाच्च वेदशब्दस्य। तस्मादनुमेयमपि शास्त्रमस्ति।

शास्त्रेऽध्याहारनिरूपणम्।

प्रत्यक्षमपि शास्त्रं किञ्चिदध्याहारापेक्षम्। यथा "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती"ति पिण्डपितृयज्ञादिशास्त्रम्, 'वैकृतप्रयोगशास्त्रञ्च[2]

पिण्डपितृयज्ञादौ हि नियोज्यपदाश्रवणादपरिपूर्णं वाक्यम्। ननु

---

यथा लिङ्गादिकल्पिताः। कथमनुच्चारितानां मूलत्वोपपत्तिरिति चेत्। नैष दोषः। पाठाविच्छेदवत्पारम्पर्येण स्मरणात्तत्सिद्धेः। यथैव हि ग्रन्थस्सम्प्रदायाविच्छिन्नोऽस्तित्वं भजते, तथैव प्रतिज्ञया नित्यानुमेयश्रुतिसम्प्रदायाविच्छेदसिद्धिः। तत्त्वयुक्तम्। अन्धपरम्परान्यायादेव। या हि चोदना न कदाचिदुच्चार्यते, तस्यास्सर्वपुरुषप्रत्यक्षादिप्रसराभावाद्दुर्लभतरमस्तित्वम्" [तं. वा. १. ३. १.]। इति।

कुमारिलभट्टोक्तान्दोषानुद्धृत्य नित्यानुमेयश्रुतिमूलत्वपक्षस्स्थिरीकृतः पञ्चिकाकृता। तस्य निरासश्शास्त्रदीपिकायां स्मृत्यधिकरणे विस्तरेण कृतः पार्थसारथिनेत्यलमतिप्रसङ्गेन।

[1] अस्योदाहरणमनुपदमेव दर्शयिष्यते—विकृतिषु प्राकृतोपकारस्याऽध्याहारः कर्तव्य-इत्यादिना वक्ष्यत इति बोध्यम्।

[2] वैदिकशास्त्रञ्चेति मु. पु. पा.।

पदानामन्विताभिधायित्वेन व्युत्पत्तेर्भवत्वेकपदप्रयोगेऽन्विताऽर्थान्तरापेक्षत्वादन्विताभिधानस्य, तदसिद्धावपरिपूर्णता, अनेकपदप्रयोगे त्वन्विताभिधानस्य सिद्धत्वात्किन्निबन्धनमपरिपूर्णत्वम् ? उच्यते—अत्राप्यभिहितार्थस्याऽनुपपत्त्या भवत्येवाऽपरिपूर्णता । अत्रापि लिङादिभिरपूर्वं कार्यरूपमभिधीयते । न चानुष्ठानमन्तरेण कार्यरूपता निर्वहति । न च कर्तारमन्तरेणानुष्ठानोपपत्तिः । न चाधिकारमप्रतीत्य कर्मणि कर्तृतां प्रतिपद्यन्ते । कर्मणि चाधिकारो नियोगार्थे नियोज्यस्याऽवकल्पते । यो हि ममेदं कार्यमिति प्रतिपद्यते, स स्वकीयकार्यसाधनं कर्म स्वार्थतया प्रतिपद्यमानोऽधिकारी स्यादिति, नियोज्याश्रवणे कार्यत्वानिर्वाहादुपपन्नमपरिपूर्णत्वम् । अतो लोके अपरिपूर्णवाक्यपरिपूरकतयाऽवधारितोऽध्याहारो वेदेऽप्याश्रीयते ।

अध्याहारस्वरूपकथनम् ।

कः पुनरध्याहारो नाम ? [1]अधिकस्यार्थस्य बुद्धौ निवेशनम् । बुद्धौ सन्निहितेन[2] तेन श्रूयमाणशब्दस्स्वार्थमन्वितमभिधत्ते । तस्य तु विशेषावगतौ[3] योग्यत्वं, लाघवञ्च कारणम् । तथा हि—

यद्यपि जीवनमन्तरङ्गं नित्यञ्च । तथापि तस्मिन्नियोज्यविशेषणे समाश्रीयमाणे विधेरपरमनुष्ठानाक्षेपकत्वं [4]कल्पनीयम् । काम्ये त्वधिकारविशेषणे तदर्थितयैव प्रधाने प्रवृत्तेः, विधेरनुष्ठानाक्षेपकत्वकल्पना न कर्तव्या । यद्यपि चोपात्तदुरितक्षयोऽपि पुरुषैरिष्यते [4]शङ्कित्वा दुःखहेतुत्वं दुरितस्य, तथापि तस्योपात्तदुरितसत्तासापेक्षत्वाद्गौरवम् । तस्मात्सकलपुरुषाभिलषणीयं सकलदुःखसम्भेदरहितं सुखं स्वर्गपदाभिधेयं नियोज्यविशेषणं कल्प्यते ।

स्वर्गपदार्थनिरूपणम् ।

कथं पुनस्तादृशसुखवाचकता स्वर्गशब्दस्याऽवसीयते ? उच्यते—†"ज्योतिष्टोमेन स्वर्गकामो यजेत" [आ. श्रौ. सू.] इत्येवमादिसमाम्नाते[5]

---

[1] अधिकत्वस्येति मु. पु. पा । [2] सन्निहिते इति मु. पु. पा. ।

[3] विशेषावगत इति मु. पु. पा. ।

[4] शङ्कित्वेत्यादिः दुरितस्येत्यन्तः पाठो मुद्रित-पुस्तके नास्ति ।

[5] समाम्नायमिति. मु. पु. पा. ।

†ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र विधिवाक्ये स्वर्गशब्दः पठ्यते । तत्र स्वर्ग-

सकलदुःखसम्भेदरहिताभिलाषोपनीतदीर्घतरसुखसाधनत्वेनार्थवादैस्स्तूयमानं कर्म दृश्यते। स्वर्गशब्दोऽपि लोके कस्मिंश्चिदर्थे श्रौत्या वृत्त्या प्रयुज्यमानो न[1] दृश्यते। योऽप्यस्य चन्दनादौ प्रयोगः, सोऽपि प्रीत्युत्पादकस्य प्रीत्यपगमे तत्रैवाऽप्रयोगात्प्रीतिसाधनवाचकत्वकल्पनेऽपि, प्रीतेरपि वाच्यत्वाश्रयणात्प्रीतिमात्रवाचकस्य तत्साधने लक्षणयापि प्रयोगोपपत्तेर्लाक्षणिक एव। तत्र यदि विध्युद्देशगतस्स्वर्गशब्दस्तथाविधे सुखे वर्तते, ततोऽर्थवादानां मुख्यैव वृत्तिः स्तुतावपि स्यादिति तादृशसुखवाचकता स्वर्गपदस्या-

---

शब्दार्थः क इति विचारणा जायते। स्वर्गशब्दस्सुखसाधने, स्थानविशेषे, सुखविशेषे, च प्रयुक्तो दृश्यते। तत्र एकत्र शक्तिः, अन्यत्र लक्षणया प्रयोग इति वक्तव्यम्। शाबरभाष्ये स्वर्गकामाधिकरणे स्थानविशेषे स्वर्गशब्दो विशिष्टे देशे लोके प्रसिद्ध इत्याशङ्क्य निरतिशयप्रीतिविशेषवाचित्वं सिद्धान्तितम्।

कुमारिलभट्टस्तु—स्वर्गब्दो नक्षत्रदेशः, वैदिकप्रवादपौराणिकयाज्ञिकदर्शनेनोच्यते। तथा हि—वेदे "ये हि पुण्यकृतो जनास्स्वर्गं लोकं यन्ति तेषामेतानि नक्षत्राणि ज्योतींषि। यथैषज्योतिरिमं लोकं जयति" इति। यदि वेतिहासपुराणोपपन्नं मेरुपृष्ठमिति मतान्तरेण स्वर्गपदार्थमुपवर्ण्य, अथवाऽन्वयव्यतिरेकाभ्यां विभक्तं केवलमेव सुखं यत्संवत्सरादिष्वनुभूयमानं दुःखसाधनशीतोष्णक्षुत्पिपासादिसमस्तद्वन्द्वरहितमिति निरतिशयप्रीतिविशेषमेव स्वर्गपदाभिधेयं वर्णयामास।

शङ्करभगवत्पादास्तु स्वर्गलोकशब्दस्त्रिविष्टवाच्यपि सन्निह ब्रह्मविद्याप्रकरणात् मोक्षस्याभिधायक इति वदन्तो भट्टमतमनुवर्तन्त इति निश्चप्रचमेव।

एतेनाऽप्यय्यदीक्षितेन्द्रैः परिमले निरतिशयब्रह्मानन्दवाचकस्य स्वर्गशब्दस्य स्वर्गकामादिवाक्येऽनेकमन्त्रलिङ्गाद्यवगतनाकपृष्टभोग्यसुखविशेषे लक्षणेति यदुक्तं तन्निरूढम् [वे.द.४.३.५.]

यन्न दुःखेनेत्याद्यर्थवादवाक्यं न स्वर्गलक्षणपरं, विशेषणचतुष्टयव्यावर्त्याभावात्, स्वरूपकथनपरमिति शङ्करभट्टो मीमांसाबालप्रकाशे बभाषे।

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्"॥

इत्यादीनां न प्राशस्त्याप्राशस्त्यलक्षकत्वम्, किन्तु विधिनिशेधापेक्षितस्वर्गस्वरूपपरत्वमेव। [मी. कौ. मन्त्राधि. पृ. २९] इति खण्डदेवाचार्यो बभाषे।

एतेन शाब्दिकशिरोमणेर्नागेशभट्टस्य मञ्जूषास्थं व्याख्यानं गर्भस्रावेण गतम्। अतो विशिष्टवाचकानां विशेषणे शक्तिरिति न्यायेन निरतिशयप्रीतिवाची स्वर्गशब्दः मन्त्रार्थवादेतिहासपुराणप्रामाण्याद्भोगयोग्यदेशविशेषवाचित्वं वेति प्रघट्टकार्थः।

इदं भट्टवार्तिकमिति केचिन्मन्यन्ते, स्मृतिरिति विज्ञानभिक्षवः, परिमलभाट्टकौस्तुभादिषु प्रामाणिकग्रन्थेषु श्रुतित्वेन व्यवहारदर्शनादर्थवादरूपा श्रुतिरिति वयं मन्यामहे।

[1] नेति पाठो नास्ति. मु. पु.

श्रीयते, चन्दनादिष्वपि यो लाक्षणिकः प्रयोगः, सोऽपि प्रशंसार्थः सुतरां [1]तथाविधसुखसाधनत्वाभिप्रायेणोपपद्यते[2] । तथा च यावत्तावत्सुखसाधने स्वर्गशब्दं न प्रयुञ्जते, किन्तु [3]निरतिशयप्रीतिविशेषे, स्वर्गपदाभिधेयसुखसम्भवे चोक्तेन न्यायेनाऽऽम्नाय एव प्रमाणम् । तदन्यथानुपपत्त्या च तदुपभोगयोग्यदेहदेशसद्भावाक्षेपोऽपि[4] नानुपपन्नः । सामान्यतोदृष्टानुमानन्तु न नियोज्यकल्पनायां प्रमाणम्, अध्ययनविध्यादौ[5] व्यभिचारदर्शनात् । विध्यन्तरप्रयुक्त्या चानुष्ठानलाभादपरिपूर्णतापि नास्ति ।

विकृतौ प्राकृतोपकारोपदेशवर्णनम् ।

विकृतिषु[6] तु करणोपकारजनकपदार्थवर्गाणामनाम्नानात्तद्व्यतिरेकेणोपकारासम्भवात्तदभावे करणस्य कार्यसाधनासमर्थत्वात्कार्यस्य कार्यत्वानिर्वाहादपरिपूर्णत्वे सति परिपूरणार्थमध्याहारः कर्त्तव्यः, तत्र तावत्स्वतन्त्रपदार्थाध्याहारो नोपपद्यते, विशेषावगमे कारणाभावात् । करणोपकाराध्याहारेऽपि प्रकृतिवदपरिक्लृप्ताध्याहारे पुनरपि पदार्थानामभावे निर्वाहासम्भवात्प्राकृतोपकाराध्याहारः कर्तव्यः । तत्रापि प्रकृतीनां बहुत्वाच्चोदनालिङ्गसामान्यात् यत् बुद्धौ सन्निधीयते, तदीयोपकाराध्याहारो युक्तः । तदध्याहारे तथैवाऽपरिपूर्तेः पदार्थाकाङ्क्षायां तदुपकारोपस्थापितैः पदार्थैरन्विताभिधानम् । यद्यपि चासावुपकारः प्राकृतस्तत्तत्पदार्थजन्यतया निर्ज्ञातः, तथाप्यपूर्वप्रयुक्तत्वात्पदार्थानां प्राकृतापूर्वसम्बद्धस्यैव सतस्तस्योपकारस्यैते पदार्था जनकाः,

---

[1] तद्विधेति मु. पु. पा. । [2] आपादनेनेति मु. पु. पा. ।
[3] सातिशयेति मु. पु. पा. । [4] संभवाक्षेप इति ख. पु. पा. ।
[5] अध्यापनादाविति मु. पु. पा. ।

[6] अत्रेदं बोध्यम् प्राकृतस्योपकारस्य विकृतावतिदेशः, तत्पृष्ठभावेनोपकारजनकीभूतानां पदार्थानामतिदेश इति भाट्टमीमांसका आशेरते । प्राभाकरास्तु प्राकृतस्योपकारस्योपदेशेनैव विकृतावन्वयः, पदार्थानान्त्वतिदेशेनेत्यभ्युपगच्छन्ति । अतः प्राकृत उपकारो विकृतावध्याह्रियत इति । अयमर्थः—अतिदेशपारायणे ग्रन्थकृता प्रपञ्चयिष्यते । तथा चेमौ श्लोकौ—

"विकृतौ ये पदार्थानामतिदेशं न मन्वते ।
उपकारोपदेशञ्च, तेषामुत्तरमुच्यते ॥१॥
प्राकृतेनोपकारेण पदार्थैश्च वैकृतः ।
प्रयोगविधिना स्वेन विधिरन्वित उच्यते" ॥२॥ इति ॥

नापूर्वान्तरसम्बद्धस्येति, सम्प्रति वैकृतापूर्वसम्बन्धमुपगतः करणोपकारो न तत्पदार्थजन्यतयाऽवसीयत इत्यस्ति तज्जनकपदार्थापेक्षेति, पूर्वप्रतीतसम्बन्धेनोपकारेणोपस्थापितैः पदार्थैरन्वितो वैकृतो विध्यर्थस्स्वशब्देनाभिधीयते ।

उपमानस्यानतिदेशकत्वनिरूपणम् ।

उपमानन्तु [1]प्राकृतोपकारपदार्थसम्बन्धे न प्रमाणम्, सादृश्यमात्रविषयत्वात् । अतोऽध्याहारापेक्षमपि प्रत्यक्षशास्त्रम् ।

शास्त्रस्य न्यायसापेक्षत्वनिरूपणम् ।

तथा प्रत्यक्षमपि शास्त्रं वचनव्यक्त्यवधारणाय न्यायसापेक्षम्[2] । यावद्धि [3]न्यायानुसारेण वचनव्यक्त्यवधारणं न क्रियते, न तावत्समीचीनार्थबोधोत्पादनक्षमं शास्त्रम् । तथा हि—"उद्भिदा यजेत पशुकामः" [ता. ब्रा. ११. ७. २. ३] इति गुणविधिः, उत नामधेयम् ? इति सन्देहे, न्यायाभासापादितगुणविधिनिराकरणं सम्यङ्न्यायानुसारेण कृत्वा, नामधेयाध्यवसानेन [4]वचनव्यक्तिनिर्धारणं यावन्न क्रियते, तावत्समीचीनवाक्यार्थबोधो नास्तीत्यनेन मार्गेण न्यायसापेक्षं शास्त्रम् । अत एवेतिकर्तव्यताभूता वेदस्य स्वार्थमवबोधयतो मीमांसा ।

तथा चाहुः—

धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥ बृहट्टीका ॥ इति ॥

[5]कियत्पुनः पदजातमेकं [6]शास्त्रमिति चेत्, उच्यते—यावतां पदानामेकार्थत्वम्, तावदेकं शास्त्रम् । अर्थभेदे तु शास्त्रभेदः, मन्त्रवत् । यथा—

---

[1] अत्रेदमवधेयम्—वार्तिककारस्तार्किकसम्मतमुपमानं निरस्योपमानं सप्रमेयं निरूपयन्नतिदेशसिद्धिरपि तस्य प्रयोजनं वर्णयामास । तथाहि—अवगतसाङ्गदर्शपूर्णमासपदार्थस्य सौर्ययागदर्शनेनौषधद्रव्यकत्वेनैकदेवताकत्वेन सदृशस्य प्रकृतियागस्य स्मरणं सौर्ययागसदृश आग्नेय इति । तेनातिदेशवाक्यकल्पनम्—सूर्यदेवताकेन चरुद्रव्यकेण यागेन ब्रह्मवर्चसं भावयेदाग्नेयवदिति । तन्मतं पराकरोति—प्राकृतेति ।

[2] लोकप्रसिद्धेति मु. पु. पा. । [3] लोकप्रसिद्धेति मु. पु. पा. ।

[4] वचनेति मु. पु. पा. न. ।

[5] इयत्पुनः पदजातमेकं शास्त्रमिति तावत् न च शक्यं वक्तुमिति क्वचित्पाठो दृश्यते ।

[1]मन्त्रेषु यावता पदजातेनैकोऽर्थः प्रतीयते, तावदेकं वाक्यमित्यवगम्यते, तथा शास्त्रमपीति [2]ननु मन्त्रेषु प्रमाणान्तरप्रमितार्थेषु तत्वमन्यथात्वं वाऽर्थस्यान्यतोऽवधारयितुं शक्यते। शास्त्रन्तु प्रमाणान्तराप्रतीतार्थावबोधकम्। अतस्तदर्थस्य तत्वमन्यथात्वं वा शक्यते नान्यतोऽवसातुम्। उच्यते—शब्दानामर्थावच्छेदेनैव सर्वत्रैकताप्रतिपत्तिः[3]। पदतापि वर्णानामेका[4]*र्थावच्छेदेनैव।

## शास्त्रभेदनिरूपणम्।

स त्वर्थोऽवच्छेदकश्शास्त्रस्य शास्त्रादेवावगम्यते। कः पुनरसौ। विषयस्साध्यश्च।

कः [5]पुनर्विषयो नाम? उच्यते—कार्यमेव विध्यर्थः। कार्यञ्च कृतिसाध्यम्। कृतिश्च प्रयत्नः। स च सर्व एव भावार्थसम्बद्धः। तेन कार्यं प्रतीयमानं कृतिविशिष्टं प्रतीयते; नान्यथा। कृतिरपि भावार्थेन [6]विशेष्यते। तेन भावार्थः कृतिं विशिंषन्, कार्यं विशिनष्टीति विषय उच्यते। यो हि यत्र [7]विधीयते, स तस्य विषयः। अतश्च यावति पदसङ्घे एको

---

[1] इषे त्वा, इत्यत्र हे पलाशशाखे अन्नाय त्वामहं छिनद्मि, इति पलाशशाखाच्छेदनरूपैकार्थप्रकाशकत्वादेकमन्त्रत्वमिति "अर्थैकत्वादेकं वाक्यं साकांक्षञ्चेद्विभागे स्यात्" [पू. मी. द. २. १. २०] इति न्यायेनेति बोध्यम्।

[2] युक्तमिति मु. पु. पा।

[3] एकतोपपत्तेरिति मु. पु. पा।

[4] एकेति पाठो मु. पु. नास्ति।

[5] विषिणोति—विषयिणमनुबध्नाति स्वेन रूपेण निरूपणीयं करोतीति विपूर्वस्य बन्धनार्थकस्य षिञो रूपम्। विषयः—अवच्छेदकः-अनुबन्ध इत्यनर्थान्तरम्। अनन्यत्र भाव वा विषयशब्दार्थः। कृत्यपूर्वयोर्मध्य एव भवति नान्यत्रेत्यर्थः। अस्य विशेषो विषयकरणीयनामनि द्वादशे प्रकरणे द्रष्टव्यः।

*क्रमवन्तो वर्णाः पदमिति वादिनाम्मते वर्णानां बहुत्वादेकं पदमिति व्यवहारः शब्दादर्थं प्रतिपद्यामहे इति च व्यवहारः कथं सञ्जाघट्टि इतीमां शङ्कां निरसितुमाह एकेति। अयंभावः—येषु वर्णेष्वेकार्थबोधकत्वमस्ति तत्रैकपदत्वव्यवहारः उपाधिभेदे तु पदभेदः। एवमेकार्थबोधकत्वेनैकवाक्यता संप्रधारणीया। न चात्रैकार्थबोधकत्वेनैकवाक्यता, तयैकार्थप्रतिपादकतेत्यन्योन्याश्रयता शङ्कनीया। सूत्रकृता जैमिनिमहर्षिणा अर्थैकत्वादेकं वाक्यमिति व्याहरता स दोषो दूरीक्रियते स्म। एतेन शाब्दिकस्य नागेशभट्टस्य दूषणं निरवकाशितमित्यवधेयं सुधीभिः।

[6] विशिष्यत इति मु. पु. पा।

[7] विशिष्यत इति मु. पु. पा।

विषयः, तावत्येको नियोगार्थः; तदैक्याच्चैकं शास्त्रम्। तत्र नियोगाभेदस्यापि विषयाभेदोन्नेयत्वाद्विषयाभेदादेव शास्त्रमेकमिति व्यवस्थाप्यते, तद्भेदाच्च भिन्नम्।

शब्दान्तराद्विषयभेदनिरूपणम्।

[1]पञ्चधा च विषयभेदोऽवसीयते। तत्र "ज्योतिष्टोमेन स्वर्गकामो यजेत" "दाक्षिणानि जुहोति" [तै. सं. ६. ६. १. १३] "हिरण्यमात्रेयाय ददाति" [ता. ब्रा. ६. ६. ११] इत्येकप्रकरणगतान्यपर्यायधातुभेदान्याख्यातान्युदाहरणम्। देवतोद्देशेन द्रव्यत्यागो यागः। का पुनर्देवता? कश्चोद्देशः? कश्च त्यागः? उच्यते—स्तोत्रं शस्त्रं वा यद्गुणवचनम्, यदुद्देशेन च हविषां त्यागश्चोद्यते, सा देवता, तत्रैव याज्ञिकवृद्धानां देवताशब्दप्रयोगात्। [2]तत्र ह्याग्नेयादिदेशनार्थानुष्ठाने प्रवृत्तोऽग्निमुद्दिश्य हविस्त्यजति, तत्रैवमाहुरग्निरत्र देवतेति। उद्देशश्च चतुर्थ्यन्ततद्वाचकशब्दप्रयोगः। त्यागश्चात्मसम्बन्धिनि[3] स्वे औदासीन्यसङ्कल्पः। स चानभिसंहितपरस्वत्त्वापत्तिफलको यागः, देशविशेषगतद्रव्यप्रक्षेपोपाधिकश्च स एव होमः, अभिसंहितपरस्वत्त्वापत्तिफलश्च दानमिति। अभिधानभेदाद्यजत्याद्यनुबन्धभेदावगमः।

---

[1] स च शास्त्रभेदः क्वचित्साध्यभेदनिबन्धनः, क्वचिच्चानुबन्धभेदनिबन्धनः। तौ चात्र निरूपितभेदाभेदादेव शास्त्रादवगतौ शास्त्रभेदकौ। साध्यभेदाच्छास्त्रभेदोऽनुपदमेव मूले वक्ष्यते। अनुबन्धभेदाच्छास्त्रभेदं दर्शयति। अनुबन्धत्वं नियोगविषयत्वम्। तद्भेदश्च शब्दान्तराभ्याससंज्ञागुणप्रकरणान्तरैः पञ्चभिः प्रतिपाद्यमानः पञ्चविध एव। अत एव वरदराजेन "न वाक्यभेदश्शास्त्रभेदे तन्त्रं निरपेक्षभिन्नालौकिकार्थप्रतिपादनक्षमत्वमेवे"त्युक्तं संख्याधिकरणे। संख्यायास्त्वनुबन्धभेदकत्वाभावान्न शास्त्रभेदकत्वम्, किन्तु धात्वर्थमात्रभेदकतया प्रसङ्गेनोपन्यास इत्ययमर्थो मूल एव व्यक्तः। यत्र प्रकरणान्तरात्कर्मभेद इति भट्टमतम्। तत्र विधानान्तराच्छास्त्रभेद इति प्रभाकरमिश्रेण प्रत्यपादि। यथा "मासमग्निहोत्रं जुह्वति" [ता. ब्रा. २५-४.१] इति। अत्र विधानान्तरं—विध्यन्तरमेव। विहितस्य विधानासम्भवात्कर्मभेदः। शास्त्रभेदकान् शालिकाचार्यश्श्लोकेनैकेन सञ्जग्राह।

यथा—

"अध्यायेन द्वितीयेन गुरुर्भाष्यनिबन्धने।
साध्यानुबन्धभेदाभ्यां शास्त्रभेदमवर्णयत्" ॥ इति।

सूत्रञ्च—शब्दान्तरे कर्मभेदोऽपूर्वभेदश्शास्त्रान्तरञ्च कृतानुबन्धत्वादिति।

[2] चोदनेति ख. पु. पा.।

[3] आत्मेति मु. पु. पाठो न दृश्यते, ख पुस्तकानुसारी चायं पाठः।

अभ्यासाद्विषयभेदनिरूपणम् ।

तथा विध्युच्चारणाभ्यासादसत्यभिधानभेदे भावार्थभेदोऽवगम्यते । असन्निकृष्टार्थावबोधस्वरसं हि सर्वमेव विध्याम्नानम् । तदर्थबोधेनैवमवसीयते—नूनं भिन्ना इमे धात्वर्था इति । तद्भेदे विषयभेदाद्विषयिणो भेदोपपत्तेरसन्निकृष्टावबोधस्वभावता विध्याम्नानस्य निर्वहति । ननु तर्हि यदा पुरुषस्स्वेच्छया विधिमामनति, तदापि तर्हि विषयभेदस्स्यात् । न—स्वतन्त्रत्वादुच्चारणस्य । यद्धि न पूर्वोच्चारणदर्शनपूर्वकमुच्चारणम्, तदपौरुषेयं स्वातन्त्र्येणाऽर्थपरिच्छेदकम्[1] । यत्पुनरस्वतन्त्रम्, तत्पौरुषेयं प्रमाणान्तरोपात्तार्थावबोधकम् । न च तत्र भेदे प्रमाणमस्तीति, न भेदो विषयस्य । शाखान्तरगतस्तर्हि विध्याम्नानाभ्यासो भेदकस्स्यात् । नेत्युच्यते, अभ्यासाभावात् । यत्र ह्येक एव वक्ता पुनः पुनस्तमेव [2]शब्दमुच्चारयति, तत्राभ्यासो व्यपदिश्यते । शाखान्तरगतं विधिं पुरुषान्तरं पठतीति, नाभ्यासश्शक्यते वक्तुम् । एवमपि पुरुषान्तराम्नानमेव कस्माद्भिन्नमर्थं न प्रतिपादयति । उच्यते—एकार्थप्रतिपादकत्वेऽपि तदाम्नानस्याऽसन्निकृष्टार्थत्वोपपत्तेः । तस्य हि पुरुषस्य सोऽप्यर्थोऽसन्निकृष्ट एव यद्यपि पुरुषान्तरेण प्रतीतः, एकत्वन्तु कथम् ? विषयैक्यात्, तदैक्यञ्चाभिधानैक्या[त्], तथा साध्यमपि तत्रैकमेव ।

अभ्यासस्य क्वचिदपवादनिरूपणम् ।

यद्येवं, तर्हि "य[3] एवं विद्वान्पौर्णमासीं यजते"[तै.सं.१.६.९.१]इत्यत्रापि तद्भेदस्स्यात् । न । अभ्यास[स्या]प्यस्य भेदस्याऽनिर्वाहात् । रूपभेदेन

---

[1] अर्थेति मु. पु. पा. नास्ति ।

[2] अर्थमिति मु. पु. पा. ।

[3] भगवान्प्रजापतिः प्रजास्सहयज्ञास्सृष्ट्वा मनस्यचिन्तयत्—महता परिश्रमेण साध्येभ्यस्सोमयागेभ्योऽर्वाचीनाग्निहोत्र—पौर्णमास्यमावास्यानामकान्परस्परमुच्चावचान्यज्ञानस्राक्षीत् । सोमयागांश्चाऽग्निहोत्रादिभ्यश्श्रेष्ठानग्निष्टोमोक्थ्यातिरात्रनामकान् परस्परमुच्चावचान्सृष्ट्वा, प्रथमसृष्टेष्वग्निहोत्रादिष्वभिमानविशेषेण वर्गद्वयं तुलयोदमिमीत । ईदृशं वृत्तान्तं ज्ञात्वा उक्थ्यानुष्ठानेन यादृशं फलं प्राप्नोति, तादृशं फलं पौर्णमास्यनुष्ठानेन प्राप्नोति । अतिरात्रानुष्ठानेन यादृशं फलं प्राप्नोति, तादृशममावास्यानुष्ठानेन प्राप्नोति । तथा च ब्राह्मणं श्रूयते—"प्रजापतिर्यज्ञानसृजताऽग्निहोत्रञ्चाग्निष्टोमञ्च, पौर्णमासीञ्चोक्थ्यञ्च आमावास्याञ्चातिरात्रञ्च । तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोमः, यावती पौर्ण-

हि भेदो निर्वहति। यागस्य द्रव्य-देवते रूपम्। ताभ्यां स रूप्यते। नर्ते ताभ्यां स भवति। यद्यप्यत्र द्रव्यमविहितमपि यत्किञ्चिदुपादाय क्रिया सिध्यति, यद्यपि च वाचनिकमपि ध्रौवमाज्यं द्रव्यं गम्यते, तथापि देवता नाऽविहिता भवतीति विधानमन्तरेण तदलाभः। न च यजिरेव तदन्वित-स्वार्थमाचक्षाणो देवतां विधातुमलम्; विशेषावगमे कारणाभावात्। नापि "वार्त्रघ्नी पौर्णमास्यामनूच्येते" [तै. सं. २. ५. २] इति मन्त्रविधानान्मान्त्र-वर्णिकदेवताश्रयणं सम्भवति, मन्त्रविधेरभावात्। [1]आज्यभागयोर्ह्ययम्मन्त्र-विधिर्द्विवचनानुरोधादिति स्थितम्। तस्मादनुवादमन्तरेण रूपालाभादनु-वादोऽयमिति नाभ्यासात्कर्मभेदः।

---

मासी, तावानुक्थ्यः यावत्यमावास्या, तावानतिरात्रः, य एवं विद्वानग्निहोत्रं जुहोति यावद-ग्निष्टोमेनोपाप्नोति, तावदुपाप्नोति। य एवं विद्वान्पौर्णमासीं यजते, यावदुक्थ्येनोपाप्नोति, तावदुपाप्नोति। य एवं विद्वानमावास्यां यजते, यावदतिरात्रेणोपाप्नोति, तावदुपाप्नोति" [तै. सं. १. ६-९. १] इति।

[1] "वार्त्रघ्नी पौर्णमास्यां अनूच्येते, वृधन्वती आमावास्यायामि"। [तै. सं. २. ५. ५.] इति। अत्रेदं बोध्यम्—

अग्निर्वृत्राणि जङ्घनत्। द्रविणस्युर्विपन्यया।
समिद्धश्शुक्र आहुतः। [ऋ. सं. ४. ५. २७] इति प्रथमा वार्त्रघ्नी आग्नेयी।
त्वं सोमासि सत्पतिः। त्वं राजोत वृत्रहा।
त्वं भद्रोऽसि क्रतुः। [ऋ. सं. १. ६. १९] इति वार्त्रघ्नी द्वितीया सौम्या।
अग्निः प्रत्नेन जन्मना। शुम्भानस्तन्वं स्वाम्।
कविर्विप्रेण वावृधे। [ऋ. सं. ६. ३. ३८] इति प्रथमा वृधन्वती अग्नेयी।
सोमगीर्भिष्ट्वा वयम्। वर्धयामो वचोविदः।
सुमृलीको न आविश। [ऋ. सं. १. ६. २१] इति द्वितीया वृधन्वती सौम्या।

हौत्रकाण्डे प्रयाजमन्त्रान्पठित्वाऽनन्तरं पूर्वोदाहृतं मन्त्रचतुष्टयमनुवाक्यत्वेन श्रुतम्। तत्र पूर्वयोर्मन्त्रयोर्वृत्रहन्पदघटितत्वात् वार्त्रघ्नीत्वम्। उत्तरयोर्मन्त्रयोर्वृधिधातुघटितत्वाद्वृ-धन्वतीत्वम्। अव्यवस्थया मन्त्रप्राप्तौ व्यवस्थार्थमिदं वचनम्। व्यवस्था च कालकृता—पौर्णमास्यां यावाज्यभागौ, तौ वृत्रहन्पदवन्मन्त्रकौ प्रयोक्तव्यौ, अमावास्यायां यावाज्यभागौ वृधन्वपदवन्मन्त्रकौ प्रयोक्तव्याविति पार्थसारथि-भवदेवादिभिर्महामीमांसकैरविगानेन परि-गृहीतः पन्थाः। कालकृता कर्मकृता वा व्यवस्थेति पक्षद्वयमनास्थया परिजग्राह खण्डदेवा-चार्यः। प्राभाकरास्तु—आज्यभागयोरयं मन्त्रविधिर्द्विवचनानुरोधादिति मन्यन्त इति मूल एव व्यक्तम्।

आग्नेयाघारादीनामङ्गप्रधाननिरूपणम् ।

[1]नन्वेवं तर्हि प्रकृतसर्वरूपवद्यागानुवादः किमिति न स्यात् ? ततश्चानूदितानां "दर्शपूर्णमासाभ्यां [2]स्वर्गकामो यजेते"त्यधिकारसम्बन्धात् राजसूयवत्सर्वयजीनां प्राधान्यं स्यात्, अङ्गत्वञ्चाघारादीनां न सिध्येत् । उच्यते—सर्वानुवादाश्रयणे दर्शपूर्णमासाभ्यामिति द्विवचनं नोपपद्यते । [3]समुदायाद्वयानुवादकत्वेन सर्वेषामेव दर्शशब्दवाच्यता, पूर्णमासशब्दवाच्यता चावगम्यते । ततश्च दर्शाश्च पूर्णमासाश्चेति कर्मधारयोऽयं समासः । तत्र यजीनां विशेष्याणां बहुत्वाद्बहुवचनं स्यात्, न द्विवचनम् । अतस्तदनुरोधेन केषाञ्चिदेव तावत् "य एवं विद्वान् पौर्णमासीं यजत" इत्यनुवादः, न सर्वेषाम्; तथा "य एवं विद्वानमावास्यां यजत" इति केषाञ्चिदेवानुवादः । तेनाऽनुवादद्वयेन समुदायद्वयापत्तेर्द्विवचनान्तोपपदवशेन तेषामेवाधिकारसम्बन्धः । तत्र केषां पूर्णमासीयुक्तोऽनुवादः, केषाञ्चाऽमावास्यायुक्त इत्यपेक्षायां कालनिमित्तोपपदानुसारेणोत्पत्तिकालयोगिनामेवानुवाद इति निश्चयो जायते । अन्यथा विशेषाग्रहणादिति, न सर्वानुवादः, न वा सर्वेषांप्राधान्यमिति ।

गुणादनुबन्धभेदनिरूपणम् ।

तथा—[4]गुणान्तरयोगादप्यनुबन्धभेदोऽवगम्यते । उत्पत्तौ [†]यत्कारका-

---

[1] अत्रेदं बोध्यम् क्वचिदाख्यातं नामधेयपरतन्त्रं भवति, क्वचित्तु नामधेयमाख्यातपरतन्त्रमिति प्रकारद्वयमुपलभ्यते । तत्राद्यस्योदाहरणम्—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति । अत्र दर्शपूर्णमासशब्दावमावास्यापौर्णमासीकालयोर्मुख्यौ, तत्कालकर्त्तव्ये कर्मणि लाक्षणिकौ । अतो येषां कर्मणामुत्पत्तिवाक्येन कालसंबन्धोऽवगतस्तानेव यागान्यजेतेत्याख्यातं वदति, नानवगतकालसम्बन्धानाघाराज्यभागादीन् । अतोऽत्रत्यमाख्यातं नामधेयपरतन्त्रं भवति । "राजा राजसूयेन स्वाराज्यकामो यजे"त्यत्र राजसूयोऽश्वकर्णादिशब्दवद्रूढ इष्टिपशुसोमयागान् सर्वानविशेषण ब्रूते, अतोऽत्रत्यं नामधेयमाख्यातपरतन्त्रं भवति—इष्टिपशुसोमयागसमुदायस्य नामेति । राजसूयशब्दवद्दर्शपूर्णमासपदमप्याख्यातपरतन्त्रमस्त्वित्याशङ्कते—नन्विति ।

[2] स्वर्गकाम इति मु. पु. नास्ति ।

[3] सर्वेति मु. पु. पा. ।

[†] कालेति मु. पु. पा. ।

[4] "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनमि"ति श्रूयते । अस्यायमर्थः—तप्ते पयसि दधन्यासिक्ते सति तत्पयो द्वेधा सम्पद्यते—घनीभूतत्वेन द्रवीभूतत्वेन

**नुबद्धं यत्कर्म प्रतीयते, ततोऽन्येन कारकेणाऽनुबद्धं तत् न शक्यतेऽवगन्तुमित्यनुबन्धभेदावगमः ।**

सञ्ज्ञयाऽनुबन्धभेदनिरूपणम् ।

**तथा—सञ्ज्ञान्तरादप्यनुबन्धभेदोऽवगम्यते । अन्याय्यं ह्येकस्याऽर्थस्यानेकशब्दत्वमिति भेदस्तावदौत्सर्गिकः । यत्र तु बलीयसा प्रमाणेनाऽनेकशब्दत्वमपि गम्यते, भवति *तत्रैकशब्दत्वम् ।**

---

च । तत्र घनीभूतं पय आमिक्षापदेन व्यपदिश्यते, द्रवीभूतञ्च वाजिनमिति । तत्रामिक्षावरुद्धे यागे वाजिनस्योत्पन्नशिष्टस्य निवेशायोगेनाऽनुबन्धभेदमवगमयतीति बोध्यम् ।

अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते [ तां. ब्रा. १६. ८. ९. १०. १ ] त्यत्र संज्ञयाऽनुबन्धभेदः प्रतीयते ।

अत्रेदमवधेयम्—शब्दोऽर्थमभिधत्ते, शब्देनाऽर्थोऽभिधीयत इति द्वेधा व्यवहारो दृश्यते । तत्रार्थप्रतिपत्तिफलकश्शब्दव्यापारोऽभिधानक्रियेत्युच्यते । तच्च शब्दज्ञानम्, तदेवार्थप्रतिपत्तिफलकत्वेन निरूप्यमाणमभिधानक्रियेति गीयते । तस्याञ्चार्थप्रतिपत्तिरूपक्रियाजन्यफलशालित्वेन यद्घटादेरर्थस्य कर्मत्वम्, तदेव वाच्यत्वम् । शब्दस्य च विवक्षावैचित्र्येण यत् कर्तृत्वं, करणत्वं वा, तदेव शब्दस्य वाचकत्वमित्युदीर्यते । वाच्यवाचकभावः प्रत्याय्यप्रत्यायकभाव इति तैर्थिकानां व्यवहारः पप्रथे । ननु शब्दार्थयोर्वाच्यवाचकभावेनैकक्रियान्वयित्वमस्तु, मिथोनियमे किं प्रमाणमिति न शङ्कनीयम् । उद्देश्यविधेययोरयं विशेषः—यत् उद्देश्या हि मिथोऽनपेक्ष्य क्रियां वशीकुर्वन्तो युक्तं यन्मिथो न सम्बध्यन्ते । उपादेयानां क्रियया वशीकृत्य संहन्यमानानां तद्द्वारेणास्ति तेषां परस्परनियमरूपस्सम्बन्धः । तथोद्देश्यविधेययोरपि विद्यते साहित्यम् । उद्देश्यं हिं क्रियामाकर्षति, सा च स्वांशभूतमुपादेयमादायैव स्वप्रधानं याति । यथा "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" इत्यत्र क्रय इवारुण्यादियुक्तस्सोमम् । तदिहार्थः प्रधानभूतस्स्वप्रतिपत्तिसिद्धयेऽभिधाव्यापारमादत्ते, स च स्वांशभूतं शब्दमित्यस्ति शब्दार्थयोरेकाभिधानक्रियाद्वारा तत्कर्मकरणयोर्वाच्यवाचकयो"रर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमस्स्यादि"तिन्यायेन नियमरूपस्सम्बन्धः ।

स चेत्थम्भूतनियमो यस्यामभिधानक्रियायां गोशब्दः करणं, तस्यां सास्नादिमानर्थः कर्म, यस्याञ्च सास्नादिमानर्थः कर्म, तस्यां गोशब्दः करणमिति । एवं नियमेऽवगते यदि मानान्तरेणैकस्य शब्दस्यार्थान्तरमभिधेयम्, अर्थस्य वा शब्दान्तरमभिधायकं गम्यते । यद्यपि कारकाणां क्रियायामेवान्वयः प्रथमतो भवति, तथापि पार्ष्णिकबोधे क्रियान्वितानां तेषां पार्ष्णिकस्सम्बन्धो भवति । अतोऽर्थस्य व्यवहारोपयोगिनः प्रतिपत्त्याख्यसंस्कारं कुर्वन् शब्द

*ऐक्यमिति. मु. पु. पा. ।

प्रकरणान्तरस्यानुबन्धभेदकत्वम् ।

तथा—विधानान्तरादपि कर्मान्यत्वावगमः । विधानान्तरञ्च सन्निहिते कर्मण्यनेकगुणसंयुक्तकर्मग्रहणात् । तत्र हि—गुणविधिस्तावन्न सम्भवति, अनेकगुणश्रवणादनेकगुणविधाने वाक्यभेदप्रसङ्गात् । गुणविशिष्टकर्मविधौ तु तस्यैवैकस्य विधानादेकवाक्यत्वनिर्वाहात् कर्मैव विधेयम् । विधीयते चेत् कर्म, ततः प्रकृतादन्यत्वम् ।

तथा—असन्निधानादप्यप्रत्यभिज्ञानात्कर्मविधानावगमाद्भेदावगमः । प्रकरणान्तरमपि कर्मणः *प्रक्रियान्तरम्—विधानान्तरमेव ।

संख्याया अनुबन्धभेदकत्वनिरासः ।

संख्या तु भावार्थमात्रभेदे प्रभवति, न विषयभेदे । यथा "सप्तदश-प्राजापत्यान्" [तै. ब्रा. १. ३. ४.] इति प्राजापत्यप्रातिपदिकोपात्तानां द्रव्यदेवतासम्बन्धानां [1]नियोगविषयत्वम् । ते च सकृदेवाभिहितास्सकृदेव सम्बध्यन्ते "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इतिवदिति न भेदेन विषयभावं भजन्ते ।

साध्यभेदात् शास्त्रभेदनिरूपणम् ।

[2]साध्यभेदादपि शास्त्रभेदोऽवसीयते । यथा "दर्शपूर्णमासाभ्यां स्वर्ग-

---

उपकारको भवति । अर्थश्चोपकार्य इति विद्यतेऽभिधानक्रियाद्वारकश्शब्दार्थयोरुपकार्योपकारकलक्षणो वाच्यवाचकभावो नियम इत्यपरपर्यायस्सम्बन्ध इति । तत्राऽवगतोऽपि नियमो व्रीह्यादिनियम इव यवादिविधिना बाध्यते । अतोऽनेकशब्दत्वमनेकार्थत्वं वा न सञ्जाघटीतीत्याशयेनाह—"अन्याय्यञ्चेत्यादिना" ।

*प्रक्रियान्तरं—प्रकरणान्तरम् । यथा—मासाग्निहोत्रस्य । तदपि विधानान्तरमेव, तत्रापि विहितस्यविधानासम्भवात् कर्मान्तरत्वमित्यभिप्रैति शालिकाचार्यः । एतन्मते पञ्चैव प्रमाणानि शास्त्रभेदकानि, प्रकरणान्तरस्य विधानान्तरेऽन्तर्भावात्, अतश्शालिकाचार्यमते प्रकरणान्तरं न पृथक्प्रमाणमिति बोध्यम् ।

[1] शब्दबलवादी विवरणटीकाकारोऽभावार्थस्य द्रव्यदेवतासंबन्धादेर्नियोगविषयत्वमभ्युपगच्छति, तन्मतेनेदम् । निबन्धनटीकाकारस्त्वर्थबलवादितया भावार्थस्यैव स्वीकरोति न तु तदतिरिक्तस्येति बोध्यम् ।

[2] अत्र ग्रन्थकारस्साध्यभेदस्य शास्त्रभेदहेतुत्वं प्रतिपादयितुं करणावान्तरकार्यैश्वर्यलक्षणाधिकारयोरेव शास्त्रभेदहेतुत्वं वर्णयति स्म । परं ग्रन्थान्तरेषु साध्यभेदास्सोदाहरणाः प्रदर्शिताः, तानेव सुखावगतयेऽधस्तान्निर्दिशामः । तथाहि—साध्यभेदस्तावदुत्पत्ति-प्राप्ति-विकृति-

कामो यजेत" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" [ आ. श्रौ. सू. ३. १४. ११ ] इति च। न हि यावज्जीवचोदना कामाधिकारे कालविधानार्था, लक्षणाप्रसङ्गात्। [1]यावज्जीवलक्षितो हि कालो विधेयः। किञ्च जीवनकाल एव [2]प्रयोगस्य प्राप्तत्वाद्यावदर्थसम्बन्धेन विधेयत्वम्। तावांश्च कालो नाऽनभ्यस्तेन प्रयोगेण शक्यते व्याप्तुमिति, यजेतेत्यपि—यागमभ्यस्येदिति वर्णयितव्यम्। ततश्चाभ्यासलक्षणाऽप्यपरेति, जीवतोऽधिकारान्तरमेतदाश्रयणीयम्। जीवने ह्यधिकारिविशेषणे सति जीवतोऽवश्यं [2]यागेन भवितव्यमिति [3]शब्दाद्गम्यते। अभ्यासो ह्येकस्याऽर्थस्याऽनेकशस्साध्यत्वमाक्षिपतीति भेदस्तावदौत्सर्गिकः। तत्र बलीयसा कारणेन जीवनव्याप्तिरभिधीयते—यावज्जीवमिति। ततश्च नियोज्यभेदान्नियोगस्यापि भेदोऽवश्यं

---

संस्कृति-करणोपकार-करणावान्तरकार्यैश्वर्यलक्षणाधिकाररूपभेदात्सप्तविधः। शास्त्रत्वञ्चासन्निकृष्टार्थविषयत्वम्। तद्यत्र निरपेक्षभिन्नासन्निकृष्टार्थतात्पर्यवत्वम्, तत्र शास्त्रभेदः। यत्र तु नैवम्, तत्राभेद एव। यथा "पुरोडाशं संयौति" [ श. ब्रा. १. १. ६. ३. ] इत्यस्य पुरोडाशोत्पत्तिशास्त्रस्य "पुरोडाशं चतुर्धा करोति" [ श. ब्रा. १. ८. १. ४० ] इति चतुर्धाकरणशास्त्राद्भेदः। अनयोरेव निरपेक्षासन्निकृष्टार्थतात्पर्यवत्त्वात्। "यदाग्नेयोष्टाकपालो भवति" [ तै सं. २. २. ३. ] इति शास्त्रात्पुनरभेद एव, तत्सापेक्षपुरोडाशोत्पत्तितात्पर्यवत्त्वात्। एवं "पयो दोग्धि" इति पयःप्राप्तिशास्त्रस्य पयस्संस्कारशास्त्राद्भेद एव। अभेदश्च "ऐन्द्रं पयः" [ तै. सं. २. ५. ४. १. ] इत्यस्मात्सान्नाय्यशास्त्रात्। एवं "व्रीहीनवहन्ति" [ आ. श्रौ. १. १९. ११. ] इति व्रीहिविकृतिशास्त्रस्य "व्रीहीनाहरति" इत्यस्माद् भेदः। अभेदश्च "व्रीहिभिर्यजेत" [ आ. श्रौ. ६. ३१. १३. ] इत्यस्मात्प्रधानशास्त्रात्। एवं "व्रीहीन्प्रोक्षति" [ आ. श्रौ. १. १९. १ ] इत्यस्यापि संस्कृतिशास्त्रस्यावहन्तिशास्त्राद् भेदः। "व्रीहिभिर्यजेत" इति [ आ. श्रौ. ६. ३१. १३ ] प्रधानशास्त्रात्त्वभेदः। तथा "समिधो यजति" [ तै. सं. २. ६. १. १. ] इत्यादीनामितिकर्तव्यताशास्त्राणां करणोपकाररूपसाध्यतात्पर्यवत्त्वेन "आग्नेयोऽष्टाकपालो भवति" इत्यादिशास्त्राणाञ्च करणावान्तरकार्यतात्पर्ययोगित्वेन परस्परं भेदः। अभेदश्च "दर्शपूर्णमासाभ्यां यजेत" इत्यस्मादधिकारशास्त्रात्, तत्सापेक्षत्वात्सकलेतिकर्तव्यताशास्त्राणां करणशास्त्राणाञ्च। तथा जीवनाधिकारसाध्यभेदे च "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" [ आ. श्रौ. ३. १४. ११. ] "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यनयोश्शास्त्रयोर्भेदः [ तौ. म. ति. ३१०–३१२ ] इति

[1] यावज्जीवनेति मु. पु. पा.।

[2] नियोगस्येति मु. पु. पा.।

[3] शब्दादित्यादिः कारणेनेत्यन्तः पाठो मुद्रिते पुस्तके न दृश्यते। खपुस्तकानुसारेणायं पाठो मूले सन्निवेशित इत्यवधेयम्।

भावी, तद्भेदाच्च शास्त्रभेद एव । नियोज्यो हि स्वसम्बन्धितया ममेदं कार्यमिति नियोगमवबुद्ध्यते, तेन स्वकृतिसाध्यमपूर्वं प्रतिपद्यते ।

यदीया[1] च या कृतिः, सा तद्भेदेन भिद्यते । कृतिभेदेन च कार्यस्यापि भेदः । तेन नियोज्यः कृतिं भिन्दन्, कार्यमपि भिनत्ति । अतो नियोगभेदस्यापि शास्त्रभेदहेतोर्नियोज्यभेदोन्नेयत्वात्तद्भेदेनैव शास्त्रभेदो व्यपदिश्यते । नियोज्यभेदेनाऽवश्यं साध्यभूतस्यैश्वर्यलक्षणस्याऽधिकारस्य भेद इति, साध्यभेदोपलक्षणीयोऽयं शास्त्रभेदः । साध्यभेदेन चानुबन्धभेदभिन्नानामप्यङ्गप्रधानोत्पत्तिशास्त्राणामधिकारशास्त्रावस्थायां भेदः । एकस्याधिकारनियोगस्य तावतां प्रतिपाद्यत्वादिति ।

शास्त्रस्याऽनुमानाद्भेदोपन्यासः ।

एतच्च शास्त्राख्यं प्रमाणमनुमानतः स्पष्टभेदमेव । न ह्यत्र गम्येनाऽर्थेन गमकस्य शब्दस्य सम्बन्धनियमोऽवगतः, नापि गम्यस्याऽर्थस्य किञ्चित्प्रत्येकदेशत्वम्, नापि गमकस्येति सामग्रीभेदादनुमानाशङ्कापि नास्ति ।

शास्त्रलक्षणघटकविशेषणसार्थक्यनिर्देशः ।

किं पुनरत्र [2]व्यावर्तितमर्थादिग्रहणेन । उच्यते-अर्थग्रहणेनाभिधेयवचनेन लैङ्गिकं वक्तुरभिप्रायज्ञानमशास्त्रमित्युक्तम् । असन्निकृष्टग्रहणेन पौरुषेयवाक्याभिधेयस्याऽर्थस्य वक्त्राभिप्रायनिश्चयपुरस्सरं यद्विज्ञानम्, तन्न शास्त्रमिति दर्शितम् । तथा वेदेऽप्यर्थवादानां न स्वतन्त्राणां सन्निकृष्टार्थपराणां शास्त्रत्वम्, [3]किन्त्वर्थवादानां विध्यन्तरानुप्रवेशेनेति । [4]शब्दग्रहणेनैवार्थस्याऽशास्त्रत्वमुक्तम् ।

यथा—[5]प्रकृतौ "वाससि मिनोति" "वाससा च सोममुपावहरति" इति

---

[1] यदीयेत्यादि भिद्यत इत्यन्त मु पु पाठो न दृश्यते खपुस्तकानुसारी पाठो निवेशित इति मन्तव्यम् ।

[2] निर्वर्तितमिति मु पु. पा ।

[3] किन्त्वर्थवादतया विध्यर्थवादतयेति मु पु पा ।

[4] शब्दविज्ञानादित्यत्रेति शेष ।

[5] अत्रेदं बोध्यम्—ज्योतिष्टोमे "वाससि मिनोति" "वाससोपावहरति" इति वचनात् सोममानोपावहरणे वासस्साधनके विहिते । तत्राय सशय.—द्विरात्रादिष्वहर्गणेषु प्रत्यह सोमो-

यस्मिन्नेव वाससि सोमो मीयते, तेनैव वाससोपावह्रियत इति, एकत्वात्कर्मणोऽचोदितमपि तत्, अर्थात्सम्पन्नम्। अहर्गणे तु पृथक्त्वात्सोमस्यैकस्मिन्नपि वाससि नानाभूतस्याऽपि मातुं शक्यत्वात्। उपावहरणन्तु—[1]पुञ्जीकृत्य वाससा नयनम्, तदेकेन न शक्यमिति, मानवाससोऽन्यत्तदर्थमुपादीयते। एकत्वन्तु वाससः प्रकृतावार्थम्, न [2]शास्त्रार्थ इति, न चोदकेन [3]प्राप्यत इति, तत्र वासस एकत्वज्ञानं न शास्त्रम्। "विज्ञानादिति" न्यायाभासाद्वाक्यस्य वचनव्यक्तिमवधार्य, यत् तदर्थज्ञानं, तन्न शास्त्रमिति प्रकटितम्। न[4] हि तत् शब्दविज्ञानात्। यादृशं सम्यङ्न्यायावधार्यवचनव्यक्तिकं, तादृशमेव शास्त्रमिति।

इति महामहोपाध्यायश्रीशालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां प्रमाणपारायणे तृतीयश्शास्त्रपरिच्छेदस्समाप्तः।

---

पावहरणार्थं वासो भिद्यते, न वेति। तत्राऽयं पूर्वः पक्षः—हविर्धानशकटे स्थापितस्सोमो यावानेकस्याह्नः पर्याप्तः, तावान् प्रत्यहं वाससोपावहर्तव्यः, अवशिष्टश्च सोमश्शकट एव वाससोपनद्धस्स्थापनीयः। तस्मादिहार्थात् वासोन्तरमुत्पादयितव्यम्। अपि चोपावहरणवस्त्रस्य "ग्रावस्तुते ददातीति" दानविधानात्, तस्य मैत्रावरुणदण्डदानन्यायेन ग्रावस्तोत्रीयाननुब्रुवाणस्य ग्रावस्तुत उत्साहजनकत्वेन प्रत्यहमवश्यम्भावाच्च। प्रकृतिभूतेऽग्निष्टोमसंस्थाके ज्योतिष्टोमे सौकर्यात्क्रयकालीनमानवाससैवोपनद्धस्याऽभिषवकाले तेनैव वाससोपावहरणं कृतम्, अर्थसिद्धं तत्, न तु स एव शास्त्रार्थः। तथाचोक्तं भाष्ये—यच्च अर्थात्कृतं न तच्चोदकः प्रापयति, अवाचनिकत्वात् [ मी. द. १०. ६. १२. ] इति।

[1] पुटीकृत्येति मु. पु. पा.।

[2] शब्दार्थ इति. ख. पु. पा.।

[3] व्याप्यत इति मु. पु. पा.।

[4] न हि तच्छब्दविज्ञानं, यादृशं, तत्, सम्यङ्न्यायावधार्यवचनव्यक्तिकं शास्त्रं तादृशमविज्ञाय तज्ज्ञानमिति न शास्त्रमिति मु. पु. पा.।

# परिशिष्टम् ।

अत्र मूले प्रत्यक्षानुमेयभेदेन शास्त्रस्य द्वैविध्यमुपवर्णितं शालिकाचार्येण । तत्राद्यस्त्वध्ययनपरिगृहीतमन्त्रब्राह्मणात्मको वेदराशि., द्वितीयस्त्वनुमेय । तस्यानुमापक लिङ्ग मन्वादिप्रणीता स्मृति, आचारश्च । अतस्स्मृतीना नित्यानुमेयवेदमूलत्वम् । अयमर्थो मूल एव स्पष्ट । एतेन स्मृतीना विप्रकीर्णशाखामूलत्व भाट्टमीमासकाभिमत प्रत्याख्यातम् ।

आचाराणा वेदमूलत्वविषये भाट्टाना प्राभाकराणाञ्चैकमत्य दरीदृश्यते । पर प्रकार भेद कियानस्ति । भाट्टा —आचारेण स्मृति परिकल्प्य, स्मृत्या श्रुति कल्पयन्ति । अर्थादाचाराणा स्मृतिकल्पनाद्वारेण श्रुतिमूलकत्वेन प्रणाल्या प्रामाण्यमित्यातिष्ठन्ते । गुरुमतानुसारिणस्तु शिष्टत्रैवर्णिकपरिगृहीताविरुद्धाचारेणापि साक्षाच्छुतिरेवानुमीयते, मूलान्तरासम्भवात् । अत आचाररूपलिङ्गेन साक्षाच्छ्रुतिरेवाऽनुमीयत इति प्राभाकरमीमासकाना सिद्धान्त. । इममेव प्राभाकरसिद्धान्त पुरस्कुर्वन्तस्तार्किका अविगीतशिष्टाचारानुमिता "समाप्तिकामो विघ्नध्वसकामो वा मङ्गलमाचरेते"ति श्रुति मङ्गलाचरणस्याऽवश्यकर्तव्यताया प्रमाणयन्ति । एतेन—

आचारात्तु स्मृति ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् ।
तेन व्यन्तरित तस्य प्रामाण्य विप्रकृष्यते ॥ [त वा १-३-४ पृ २२०] इति ।

कौमारिलवचन निरस्तम्, परम्पराया प्रमाणाभावादिति । शालिकाचार्येण तु शिष्टाचारविषये किमपि नोक्तमित्यपि ध्येयम् ।

यत्र गुणात्कर्मभेद इति भट्टमतम्, तत्र विधानान्तराच्छास्त्रभेद इत्युक्तं प्रभाकरेण । यथा—"वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि"ति । अत्र विधानान्तर विध्यन्तरमेव । ततश्च विहितस्य विधानासम्भवात्कर्मभेद । प्रकरणान्तरमपि विधानान्तरमेव, ततो नाऽतिरिच्यत इति प्राभाकरमते चत्वार्येव शास्त्रभेदकानीत्याभाति । शालिकाचार्यस्तु पञ्चधाऽनुबन्धभेद इति वदन् प्रभाकरोक्तमर्थमत्यक्रमीदिति विबुधैरवधेयम् ।

---

# अथोपमानपरिच्छेदः ।

## उपमानलक्षणम् ।

"[1]सादृश्यदर्शनोत्थं ज्ञानं सादृश्यविषयमुपमानम्" । इति ।

[2]दृष्टगोः[3] पुरुषस्य तत्सदृशं गवयं पश्यतो यद्गोविषयकं गवयगतसादृश्यज्ञानम्, तदुपमानम् ।

### सादृश्यस्याऽनतिरिक्तत्वशङ्कानिरासौ ।

[4]किं पुनरिदं सादृश्यम् ? नेदं द्रव्यगुणकर्मसामान्यसमवायविशेषाणामन्यतमम् । [5]तेषां सङ्ग्रहेऽस्याऽपाठात् ।

[6]उच्यते—

"विषयोऽस्य वित्तिसिद्धो भिन्नो द्रव्यादिभावेभ्यः" ॥१॥ इति ।

---

[1] शास्त्रं सपरिकरं निरूप्योपमानं लक्षयति—सादृश्येति । अत्रेयमाशङ्का जायते—शास्त्रनिरूपणानन्तरं बहुप्रपञ्चाऽर्थापत्तिरुपवर्णयितुमुचिता, नतूपमानमिति । तथापि शास्त्रनिरूपणप्रयोजकत्वेनाऽसन्निकृष्टार्थविषयत्वेऽभिहिते, तत्प्रयुक्तमेवोपमानं प्रमाणमित्यसन्निकृष्टार्थविषयत्वसादृश्यादितिसामान्यादर्थापत्तिमुपेक्ष्योपमानं निरूपयति—उपमानमिति ।

[2] स्वाभिमतमुपमानलक्षणमाह—दृष्टेति । अयमर्थः—दृश्यमानसादृश्यजन्यं गवयसादृश्यज्ञानमुपमानमिति परिनिनितिष्ठति । यथोक्तं शालिकाचार्येण—

"सादृश्याद्दृश्यमानाद्यत्प्रतियोगिनि जायते ।
सादृश्यविषयं ज्ञानमुपमानन्तदुच्यते" [ऋ. वि. पं. पृ. १०९ । अ. क. श्लो. १३.] इति ।

[3] "यथा गवयदर्शनं गोस्मरणस्य" इति शाबरभाष्यसन्दर्भः । अत्र गोस्मरणस्येति पदस्याऽनुभूतगोः पुरुषस्येत्यर्थं टीकाकारो वर्णयाञ्चकार बृहत्याम् । तदेव शालिकाचार्यो दृष्टगोः पुरुषस्येति व्याचष्टे स्म । गोस्मरणस्येत्यत्र गोः स्मरणं यस्येति बहुव्रीहिः, गां स्मरतीति वा द्वेधा व्युत्पत्तिः । कर्तरि नन्द्यादिभ्यो ल्युटि निष्पद्यते । तदेवाऽनुसृत्य दृष्टगोः पुरुषस्येति स्फुटीचकारेति बोध्यम् ।

[4] सादृश्यस्य द्रव्यादिपदार्थसङ्ग्रहे परिगणनादर्शनात्कथं तस्य तत्त्वान्तरत्वमिति परिपृच्छति—किमिति ।

[5] एष्विति मुद्रितपुस्तके पाठो दृश्यते, शालिकनाथप्रणीतायामृजुविमलापञ्चिकायां "तेषां सङ्ग्रहे" इति पाठो दृश्यते, तत्रैव स्वारस्यमनुभवद्भिस्स एव पाठो मूले सन्यवेश्यस्माभिरिति ध्येयम् ।

तेषां सङ्ग्रह इति । अयमर्थः—तेषाम्—पदार्थानां द्रव्यादीनां, साधर्म्यवैधर्म्यनिरूपणपरस्सङ्ग्रहः-तन्नामकः प्रशस्तपादोपज्ञो भाष्यग्रन्थः, तत्रेत्यर्थो बोध्यः ।

[6] समाधत्ते—उच्यत इति ।

सर्ववस्तूनि संविदेकशरणानि। अस्ति चेयं [1]सदृश इति संवित्। सा च सर्वैव विषयाव्यभिचारिणीति दर्शितं नयवीथ्याम्। अतस्संवित्स्वभावसिद्धं सादृश्यं न पाठाभावादपह्नवमर्हति। [2]तच्च न द्रव्यम्, गुणकर्मणोरप्याश्रितत्वात्। गन्धादयोऽपि हि सदृशबोधगोचरीभवन्ति, भवन्ति च कर्माण्यपि कर्मान्तरसदृशबुद्धिबोध्यानि। [3]अत एव न गुणत्वम्, नापि कर्मत्वम्। अनुवृत्तप्रत्ययनिमित्तत्वाभावाच्च न सामान्यम्। समवायस्तु सम्बन्धरूप इति न तत्र सादृश्यान्तर्भावः। विशेषाख्यन्तु पदार्थं प्रमाणवादिनो नानुमन्यन्ते। स हि पृथक्त्वादतिरिक्तो नाऽनुमातुं शक्यते। पृथक्त्वं हि परमाणूनां स्थूलद्रव्यारम्भलक्षणकार्योन्नेयम्। [4]तदतिरेकिणि तु विशेषे न [5]किञ्चित्प्रमाणम्। न च परमाणुपृथक्त्वमेव लिङ्गम्, नित्यत्वात् परमाणुपृथुक्त्वस्य। कार्यं हि स्यात्कारणस्य लिङ्गम्। न च परमाण्वाश्रितं पृथक्त्वं कार्यमिति [6]प्रमेयपारायणे निर्णीतम्। अतः [7]पदार्थान्तरमेवेदं [8]शक्तिवत्, संख्यावच्चेति प्रमेयपारायण एवोक्तम्।

---

[1] बुद्धिलक्षण सादृश्यमिति पदार्थविदां प्रक्रिया। अत एवोदयनाचार्य प्राह—"बुद्धिमात्रममीषा लक्षण प्रमाणम्, न तु द्रव्यादौ तत्कार्यमिवाऽन्यदपि प्रमाणमि"ति बोध्यम्।

अत्रेद बोध्यम्—प्राभाकरमीमासकैरभ्युपगमसिद्धान्तन्यायेन कणादतन्त्रसिद्धमेव प्रमेयजातमभ्युपगम्यते, तस्य तत्प्रतिपादनाय प्रवृत्तत्वात्। न तु पार्थक्येनाऽत्र व्युत्पाद्यते। तत्राऽप्यय विशेषोऽनभिमतांशो निराक्रियते, विशेषांशस्तु व्युत्पाद्यते प्राभाकरमीमासकैरिति।

[2] उपमानस्य कथमसन्निकृष्टार्थत्व, कथतरा मानान्तरत्वञ्चेत्येतत्साधनाय प्रशस्तपादमुनिना पदार्थसग्रहे लक्षणग्रन्थे बुद्ध्युत्पादकत्वेनोक्तं सादृश्यमनूद्य, तस्य द्रव्याद्यनन्तर्भाव वक्तुमुपक्रमते—तच्चेति।

[3] सादृश्यस्य द्रव्याद्यतिरेक प्रसाध्य, पदार्थान्तरत्व दृष्टान्तमुखेन विशदयति—अत इति।

[4] अनेन स्वरूपासिद्धिमुद्भावयतीति बोध्यम्। अनेन स्थूलकार्यनिष्पत्तिलिङ्गत्व विशेषस्य वैशेषिकैरभ्युपगतम्, पृथक्त्वगुणेनैव तदुपपत्त्युक्त्या दूषितमित्यवधातव्य विबुधै।

[5] न किञ्चिदनुमानमिति मु पु. पा.।

[6] प्रमाणपारायणे इति ख पु पा।

[7] अय विषयो न्यायसिद्धिव्याख्याया निरूपितो नारायणेन [न्या सि पृ ७८-८२]। अस्य विशेषस्तत्रैव द्रष्टव्य।

[8] अदृष्टस्वलक्षणानुमाननिरूपणावसरे शक्ति प्रासाधि शालिकाचार्येण। कार्यानुकूलधर्मविघटकत्व प्रतिबन्धकत्वम्। कार्यानुकूलधर्म एव शक्तिरित्युच्यते। सा सर्वभावेष्वतीन्द्रिया शक्तिः कार्येणाऽनुमीयते। अत्राऽयमभिप्राय-सर्वभावेषु कार्यानुकूला शक्तिरर्थापत्तिप्रमाणगम्येति भाट्टमीमांसका वदन्ति। प्राभाकरमीमासका अनुमानगम्येत्यातिष्ठन्ते।

तच्च सादृश्यं प्रत्यक्षद्रव्यवर्ति प्रत्यक्षग्राह्यावयवगुणकर्मसामान्यग्रहण-निबन्धनं प्रत्यक्षम्, अन्यत्र [1]सामान्यान्तरबाहुल्यानुमेयम् ।

उपमानप्रमाणस्याऽतिरिक्तत्वनिरूपणम् ।

[2]तदिदमुपमानं न प्रत्यक्षम्, तिरोहिते गवि चक्षुस्सन्निकर्षातिवर्तिनि जायमानत्वात् । न च स्मृतिः । गोदर्शनसमयेऽप्रतीतगवयस्य तत्सादृश्यानुभवाभावात् । नाऽनुमानम्, लिङ्गाभावात् । एकदेशो हि लिङ्गम् । न च गोर्गवयः, तद्गतं गोसादृश्यं वा एकदेशः । ज्ञातसम्बन्धनियमश्च हेतुः । न गोगतेन सादृश्येन सह कश्चिदपि गवयवर्तिनस्सादृश्यस्य सम्बन्धोऽस्तीति, कुतस्तरां तस्य सम्बन्धनियमावगमः । न चाऽपि परस्परसदृशवस्त्वन्तरदर्शन-सापेक्षेयं प्रतीतिः, यतस्सम्बन्धनियमज्ञानबलभाविनीत्युच्येत । प्रथममप्येकं वस्तु सदृशमीक्षमाणस्य परस्मिन्वस्तुनि सादृश्यमतिराविर्भवति ।

---

किञ्च कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वमिति वादिनां तार्किकाणां पक्षे प्रति-बन्धकताकुक्षौ कारणत्वप्रवेशः, कारणताशरीरे च प्रतिबन्धकत्वनिवेश इत्यन्योन्याश्रयो दुरुद्धरः प्रसजतीति मन्यमानाः प्राभाकराः, कार्यानुकूलधर्मविघटकत्वं प्रतिबन्धकत्वमिति प्रतिबन्धक-शब्दार्थं निर्ब्रुवते । किञ्च वह्निं प्रति तृणस्याऽरणेर्मणेश्च कारणतेति वदतां तार्किकाणाम्मते-व्यभिचारेण कस्याऽपि कारणत्वं न स्यादिति, तत्तदव्यवहितोत्तरत्वमन्तर्भाव्य कार्यकारणभावो वक्तव्यस्तार्किकैः । अतस्तन्मते शक्त्यनङ्गीकारे व्यभिचारो, गौरवञ्चापद्येत । शक्ति-वादिनाम्मते तु वह्न्यनुकूलशक्तिमत्त्वेनाऽनुगमसम्भवान्न व्यभिचारः, न वा गौरवम् । तथा च शक्तिसद्भावेऽनुमानमेव प्रमाणम् । सा च द्विधा-पदार्थशक्तिः, सहजशक्तिरिति । शब्दस्याऽ-र्थाभिधानानुकूला शक्तिः-पदार्थशक्तिः । यामधिकृत्य पदार्थान्तरमिति मीमांसका इति तैर्थिकानां प्रवादः । ते च प्राभाकरमीमांसका एवेत्यवधेयम् ।

संख्या पदार्थान्तरं द्रव्यादिवदिति प्राभाकरमीमांसका आशेरते । तथाहि—संख्या न द्रव्यं भवितुमर्हति, गुणेषु विद्यमनत्वात् । चतुर्विंशतिर्गुणाः, गन्धो द्विविधः, स्पर्शस्त्रि-विध इत्यादौ संख्याप्रयोग औपचारिक इति वक्तुं न शक्यते, मुख्ये बाधकाभावात् । न च वाच्यं गुणत्वमेव तत्र बाधकमिति, गुणत्वस्याऽसिद्धेः । न गुणः, बहुषु वृत्तेः घटत्वा-दिवत् । न कर्मेति वक्तुं शक्यते, प्रत्यक्षत्वात् , तत्प्रतीतिवैलक्षण्याच्च । न सामान्यमनि-त्यत्वात् । समवायस्य सम्बन्धरूपत्वेन तत्र शङ्कैव नोदेति । तस्मात्पारिशेष्यात्संख्या पदार्थान्तरमिति प्राभाकरमतनिगर्वः । सादृश्यस्य पदार्थान्तरत्वं मूल एवोक्तमिति नाऽत्र लेखनी प्रसार्यते । पदार्थनिरूपणे वैशेषिकप्रक्रियैवाऽभ्युपगमसिद्धान्तेन ऊरीक्रियन्ते इति प्रागवोचाम ।

[1] सामान्यान्तेति मु. पु. पा. ।

[2] उपमानस्य प्रत्यक्षेऽन्तर्भावं व्यासेधति—तदिदमिति ।

[1]नन्ववयवसामान्यबाहुल्याच्चाऽनुमानं सम्भवत्येव। गवयं हि गवयावयवसामान्यबाहुल्यभाजं प्रतीत्य एवमवधारणा जायते-यो यदवयवसामान्यबाहुल्यवान्, स तत्सदृश इति। तेन गां गवयावयवसामान्यबाहुल्ययोगिनं स्मरतो गवयसादृश्यविषयमनुमानमुपपन्नमेव। तथाहि—गवयवर्तिना गोसादृश्येन सहाऽवयववर्तिनां सामान्यानामेकार्थसमवेतसमवायलक्षणः सम्बन्धोऽस्ति। गवये हि सादृश्यं समवेतम्, तस्मिन्नेवाऽवयवास्तदीयास्समवेताः, तेषु तत्सामान्यानि समवेतानीत्युपपन्न एकार्थसमवेतसमवायलक्षणस्सम्बन्धः, तन्नियमोऽपि चाऽस्त्येव सामान्यबाहुल्यस्य। गोधर्मतापि तस्योपपन्ना, समवेतसमवायलक्षणसम्बन्धयोगित्वात्। अतो घटत एवाऽनुमानसामग्रीत्युपमानमनुमानान्न भिद्यते।

[2]उच्यते—सम्बन्धनियमस्मरणमनुमानोदयकारणम्, न पुनस्सम्बन्धनियमावधारणमेव। अत्र चाऽवयवसामान्यबाहुल्यभाजो गवयस्य सदृशतया प्रतीयमानस्यैवोपमानहेतुत्वमिति कारणभेदादुपमानमनुमानाद्भिन्नम्, प्रत्यक्षवत्।

उपमानलक्षणघटकविशेषणानां सार्थक्यनिरूपणम्।

[3]अत्र च "सादृश्यदर्शनोत्थमि"त्यनेनैन्द्रियकस्य सादृश्यज्ञानस्योपमानता निराकृता। "सादृश्यविषयं ज्ञानमि"ति किं निराकृतम्? उच्यते—गोसदृशो गवय इति पुरुषवचनाद्गोसादृश्यं गवयस्य प्रतीत्य, यत्तदवयवसामान्यबाहुल्यज्ञानं गवये जायते, तन्नोपमानमित्युक्तम्। [4]यत्तु सदृशदर्शनमात्रेण कस्मिंश्चिदर्थे तत्सदृशस्वरूपमात्रे स्मरणं, तस्योपमानत्वमेव

---

[1] अनुमानेऽन्तर्भावमाशङ्कते—नन्वित्यादिना न भिद्यत इत्यन्तेन।

[2] पूर्वोक्तामाशङ्कां निरस्यति—उच्यत इति।

[3] उपमानलक्षणघटकदलानां सार्थकतामाह—अत्रेत्यादिना।

बौद्धाचार्यो दिङ्नाग उपमानं प्रत्यक्षानुमानाभ्यां नाऽतिरिच्यत इत्याह—यतो हि गवा गवयसादृश्यं प्रतिपद्यते, गवयसत्तां वेति। अतस्तन्मतनिराकरणाय शालिकाचार्यः प्रत्यक्षानुमानाभ्यामुपमानस्याऽचारितार्थ्यं वक्तुकामस्तयोरनन्तर्भावमाह—अत्रेत्यादिना।

[4] न्यायवित्परिगृहीतस्योपमानस्य परित्यागे हेतुमाह—यत्त्विति। गवये गोधर्मातिदेशकेन वाक्येन यत् गोसादृश्यं विवक्षितं गवयस्थं, तद्धीस्तावद्वाक्यजेति, तत्र मानान्तराशङ्का न संभवतीति भावः।

न प्रसक्तम्, प्रमाणलक्षणाधिकारात् । स्वरूपस्मरणं हि न प्रमाणम् । प्रमाणविपयस्य चेदं लक्षणमाख्यायते । तेन तन्निवृत्त्यर्थं सादृश्यविषयग्रहण-मयुक्तम् । एतेनैवाऽसदृशात् यत्तत्सदृशभ्रान्तिविषयात् तत्सदृशविषयज्ञानं, तदप्युपमानं नाशङ्कनीयमेव, अप्रमाणत्वादित्युक्तम् ।

गौतमीयस्योपमानलक्षणस्यानुवादनिरासौ ।

[१]यत्तु "प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्" । [न्या. द. १-१-६] इत्युक्तम् । तदयुक्तम् । तथाहि—यादृशो गौस्तादृशो गवय इति श्रुतातिदेशवाक्यस्य वने गवयमुपलभमानस्याऽयं गवय इति प्रतीतिरुपमान-फलमुच्यते । तत्र तावद्गोसदृशो गवय इति प्रथमावगतिः पुरुषवाक्यमात्र-प्रभवा नोपमानं भवति । यदपि वनं गतस्य गवये, तद्गते च गोसादृश्ये ज्ञानम्, तदपि प्रत्यभिज्ञाप्रत्यक्षम् । यात्वेतस्य गवयशब्दवाच्यतावगतिः, साऽपि गवयशब्दप्रयोगादानुमानिकी । यस्य शब्दस्य यत्र प्रयोगः, तस्य तद्वा-च्यतया सम्बन्धनियमोऽवगतः । वने च सञ्ज्ञिनमुपलभ्य, एतस्यैव सा मया संज्ञाऽवगतेति तज्ज्ञानं स्मरणमेवेति नोपमानस्याऽवकाशः । तस्माद्य-थोक्तलक्षणमेवोपमानमिति स्थितम् ।

इति महामहोपाध्यायश्रीशालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां प्रमाणपारायणे चतुर्थ उपमानपरिच्छेदस्समाप्तः ।

---

[१] अत्र मूले प्रसिद्धार्थस्य साधर्म्यात्, अप्रसिद्धार्थसाधर्म्यमुपमानमिति मु. पुस्तके पाठो दृश्यते । इदञ्चाऽक्षपादीयं सूत्रम् । अत आकरानुसारी पाठो मूले सन्निवेशित इति ध्येयम् । अस्यायमर्थः—भाष्यकारस्तु प्रसिद्धेन गवा सादृश्यात् संज्ञासंज्ञिलक्षणसम्बन्धस्य ज्ञापनमित्युपमानसूत्रं व्याचख्यौ । न्यायवार्तिककारस्तु प्रसिद्धं साधर्म्यं यस्य, प्रसिद्धेन वा साधर्म्यं यस्य, सोऽयं प्रसिद्धसाधर्म्यो गवयः, तस्मात् साध्यसाधनं समाख्या-संबन्धप्रतिपत्तिरूप-मानमिति वार्तिकयाम्बभूव ।

प्राभाकरमते उपमानस्य नातिदेशकत्वम् । तस्य सादृश्यमात्रविपतया सिद्धविषयत्वान्न कार्ये उपयोग इत्यारादुपकारकाङ्गनिरूपणपरेऽङ्गपारायणस्य द्वितीये परिच्छेदे विस्तरेणोपपा-दयिष्यते ग्रन्थकृतेति ध्येयम् ।

# अथाऽर्थापत्तिपरिच्छेदः ।

## [1]अर्थापत्तिलक्षणम् ।

"विना कल्पनयाऽर्थेन दृष्टेनाऽनुपपन्नताम् ।
नयताऽदृष्टमर्थं या साऽर्थापत्तिस्तु कल्पना" ॥१॥ इति ।

---

[1] अर्थापत्तिशब्दोऽर्थस्याऽऽपत्तिः कल्पना यस्मादिति बहुव्रीहिसमासेन प्रमाणपरः, अर्थस्याऽऽपत्तिरिति षष्ठीतत्पुरुषसमासेन च फलपरः । भाष्यस्थाभ्यां "दृष्टः श्रुतो" वेति पदाभ्यां दृष्टार्थापत्तिश्श्रुतार्थापत्तिश्चेत्यर्थापत्तेर्द्वैविध्यमभिमतं भाट्टमीमांसकानाम्, इत्थमेव भाष्यस्याऽऽशयं कुमारिलभट्टो वार्त्तिकयाम्बभूव—

"प्रमाणषट्कविज्ञातो यत्राऽर्थो नान्यथा भवेत् ॥
अदृष्टं कल्पयेदन्यं साऽर्थापत्तिरुदाहृता"॥ [श्लो. वा. अर्था. परि. श्लो. १] इति ।

अत्र भाष्यगतदृष्टशब्देनोपलब्धमात्रं प्रतीयते, तथापि दृष्टाद्भेदेन श्रुतपदोपादानात् श्रुतातिरिक्तप्रमाणपञ्चकप्रमितिपरत्वेन दृष्टशब्दो नेतव्यो गोबलीवर्दन्यायेन । अतः प्रमाणपञ्चकपूर्विका दृष्टार्थापत्तिः पञ्चधा । श्रुतार्थापत्तिस्त्वेकविधेत्येतासां सङ्कलनेन षड्विधाऽर्थापत्तिः पर्यवस्यति । दृष्टार्थापत्तावर्थस्य कल्पना भवति, श्रुताऽर्थापत्तौ शब्दरूपं प्रमाणं कल्प्यते । अयं विशेषो वार्त्तिककृताऽभ्यधायि । यथा—

"दृष्टः पञ्चभिरप्येषा भेदेनोक्ता श्रुतोद्भवा ॥
प्रमाणग्राहिणीत्वेन यस्मात्पूर्वविलक्षणा ॥" [श्लो. वा. अर्था. परि. श्लो. २.] इति ।

एवमध्वरमीमांसकव्यवस्थायां सत्याम्, धर्मराजाध्वरीन्द्रेण बहिस्सत्वकल्पनं श्रुतार्थात्त्येत्यभिधानं वेदान्तिनामेव शोभत इति वयं मन्महे ।

योऽर्थो येन विना नोपपद्यते, सोऽर्थं उपपाद्यः । यथा—दिवाऽभुञ्जानत्वे सति पीनत्वम् । यस्य कल्पनीयस्यार्थस्याभावे सत्युपपाद्यं नोपपद्यते । स कल्पनीयोऽर्थ उपपादकः । यथा—रत्रिभोजनम् । तत्रोपपाद्यज्ञानं करणत्वेनार्थापत्तिप्रमाणम्, उपपादकज्ञानञ्च फलमर्थापत्तेः ।

प्राभाकरमीमांसकास्तु—दृष्टार्थापत्तिमेवैकामुररीकुर्वन्ति, न तु श्रुतार्थापत्तिम् । भाष्ये दृष्टश्श्रुतो वेति द्वैविध्यकथनं गोबलीवर्दन्यायेनोपलब्धपरतया गमयितव्यम् । उभयत्रापि मते गोबलीवर्दन्यायस्समानः । परं भाट्टमते सङ्कोचः, अन्यत्राऽसङ्कोचः । टीका—ऋजुविमलादिष्वित्थमेव व्याख्यातं शालिकाचार्येण । स चोपलब्धोऽर्थोऽर्थान्तरानुपपत्त्यापादकतया विवक्षितोऽर्थान्तरकल्पको गुरुमते । तथा चायं फलितोऽर्थः—अर्थान्तरकल्पनायामसत्यां योऽर्थान्तरमनुपपन्नं कुरुते साऽर्थापत्तिः । अनुपपत्तिश्च सन्देह एवाभिमतो गुरुमतानुयायिनाम् । प्रमीयतेऽनेनेति करणव्युत्पत्त्यङ्गीकारे—अर्थसन्देहापादकोऽर्थः प्रमाणम्, बहिर्भावकल्पना प्रमा कल्पितोऽर्थः प्रमेयम् । प्रमितिः प्रमाणमिति भावव्युत्पत्त्यभ्युपगमे कल्पना प्रमाणम्, तदनन्तरभावि देवदत्तो बहिर्भाववानिति विशिष्टज्ञानं फलमिति बोध्यम् ।

दृष्टेनाऽर्थेनाऽदृष्टस्याऽर्थस्याऽर्थान्तरकल्पनायामसत्यामनुपपत्तिमापाद्यता साऽर्थान्तरकल्पना, साऽर्थापत्तिः। यथा—जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्याऽदृष्टस्य कल्पना।

### अर्थापत्तेरनुमानेऽन्तर्भावशङ्का।

[1]नन्वेतद् गृहाभावदर्शनाज्जीवतो बहिर्भावकल्पनाऽनुमानमेव। तथा हि—यो जीवन्नेकत्र नास्ति, सोऽन्यत्राऽस्तीति स्वात्मन्येव प्रतीतम्, तेन प्रतीतसम्बन्धनियमादेकत्राऽविद्यमानत्वादन्यत्र विद्यमानत्वावगमोऽनुमानमेवेति युक्तम्। तथा—एकत्राऽन्यत्र च भावाभावावेककालत्वलक्षणसम्बन्धयोगिनौ समुद्रवृद्धिचन्द्रोदयवदेकदेशभूतौ च कालस्य, इत्यनुमानसामग्र्या यदा जीवन्नेव देवदत्तो गृहे नास्ति, तदा बहिरस्तीत्यनुमानं भवति। तथैकत्राऽभावे सति अन्यत्र [2]विद्यमानत्वं देशान्तरसंयोगेन नियतैकार्थसमवायलक्षणसम्बन्धमेकदेशभूतश्च देवदत्तस्येत्यनुमानसामग्रीसम्भवः। देवदत्तो बहिर्देशसंयोगी गृहाभावे सति विद्यमानत्वात्, यो यो गृहाभावे सति विद्यमानः, स सस्ततोऽन्यत्राऽस्ति, यथाऽहमेवेति प्रमातुरनुमानमुत्पद्यते।

### तन्निरासः।

[3]अत्रोच्यते—न तावद्विद्यमानत्वं लिङ्गं भवति, स्वयं सन्देहास्पदीभूतत्वात्। विद्यमानता हि देवदत्तस्य गृहाधिकरणिकैव येन नाम प्रतीता, तस्य बहिर्देशसम्बन्धेऽप्रत्याकलिते, गृहाभावदर्शनेन देवदत्तस्य विद्यमानता प्रमाणान्तरप्रतीतापि सन्देहमावहति—गृहे देवदत्तोऽविद्यमानः कथं विद्यमान इति। प्रतीतेऽपि हि वस्तुनि [4]पूर्वप्रतीतरूपाद्रूपान्तरावगमस्संशयमापादयितु-

---

[1] अत्रेदं बोध्यम्—तार्किका वदन्ति अर्थापत्तिरनुमानान्नाऽतिरिच्यते, सर्वत्र सामग्रीभेदेन, प्रमेयाधिक्येन वा प्रमाणान्तरत्वमुररीक्रियते, यथा प्रत्यक्षादीनामन्योन्यम्। अत्र तूभयमपि न विलोक्यते। यच्च बहिर्भावलक्षणं प्रमेयं, तदनुमानेनाऽवगम्यत इत्यभिप्रायं मनसि निधाय शङ्कते—नन्वित्यादिना—अनुमानमुत्पद्यत इत्यन्तेन।

[2] विद्यमानत्वमित्यादिः—गृहाभावे सतीत्यन्तः पाठो. मु. पु. न दृश्यते। खपुस्तकानुसारी पाठो मूले निवेशित इति बोध्यम्।

[3] अनुमितिसामग्रीविघटनेन, प्रमेयान्तरसमर्थनेन च तार्किकाभितमनुमानप्रकारं पराकरोति—अत्रोच्यत इत्यादिना।

[4] पूर्वप्रतिपन्नरूपान्तराभावावगम इति. ख. पु. पा.।

मलमेव । देवदत्तस्य च विद्यमानता गृहसम्बद्धैवाऽवगतेति, तदभावप्रतीतौ बहिर्देशसम्बन्धे चाऽनवगते सन्दिह्यते । तेन सा सन्देहग्रस्ता सती, न लिङ्गतां गन्तुमलम् । बहिर्देशसम्बन्धावसायपक्षे सन्देहो भविष्यति लिङ्गमिति चेत् । न । अनुमेयाभावात् । बहिर्देशसम्बन्ध एव हि देवदत्तादेरनुमित्सितः, स चेत्प्रतिपन्नः, न प्रमेयमवशिष्यते ।

तदाहुर्वार्तिककारमिश्राः—

"तेन मेयानपेक्षस्य सन्दिग्धत्वादहेतुता ।
हेतुत्वं यावति त्वस्ति, ततो नाऽन्यत्प्रमीयते" ॥ [बृ. टी.] इति ।

तेन सन्देहास्पदीभूता विद्यमानता तावदवगत्यन्तरप्रसवसमर्था न भवति ।

[1]न च गृहाभावो बहिर्देशसम्बन्धावगमे लिङ्गमित्युपपन्नम् । तस्य हि न केवलस्य लिङ्गत्वमभ्युपगमनीयम्, किन्तु जीवनविशिष्टस्य । शुद्धस्य गृहाभावमात्रस्य मृतेषु, जनिष्यमाणेषु च विनापि बहिर्भावमुपपत्तेः ।

तदुक्तम्—

"गेहाभावस्तु यश्शुद्धो विद्यमानत्ववर्जितः ।
स मृतेष्वपि दृष्टत्वाद्बहिर्वृत्तेर्न साधकः" ॥
[ श्लो. वा. अर्था. श्लो. २१ ] इति ।

जीवनश्च विशेषणभूतं सन्दिग्धमिति, न तद्विशिष्टस्य लिङ्गत्वम् । तस्मात्केवलस्याऽभावस्यैव स्वयं निस्सन्दिग्धस्य गमकत्वं युक्तम् । न च तस्य सन्देहापत्तौ किञ्चन प्रमाणमस्ति ।

ननु तस्य केवलस्य गमकत्वे मृतस्य, जनिष्यमाणस्य च बहिर्देशसम्बन्धावगतिः प्रसज्येत । उच्यते—अर्थान्तरकल्पनायामनुत्पन्नायां यस्ससंशयं कश्चिदापादयितुमलम्, तस्य गमकत्वम् । तथा हि—बहिर्देशकल्पनायाम-

---

[1]बहिर्भावसाधकानुमाने व्यभिचार—सिद्धसाधनाभ्यां हेतुं विघटयति । तथाहि—गृहाधिकरणकाभावप्रतियोगित्वं हेतुः, तद्विशिष्टजीवनवत्त्वं वेति द्वेधा विकल्पः । तत्राद्यः पक्षो न क्षोदक्षमः । मृतजनिष्यमाणयोर्हेतोस्सत्त्वेऽपि साध्याभावेन व्यभिचारात् । न द्वितीयः—अस्मिन्पक्षे बहिर्भावस्याऽनुमित्सितत्वेन स तु प्रागेव निर्णीतश्चेत्, न किञ्चिदनुमेयमवशिष्यत इति सिद्धसाधनं स्यात् । अतो नास्त्यनुमानस्याऽवकाश इत्यनुमानं निराकरोति—नेति ।

जातायां गृहाभावो देवदत्तस्य विद्यमानतासंशयमापादयन्बहिर्देशसम्बन्धस्य गमकः। मृतजनिष्यमाणयोश्चाऽभावो न कञ्चिदपि ससंशयमापादयतीति न गमकः, अतो नाऽतिप्रसङ्गः। तदेव चाऽत्र गम्यम्, यत्कल्पनायामसत्यां सन्देहापत्तिः, कल्पनायाञ्च तद्विगमः। सत्यप्यभावस्य गमकत्वे नाऽनुमानत्वम्; ज्ञानोदयप्रकारभेदात्।

अनुमानार्थापत्त्योस्साधनभेदाद्वैलक्षण्यनिरूपणम्।

सम्बन्धनियमस्मरणोपकृतादेकदेशदर्शनाज्ज्ञानमनुमानम्। गृहाभावस्तु बहिर्देशकल्पनायामनुत्पन्नायां सत्यां विद्यमानतायां संशयमापाद्य संशयसंशमाय बहिर्देशसम्बन्धं कल्पयतीति नाऽनुमानत्वसम्भवः। धूमादिकन्तु लिङ्गं न कस्यचित्संशयमापाद्याऽग्निं गमयतीति, न [1]तत्राऽर्थापत्तिसम्भवः।

[2]श्लोकश्चात्र भवति।

"तत्सन्देहव्युदासाय कल्पना या प्रवर्तते।
सन्देहापादकादर्थादर्थापत्तिरसौ स्मृता" ॥२॥ इति।

अर्थापत्तिविषये मतान्तरनिरूपणम्।

"यत्कल्पनां विना योऽर्थः प्रतीतोऽप्येति संशयम्॥
तेन तत्कल्पनामेके त्वर्थापत्तिं प्रचक्षते" ॥३॥ इति।

[3]अन्ये पुनराहुः—

यस्मिन्नकल्पिते योऽर्थः प्रमितोऽपि [4]पूर्वप्रतिपन्नरूपाद्रूपान्तरावगमेन संशयरूपामनुपपत्तिं भजते, सोऽर्थस्स्वगतसन्देहव्युदासाय तस्याऽर्थान्तरकल्पनां प्रसूते, सा चाऽर्थापत्तिः। प्रमाणप्रतीतश्चाऽर्थो दृष्टरूपार्थान्तराभावेन संशयमापन्न एवाऽर्थापत्तेर्जनक इति दर्शनबलादाश्रीयते।

---

[1] तत्रेति मु. पु. नास्ति।

[2] श्लोकौ चात्र भवत इति. मु. पु. पा.।

[3] अन्ये पुनराहुरिति मु. पु. नास्ति। खपुस्तके. तन्त्ररहस्ये च दर्शनात् प्रकृतोपयोगितया निवेशित इति ध्येयम्।

[4] दृष्टरूपान्तराभावेनेति मु. पु. पा.। पूर्वपरिदृष्टस्वरूपपरिवृत्त्या, इति. ख. पु. पा.।

अर्थापत्त्यनुमानयोर्वैलक्षण्यम् ।

[1]यथा ह्यनुमानस्य निश्चितं लिङ्गं जनकम्, तथाऽर्थापत्तेस्सन्देहग्रस्तमिति नास्ति विरोधः । अत एव चाऽनुमानादपि भेदः । निश्चित एव धूमोऽग्नेर्गमकः न तस्य किञ्चिदर्थान्तरमनुपपत्त्यापादकमस्ति, गृहाभावस्तु विद्यमानताया अनुपपत्तिमातनोति । तेन गृहाभावेन विद्यमानतैव बहिर्देशसम्बन्धकल्पनायामभूतायामनुपपत्तिमापादिता स्वात्मनो बहिर्देशसम्बन्धं कल्पयतीति । भिन्नाऽनुमानादर्थापत्तिः, तदेवं गृहाभावो[2] [3]विद्यमानताया अनुपपत्तिमापादयन् बहिर्भावं कल्पयति ।

---

[1]तार्किका—लिङ्ग त्रिविधमन्वयव्यतिरेकि-केवलान्वयि—केवलव्यतिरेकि चेति वदन्त केवलव्यतिरेकिणोऽर्थापत्तेश्चारितार्थ्यात्तामनुमानेऽन्तर्भावयन्ति । तच्चाऽनुमान केवलव्यतिरेकिरूपम्, तस्य च लक्षणम्—

साध्याभावव्यापकीभूताभावप्रतियोगित्वम्, अतोऽर्थापत्तिर्न प्रमाणान्तरमिति ।

यथोक्तम्—

"अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते ।
व्यतिरेकव्याप्तिबुद्धया चारितार्था हि सा यत" [ सि मु गु.ख. श्लो १४४ ] इति ।

भाट्टमतानुसारिणस्तु प्रमाणान्तरत्वञ्चास्यास्साधयन्ति । तेषामयमभिसन्धि —अर्थापत्तेरनुमानेऽन्तर्भाववा.दिना वक्तव्यम्—अन्वयिनि, व्यतिरेकिणि वेति । तत्र प्रथम पक्षो न घटते-अन्वयव्याप्तेरग्रहणेन तत्राऽन्तर्भावस्य वक्तुमशक्यत्वात् । न चरम पक्ष —तस्याऽनभ्युपगमपराहतत्वात् । तस्य स्थानेऽर्थापत्तेरभिषिक्तत्वात् ।

किञ्चाऽनुमाने उपपादकस्य गम्यत्वम्, अनुपपन्नस्य धूमादेर्गमकत्वम् । अर्थापत्तावनुपपन्नस्य गम्यत्वम् । उपपादकस्य गमकत्वमित्येतयोर्वैलक्षण्यम् । व्याप्तिपक्षधर्मताभ्यामनुमितिर्जायते, दिवाभोजनत्वाभाव-पीनत्वयोस्सामानाधिकरण्यरूपानुपपत्तिज्ञानादर्थापत्तिरिति सामग्रीवैलक्षण्येनाऽप्यनयोर्भेद ।

अपि चाऽनुमितिस्थलेऽनुमिनोमीत्यनुव्यवसाय । अर्थापत्तिस्थले कल्पयामीत्यनुव्यवसाय, तेनापि भेदस्स्फुट एव ।

गागाभट्टस्तु—अर्थापयामीत्यनुव्यवसायस्वरूपमाह [ भा चि पृ ४६ ] । चिदानन्दपण्डितस्तु-केवलव्यतिरेकिणं न साक्षान्निरासाञ्चक्रे, न वा साक्षादुपादत्ते स्म । तस्मादर्थापत्तिः प्रमाणम् ।

प्राभाकरास्तु—हेतोर्निश्चितत्वसन्दिग्धत्वाभ्या वैलक्षण्यमाचक्षाणा· प्रमाणद्वयमपि पार्थगर्थ्येनोपपादयन्ति । तदेवाह—यथा हीति ।

[2] बहिर्भावकल्पनयेति मु. पु पा. ।

[3] अर्थापत्तिविषये प्रकारद्वयमुपन्यस्त शालिकाचार्येण । गृहाभावो बहिर्भावेऽकल्पिते देवदत्तसत्तामनुपपत्तिं नीत्वा तदुपपादनाय बहिर्देशसम्बन्धं तस्य बोधयतीति केषाञ्चि-

अथवा विद्यमानतैव गृहाभावेनाऽनुपपत्तिमापादिता स्वोपपत्तये बहिर्देशसम्बन्धमुपकल्पयतीति ।

व्यतिरेकव्याप्त्याऽर्थापत्तेर्गतार्थत्वशङ्का-निरासौ ।

[1]यस्तु मन्यते—गृहाभाव एवाऽन्यथाऽनुपपद्यमानो बहिर्भावस्य गमक इति । तदयुक्तम् । तथाहि—का गृहाभावस्याऽन्यथानुपपद्यमानता ? यदि तावद्बहिर्देशसम्बन्धेन विना नास्तिता—जीवतो गृहाभावो बहिर्देशसम्बन्धेन विना नास्तीति । [2]तर्हि साध्याभावे हेत्वभावलक्षणव्यतिरेकोऽयम् । स च [3]हेतुसद्भावे साध्यसद्भावलक्षणेनाऽन्वयेनाऽवगम्यते, नाऽन्यथा । न ह्यनन्तेषु साध्याभाववत्सु विपक्षेषु हेत्वभावनियमोऽन्यथाऽवधारयितुं शक्यते, यावद्धेतुभावस्य साध्यभावेन सम्बन्धनियमो नाऽवधार्यते । अवधारिते हि तस्मिन्नर्थापत्त्या साध्याभावे हेत्वभावनियमोऽवसीयते । द्वे हि कोटी—हेतुभावो हेत्वभावश्चेति । तत्र हेतुभावकोटौ साध्यभावेन सम्बन्धनियमे सिद्धे साध्याभावस्तत्राऽवकाशं न लभते । स यदि हेत्वभावकोटावपि न स्यात्, तदा नोपपद्येतैव । तेन हेतुभावकोटौ साध्यभावेन सम्बन्धनियमोऽवगतो [4]हेत्वभावकोट्यनुप्रवेशकल्पनायामनुपजातायां साध्याभावस्याऽनुपपत्तिमापादयन् हेत्वभावकोटिनिवेशं कल्पयति । तथा सति

---

न्मतेन । सत्तैव गृहाभावदर्शने सति स्वोपपत्तय आत्मनो बहिर्देशसम्बन्धं कल्पयतीत्यपरेषां मतेन । आद्यपक्षे "तत्सन्देहव्युदासाय" इत्यादिपद्यं जग्रन्थ । द्वितीयपक्षस्य सङ्ग्राहकं "यत्कल्पनां विने"त्यादिपद्यं समग्रहीत् । यद्यपि मूलेऽयमर्थो न स्फुटीभवति, तथापि भाष्यपरिशिष्टस्याऽर्थापत्तिप्रकरणस्थं वाक्यजातं क्षीरनीरवदर्थाविमौ विविनक्ति । तथा च तत्रत्यो ग्रन्थसन्दर्भः—

"तत्राऽर्थापत्तौ गृहाभावो बहिस्सत्तायामकल्पितायां देवदत्तसत्तामनुपपत्तिं नीत्वा तदुपपादनाय बहिर्देशसम्बन्धं तस्याऽबोधयतीत्येकेषां मतम् । अपरे तु—सत्तैव गृहाभावदर्शने सति यावद्बहिर्देशसम्बन्धमात्मन उपपत्तये कल्पयतीति" ।

[1] तन्त्ररहस्ये केचित्—गृहाभाव एवाऽन्यथानुपपद्यमानस्सन् बहिर्भावकल्पनायां प्रमाणमित्याहुः । तदयुक्तमित्यादिवाक्यजातमनेन संवादि दृश्यते । अन्येत्त्विवति भा. परि. पा. परमत्र यस्त्विवति पठ्यते, तत्र तु केचिदिति विशेष इति बोध्यम् ।

[2] यद्येवं साध्याभावेन हेतुभावव्यतिरेकलक्षणोऽयमिति मु. पु. पा. ।

[3] हेतुभावस्य साध्याभावेन नियतसंबन्धित्वेन संपद्यत इति. मु. पु. पा. ।

[4] कोटचप्रवेशेति मु. पु. पा. ।

हेत्वभावेन साध्याभावो नियतसम्बन्धस्सम्पद्यते । तस्मात्साध्याभावेऽयं नास्त्येवेत्यवगम्य या प्रतीतिः, सा सम्बन्धनियमावगमपूर्विकेत्यनुमानान्न भिद्यते । अथ गृहाभावस्य बहिर्देशकल्पनायामकृतायामनुपपत्तेर्वा[1] संशय्यमानता, न सा सम्भवति । न हि गृहाभावस्य संशयापत्तौ किञ्चित्कारणमस्ति । विद्यमानतायास्तु गृहसम्बन्धितयैव दर्शनात् गृहाभावेन संशयमापाद्यत इत्युच्यते । अतस्सन्देहापादकोऽर्थः, नैवापत्तिस्सन्देहोऽर्थो वाऽर्थापत्तिरिति स्थितम् ।

भाट्टसम्मतायाश्श्रुतार्थापत्तेरुपन्यास-निरासौ ।

[2]अत्र केचित्—"पीनो देवदत्तो दिवा न भुङ्क्ते" इति वाक्येन *देव-

---

[1] अनुपपत्तिरिति. मु. पु. पा ।

* दिवा इति मु. पु. पा. ।

[2] शालिकाचार्येण प्रसाधितमर्थापत्तेः प्रमाणान्तरत्वं तदुक्तानुगामिहेतुवैलक्षण्यमवगम्य वाचस्पतिमिश्रो न्यायवार्तिकतात्पर्यटीकायां[पृ. ४३८. ४३९]तत्त्वकौमुद्याञ्च [पृ. ९०] निराकरोति स्म । तत्रत्यो वाक्यसन्दर्भो जिज्ञासूनां सुखावगतयेऽधस्तान्निर्दिश्यते । यथा "नापि प्रमाणनिश्चितो गृहाभावः पाक्षिकमस्य गृहसत्वं प्रतिक्षिपन्, सत्त्वमपि प्रतिक्षेप्तुं सांशयिकत्वञ्चापनेतुमर्हतीत्युक्तम् ।" टीका-तत्त्वकौमुद्योस्समानैवाऽऽनुपूर्वी दरीदृश्यते । अत्र शङ्कायामंशद्वयं सत्त्वं प्रतिक्षेप्तुमर्हति, गृहसत्त्वस्य सांशयिकत्वञ्चापनेतुमर्हति । गृहसत्त्वस्य सांशयिकत्वं कौमारिलमतानुगा नाङ्गीकुर्वन्ति । अपि तु प्राभाकरा एव । अनेनाऽनेनोद्धृतेन वाक्यसन्दर्भेण शालिकोक्तमेव निरस्यति वाचस्पतिमिश्र इत्यवधेयं तत्त्वदर्शिभिरिति ।

दृष्टश्रुतभेदेनाऽर्थापत्तेर्द्वैविध्यं शबरमुनिनाङ्गीक्रियते स्म । तदेव प्रत्यपादयन् कुमारिलभट्टः । कुमारिलतन्त्रानुगैस्तदेवानुसृत इति तत्रैवाऽऽदौ अवोचाम । तन्मतानुगामाकरिणुस्तन्मतमनुवदति—अत्र केचिदिति ।

अत्रेयं विषयपरिशुद्धिः—"पीनो देवदत्तो दिवा न भुङ्क्ते" इत्यत्र "रात्रौ भुङ्क्त" इति शब्दः कल्पनीय इति केचनाऽऽशेरते । अपरे तु रात्रिभोजनरूपोऽर्थ एव कल्पनीय इत्यभिप्रयन्ति; इति पक्षद्वयमुपक्षिप्यार्थकल्पनापक्षमपहायार्थस्य शाब्दबोधे भानायोगाच्छ्रूयमाणवाक्यस्य तद्वाचकशक्त्यभावाच्चेति निरस्यति स्म । ततो यत्र श्रूयमाणस्य वाक्यस्य शब्दकल्पनयाऽनुपपत्तिश्शाम्यति, तत्र शब्द एव परिकल्प्यते, न त्वर्थः । यत्र तु शब्दकल्पनेऽप्यर्थकल्पनां यावदनुपपत्तिर्न शाम्यति, तत्राऽर्थ एव कल्प्यते, न शब्द इति यथालोकमभ्युपगम्यते । किञ्च प्रत्यक्षादीनां प्रमाणानामप्रवृत्तेश्च शब्द एव परिकल्प्यते । अतश्श्रुतार्थापत्तेः प्रमाणग्राहिणीत्वेन प्रमेयकल्पिकाया दृष्टार्थापत्तेर्वैलक्षण्यम् । तथा च "रात्रौ भुङ्क्त" इति वार्तिककारेण न्यरूपि । यथा—

दत्तसम्बन्धितयाऽवगतस्य भोजनस्य दिवानिषिद्धस्य पीनत्वानुमितस्याऽनुपपत्त्या "रात्रौ भुङ्क्ते" इति वाक्यमेव कल्प्यत इति वदन्ति।

[1]तदयुक्तम्। अत्राऽप्यर्थस्यैव कल्पयितुमुचितत्वात्। यस्मिन्ह्यकल्पितेऽनुपपत्तिः, तदर्थापत्त्या प्रतीयते। रात्रिसम्बन्धे ह्यनवगते भोजनस्याऽनुपपत्तिः। [2]कालसम्बन्धाभावेन[3] ह्येषाऽनुपपत्तिः, सा कालान्तरसम्बन्धमेव कल्पयितुमलम्। अथोच्येत—अर्थसद्भावमेव कल्पयितुमर्थापत्तिः प्रवर्तमाना तस्याऽर्थस्य सविकल्पकज्ञानवेद्यत्वात्, सविकल्पकज्ञानानाञ्च शब्दपुरस्सरत्वात् पुरोवर्तिनि शब्द एवाऽर्थापत्तिः पर्यवस्यति, स च शब्दस्स्वार्थमुपस्थापयति। न चेदमाशङ्कनीयम्—[4]लैङ्गिकमैन्द्रियकञ्च सर्वमेव सविकल्पकं शब्द एवाऽनेन न्यायेन पर्यवस्येदिति। यतो निर्विकल्पकदशायामिन्द्रियस्य लिङ्गस्य [5]चार्थबोध एव सामर्थ्यं दृश्यते, तेन सविकल्पकावस्थायामप्यर्थ एव तयो-

---

"पीनो दिवा न भुङ्क्ते चेत्येवमादिवचश्श्रुतौ॥
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरूच्यते॥ इत्यादिभिः।
न चाप्यस्याः प्रमाणत्वे कश्चिद्विप्रतिपद्यते।
भेदाभेदे विसंवादः कुतस्तत्र विनिर्णयः॥" [अर्था. परि. श्लो.५१—८५।]

इत्यन्तैः। एतत्सर्वं हृदि निधायाह—अत्र केचिदित्यादिना कल्प्यत इति वदन्तीत्यन्तेन।

[1] उपन्यस्तं वार्तिकमतं निराकरोति—"तदयुक्तमिति"। अस्याऽयमाशयः—तथाहि—"पीनो देवदत्तो दिवा न भुङ्क्त" इत्यत्र श्रुतो दिवा भोजनाभावो रात्रिभोजनं विना पीनत्वस्याऽनुपपन्नत्वे सत्यनुपपद्यमानो रात्रिभोजनमेव कल्पयति, न शब्दम्, न हि शब्देन विनाऽर्थस्यानुपपत्तिः, किन्त्वर्थेनैवेति, अर्थकल्पना युक्ता। यद्युच्येताऽर्थकल्पनाय प्रवृत्ताऽर्थापत्तिः रात्रिभोजनरूपस्याऽर्थस्य सविकल्पकज्ञानवेद्यत्वेन शब्दपूर्वकत्वप्रतीते शब्द एवादावुपतिष्ठते। तेनानुपपत्तेस्संशमायाऽर्थः कल्प्यत इति।

इदमविचारितरमणीयम्। टीकाकार इत्थम्मेने—सर्वत्र सविकल्पकज्ञानेषु शब्दो विशेषणतया भासते। वाचकतया शब्दोऽर्थमवच्छिन्नत्ति। तेन गौरिति प्रतीतौ गोशब्दवाच्योऽयमित्याकारकोऽर्थो गृह्यते। न हि शब्दश्शब्दवाच्यतां वक्ति, तेनाऽर्थस्याऽप्रतिपादकोऽस्मिन्विषये शब्दः। किन्तु वृद्धव्यवहारावगतया वाचकतया वाच्यं विशिंषन्नवभाति। तेन शब्दोऽर्थस्यानुपस्थापकत्वात् प्रथमभाव्यपि नानुपपत्तिं शमयितुं प्रभवतीति नाऽर्थापत्तिप्रमेयतां गन्तुमर्हति। तेनाऽर्थविषयैवेयमपि। तत्राऽपि शब्दः, सम्बन्धश्चेति द्वयमपि स्मृतिविषयतया भासत इति तैरङ्गीकारात्। अयं विषयः प्रत्यक्षपरिच्छेदे मूल एव "संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधत" प्र० पं० पृ० १४२. इत्यत्र विवेचितमिति, विस्तरस्तत्रैव द्रष्टव्यः।

[2] कालान्तरेति. मु. पु. पा.। [3] भानेनेति मु. पु. पा.।
[4] लौकिकमैन्द्रियकञ्चेति. मु. पु. पा.। [5] अर्थे इति. मु. पु. पा.।

व्यापारः परिकल्प्यते। श्रुतार्थापत्तिबोधस्तु निर्विकल्पको न सम्भवति, शब्दव्युत्पत्तिपूर्वकत्वात्। व्युत्पन्नशब्द एव हि [1]वाक्यस्याऽर्थमवबुद्ध्य तदन्यथानुपपत्त्याऽर्थान्तरमवबुभुत्सते।

अथोच्यते—दृष्टार्थापत्तावर्थ एवाऽर्थापत्तेः प्रमाणत्वं दृष्टमिति, श्रुतार्थापत्तेरपि तत्रैव प्रामाण्यं स्यादिति। तन्न। यस्मिन्खल्ववगतेऽनुपपत्तिश्शाम्यति, तत्राऽर्थापत्तेः प्रामाण्यम्। शब्देऽपि चाऽवगते शाम्यत्येवानुपपत्तिः, अतस्तत्राऽपि प्रामाण्यं नाऽयुक्तमिति।

अत्रोच्यते—रात्रिसम्बन्धे हि भोजनस्याऽन[2]वगतेऽनुपपत्तिरापतति। सा तावच्छब्दस्वरूपमात्रेऽवगतेऽपि न शाम्यति, यावत् ततश्शब्दाद्रात्रिसम्बन्धो भोजनस्य नाऽवगम्यते। न हि "पीनो देवदत्तो दिवा न भुङ्क्त" इति प्रयुज्य, यदा पुनरेवमुच्यते—यामिन्यामत्तीति, तदा यामिनीशब्दे, अत्तौ चाऽव्युत्पन्नस्य पूर्ववाक्यार्थविषयाऽनुपपत्तिरुपरमति। अतोऽर्थस्यैव साक्षादुपपादकत्वम्, न शब्दस्य। उपपादकार्थविषयात्वर्थापत्तिर्दृष्टार्थापत्तौ प्रतीतेति, न [3]क्वचिदुपपादकावबोधकशब्दे प्रमाणतामर्हति।

अर्थापत्तौ सर्वत्राऽर्थस्य कल्पनम्।

[4]किञ्चाऽन्यत्र तावत्सविकल्पके शब्दस्य स्मृतिविषयताऽङ्गीकरणीया।

---

[1] पूर्वेति मु० पु० पा०। [2] अवगत इति मु० पु० पा०।

[3] उपपादकावबोधे इति मु० पु० पा०।

[4] अपरिपूर्णवाक्यस्थले शब्दाध्याहारोऽभिहितान्वयवादिभिर्भाट्टमीमांसकैरङ्गीक्रियते। द्वारमित्यत्र पिधेहीति शब्दमध्याहरन्ति। पदजन्यपदार्थोपस्थितेश्शाब्दबोधं प्रति हेतुत्वात्। अत एवैते शब्दाध्याहारवादिन इति प्रथन्ते। अन्विताभिधानवादिनः प्राभाकरमीमांसका अपरिपूर्णवाक्यस्थले पिधानरूपमर्थमध्याहरन्ति। अत एवेमेऽर्थाध्याहारवादिन इति गीयन्ते। शब्दाध्याहारेणाप्यनुपपत्तेरनुपशमात्, अर्थकल्पनेनैवोपत्तेः किमन्तर्गडुना शब्दकल्पनेन। तद्धेतोरेव तदस्तु, मध्ये किन्तेनेति न्यायात्।

का पुनरियं शब्दस्याऽपरिपूर्णता, अर्थ एव केनचिदर्थेन विनाऽपरिपूर्णो भवति, न पुनश्शब्दः। अर्थस्याऽपरिपूर्णत्वे शब्दोऽप्यपरिपूर्ण इति चेन्मूलभूतार्थानुपपत्तिरेवाऽर्थापत्तेरुपस्थापिकाऽस्तु। अपि चान्विताभिधानवादे पदानामन्वयानुभवजननसामर्थ्यं शक्तिरित्यभिधीयते। एकैकपदार्थोपस्थितिस्तु स्मृतिरूपा न शक्तिसाध्या, एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायात्। अत एव पदशक्त्यसाध्यत्वादर्थोपस्थितेः स्मृत्यन्तरसाधारणायास्तद्वैजात्यकल्पने

एवञ्चेदत्राऽपि स्मृतिविषय एव शब्दोऽस्तु, मा भूत्तस्य प्रमाणविषयता। अतश्श्रुतार्थापत्तिरपि शब्दग्राहिणी न भवति, किन्तूपपादकार्थग्राहिण्येवेति स्थितम् ।

इति महामहोपाध्यायश्रीशालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां पञ्चमोऽर्थापत्तिपरिच्छेदस्समाप्तः ।

---

प्रमाणाभावादर्थाध्याहार एव युज्यतेऽसति बाधके, न पदाध्याहार. । लोके जिज्ञासावशेन क्वचित्प्रयोगसाधुत्वसम्पादनाय पुष्पेभ्य इत्यत्र स्पृहयतीति पदाध्याहारोऽभियुक्तानामभिमत । वेदेऽपि "विश्वजिता यजेत" इत्यत्र नियोज्यलाभाय स्वर्गकामपदस्य, "सौर्यञ्चरु निर्वपेद्ब्रह्मवर्चसकाम" [मै. स २ २ २] इति वाक्यविहिते सौर्यचरावतिदेशेन प्राप्ते प्रकृतौ वाचकपदवत्तया क्लृप्तोपकारे "देवस्यत्वेत्यादि" "अग्नये जुष्टं निर्वपामी"[तै सं १ १ ४. २]ति मन्त्रेऽग्निपदबाधेन वाचकपदलाभाय सूर्यपदस्याऽध्याहारष्टीकाकृतोऽभिमत. । पदार्थस्मरणाय वाक्यार्थानुभवाय वा शब्दाध्याहारो नाऽपेक्ष्यते। अभिहितान्वयवादान्विताभिधानवादयोस्स्वरूपं वाक्यार्थमातृकानामन्त्येकादशप्रकरणे कणेहत्य विवेचयिष्यते, अभिहितान्वयवादिभिरपि क्वचिदगत्याऽन्विताभिधानवाद एवैषितव्य इत्यादि च। तथा चाऽर्थाध्याहार एव श्रेयान् शब्दाध्याहारात् । यदि शब्दस्याऽध्याहार इत्याग्रह, तर्हि सर्वेषु सविकल्पकप्रत्ययेषु स्मर्यमाणत्वेन शब्दानुप्रवेशस्य प्राभाकरसिद्धान्तसिद्धतया प्रकृतेऽपि न न· किञ्चिदपचीयते । स्मरणविधया शब्द: प्रविशतु, न तु प्रमाणग्राहित्वेन । अतश्श्रुतार्थापत्तिर्दृष्टार्थापत्तितो नाऽतिरिच्यत इत्यर्थाध्याहारवादिना गुरूणाम्मतमित्याशयेनाह—किञ्चेत्यादिना ।

# [1]अभावप्रामाण्यनिराकरणं नाम षष्ठः परिच्छेदः ।

प्रकरणार्थप्रतिज्ञा ।

[2]ये पुनरभावाख्यं षष्ठं प्रमाणमिच्छन्ति, तत्प्रतिबोधनाय सम्प्रति यत्न आरभ्यते ।

भाट्टमतेन पूर्वः पक्षः ।

तथाहि—सर्वं प्रमाणं प्रमेयाविनाभावि । न[3] चाऽभावाख्यस्य प्रमा-

---

[1] अत्रेद बोध्यम्—यद्यपि मुद्रितपुस्तके परिच्छेदान्तरत्वेन मुद्रितो दृश्यते, तथाऽपि भाट्टसम्मतस्याऽभावग्राहकस्याऽनुपलब्धिनामकस्य प्रत्यक्षादिभ्यो व्यतिरिक्तस्य निराकरणायाऽस्य प्रघट्टकस्योपक्रम इति सकलग्रन्थपर्यालोचनयाऽवगम्यते । अतोऽस्य परिशिष्टग्रन्थसन्दर्भस्य प्रत्यक्षाद्यर्थापत्तिपर्यन्तप्रमाणपञ्चकनिरूपणपरस्य प्रमाणपारायणस्य शेषत्वमेव युक्तम्, न तु परिच्छेदान्तरत्वम् । यथोक्त बृहत्याम्—

"सर्वलक्षणाभिवानवाक्यशेषोऽय ग्रन्थ —तस्मात्कार्यास्तमयान्नास्तीत्यनेन पूर्वोक्तस्यैव लक्षणस्य साधुतोच्यते" इति (बृ. पृ. १२१–१२२) अमृतकलायामप्ययमर्थो विशदीकृत (श्लो० ६१–७२) । अतो नेद परिच्छेदान्तरम्, प्राङ्निरूपितप्रमाणपञ्चकस्याऽवधारणार्थो वाक्यशेष इत्यवगन्तव्य सूरिभि ।

[2] ये किल कौमारिलतन्त्रानुसारिण, व्यवहारे भाट्टनय इति वदन्तो वेदान्तिनश्च यद्यत्र घटस्स्यात् तर्ह्युपलभ्येत, यतो नोपलभ्यते, अतो नास्तीत्येव योग्यवस्तूपलम्भाभाव-जन्यम् "इह भूतले घटो नास्ती"ति घटाभावज्ञानमनुपलब्धिप्रमाणकृत्यमित्येवमङ्गीकुर्वन्ति। तेषा मत व्युदसितु तन्मतमनुवदति—ये पुनरिति । भट्टपादानुयायित्वं वेदान्तिना न सर्वांशे, अपि तु प्रमाणेयत्तादिकियदश इति बोध्यम् ।

[3] तत्र भवानक्षपादोऽनुपलब्धेरनुमानेऽन्तर्भाव सूत्रयामास । तथा च सूत्रम् । "शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाऽप्रतिषेध ।" (न्या द अ ५ आ १ सू २) इति ।

गौतमसूत्रस्याऽयमर्थं—ऐतिह्यादीना प्रमाणत्व न प्रतिषिध्यते, अपि तु प्रमाणान्तरत्व-प्रतिषेध इति ।

उद्योतकराचार्यस्तु—"समवायेऽभावे च विशेष्यविशेषणभावा" (प्र सू वा. पृ ३३) दिति वदन्, विशेषणतासन्निकर्षेणाऽभावस्य प्रत्यक्षत्वमित्येव मेने ।

"अभावोऽप्यनुमानमेव" [ प्र पा भा ] इति ।

प्राभाकरमीमांसकास्तु—अभावस्याऽधिकरणात्मकत्वमङ्गीकुर्वन्तोऽधिकरणस्य भूतलादे-रिन्द्रियग्राह्यत्वेन भावातिरिक्तस्याऽभावस्य प्रमेयस्यैवाऽभावात्तदर्थमनुपलब्धेः प्रमाणत्वेनाऽश्रयणं नोपपद्यत इति । यद्वा तद्वा भवतु, अनुपलब्धे प्रमाणान्तरत्वन्न सञ्जाघटीतीत्याशये-नाह—न चेति ।

णस्य प्रमेयं किञ्चिन्निरूप्यते[1] । ननु न प्रमाणान्तरबोध्यविषयं प्रमाणम् । किन्तु सर्वमेव प्रमाणं स्वमहिम्नैव प्रमेयमुपस्थापयति । न खलु प्रत्यक्षस्याऽपि प्रमेयं प्रमाणान्तरव्यवस्थापनीयम्, किन्तु तत् प्रतीतिबलसिद्धम् । एवमभावाख्यमपि प्रमाणं [2]शक्नोति स्वसामर्थ्येनैव प्रमेयमुपकल्पयितुम् । *तथाहि—"इह भूतले घटो नास्ती"ति तावदस्ति प्रतीतिः । सा तावद्भूतलमात्रविषया न भवति, सत्यपि घटे प्रसङ्गात् । अथ केवलभूतलविषयेत्युच्यते । तत्राऽपि चिन्तनीयम्—किमिदं कैवल्यम् ? यदि तावद्भूतलस्वरूपमेव, तदा सत्यपि घटे [3]तस्याऽनपायात् "घटो नास्ती"ति धीस्स्यात् ।

अभावस्य प्रत्यक्षग्रहणाशङ्का-तन्निरासौ ।

अथ भूतलधर्मः कैवल्यं, [4]तर्हि अस्ति तावत् प्रमेयान्तरं कैवल्यम् । तत्रेदं विचारणीयम्–किं तत् प्रत्यक्षादिबोध्यम् ? उत [5]अभावप्रमाणप्रमेयम् ?

[1] निरूप्यत इत्यादिः किन्त्वित्यन्तः पाठो मुद्रिते पुस्तके नास्ति, खपुस्तकानुसारेण मूले न्यवेशीति ध्येयम् ।

[2] न शक्नोतीति पा. ु. पु. । [3] अनपायान्नास्तीतिधीस्स्यादिति मु. पु. पा. ।

[4] तर्हीत्यादिः कैवल्यमित्यन्तः पाठो मु. पु. न. दृश्यते । खपुस्तकानुसारेणाऽयमंशो निवेशितः ।

[5] प्रमाणान्तरेति. मु. पु. पा. ।

* अत्रेदमाकूतम्—अभावस्य प्रमाणान्तरत्ववादिनाऽभावस्याऽतिरिक्तत्वं साधनीयम्, तदनभ्युपगमेऽनुपपत्तिः, पादन्यासादिव्यवहारसिद्धये सूक्ष्मकीटकण्टकादिजिज्ञासेत्याद्यर्थमभावलक्षणं तत्त्वान्तरमास्थेयम् । तत्र प्रत्यक्षानुमानोपमानार्थापत्तीनामप्रवृत्त्या पारिशेष्यादनुपलब्धेः प्रमाणान्तरत्वमेपिनव्यमिति । तथा हि—"भूतले घटो नास्ती"ति तावदस्ति प्रतीतिस्सर्वजनीना । सा भूतलस्वरूपविषया, केवलतद्विषया वेति द्वेधा विकल्पः । तत्र किन्नाम कैवल्यमिति विचारणीयम्—किं कैवल्यं भूतलस्वरूपम्, उत भूतलधर्म इति । तत्र नाद्यः पक्षो विचारमर्हति । भूतले घटसत्तादशायामपि "भूतले घटो नास्ती"ति प्रतीतिः केन वार्येत । न द्वितीयः—प्रागुक्तदोषापरिहारात् । कैवल्यस्य भूतलधर्मत्वे गले पादुकान्यायेनाऽभावाङ्गीकार आपद्येत । सेयमुभयतः पाशारज्जुः । तथा च "भूतले घटो नास्ती"ति प्रतीतिसिद्धमभावाख्यं प्रमेयमभ्युगन्तव्यम् ।

कीटकण्टकादिरहिते भूतलादौ निश्शङ्कश्चरणन्यासादिव्यवहारः, तत्प्रदेशान्निवृत्तिश्चाऽनुभूयते । स च प्रवृत्तिनिवृत्तिलक्षणो व्यवहारः किं भूतलमात्रपरिच्छेदनिबन्धनः, उत केवलभूतलपरिच्छेदनिबन्धनो वेति द्विधा विकल्पः । पुनस्तत्रापि विकल्पो द्वेधा—कैवल्यं परिच्छेदस्य विशेषणम्, उत भूतलस्येति । नाद्यः–कण्टकादिमत्यपि पादन्यासादिव्यवहारप्रसङ्गात् ।

इति। तत्र प्रत्यक्षप्रमेयं तावन्न भवति, इन्द्रियव्यापारमन्तरेण प्रतीतेः। नन्विदमयुक्तम्—व्यापृतेन्द्रिय एव हि "इह भूतले घटो नास्ती"त्यवबुध्यते, नाऽन्धादिः। अत्रोच्यते—कचित्कस्यचिदभावः प्रतीयते, तेन यत्राऽभावः प्रत्येतव्यः, तद्ग्रहणायेन्द्रियव्यापारापेक्षा, नाऽभावग्रहणाय। कथं पुनरयं विभागोऽवसीयते? उच्यते—भावग्रहणमात्रोपरतेन्द्रियव्यापारस्याऽप्यभाव-प्रतीतिदर्शनाद्भावग्रहणमात्र एवेन्द्रियव्यापारापेक्षेति विज्ञायते। तथाहि—स्वरूपमात्रेण गृहादिकं प्रतिपन्नवतो देशान्तरगतस्याऽपि तत्र भावान्तरसत्तां जिज्ञासमानस्याऽभावावगमो जायते। न च शक्यते वक्तुं गृहीत एव तत्राऽपि प्रागेवाऽभाव इति। भावान्तरस्यैव तदानीं बुद्धावनारोहात्। तेनेन्द्रियव्यापारानपेक्षाऽभावप्रतीतिर्नैन्द्रियकीति, न प्रत्यक्षप्रमेयं कैवल्यम्।

न च वाच्यं प्रवृत्ति-निवृत्ती द्वे गती सर्वप्रमाणानाम्, तत्र प्रवर्तमानं प्रमाणं भावसाधकम्, निवर्तमानं त्वभावसिद्धिनिबन्धनम्। या निवृत्तिः प्रमाणस्य स्वतस्तावदवगतिरूपा न भवति, सा कथमभावसिद्धिमाविर्भावयति। प्रवृत्तिस्तु *प्रमाणानामवगमात्मिकेति तां व्यवस्थापयितुमलम्। अथ प्रमाणनिवृत्तिरवगत्यन्तरं जनयित्वाऽभावं व्यवस्थापयति, आयातं तर्हि प्रमाणान्तरम्।

अनुमानेनाऽभावग्रहणशङ्का-तन्निरासौ।

भवतु प्रत्यक्षात्प्रमाणान्तरम्, अनुमानात्तु भेदो नास्ति। दृश्यस्य हि सत्ता दर्शनेन व्याप्ता। दर्शनं निवर्त्तमानं दृश्यमपि निवर्तयति। व्यापकनिवृत्तिर्हि व्याप्यनिवृत्त्या व्याप्ता। व्याप्याच्च व्यापकावगतिर-नुमानमेव भवति।

---

चरमे तु केवलपरिच्छेदश्च यथाकथञ्चित्परिच्छेद इति वक्तव्यमापतति। तथा सति सूक्ष्मकीटकण्टकादिष्वज्ञातेष्वपि निश्शङ्कः प्रवृत्तिनिवृत्तिलक्षणो व्यवहारः प्रसज्येत, प्रयत्नपुर-स्सरा विशेषजिज्ञासाऽपलपिता स्यात्। द्वितीयेऽभावाख्यं प्रमेयमभ्युपगतं स्यात्। तदभ्यु-पगमे तु नाऽयं दोषः।

अभावानङ्गीकारे नास्ति शब्दोऽनर्थकस्स्यात्। शशादीनां शृङ्गानुमानम्, कूर्मशरीरे रोमानुमानञ्च प्रसज्ज्येत। "इदं रजतमि"त्यस्य नेदं रजतमित्यनेन बाधो न स्यात्। तदभ्युपगमे नाऽयं दोषः। अतोऽपि हेतोरभावाख्यं तत्त्वान्तरमास्थेयम्।

*अवगमात्मिका तावदिति मु. पु. पा.।

तदिदमयुक्तम् । सर्वत्र हि व्याप्यं व्यापकञ्चाऽवगम्य, व्याप्तिरवसीयते । इह च व्याप्या व्यापिका च निवृत्तिरेव, सा [1]चाऽभावात्मिका न भावग्राहकप्रमाणावसेयेति, न व्याप्त्यवधारणं सम्भवतीति कथमनुमेयता[2] । लिङ्गभूतप्रमाणनिवृत्त्यवगमानवक्लृप्तेश्चाऽनुमानत्वासम्भवः[1] । तस्माद्भावग्राहकप्रमाणाननुवृत्तिरेवाऽभावावगमं प्रसूते ।

[3]तच्चाऽभावाख्यं प्रमाणम् ।[4] यच्च प्रमाणं यद्भावग्रहणयोग्यम् , तन्निवृत्तिरेव तदभावमवबोधयतीति, नाऽतिप्रसङ्गदोषोऽत्र जायते । अतोऽभावाख्यमपि प्रमाणं स्वमहिम्नैव स्वविषयमुपकल्पयति, भावग्राहकप्रत्यक्षादिप्रमाणपञ्चकवत् ।

व्यवहारानुपपत्त्याऽऽभावस्याऽऽवश्यकत्वकथनम् ।

अपि च कण्टकादिविरहिणि भूतलादौ यो निश्शङ्कः पादविन्यासादिव्यवहारः प्रवर्तते, स तावद्भूतलमात्रपरिच्छेदनिबन्धनो नाऽभ्युपगमनीयः, कण्टकादिसंयोगिन्यपि प्रसङ्गात् । अथ केवलभूतलादिपरिच्छेदनिबन्धन इत्युच्यते । तत्राऽपि विकल्पनीयम्—किं केवलस्य भूतलादेः परिच्छेदाद्व्यवहारप्रवृत्तिः ? अथ केवलाद्भूतलपरिच्छेदादिति ? तत्राऽग्रिमपक्षपरिग्रहे भूतलादिस्वरूपातिरिक्तकैवल्यपरिच्छेदाभ्युपगमादङ्गीकृतमभावस्य प्रमेयत्वम् ।

---

[1] सा चोभयात्मिकेति मु. पु. पा. ।

[2] अनुमानतेति मु. पु. पा. ।

[3] तच्च प्रमाणमिति मु. पु. पा. ।

[4] अभावाख्यं प्रमेयं भावग्राहकप्रमाणैर्गृह्यते उताऽभावप्रमाणेन गृह्यत इति द्वेधा विकल्पः । तत्र प्रत्यक्षेणाऽभावो गृह्यते इति न वक्तुं शक्यते, इन्द्रियसन्निकर्षाभावात् ।

अत एवोक्तं कुमारिलभट्टेन—

"न तावदिन्द्रियैरेषा नास्तीत्युत्पद्यते मतिः ॥
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि" ॥ (श्लो.वा.अ.प.श्लो. १८) इति ।

चक्षुरादेरिन्द्रियस्याऽधिकरणग्रहणेनैवोपक्षीणत्वात् । अभावः प्रत्यक्षेण गृहीतुं न शक्यते । निर्विकल्पकेनाऽभावस्समर्यत इति कथनं विदुषां न शोभते प्रतियोगिविशेषितवेषस्याऽभावस्य सर्वद. निर्विकल्पकागोचरत्वात् । नाऽप्यनुमानमभावं ग्रहीतुमीष्टे तदनुमापकलिङ्गाभावात् । उपमानार्थापत्त्योरनवसर एव । अतस्तदुपलम्भकप्रत्यक्षादिप्रमाणपञ्चकाप्रवृत्तेरनुपलब्धिनामकं षष्ठं प्रमाणमङ्गीकर्तव्यम् । तच्चाऽभावाख्यं प्रमाणं स्वमहिम्नैव स्वविषयमुपस्थापयति ।

अत्रेदमनुमानं बोध्यम्—अभावस्स्वानुरूपेण प्रमाणेन गृह्यते प्रमेयत्वात् भाववदिति ।

पश्चिमपक्षावलम्बने तु भूतलमात्रपरिच्छेदे जाते [1]सूक्ष्मेषु कीटकण्टकादिष्वनवगतेषु व्यवहारो यदि प्रवर्तते, तदा सूक्ष्मकीटकण्टकजिज्ञासा निष्फला भवेत् । प्रयत्नपूर्विकया हि जिज्ञासया केवलभूतलपरिच्छेद एव लब्धव्यः । स चेद्विनापि प्रयत्नं लब्धः, निष्फलं प्रयत्नपूर्वकं सूक्ष्मकीटकण्टकाद्यन्वीक्षणम्[2] । कैवल्यपरिच्छेदस्य प्रयत्नमन्तरेणाऽवगन्तुमशक्यत्वाद्युक्त एव प्रयत्नः । दृश्यादर्शनं ह्यभावावगमे कारणम् । न च सूक्ष्माः कीटकण्टकादयः प्रयत्नमन्तरेण दृश्यतामापद्यन्त इति, [3]दृश्यत्वोपपत्तये युक्तैव प्रयत्नपूर्विका जिज्ञासा ।

अपि च शशादीनां शृङ्गाद्यनुमानं स्यात्, अभावस्याऽपरिच्छेद्यत्वात् । अभावस्य तु प्रमेयत्वे [4]बाधितविषयत्वेनाऽनुमाननिरोधो युक्त इति ।

प्राभाकरमतेन सिद्धान्तः ।

उच्यते—[5]भावानामवगतिर्द्विविधा[6]—एका तावद्भावान्तरसंसृष्टविषया,

---

अमुमर्थं व्याप्तिमुखेन वार्तिककारस्संक्षेपेण प्रादीदृशत् ।

यथा—

"भावात्मके यथा मेये नाऽभावस्य प्रमाणता ॥

तथाऽभावप्रमेयेऽपि न भावस्य प्रमाणता" ॥ (श्लो वा अ श्लो ४६) इति ।

तथा च प्रतीतिसिद्धत्वेनाऽभावस्याऽपन्होतुमशक्यत्वात् । अनङ्गीकारे बाधव्यवहारानुपपत्तिरूपबाधकतर्कस्य सत्त्वाच्च, तद्ग्रहणायाऽनिच्छता भवताऽभावाख्य प्रमाणान्तर स्वीकर्तव्यमित्येतत्सर्वं मनसि निधायाऽऽह—तथाहीत्यादिना—प्रमाणपञ्चकवदित्यन्तेन ।

[1] श्लक्ष्णेषु इति मु पु पा । [2] अन्वेषणमिति मु पु पा ।

[3] दृश्यत्वापत्तये इति मु पु. पा । [4] अनुमानविरोध इति मु पु पा ।

[5] मुद्रितपुस्तके भूतलादिभावानामवगति इत्येव दृश्यते । म० म० चित्रधरमिश्राणा पुस्तके द्वेधा इति तैस्संशोधितोऽस्ति । खपुस्तके तु द्वय्येवेति पाठो दृश्यते । भाष्यपरिशिष्टे स्वरूपोपलब्धिर्भूतलादेर्द्विविधा—एका अर्थान्तरसंसर्गवती, अपरा भूतलैकविषयेति पाठो दृश्यते । तन्त्ररहस्येऽपि द्विविधा तावद्भूतलादीनामवगतिरिति पाठो दृश्यते । अतस्तदनुसारेण द्विविधेति पाठोऽस्माभिस्सन्यवेशि इति विज्ञेयम् ।

[6] अत्रेद बोध्यम् । अधिकरणस्वरूपातिरिक्तोऽभाव प्राभाकरमीमासकैर्न स्वीक्रियते । तत्राऽतिरिक्ताभाववादिभिर्ये दोषा उद्घाटिता, तान् परिजिहीर्षुस्स्वसिद्धान्तमादावुपन्यस्यति—उच्यत इति । अयम्भाव । तथा हि—एका भावान्तरसंसृष्टविषया, अपरा तदेकविषया च, अनन्तरोक्ताऽपि द्विविधा—प्रतियोगिनि दृश्येऽदृश्ये च । तत्र दृश्ये प्रतियोगिनि या तदेकविषया

अपरा च तदेकविषया। याऽपि च तदेकविषया बुद्धिः, साऽपि द्विविधा—[1]प्रतियोगिनि दृश्येऽदृश्ये च। तत्र दृश्ये प्रतियोगिनि या तदेकविषया बुद्धिः, सैव तस्य प्रतियोगिनोऽभाव इत्युच्यते। योऽपि हि प्रमेयमभावमपरमाह—सोऽपि [2]प्रतियोगिनि दृश्ये तदेकविषयां बुद्धिं तावदवश्यमभ्युपैति। न हि संसृष्टविषयबुध्युदयेनाऽप्यदृश्ये प्रतियोगिन्यभावोऽवगम्यते। किञ्च दृश्यादर्शनमभावावगमे प्रमाणम्। न च प्रमाणमन्तरेण प्रमेयसिद्धिरस्तीति यत्राऽभावोऽभ्युपगमनीयः, तत्राऽवश्यं दृश्यादर्शनमाश्रयणीयम्। [3]तुल्योपलम्भयोग्यार्थान्तरदर्शनेन दृश्यानुपलम्भोऽवधार्यते। अतो [4]दृश्ये प्रतियोगिनि तदेकविषयोपलब्धिरेव वरमभावोऽस्तु।

[5]ननु यद्यभावो नास्ति, कथं तर्हि यत्र प्राक् संसृष्टबुद्धिरासीत्, तत्र तदेकविषया बुद्धिराविर्भवति, प्रध्वंसाभावाभ्युपगमे तु सा स्यात्। अपि च विनाऽपि तदेकविषयां बुद्धिम्, अभावावगतिरस्ति। अनुमानाद्येकविषयाणां भावानामनुमानाद्यभावेऽभावो दृश्यते। तत्र तुल्योपलम्भयोग्यभावान्त-

---

बुद्धिः, सैव प्रतियोगिनोभावः, तथा च यस्मिन्दृश्ये प्रतियोगिनि या तदेकविषया बुद्धिः, सा तदभाव इति विशेषतो व्यपदिश्यते—भूतले घटाभाव इति। अतो भूतले घटो नास्तीत्युक्ते घटे दृश्ये भूतलमात्रस्य बोध इत्युक्तं भवति। प्रतियोगिनि दृश्यत्वञ्चान्यत्रप्रमितस्याऽन्यत्र प्रसक्तिः। इदञ्चाऽतिरिक्तवादिभिरवश्यमुररीकरणीयम्। अन्यथाऽप्रसक्त तिषेधस्समापद्येत, "प्रसक्तं हि निषिध्यत" इति न्यायात्। सैव दृश्यता, सा च गुरुमते ज्ञानविशेष इति, वरं धर्मिकल्पनातो धर्मकल्पना लाघवात्।

अभावज्ञानमनुयोगिज्ञानं, प्रतियोगिज्ञानञ्चाऽपेक्षत इत्यभाववादिना स्वरूपज्ञानमभावज्ञानात्प्रागेष्टव्यम्। अत एव कुमारिलभट्टः प्राह—

"स्वरूपमात्रं दृष्ट्वा च पश्चात्किञ्चित्स्मरन्नपि।
"तत्राऽन्यनास्तितां पृष्टस्तदैव प्रतिपद्यत"॥ इति।

अतोऽधिकरणस्वरूपातिरिक्तोऽभावो नाऽङ्गीकर्तव्य इति।

१ तदन्येषु भावान्तरेषु तत्संसर्गिषु दृश्येष्वदृश्येषु च। तत्र येयं दृश्येषु प्रतियोगिषु तदेकविषया बुद्धिः, सैव तेषां प्रतियोगिनामभाव इत्युच्यते इति. ख. पु. पा.।

२ प्रतियोगिषु दृश्येषु इति खपुस्तके मुद्रितपुस्तके च दृश्यते।

३ तुल्योपलम्भयोग्यस्येति मु. पु. पा.।

४ दृश्यप्रतियोगिविषया तदेकोपलब्धिरेवेति मु. पु. पा.।

५ अभावानभ्युपगमेऽनिष्टमापादयति—नन्विति। प्रागभावादिभेदभिन्नेषु चतुर्विधेष्वभावेषु यस्य यस्याऽभावस्य यद्यदधिकरणमभावादिनो मते, तत्र तदधिकरणमात्रगोचरा बुद्धिरेव

रैकविषया बुद्धिर्नास्ति, अथ चाऽभावोऽवगम्यत इति तदेकविषयबुद्धि-व्यतिरेकेणाप्यभावोऽवगम्यत इति ।

अत्राऽभिधीयते—यस्याऽपि मते प्रध्वंसाभावस्स्वीक्रियते, तमपि प्रति पर्यनुयोगोऽयं शक्यते [1]दातुम् । यस्य यत्र भाव आसीत्, कथं तस्य तत्राऽभावः ? इति । स चेत् पर्यनुयुक्तो ब्रूते—यत् कारणोपनिपातवशेन तस्मिन्नेवाऽभावो जायत इति, ततो वयमपि वदितुं शक्ताः कारणोपनिपाता-देव तदेकविषया बुद्धिराविर्भवतीति । यथैव स वादी प्रध्वंसाभावस्य कार-णमाह, तथैव तदेकविषयाया बुद्धेरपि वयं वदितुं क्षमाः । [2]अथोच्येत—मुद्गराभिघातादिः क्षणिकोऽभावस्य कारणम्, स कथं कालान्तरे तदेक-विषयां बुद्धिं जनयति ? इति । हन्त तर्हि कपालमालाद्युत्पत्तिस्तदेकविषय-बुद्धिः कारणमस्तु । *एतेन देशान्तरनीते वस्तुनि तदेकविषया बुद्धिर्व्या-ख्याता । अत्राऽपि देशान्तरं नीतस्य वस्तुनस्तत्र स्थितिरेव तदेकविषय-बुद्धिनिमित्तमित्याश्रयणीयम् ।

ननु च भवतु स्वकारणोपनिपातात्तदेकविषया बुद्धिः, संसृष्टविषयाऽपि तु किमिति न स्यात् ? तस्याः कारणविनाशात्सा न स्यादिति चेत्, अङ्गीकृतस्तर्हि नाशापरपर्यायोऽभावः । उच्यते—न वयमपि संसृष्टबुद्धेः कारणं विनाशं ब्रूमः, किन्तु भावान्तरोदय एव कारणमिति ब्रूमः । [3]ननु निरन्वयविनाशिनीनां बुध्यादीनां कस्य भावान्तरस्योदयो विनाशः[1] ।

---

गुरुमतानुयायिनामभाव इति 'यस्तूभयोस्समो दोष' इति न्यायात् । नास्तिशब्दस्तत्तदधिकरण-मात्रपरः । नञ्शब्दश्च स्वरूपमात्रपरश्चेति ।

परिहरति—अभाववादिमते यत्र प्राक् ससृष्टबुद्धिरासीत्, तत्राऽभावबुद्धिर्मुद्गरपाता-दिकारणवशादित्युच्यते । तर्हि प्राभाकरैरपि वक्तु शक्यते—तत एव तदेकविषया बुद्धिरुत्पद्यत इति ।

*प्राक् यत्र देशे घट आसीत्, ततोऽपसारितश्च तत्राऽपि देशान्तरस्थितिरेवाऽभावप्रतीते मूले भविष्यतीत्याशय मनसि निधाय पूर्वोक्तमेव कारणमतिदिशति—एतेनेत्यादिना—व्याख्या-तमित्यन्तेन ।

[1] मुद्रितपुस्तके दातुमिति नास्ति । [2] अत्रोच्यत इति. मु पु पा ।

[3] ननु निरन्वयविनाशिषु बुद्धिप्रभृतिषु कथं विनाशस्य समर्थनमित्याशङ्काया बुद्ध्या-देर्धर्मिणस्स्वरूपावस्थानमेव भावान्तरोदयोऽवगन्तव्य इत्यभिप्रेत्याह—"नन्वित्यादिना तत्र भावान्तरस्योदयोऽवगन्तव्य" इत्यन्तेन ।

उच्यते—धर्मिणः [1]स्वरूपमात्रेणाऽवस्थानमेव तत्र भावान्तरोदयोऽवगन्तव्यः।

[2]ननु किमिदं स्वरूपमात्रम्? न तावत्स्वरूपमेव, तस्य धर्मोदयकालेऽप्यविनाशात्। तस्माद्धर्माभाव एव धर्मिणस्स्वरूपमात्रमित्यङ्गीकरणीयम्। उच्यते—न भावातिरिक्तोऽभावोऽङ्गीक्रियते। भाव एवत्वेकाकी, सद्वितीयश्चेति द्वयीमवस्थामनुभवति। तत्रैकाकी भावस्स्वरूपमात्रमुच्यते। योऽपि चाऽभावाख्यं तत्त्वान्तरमभ्युपैति, तेनाऽपि तावदेकाकिभावोपलम्भनमाश्रित्य, अभावप्रमितिरङ्गीकरणीया। न ह्यप्रतीते भावेऽभावः प्रतीयते।

तत्र कीदृशस्य तावद्भावस्य प्रतीतिरभावावगतौ निमित्तमिति चिन्तनीयम्—किं सद्वितीयस्य? [3]अथवाऽभावविशिष्टस्य?, अथवा भावाभावानपेक्षस्यैकाकिन इति? [4]तत्र न तावत् सद्वितीयस्य भावस्य ज्ञानपुरस्सरमभावज्ञानं सम्भवति, घटवति भूतले प्रतीते* तदभावावगमप्रसङ्गात्। नाऽप्यभावविशिष्टभावावसायनिमित्ताऽभावावगतिः, आत्माश्रयदोषप्रसङ्गात्। अभावं हि प्रतीत्य, तद्विशिष्टं भावमवसाय, अभावः प्रतिपत्तव्य इत्यभावावगतिरेवाऽभावबोधोदये कारणमिति, व्यक्तमात्माश्रयत्वम्।

---

[1] स्वरूपमात्रेणाऽवसानमिति. मु. पु. पा.।  *विद्यमानस्यैवेति मु. पु. पा.।

[2] नन्वभावानङ्गीकारे यत्र मुद्गरपातादिना कपालमालोत्पत्तौ तदेकविषया बुद्धिः, स्तत्र पश्चात्संसृष्टविषया न स्यादित्याशङ्क्यते, तर्हि—अभाववादिनो मते संसृष्टबुद्धिः किमिति न भवतीति पर्यनुयुक्तो भावविनाशादिति ब्रूयात्तर्ह्यभावस्याऽधिकरणस्वरूपवादिनां गुरूणामपि तथा स्यादित्युत्तरम्। वयमपि विनाशमङ्गीकुर्मः। स तु भावान्तरोदय एव। यतो हि भाव एवैकाकी, सद्वितीयश्चेति द्वयीमवस्थामाप्नोति। तत्रैकाकी भाव एव विनाशशब्देनाभिधीयते। अभाववादिनो मतेऽपि तादृश्यवस्थाऽवश्यमङ्गीकर्तव्या। "स्वरूपमात्रं दृष्ट्वाऽऽपीत्यादिप्रमाणोपन्यासेन प्रागवादिष्म। एतत्सर्वमभिप्रेत्याऽऽह—"ननु किमिदं स्वरूपमात्रमित्यादिना—तत्रैकाकी भावस्स्वरूपमात्रमुच्यते" इत्यन्तेन।

[3] भावविशिष्टस्येति. मु. पु. पा.।

[4] अभावप्रतीतावधिकरणप्रतीतिरपेक्षिता, अङ्गीक्रियते च सर्वैरपि तीर्थङ्करैः। तत्र कीदृशस्याऽधिकरणस्य प्रतीतिरभावप्रतीतेः कारणमिति जिज्ञासायां तत् त्रेधा वक्तुं शक्यते। सद्वितीयस्याऽधिकरणस्य प्रतीतिः, उताऽभावविशिष्टस्याऽधिकरणस्य प्रतीतिः, उत भावाभावानपेक्षिण एकाकिनोऽधिकरणस्य प्रतीतिः। तत्र न प्रथमः पक्षः क्षोदक्षमः। घटवति भूतले प्रतीते तदभावप्रतीतिः कथं वारयितुं शक्यते। न द्वितीयः—आत्माश्रयप्रसङ्गात्। अभावं प्रतीत्य, तद्विशिष्टमधिकरणं गृहीत्वा, पश्चात्स एवाऽभावः प्रतिपत्तव्य इत्यभावावगति-

किञ्च [1]भावप्रतीत्यनुप्रवेशिन्यामभावावगतौ ना भावाख्यं प्रमाणान्तरं स्यात् ।

"[2]स्वरूपमात्रं दृष्ट्वाऽपि पश्चात्किञ्चित्स्मरन्नपि ।
तत्राऽन्यनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥"

[ श्लो. वा. अ. परि. श्लो. २८ ]

इति, अभावस्य प्रमाणान्तरत्वे युक्तिः । [3]प्राक्तनभावस्वरूपावगतावेव चेदभावोऽपि प्रतीतः, न प्रमेयमवशिष्यते । प्रमेयानवशेषेऽभावो[4] न प्रमाणान्तरमवकल्पते । [5]तस्मादेकाकिनी भावप्रतीतिरेवाऽभावप्रतीतेर्निमित्तमित्यास्थेयम्[6] । अतोऽप्रतीतेऽप्यभावे स्वरूपमात्रं प्रतीयत इतीतरेतराभावो मात्रशब्देन प्रतिपाद्यत इति । अतो भावान्तरोदयादेव तदेकविषयबुद्ध्युदयः । संसृष्टबुद्ध्यनुदयोऽपि स एवेति, न किञ्चिद्दूषणम् ।

यच्च तदेकविषयबुद्धिव्यतिरेकेणाऽप्यभावोऽवगम्यत इत्युक्तम् । अत्रोच्यते—न प्रत्यक्षरूपैव तदेकविषया बुद्धिरभावरूपेष्यते, किन्त्वनुमानाद्यात्मिकाऽपि तदेकविषया बुद्धिरुत्पद्यते । सैवाऽभाव इति व्यपदिश्यते । ननु च तदेकविषया यदि बुद्धिरभावः, कथं तर्हि घटाभावादिव्यवहारः । न हि तस्याः कश्चिदपि घटादिभिस्सह सम्बन्धोस्ति । उच्यते—न तदेक-

---

रेवाऽभावावगमकारणमिति, स्वग्रहसापेक्षग्रहविषयत्वेनाऽऽत्माश्रयो वज्रलेपायते । अतो अगृहीतेऽप्यभावे स्वरूपमात्रविषया प्रतीतिरवश्यमङ्गीकर्तव्येति तृतीय पक्षोऽवशिष्यते । तावतैवाऽभावव्यवहारोपपत्तावतिरिक्तस्याऽभावनामकस्य किं तत्त्वान्तरस्योररीकरणेन । नीलपीतादिवत्तादृशतत्त्वान्तरस्याऽनुपलम्भात् । वायुपरमाणवोऽनीलरूपा, सलिलपरमाणवो गन्धशून्या इत्यादावप्यनुमानेन तदेकविषया बुद्धिर्जायत इत्याशयेनाऽधिकरणप्रतीतिं त्रेधा विकल्प्य, प्रथमद्वितीययोर्दूषणेन तृतीयपक्ष कक्षीकरोति—"न ह्यप्रतीते" इत्यादिना—अभावप्रतीतेर्निमित्तमित्यास्थेयमित्यन्तेन ।

[1] अभावप्रतीत्यनुप्रवेशिन्या भावावगताविति मु पु पा ।

[2] "स्वरूपमात्रं दृष्ट हि वेश्माद्यर्थं स्मरन्पुन. ॥
तत्राऽन्ये नास्तिता पृष्टस्तदेव प्रतिपद्यत "॥ इति मु पु दृश्यते । मीमासापरिशिष्टेऽपि तथा चाऽऽहुरित्यभिधायेदृशानुपूर्वीकमेव पद्यमुपलभ्यते । आकरानुसारी पाठोऽस्माभिर्मूले सन्निवेशित. ।

[3] प्राक्तनस्वरूपावगतौ इति. मु पु पा । [4] अभाव इति. मु. पु पाठो नास्ति ।

[5] अभावप्रतीतेरिति मु. पु पा. । [6] प्रतीतिनिमित्तमिति मु. पु पा. ।

विषयबुद्धिमात्रमभावोऽभिधीयते, किन्तु दृश्ये प्रतियोगिनि या तदेकविषया बुद्धिः, सा तदभाव इति व्यपदिश्यते। तेन यस्मिन्प्रतियोगिनि दृश्ये या तदेकविषया बुद्धिः, सा तदभाव इति विशेषव्यपदेशः प्रवर्तते। तेन "इह भूतले घटो नास्ती"ति किमुक्तं भवति? दृश्येऽपि घटे भूतलमात्रमुपलभ्यत इति। तदेकविषया च संवित्तिस्स्वप्रकाशतया न प्रमाणान्तरमपेक्षते।

अभाववादिमतेऽनवस्था, स्वमते तदभाव इति निरूपणम्।

किञ्च—प्रमाणान्तरवादिनापि[1] प्रमाणाभावस्सत्त्वमात्रेणाऽभावबुद्धिजनको नाऽभ्युपगमनीयः, किन्तु विदितत्वेन। तथाहि—कस्यचिद्वस्तुनः क्वचिद्दृष्टस्य पुनस्तस्मिन्नेव दृश्यमानस्याऽदर्शनकालभाविनमभावं प्रतिपद्यते- "नासीदयमिहे"ति। तदा तत्र दर्शनाभावो निवृत्तः कथमभावावगमं जनयेत्? यदि सत्तयाऽभावबोधः, ततो न भवेत्। बुद्ध्युपारूढस्य हि जनकत्वेऽतीतस्याऽपि सम्प्रत्यनुसन्धीयमानस्य घटत एवाऽभावबोधोपपादकत्वम्। [2]यथा चक्षुरादिकं स्वसत्तामात्रेण स्वकार्यकारि, न चाऽतिवृत्तं स्वकार्यं जनयति। लिङ्गञ्च बुद्धिविषयापन्नं लैङ्गिकावबोधजनकम्, स्मर्यमाणमतीतमपि सत् स्वकालवृत्ति लैङ्गिकमनुमापयति, तथेदं द्रष्टव्यम्। एवञ्चाऽतीतस्यापि[3] प्रमाणाभावस्याऽभावावगमकत्वात्, बुद्ध्यारूढस्य जनकत्वमङ्गीकरणीयम्।

तत्र यदि प्रमाणाभावो यः, सोऽभावरूपस्तदा तस्याऽप्यवगतिर्विदितादेव [4]प्रमाणाभावादङ्गीकर्तव्येत्यनवस्था[5]। यदि तु भावान्तरसंवित्तिरेव प्रमाणाभावोऽभ्युपगम्यते, ततस्तस्यास्स्वयम्प्रकाशतया नाऽनवस्थाऽऽपद्यते। तथा

---

[1] प्रमाणान्तराभाव इति मु. पु. पा.। [2] तथेति मु. पु. पा.।

[3] अतिपतितस्येति मु. पु. पा.। [4] कारणादिति मु. पु. पा.।

[5] प्रमाणान्तरवादिनोमतेऽनुपलब्धिलक्षणा प्रमाणानुत्पत्तिस्सत्तयाऽवबोधिका, ज्ञातत्वेन वेति द्वेधा विकल्पः। तत्र प्रथमः पक्षस्स्वापादौ सर्वाभावप्रतीतिप्रसङ्गेन न सङ्घटते। अतो विदितैवाऽनुपलब्धिरभावप्रतीतिकारणमिति द्वितीयः पक्षस्स्वीकर्तव्यो भवति। तथाऽनुपलब्धेरप्यभावरूपतया तद्भानमप्यनुपलब्धिप्रमाणगम्यमित्यनवस्थेति दूषयति—"तत्र यदीत्यादिना—अनवस्थे"त्यन्तेन। स्वमते तु तदेकविषया बुद्धिस्स्वयम्प्रकाशतया न प्रमाणान्तरमपेक्षते, अतोऽनुपलब्धेः प्रमाणान्तरत्वं नाऽवकल्पत इति, न तन्महिम्नाऽभावस्य प्रमेयत्वक्लृप्तिरित्यभिसन्धायाऽऽह—"यदि त्वित्यादिना—किमपरेण प्रमेयाभावेने"त्यन्तेन।

सति भावान्तरसंवित्तिरेव स्वयम्प्रकाशा प्रमाणाभावरूपा प्रमेयाभावोऽस्तु, किमपरेण प्रमेयाभावेन। "घटो नास्ती"त्यादिशब्दप्रयोगोऽपि तस्यामेव स्वयम्प्रकाशायां भावान्तरोपलब्धौ युज्यते, न पुन"र्घटो नास्ती"ति बुध्यन्तरमाविर्भवति, बोध्यन्तरानवभासात्। योऽपि पदन्यासादिव्यवहारः, सोऽपि दृश्ये प्रतियोगिनि तदेकविषयबुद्धिनिबन्धन इति, [1]दृश्यत्वोपपत्तये युक्तैव सूक्ष्मकण्टकादिजिज्ञासा। तथाविधप्रतिपत्त्युदय एव चाऽभावः। तेन तस्मिन्ननुमानमभावसाधकं[2] न प्रवर्तते।

ननु यथा प्रमाणाभाव एवाऽवश्यम्भावितया प्रमेयाभावोऽङ्गीक्रियते, तथा प्रमाणसद्भाव एव तर्हि प्रमेयसद्भावस्स्यात्। प्रमेयसद्भाववादिनापि हि प्रमाणसद्भावोऽवश्यमाश्रयणीय इति, प्राप्तो बाह्यार्थापलापः। नैतदेवम्—प्रमेयस्य हि बहिरर्थस्य [3]प्रमाणस्वरूपातिरिक्तस्य स्वरूपाप्रतिभासात्। प्रमितिर्हि प्रमित्येकरूपतयैव भासते, प्रमेयं नीलाद्याकारतया, अभावस्य तु स्वरूपावगतिर्नास्तीति, न प्रमाणाभावादन्यः प्रमेयाभावः। प्रमाणाभावोऽपि च स्वरूपान्तरानवगमादेव, न भावान्तरप्रमितेर्भिद्यते। भावान्तरप्रमितिश्च स्वयम्प्रकाशरूपा न प्रमेयतामनुभवतीति, प्रमेयमभावाख्यस्य प्रमाणस्य नोपपद्यते। प्रमेयासद्भावाच्च न प्रमाणान्तरमवकल्पत इति स्थितम्।

### सम्भवस्य प्रमाणान्तरत्वनिराकरणम्।

*ये पुनस्सम्भवाख्यं प्रमाणमिच्छन्ति—शतादिसंख्यापरिच्छिन्नेषु वस्तुष्वन्तर्गतविंशत्यादिसंख्यापरि[4]च्छिन्नवस्तुग्राहकम्, तदनुमानान्न भिद्यते। तथा हि—ये महासंख्यायोगिनः, तेषामवयवेष्ववान्तरसंख्यायोगो दृश्यते। तेनाऽवयवानामवान्तरसंख्यायोगनियतसम्बन्धा महासंख्याऽवयववर्तिनीमवान्तरसंख्यामनुमापयतीति, व्यक्तमनुमानत्वम्।

### ऐतिह्य-लोक-प्रतिभानां प्रमाणान्तरत्वनिराकरणम्।

ऐतिह्यमप्यप्रतीयमानमूलभूतप्रमाणान्तरं [5]पुरुषपरम्परावचनमात्रं न

---

[1] दृश्यत्वापत्तय इति मु पु पा।
[2] भावसाधकमिति मु पु पा।
[3] प्रमाणेति मु. पु ना।
[4] परिच्छिन्नवस्तु इति मु पु नास्ति।
[5] पुरुष. इति. मु पु ना।

*सम्भवस्य पौराणिकानामभिमतस्य "शते पञ्चाशदि"ति न्यायेनाऽनुमानानतिरेकान्न

**प्रमाणतां प्रतिपद्यते। [1]लोकोऽपि प्रत्यक्षादिप्रमाणव्यतिरिक्तः कश्चिन्नोपलभ्यते। [2]प्रतिभाऽपि नाऽर्थनिश्चयसमर्थेति, न प्रमाणतां प्रतिपत्तुमर्हतीति पञ्चैव प्रमाणानीति।**

---

प्रमाणान्तरत्वम्, सम्भवोऽप्यविनाभावादनुमानमेव। [ प्र. पा. भा. ]

ऐतिह्यम्—"इति ह" इति निपातसमुदाय उपदेशपारम्पर्ये वर्तते। तस्मात् "अनन्ताव सथेतिहभेषजाज्ञ्यः" [पा. अ. पा. सू. २४] इति पाणिनिसूत्रेण स्वार्थेञ्यप्रत्ययः। तथा च इतिह—एव ऐतिह्यम्। उपदेशपरम्परा—अनिर्दिष्टप्रवक्तृकं वाक्यमित्यर्थः फलति। यथोक्तम्—"इति होचुर्वृद्धा" इत्यैत्तिह्यम्। यथा "इह वटे यक्षस्तिष्ठति," इति। इदमागमान्न भिद्यते। सम्भवैतिह्ययोः प्रमाणान्तरत्वं न युज्यते, प्रथमस्याऽनुमाने, चरमस्याऽऽगमेऽन्तर्भावादित्यमुमर्थं पद्येनैकेन सञ्जग्राह कुमारिलभट्टः।

यथा—

इह भवति शतादौ सम्भवाद्यसहस्रात्।
मतिरवियुतभावात् साऽनुमानादभिन्ना॥
जगति न बहु तथ्यं नित्यमैतिह्यमुक्तम्।
भवति तु यदि सत्यं नाऽऽगमाद्भिद्यते तत्॥

[ श्लो. वा. अ. परि. श्लो. ५८ ] इति।

एतत्सर्वं मनसि निधाय सम्भवैतिह्ययोः प्रामाण्यं क्रमेण पराकरोति—"ये पुनरित्यादिना—अनुमानान्न भिद्यत" इत्यन्तेन। सम्भवस्य प्रमाणान्तरत्वं "ऐतिह्यमपीत्यादिना—न प्रमाणतां प्रतिपद्यत" इत्यन्तेन च—ऐतिह्यस्य प्रमाणान्तरत्वञ्च निरास्थदित्यवधातव्यं विबुधैः।

[1] अत्र। मूले "लोके" इति सप्तम्यन्तः पाठो दृश्यते। परमत्र लोक इति प्रथमान्तपाठस्साधीयान् "प्रत्यक्षाद्यतिरिक्त" इति वाक्यस्वारस्यात्। तदर्थः—लोकप्रसिद्धिः। अत एव भवनाथः—अभाववादे "अभावोऽपी"ति शाबरं वचनं न लक्षणपरम्, किन्तूक्तलक्षणसमाध्यर्थमि"ति गुरुमतेऽस्य तात्पर्यमुपर्णयन् "न चाऽपरं मानपञ्चकं सम्भवैतिह्यलोकप्रसिद्धिह्रस्वदीर्घप्रतिभाख्यम्" [ नय. वि. पृ. १६७ ] इत्यनेन लोकप्रसिद्धेः प्रत्यक्षान्तर्गतत्वात्, प्रमाणान्तरत्वं निराकार्षीत्। अतो "लोकः" इति प्रथमान्तः पाठो मूले सन्यवेश्यस्माभिरिति ध्येयम्।

[2] वैशेषिका वदन्ति—ऋषीणां यत्प्रातिभं ज्ञानं, तत् धर्मादिएवतीतादिविषयेषु च प्रमाणमिति। यथा—"श्वस्ते भ्राता आगन्ता", "सोमयाजी पुत्रोऽस्य भविता" चेति। इदमविचारितरमणीयम्—यतो हि प्रातिभं ज्ञानं नाऽर्थनिश्चायकम्, लिङ्गाभासजत्वात्। अत एव कदाचिल्लौकिकानां दृश्यते यथा कन्यका वदति—"श्वो मे भ्राताऽऽगमिष्यतीति"। अपि च प्रमाणस्य निश्चयफलत्वात्, अस्य चाऽनिश्चायकत्वान्न प्रामाण्यमित्याशयेनाऽह—प्रतिभाऽपीति।

ह्रस्वदीर्घयोः प्रमाणान्तरत्वशङ्का ।

ननु [1]यद्दीर्घदर्शनादिन्द्रियपथा तिवर्तिनि ह्रस्वज्ञानं, तद् प्रमाणान्तरं भवितुमर्हति । तथा हि—तत्तावन्न प्रत्यक्षम् , केवलह्रस्वदर्शने ह्रस्वबुद्ध्यभावात् । दीर्घदर्शनन्तु ह्रस्वदर्शनपूर्वकं भवतु प्रत्यक्षम् । तत्प्रतीतौ [2]जातायां यदिन्द्रियातिपतिते स्वरूपमात्रेणाऽवसिते ह्रस्वज्ञानं, तन्न प्रत्यक्षम् । नाऽपि तदनुमानम्, ह्रस्वदीर्घयोः परस्परसम्बन्धनियमाभावात् । न शास्त्रम् । [3]अपूर्वकार्यविषयत्वाभावात् । नोपमानम्, असादृश्यविषयत्वात् । न चाऽर्थापत्तिः, ह्रस्वत्वकल्पनायामसत्यां कस्यचिद्दीर्घत्वानुपपत्त्यापादकस्याऽभावात् ।

तन्निरासः ।

उच्यते—परिमाणविशेषा एते—यदणुत्वं महत्त्वं दीर्घत्वं [4]ह्रस्वत्वमिति । परिमाणञ्च प्रत्यक्षद्रव्यवर्ति प्रत्यक्षमिष्यते । तदाह भगवान् काश्यपः—"संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणी" [ वै. द. ४. १. ११. ] ति । तेन दीर्घत्वं प्रतियतः परिमाणविशेषज्ञानं ह्रस्वे वस्तुनि जातमेव, किन्तु ह्रस्वशब्दस्तत्र न प्रवृत्तः, तत्प्रवृत्तेर्दीर्घप्रतीतिसापेक्षत्वात् । अल्पदेशव्यापि हि ह्रस्वशब्देनोच्यते, अधिकदेशव्यापि च दीर्घशब्देन । हस्तादिसंख्याल्पत्वमहत्त्वाभ्याञ्च देशस्याऽल्पत्वम्, महत्त्वञ्च । पूर्वापरभावनियमेन च संख्याल्पत्वमहत्त्वेऽवधार्येते । तेन पूर्वसंख्यापरिच्छिन्नहस्तादिसंख्याव्यापि हस्तशब्देनोच्यत इति, परसंख्या[5]परिच्छिन्नहस्तादिप्रमितदेशव्यापिदीर्घशब्दवाच्यवस्तुप्रतीतिसापेक्षा ह्रस्वशब्दप्रवृत्तिः । तथा ययोरल्पान्तरत्वेन साक्षात् न्यूनाधिकदेशव्यापिता न प्रतीयते, तत्र दीर्घ-ह्रस्वशब्दौ न प्रवर्तेते । हस्तादिना तु परिच्छिद्य तत्सं-

---

१ दीर्घदर्शनादिति मु. पु. नास्ति.

२ पुनरिति. मु. पु. पा. ।

३ अपूर्वार्थत्वेति. मु. पु. पा. ।

४ ह्रस्वत्वमिति मु. पु. नास्ति ।

५ शब्देनेति मु. पु. नास्ति ।

६ प्रमेयेति मु. पु. पा. ।

ख्याल्पत्व-महत्त्वेऽवधार्य तौ प्रयुज्येते। संख्यानाञ्च परस्परं पूर्वापरभावः प्रत्यक्षसिद्ध एवेति न [१]तत्र प्रमाणान्तरं व्याप्रियते। [२]तस्माद्यथोदितलक्षण-विषयफलानि [३]पञ्चैव प्रमाणानीति सिद्धम्।

इति महामहोपाध्यायश्रीशालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां प्रमाणपारायणे षष्ठोऽभावनिराकरणपरः परिच्छेदस्समाप्तः।

समाप्तञ्चेदं प्रमाणपारायणं नाम षष्ठं प्रकरणम्।

---

१ तत्रेति मु. पु. नास्ति।

२ ह्रस्वदीर्घयोः प्रमाणान्तरत्वोपन्यास—निरासौ मूलेनैव निगदव्याख्यातौ। प्रकरणस्याऽऽदौ प्रतिज्ञातमर्थं "स्वरूपसंख्यार्थफलेषु वादिभिः" इत्यादिना मतान्तरोपपादननिरसनपूर्वकं स्वोक्तमर्थं निगमयति—यथोदितेति। तथा च

अतः पञ्चैव मानानि मानयन्ति मनीषिण इति बोध्यम्।

३ अत्रेदं बोध्यम्—न्यायसिद्धिकृता नारायणेन "स्वरूपसंख्ये"त्यादिपद्यस्य प्रमाणपारायणस्याऽऽदौ पठितस्य व्याख्यानावसरे प्रमाणेयत्ताविषये वादिनाम्मतान्युद्धृतानि। [प्र. पं. पृ. ११२.] तान्यत्राऽनुसन्धेयानि। तत्र पञ्चप्रमाणवादिनः प्राभाकरमीमांसकाः।

··········"प्रत्यक्षमनुमा तथा।

शास्त्रोपमानार्थापत्ती इति गुरोर्मतम्"। इत्यमृतकलावचनात्। अधिकरणस्वरूपातिरिक्तस्याऽभावाख्यस्य प्रमेयस्य पूर्वोक्तविधयाऽसम्भवेन तद्ग्रहणायाऽनुपलब्धिनामकं प्रमाणान्तरं न स्वीकारमर्हति। अतष्षट्प्रमाणीपक्षिणां परीवादः परिहृतो वेदितव्यः।

प्रमाणषट्कपरिग्रहपक्षस्योपोद्बलकतया—

"राम षड्युक्तयो लोके याभिस्सर्वोऽनुदृश्यते"॥ [वा. रा. आ. का. सं. ७२ श्लो. ८] इति पद्यार्धमुपन्यस्तम्। तदापततः, न वस्तुगत्या। "सर्वोऽनुदृश्यत" इत्यत्र "सर्वं विमृश्यत" इति पाठ उपलभ्यते। व्याख्यातृभिश्च षड्युक्तयः—सन्धि-विग्रह-याना-सन-द्वैधीभावसंश्रयाख्या लोके सन्ति, याभिर्युक्तिभिस्सर्वं वस्तुजातं राज्ञा विमृश्यते इत्येवमेवेदं वचनं व्याख्यातम्। अन्यपरस्य वाक्यस्याऽसति मुख्यार्थबाधेऽन्यत्र तात्पर्यायोगात्, प्रकरणबाधाच्च। एतेन "अतष्षडेव प्रमाणानि। तथा च श्रीमद्रामायणे-"राम षड्युक्तयो लोके याभिस्सर्वोऽनुदृश्यत" इत्यादि" शास्त्रदीपिकावचनं प्रत्यूढं वेदितव्यम्।

# परिशिष्टम् ।

अधिकरणस्वरूपापेक्षयाऽभावो नाऽतिरिच्यत इति गुरुमतम् । नास्तीत्यस्य—न प्रमीयत इत्यर्थं इत्यमुमभिप्रायम्, "तस्मात्कार्यप्रत्यस्तमयान्नास्तीत्यनेन पूर्वोक्तस्यैव लक्षणस्य साधुतोच्यत" इति बृहतीवाक्यव्याख्यानावसरे ग्रन्थकारो व्यशीशदत् । स च व्याख्यासन्दर्भोऽधस्तादुद्ध्रियतेऽस्माभिर्जिज्ञासूना सुखावगतये ।

"तस्मात्—कार्यसमधिगम्यत्वात्सर्वप्रमाणानाम्, प्रमाण हि नाम करणकारकम्, सर्वं कारक कार्यसमधिगम्यम्, कार्यञ्च प्रमाणस्याऽर्थनिश्चयलक्षणम्, निश्चयश्च "अयमेव" इति सावधारणोऽनुभव, अवधारणञ्चाऽर्थान्तिराद्व्यवच्छेद ।

तदुक्तं मतान्तरे—

"अयमेवेति यो ह्येष भावे भवति निर्णय ।

नैष वस्त्वन्तराभावसवित्त्यनुगमादृते ॥" [श्लो वा अ परि श्लो १५] इति ।

तत्र यदाऽनेन ग्रन्थेन नास्तीत्यस्याऽसन्निकृष्टस्याऽप्रमीयमाणस्य य प्रमाणाभाव, सोऽभाव—इत्यभावलक्षण कृतम् । श्लोकश्चाऽत्र भवति—

यन्नाऽस्ति भूतलादौ घटादि तस्याऽप्रमीयमाणस्य ।
योऽसौ प्रमाणविरह प्रमाणविषयेऽपि सोऽभाव ॥ इति ।

तदा पूर्वोक्तेनैव लक्षणेन निश्चयपर्यन्तमपि प्रमाणस्वरूप लक्ष्यत इति ज्ञायते, यस्मादर्थान्तरव्यवच्छेदोऽप्युपलम्भकसामग्रीसाकल्ये केवलोपलम्भलक्षण तत्प्रमाणानुत्पादक एव । तस्मात् कार्यप्रत्यस्तमयात्प्रमाणकार्यसविदनुदयात्केवलोपलम्भादिति यावत्—नास्तीति व्यवहारो यस्मात्, तस्मादनेन पूर्वोक्तस्यैव प्रमाणलक्षणस्य साधुतोच्यते । यदि हि यावदन्य एवाऽभावो नाम भावात्, तदा पूर्वोक्त प्रमाणलक्षण सर्वमेवाऽसाधु स्यात्, तन्मात्रेणाऽभावानवगमात् तत्पुरस्सरवस्तुनिश्चयाभावात् अनिश्चयफलस्य प्रमाणत्वानुपपत्ते । अप्रमाणञ्च प्रमाणमिति लक्षणमात्र बालजल्पितमेव स्यात् [ ऋ. वि प पृष्ठ १२२ ] इति ।

भाष्यव्याख्याने भाष्यपरिशिष्टेऽपि तन्मात्रोपलब्धिव्यतिरेकेणाऽभावो नास्तीत्यमुमर्थं न्यरूरुपच्छालिकाचार्यं । तत्रत्योऽस्य ग्रन्थ—

"अभावप्रमाणविषयेऽप्यप्रतीयमानस्य य प्रमाणाभाव, स एव तस्याऽर्थस्याऽभाव, नाऽपर. न कश्चिद्भूतलाद्यधिकरणे घटाद्यभाव इति, न प्रमाणान्तरमभावाख्यमस्ति, प्रमेयाभावात् । प्रमाणाभाव एव प्रमेय इति चेत् । न । तस्याऽपि भूतलादिमात्रोपलब्धिरूपत्वात् । का पुनरिय भूतलादिमात्रोपलब्धि ? न तावत्स्वरूपोपलब्धिरेव, घटसयुक्तेऽपि स्वरूपोपलम्भात् । तन्मात्रोपलब्ध्यात्मकदृश्यानुपलम्भरूपाभावावगमरूपा केवलोपलब्धिश्चेत्, अङ्गीकृतं तर्हि कैवल्य नाम स्वरूपान्तरमिति सिद्ध प्रमेयान्तरम् ।

अत्रोच्यते—स्वरूपोपलब्धिरेव भूतलादेर्द्विविधा—एकाऽर्थान्तरससर्गवती, अपरा भूतलैकविषया । सा द्विविधा—प्रतियोगिनि दृश्ये चाऽदृश्ये च । तत्र दृश्ये प्रतियोगिनि

या भूतलैकविषयोपलब्धिः, सा घटाद्यनुपलब्धिः, सैव चाऽभाव इति न किञ्चिद्दूषणम्। येऽपि चाऽभावं प्रमाणं वदन्ति, तेऽपि चाऽप्यनवधारिते ह्यभावे तन्मात्रोपलब्धिमिच्छन्त्येव।

तथाचाहुः—

"स्वरूपमात्रं दृष्ट्वाऽपि वेश्माद्यर्थं स्मरन्नपि।
तत्राऽन्यनास्तितां पृष्टस्तदैव प्रतिपद्यते॥" [श्लो. वा. अ. परि. श्लो.] इति।

ननु यत्राऽर्थान्तरसंसर्गवती धीरुत्पन्ना, कथं तत्र तन्मात्रोपलब्धिरुपपद्यते। यद्यर्थान्तरस्य तत्राऽभावो न जातः? उच्यते—शक्यमभावेऽपि वक्तुमिदम्, 'यस्य यत्र भावधीरासीत्, कथं तस्य तत्राऽभावः? इति।

अथाऽभावस्य कारणं ब्रूयात्, तदा तन्मात्रोपलब्धेरेव तत्कारणमस्तु। अथ मतम्—मुद्गरप्रहारादिकः क्षणिकोऽभावस्य कारणम्, निवृत्तेऽपि च तस्मिन्कुतो भवेदिति। यदि कपालमात्रं तन्मात्रोपलब्धिं जनयति, नाऽर्थान्तरसहितम्। अर्थान्तरसहितन्त्वर्थान्तरसंसर्गवतीम्। यत्र तु प्राक् संसर्गबुद्धिर्जाता, तत्र घटादौ देशान्तरस्थिते कपालादिजन्मनि वा निमित्ते स्थित एव तन्मात्रोपलब्धिर्नाऽनुपपन्ना। ननु भवतु प्रतियोगिनोऽन्यत्र स्थितौ विरुद्धार्थान्तरोदये वा तन्निमित्ता तन्मात्रोपलब्धिः, संसृष्टबुद्धिस्तु किमिति नोत्पद्यते, निमित्तविनाशाभावात्? न हि भवन्तः प्रध्वंसाभावमिच्छन्ति। अहो बत! स्वदर्शनभ्रमेण चोदितम्। न हि वयं संसृष्टबुद्धेरनुत्पत्तिं तद्बुद्धेरनुत्पत्तिं तन्मात्रबुद्धेरन्यां मन्यामहे, नाऽपि तत्कारणविनाशमन्यम्, तत्कारणोदयात्। ततश्च तन्मात्रबुद्धिकारणोपनिपातादत्र तन्मात्रबुद्ध्युदयात् संसृष्टबुद्धिकारणाभावात् तदनुत्पत्तिः।

ये तु व्यतिरेकिविनाशाख्यं प्रध्वंसाभावमाहुः, तन्मतेऽपि व्यतिरेकिणि तस्मिञ्जातेऽपि किमिति भावस्य प्राग्वदुपलब्धिरूपाभाव इति। ननु 'भूतले घटो नास्ति' इति प्रत्यक्षा बुद्धिरेव बोध्यमुपकल्पयति। उच्यते—बोध्यावगमानुमेया सा, न प्रत्यक्षा, तर्हि सा संवेद्यमुपकल्पयति। सत्यमस्त्येषा संवित्, सा किं तन्मात्रोपलब्धिरेव, अन्या वेति चिन्त्यताम्। तत्राऽन्या न युज्यते, संवेद्यान्तरस्य न्यायानुसारेणाऽघटमानत्वात्। यस्य यत्राऽभावः, तस्य तत्र दृश्यानुपलब्धिरभाववादिनाऽपि तावदाश्रयणीया। तत्र सैवाऽभावोऽस्तु, अलमन्येनाऽभावेन।

अस्य शालिकोक्तस्य निराकरणं विधिविवेकस्य "पदार्थो न च वाक्यार्थः" इति द्वादशश्लोक व्याख्यायां न्यायकणिकायां [पृ. ६३-८०.] शास्त्रदीपिकायास्तर्कचरणेऽनुपलब्धिप्रकरणेऽस्योपन्यास—निरासौ [ पृ. ८३. ८७ ] द्रष्टव्यौ।

---

# परिशिष्टम् ।

तार्किका —अधिकरणस्वरूपाभावादिना प्राभाकरमीमासकानाम्मतेऽधिकरणानामानन्त्येन, एकस्मिन्नाऽऽधाराधेयभावानुपपत्त्या, शब्द-गन्ध-रसाभावानामप्रत्यक्षत्वापत्त्या चेति दूषणत्रयेण दूषयन्तोऽधिकरणस्वरूपातिरिक्ताभावस्य तत्त्वान्तरत्वमभ्युगच्छन्ति । इदमविचारितरमणीयमिति गुरुमतमर्मज्ञा मन्यन्ते । तेषामयम्भाव । तथाहि—अभावस्याऽधिकरणात्मकत्वे यथाऽधिकरणानामानन्त्य मन्मते, तथा भवन्मतेऽतिरिक्ताभावस्याऽनन्ताधिकरणसम्बन्धकल्पनागौरव तुल्यमेव । अपि चाऽतिरिक्ताभावरूपधर्मिकल्पना चाऽऽपतति । अतोऽभावस्याऽधिकरणात्मकत्वे आनन्त्यदोष आवयोरुभयोस्समान , तथा परिहारोऽपि, "यस्तूभयोस्समो दोष इति न्यायात् ।

यच्चैकस्मिन्नाऽऽधाराधेयभावानुपपत्तिरिति द्वितीयो दोष , स इत्थ परिहर्तव्य —घटाभावे पटाभाव इत्यत्राऽभावाधिकरणकोऽभावोऽधिकरणात्मक इति निर्वचनपटुभिस्तार्किकैरभ्युपगम्यते । तत्राऽय प्रश्नो जागर्ति—कथमेकस्मिन्नाऽऽधाराधेयभाव इति । यदि तत्राऽऽधारतावच्छेदकाधेयतावच्छेदकभेदादाधाराधेयभावस्समर्थ्यते । तर्हि सैव रीतिस्सर्वत्राऽभ्युपगम्यताम्, किमर्धजरतीन्यायेन, भवदीयो बाण एव भवन्त प्रहरति । एतेन द्वितीयो दोष प्रत्युक्तो वेदितव्य ।

यश्च तृतीयो दोष उक्त —शब्द-गन्ध-रसाभावानामप्रत्यक्षत्वापत्तिरिति । तत्परिहारश्चेत्थम्—तत्तदधिकरणाना तत्तद्रूपत्वेन तत्तदिन्द्रियग्राह्यत्वाभावेऽपि तत्तदभावत्वेन रूपेण प्रत्यक्षत्वसम्भवात् । अत एव नैयायिकैकदेशिभी रूपाभावे रसाभाव इत्यत्र रूपाभावधिकरणकरसाभावस्य रूपाभावानतिरिक्तत्वेऽपि तस्य रूपाभावत्वेनैव चाक्षुषप्रत्यक्षविषयता' न तु रसाभावत्वेन । एव "गृहे शब्दो नास्ती"त्यादौ गृहनिष्ठशब्दाभावस्य गृहस्वरूपस्य श्रोत्रेन्द्रियाग्राह्यत्वेऽपि शब्दाभावत्वेन श्रोत्रग्राह्यत्वे न किञ्चिद्बाधकम् । किञ्चैकैकस्य वस्तुन एकरूपत्वेन तदिन्द्रियग्राह्यत्वम्, रूपान्तरेण च तदिन्द्रियाग्राह्यत्वमिति नियमाभ्युपगमस्य तार्किकसम्मतत्वात् । स्थलन्तु प्रागेव प्रादीदृशाम । अनेन तृतीय दूषण निरस्तम् । अतोऽभावस्याऽधिकरणात्मकत्वे न किञ्चिद्दूषणम् । अपि तु लाघवमप्यस्ति, अतिरिक्तस्याऽभावस्याऽनभ्युपगमात्, वरं धर्मिकल्पनातो धर्मकल्पनेति न्यायात् ।

अत्र मतद्वयमस्ति । तत्राऽद्य मतम्—ज्ञानविशेषात्मकत्वमभावस्येति । तत्राऽऽद्यपक्षावलम्बिनामयमाशय —यस्मिन्काले भूतले घटाभाववत्त्व भवताऽभ्युपगम्यते, तत्कालोत्पन्नानि तद्भूतलविषयकाणि "भूतले घटो नास्ती"त्याकारकाणि ज्ञानान्येव "भूतले घटो नास्ती"ति प्रतीतौ घटत्वनिरूपितानुयोगिताप्रकारेण भासन्त इति तेषामभिप्राय । इदमेव प्रभाकरमिश्र—शालिकनाथमिश्रयोरभिमतम् ।

अपरञ्च मत कालविशेषात्मकत्वमभावस्य । तत्पक्षावलम्बिनामयं भाव.—यस्मिन्काले "भूतले घटो नास्ति" तत्तत्काल एव "भूतले घटो नास्ती"ति प्रतीतौ घटत्व-

विशिष्टनिरूपितानुयोगिता प्रकारेणाऽवभासत इति । इदमेव गुरुमतानुसारिणामेकदेशिनां मतं ब्रह्मानन्दगौड आगमबाधोद्धारप्रकरणे [ लघु. च. पृ. ४२८ ] उपन्यस्यति स्म । इदमादाय प्राभाकरप्रस्थानस्य पूर्वापरविरोधं केचन विमर्शकपदवीमारूढास्समुद्भावयन्ति । परमस्मिन्प्रणिहितेन चेतसा विमृश्यमाने इदमायाति यदिदमेकदेशिनां मतमिति न दोषः ।

अभावस्य ज्ञानात्मकत्वे विषयतासम्बन्धेनाऽऽधाराधेयभावो वक्तव्यः । स च न सम्भवति, तस्य वृत्त्यनियात्मकत्वादिति शङ्का समुन्मिषति । अत्रेदं समाधानम्—यद्यपि विषयतासम्बन्धस्य वृत्तिनियामकत्वं न सम्भवति । तथाप्यतिरिक्ताभाववादिनो मते यथा स्वरूपसम्बन्धेन वृत्तित्वमुररीक्रियते, तथा ज्ञानात्मकाभावस्याऽपि स्वरूपसम्बन्धेन वृत्तित्वे न कश्चिद्दोषः । प्राभाकरैरात्मनस्सर्वेषु ज्ञानेष्वाश्रयविधया भानाभ्युपगमाच्च । ज्ञानस्य स्वयम्प्रकाशत्वाभ्युपगमेन प्रत्यक्षत्वात्, ज्ञानत्वेन बहिरिन्द्रियाग्राह्यत्वेऽपि घटाभावत्वेन बहिरिन्द्रियग्राह्यत्वम् । एतेन "भूतले घटो नास्ती"ति प्रतीतौ घटाभावत्वेन स्वात्मज्ञानस्य विषयता, उत पुरुषान्तरीयज्ञानस्य वेत्यादि दूषणजातं पराकृतमिति वेदितव्यम् ।

अभावविषये चतुष्टयी गतिर्दृश्यते । तत्राऽभावो नाम वस्तुप्रतियोगिको वस्त्वनुयोगिको वस्तुभूतोऽतिरिक्तः पदार्थ इति तार्किकाः, भाट्टमीमांसकाश्चाऽऽतिष्ठन्ते । वस्त्वनुयोगिकोऽवस्तुप्रतियोगिकः कल्पितोऽभाव इत्यद्वैतवेदान्तिनो मन्यन्ते ।

अवस्त्वनुयोगिकोऽवस्तुप्रतियोगिकोऽवस्तुभूत इति ताथागता अभ्युपगच्छन्ति । भावादन्योऽभावो नाम कश्चित्पदार्थ एव नास्तीति प्राभाकरमीमांसका अभ्युपगच्छन्ति । किन्त्वधिकरणरूप एवेति प्राभाकराणां सिद्धान्तः, इममेव प्राभाकरसिद्धान्तमद्वैतवेदान्तिनस्स्वीकृत्य स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वञ्जगत उपपादयन्तश्श्रुतिशिरसां सर्वस्वभूतमद्वैतसिद्धान्तं समर्थयन्ते, प्रपञ्चाभावस्याऽधिष्ठानभूतब्रह्मरूपत्वेन द्वैतापत्तिञ्च-वारयन्ति ।

विज्ञानवादिनो बौद्धास्सम्बन्धम्, धर्मिणम्, धर्मञ्च सर्वत्र भावरूपेणाऽनुगतं तिरस्कुर्वन्तो धर्ममात्रमतद्व्यावृत्तिरूपं जगदिति वदन्तो भावपदार्थानेवाऽपलपन्ति स्म । प्रभाकरमिश्रस्तु—भावस्यैकाकी, सद्वितीयश्चेत्यवस्थाद्वयं स्वीकृत्य, एकाकिभावस्थल एव नास्तीत्यभावव्यपदेशव्यवहारोपपत्तावभावोऽतिरिक्तो न स्वीकर्तव्य इति बौद्धमतनिरासार्थमेवेमां सरणिमन्वसरीसरत्, शठे शाठ्यं समाचरेदिति न्यायात् । अत एव शालिकाचार्यः—स्वोपज्ञे शाबरभाष्यव्याख्यानेऽभावस्य ज्ञानात्मकत्वे भावस्याऽपि ज्ञानात्मकत्वस्वीकारेण ज्ञानाद्वैतापत्तिशङ्कां स्वयमुत्थाप्य पर्यहार्षीत् । तथा च तत्रत्यो ग्रन्थसन्दर्भः—

"नन्वेवं प्रसक्तं तर्हि संविदद्वैतम् । शक्यते हि वक्तुमेतत् संविदेवाऽस्तु, मा भूत् संवेद्यमिति ।" विषमोऽयमुपन्यासः, संविदतिरेकी नीलाद्याकारः प्रथत इति प्राक् प्रतिपादितम् । अभावस्य नाऽकारोऽनुभूयते । केवलं नास्तीतिशब्दव्यवहार एव ।

तदुक्तमभियुक्तैः—न ह्यभावो नाम विग्रहवान् यस्साक्षात्कर्तव्यः, अपि तु व्यवहर्तव्य [ मी. भा. परि. पृ. ३१ ] इति ।

एतेन—श्रीहीरतनयेन हर्षमिश्रेण महता परिकरबन्धेन प्राभाकरमतस्य खण्डनाय यत्तन्मतमवतारितम्, तत्सर्वमेवाऽऽलूनविशीर्णम् । तथाहि—

"यत्तु केनचिदभावस्य स्थाने तन्मात्रधीरभिषिक्ता, तत् तस्य परमुचितम् ।
गुरुर्धियमभावस्य स्थाने स्थानेऽभिषिक्तवान् ।
प्रसिद्ध एव लोकेऽस्मिन् बुद्धबन्धु प्रभाकर" ॥

[ ख ख परि ४ पृ ५७७ ] इति । अस्याऽयमर्थ—तन्मात्रबुद्धयधीन एवाऽभावोल्लेख इति वादिन प्रभाकरमिश्र सोल्लुण्ठनमुपहसति—गुरुरिति । अभावस्य स्थाने धियमभिषिक्तवान्गुरु । तत् स्थाने समुचितम् । बुद्धबन्धु प्रभाकर इति लोके प्रसिद्ध एव । यतो बुद्धोऽप्यभाव ज्ञानातिरिक्त नाऽङ्गीकरोति । प्रभाकरोऽपि तथेति सिद्धान्तसाम्यात् । एव बन्धुभावोऽवगन्तव्य । अमरसिंहवचनमप्यत्राऽनुकूलम् ।

"गौतमश्चाऽर्कबन्धुश्च मायादेवीसुतश्च स ॥" इति ।

इदञ्च पूर्वोक्तप्रकारेणाऽपहस्तितमिति मन्तव्य सूरिभि ।

# [1]विमलाञ्जनं नाम सप्तमं प्रकरणम् ।

प्रकरणार्थप्रतिज्ञा ।

[2]अपौरुषेये सम्बन्धे सिद्धे शब्दार्थयोर्द्वयोः ।
प्रामाण्यं वेदवाक्यानामिति स प्रतिपाद्यते ॥१॥ इति ।

यदि पौरुषेय एव शब्दानामर्थैस्सह सम्बन्धो भवेत्, तदा प्रमाणान्तरगोचरेष्वेवाऽर्थेषु पुरुषाणां सङ्केतकरणशक्तेः, [3]अपूर्वकार्यात्मनि च वेदार्थे [4]प्रमाणान्तराणामवकाशाभावेन तत्र सङ्केताभावात्, असङ्केतिते [5]चाऽवाचकत्वाभ्युपगमात्[6] दुर्लभमेव वेदवाक्यानां प्रामाण्यमापद्येत[7] इति, अर्थवानेवाऽयमपौरुषेयशब्दार्थसम्बन्धप्रतिपादनयत्नः ।

वैशेषिकमतेन पूर्वः पक्षः ।

[8]तत्र शब्दार्थसम्बन्धं पौरुषेयं प्रचक्षते ।
जगदीश्वरनिर्माणं वदन्तो वेदवादिनः ॥२॥ इति ।

---

[1] अस्य प्रकरणस्य निर्मलाञ्जनमिति नाम मुद्रितपुस्तक उपलभ्यते । गपुस्तकेप्येवमेव दरीदृश्यते । रामानुजाचार्यविरचिते तन्त्ररहस्ये शास्त्रपरिच्छेदे तु विमलाञ्जनमित्येवाऽस्य नाम निर्दिष्टमस्ति । [ तं. र. पृ. २५. ] खपुस्तके विमलाञ्जनमिति संशोधितः पाठो दृश्यते । इदमेव प्रकरणस्य नामोचितमिति मत्वा, तदेव शीर्षके निवेशितमित्यवधेयम् ।

[2] अस्मिन्प्रकरणे शब्दार्थयोर्यो वाच्यवाचकभावसम्बन्धः, स पौरुषेय इत्याशङ्क्य, तस्याऽपौरुषेयत्वं व्यवस्थाप्यत इति, प्रकरणप्रतिपाद्यो विषयः प्रतिज्ञात इति ध्येयम् ।

[3] अपूर्वात्मनीति मु. पु. पा. ।
[4] प्रमाणानामिति मु. पु. पा. ।
[5] वाचकेति मु. पु. पा. ।
[6] अभ्युपगमे इति मु. पु. पा. ।
[7] आपद्यत इति मु. पु. पा. ।

[8] शब्दार्थयोस्सबन्धः पौरुषेयः, अर्थादीश्वरप्रणीत इति वदतां तार्किकाणां शङ्कां पद्येनाऽनेनोपन्यस्यति—तत्रेति ।

अस्मिन्प्रकरणे पदपदार्थसम्बन्धस्याऽनित्यत्वं निराकृत्य, नित्यत्वं व्यवस्थाप्यते । अयमभिप्रायः—गुरुमते विधिः प्रमाणमिति प्रथमस्याऽध्यायस्य प्रतिपिपादयिषितोऽर्थः । तत्र विध्यर्थवादमन्त्रात्मके वेदापरपर्याये शास्त्रे त्रेधा पुरुषानुप्रवेशो भवितुमर्हति—पदपदार्थ—सम्बन्धद्वारेण, वाक्यवाक्यार्थसम्बन्धद्वारेण, ग्रन्थस्यैव रचनाद्वारेणेति । तत्राद्यः प्रकारोऽनेन निराक्रियते शब्दार्थसम्बन्धस्य नित्यत्वप्रतिपादनेन । द्वितीयस्तु तद्भूताधिकरणेऽन्विताभि-

अनादौ हि वृद्धव्यवहारपरम्परायां सत्यां [1]वृद्धव्यवहारसिद्धो वाच्यवाचकभावश्शब्दार्थयोरपौरुषेयः प्रसिध्येत्। तथाहि—वृद्धानां स्वार्थेन [2]व्यवहरमाणानां वाक्यमुपश्रृण्वन्तो बालाश्शब्दश्रवणसमनन्तरभाविना चेष्टाविशेषेण विशिष्टार्थविषयां [3]मनीषामाकलयन्तो [4]वाचकतां शब्दस्याऽध्यवस्यन्ति, तेऽपि वृद्धा यदा बाला आसन्, तदा तेऽप्यनयैव दिशा व्युत्पद्यन्ते स्म। येभ्यश्च वृद्धेभ्यस्ते व्युत्पत्तिमलभन्त, तेऽप्यनयैव दिशा व्युत्पत्तिमलभन्त, तेऽप्यन्येभ्यो वृद्धेभ्य इति, विनाऽपि सङ्केतयितारं पुरुषम्, उपपद्यत एव शब्दार्थयोरनादिवृ[5]द्धव्यवहारसिद्धस्सम्बन्धः[6]।

वृद्धव्यवहारस्याऽनादित्वाक्षेपः।

नो खल्वनादितैव [7]वृद्धव्यवहारपरम्पराया उपपत्तिमती। तथा हि—विदाङ्कुर्वन्तु भवन्तस्तनुभुवनादिकं सर्वं सावयवमवसीयते। यच्च नाम सावयवं, तद्अवयवव्यतिषङ्गसमासादितात्मलाभम्[8]। पश्यामो वयं तन्तुव्यतिषङ्गसमासादितात्मलाभं पटम्, कटश्च वीणासंयोगसम्पादितसत्ताकं सावयवम्। एषा दिक् अन्त्यावयविभ्योऽवतरन्ती आद्व्यणुकमवतिष्ठते। परमाण्वोश्च परस्परसंयोगो नियतोऽन्यतरकर्मजः, उभयकर्मजो वाऽभ्युपगमनीयः। कर्म च परमाणुष्वदृष्टवत्क्षेत्रज्ञसंयोगात् प्रतिज्ञायते। तदुक्तं "अणुमनसोश्चाऽऽद्यं कर्मेत्यदृष्टकारितम्" [वै. द. अ. ५. आ. २. सू. १३] इति। अन्यस्य कारणस्याऽभावात्। न चाऽदृष्टमलब्धस्ववृत्ति कार्याय पर्याप्तम्, अचेतनत्वात् वासीवत्। न च चेतनानधिष्ठितमचेतनं वृत्तिमुपलभते। न

---

धानवादसमर्थनेन। चरमस्तु कर्तृस्मरणेनाऽत्रैवाऽन्ते निराकरिष्यते। अयम्भाव—सर्गादौ परमेश्वरस्सर्वज्ञस्सर्वशक्तिसमन्वित परमकारुणिकस्सर्गादिव्यवहारसमर्थानयोनिजान्पुरुषान्मनसैव सृष्ट्वा भोग्यभोगसाधनभोगस्थानादिप्रविभागोपेत भूतभौतिकप्रपञ्च समुत्पाद्य, तेषु तेष्वर्थविशेषेष्वस्य पदस्याऽयमर्थ इति सङ्केतेन सह, वेदान् तेभ्य उपदिदेश। अतश्शब्दार्थयोस्सम्बन्ध पौरुषेय—अर्थादीश्वरकृत इति। अत्रोक्तमेवाऽर्थं द्वादशदर्शनकाननपञ्चाननो वाचस्पतिमिश्रो विंशतिश्लोकस्य विधिविवेकव्याख्याया पूर्वकणिकोपान्तेऽनुवदति स्मेति [पृ २३६-२३७] बोध्यम्।

[1] दर्शनसिद्ध इति मु पु पा। [2] व्यवहारप्रमाणानामिति मु पु. पा.।
[3] कल्पयन्त इति मु पु पा। [4] वाच्येत्यधिक मु पु।
[5] प्रमाणानामिति मु पु. पा.। [6] व्यवहारदर्शनसिद्ध इति मु पु. पा.।
[7] वृद्धपरम्पराव्यवहारदर्शनेति यु. पु. पा। [8] बलेति मु पु पा।
[9] सत्ताकमिति ख. पु. पा.।

खल्वनधिष्ठिता वासी वर्धकिना वर्धनाय प्रवर्तते। तदेवमदृष्टं क्षेत्रज्ञसमवायि चेतनाधिष्ठितं कार्याय [१]पर्याप्तमिति दर्शनबलेनाऽवश्यमभ्युपगमनीयम्[२]। न चेदमिह चिन्तनीयम्—य एव क्षेत्रज्ञाः, त एव तेषामदृष्टानामधिष्ठातारो[३] भवेयुरिति, तेषामज्ञत्वात्। न हि ते स्वसमवायिनी अपि धर्माधर्मलक्षणेऽदृष्टे स्वरूपतः, कार्यतो वा वेदितुमीशते। य एव च यत् स्वरूपतः, कार्यतो वा वेदितुमीष्टे, स एव तस्याऽधिष्ठाता। यथा—तक्षा वास्याः।

तस्मादन्यः क्षेत्रज्ञेभ्यस्सकलक्षेत्रज्ञसमवायिधर्माधर्मलक्षणादृष्टसाक्षात्करणगोचराचिन्तनीयशक्तिविभवः कोऽपि चेतनातिशयोऽधिष्ठाता [४]नित्यप्रतिष्ठितस्स्वतन्त्रोऽभ्युपगन्तव्यः।

न चेदं वाच्यं केन प्रमाणेन तस्य क्षेत्रज्ञेष्वसम्भाविनी धर्माधर्मसाक्षात्करणशक्तिरवगम्यत इति। यत एव प्रमाणात् तस्य सद्भावोऽवगम्यते, तत एव तस्य ज्ञानशक्तिरप्यवगम्यत इति, अन्तर्भावितज्ञानशक्तिरेवाऽसौ सामान्यतोदृष्टानुमानस्य गोचरः। अत एव कथमसावधिष्ठास्यतीत्यस्याऽपि पर्यनुयोगस्याऽनवकाशः। किं तस्याऽधिष्ठाने प्रयोजनमिति योऽयमपि पर्यनुयोगः, स चेतनातिशयानुमानाङ्गीकरणेन पराकृतः। क्षेत्रज्ञो हि चेतनस्स्वप्रयोजनमुद्दिश्य प्रवर्तते। स च क्षेत्रज्ञविलक्षणोऽनपेक्षितप्रयोजन एव स्वतन्त्रः प्रवर्तते। अत एव स्वातन्त्र्यात् [५]कदाचित् तस्य प्रवृत्तिरुपपत्तिमती। स्वातन्त्र्यमपि तस्य सत्तानुमानसमधिगम्यमेवेति, न [६]पृथक्प्रमाणसव्यपेक्षम्। अतस्सिद्धं तत्प्रभवस्य तनुभुवनादेरादिमत्त्वमुत्पत्तिमत्त्वञ्च, तथाऽऽदिमत्तया विनाशित्वम्। कृतका हि भावा ध्रुवभाविविनाशाः, तथा दृष्टचरा घटादय इति, नाऽनादित्वं वृद्धव्यवहारपरम्परायाः। तेन [७]पुरुषसङ्केतादेव [८]शब्दस्याऽर्थप्रतिपत्तिहेतुत्वमास्थेयम्।

---

१ प्रवर्तत इति मु. पु. पा।
२ अभ्युपेतव्यमिति मु.।
३ अधिष्ठानमिति ख. पु. पा।
४ दिव्यप्रतिष्ठ इति मु. पु. पा।
५ कादाचित्की इति मु. पु. पा।
६ पृथक्लक्षणेति मु. पु. पा।
७ संकेतवशादेवेति. मु. पु. पा।
८ अर्थं प्रति बोधकत्वमिति. मु. पु. पा।

सङ्केतनिबन्धनं वाचकत्वमितिशङ्का ।

अपि च '[1]देवदत्तादिपदेष्वविवादा तावत्पुरुषसङ्केतनिबन्धना वाचकता । तद्दर्शनाद्गवादिशब्दानामपि तथाविधत्वमेवाऽनुमातुमुचितम् । अयमेव हि सामान्यतोदृष्टस्य विषयो—यदन्यत्र दृष्टम्, अन्यत्राऽनुमीयते । देवदत्तादिपदेषु स्वाभाविकं स्वार्थबोधकत्वमित्यपि न समीचीनम्, प्रमाणाभावात्, [2]पुरुषसङ्केतानपेक्षत्वप्रसङ्गाच्च । न च नियमे सङ्केतस्य व्यापारः, प्राक्सङ्केतादनियतार्थप्रत्ययोदयप्रसङ्गात् । क्लेशमात्रफलमिदमुच्यते—गवादिष्वपि नियतार्थप्रतिपत्तिः पुरुषसङ्केतायत्तैव, स्वाभाविकी तु [3]स्वार्थप्रतिपादनशक्तिरुपयोगिन्येव विशिष्टार्थप्रतिपत्तावित्यलममुना प्रतिपन्नार्थविघातिना वादेनाऽतिनिर्बन्धेन ।

किञ्च यथोदितप्रमाणबलसिद्धे भगवति सकलजगन्निर्माणैकप्रवीणे धर्माधर्मयोस्साक्षात्कर्तरि[4] तत्कर्तृकत्वेनाऽपि[5] सिध्यति वेदानामपूर्वेऽर्थे प्रामाण्यमिति, मीमांसकानां विद्वेषमात्रनिबन्धनोऽयं पौरुषेयत्वपक्षप्रतिक्षेपः, मन्त्रार्थवादानाञ्च भूयसाममुमर्थमञ्जसा वदतामन्यथा वर्णनमिति ।

सिद्धान्तः ।

[6]औत्पत्तिकस्तु सम्बन्धश्शब्दस्याऽर्थेन [7]सम्मतः ।
वृद्धसंव्यवहारस्य प्रवाहानादिता यतः ॥२॥ इति ।

---

[1] शब्देष्विति मु. पु. पा. । [2] पुरुषेति मु. पु. नास्ति ।

[3] स्वभाविकी सार्वार्थप्रतिपत्तिशक्तिरनुपयोगिन्येवेति ख. पु. पाठः ।

[4] साक्षात्कारिणीति मु. पु. पा. । [5] तत्कृतत्वेनेति ख. पु. पा. ।

[6] पूर्वोक्तमाक्षेपं "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध" इति सूत्रभाष्यटीकावष्टम्भेन निराकुर्वन्, टीकाकारसम्मतं सिद्धवदुपदेशादित्यस्याऽवलम्बनेनाऽनादिवृद्धव्यवहारपरम्परासिद्धंसम्बन्धस्यनित्यत्वमुपवर्णयामास—औत्पत्तिकेस्त्विति । अत्र सूत्रे "उपदेशः" इति प्रथमान्तं पञ्चम्यन्ततया विपरिणम्य, सिद्धवदिति चाऽध्याहृत्य भाष्यकारेणोक्तं 'सिद्धवदुपदेशादिति' । अस्याऽयमर्थः—सिद्धवदिदं सम्बन्धस्याऽपौरुषेयत्वं सिद्धमित्यर्थः । उपदेशात्—वृद्धोपदेशात् । एकेन वृद्धेनाऽपरस्मै वृद्धायाऽनुष्ठानोपदेशे पार्श्वस्थस्य सम्बन्धग्रहणसंस्कारमात्रादेवाऽर्थप्रतीत्युपपत्तेस्सम्बन्धः कल्पयितुं न शक्यते । अत एवाऽऽह टीकाकारः—"नाऽत्र कर्ता शक्यते कल्पयितुं वृद्धव्यवहारस्याऽनादित्वात् । अत औत्पत्तिकस्सम्बन्ध इति सिद्धमि" [ बृह. १८९ पृ ] ति ।

[7] सम्भव इति मु. पु. पा. ।

*वेदार्थविदामग्रगण्यस्य भगवतस्सकलनयनिधेर्जैमिनेरपौरुषेयश्शब्दस्याऽर्थेन सम्बन्धोऽभिमतः। स हि मेने—यद्यपि [1]देवदत्तादिशब्दानां पुरुषसङ्केतनिबन्धनं वाचकत्वम्, तथाऽपि गवादिपदेष्वनुमानं न शक्यते कर्तुम्। अर्थप्रतिपत्तिलक्षणस्य कार्यस्याऽन्यथाऽप्युपपत्तेरनैकान्तिकत्वादिति। वृद्धव्यवहारनिबन्धनाद्धि स्वार्थे वाचकत्वशक्तिज्ञानादपि बालानां शब्दार्थप्रतिपत्तिर्दृश्यते। तेनैकान्ततस्सङ्केत एव कल्पयितुं न शक्यते।

अपि च शक्तिज्ञानमात्रनिबन्धना [2]गवादिशब्दानामर्थप्रतिपत्तिरिति प्रत्यक्षमेवैतत्। न च प्रत्यक्षे सति कारणे कारणान्तरमनुमातुं शक्यते। देवदत्तादिपदेषु तु यस्य सङ्केतनिबन्धनाऽर्थप्रतिपत्तिर्भवति, तस्य सङ्केत एव कारणम्। तेष्वपि ये व्यवहारदर्शनादेव वाचकतामवगम्याऽर्थं प्रतिपद्यन्ते, तेषामपि व्यवहारदर्शनप्रसूतं शक्तिज्ञानमेवाऽर्थप्रतिपत्तिकारणम्, न सङ्केतः। किन्तु तत्र सङ्केतपूर्वक एव व्यवहारः, अर्थप्रतिपत्तिश्च, तथा तत्पूर्वकमपि वाचकत्वज्ञानम्। गवादिपदेषु तु सर्वेषां शक्तिज्ञानादेव व्यवहारसम्भवादर्थावगतिरिति वैषम्यम्।

ननु देवदत्तादिपदेषु [3]सङ्केतदर्शनात्, किमिति गवादिपदेष्वपि पूर्वभावी सङ्केत एव न कल्प्यते। न। प्रत्यनुमानग्रस्तत्वात्। शक्यते हि तत्रैवमनुमानं सम्भावयितुम्—पूर्वे हि पुमांसो गवादिशब्दानां सास्नादिमत्यर्थे वृद्धव्यवहारसिद्धशक्तिज्ञानादर्थप्रतिपत्तिमन्तो गवादिशब्देभ्यस्सास्नादिमदर्थप्रतिपत्तियोगित्वादधुनातनपुरुषवदिति। तदेवं प्रत्यनुमानेन[4] निरस्तेऽनुमाने, [5]प्रमाणविरहादपौरुषेयत्वमेव सिध्यति शब्दार्थसम्बन्धस्य[6]। अत

---

[1] देवदत्तादीनामिति. मु. पु. पा.। [2] गवादिशब्दानामिति मु. पु. नास्ति।
[3] संकेतेति मु. पु. नास्ति। [4] प्रत्यनुमानग्रस्तेऽनुमाने निरस्त इति मु. पु. पा.।
[5] सकलेति. मु. पु. पा.। [6] शब्दार्थावगतेरिति. मु. पु. पा.।

* शब्दार्थयोः प्रत्याय्यप्रत्यायकभावस्सम्बन्धो वाच्यवाचकतापरपर्यायो यः, सोऽपौरुषेय इत्यर्थः। तथा च पारमर्षं सूत्रम्—"औत्पत्तिकस्तु शब्दस्याऽर्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चाऽर्थेऽनुपलब्धे बादरायणस्याऽनपेक्षत्वात्" [ पू. मी. द. १. १. ५. ] इति। तस्याऽयमर्थः—औत्पत्तिकस्स्वाभाविकोऽपौरुषेयो नित्य इत्यर्थः। वर्णानां नित्यत्वात्सम्बन्धस्य नित्यत्वं पर्यवस्यति। स च सम्बन्धश्शक्तिग्राहकप्रमाणशिरोमणिभूतेन वृद्धव्यवहारेणाऽवगम्यते। स च वृद्धव्यवहारोऽनादिरिति "सिद्धवदुपदेशादि"त्यत्र भाष्यनिबन्धनटीकाकृता स्पष्टी-

इदमपहस्तितम् । यदाहुर्बौद्धाः—

"यज्जातीयो यतस्सिद्धस्स तस्मादग्निकाष्ठवत् ।
[1]अदृष्टहेतुरप्यन्यस्तद्भवस्सम्प्रतीयते" ॥

[ प्र. वा. परि. ३. श्लो. २४३ ] इति ।

वृद्धव्यवहारस्याऽनादित्वसमर्थनम् ।

ननु सिद्ध्येदयं मनोरथो यदि वृद्धव्यवहारपरम्पराया अनादिता स्यात्, सा तु प्राचीननयनिवारिता इति । अत्र वदामः । भवतु सावयवं सर्वमवयवसंयोगारब्धसत्ताकम्, अवयवसंयोगापाये विनश्वरमिति च । तथाप्येकदैव [2]सकलस्य सम्भवः, विनाशश्चेत्यत्र नास्ति[3] प्रमाणम् । प्रत्युत यथादर्शनमिदमेव तावदवसातुमुचितम्—क्रमेण चोदयः, क्रमेण विलयश्चेति । किञ्च यथाऽद्यतना जना मातृपितृसंयोगनिबन्धनात्मलाभाः, तथा पूर्वेऽपि जना जनत्वादिति शक्यमेवाऽनुमातुम् । न चाऽयमयोनिजानां केवलेन धर्माधिपत्येन, अधर्माधिपत्येन च संस्वेदजानामिव सम्भवो घटते । जरायुजा—ण्डजानां तथा तद्दर्शनाभावात्[4] ।

दृष्टानुसारि हि सर्वत्राऽनुमानम् । तेन संस्वेदजेषु नियमेन दृष्टं न जरायुजा—ण्डजयोरप्ययोनिजत्वं शक्यतेऽनुमातुम् । न हि पाण्डरमात्रेण बाष्पादपि वह्नेरनुमानम् । किन्तु यादृशमेव पाण्डरद्रव्यं नियमेन वह्निनियतं प्रतिपन्नम्, तादृशमेव तस्याऽनुमापकमुचितम् ।

ईश्वरनिराकरणम् ।

यच्चेदमुदितं[5] धर्माधर्मौ चेतनातिशयाधिष्ठिताविति, तदप्यसिद्धमेव ।

---

कृतः । यदि वृद्धव्यवहारोऽनादिर्न स्यात्, तदा प्रथमवृद्धयोश्शक्तिग्रहणोपायाभावाच्छब्दप्रयोगार्थ–प्रतीती न स्याताम्, तदभावेनाऽपरवृद्धव्यवहाराप्रवृत्तौ, अपरेषां सम्बन्धाग्रहणे शब्दप्रयोगा-र्थप्रतीती विच्छिद्येयाताम् । अनादिस्तु वृद्धव्यवहारः पुरुषान्तरपूर्वकत्वात्पुरुषान्तरोत्पत्तेः । यथा खल्वद्यतनाः पुरुषाः पुरुषान्तरपूर्वकाः, तथा प्राक्तना इति, वृद्धव्यवहारस्याऽनादित्वमनवस्थापरिजिहीर्षयाऽभ्युपगमनीयमित्याशयेनाऽऽह—"औत्पत्तिक" इत्यादिनेति बोध्यम् ।

[1] अदृष्टहेतुरपि नो इति मु. पु. पा. । प्रमाणवार्त्तिकानुसारी पाठो मूले सन्निवेशित इति ध्येयम् ।

[2] सकलजनस्येति मु. पु. पा. । [3] नः, इति. मु. पु. पा. ।

[4] तथा दर्शनासम्भवादिति मु. पु. पा. । [5] उक्तमिति मु. पु. पा. ।

यस्यैव तौ क्षेत्रज्ञस्य, स एवाऽधिष्ठाताऽस्तु। अथाऽज्ञत्वात्तस्याऽधिष्ठातृत्वं[१] नोपपद्यत इति चेत्, तर्ह्यन्यस्याऽपि कथमुपपद्यते। न हि तस्याऽपि परपुरुषवर्ति धर्माधर्मज्ञानमुपपद्यते, कारणाभावात्। न हि तस्येन्द्रियाणि कारणम्, इन्द्रियाणां तत्र [२]सामर्थ्यादर्शनात्। न च केवलं मनः, केवलस्य मनसो [३]बाह्येष्वप्रवृत्तेः। न हि [४]धर्माधर्मरहितस्येश्वरस्येन्द्रियमनस्सम्बन्धो भवति, धर्माधर्मनिबन्धनत्वात् तत्सम्बन्धस्य। अथ कारणमन्यदेवेश्वरबुद्धेः। तदयुक्तम्। प्रसिद्धकारणत्वाद्बुद्धेः। प्रसिद्धानि हि कारणानि बुद्धेः। यत्कारणं हि यत्कार्यं दृष्टम्, तत्कारणकमेव तदिति युक्तम्। अन्यथा चेतनाधिष्ठिता वासी दृष्टेति, कथं धर्माधर्मयोरपि तदधिष्ठितत्वं भविष्यति। अथाऽकारणा नित्यैवेश्वरबुद्धिरिति चेत्। तदप्यसुन्दरम्। बुद्धितत्त्वस्य नित्यत्वाभावात्। नित्या सती बुद्धिरेव न स्यात्। बुद्धिमता चाऽधिष्ठानं दृष्टम्, न पुनरन्येन। अथाऽदृष्टमपि बुद्धेर्नित्यत्वमङ्गीक्रियते, तदा चेतनानधिष्ठितत्वमेव किमिति नाऽङ्गीक्रियते। अथ सिद्धेऽधिष्ठातृत्वे, ज्ञानमपि कल्प्यत इति। [५]तदयुक्तम्। [६]ज्ञानाद्यननुबद्धस्याऽधिष्ठातृत्वस्य कारणाभावात् प्रतिक्षिप्ते ज्ञाने सत्यनुमातुमशक्तेः। तेन शक्यज्ञानमेवाऽचेतनं चेतनाधिष्ठितमिति व्याप्तिराश्रयणीया, तथादर्शनात्। तक्षादयो हि शक्यज्ञानान्येव वास्यादीन्यधितिष्ठन्तो दृश्यन्ते, नाऽन्यानि।

अपि चाऽधिष्ठानार्थोऽपि चिन्तनीयः। न तावत्संयोगः, गुणत्वेन धर्माधर्मयोस्संयोगाभावात्। समवायोऽपि परपुरुषसमवायिनोर्धर्माधर्मयोरीश्वरं प्रत्यनुपपन्नः। वास्यादिषु तु तक्षादीनां करसंयोगादिरेवाऽधिष्ठानम्।

तथा प्रवृत्तिरपि कीदृशी। न तावत् क्रिया, गुणभूतयोर्धर्माधर्मयोः क्रियाभावात्। उत्पत्तिश्चेत्, तर्हि सा क्षेत्रज्ञादेव समवायिकारणात्, आत्ममनस्संयोगाच्चाऽसमवायिकारणादभिसन्ध्यादिनिमित्तकारणोपगृहीतादिति।

---

[१] अधिष्ठानमिति मु. पु. पा.। [२] तत्राऽसामर्थ्यादिति मु. पु. पा।

[३] "बहिः परतन्त्रं मनः" इति गौतमीयं वचोऽर्थतोऽनुवदति शालिकाचार्य इत्यवधातव्यं विबुधैः। [४] ईश्वरस्येति मु. पु. नास्ति।

[५] तदयुक्तमिति मु. पु. ना.।

[६] सन्निकर्षादिति ख. पु. पा.।

फलदानमिति चेत् । न । देशकालावस्थादिसहकारिसहिताभ्यां [1]धर्माधर्माभ्यामेव फलम्, न चेतनव्यापारापेक्षम् ।

वैशेषिकाभिमतेश्वरनिरासः ।

*यदपि केचिदाहुः—परमाणव एवेश्वरेच्छावशेन प्रवर्तन्त इति । तदपि न युक्तम् । क्वचित्तथाविधस्याऽधिष्ठानस्याऽदर्शनात् । शरीरे तथादर्शनमिति चेत् । न । तस्य क्षेत्रज्ञधर्माधर्मपरिगृहीतत्वात्[2] । न परमाणव एवेश्वरधर्माधर्मपरिगृहीताः, न च तस्येच्छामात्रेण प्रवृत्तिः, किन्तु प्रयत्नवशात् । न चेच्छायामपि हेतुरस्ति । न च नित्यैवेच्छा, [3]नित्यं प्रवृत्तिप्रसङ्गात् ।

अपि च यथाऽचेतनत्वाच्चेतनाधिष्ठितत्वमनुमीयते, तथा प्रयोजनाभावादप्यनधिष्ठानमिति ज्ञायते ।

कतरदत्राऽनुमानं बलीय इति [4]चिन्तयामः । तेन यत्रैव प्रयोजनं, [5]तदेवाऽचेतनं[6] चेतनाधिष्ठितमिति व्याप्तिराश्रयणीया[7], तथादर्शनात् । अपि च व्याप्तिग्रहणपूर्वकमनुमानम्, अन्वयव्यतिरेकाभ्याञ्च व्याप्तिरवगम्यते । यथा च चेतनोऽधिष्ठातेति प्रतीयते, तथा विग्रहादिमानपि । तेनाऽनुमानं प्रवर्तमानं तथाविधमेवाऽनुमापयेत् । न च तस्य धर्माधर्मौ, परमाणून् वा प्रत्यधिष्ठातृतोपपद्यत इत्यनधिष्ठानमेव । तेन विग्रहादिमदधिष्ठानयोग्यमेवाऽचेतनं चेतनाधिष्ठितमिति व्याप्तिराश्रयणीया ।

नन्वेवं सति प्रसिद्धस्याऽपि [8]धूमाद्यनुमानस्योच्छेदः प्राप्नोति । यथा-

---

[1] धर्माधर्माभ्यामिति मु. पु. पा. नास्ति ।
[2] उपसङ्गृहीतत्वादिति मु. पु. पा. ।
[3] नित्यत्वप्रसङ्गात् ।
[4] न विद्म इति मु. पु. पा. ।
[5] मुद्रितपुस्तके तदेवेति पाठः ।
[6] अचेतनमिति मु. पु. नास्ति ।
[7] अभ्युपगमनीयेति मु. पु. पा. ।
[8] अनुमानस्येति मु. पु. पा. ।

*ईश्वरकारणिनस्तार्किकाः—क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात् घटवदिति सामान्यतोदृष्टानुमानेन यं कञ्चन कर्तारमनुमिमते, कर्तृत्वञ्च परिष्कुर्वते-स्वोपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिमत्त्वमिति । ईदृशञ्च कर्तृत्वमस्मदादीनां न संभवति, स एवेश्वरस्सर्वज्ञस्सर्वशक्तिमान्, तज्ज्ञानादिकञ्च सर्वं नित्यमिति यथेच्छं परिकल्पयन्ति । तत्र च पूर्वोक्तं सामान्यतोदृष्टानुमानं प्रमाणयन्ति ।

भूतेन हि महानसादिवर्तिना व्याप्तिरवगता, न तथाविधस्याऽनुमानम्। यथाविधस्याऽनुमानम्, न तथाविधस्य व्याप्तिधीसमयेऽनवधारणमिति। तद्-युक्तम्—देशकालाद्युपाधिपरित्यागेन हि सामान्येन सम्बन्धग्रहणम्। तेनेहाऽपि भवत्येव यद्वास्यादिषु दृष्टम्, तत् धर्माधर्मयोरपीति। यादृशन्तु रूपं व्यापक-मुपलभ्यते, तदेवाऽनुमातुं शक्यते, नाऽन्यत्। इह च विग्रहवत्त्वाद्यपि व्याप्त्यनुप्रवेशीति, तदनुमातव्यम्। न च तदनुमातुं शक्यत इति चेत्। वरं चेतनानुमानत्यागः[1] तदननुबद्धस्य [2]तस्याऽनुमानात्। तेनेश्वरस्य [3]सर्वज्ञ-तानुमाने हेत्वभावेन ज्ञानाभावनिश्चयात्। तेनाऽनादिरेव वृद्धव्यवहारपरम्परा शब्दार्थावगमे हेतुः। न च सृष्ट्यादावीश्वरकृतस्सङ्केतः, सङ्केतस्यैव कर्तुम-शक्तेः। न खल्वद्यतना जनाः [4]सङ्केतवाक्यस्याऽर्थमनवबुध्यमानास्सङ्केतं प्रतिपद्यन्ते। तस्मादनादिरेव[5] वृद्धव्यवहारपरम्पराऽभ्युपगमनीया। एवं

---

इदमविचारितरमणीयमिति शालिकाचार्यो मेने। तस्याऽयमाशयः। तथाहि—सकलजगन्निर्माणैकशिल्पिन ईश्वरस्य कर्तृत्वज्ञानेच्छाप्रयत्नादिनिर्वाहाय शरीरेन्द्रियमनः—प्रभृत्यवश्यमेवाऽऽस्थेयम्। ज्ञानादिकं शरीरावच्छेदेनैवाऽऽत्मनि जायते, ज्ञानसामान्यं प्रत्यात्ममनस्संयोगस्य हेतुत्वमिति, सर्वैरपि दार्शनिकैरभ्युपगमात्। विग्रहादिकमचेतनं चेतनाधिष्ठितमेव कार्याय कल्पत इति, पूर्वोक्तविधया विशेषानुमानेन सामान्यानुमानस्य बाधितत्वात्, तदात्मानं न लभते। भवदीयानुमानादस्मदीयानुमानस्य विशेषविषयत्वेन बलीयस्त्वात्। अत एवोक्तम्—

"विशेषविषयत्वादस्मदीयं ज्ञानोदयकारणानुमानमादरणीयम्। न पुनरीश्वरवादिनामत्यन्तसामान्यविषयम्। अचेतनं चेतनाधिष्ठितमिति विशेषानुमानस्य प्रबलत्वात्।

अत एवोक्तं वार्तिककृता—

बाधस्सामान्यशास्त्रस्य विशेषश्रुतिभिर्यथा।
अनुमानान्तरेणैवमनुमानस्य बाधनम्।
[ तं, वा, ] इति।

अत आत्ममनस्संयोगाददृष्टापेक्षात्तत्तदिन्द्रियार्थसंयोगसध्रीचीनाज्ज्ञानान्युत्पद्यन्ते। ईश्वरस्य देहेन्द्रियमनःप्रभृतीनामभावेन ज्ञानोत्पत्तेरेवाऽसम्भवात्। अन्यथेश्वरस्याऽस्मदादिवद्विग्रहादिमत्वं प्रसज्येत। तत्सद्भावे प्रमाणाभावेन तस्य संबन्धकर्तृत्वाशङ्का न सञ्जाघटीति। अतश्शब्दार्थयोस्संबन्धोऽनादिवृद्धव्यवहारसिद्धत्वान्नित्यः।

[1] बाध इति मु. पु. पा.। [2] अनुमानस्य स्यादिति मु.पु.पा.।
[3] सर्वज्ञानमपि सिध्यतीति मु. पु. पा.। [4] तस्येति मु. पु. पा.।
[5] एवं प्रसङ्गागतादीश्वरनिरासादुदवसाय, परमप्रकृतं शब्दार्थयोस्संबन्धस्य नित्यत्वमुपसंहरति—अनादिरिति।

पुरुषस्य धर्मप्रतीतिं प्रति शब्दमन्तरेणोपायाभावान्न पौरुषेयत्वे वेदस्याऽ-[1]पूर्वकार्यात्मके वेदार्थे प्रामाण्योपपत्तिरिति, [2]वेदस्याऽपौरुषेयत्वाश्रयणम् ।

वेदानामपौरुषेयत्वनिरूपणम् ।

कथमपौरुषेयत्वं वेदानाम् । उच्यते— [3]कर्तुरस्मरणात् । न चाऽनुमानमपि कर्तुरुपपद्यते । प्रमाणान्तरेणाऽप्रतीतेऽर्थे[4] पुरुषाणां वाक्यस्य रचनायामशक्तेः । काठकादिसमाख्याऽपि कर्तृसद्भावं न [5]साधयितुमलम् । [6]प्रवचनेनाऽपि तदुपपत्तेः । मन्त्रार्थवादास्तु न स्वातन्त्र्येणाऽर्थमवगमयितुमीशते, किंतु विध्युद्देशानुसारेण तदनुगुणमर्थमिति, न सिद्धार्थप्रतिपादने तेषां प्रामाण्यमिति, सिद्धमपौरुषेयत्वं शब्दार्थसम्बन्धस्येति ।

दुस्तर्कतिमिरं भेत्तुं शिष्याणां दृष्टिरोधकम् ।
इदं शालिकनाथेन विहितं [7]विमलाञ्जनम् ॥

इति महामहोपाध्यायश्रीशालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां विमलाञ्जनं नाम सप्तमं प्रकरणं समाप्तम् ।

---

[1] अपूर्वात्मक इति मु. पु. पा. ।
[2] वेदस्येति मु. पु. नास्ति ।
[3] पुरुषस्येति मु. पु. पा. ।
[4] अर्थे इति मु. पु. नास्ति ।
[5] उपकल्पयितुमिति मु. पु. पा. ।
[6] प्रवचनत इति ख. पु. पा. ।
[7] निर्मलाञ्जनमिति मु. पु. पा ।

# परिशिष्टम् ।

अत्रेदं बोध्यम्—तत्त्वज्ञानप्रतिपादनाय प्रवृत्तेष्वास्तिक-नास्तिदर्शनशास्त्रेषु निखिलेष्वप्युपपाद्यत्वेन, निरसनीयत्वेन वेश्वरनिर्देशः-प्रातस्स्मरणीयचरितैर्महर्षिभिस्तत्त्वदर्शिभिर्विद्वद्धौरेयैश्च कृतो दरीदृश्यते। तत्र नास्तिकदर्शनेषु व्युदसनीयतयैवेश्वरोपादानं कृतमवलोक्यत इति सर्वसम्प्रतिपन्नोऽयं विषयः। न्याय-वैशेषिक-योगवेदान्तदर्शनेष्वीश्वरसाधनाय हेतुद्वयं समानमेव दृश्यते। यथा—प्रथमं सृष्टिप्रलयसमर्थनम्, द्वितीयं वेदप्रामाण्यसंस्थापनञ्चेति। प्रशस्तपादप्रणीते वैशेषिकदर्शनभाष्ये पदार्थसङ्ग्रहाभिधे सृष्टिसंहारप्रक्रिया द्रष्टव्या। "तद्वचनादाम्नायस्य प्रामाण्यम्" [ वै. द. अ. १. आ. १. सू. ३. ] "ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् तत्कारितत्त्वादहेतुः" [ न्या. द. ४. आ. १. सू. १९. २१ ] "आप्तोदेशश्शब्दः" [१. १. ७.] "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्याच्च" [ २. १. ६८. ] इति च। ऋषय एवाऽऽप्तास्तदुपदेशादेव वेदप्रामाण्यमायातीति, तयोस्सूत्रयोर्भाष्ये चाऽयमर्थो विशदः। जगदुत्पत्तिस्थितिप्रलयहेतुत्वेन, ऋग्वेदादिकर्तृत्वेन चेश्वरतत्वं साधयन्ति वेदान्तिनः। "यतो वा इमानि जायन्ते" "अस्य महतो भूतस्य निश्वसितमि"त्यादिना। तथा चैते सात्यवतेयस्य सूत्रे-"जन्माद्यस्य यतः," "शास्त्रयोनित्वात्" [ ब्र. सू. १. १. २. ३ ] इति। पातञ्जलयोगदर्शने पूर्वोक्तं प्रयोजनद्वयमुपेक्ष्य, समाधिसाधनायैवेश्वरस्स्वीकार इति फलति। तथा च पारमर्षं सूत्रम्—"ईश्वरप्रणीधानाद्वा" [ यो. पा. १. सू. २३. ] "शौच-तपस्स्वाध्यायेश्वरप्रणिधानानि नियमः" [यो. द. पा. १ सू. ३२ ] इति। कापिले दर्शने ईश्वरसिद्धौ प्रमाणमेव नोपलभ्यते। तथा च कापिले सूत्रे-"ईश्वरासिद्धेः, मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः" [ सां. द. अ. १. सू. ९२. ९५ ] इति सूत्राणि द्रष्टव्यानि।

मीमांसकसिद्धान्ते निष्प्रमाणक ईश्वरो निष्प्रयोजनश्चेत्यापाततः प्रतीयते। लोकप्रसिद्धिरप्यमुमेवाऽर्थं पुष्णाति। तत्र काणाद-गौतम—पतञ्जलि-बादरायणसदृशेषु प्रतिपक्षिषु तिष्ठत्सु कां नाम वाचोयुक्तिं प्रदर्शयद्भिरध्वरमीमांसकैरीश्वरतत्त्वं पराक्रियत इति परामृष्टव्यम्। किञ्च ततः प्रागेव सूत्रकारो जैमिनिरीश्वरमुररीकरोति, न वेति विचारणीयमापतति। इतरथा कथं तत्पदानुजीविनां तन्निराकरण-समर्थनावसर इति। तत्र सूत्रकृता जैमिनिना, भाष्यकारेण शबरस्वामिना चेश्वरविषये यद्यपि कण्ठरवेण न किमप्यवोचि। तथापि तद्ग्रन्थपौर्वापर्यालोचनया, तत्तद्वचनविवेचनेन च नास्तीश्वरतत्वं तन्मत इति विज्ञायते। तथा हि—"चोदनालक्षणोऽर्थो धर्मः" "औत्पत्तिकस्तु शब्दस्याऽर्थेन सम्बन्धः" "चोदना पुनरारम्भः, आख्या प्रवचनात्" इति। तथा वेदान्तदर्शने साधनलक्षणे "फलमत उपपत्ते" रित्यत्र "धर्मञ्जैमिनिरत एवे" त्यनेन जैमिनिमतमनूद्य निराकृतं दृश्यते। चोदनासूत्रे "चोदनैव लक्षणं प्रमाणं यस्मिन्नि"त्यन्ययोगव्यावृत्तिरूपैका प्रतिज्ञा। "चोदना लक्षणं प्रमाणमेव" यस्मिन्नित्ययोगव्यावृत्तिरूपा च द्वितीया प्रतिज्ञाऽभिप्रेता। तत्रेश्वरस्वीकारे तस्य सर्वज्ञत्वेन धर्मस्येश्वरीयज्ञानविषयत्वमेष्टव्यम्। अन्यथा सर्वज्ञत्वहानिः। तदीयज्ञानविषयत्वे चोदनैकगम्यत्वं व्याहन्यते। सेयमुभयतः पाशारज्जुः। धर्मादिकमजानान ईश्वरस्तिष्ठतु नाम, का नो हानिः। अतोऽत्र सूत्र ईश्वरनिराकरणबीजं विनिहितमिति तर्कयामो वयम्। एवमौत्पत्तिकसूत्रे शब्दार्थसम्बन्धकर्तृत्वेन तार्किकपरिकल्पितः परमेश्वरो निराकृतो वेदितव्यः। अन्यथाऽनवस्थापत्तेः।

वेदकर्तृत्वेनाऽभिमत ईश्वरो निराकृतो वेदापौरुषेयत्वाधिकरणे । अपूर्वाधिकरणेऽपूर्वद्वारेण यागादे कर्मण फलजनकत्वम्, न त्वीश्वरस्य फलदातृत्वम् । तथा च सूक्ष्मेक्षिकया परामृश्यमानेषु जैमिनिसूत्रेषु परमेश्वरनिरासबीजानि निगूहितानीत्यवगम्यते ।

एव वेदान्तदर्शने साधनलक्षणे "फलमत उपपत्तेरिति" सूत्रेणेश्वरस्य कर्मफलदातृत्व सस्थाप्य, "धर्मञ्जैमिनिरत एवे" ति सूत्रेणाऽपूर्वद्वारकस्य यागादेर्धर्मस्य फलदातृत्वम्, न त्वीश्वरस्य, इति जैमिनिमतमुत्थाप्य, "पूर्वन्तु बादरायणो हेतुव्यपदेशादि"[मी द सू ४१]ति सूत्रेण स्वयुक्त्या तत्खण्डयामासेति सङ्गच्छते ।

शाबरभाष्येऽपि "तस्मात्कारणादवगच्छामो न कृत्वा सम्बन्ध व्यवहारार्थं केनचिद्वेदा प्रणीता" इत्यादिशब्दार्थसम्बन्धकर्तृनिराकरणपर वचनजात तार्किकाभिमत वेदकर्तारमीश्वर व्यासेधतीति स्पष्टमेवोपलभ्यते ।

अत एव तन्मतमनुसरता कुमारिलभट्टेन स्वोपज्ञे श्लोकवार्तिके सम्बन्धापक्षेपपरिहारग्रन्थे शताधिकैश्श्लोकैरीश्वरतत्त्व प्रत्याख्यातम ।

पार्थसारथिमिश्रोऽपि शास्त्रदीपिकाया तर्कपादे महता प्रबन्धेनेश्वर पराकार्षीत् । शब्दार्थसम्बन्धस्य नित्यत्वप्रतिपादनेनेश्वरनिरासस्सूचितो भवति ।

अयमस्याऽऽशय —यद्यपि भगवाञ्जैमिनिरीश्वरतत्त्व स्पष्ट न प्रत्याचख्यौ, तथापि तद्बीजन्तु तेनैव स्वसूत्रेषु समुप्तम्, तदेवाऽङ्कुरित शाबरे भाष्ये, कुमारिलभट्टप्रयत्नेन पल्लवित फलितञ्च वार्तिके, तदेव यज्ञात्मसूनुना पार्थसारथिमिश्रेण शास्त्रदीपिकाया सङगृहीत सज्जितञ्च चित्तं विनोदयति विचारचातुरीचर्चितचेतसा सुमनसामिति ।

प्रभाकरमिश्रस्तु—सम्बन्धाक्षेपपरिहारावसर ईश्वरतत्त्व नाऽस्पार्क्षीत् । पर शालिकाचार्यस्तु वैशेषिकप्रक्रिययेश्वरसाधनपूर्वपक्षमुपसहरन् प्रभाकरमिश्रस्याऽऽशयमित्थ वर्णयाञ्चकार । तथा च ऋजुविमलापञ्चिकाग्रन्थसन्दर्भे —"तदिद प्रतिषक्षकक्षामपि नारोढु क्रमत इत्युपेक्षित भगवता भाष्यनिबन्धनकारेण" इति । पञ्चिकाप्रकरणे स त्वीश्वर निरासाञ्चक्रे- ईश्वरसाधकसामान्यतोदृष्टानुमानपेक्षयाऽस्मदीयानुमानमेव विशेषविषयत्वादादरणीयम्, न पुनरीश्वरवादिनामत्यन्तसामान्यविषयमित्यादिनेश्वरानुमानत्याग एव श्रेयानित्यन्तेन । प्रायो वार्तिककृतः कुमारिलभट्टस्य रीतिरेवाऽनुसृता शालिकाचार्येण ।

पर भवनाथमिश्रस्तु शालिकगिरामन्यथातात्पर्य प्रत्यपीपदत् । तथाहि—ईश्वरनिराकरणपरस्याऽस्य सर्वस्याऽपि प्रकरणस्याऽनुमानिकेश्वरनिराकरणे तात्पर्यमुपवर्णयन्, वेदप्रमाणसिद्धमीश्वरमङ्गीचकार । अत एवोक्त तेन "एवञ्चेश्वरे परोक्तमेवाऽनुमान निराकृतम् । नेश्वरोऽपि निरस्त" [नय वि पृ १९९] इति । अमुमेव पथानमनुससार नन्दीश्वर [ प्रभा वि. पृ ८२ ८३ ] एतेन न्यायप्रकाशे-आपदेव"स्येश्वरार्पणबुध्या क्रियमाणस्तु नि श्रेयसहेतु", अर्थसङ्ग्रहे—लौगाक्षिभास्करस्य "श्रीगोविन्दार्पणबुद्ध्या क्रियामाणस्तु नि श्रेयसहेतुरि"ति च वचनद्वय व्याख्यातम् ।

अस्माकन्त्विदं प्रतिभाति—जैमिनिप्रणीतस्य मीमांसादर्शनस्येश्वरविषये ताटस्थ्यमेव वरमिति । अयमभिसन्धि । तथाहि—मन्त्रब्राह्मणात्मके सर्वज्ञकल्पे भगवति वेदे काण्ड-

द्वयमस्ति पूर्वकाण्डम्, उत्तरकाण्डञ्चेति। पूर्वकाण्डेन धर्मतत्त्वं विचारितम्, उत्तरकाण्डेन ब्राह्मतत्त्वम्। पूर्वोत्तरकाण्ड एव कर्मकाण्डम्, ज्ञानकाण्डमिति च क्रमेण व्यवह्रियेते वेदव्याख्याननिष्णातैः। तत्र पूर्वस्मिन् काण्डे धर्मस्वरूपनिर्धारणाय श्रौतस्मार्तशिष्टाचारप्रमाणकधर्मनिरूपणम्, अधर्मनिरूपणञ्च तत्परिहारायेति प्राचीनैर्विबुधैरक्षुण्णः पन्थाः। अतो विध्यर्थवादमन्त्रनामधेयनिषेधप्रविभागोपेतं पूर्वकाण्डं प्रावर्तिष्ट धर्माधर्मसत्तत्त्वनिर्धारणाय, न तु परमेश्वरतत्त्वविवेचनाय, "यत्परश्शब्दस्स शब्दार्थः" इति न्यायात्।

यथा—सांख्यशास्त्रं प्रकृतिपुरुषविवेचनार्थं प्रवृत्तमीश्वरतत्त्वं नैव स्पृशति। ईश्वरप्रतिपादनस्य शास्त्रतात्पर्यविषयभूतप्रकृतिपुरुषख्यातिविवेचनं प्रति प्रतिबन्धकत्वात्। अतो यथा कापिलं शास्त्रं प्रकृतिपुरुषविवेचन एव विश्राम्यति, ईश्वरविषय औदासीन्यमेव भजते, तथैव कर्ममीमांसादर्शनमपि धर्माऽधर्मप्रतिपादनेनोपक्षीणम्, ईश्वरविषये तूष्णींभावमवलम्बत इत्येव युक्तम्। वार्तिककारोऽपि-आत्मवादान्ते वेदान्तनिषेवणम्, व्याकरणाधिकरणे, ग्रहैकत्वाधिकरणे चाऽन्यत्रेश्वरतत्त्वं विवेचितमिति वदन्, पूर्वोक्तमेवाऽर्थमुपष्टम्भयति।

अत एव हर्षमिश्रो भीमसुतायास्स्वयंवरमण्डपे समवेतानां राजन्यानां परिचयप्रदानप्रसङ्गे काञ्चीनरेशस्य संस्तवे सरस्वत्या दत्ते, तस्य राज्ञो गुणवर्णनं श्रुत्वा, तद्विषये किमप्यनुक्त्वा स्वयमेवाऽग्रे प्रससर्प दमयन्ती, यथा मीमांसशास्त्रमीश्वरविषये मौनमुद्रामदीधरत्, इति दृष्टान्तविधया मीमांसाशास्त्रसिद्धान्तमचीकवत्। यथा—

"वेदैर्वचोभिरखिलैः कृतकीर्तिरत्ने
हेतुं विनैव धृतनित्यपरार्थयत्ने।
मीमांसयेव भगवत्यमृतांशुमौलौ
तस्मिन् महीभुजि तयाऽनुमतिर्न भेजे॥"

[ नै. च. स. ११ श्लो ६४ ] इति॥

वार्तिककारादिभिस्स्वीकृत ईश्वरो वेदप्रतिपाद्यः, वार्तिकादिषु परमेश्वरनिराकरणञ्च-तार्किकपरिकल्पितानुमानिकेश्वरनिराकरणपरम्। अतः कौमारिलाः प्राभाकराश्च मीमांसका वेदान्तिनां सन्निहिता इति वचनं विदुषां मनोरञ्जनमात्रम्।

एतेन पशुपतिनाथशास्त्रिभिः पूर्वमीमांसोपोद्घातनामके प्रबन्धे, प्रभाकरविजयसंपादकैश्च तद्भूमिकायां [ प्र. वि. भू. पृ. २. ७ ] स्वर्गीय म. म. कुप्पुस्वामिशास्त्रिचरणानां मतखण्डनाय बहुधा प्रयतितम्, तत्सर्वमभित्तिचित्रायते। अवशिष्टं भूमिकायां वक्ष्यामः। तथा च धर्मतत्त्वप्रतिपादनाय प्रवृत्तमध्वरमीमांसादर्शनं ईश्वरोऽस्तीत्यपि न ब्रूते, न वा नास्तीति ब्रवीति। अपित्वीश्वरविषये तूष्णींभावमेव भजते, इदमेव युक्तमिति।

अपि च तैर्थिका भारतीयाः-महासृष्टिः-खण्डसृष्टिश्चेति सृष्टिद्वयम्, महालयः, खण्डप्रलयश्चेति प्रलयद्वयञ्चाऽभ्युपगच्छन्ति मन्त्रार्थवादेतिहासपुराणादिकं प्रमाणयन्तः। अध्वरमीमांसकाः परं मन्त्रार्थवादयोरनुष्ठेयस्मृति-स्तुतिनिन्दाप्रतिपादकत्वेनाऽर्थवादाधिकरण-मन्त्राधिकरणयोर्व्यवस्थानात्, अन्यत्र तयोस्तात्पर्यायोगात्, "अनन्यलभ्यश्शब्दार्थ" इति न्यायात्। इतिहासपुराणयोश्च विधिनिषेधैकवाक्यतया व्याख्यानस्य "विधिनात्वेकवाक्यत्वादि"ति न्यायसिद्ध-

त्वान्महासृष्टौ महाप्रलये च न किञ्चिन प्रमाणं प्रक्रमते। अतो महासृष्टि—महाप्रलयावध्वरमीमांसकैर्नाङ्गीक्रियेते, न "कदाचिदनीदृशञ्जगदि"ति न्यायात्।

तथा च भट्टपादवचनम्—

"तस्मादद्यवदेवाऽत्र सर्गप्रलयकल्पना।

समस्तक्षयजन्मभ्यां न सिद्ध्यत्यप्रमाणिका॥" [श्लो. वा. सं.आ. परि. श्लो. ११३] इति।

खण्डसृष्टि–खण्डप्रलययोरुपलम्भात्तौ स्वीक्रियेते मीमांसकैः। अतो महासृष्टि–महाप्रलययोरनभ्युपगमेन तत्समर्थनायेश्वराभ्युपगम आवश्यक इत्याद्यो हेतुस्तार्किकानामभिमतो निरस्तः।

शब्दार्थसम्बन्धस्याऽपौरुषेयत्वापरपर्यायनित्यत्वप्रतिपादनेन संबन्धकर्तृत्वेन वेदप्रामाण्यसंस्थापनायेतीश्वरसाधको द्वितीयो हेतुरपि परास्तः।

शब्दार्थयोस्सम्बन्धस्य नित्यत्वप्रतिपादनस्याऽयमेव परमो लाभः कर्ममीमांसकानां यत्पुरुषसुलभभ्रम-प्रमाद-विप्रलिप्सादिदोषाणामनवकाशान्निरवद्यं वेदानां प्रामाण्यं सुरक्षितं भवेत्। तथा च पार्थसारथेर्वचनम्—"नित्यत्वे हि वेदानामवसिते तत्प्रामाण्यबलेनेश्वरस्याऽपरिच्छेद्यो महिमा, सृष्टिप्रलयावृतुलिङ्गन्यायमाश्रित्य सिद्धयेयुर्मा वा" [ शा. दी त. पा. पृ. ११६. ११७. ] इति।

श्रीविश्वेश्वरसूरिर्गागाभट्टापरनामा तार्किकसम्मतसृष्टिप्रक्रियातो किञ्चिद्वैलक्षण्येन सृष्टिप्रक्रियामुपवर्णयन्नमुमेवाऽर्थं समाश्रयते। अर्वाचीनैर्मीमांसकैर्वेदान्तवासनावासितान्तःकरणैरनीश्वरवादित्वपरीवादभीत्या चेश्वरोऽभ्युपगतः। अत एवोहलक्षणप्रथमचतुर्थाधिकरणे मीमांसककुलमण्डनः खण्डदेवाचार्यो देवताविग्रहादिकं निराकुर्वन् तद्दोषपरिजिहीर्षया ब्रवीति—"एवं वदतो मे वाणी दुष्यतीति हरिस्मरणमेव शरण"मिति। अत एवाऽभिनवगौतमावतारैः म. म. विरूपाक्षशास्त्रिचरणैश्शाबरभाष्यस्याऽऽनन्दाश्रमतो प्रकाशितस्योपोद्घाते ममेत्यस्य—वेदान्तमते स्थितस्येत्यर्थविवक्षया योजनीयमिति। विवृतम्, [शा. भा. भू. पृ. १३] एतेनाऽऽपदेवस्य "ईश्वरस्य सर्वज्ञत्वादगतकल्पीयं वेदं स्मृत्वोपदिशती"ति वाक्यसन्दर्भो व्याख्यातः।

ईश्वरस्याऽनङ्गीकारे नास्तिकत्वमनाशङ्कनीयम्। वेदप्रामाण्यानभ्युपगन्तृत्वम्, वेदनिन्दकत्वं वा नास्तिकत्वप्रयोजकत्वं "नास्तिको वेदनिन्दक" इति कोशादित्यन्यत्र विस्तरः।

---

# तत्त्वालोको नामाऽष्टमं प्रकरणम् ।

प्रकरणार्थप्रतिज्ञा ।

[1]आत्मतत्त्वे [2]बहुविधा विवादास्सन्ति वादिनाम् ।
वयं प्राभाकरास्तत्त्वनिर्णयाय[3] यतामहे ॥ १ ॥ इति ।

[4]केचिद्बुद्धिमेवाऽऽत्मानमिच्छन्ति, [5]अन्ये तु [6]पुनरिन्द्रियाण्येव, [7]देहमेवापरे । [8]तथैके बुद्धीन्द्रियशरीरव्यतिरेकिणमनुमेयमाहुः, [9]केचित्तु मानसप्रत्यक्षगम्यम्, [10]स्वयम्प्रकाशश्च* केचित्, [11]सकलप्रतीतिसिद्धं त्वन्ये मन्यन्ते । [12]क्षणिकश्च केचिदाहुः,† ‡कूटस्थनित्यमित्यपरे ।

---

१ अस्मिन् प्रकरणे सकलशास्त्रारम्भोपजीव्यभूतं प्राभाकरसम्मतमात्मस्वरूपम्, तत्सम्बन्धिनोऽन्यांश्च कांश्चन विषयान् सञ्जिघृक्षुरत्राऽऽत्मस्वरूप-तत्प्रमाण-तत्परिमाणतद्गतैकत्वानेकत्वादिविषयान् दार्शनिकेषु दृश्यमानान् विवादान्निर्दिशति—"आत्मतत्त्वे" इति । श्लोकार्थस्त्वतिरोहितः ।

२ च बहुधेति. मु. पु. पा. । ३ तत्र निर्णयायेति. मु. पु. पा. ।

४ तत्राऽऽदौ द्रव्यभेदविवादानुपन्यस्यन् क्षणिकं विज्ञानमेवाऽऽत्मेति, योगाचारापरपर्यायाणां विज्ञानवादिनां मतमुपक्षिपति-केचिदिति । केचिद्वादिनः-योगाचारा बुद्धिमेवाऽऽत्मानमिच्छन्ति, अत्रत्येनैवकारेण बुध्यतिरिक्तत्वमात्मनः प्रतिषेधति ।

५ इन्द्रियाण्येवाऽऽत्मेति वदतां पौराणिकानां मतमाह—अन्य इति ।

६ बहिरिति. मु. पु. पा. ।

७ शरीरमेवाऽऽत्मेतिवदतां चार्वाकाणां मतमुपन्यस्यति—देहमेवेति । एवकारेण शरीरातिरेकमात्मनि निषिध्यते ।

८ द्रव्यभेदे मतभेदमुपर्वर्ण्य, आत्मसाधकप्रमाणेषु विवदमानानां वादिनां मतानि निर्दिशति । तत्राऽऽदौ स्वमतमाह—तथैक इति । ज्ञानेन्द्रियशरीरविलक्षण आत्माऽनुमेय इति प्राभाकरमतस्थितिः, इदञ्चोत्तरत्र स्फुटीभविष्यति ।

९ "स मानसीन आत्मा जनानामि [ तै. आ. प्र. ३. अ. ] ति" श्रुत्या आत्मा मानसाहंप्रत्ययगोचर इति भाट्टानां नैयायिकानाञ्च मतमाह—केचित्त्विति ।

१० तत्रैव सांख्यानां मतमाह—आत्मा स्वयंप्रकाश इति,

*स्वयम्प्रकाशमित्येव. मु. पु. पा. ।

११ केवलज्ञानसिद्ध आत्मेति वदतां दिगम्बराणां मतं सङ्गृह्णाति—सकलेति । प्रतिपत्तिमिति. मु. पु. पा. ।

१२ प्रमाणविवादमुपन्यस्य, नित्यानित्यत्वविषयविवादे, क्षणिकवादिनां बौद्धानां मतमाह—क्षणिकञ्चेति । † केचिदाचक्षत इति. मु. पु. पा. ।

[१]अणुपरिमाणः, [२]शरीरपरिमाणः, [३]सर्वगत इत्यादिवादिनो विवदन्ते। तथा [४]सर्वक्षेत्रेष्वेकमेके[५], [६]प्रतिक्षेत्रञ्च नानाभूतमित्यपरे। तत्र तत्त्वनिर्णयार्थमिदमारभ्यते।

सिद्धान्तः।

[७]बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः।
नानाभूतः प्रतिक्षेत्रमर्थवित्तिषु भासते॥ २॥ इति।

---

‡ आत्मनित्यत्ववादिनामपि मध्ये प्रकृतिः परिणामिनित्या, पुरुषस्तु कूटस्थनित्य इति वादिनां निरीश्वराणाम्, सेश्वराणां साङ्ख्यानाञ्च मतमाह—कूटस्थेति। अनेनाऽऽत्मनित्यत्ववादिनां सर्वेषामपि पक्ष उपक्षिप्तो बोद्धव्यः।

१ आत्मपरिमाणविषये वादिषु विद्यमानान् विवादान् प्रदिदर्शयिषुरादौ—अणुत्ववादिनां मतमुपादत्ते-अणुपरिमाण इति। परमाणुपरिमाण. इति. मु. पु. पा.।

२ आत्मा सावयवस्संकोचविकासशाली, अत एव शरीरपरिणाम इति वदतां दिगम्बराणां मतमाह—शरीरपरिमाण इति।

३ आत्मा सर्वगत इति वैशेषिक—नैयायिक—भाट्टमीमांसकादयो मन्वते। तन्मतेनाऽऽह—सर्वगत इति।

४ एवमात्मैक एव सर्वेषु शरीरेष्वित्यद्वैतवेदान्तिनो मन्वते, तन्मतमुपादत्ते-सर्वक्षेत्रेष्विति। ५ क्षेत्रेष्वभिन्न इत्येक इति. मु. पु. पा.।

६ अन्ये च सर्वे दार्शनिका आत्मनो नानात्वमभ्युपगच्छन्ति, प्रतिशरीरं भेदञ्च वदन्ति। तदेव निर्दिशति-प्रतिक्षेत्रञ्चेति। तथा च—आत्मविषये द्रव्य-तत्प्रमाण-तद्गत परिमाण-तद्गतैकत्वा-नेकत्वविवादान्निराकृत्य, प्राभाकरसम्मतात्मस्वरूप-तत्प्रमाणतत्परिमाण-तद्गततदेकानेकत्वानां निर्धारणार्थं परमतनिराकरणपूर्वकं तत्त्वालोकनामकमष्टमं प्रकरणमारभ्यत इत्यर्थः।

७ अनन्तरोक्तस्याऽर्थजातस्य सङ्ग्राहकं श्लोकं पठति—बुद्धीति। अस्याऽयमर्थः—शरीरेन्द्रियबुद्धिभ्य आत्मा भिद्यते। शरीरमात्मा न। न इन्द्रियम्, न वा बुद्धिः। अयञ्चाऽऽत्मा इह लोक-परलोकगमनाय विभुः। कर्तृत्व-भोक्तृत्वसिध्यर्थं तस्य नित्यत्वम्, चेतनत्वञ्चैषितव्यम्। सुखदुःखादिव्यवस्थासिद्धये, बद्धमुक्तादिव्यवस्थासिद्धये च स प्रतिशरीरं भिद्यते, तस्मात्तस्य नानात्वं स्वीकार्यम्।

स चाऽयमात्मा यावन्ति-अनुभवरूपाणि स्मृतिरूपाणि वा ज्ञानानि सन्ति, तेषु सर्वेष्वप्याश्रयत्वेन (कर्तृत्वेन) भासते, न तु कर्मतया। अत आत्मा न ज्ञानरूपः, न वा विषयरूपः किन्तूभयविलक्षणो भासते। स एव प्रमाता-आश्रयः—कर्ता-क्षेत्रज्ञः-जीवात्मेत्यादिशब्दैरस्मिन् शास्त्रे व्यवह्रियत इत्यर्थः। अयमर्थः प्रत्यक्षपरिच्छेदस्य [१६६-१६९ पृष्ठेषु] विशेषतो द्रष्टव्यः। २॥

विज्ञानवादिमतेन शङ्का ।

[1]ननु न बुद्धेर्बोध्दुश्च भेदमुपलभामहे । कथम् । यतो "घटमहं बुध्ये" इति बुद्धेर्बोद्धारो[2] भिन्नमात्मानं प्रतिपद्यन्ते । सत्यम्, [3]द्विचन्द्रादिबोधवत्, बिम्बप्रतिबिम्बज्ञानवच्चाऽयं भ्रम इति प्रामाणिकाः । सहोपलम्भनियमेन च बुद्धेर्बोध्दुश्च भेदो निराक्रियते, भेदस्याऽनियमव्याप्तत्वात् । [4]व्यापकविरुद्धोपलम्भेन बाध्यमानत्वात् । तदाहुः—

"*अविभागो हि बुद्ध्यात्मविपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ [प्र. वा. परि. २. श्लो. ३५४] इति ।

[5]तथा येऽपि बुद्धेरन्यं बोद्धारमिच्छन्ति, तेऽपि सत्यामेव बुद्धौ तस्य [6]विषये बोद्धृतामाहुः । एवञ्च सैव परं बोद्ध्री भवतु, कृतमन्येन बोद्ध्रा । बोद्धा चाऽऽत्मा भवतीति, बुद्धिरेवाऽऽत्मा । सा च स्वयम्प्रकाशा कार्यकारणभावेनाऽनादिसन्तानवाहिनी स्वाप-मद-मूर्च्छादिष्वभिभूततया पुनः पुनरनुसन्धानपथं [7]नाऽऽयाति । वहति त्वसौ तास्वपि दशासु, अन्यथा जाग्रदिदादिषु बुद्ध्युदयासम्भवापत्तेः । स चाऽयमनादिबुद्धिसन्तानोऽनादिवासना-

---

[1] तत्र ज्ञानमेवाऽऽत्मेतिवादिनां मतं निराचिकीर्षुरादौ तन्मतमुपन्यस्यति—नन्वित्यादिनाऽनन्त इत्यन्तेन ।

[2] बोद्धारमभिन्नमिति. मु. पु. पा. ।

[3] द्विचन्द्रादिवदिति. मु. पु. पा. ।

[4] व्यापकविरुद्धनियमोपलम्भेनेति. मु. पु. पा. ।

[5] अयमंशो मुद्रितपुस्तके न दृश्यते ।

[6] विषयेष्विति ख पुस्तके पा. ।

[7] न यातीति. मु. पु. पा. ।

*ज्ञानात्मनोस्सहोपलम्भनियमेन ज्ञानरूपत्वमेवाऽऽत्मन इति तन्मतमनुवदन्, तस्मिन्नर्थे प्रमाणत्वेन पद्यमिदमवतारयामास शालिकाचार्यः—अविभागेति । अस्याऽयमर्थः—विज्ञानवादिनां मते विज्ञानातिरिक्तं बाह्यं वस्तु परमार्थतो नास्ति, अतो ज्ञानं स्वाभाविकभेदरहितमपि, बुद्ध्यात्मद्वयवासनया विपर्यासितं—विभागेनोपदर्शितं दर्शनं येषां तैस्तत्त्वदर्शिभिः पुरुषैर्ग्राह्यग्राहकसंवित्तीनां परस्परं भेदस्तद्वानिव लक्ष्यत इति । अत्रेदमवधेयम्—बौद्धाचार्यो धर्मकीर्तिरसति बाह्येऽर्थे ग्राह्यग्राहकफलभेदः कथं सङ्घटत इत्याशङ्कायामिदं पद्यमवतारयामास । पञ्चिकाकारस्तु—अभेदसाधकत्वेनोपन्यास्यत्—इदं पद्यमिति ।

[1]निबन्धनस्संस्कार्यदर्शनाध्यवसितभेदस्समुदयवशवर्ती संसरति। [2]मार्गरूप-† साक्षात्कारोन्मूलितसकलसत्त्वदृष्टिवासनानुबद्धस्तूच्छिन्नस्समुदयः प्रतिमुच्यते, तथा तायिनां [3]चाऽङ्गीकृतसन्तानोच्छेदः।

तदाहुः—

"प्रदीपस्येव निर्वाणं विमोक्षस्तस्य [4]तायिनः" ॥ इति।

देशिकानाञ्चाऽनेकजन्माभ्यासस्वात्मीभूतब्रह्मादिस्तम्बपर्यन्तजगद्व्यापि-महाकरुणानां [5]विशुद्धचित्तसन्तानोऽनन्त इति।

तन्निरासः।

*तदिदमसारम्। प्रतीतिसिद्धस्य बुद्धेर्बोद्धुश्च भेदस्य [6]निराकरणानर्हत्वात्। सहोपलम्भनियमस्तु यथा भेदेऽप्युपपद्यते, तथाऽत्रैव वक्ष्यामः। [7]निराकृतश्चाऽयं बाह्यार्थसिद्धावृजुविमलायाम्। बुद्धिरेव परमस्तु, अलं बोद्-

---

[1] सन्तानदर्शनाध्यासितभेद इति मु. पु. पा.।

[2] मार्ग इति विसर्गान्तः पा. मु. पु.। [3] सन्तानो भेद इति. मु. पु. पा.।

†. सौत्रान्तिकसिद्धान्तानुसारेणाऽऽर्यसत्याभिधानानि चत्वारि—दुःखं, समुदयः, निरोधः, मार्गश्चेति। दुःखं सिद्धम्, समुदयः—दुःखकारणम्, निरोधः—समुदयविनाशो विमलज्ञानोत्पत्तिपर्यन्तः, मार्गः—तत्त्वज्ञानम्, तदेवाऽत्र मार्गशब्देन विवक्षितम्।

[4] दुःखहेतुनिवर्तकत्वेन स्वयं दृष्टस्य मार्गस्योक्तेर्देशना ताय इत्युच्यते। यथोक्तं कीर्तिना—

"तायस्स्वदृष्टमार्गोक्तिवैफल्याद्वक्ति नाऽनृतम्" [प्र. वा. परि. १. श्लो. १४७] इति।

"परैरज्ञातस्य सत्यचतुष्टयस्य प्रकाशनं तायः" इति च। मुद्रितपुस्तके तस्य जायत इति पाठो दृश्यते। न्यायमकरन्दादौ "तस्य तायिनः" इति पाठदर्शनात्, स एव पाठ उपरि दर्शित इति ध्येयम्।

[5] करणानामिति. मु. पु. पा.। [6] असम्भवादिति. मु. पु. पा.।

*तन्मतं निरस्यति—तदिदमसारमिति। तस्याऽयमभिप्रायः। "अहं जानामीति" प्रतीत्या आत्माऽऽश्रयत्वेन भासते, ज्ञानञ्च तन्निष्ठत्वेन। असति बाधकेऽनुभवबलसिद्धस्य भेदस्य निरसितुमशक्यत्वात्। तस्माज्ज्ञानातिरिक्त आत्मेति। अभेदसाधकत्वेनोपन्यस्तं सहोपलम्भनियमं भेदेऽप्युपपादयति—सहोपलम्भेति। "विषयप्रतीतिगोचरत्वा दात्मनस्सहोपलम्भनियमोपपत्तिस्सहोपलम्भश्चैवं सत्युपपन्न" इत्यत्रेति शेषः।

[7] ग्रन्थान्तरे निरूपितेनाऽर्थेन प्राकरणिकमर्थमुपोद्बलयति—निराकृतश्चेति। ऋजुविमलापञ्चिकायां सहोपलम्भनियमस्य नाऽभेदसाधकत्वम्, किन्तु भेदसाधकत्वमिति ग्रन्थकारः

ध्रेति यदुक्तम्। तदपि काल्पनिके बोद्धरि युक्तं वक्तुम्। साक्षात्प्रतीतिसिद्धे तु नाऽवकाशोऽस्याऽसत्प्रलापस्य। स्वापादिष्वपि बुद्धिरनुवर्तत इति यदुक्तम्, तदपि प्रमाणाभावादसारम्। जागरादिषु बुद्धेरत्रैव कारणं वक्ष्यामः।

इन्द्रियात्मवादोपन्यास-तन्निरासौ।

एवं तर्हि भवन्त्विन्द्रियाण्येव[1] चेतनानि, एवं बुद्धेर्बोद्धुश्च भेदावभासो घटिष्यते। भवेदेतदेवं यदि दर्शनस्पर्शनाभ्यामेकार्थप्रतिसन्धानं[2] न स्यात्। "यदहमद्राक्षं तदहं स्पृशामी"त्यत्र प्रतिसन्धातैकः प्रतीयते। स्मरणञ्चेन्द्रियार्थानां तत्तदिन्द्रियापायेऽपि यदुपलभ्यते, तदिन्द्रियचैतन्ये [3]नोपपद्यते।

प्रतिपादयामास। अयं हि तत्रत्यो ग्रन्थः—"सहोपलम्भनियमोऽपि विचारणीय एव। किं संवित्, संवेद्यञ्च सहैवोपलभ्यते यतः, तस्मादभेद इति। तदिदमसिद्धम्। न हि संविदोऽपि नाऽपर उपलम्भोऽस्ति। स्वयमुपलम्भरूपत्वात्। अतोऽर्थस्य संविदश्च सत्तैवोपलम्भो भेदेऽनुपपद्यमानोऽभेदं साधयतीति। तदपि नोपपद्यते। भेदेऽप्युपपत्तेः। भिन्नस्याऽपि हि नीलादेस्संबन्धिनी संवित् स्वयंप्रकाशरूपत्वान्न प्रकाशान्तरमपेक्षत इति, न काऽप्यनुपपत्तिः। उपायोपेयभावेन विषयप्रतीतिगोचरत्वेन सहोपलम्भो भेदेऽप्युपपद्यत इति भावः" [ ऋ. वि. पं. पृ. ७० ] इति।

[1] इन्द्रियाणि सचेतनानीति. मु. पु. पा.। [2] एकार्थानुसन्धानमिति. मु. पु. पा.।

[3] अत्रेदं बोध्यम्—एवं विज्ञानवादिमतं निराकृत्य, इन्द्रियाण्येवाऽऽत्मेति वदतां मतमनुवदति-एवमिति। अत एव भगवतस्सत्यतपसो वचनम्—"द्रष्टुश्चक्षुषो नास्ति जिह्वा" [ दे. भा. पु. ] इति।

तत्राऽनुपपत्तिं प्रदर्शयति—भवेदेतदेवमिति। अयं भावः। "योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामी"ति दर्शनस्पर्शनयोरेकोऽनुसन्धाता प्रतीयते। केनाऽपि कारणेन चक्षुरादेर्विनाशेऽनुसन्धानं न स्यात्। अतस्तदनुपपत्त्येन्द्रियात्मवादो न घटते।

अत एवाऽभियुक्ता आहुः—

"तथात्वञ्चेदिन्द्रियाणामुपघाते कथं स्मृतिः" [मु. प्र. ख.] इति।

यत्तु सत्यतपसो वचनमिन्द्रियात्मवादस्योपोद्बलकतयोपन्यस्तम्। तत् शरणागतपरित्राणस्याऽवश्यकर्तव्यताम्, अन्यथा व्याधस्य प्राणयात्रानुपपत्तिञ्चाऽऽलोच्योक्तमिति नेदमिन्द्रियाणामात्मत्वे प्रमाणम्।

अत्रेदमपि दूषणमनुसन्धेयम्। इन्द्रियविषये मतद्वयमस्ति—गोलकान्योवेन्द्रियाणीत्याद्यः, शक्तिरिन्द्रियाणीत्यपरः। तत्राऽऽद्यपक्षे शरीरस्येवेन्द्रियाणामपि दाहेन भस्मीभावेन परलोकगमनागमनादिकं न संगच्छते। कृतहान्यकृताभ्यागमप्रसंगौ स्याताम्। द्वितीयपक्षे शक्तेर्धर्मभूताया निराश्रयत्वेन लोकान्तरगमनानुपपत्तेः। अतः कर्मानुष्ठानविरोध्ययं वाद इति।

देहात्मवादशङ्का-निराकरणे ।

[1]अस्तु तर्हि देह एवाऽऽत्मा, न तत्रेमौ दोषौ प्रसज्येते । मैवम् । ज्ञाता ह्यात्मा, न च देहस्य ज्ञातृता सम्भवति । [2]तथाहि—देहो नाम पार्थिवो द्रव्यविशेषः । ननु पार्थिवत्वे तस्य भूतान्तरगुणानुपलम्भ[3] आपद्येत । नेति ब्रूमः । भूतान्तरसहितस्य भूतान्तरस्य न [4]कार्यान्तराम्भकतेति वदामः, न पुनर्मिथोऽपि भूतानि न संयुज्यन्त इत्याचक्ष्महे । [5]अतस्संयुक्त-भूतान्तरगुणोपलम्भो नाऽनुपपन्नः ।

कथं पुनरारम्भकत्वासम्भवः । उच्यते—न तावत्पञ्चानाम्, चतुर्णां वा सम्भूयाऽऽरम्भकत्वं सम्भवति । चाक्षुषाचाक्षुषद्रव्यारब्धस्य तत्समवायिनोऽचाक्षुषत्वापत्तेः । यत् खलु चाक्षुषाचाक्षुषद्रव्यारब्धं यत्समवेतम्, तन्न चाक्षुषम्, वायुवनस्पतिसंयोगवत् । चाक्षुषश्च देहः । अतो न [6]पञ्चभिः, चतुर्भिर्वा समारब्धः, आकाशानिलयोरचाक्षुषत्वात् ।

आकाशस्याऽचाक्षुषत्वनिरूपणम् ।

कथं पुनरचाक्षुषं नभः ? अचाक्षुषस्य सत्तापि किं प्रामाणिकमित्येतदपि

---

[1] इन्द्रियात्मवादं निरस्य, देहात्मवाद स्वहस्तयति—अस्त्विति । यथेन्द्रियात्मवादेऽनुभवस्मरणयोरनुपपत्तिः, तथा न देहात्मवादे दोष प्रसज्यते । तस्माद्देहात्मवादस्स्वीकर्तुमुचित इति । अह जानामीत्यत्र ज्ञानाश्रयत्व प्रतीयते । तच्च जडस्य शरीरस्य न घटत इत्याशय हृदि निधाय, देहात्मवाद निषेधति—मैवमिति ।

[2] "तथा हीत्यादिरापद्येत" इत्यन्त पाठो मुद्रितपुस्तके नोपलभ्यते । खपुस्तकानुसारेणाऽय पाठो निवेशित. ।

[3] भूताना गुणान्तरोपलम्भ इति मु.पु पा । [4] कार्यारम्भकतेति मु. पु पा. ।

[5] जडस्याऽपि देहस्य ज्ञातृत्वमुपपद्यते । यथा-क्रमुक-नागवल्लीदल-सुधाना प्रत्येक रागजनकत्वाभावेऽपीतरेतरससृष्टाना तज्जनकता, यथा वा किण्वादीना मदशक्तिजनकता । तथा चेमानि बार्हस्पत्यानि सूत्राणि "अथ लोकायतम् । पृथिव्यप्तेजोवायुरिति तत्त्वानि । तत्समुदाये शरीरेन्द्रियविषयसज्ञा । तेभ्यश्चैतन्य किण्वादिभ्यो मदशक्तिवत् विज्ञानमिति । तथा भूतान्तरसहितस्य ज्ञातृत्वमिति मन्वानश्शङ्कते-नेति ब्रूम इति । उक्तमर्थमुपसहरति—अत इति ।

निराकरोति-कथमिति । तत्र विकल्पमाह—न तावदिति । भूताना पञ्चाना मिलितानाम्, चतुर्णां वेति । तत्राऽनुपपत्तिमाह—चाक्षुषेति । तत्राऽनुरूप दृष्टान्तमाह—वायुवनस्पतिसंयोगेति । न शरीरं पञ्चभिर्भूतैरारब्धम्, न वा चतुर्भि. ।

[6] चतुर्भिस्समारब्ध इति. मु.पु पा. ।

चिन्त्यम् । उच्यते—अचाक्षुषं व्योम द्रव्यत्वे सत्यरूपित्वात्, आत्मवत् । ननु नाऽरूपं गगनम्[१] । तद्धि धवलम्, उत्पलपलाशश्यामलं [२]वोपलभ्यते । [३]उच्यते—धवलिमा हि प्रायेण तैजस एव नीहारे, तौहिनो वा,[$] तदपगमे तदनुपलम्भात् ।

यदयं पुनर्निशि नीलिमेवाऽवलोक्यते, नाऽसौ नभसः । कस्य तर्हि ? न कस्यचित् । कथं पुनर्गुणः, न कस्यचित् ? सत्यम् । [*]गुण एवाऽयमसिद्धः । ननु प्रतीतिबलेन सिद्ध एव । [†]सत्यम्, सिध्येद्यदि [‡]प्रतीतिरेव सिध्येत्, सा तु कारणाभावान्न सिद्धा । ननु चक्षुरेव कारणम् । न । आलोकोपकारानपेक्षस्य चक्षुषोऽप्रकाशकत्वात् । [*]तेनाऽप्रतीतावेवाऽयं प्रतीतिभ्रमो मन्दानाम् । [४]अतो दिवा तदनुपलम्भः । अन्यथा सौरीभिर्भा-

---

*वाय्वाकाशयोरचाक्षुषत्वमसहमानश्शङ्कते—कथमिति । तत्रोपपत्तिमाह—अचाक्षुषेति । आकाशमचाक्षुषं द्रव्यत्वे सत्यरूपवत्वादित्यनुमानं प्रमाणमुच्यत इति । तत्र हेत्वसिद्धिमाशङ्कते—नन्विति । तत्र रूपवत्वहेतुसत्वे प्रत्यक्षं प्रमाणमुपन्यस्यति—तदिति । धावल्यस्याऽन्यधर्मत्वेन गमनवृत्तित्वे मानाभावात् ।

[१] भाट्टमीमांसकाः—आकाशकालदिशां साक्षात्प्रत्यक्षविषयत्वासम्भवेऽपि पदार्थविशेषणतया प्रत्यक्षविषयत्वं वर्णयन्ति । अत एव "इहाऽऽकाशे बलाका" इत्यनुभव उपपद्यते । प्राभाकरमीमांसकास्तु तार्किकमतमनुरुन्धाना आकाशस्याऽप्रत्यक्षत्वं स्वीकुर्वन्ति । अत एव नारायणभट्ट आह—

"कालखात्मदिशामादौ प्रत्यक्षत्वं प्रसाध्यते ॥
अनिष्टं भट्टपादोक्तिमाधुर्यानभिलाषिणाम् ॥" [मान. मे. उ. प्रमेय. परि] इति ।

[२] श्यामलञ्चोपलभ्यत इति. मु. पु. पा. ।

[३] पूर्वोक्तमाक्षेपं परिहरति—उच्यत इति ।

* गुणवत्वमेवाऽसिद्धमिति. ख. पु. पा. ।

† सत्यमिति मु. पु. नास्ति ।

‡ प्रसिद्धिरेवेति. मु. पा. ।

[४] तत्त्वानुपलम्भ. इति. ख. पु. पा. ।

स्वतो दिवाऽनुलम्भ इत्येव पाठो मु. पु. । नयविवेके "दिवाग्रहणं सतेजोदेशपरं प्रकरणे" [ न. वि. पृ. २०३ ] इत्युक्तम् । अयमर्थः—दिवा—सतेजोदेश इत्यर्थो बोध्यः ।

$प्रदर्शितं प्रमाणं विघटयति—धवलिमेति । नीलप्रतीतिरप्याकाशं नाऽवगाहत इत्याह—यदयं पुनरिहेति । नीलस्य स्वरूपमेवाऽपलपति—न कस्यचिदिति । प्रतीतिबलेन नीलगुणस्सिद्ध्यतीति पुनः प्रत्यवतिष्ठते—नन्विति । प्रसिद्धिमेव निराकरोति-सात्विति । इदं नीलमिति

मिरनुगृहीतं चक्षुस्स्फुटतरं व्योम्नि नीलिमानं प्रकाशयेत् । रूपञ्च स्पर्शसहचरितमिति, स्पर्शवत्त्वं नभसस्स्यात् । ततश्च सर्वमूर्तद्रव्यप्रतिघातप्रसङ्गः ।

केचित्तु तमसो नीलिमा गगनस्येवोपलभ्यत इत्याहुः । तदसदित्येके । तमसो निष्पत्त्यनवक्लृप्तेः । रूपवत्त्वेन हि तमो द्रव्यं स्यात्, तच्चाऽनेकद्रव्यारब्धं सच्चाक्षुषं भवेत्, न च तानि द्रव्याणि सन्ति । सन्ति चेत्, दिवऽप्यराभेरन् । अतोऽन्धानामिवाऽसौ नीलिमाभिमानो नभस एवेति युक्तम् ।

तमसो निराकरणम् ।

*यच्चेदमुच्यते—छायैव तमः, सा च [४]चलत्वा-चलत्व-महत्त्वा-महत्त्व-दूरत्वा-सन्नत्वादिगुणयोगिनी वस्तुभूतेति ।

[१]तदप्यसारम् । [२]निष्पत्त्यनवक्लृप्तेरेव ।

यच्च चलत्वा—चलत्वादिकमुपन्यस्तम् । तदपि स्थूलदर्शितया । तथाहि—आलोकेऽपवारिते छायेष्यते,[३] ततोऽपवारितालोकभूभागादिभावव्यतिरेकिणी न रूपान्तरवच्छाया दृश्यते । तेन मन्यामहे—अपवारितालोकभूभागादिकमेव छायेति ।

एतेन चलत्वा-[४]चलत्व-महत्त्वा-महत्त्व-दूरत्वा-सन्नत्वादीनि समर्थितानि ।

---

प्रतीतेः चक्षुः कारणं कुतो न भवतीत्याशङ्कते—नन्विति । निराकरोति—नेति । इदं नीलमिति प्रतीतेस्स्वमतेनोपपत्तिमाह—तेनेति । तत्र हेतुमाह—अत इति । विपक्षे बाधकमाह—अन्यथेति । आकाशे नीलगुणस्वीकारे स्पर्शवत्वं स्वीकार्यमिति दोषान्तरं दर्शयति-रूपञ्चेति । तत्राऽनिष्टमासञ्जयति—ततश्चेति ।

मतान्तरमुपन्यस्यति-केचिदिति । केचिद्वादिनः-भाट्टा वेदान्तिनश्च नीलगुणस्तमस एव भवति । स च यथा जपाकुसुमगतं लौहित्यं स्फटिकस्येवाऽऽकाशस्य प्रतीयत इति वदन्तीत्यर्थः । अन्येषां मतेन पूर्वोक्तं मतमपाकरोति—तदसदिति ।

*अयमंशश्चित्सुखमुनिना तमसो भावत्वव्यवस्थापनावसरेऽनूद्य निराकृतः[चि.पृ. २९] ।

* "बृहदारण्यकभाष्यवार्तिके [पृ. २०२९] सुरेश्वराचार्योक्तमर्थमुल्लिखति—यच्चेति । तथा तमोदर्शनं—भूच्छायादर्शनमि"ति विधिविवेकवाक्यम् । तत्र मण्डनाचार्योक्तं भूच्छायैव तम इत्यर्थं शालिकाचार्योऽत्र यच्चेत्यादिनाऽनूद्य निराकरोति । शालिकोक्तमर्थं वाचस्पतिर्न्यायकणिकायामनूद्य निरस्यति, विस्तरोऽस्य तत्रैव [ न्या. क. पृ. ७५-७६ ] द्रष्टव्यः ।

[१] तदिदमप्यसारमिति. मु. पु. पा. । [२] अनवक्लृप्तेरेव इति. मु. पु. पा. ।
[३] छायाप्यपेयत इति मु. पु. पा. । [४] चलत्वाचलत्वेति. मु. पु. पा. नास्ति ।

यत्तु तेजसः प्रतिरोधि द्रव्यम्, तत् यथा यथा सञ्चरति, तथा तथा आलोकः प्रतिमुच्यते, प्रतिरुध्यते चेति, चलतीव छाया प्रतिभाति। अन्यथा शरीरे चलति, किमिति छायाऽपि चलेत्। [१]चलनहेत्वभावात्। एतेनाऽचलति शरीरेऽचलत्वं व्याख्यातम्। संख्यापरिमाणयोगि[२] महत्त्वम्, तदभावे कथमिव [३]छायेयमुत्पत्स्यत इत्यलमनया स्थूलदर्शिनः कथयाऽननुबद्धया। ननु भूभागादेरेव छायात्वे कथं द्रव्यान्तरेण [४]व्यपदेशः "अस्य छायेयमि"ति। उच्यते—अपवारितालोकभूभागादिरेव छायेत्युक्तम्। तत्र येनाऽपवारणम्, [५]तदपेक्षया युज्यते तद्व्यपदेशः। एवञ्च स्मृतिकाराणामपि—"[६]नाऽऽक्रामेत्कामतश्छायाम्" इत्येवमादिको व्यवहार उपपन्नः। *योऽपि च शास्त्रकाराणां व्यवहारः [७]"छत्रगृहादीनां तुल्यं च्छायालक्षणं कार्यमि"ति, स आलोकापवारणाभिप्रायेण वर्णनीयः। [८]ननु चाऽऽलोकापवारणे [९]भूभागादेरदर्शनप्रसङ्गः। मैवम्। प्रचुरतरालोकावयवसंयोगस्तत्र वार्यते, [१०]अल्पास्तु तेजोवयवास्समन्ततस्सञ्चरन्तस्संयुज्यन्त एव। यत्र तु सर्वथा तेषामसंयोगः, स महानन्धकार इति निरवद्यम्।

यच्च विस्फारिताक्षः कूपादिषु जलमध्यस्थं सुषिरमध्यक्षमीक्षत इत्युच्यते, तत्राऽपि तेजोवयवाः कूपनेमिलब्धावच्छेदास्तथा प्रतीयन्त [११]इत्युत्तरम्।

---

१ हेत्वभावादित्येव मु. पु. पा.।

२ योनिरिति. मु. पु. पा.।

३ उपपत्स्यत इति. मु. पु. पा.।

४ अपदेश इति. मु. पु. पा.।

५ तदपेक्षत्वादिति. मु. पु. पा.।

६ "देवतानां गुरोराज्ञस्स्नातकाचार्ययोस्तथा ॥
नाऽऽक्रामेत्कामतश्छायां बभ्रुणो दीक्षितस्य च" ॥ [ मनु. स्मृ. अ. ४. श्लो १३० ]
इति समग्रश्लोको बोध्यः।

७ चित्रेति मु. पु. पा.।

८ नत्विति मु. पु. पा.।

९ भूभागादेरेव दर्शनप्रसङ्गादिति मु. पु. पा.।

१० अल्पश इति मु. पु. पा.।

* वास्तुविद्यायां छत्रगृहादीनां छायालक्षणकर्तव्यताविधानमालोकापवारणाभिप्रायेण वर्णनीय इत्याशयेन तदुपपत्तिं दर्शयति—योऽपीति।

११ छायेयमित्युक्तमिति. मु. पु. पा.।

आकाशस्याऽसिद्धिशङ्का ।

न चैवं सत्याकाशस्याऽसिद्धिरेव । शब्दलक्षणगुणानुमानसिद्धत्वात् । ननु गुणतैव शब्दस्याऽसिद्धा, द्रव्यत्वेन वादिभिरभ्युपेतत्वात् ।

यदाहुः—

"वर्णात्मकाश्च ये शब्दा नित्यास्सर्वगतास्तथा ।
पृथग्द्रव्यतया ते तु न गुणाः कस्यचिन्मताः ॥"

[स. द. कौ. ६२ पृ.] इति ।

तन्निरासः ।

[2]तदिदसमारम् । एकेन्द्रियप्रत्यक्षतया [3]रूपादिवद्गुणत्वसिद्धेः । न च वायुनाऽनैकान्तिकत्वम् । तस्य वायोरतीन्द्रियतयाऽभ्युपेतत्वात् । येऽपि चैन्द्रियकं वायुमिच्छन्ति, तेषामपि "स्पर्शविरहे सती"तिविशेषणोपादानाददोषः । एवं सिद्धगुणभावश्शब्दो [3]गुणिनमनुमास्यति[4] । तस्य भूजलादिभावावगमे कारणाभावाद् [5]द्रव्यान्तरमेव तदवतिष्ठते । अप्रतीतसामानाधिकरण्यगुणभेदेन भेदावगमात् । ननु मुखादिगतश्शब्द उपलभ्यते । नेत्युच्यते ।

श्रोत्रम् प्राप्यकारि बहिरिन्द्रियत्वात् [6]त्वगिन्द्रियवत् । [7]तत्र न तावच्छ्रोत्रं मुखादिदेशं गच्छति, प्रत्यक्षा हि कर्णशष्कुली स्वदेशस्था दृश्यते ।

---

[1] शब्दविषये भाट्टमीमांसकानां प्राभाकरमीमांसकानाञ्च मतभेदो दृश्यते । तत्र प्राभाकरमीमांसकास्तार्किकवत् शब्दस्य गुणत्वमिच्छन्ति । कौमारिलमतानुसारिणस्तु— शब्दस्य साक्षादिन्द्रियग्राह्यत्वेन द्रव्यत्वमाचक्षते । आकाशस्य शब्दलक्षणगुणानुमेयत्वमसहमानश्शङ्कते—न चैवमित्यादिना ।

[2] एकेन्द्रियग्राह्यत्वेन रूपादिवद् गुणत्वमभ्युपेत्य, तन्मतं दूषयति—तदिदमसारमिति ।

[3] शब्दस्य गुणत्वेऽनुमानमिदं बोध्यम्—शब्दो गुणः स्पर्शान्यैकेन्द्रियग्राह्यत्वादिति । पृथिव्यप्तेजोवायुगुणानां गुणिना सह ग्रहणम्, शब्दस्य न तथेति न तद्गुणता । अणुमनोगुणत्वमशक्यशङ्कम् । दिक्कालात्मगुणानामबहिरिन्द्रियग्राह्यता, न शब्दस्तथेति, गुण्यन्तरं नभ इति बोध्यम् ।

[4] अनुमापयतीति मु. पु. पा. ।

[5] द्रव्यान्तरमेतदिति ख. पु. पा. ।

[6] कार्येन्द्रियवदिति मु. पु. पा. ।

[7] श्रोत्रचक्षुषोरप्राप्यकारित्वमिति सौगता मन्यन्ते । मीमांसकाः, तार्किकाश्च प्राप्य-

नाऽपि मुखं श्रोत्रदेशमुपसर्पति, तस्याऽपि स्वदेश एवोपलम्भात्। अतः श्रोत्रगत एव शब्दो गृह्यते। भ्रान्तिस्त्वेषा मुखे शब्द इति। न च गुणभूतस्य शब्दस्य संयोगलक्षणा प्राप्तिरुपपद्यत इति। समवायलक्षणैव तस्य प्राप्तिः। एवञ्च शब्दगुणत्वाच्छ्रोत्रस्य, यच्छब्दगुणकं द्रव्यमाकाशपदावेदनीयम्, तदेव श्रोत्रमिति सिद्धम्।

ननु पार्थिवी कर्णशष्कुली श्रोत्रमस्तु, संयुक्तसमवायेन चाऽऽकाशगतं शब्दमुपलभताम्। नैतदेवम्। न हि साक्षात् [1]प्राप्तिसम्भवे प्रणालीसमाश्रयणमुपपन्नम्।

नाऽपि [2]त्र्यात्मकं शरीरं [3]गुणान्तरप्रादुर्भावप्रसङ्गात्[4]। भू-जल-तेजांसि हि यथाक्रममनुष्णाशीत-शीतो-ष्णस्पर्शानि। तैरारब्धं द्रव्यं एतत्त्रयविलक्षणस्पर्शमापद्येत, चित्रपटवत्। यथा सितासितादितन्तुसमारब्धः पटस्तन्तुरूपविलक्षणरूपः, तथा शरीरमप्यारम्भकद्रव्यस्पर्शविलक्षणस्पर्शं भवेत्। अनुष्णाशीतस्पर्शश्चैतदुपलभ्यते। [5]एतेन द्व्यात्मकताऽपि निषिद्धा*।

---

कारित्वमुररीकुर्वन्ति। सांख्यैरप्राप्यकारित्वपक्षो निरस्तः, प्राप्यकारित्वपक्षस्समर्थितश्च। अत एवोक्तं भट्टवार्तिके—

"सांख्यादीन् वा विनिर्जित्य प्राप्तिपक्षोऽत्र दूष्यताम्"

[ श्लो. वा. प्र. सू. श्लो. ४३ ] इति।

अप्राप्तिपक्ष-प्राप्तिपक्षनिरास-समर्थने वार्तिकतोऽवगन्तव्ये। प्राप्यकारित्वेऽनुमानमेव प्रमाणम्। तत्तु मूल एव स्पष्टम्।

[1] प्रतीतीति. मु. पु. पा.। [2] द्रव्यात्मकमिति मु. पु. पा.।

[3] अत्र शालिकाचार्यः काणभुजं सूत्रमर्थतोऽनुवदति। तथा च सूत्रम्-"गुणान्तरप्रादुर्भावाच्च न त्र्यात्मकम्" [ वै. द. अ. ४ आ. २ सू. ३। ] इति।

[4] प्रादुर्भावापत्तेरिति. मु. पु. पा.।

[5] एतेनाऽऽध्यात्मिकतेति, मु. पु. पा.।

*अत्रेदं बोध्यम्—पदार्थविद्भिः वैशेषिकैश्शरीरमिदं पार्थिवमेव। अन्यान्याऽऽप्यानि, तैजसानि, वायवीयानि च द्रव्याणि परतन्त्राणि संयोगीनीत्युक्तम्। पञ्चभूतात्मकत्वम्, चातुर्भौतिकत्वम्, त्र्यात्मकत्वम्, द्व्यात्मकत्वञ्च तत्र प्रतिषिद्धम्। तत्रत्यमेव प्रमेयं शालिकनाथः "नेतिब्रूम इत्यादिना—अतः रूपरसस्पर्शगन्धयोगि शरीरं पार्थिवमेवेत्यन्तेन ग्रन्थेन प्रत्यपीपदत्। ऋजुविमलापञ्चिकायाम्—"शरीरन्नाम किमभिप्रेतमायुष्मता" इति बृहतीटीकाग्रन्थं व्याख्यातुं प्रवृत्तोऽमुमर्थं व्यशीशदत्। सन्दर्भपरिशुद्धये तत्रत्यानि पञ्चिकावाक्यान्यधस्तादुद्ध्रियन्ते अस्माभिः। 'एषा त्वत्र पदार्थविदां स्थितिः—चतुर्णां भूतानां समाहारमात्रं शरीरम्, न चतुर्भूतारब्धम्, किन्तु पार्थिवमेव शरीरम्, परतन्त्राण्याप्यानि, तैजसानि, वायवीयानि च द्रव्याणि

किञ्च गन्धस्य पार्थिवद्रव्यसमवेतस्यैकाकिनो गन्धान्तरारम्भकत्वानुपपत्तेरगन्धं शरीरं स्यात् । भू—तेजसोः, अप्तेजसोर्वाऽऽरम्भकत्वेऽगन्धत्वम्, अरसत्वमेवं वेदितव्यम् । अतो [1]रूप—रस—गन्ध—स्पर्शयोगि शरीरं पार्थिवमेव । ज्ञानञ्च विशेषगुणः । कार्यद्रव्ये च विशेषगुणः कारणगुणपूर्वक एव, रूपादिवत् । न च कारणभूतेषु पार्थिवपरमाणुषु[2] ज्ञानमस्ति । तदारब्धे द्रव्यान्तरे घटादावदर्शनात् ।

चार्वाकमतेन शङ्का-निरासौ ।

स्यादेतत्—मदशक्तिवच्चैतन्यमपीति । यथा—[3]मदशक्तिः पार्थिवेषु परमाणुष्वसत्यपि तदारब्धे कार्यद्रव्ये सुराख्ये निष्पद्यते, तथा चैतन्यमपि निष्पत्स्यत इति । तन्न । शक्तेरविशेषगुणत्वात् । शक्त्याख्यो हि गुणः सर्वद्रव्येषु तत्तत्कार्यविषयः कार्यसमधिगम्योऽभ्युपगम्यते । चैतन्यन्तु न[4] देहादन्यत्र विद्यत इति, विशेषगुणोऽसौ । अपि च द्रव्यान्तरसंयोगादकार्यभूतेषु पार्थिवपरमाणुष्वकारणगुणपूर्वकोऽपि मदशक्त्याख्यो गुणो नाऽनुपपन्नः । तदारब्धे कार्यद्रव्ये सुराख्ये कारणगुणपूर्वक एव । चैतन्यन्तु न

---

संयोगीनि । तदुक्त परै—"सयोगस्त्वविप्रतिषिद्धो मिथ पञ्चानाम्" इति । तथा हि—शरीरमिद न पञ्चभूतारब्ध, चतुर्भूतारब्ध वा, चाक्षुषाचाक्षुषद्रव्यारब्धस्याऽचाक्षुषत्वापत्ते, वायुवनस्पतिसयोगवत् । तदाहुर्योगा एव–"प्रत्यक्षाप्रत्यक्षाणामप्रत्यक्षत्वात् सयोगस्य पञ्चात्मकं न विद्यते" [ वै द अ ४ आ २ सू २ ] इति । (अत्र योगशब्देन वैशेषिका अभिप्रेता । महाभारतादिषु प्रयोगदर्शनात् ।) न च पृथिव्यप्तेजोभिरपि चाक्षुषैर्यथाक्रममनुष्णाशीतशीतोष्णस्पर्शभाग्भिरारभ्यते, एतत्त्रयस्पर्शविलक्षणस्पर्शापत्ते । यथा सितासिततन्त्वारब्ध पटो विलक्षणश्चित्ररूपो भवति, तथेदमपि शरीर विलक्षणस्पर्शं स्यात्, अनुष्णाशीतस्पर्शञ्चेदम् । अत· केवलपार्थिवावयवारब्धम् । तदुक्त तैरेव—"गुणान्तरप्रादुर्भावाच्च त्र्यात्मकमपि न" इति । एतेन हेतुना द्व्यात्मकमपि न भवति, एकपार्थिवाणुगतस्य चैकान्तिनो गन्धस्य गन्धान्तरारम्भकत्वानुपपत्तेरगन्ध शरीरमापद्येत्, गन्धवच्चेदमिति पार्थिवमेव शरीरम् । तत्सयोगिनः परतन्त्राः परे भूतान्तरारब्धा कार्यविशेषाश्चक्षुरादय तन्त्रान्तरादनुसरणीयम् इति ।"

[1] रसेति. मु. पु नास्ति ।

[2] परमाणुष्विति मु पु. नास्ति, खपुस्तके दर्शनान्मूले निवेशित. ।

[3] देहात्मवादनिरासप्रस्ताव एतदर्थंप्रतिपादनपराणि बार्हस्पत्यसूत्राणि निर्दिष्टानि । [प्र.पं.पृ.३२०] तान्यत्राऽप्यनुसन्धेयानि विद्वत्तल्लजैः ।

[4] देहादन्यस्य गुण इति ख पु पा ।

प्रत्येकं परमाणुष्वभ्युपगम्यते । तस्माच्छरीरादन्यस्य गुणो ज्ञानमिति, देहव्यतिरिक्तपुरुषानुमानं द्रष्टव्यम् ।

विज्ञानवादिमतेन शङ्का-निरासौ ।

[1]स्यान्मतम्—गुणत्वमेव [2]ज्ञानस्या सिद्धमिति । [3]तन्न । द्रव्याश्रितत्वात्, निर्गुणतया च संयोगविभागौ प्रति निरपेक्षकारणत्वाभावेन गुणत्वसिद्धेः । न च वाच्यं द्रव्याश्रित[4]त्वमेवाऽप्रसिद्धमिति । कार्यत्वात् । न हि कार्यं [5]किञ्चिदद्रव्याश्रितमात्मानं लभते । एवं सुखादिभ्योऽपि देहातिरिक्तपुरुषानुमानं वेदितव्यम् ।

अहङ्कारावलम्बनेन पुनर्देहात्मवादप्रत्यवस्थानम् ।

नैतदेवम् । "घटमहं जानामी"ति [6]ज्ञातुरहङ्कारास्पदीभूतत्वात् "अहं गच्छाम्यहं स्थूलः" इत्यादावहङ्कारस्य शरीर एव प्रवृत्त्यविवादाच्छरीरमेव प्रत्यक्षं ज्ञातृ प्रतीयते, प्रत्यक्षविरोधे चाऽनुमानमात्मानं न लभत इति । वैशेषिकगुणोऽपि ज्ञानं[8] न कारणगुणपूर्वकमिति, पार्थिवपरमाणुष्वविद्यमानमपि ज्ञानं शरीरे सम्भविष्यतीति, न शरीरादन्यस्याऽनुमानम् । ननु शरीरस्य चैतन्ये मृतशरीरेऽपि तत् स्यात् । न । तस्य विगुणत्वात् । मरणेन शरीरं विगुणमित्यविवादम् । ननु ममेदं शरीरमिति देहातिरिक्तेऽहङ्कारो निविशते । न । अभेदेऽपि [9]भेदोपचारोऽयं "शिलापुत्रकस्य शरीरमि"तिवत् । अन्यथा

---

[1] ज्ञानमात्मसमवेतो विशेषगुण ति तार्किका मीमांसकाश्चाऽऽचक्षते । तत्र च ज्ञानस्य विशेषगुणत्वेनाऽऽत्मनस्तदाश्रयत्वेनाऽनुमानमिति कथयन्ति । ज्ञानादिकं क्वचिदाश्रितं गुणत्वा द्रूपवदिति । ताथागतस्तु ज्ञानादीनां गुणत्वे, न किञ्चित्प्रमाणं वरीवर्ति । न ईश्वराज्ञा न वा वेदाज्ञाऽस्ति । तस्माद् ज्ञानादीनां गुणत्वं, न सिध्यति । असिद्धे च गुणत्वे तदाश्रयत्वेनाऽऽत्मकल्पनं सुदूरापास्तम् । अतो ज्ञानादीनां गुणत्वेनाऽऽत्मानुमानं मनोमोदकायते ।

यथोक्तं तैः—"सिद्धे ज्ञानसुखादीनां गुणत्वे गुणिकल्पना ।
न तु तत्सिद्धमस्माकं तावन्मात्रोपपत्तितः" ॥ इति ।

अतो ज्ञानमेवाऽऽत्मा, तच्च क्षणिकमिति । तन्मतेनाऽऽशङ्कते—स्यान्मतमिति । स्यात् यन्मतमिति ख. पु. पा. ।

[2] अप्रसिद्धत्वमिति. मु. पु. पा. ।

[3] सुगतमतं निरस्यति—तन्नेति ।

[4] अत्र द्रव्याश्रयसंयोगविभागौ प्रतीति मु.पु.पा. ।

[5] द्रव्यानाश्रितमेवेति मु. पु. पा. ।

[7] अहङ्कारास्पदस्य दृष्टत्वादिति. मु. पु. पा. ।

[8] ज्ञानमिति. मु. पु. नास्ति ।

[9] भेदावगमोऽयं शिलापुत्रशरीरवदिति. मु. पु. पा. ।

ममाऽऽत्मेत्यपि [1]व्यपदेशादात्मान्तरमप्याश्रीयेत । येऽपि च सुखादयः, ते "चाहं सुखी"त्यहङ्कारविषयसम्बन्धि[2]तयाऽवगम्यमानाश्शरीरसमवायिन एव, अतो न तद्व्यतिरेकिणमात्मानमनुमापयितुमीशते । शरीरविकारहेतुत्वाच्च तेषां सुतरां शरीरगुणत्वम् । [3]न ह्यतद्गुणस्तं गुणिनं विकर्तुमुत्सहते[*] । विक्रियते हि शरीरं [4]नयनविकासमुखप्रसादरोमहर्षादिभिः । सुखादिषूत्पन्नेषु तत्र शरीरे विकार्ये विकारं प्रति समवायिकारणभूते, तत्प्रत्यासन्नेनैवाऽसमवायिकारणेनाऽपि भवितुं युक्तम् । न च शक्यं वक्तुं सुखादिमदात्मसंयोग एव शरीरसमवेतेषु विकारेष्वसमवायिकारणमस्त्विति, प्रमाणाभावात् । सिद्धे ह्यात्मनि स्यादेषा कल्पना, साध्ये त्वव्यवहितानामेव कारणतोचितेति, न देहातिरिक्तात्मानुमाने सुखादीनां [5]सामर्थ्यम् ।

तन्निरासः ।

अत्रोच्यते—स्यादेतदेवं यदि देहातिरिक्तो नोपलभ्यते ज्ञाता । "घटमहमुपलभ" इति घटस्याऽनुभविता शरीरातिरिक्तः प्रतिभासते । शरीरं हि करचरणाद्यवयवयोगि[6] । न च घटाद्यनुभवसमये तस्याऽवभासोऽन्वयी । अवश्यश्च ज्ञातुरवभासो मेयानुभवेष्वनुवर्तत इत्यास्थेयम् । अन्यथा स्वपरवेद्ययोरनतिशयप्रसङ्गात्[7] । "अहं गच्छामी"ति प्रतिपत्तिसमयेऽपि प्रतिपत्ता शरीरातिरिक्तः [8]प्रतिपत्तृस्वभावो गन्तारं देहं प्रतिपद्यमानः प्रतीयत एव । तत्र लाक्षणिकोऽहंशब्दानुविद्धस्तु शरीरे प्रत्ययः । ममाऽऽत्मेत्यत्राऽपि लाक्षणिकश्शरीर एव ममकारः । यस्तु चेतनः, तत्राऽस्मच्छब्दो मुख्यः । न च शरीरं चेतनम्, [9]चितिसमवायाभावात् । शरीरातिरिक्तवस्त्वन्तरसमवायिनी हि चेतना चकास्ति ।

---

[1] अपरमिति मु. पु. पा. ।
[2] संविद्विषयतयेति. मु. पु. पा. ।
[3] न ह्यन्यगुण इति. मु. पु. पा. ।
[4] विकार इति., मु. पु. पा. ।

*बृहतीटीकायां "न ह्यगुणो गुणिनं विकर्तुमुत्सहते" [ बृ. पृ. २१८ ]इति वाक्यं दृश्यते । पञ्चिकायामपि—यो यस्य गुणो न भवति, न स तं गुणिनं विकर्तुमुत्सहत इति व्याख्यातं शालिकाचार्येण । परन्त्वत्र न ह्यन्यगुण इति मुद्रितपुस्तके पाठः । ख. पुस्तके न ह्यतद्गुण इति पाठो दृश्यते । स एवाऽस्माभिरादृत इति ।

[5] हेतुत्वमिति मु. पु. पा. ।
[6] अनेकावयवयोगीति. मु. पु. पा. ।
[7] अनतिशय इति मु. पु. पा. ।
[8] मातृ. मु. पु. पा. ।
[9] चेतनेति. मु. पु. पा. ।

नन्वात्मधर्मभूता चेच्चितिः, तर्हि विषयासंस्पर्शिनी कथं प्रतिविषयं विभज्यते । उच्यते—प्रतिभाससिद्धा तावच्चेतनसमवायिनी चितिः । अनागता—तीतसंवेदने च व्यक्तमेव विषयानाश्रितत्वम् । प्रतिकर्मप्रविभागस्तु [1]व्यवहारानुगुणस्वभावत्वाच्चितेः । यद्व्यवहारानुगुणा या चितिः, तदीयाऽसौ व्यपदिश्यत इति, न किञ्चिद्धीनम् ।

प्रत्यभिज्ञोपन्यासः ।

नन्वेवं प्रथमदर्शनेऽपि देहाद्व्यतिरेके सिद्धे "ऽन्येद्युर्दृष्टेऽपरेद्युरहमिदमद्राक्षमि"ति प्रत्यभिज्ञोपन्यासोऽनर्थकः । उच्यते—व्यतिरेकसिद्धावपि स्थिरतया क्रियावत्त्वसिद्धये *प्रत्यभिज्ञोपन्यस्ता । अस्थिरत्वे हि तत एव कादाचित्ककार्यसिद्धेः, तत्सिद्धये न क्रियानुमानं क्रमते । अक्रियस्य कर्तृत्वम्, भोक्तृत्वञ्च [2]काल्पनिकं स्यात् । कर्ता भोक्ता च यज्ञायुधिवाक्येनाऽऽक्षिप्तस्समर्थयितव्य इति, उपयुक्तः प्रत्यभिज्ञोपन्यासः । यदा चाऽयमात्मा प्रत्यभिज्ञायते, तदा [3]योऽसौ चिदात्मा तस्य धर्मः, नाऽसौ तन्मात्रप्रभवः कदाचिदुदियात् । सदा सन्निहितकारणकं हि कार्यं न कादाचित्कं भवेत् । कारणासन्निधाननिबन्धनो हि [4]कार्योदयव्याक्षेपः । तस्मादयमात्मा समवायिकारणभूतः किञ्चिदसमवायिकारणभूतमपेक्षते ।

तत्र केचित्—[5]ज्ञानलक्षणं व्यापारान्तरं तत्समवेतमेवाऽसमवायिकारणमाहुः । [6]तत्त्वनुपपन्नमिति मन्यामहे । यतस्तस्याऽपि किञ्चिदसमवायिकारणमनुसरणीयम् । तच्च वरं चितेरेवाऽस्तु, तच्चाऽऽत्ममनस्सन्निकर्षाख्यम् । तस्य चाऽसमवायिकारणं [7]मनस एव परिस्पन्दः । तस्याऽप्यात्ममनस्सन्निकर्षान्तरमात्मसमवेतं प्रयत्नम्, अदृष्टं वाऽपेक्षमाणमसमवायिकारणम् । प्रयत्ना-दृष्टयोश्चाऽऽत्म-मनस्सन्निकर्षान्तरमेवेति, अनादिरेषा कार्यकारणपरम्परा बीजाङ्कुरवदिति वेदितव्यम् ।

---

[1] स्वभावेति. मु. पु. नास्ति ।
[2] अनुपपन्नमिति. मु. पु. पा. ।
[3] तदाऽसाविति. मु. पु. पा. ।
[4] कार्योदयप्रतिक्षेप इति. मु. पु. पा. ।
[5] मननलक्षणमिति. मु. पु. पा. ।
[6] तदनुपपन्नमिति. मु. पु. पा. ।
[7] मानस इति मु. पु. पा. ।

*प्रत्यभिज्ञाया नाऽऽत्मनस्स्थिरत्वसिद्धिरेवैकं प्रयोजनमभिप्रेतम्, अपि त्वात्मनो भोक्तृत्वसिद्धिरपि विवक्षिता । भोगः-अनुभवः-संवेदनमित्यनर्थान्तरम् । संवेदनमपि क्रिया धातु-

मनसस्स्वीकारे प्रमाणोपन्यासः ।

मनसोऽभ्युपगमे च सकलात्मगुणोदय एव प्रमाणम् । बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्ना-दृष्ट-संस्काराणां नवानामपि [1]वैशेषिकात्मगुणाना[2]मात्म-मनस्संयोगेनैवोत्पत्तेः ।

तत्र बुद्धिस्स्वसंवेदनसिद्धा प्रमिति-स्मृतिरूपा । सुख-दुःखेच्छा-द्वेष-प्रयत्नास्तु मानसप्रत्यक्षवेद्याः । न च दुःखाभावमात्रं सुखम् । दुःखाभावस्य [3]सुखानुपलम्भरूपत्वात् । [4]तद्वियुक्तात्मोपलब्धेरेव दुःखानुपलम्भ-रूपत्वात्, आत्मोपलम्भातिरिक्तसुखोपलम्भाच्च ।

संस्कारस्य तु स्मृतिलक्षणमेव कार्यं [5]गमकम् । अनुभूतविषय एव स्मृतिर्भवतीत्यनुभवाधीनं[6] कञ्चिदात्मनोऽतिशयमुपकल्पयति । अदृष्टन्तु धर्माधर्मलक्षणमागमैकगम्यम् । न च केवलादात्म-मनस्सन्निकर्षादेव रूपा-द्यवगमः, अन्धादीनामभावादिति, चक्षुरादीनि बहिरिन्द्रियाण्यङ्गीक्रियन्ते । पञ्चधा च बाह्यरूपाद्युपलम्भलक्षणकार्यव्यवस्थापनात्पञ्च चक्षुरादीनि कल्प्यन्ते । मनःप्रभृतीनि षडिन्द्रियाणि यस्मिन्नायतन्ते, तदिन्द्रियायतनं शरीरम् ।

शरीरत्रैविध्यनिरूपणम्, उद्भिज्जशरीरस्य निराकरणञ्च ।

तच्च—जरायुजा-ण्डज-संस्वेदजभेदभिन्नं त्रिविधम् ।

उद्भिज्जन्तु शरीरं न भवत्येव । [7]भोगानुपलम्भात्, तदायतनं हि तत्प्रयोजकम्, वृक्षादिकस्येन्द्रियायतनत्वे प्रमाणाभावात् । [8]यदपि—

---

वाच्यत्वात्, "धातुवाच्या क्रिये"ति लौकिकाः । अतः कर्तृत्वभोक्तृत्वस्वरूप आत्मा सिद्धः । एवं विषयप्रत्यभिज्ञा चैतन्निबन्धनेति शब्दनित्यत्वाधिकरणे वक्ष्यते तथा च पञ्चिकावाक्यम्—

"स एवाऽयङ्गकार" इति येयं प्रत्यभिज्ञा, सा पूर्वापरानुभवावस्थानुवर्तिस्थिरानु-भवितृप्रत्यभिज्ञानिमित्तेति शब्दनित्यत्वाधिकरणे प्रत्यभिज्ञोपन्यस्यते "स्थिरेऽनुभवितरि सिद्धे विषयप्रत्यभिज्ञा यथा स्यात्" इत्यादिनेतिबोध्यम् ।

१ वैशेषिकगुणानामिति. मु. पु. पा. ।
२ मनस्संयोगेनेति ख. पु. पा. ।
३ दुःखानुपलम्भ इति. मु. पु. पा. ।
४ तद्वियुक्तात्मन इति. मु. पु. पा. ।
५ अवगमकमिति. मु. पु. पा. ।
६ अनुभवाधेयमिति. मु. पु. पा. ।
७ भोगानुपलम्भादित्यादिः—वृक्षादिकस्येत्यन्तः पाठो मु. पु. न दृश्यते ।
८ यदीति. मु. पु. पा. ।

"*श्मशाने जायते वृक्षः कङ्कगृध्रनिषेवितः" ॥ इति

[1]निषिद्धाचरणफलत्वस्मरणादुद्भिज्जं शरीरमवभाति[2]। तदप्यनुपपन्नम्। [3]तस्मिन्नंशे प्रमाणाभावात्। स्मृतेर्निर्मूलतया मुख्यार्थत्वानुपपत्तेः। न च वेद एव मूलमवकल्पते, अकार्यार्थत्वात्। [4]नञ्विधेः निषिध्यमानानुष्ठाने प्रत्यवाय इत्यत्राऽर्थे 'गमकत्वाभावात्। यद्यपि शंय्वधिकरण[मी. द.३.४.१०.] सिद्धान्तपर्यालोचनया निषिद्धादपि कुतश्चित्प्रत्यवायोदयः, तथापि वृक्षादिरूपशरीरफलताऽवसातुं न शक्यते, फलतयाऽन्वयायोग्यत्वात्। यस्य ह्यन्वययोग्यत्वमवधारितम्, तस्य वाक्यार्थानुप्रवेशित्वम्, यस्य [5]त्वन्वययोग्यत्वासम्भवः, तस्य [6]वाक्यार्थानुप्रवेशिताऽपि नास्ति, "वह्निना सिञ्चेदि"तिवत्। यस्तु वेदे तथाभूतार्थप्रयोगः, स गौणः, लाक्षणिको वा वर्णनीय इति, अत्राऽपि गौण्या, लक्षणया वा वृत्त्या वर्णनीयम्। अतस्त्रिविधमेव शरीरम्।

---

*अस्य पूर्वार्धम्—

"गुरुं हुङ्कृत्य तुङ्कृत्य विप्रं निर्जित्य वादतः" ॥ इति। याज्ञवल्क्यस्मृतावस्योत्तरार्धमन्यथा दृश्यते—

"बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम्" [या. स्मृ. प्रा. अ. श्लो २९१] इति।
"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः"।

इति मानववचनं वृक्षादीनां शरीरत्वे प्रमाणम्।

एवं—

"नर्मदातीरसम्भूतास्सरलार्जुनपादपाः।
नर्मदातोयसम्पर्कात्ते यान्ति परमां गतिम्" ॥

इत्यागमः। एषां वचनानां पर्यालोचनेन वृक्षादीनामपि शरीरभेदा प्रतीयन्ते। तथापि तच्छरीरं शालिकाचार्यो न स्वीकरोति। निर्मूलायास्स्मृतेः प्रामाण्यासम्भवात्। अयमर्थो शेषलक्षणे शंय्यधिकरणे स्पष्टः। अत एतन्मते उद्भिज्जं शरीरं नास्ति। तदेवाऽस्मिन्प्रकरणे प्रतिषेधति शालिकाचार्य इति ध्येयम्। मूलेन च निगदव्याख्यातोऽर्थ इति ध्येयम्।

[1] निषिद्धफलत्वस्मरणादिति. मु. पु. पा.।

[2] अवतिष्ठित. इति. मु. पु. पा.।

[3] अस्मिन्निति. मु. पु. पा.।

[4] न चाऽत्र विधिनिषिध्यमानानुष्ठानादिति. मु. पु. पा.।

[5] अन्वययोग्यत्वाभाव. इ. मु. पु. पा.।

[6] अनुप्रवेशित्वमपि नास्तीति मु. पु. पा.।

[१]यत्पुनरपार्थिवमयोनिजं शरीरं केवलधर्माधिपत्यनिबन्धनं कैश्चिदभ्युपगम्यते, तत् सर्वशरीराणां पार्थिवत्वाव्यभिचारान्नाऽनुमातुं शक्यते ।

मनोनिरूपणम् ।

सर्वशरीरेषु मनः, त्वक्चाऽविशिष्टमिन्द्रियद्वयम् । मनश्चाऽन्तश्शरीरं परमाणुपरिमाणम् । तत् खलु द्रव्यभूतं संयोगगुणभागितयेष्यते । द्रव्यञ्च द्विविधम्—अनेकद्रव्यम्, अद्रव्यद्रव्यञ्चेति । तत्र मनसोऽनेकद्रव्यत्वे कल्पनागौरवम्, आरभ्यारम्भकद्रव्याभ्युपगमप्रसक्तेः । अद्रव्यद्रव्यत्वेऽपि [२]परममहत्वाभ्युपगम आत्मना सह [३]संयोगासम्भवः । न हि [४]परममहतोरपरिस्पन्दयोरनवयवयोश्च संयोगोपपत्तिः । *त्रिविध एव संयोगः—अन्यतरकर्मजः, उभयकर्मजः, संयोगजश्चेति । तस्मात् [५]परमाणुपरिमाणं मनः । तच्च सदकारणत्वान्नित्यम् । आशुतरसञ्चारि च तत्, आशुतरेन्द्रियाधिष्ठानदर्शनात् । न हि तदनधिष्ठितमिन्द्रियं स्वविषयमवसाययितुमलम्, अन्यत्र व्यासक्तचित्तस्य विषयान्तराप्रतीतेः । तस्य मनसोऽनादिर्धर्माधर्मापेक्षः क्षेत्रज्ञेन सह संयोगः, देहान्तरसंयोगश्च तस्माददृष्टापेक्षादात्ममनस्सन्निकर्षादुत्पन्नस्य कर्मणः प्रसादेन । सोऽयमात्मा भोक्ता, भोगायतनं—शरीरम्, भोगसाधनानि—इन्द्रियाणि, भोग्याः—सुखादयः आन्तराः, बाह्याश्च पृथिव्यादयः, भुक्तिश्च—वित्तिः—सुखदुःखानुभवः, इति पञ्चसु विधासु सर्वं तत्त्वं परिसमाप्यते ।

आत्मनि प्रमाणनिरूपणम् ।

केन पुनः प्रमाणेनाऽस्याऽऽत्मनः प्रमितिः,[६] अप्रमीयमाणत्वे चाऽस्य सत्तोपगमो निर्निबन्धनः ।

---

[१]"तत्र शरीरं द्विविधं योनिजमयोनिजञ्चे"[वै.द. ४. २. ५.]ति सूत्रेण शरीरद्वैविध्यमभिधायाऽयोनिजस्य शरीरस्योत्पत्त्यादिकमवोचि । तन्मतमतमनुवदति परासितुं—यदित्यादिना । अयोनिजं शरीरं देवानां ऋषीणाञ्च नाऽङ्गीकरोति ग्रन्थकारः । उपस्कारकृत् पञ्चिकाकारोक्तमेवाऽर्थं स्वीकरोति । अयमर्थस्तत्रैव व्यक्त इति ।

[२] परममहत्त्वेति मु. पु. पा. ।
[३] संयोगापन्हव इति. मु. पु. पा. ।
[४] अपरिस्पन्दयोरिति मु. पु. ना. ।
[५] परमाणुपरिमितमिति. ख. पु. पा. ।
[६] अप्रमीयमाणस्य. इति मु. पु. पा. ।

* संयोगविषये यद्वक्तव्यम्, तत्सर्वमर्वमनागतावेक्षणन्यायेन जातिनिर्णये [प्र. पं. पृ. ७८] विवेचितमस्माभिः । अस्य विस्तरस्तत्रैव द्रष्टव्यः ।

तत्र केचिदाहुः—मानसं प्रत्यक्षं सुखादिष्विवाऽऽत्मनि प्रमाणमिति । तदयुक्तमिति प्राभाकराः । न ह्येकस्य कर्तृत्वम्, कर्मत्वञ्च स्वापेक्षमुपपद्यते, स्वात्मनि क्रियावृत्तिविरोधात् । न चाऽहमिति संविद्वशेनाऽविरोधः, स्वयम्प्रकाशत्वेन, विषयप्रतीतिगोचरत्वेन वा तदुपपत्तेः । विषयैस्सहोपलम्भनियमश्चैवं सत्युपपन्नः ।

अन्ये मन्यन्ते—स्वप्रकाशाय हि प्रमाणमप्रकाशस्वभावेषु विषयेष्वपेक्ष्यते, प्रकाशस्वरसे स्वात्मनि प्रकाशापेक्षा मुधैव, संवित्तिवत् ।

संवित्तेस्स्वप्रकाशत्वविचारः ।

प्रमाणफलभूता हि संवित्तिरवश्यं स्वयम्प्रकाशाऽभ्युपगमनीया । अन्यथोत्पन्नायामपि तस्यामप्रकाशमानायां विषयाणां विदितत्वावेदने विदितत्वव्यवहारो न स्यात्, न च वाच्यं व्यवहारयोग्यतैव विषयेषु पुरुषस्य संवित्, सा व्यवहार उत्पन्ने फलेनाऽनुमीयते । यतो व्यवहारप्रवृत्तेरपि पुरस्ताद्विदितत्वं विषयाणामनुसन्धीयत इति [1]सर्वजनसम्मतमेतत् । नाऽपि मानसप्रत्यक्षसमधिगमनीया संवित् । स्वयम्प्रकाशत्वेनाऽप्युपपत्तौ सत्याम्, तत्कल्पनायां प्रमाणाभावात् । विषयेषु हि स्थायिषु स्वयम्प्रकाशेष्वभ्युपगम्यमानेषु स्वापादिदशाः पुरुषाणामनुपपन्नास्स्युः । संविदि तु स्वयम्प्रकाशायां नैष दोष आपद्यते, स्वापादिषु तस्या एवाऽसत्वात् । विषयास्तु प्रत्यभिज्ञाबललब्धस्थेमानः पुरुषाणां स्वापादिदशायामपि न सन्तीति न शक्यमभिधातुम् । ततस्ते परायत्तप्रकाशाः । संवित्तिस्तु स्वयम्प्रकाशेति, सिद्धो दृष्टान्तः । [2]स्वयम्प्रकाशस्य सत्तोपगमो न प्रमाणान्तरायत्तः । एवञ्च तुरीयेऽपि प्रकाशो नोपरमते । अत एव च मोक्षस्य [3]परमपुरुषार्थता । अन्यथा [4]विच्छिन्नसकलोपलम्भनात् स्वापाद्विशिष्टः[5] पुरुषैर्नेष्येत । एतदपि प्रामाणिकाग्रगण्या न साध्वित्याहुः । स्वरसप्रकाशत्वे पुरुषस्य जाग्रत्स्वप्नतुरीयेष्विव सुषुप्तावपि प्रकाशापत्तेः, स्वापस्तेभ्यो न भिद्येत । न हि स्वारसिकस्योच्छेदः, आवरणं वा सम्भवति ।

---

[1] सर्वजनसमवेक्षमिति मु. पु. पा. ।

[2] प्रकाशायत्तोऽस्य सत्तावगमः इति मु. पु. पा. ।

[3] परमेति मु. पु. ना. ।

[4] उच्छेदादिति मु. पु. पा. ।

[5] उच्छेदादिति. ख. पु. पा. नास्ति ।

[1]यत्त्विदं केनचित्प्रलप्यते-स्वारसिकमपि पार्थिवानामणूनां श्यामत्वं पाक-पदावेदनीयेनाऽग्निसंयोगेन निवर्तत इति। तदसत्। यदकृतकं तत्सर्वम-विनाशि दिगादिवत्। अकृतकश्च श्यामिमा पार्थिवानामणूनामित्यनुमानग्रस्त-त्वान्नाऽऽदरणीयम्। स्वारसिकता च पार्थिवानामणूनां श्यामतया न सिद्धा, लौहित्यस्येव तस्याऽपि पाकजत्वोपगमात्। सदकारणत्वमेव [2]नित्यत्वम्। अकारणमपि चेदनित्यम्, न नित्यलक्षणं [3]किञ्चिदवकल्पते।

### स्वमतनिरूपणम्।

तत्त्वविदस्त्वाचक्षते—नाऽऽत्मा विषयाननुविद्धोऽवभासते, न च विषया बोद्धर्यनवभासमाने भासन्त इति तावत् सिद्धम्। तत्र यदेतत् विषयेषु प्रामाणम्, तज्जनितैव या संवित् सा पुरुषं, स्वविषयांश्च विषयीकुर्वन्ती समुदीयते। तत्संवित्तिफलभागित्वेऽपि पुरुषस्य न कर्मता, किन्तु कर्तृतैव गन्तृवत्। यथा—गमनफलसंयोगयोगिनोऽपि[4] गन्तुर्न कर्मता, किन्तु कर्तृतैव, तथा बोद्धुरपि वेदितव्यम्। परसमवायिक्रियाफलयोगि हि कर्मेति कर्मज्ञाः। अतएव च सहोपलम्भनियमोऽपि [5]विषयवेत्तृसंवित्तीना-मुपपन्नः। एवञ्च विषयवित्तिगोचरत्वादात्मनो विषयवेदनोपायोपरमात्[6] स्वापादिष्वप्रकाशो युक्त एव [7]। तुरीयेऽपि सम्भूतसकलोपलम्भोपाय आत्मा [8]सन्मात्रावस्थ एवाऽवतिष्ठते।

### दुःखनिवृत्तिरेव मोक्ष इति स्वमतवर्णनम्।

न च मोक्षस्याऽपुरुषार्थता, सांसारिकविविधदुःखोपरमरूपत्वान्मोक्षस्य। दुःखोपरमो हि पुरुषैरर्थ्यते। न चेदं युक्तम्—यथा निखिलदुःखोपरम-रूपत्वात् परमपुरुषार्थत्वम्, तथा [9]सकलसुखोच्छेदरूपत्वादपुरुषार्थताऽपीति।

---

१ मण्डनाचार्येणोक्तमर्थं [ ब्र. सि. पृ. ११ ] दूषयितुमनुवदति—यत्त्वित्यादिना।

२ सदकारणवन्नित्य'मिति काणभुजं सूत्रमर्थतो निर्दिशति शालिकाचार्य इति ध्येयम्।

३ क्वचिदवशिष्यत इति मु. पु. पा.।

४ संयोगिन न इति मु. पु. पा. संयोगविभागभागिन इति ख. पु. पा.।

५ विषयवित्तीनामिति ख. पु. पा.।

६ उपरम इति मु. पु. पा.।

७ पुरुषस्येति. मु. पु. अधिकः पा.।

८ सन्मात्रतयेति मु. पु. पा.।

९ सकलसुखोच्छेदहेतुरूपत्वादिति. मु. पा.।

यतः सांसारिकं सुखं विवेकिनस्साधनपरतन्त्रलक्षणतया, [१]क्षयितालक्षणतया च दुःखकवलितं दुःखमेवेति मन्यमना नाऽऽत्यन्तमाद्रियन्ते।

अत [२]एव मोक्षायोत्तिष्ठन्ते। एवञ्च [३]परमानन्दाभ्युपगमोऽपि मन्दफल एव। न च प्रमाणमपि [४]तत्राऽवकल्पते, श्रुतीनां सिद्धवस्तुबोधकत्वाभावात्, प्रत्यक्षविरोधश्च। न संसरन्तस्तथाविधमानन्दमनुभवन्ति। न चाऽभिभूततयाऽननुभवः। स्वारसिकस्य स्वयम्प्रकाशस्याऽऽनन्दस्याऽभिभवायोगात्। न च परमप्रेमास्पदतयाऽऽत्मन [५]आनन्दरूपतासिद्धिः, आत्मनि प्रेमासिद्धेः। शरीरोपघाते हि दुःखोदयात्तदुपघातपरिहारं सर्वे प्रार्थयन्त इत्यात्मनि प्रेमाभिमानः। किञ्च संसारिणां स्वारसिकः परमानन्दो नाऽनुभूतपूर्व इति, कथं तन्निबन्धनमात्मनि [६]प्रेम। अतो विषयविशेषसम्भोगज[७] एवाऽऽनन्द इति सुन्दरम्। मोक्षस्तु सांसारिकदुःखोपशमात्पुरुषार्थ इति पुष्कलम्।

मण्डनमिश्रमतानुवादः।

*कः पुनरेष मोक्षः? अविद्यास्तमय इति केचित्। यत् एकमेवाऽद्वितीयमसंसृष्टं सकलोपाधिपरिशुद्धं ब्रह्मतत्त्वम्, तत् अनाद्यविद्यावशेन शरीरादिसद्वितीयमिवोपाधिकलुपितमिवाऽवभासमानं[७] लब्धजीवव्यपदेशं सत्, बद्धमिव [८]लक्ष्यते। अतोऽनाद्यविद्यैव संसारः, निखिलविकल्पातीतपरिशुद्धविद्योदयात् तदस्तमय एव मोक्ष इति।

---

[१] साधनपारतन्त्र्यलक्षणया क्षयितालक्षणतया चेति मु. पु. पा.।
[२] एवं मोक्षायोत्तिष्ठत इति. मु. पु. पा.।
[३] परमानन्दताभ्युपगम इति. मु. पु. पा.।
[४] तत्रैवेति मु. पु. पा.।
[५] आनन्दतासिद्धिरिति मु. पु. पा.।
[६] निर्बन्ध इति. मु. पु. पा. :
[७] सम्भोग इति. मु. पा.।
[७] उपलक्ष्यमाणं इति. ख. पु. पा.।
[८] कल्प्यत इति मु. पु. पा.।

*पराभिमतमोक्षनिरासपूर्वकं स्वमतेन मोक्षस्वरूपं वर्णयितुं, मोक्षविषयकं प्रश्नमुत्थापयति—कः पुनरिति। तत्र शाङ्करमतानुसारिणोऽविद्यानिवृत्तिं मोक्षमाचक्षते। तथा च देवेश्वराचार्यवचनम्—

"अविद्यास्तमयो मोक्षस्सा संसार उदाहृतः" [ब्र.सि.नि.कां.श्लो. १०६] इति। इदमेव शङ्कस्य हृदि विपरिवर्तत इति बोध्यम्। अत्र मुद्रितपुस्तकेऽशुद्धिबाहुल्यदर्शनात्, आनन्दबोधभट्टाचार्येण मोक्षविचारप्रसङ्गे [न्या. म. पृ. २९१-२९७.] प्रकरणपञ्चिकायास्तत्त्वालोकप्रकरणादुद्धृतवाक्यसन्दर्भानुसारेण सुसम्बद्धः पाठो मूले निवेशितः, मु. पु. पाठस्त्वधस्तादुट्टङ्कितोऽस्माभिरिति विभावनीयं सूरिभिः।

तन्निरासः ।

[1]तदिदं श्रद्धामात्रविजृम्भितमिति[2] प्रमाणपरतन्त्राः । स्यादेतदेवं यद्यद्वैतं कस्यचित्प्रमाणस्य गोचरः । न चैतदित्थम्, न खल्वद्वैतं कस्य चित् प्रमाणस्य गोचरः । स्यान्मतम्, प्रत्यक्षमेव विधिमात्रोपक्षीणव्यापारमपरिस्पृष्टान्योन्यभेद[3]मद्वितीयमेकं तत्त्वं साक्षात्करोतीति । तदसत्—सत्यं विधायकमेव प्रत्यक्षम् । तच्च विदधदपि [4]रूपं रूपतया, रसञ्च रसतया विदधाति, न पुनस्सर्वमेकतया, [5]यथा रूपे [6]धारावाहिनी बुद्धिः, तथाभूतैव यदि रसेऽपि स्यात्, तदा भवेदेव प्रत्यक्षेण[7] साक्षात्कृतमद्वैतम् । न त्वेतदेवमिति सर्वप्रतिपत्तृस्वसंविदितम् ।

†यच्च प्रमेयविकल्पेन सामान्यमेव वस्त्विति स्थापयित्वा, सत्ताया महासामान्यरूपत्वात् तावन्मात्रमेव सत्त्वमिति साधितम् । तदपि गगनग्रासकल्पम् । सत्त्वं न विशेषमात्रं वस्तु, सर्वत्राऽनुवृत्तप्रतिभासप्रवेदनीयस्य सामान्यस्याऽपह्नोतुमशक्यत्वात् । नाऽपि सामान्यविशेषात्मकमेकं[8] वस्तु,

---

[1] इदमनुपपन्नमित्याह—तदिदमित्यादिना । अयम्भावः—अद्वैतसद्भावे प्रत्यक्षं प्रमाणम्, उताऽऽगमः, अथवाऽनुमानमिति त्रिधा विकल्प्य स्यादेतदेवमित्यादिना-नत्वेतदेवमित्यन्तेन प्रथमविकल्पमदूदुषत्, मण्डनाचार्यः ।

[2] श्रद्धाविज्टिम्भतमिति मु. पु. पा. ।

[3] तदेकमित्येवेति. मु. पु. पा. ।

[4] एकरूपमेवेति. मु. पु. पा. ।

[5] स्वरूपमिति. मु. पु. पा. ।

[6] तद्धारावाहिनीति. मु. पु. पा. ।

[7] सत्तयेति. .मु पु. पा. ।

[8] एकमिति मु. पु. ना. ।

†ब्रह्मसिद्धौ मण्डनाचार्योक्तमर्थं दूषयितुमुपन्यस्यति—यच्चेत्यादिना—जातिनिर्णये निर्णीतमित्यन्तेन । अत्रेयं विषयसंदर्भपरिशुद्धिः—मण्डनमिश्रस्सामान्यविशेषो वस्तुद्वयम्, अथवैकमेव सामान्यविशेषात्मकं वस्तु, अथवा विशेष एव वस्तु, अथवा सन्मात्रमेव वस्त्विति चतुर्धा विकल्प्याऽऽद्यत्रयं दूषयित्वा सन्मात्रमेव वस्तु स्वीकरणीयमिति प्रतिपादयाम्बभूव ।

एकस्मिन्नेव वस्तुन्यनेक इति प्रतिभासस्य चित्ररूपादौ, तज्ज्ञाने, चन्द्रस्वरूपे च परीक्षणविचक्षणैरभ्युपगमात् । अतः कल्पनालाघवादेकमेव सन्मात्रं परमार्थवस्त्विति स्थापयामास ।

तथाच तदीयश्लोक :—

"एकस्यैवाऽस्तु महिमा यन्नानेव प्रकाशते ।
लाघवान्न तु भिन्नानां यच्चकास्त्यप्यभिन्नवत् ।।" [ब्र. सि. तर्क. का. श्लो. ३२] इति ।

एकस्य द्वैरूप्यविरोधात् । सामान्यविशेषौ तु परस्परसम्बद्धे द्वे वस्तुनी प्रत्यक्षमवगाहते, तथा च कुतस्सत्ताद्वैतसिद्धिः । [१]यथा च सामान्यविशेषयोर्जातिव्यक्त्योरिह प्रत्ययो नास्तीति, तथा जातिनिर्णये [प्र. पं. पृ. ५०] निर्णीतम् ।

[२]न चाऽऽगमादेवाऽद्वैतसाधनम् । तन्न । आगमस्य कार्यैकविषयतया सिद्धे तत्त्वे प्रामाण्यानुपपत्तेः[३] । अपि च वाक्यात्माऽऽगमः प्रमाणमिष्यते । [४]तच्चाऽनेकपदात्मकमनेकपदार्थात्मनि वाक्यार्थे धियमुपजनयत्, कथमद्वैतमवभासयेत् ।

अथेदमुच्यते "स एष आदेशो नेति नेती"[बृ. उ. अ. ३. ब्रा. मं. ६.] ति

[५]सकलोपाधिनिषेधेन नानाभूतवस्त्वन्तरापाकरणादद्वैतमागमेन साध्यत इति। तदप्यसारम्। यः खल्वेष इति सद्रूपतया प्रत्यवमृष्टः पदार्थः, सोऽसत्त्वापादकेन[६] नञर्थेन सह सम्बद्धुमयोग्यः, अस्ति नाऽस्तीतिवत् । अन्वयायोग्ययोश्च पदार्थयोरन्वयासम्भवान्न वाक्यार्थीभवनम् । [७]एवन्तर्हि निराकृतानि सर्वाण्येव निषेधवाक्यानि । मन्द [८]मैवं परिभावय । न हि निषेधवाक्येषु कस्यचिदात्यन्तिको निषेधः, किन्तु क्वचित्किञ्चिन्निषिध्यते । [९]ब्रह्माद्वैताभिमानी तु भवानात्यन्तिकमेव निषेधमभिलषति । [१०]तथा च

---

[१] यथा च तत्राऽभावेऽपीह प्रत्ययो नाऽस्तीति, तथा जातिनिर्णये निर्णीतमिति मु. पु. अधिकः पाठो दृश्यते ।

[२] अद्वैतप्रतिपादनव्याघातादप्यागमेनाऽद्वैतं प्रतिपाद्यत इति कथनं नोपपद्यत इत्याह—न चेत्यादिना—आम्नायार्थो यथाश्रुतो न वर्णयितुं न्याय्य इत्यन्तेन ।

[३] परिनिष्ठितप्रमाणगोचरप्रमाणभावापपत्तेरिति न्या. म. पा. । न चाऽऽगमादेवाऽद्वैतं सिद्ध्यतीति मु. पु. पा ।

[४] अनेकपदात्मकमिति मु. पु. ना. ।

[५] सकलोपाधिनिषेधाददद्वैतसिद्धिरिति न्यायमकरन्दानुसारी पाठः ।

[६] असत्त्वापादकत्वेनेति. मु. पु. पा. ।

[७] तर्हि निराकृतान्येव सर्वाणि निषेधवाक्यानीति मु. पु. पा. ।
न चेत्थं निखिलनिषेधवाक्यनिराकरणप्रसंग इति न्या. म. ना. ।

[८] मैवमिति न्या० म. पा. नास्ति ।

[९] ब्रह्मेति मु. पु. ना. ।

[१०] तथा चेति मु. पु. ना. ।

सोऽयमात्मीय एव बाणो भवन्तं प्रहरति—

"[1]लब्धरूपे क्वचित्किञ्चित्तादृगेव निषिध्यते ।
विधानमन्तरेणाऽतो न निषेधस्य सम्भवः" ॥

[ ब्र. सि. त. कां. श्लो. २ ] इति ।

अतः प्रत्यक्षादिविरुद्धार्थत्वादद्वैतावबोधक आम्नायो न [2]यथाश्रुतो वर्णयितुं न्याय्यः ।

[3]यत्त्विदं प्रपञ्चेन प्रसाधितं[4]—प्रत्यक्षादिविरोधेऽप्यागमस्यैव[5] बलीयस्त्वम्, तद्वशेन प्रत्यक्षादीनामेव भ्रान्तता कल्पनीयेति । [6]तदपि मनोरथमात्रम् । प्रत्यक्षादिविरोधे पदार्थानामन्वययोग्यताविरहादागमादर्थबोधस्यैव तद्विरोधेऽनुदयात् । अतः प्रत्यक्षादिविरोधादागमे गौणी, लाक्षणिकी वा वृत्तिराश्रयितव्या[7] ।

आनन्दादिश्रुतीनां स्वमतेन व्याख्या ।

[8]तत्राऽऽनन्दादिश्रुतयस्स्वाभाविकदुःखाभावपरतया वर्णनीयाः, लौकिकानन्दस्याऽल्पतया, दुःखानुषक्ततया च व्याख्येयाः । एकत्वश्रुतयश्चैकस्मि-

---

[1] लब्धरूप इति । अस्याऽयमर्थः—यस्माल्लब्धरूपे—प्रमाणबलेन निश्चितसत्ताके क्वचिदधिकरणे भूतलादौ, किञ्चित्-प्रतियोगि—तादृगेव क्वचिल्लब्धसत्ताकमेव निषिध्यते । "प्रसक्तं हि निषिध्यत" इत्यभियुक्तोक्तेः । तस्माद्विधानम्—प्रतियोगिवस्तुस्वरूपप्रतीतिमन्तरेण निषेधो न सम्भवति, आत्यन्तिकासत्त्वे च प्रतियोगिप्रतीतिरेव न सम्भवतीति, निषेध एव न घटते । त्वदुक्तदोषो त्वामेवोपहन्यादिति प्रघट्टकार्थः ।

न्यायाचार्य उदयनोऽपि प्राह—प्रमितस्यैव धर्मित्वं, निषेधप्रतियोगित्वञ्चेति । तथा च तदीयश्लोकः—

"व्यावर्त्याभाववत्तैव भाविकी प्रतियोगिता ॥
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥" [न्या. कु. ३. स्त. श्लो. २.] इति ।

अत्र यद्वक्तव्यं तत् [ प्र. पं. १६३ पृष्ठे] विशेषतो विवेचितमस्माभिः, अतस्तत्रैव द्रष्टव्यम् ।

[2] यथावस्थित इति मु. पु. पा. ।

[3] प्रत्यक्षविरोधेऽप्यागमस्य बलीयस्त्वम्मण्डनाचार्यसंमतं दूषयति—यत्त्वित्यादिना—प्रत्यक्षविरोध आगमे गौणी, लाक्षणिकी वा वृत्तिराऽऽस्थेयेत्यन्तेन । अर्थावबोधे सति श्रुतेर्बलीयस्त्वम्, विरोधेत्वर्थावबोध एव न सम्भवतीत्यर्थः ।

[4] यदपीदमभिधीयत इति न्या. म. पा. ।

[5] आम्नायस्येति मु. पु. पा. ।

[6] तदतिमन्दसिति न्या म. पा. ।

[7] आस्थेयेति मु. पु. पा. ।

[8] आनन्दादिश्रुतीनां स्वमतेनाऽर्थमाह—तत्रेत्यादिना—सर्वमेव ज्ञानं निष्फलमिति दर्शयितुमित्येषा दिगित्यन्तेन । आनन्दशब्देन दुःखाभावो विवक्षितः । "एकमिति श्रुतेः"

न्नायतन एकस्यैव स्वामित्वमित्येवम्पराः । "[१]इन्द्रो मायाभिः पुरुरूप ईयते" इति, देहात्माभिमानेन जन्मनि जन्मनि भिन्न इवाऽऽभातीत्यर्थः । अनेकदेह-परिग्रहेऽप्येक एवाऽऽत्मेति नानात्वनिषेधस्याऽर्थः । "स[२] एष नेत्येष नेती"ति च शरीरादीनामात्मत्वनिषेधस्तद्व्यतिरिक्तप्रतिपत्तिपरः । विज्ञान-श्रुतयश्च [३]चिच्छक्तियोगित्वाद्व्योमादिभ्यो विशेषाभिधानपराः । सर्वात्म-श्रुतयश्च सर्वस्याऽऽत्मार्थत्वात् तादर्थ्यनिमित्तोपचाराः[४] । [५]"आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवती" [ बृ. उ. ४ अ. मै. ब्रा. ] ति यदुच्यते, तत् आत्मज्ञानस्य परमपुरुषार्थमोक्षफलत्वात्, तस्मिन् विज्ञाते सर्वमेव ज्ञानं निष्फलमिति दर्शयितुमित्येषा दिक् ।

[६]अथोच्येत—वित्तेर्भिन्नस्याऽप्रकाशात्मनः प्रकाश एवाऽनुपपन्न इति । यद्यत् प्रकाशते, तत् तत् प्रकाशादभिन्नम्, प्रकाशात्मकश्च ब्रह्म । अतो ब्रह्मात्मकं जगदिति सिद्धमद्वैतमिति । [७]तदिदं स्वपक्षविरुद्धम् । कथमेवं

---

एकस्मिन्शरीरे एकस्यैव भोक्तृत्वापरपर्यायं स्वामित्वमित्यर्थः । "इन्द्रो मायाभिः पूरुरूप ईयते" इति श्रुतेः । अनात्मनि देहे आत्माभिमानेन प्रतिजन्म भिन्न इवोपलक्ष्यते । नेति नेती"त्यादे-श्शरीरादिष्वात्मत्वनिषेधश्शरीरादनिरिक्तप्रतीतिपरः । विज्ञानश्रुतिश्च चैतन्यशक्तियोगेन तदनाश्रयेभ्य आकाशादिभ्यो व्यावृत्तिबोधिका ।

"ऐतदात्म्यमिदं सर्वम्" "इदं सर्वं यदयमात्मे"त्यादिश्रुतेस्सर्वस्याऽऽत्मार्थत्वेन तादर्थ्ये निमित्तत्वमुपचर्यते । आत्मविज्ञानेन सर्वविज्ञानश्रुतेरात्मज्ञानस्य मोक्षफलत्वात्, आत्मनि विज्ञाते, ज्ञातव्यं किमपि नाऽवशिष्यते । अन्यज्ज्ञानं निष्फलमित्याद्यूहनीयम् । अतश्श्रुतीना-मन्यपरत्वेन नाऽद्वैते तात्पर्यमिति ।

१ "रूपं रूपं प्रतिरूपो बभूव, तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयश्शता दश" ॥ [ बृ. उप. अ. २ ब्रा. ५ मन्त्र. १९ ] इति समग्रो मन्त्रो बोद्धव्यः ।

२ एष नेतीत्येव मु. पु. पा. ।

३ चिच्छक्तियोगित्वाद्विशेषापादनफला इति मु. पु. पा. ।

४ निमित्तोपचारा इत्येव मु. पु. पा. ।

५ "मैत्रेयि आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते, इदं सर्वं विदितम्" (बृ. उप. अ. ४ मं. ६) इति पाठ आकरे दृश्यते ।

६ अद्वैतेऽनुमानमेव प्रमाणं भवत्विति तृतीयं पक्षमुत्थापयति—अथोच्येतेति ।

७ परमार्थसतः प्रपञ्चस्य प्रकाशात्मकेन ब्रह्मणाभेदः, अथवा परमार्थसतोऽभेदो वेति द्वेधा विकल्प्याऽऽद्यं दूषयति—तदिदं स्वपक्षविरुद्धमिति ।

बुद्धिमन्तोऽभिदधति । एवं हि नानाभूतानामाकाराणां प्रकाशाभेदे प्रकाशस्याऽपि नानाभावापत्तेरद्वैतं दूरमपास्तम् ।

[1]अथोच्येत—विविधोऽयमाकारप्रपञ्चोऽविद्याध्यासवशादवभासत इति । एतदपि स्ववचनविरुद्धम् । सदात्मा प्रकाशः, तेन सहाऽसदात्मान आकारास्तावदभिन्ना इति न घटते । तथा सत्यप्रकाशात्मानस्ते कथमिव प्रकाशेरन् । अपि चाऽप्रकाशात्मन एव [2]प्रकाशस्सम्भवतीति [3]बाह्यार्थ-सिद्धावुक्तम् । अत एषोऽपि माहायानिकपक्षानुप्रवेशात्[4] ब्रह्मवादिनां मोह एव । अपि चाऽत्यन्तमसन्तं प्रपञ्चं कथमिवाऽविद्या प्रकाशयितुमलम् । न खल्वसत्ख्यातिरविद्या[5], किन्त्वग्रहणरूपैवेति[6] नयवीथ्यां [7]साधितम्[8] । अतो नाऽविद्यास्तमयो मोक्षः ।

---

[1] द्वितीयमुत्थाप्य दूषयति—अथोच्येत इति । सदसतोरेकत्वानुपपत्तेः । तथा च ज्ञान-ज्ञेययोरभेदाङ्गीकाराद्बौद्धमतप्रवेशापत्तिरित्याह—अत एषोऽपीति ।

असतः प्रतिभासमङ्गीकृत्यैतदुक्तम्, स एव न सम्भवति, असत्त्वानङ्गीकारादित्याह—तथासतीति ।

[2] प्रकाशस्सम्बन्धी भवतीति ख. पु. पा. ।

[3] शून्यवादप्रसङ्गे बौद्धाभिमतस्य सहोपलम्भनियमस्य भेदेऽप्युपपत्तिस्सम्भवतीति प्रति-पादनपरायां बृहतीटीकायां कीर्त्युक्तस्य हेतुत्रयस्य निराकरणमुखेन बाह्यार्थः प्रासाधि शालिकाचार्येण । अस्य विस्तरस्तत्रैव [ऋ. वि. पं. ७८-८० पृ.] द्रष्टव्यः । अस्मिन्नपि प्रकरणे विज्ञानवादनिराकरणावसरे "निराकृतश्चाऽयं बाह्यार्थसिद्धौ ऋजुविमलायामित्युक्तम्, तदेवाऽत्र ग्रन्थकार आम्रेडयतीति सुधीभिर्विभावनीयम् ।

[4] प्रवेशिनामिति. मु. पु. पा. । प्रवेश इति. ख. पु. पा. ।

[5] असिद्धेति मु. पु. पा. ।

[6] "तस्मादग्रहणात्मको भ्रमो नार्थशून्यात्मक इति सिद्धम्" [ऋ. वि. पं. ७८ पृ.] इति पञ्चिकावाक्यमत्र न प्रस्मर्तव्यम् । भ्रान्तिरग्रहबन्धना [न. वी. ७५] इति श्लोकेनेति शेषः ।

[7] ज्ञापितमिति मु. पु. पा. ।

[8] अत्रेदमवधेयम्—यत्राऽन्यैर्दार्शनिकै"श्शुक्ताविदं रजतमि"त्यादौ विशिष्टज्ञानमेक-मङ्गीकृत्य भ्रम इति व्यवह्रियते, तत्र नाऽत्यन्तमसतः पदार्थस्य भानम्, अपि तु अनुभवस्मरण-योस्स्वरूपतः, विषयतश्च मिथो भेदाग्रहादग्रहणरूप एव ।

अयमर्थो धर्मकीर्तिगृहादेव प्रभाकरमिश्रेणाऽग्राहि । यतो हि कीर्तिराह—"शास्त्र-चिन्तकाः खल्वेवं विवेचयन्ति, प्रतिपत्तारस्तु दृश्यविकल्पावर्थावेकीकृत्य बाह्यमेवाऽनुमन्यमाना व्यवहारेषु प्रवर्तन्ते, प्रवृत्ताश्चाऽर्थप्रतिलम्भेनाऽविसंवादं मन्यन्ते" इति । तत एव प्रभाकरमिश्रे-णाऽयमर्थो गृहीतः । अतो भेदाग्रहो न प्रभाकरमिश्रोपज्ञः, अपि तु कीर्तितो गृहीत इति । अमुमर्थं जयन्तभट्टो भ्रमनिरूपणावसरेऽख्यातिं खण्डयन्नाऽऽह । तथा च तत्रत्योऽयं ग्रन्थः—ननु

स्वमतेन मोक्ष-तत्साधननिरूपणम् ।

[१]आत्यन्तिकस्तु देहोच्छेदो निश्शेषधर्माधर्मपरिक्षयनिबन्धनो मोक्ष इति *युक्तम् । धर्माधर्मवशीकृतो हि जीवस्तासु तासु योनिषु संसरति । स तयोरेकान्तोच्छेदे व्यपगतदेहेन्द्रियसम्बन्धस्समुत्खातनिखिलसांसारिकदुःखानुबन्धो मुक्त इत्युच्यते । [२]कथं पुनरशेषधर्माधर्मपरिक्षयः । न तावदुपभोगेनैव । अनादिशरीरसन्ततिसञ्चितानां, भोगसमयेऽपि सञ्चीयमानानामनन्तानां कर्माशयानां क्षेप्तुमशक्तेः । उच्यते—यः खलु सांसारिकेभ्यो दुःखेभ्य उद्विग्नः, तदनुषङ्गशबलेभ्यश्च सुखेभ्योऽपि विगतस्पृहो मोक्षायोत्तिष्ठते, स तावद्बन्धहेतुभूतेभ्यो निषिद्धेभ्यः प्रत्यवायहेतुभूतेभ्यः, काम्येभ्योऽभ्युदयसाधनेभ्यश्च निवर्तमानस्सन्नुत्पन्नपूर्वौ धर्माधर्मौ भोगेन क्षयं नयन्, शम-दम-ब्रह्मचर्यादिकाङ्गोपबृंहितेनाऽऽत्मज्ञानेन[३] "न स पुनरावर्तते" [ छा. उ. अ. ८] इत्यपुनरावृत्तये चोदितेन निश्शेषकर्माशयं नाशयन् मुच्यते । न चाऽपुनरा-

---

स्मरणानुभवयोर्विवेकमप्रतिपद्यमानः प्रवर्तत इत्यश्रुतमिदं यदत्र भवद्भिर्धर्मकीर्तिगृहादाहृतं दृश्यविकल्पावर्थावेकीकृत्य प्रवर्तत इति । किञ्च चौर्यमपि न कथञ्चन स्वार्थं पुष्णाति" [ न्या. मं. पृ. १६७. ] इति ।

* इति सिद्धमिति. मु. पु. पा. ।

१ तस्मादविद्यास्तमयो मोक्ष इति पक्षो न क्षोदक्षम इति तं पक्षं निरस्य मीमांसकानां सम्मतम्मोक्षस्वरूपं, तत्साधनञ्चाऽऽह—आत्यन्तिकस्त्वित्यादिना ।

२ कर्मणश्चाऽल्पीयसो भवपरम्पराप्रापितस्य भोगादेव क्षयः । निश्शेषकर्मक्षयस्तु शमदमब्रह्मचर्याद्यङ्गकेनाऽऽत्मज्ञानेनाऽपुनरावृत्तये श्रुतेनेत्येव न्या. म. पाः ।

३ अत्रेदं बोध्यम्—ज्ञानादेव मोक्ष इति वेदान्तिनस्सङ्गिरन्ते । कर्मणान्तु चित्तशुद्धिसम्पादकत्वेन प्रयाजादिवदारादुपकारकत्वम् । अत एव बहिरङ्गसाधने यज्ञादिकं परिगणयन्ति । मीमांसकास्त्विदमनुपपन्नमिति मन्वाना ज्ञान-कर्मसमुच्चयमेव मोक्षसाधनमित्यातिष्ठन्ते । अत्र ज्ञानशब्देनोपासनमभिप्रेतम् ।

द्वेधा हि समुच्चयो भवति—समप्राधान्येन, गुणप्रधानभावेन चेति । तत्राऽऽद्यं यथा—आग्नेयादिनां षण्णां यागानां समप्राधान्येन समुच्चयः । द्वितीयं यथा—प्रयाज-दर्शपूर्णमासयोः । तत्राऽपि कर्म प्रधानम्, ज्ञानं गुणः, विपरीतं वा । परार्थत्वे प्रमाणाभावात् । अङ्गाङ्गिभावबोधकश्रुत्यादीनां प्रमाणानामन्यतमस्याऽभावात् । पारिशेष्यात्समसमुच्चयपक्ष एव परिशिष्यते । यथोक्तम्—

"उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः ।
तथा वै ज्ञानकर्मभ्यां नराणां मुक्तिरिष्यते ॥" इति ।

**वृत्तेरर्थवादतया वर्णनम्, आत्मज्ञानस्याऽपरार्थत्वात्[4]। परार्थत्वे हि पर्णमयी-* न्यायेन फलश्रुतिरर्थवादतया वर्ण्येत। ज्ञानविधेरपारार्थ्ये तु सैवाऽधिकारि-**

---

एतेन—

"यद्धि यस्याऽनुरोधेन स्वभावमनुरुद्ध्यते।
तत्तस्य गुणभूतं स्यान्न प्रधानाद् गुणो यतः" ॥ इति।

[ मु. वा. श्लो. ६८. पृ. ११८८ ]

प्रधानात्-प्रधानमत्तीति-प्रधानविनाशक इत्यर्थो बोध्यः। देवेश्वराचार्यवचनं चिकित्सितम्। अतो ज्ञान-कर्मसमुच्चयो निश्श्रेयसस्य साधनम्। अत्र ज्ञानमुपासनं निदिध्यासनमित्यनर्थान्तरम्।

"आत्मानमुपासीत" इति, तस्य विधिवाक्यम्। अत्रत्येन लिङाऽपूर्वमेव कार्यत्वेनाऽभिधेयम्। कार्यञ्च कृतिसाध्यम्, कृत्युद्देश्यञ्च। न चाऽपूर्वस्य कृतिसाध्यत्वं साक्षात्सम्भवति, अतो यद्वारा कृतिसाध्यत्वं घटयितव्यम्, स धात्वर्थो यागादिरनुबन्धोऽवच्छेदको विषय इति च गुरुमतमर्मज्ञैर्व्यपदिश्यते। अपूर्वनिष्पत्तावसाधारणकारणत्वाच्च विषयभूतो धात्वर्थः करणञ्च भवति। अयमर्थो विशिष्य विषयकरणीयेऽभिधास्यते ग्रन्थकृता। कार्यं विषयनियोज्याभ्यां निरूप्यत इति तन्मतस्थितिः। यत्तु स्वसिद्ध्यर्थमुपादीयते—आक्षिप्यते, तदपि विधेयमिति तन्त्रव्यवहारः। उपादीयत इत्यस्य प्रतिपदव्याख्यानमाक्षिप्यत इति। [बृ. पृ. ३७.] टीकाकारवचनेनाऽऽनन्दादिकमात्मनो विशेषणमपि विवक्ष्यते। पदानां कार्यान्वये व्युत्पत्तेरन्विताभिधानप्रयोजकग्राहकग्रहणदशायां विज्ञानानन्दादिस्वभावस्योपासनानियोग एवाऽऽत्मनो विज्ञानानन्दादिस्वभावविशिष्टत्वं सम्पाद्य, तदनन्तरं विज्ञानानन्दादिविशिष्टात्मोपासनाक्रियाविषयो भवतीति विधेयता-तात्पर्येण निश्चेयतारूपा पर्यवस्यति।

एवमेव प्राभाकरैः "सौमारौद्रं घृते चरुं निर्वपेत् शुक्लानां व्रीहीणाम् ब्रह्मवर्चसकामः" [ मी. द. अ. ४. पा. ३. अधि१० ] इत्यत्र भिन्नाभ्यां शब्दाभ्यां विशेषणतया श्रुतयोर्व्रीहिद्रव्य-शुक्लगुणयोरविवक्षामाशङ्क्य, ग्राहकग्रहणरूपविध्याक्षेपबलात्तद्विवक्षा समर्थिता दृश्यते। तथा च टीकास्थस्य विधेयशब्दस्य प्रथममारब्धग्राहकग्रहणनिर्वाहाय किञ्चिद्द्वारेण विध्यन्वयित्वेन शब्दबोध्यमित्यर्थो बोध्यः। एवञ्च विध्याक्षिप्तस्य श्रौतत्वे टीकाकृतस्सम्मतिः प्रदर्शिता भवति। उक्तप्रकारेण विषयस्याऽन्वये सति नियोज्यस्याऽऽकाङ्क्षा जायते। तस्याऽस्मिन्वाक्येऽश्रवणात्तत्पूरणमध्याहारेण कर्तव्यम्, तत्र प्रकारद्वयं समस्ति—विश्वजिन्न्यायेन, पिण्डपितृयज्ञन्यायेन वा। विश्वजितो नैमित्तिकाधिकारस्थत्वेन फलकल्पना कृत्वाचिन्तया नेतव्येति, पिण्डपितृयज्ञस्स्थिरोदाहरणत्वेनोदाहृतः। तस्याऽत्यन्तपरोक्षवृत्त्यापत्त्या, रात्रिसत्रन्यायेनैव नियोज्यः परिकल्पनीयः।

तथा हि—"प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति" इति श्रूयते। अस्याऽयमर्थः—अत्र रात्रिशब्देनाऽहोरात्रवाचिना "ज्योति-र्गौ-रायुरिति त्र्यहा भवन्ती"त्यादिवाक्यविहितास्त्रयस्सोमयागा अभिधीयन्ते। अयमत्र संशयः—स्वर्गोऽधिकारिविशेषणम्, अथवा प्रतिष्ठेति।

अत्रैवंकाम इति विशिष्याऽश्रवणाद्विधिशक्तिलभ्यस्स्वर्ग एव विशेषणम्। प्रतिष्ठा-

* "द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादस्स्यादि"ति सूत्रमत्र स्मर्तव्यम्।

विशेषणं रात्रिसत्रवत्*। न च कर्मविधिशेषभूतमात्मज्ञानम्, तस्याऽपरार्थत्वात्, परार्थत्वे प्रमाणाभावात्, [1]उपकारलक्षणशेषत्वनिराकरणादित्यलमतिविस्तरेण।

स्वमतेनाऽऽत्मपरिमाणनिरूपणम्।

ननु मुक्तस्याऽऽत्मनस्सकलोपलम्भातीतस्य[2] सन्मात्रावस्थितौ किं प्रमाणम्? उच्यते—सदकारणञ्च यत्, तदविनाशि गगनवत्। सदकारणश्चाऽयमात्मेत्यविनाशित्वाद्ध्रुवत्वसिद्धिः[3]। परममहत्त्वञ्चाऽऽत्मनः परिमाणं गगनवत्। यत्र यत्राऽऽत्मनो गुण उपलभ्यते, तत्र तत्र तावदात्मा वर्तत इति प्रमाणसिद्धम्। गुणिनमन्तरेण गुणस्याऽवृत्तेः। तत्र ह्येष संशयः—किमसौ गत्वा सन्निधीयते, उत गतिनिरपेक्ष एवेति। तत्र गतिसव्यपेक्षत्वाश्रयणे गतेस्तावत्कल्पना, तस्याश्चाऽसमवायिकारणं कल्पनीयम्। न च तत्र किञ्चन प्रमाणमस्ति। अगच्छतोऽपि सन्निधानोपपत्तेर्गगनवत्। अथोच्येत यत्राऽपि देहो न वर्तते, तत्राऽपि चेदात्मा सन्निधीयते, तदा शरीर इव तत्राऽपि

श्रवणञ्च लक्षणया स्वर्गपरमेवेति पूर्वपक्षसंक्षेपः। सिद्धान्तस्तु—प्रतिष्ठाफलस्य सन्निहितेऽर्थवादे निर्देशात्तदेवाऽधिकारिविशेषणम्। यद्यपि प्रतितिष्ठन्तीति वर्तमानार्थकलटः प्रयोगात्सिद्धरूपैव प्रतिष्ठाऽवगम्यते, न साध्यरूपेति, तस्यैव फलत्वं कल्पनीयम्। ततो वरं विश्वजिन्न्यायेन स्वर्गकल्पनमिति प्रतिभाति। तथाप्यत्यन्ताश्रुतस्वर्गफलकल्पनापेक्षयाऽर्थवादे श्रुताया एव प्रतिष्ठायास्सन्नन्तत्वविपरिणामेन फलत्वकल्पनं युक्तम्। तथा च यत्तच्छब्दयोर्व्यत्यासेन योजनया "ये प्रतितिष्ठासन्ति, त एता रात्रीरुपेयुरि"ति वाक्यविपरिणामेनाऽर्थः कार्य इत्युक्तं प्रयुक्तिलक्षणे "फलमात्रेयो निर्देशादसति ह्यनुमानमि"त्यधिकरणे। तेन न्यायेन "ब्रह्म वेद ब्रह्मैव भवती"ति श्रुत्या ब्रह्मबुभूषुः–अमृतत्वकामः—आत्मानमुपासीतेति विधिःकल्प्यते। अमृतत्वकामनियोज्यकमात्मोपासनाविषयकं कार्यमिति वाक्यार्थः। अत आत्मज्ञानं न परार्थं पर्णतावत्, अपि तु स्वातन्त्र्येण पुरुषार्थम्। अत एवोक्तं व्याकरणाधिकरणे कुमारिलभट्टेन—

"सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते।
परार्थञ्चाऽऽत्मविज्ञानादन्यत्रेत्यवधारणात्"॥ इति।

*अतो रात्रिसत्रन्यायेनाऽधिकारिविशेषलाभादुपासनाविधिस्सेत्स्यतीत्यभिसन्धिमानाऽऽहरात्रिसत्रवदिति।

[1] उपकारकत्वं-शेषत्वमिति वदतो बादरेराचार्यस्य मतं निरस्य "यः परस्याऽत्यन्तमुपकारे वर्तते, तं वयं शेष इति ब्रूम" इति भाष्येण, "शेषः परार्थत्वादि"ति सूत्रेण च परार्थत्वं-शेषत्वमुक्तमित्यनुसन्धेयमित्याशयेनाऽऽह—उपकारकेति।

[2] उपलभ्येति मु. पु. पा.। [3] अविनाशित्वाभाव इति. मु. पा.।

तद्गुणानामुपलब्धिस्स्यादिति । तन्न । यतस्सर्वात्मगुणानामात्म-मनस्सन्निकर्षोऽसमवायिकारणम् । स च संयोगो [1]द्विष्ठतया मनो[2]-विरहेणाऽन्यत्र न वर्तते । मनश्च शरीरस्याऽन्तरवतिष्ठत इत्युक्तम्[3] । यत्रैव चाऽसमवायिकारणम्, तत्रैव कार्यमिति न बहिरात्मनो गुणोपलम्भः ।

नन्वेवं शरीरस्याऽपि गतिकल्पनमप्रमाणकमेव । न । तस्यैकत्र सतोऽन्यत्र दर्शनप्रसङ्गात् । आत्मनस्तु सतोऽपि सकलकरणपथातीतस्य दर्शनप्रसक्तिरापादयितुमशक्येत्यगत्या सर्वसंयोगिभिरात्मा संयुज्यते । तत्तु परममहत्त्वमन्तरेण न सम्भवतीति नाऽणुपरिमाणः, शरीरपरिमाणो वा । शरीरपरिमाणवत्त्वञ्च विना सावयवत्त्वमनुपपन्नम् । तादृशं हि महत्त्वं-अवयवबहुत्व-महत्त्व-प्रचयविशेषाणामन्यतमस्मिन्नायत्तम् । न चाऽवयवकल्पना प्रमाणवती । ननु सर्वगतत्वे पुरुषस्य शरीरान्तरेऽपि भोगप्रसङ्गः । मैवम् । यस्य यच्छरीरं, तस्य तद्भोगायतनम्, यानि च यस्येन्द्रियाणि, तानि तस्य भोगसाधनानीति, नाऽऽयतनान्तरे भोगप्रसङ्गः ।

आत्मनो विभुत्वे भोगसाङ्कर्यशङ्का-समाधाने ।

ननु शरीरेन्द्रियसम्बन्धव्यवस्थैव किन्निबन्धना । उच्यते—धर्माधर्मसम्बन्धनिबन्धनेति भवानवबुद्ध्यताम् । यदीयाभ्यां धर्माधर्माभ्यां यानि शरीरेन्द्रियाण्युपात्तानि, तानि तस्यैव भोगसाधनानीति । धर्माधर्मव्यवस्थैव किमायत्तेति चेत् ? तदुपायभूतकर्मसम्बन्धायत्ता[4] । कर्मसम्बन्धव्यवस्था तु तत्समवायिकारणभूतशरीरेन्द्रियसम्बन्धनिबन्धनेत्यनादितया शरीरेन्द्रियधर्माधर्मसन्ततेस्सर्वमुपपन्नम् ।

आत्मैकत्वशङ्का-निराकरणे ।

*आह—विभुत्वञ्चेदात्मनः, तदा सर्वशरीरेष्वेक एवाऽऽत्माऽस्तु[5] गगनवत् । यथा गगनमेकमेव घट-[6]मणिकादितत्तदनेकसम्बन्धि, तथाऽऽत्मापि किं

---

[1] द्विष्ठतयेति मु. पु. नास्ति । [2] आत्ममनोविरहेणेति. मु. पु. पा. ।

[3] मनश्चाऽन्तश्शरीरमित्यादिग्रन्थेनेति शेषः ।

[4] संबन्धायत्तेत्यादिः कर्मसंबन्धव्यवस्थात्वित्यन्तः पाठो मु. पु. नास्ति । ख पुस्तकानुसारी चाऽयं पाठो मूले सन्निवेशित इति ध्येयम् । [5] आत्मेति मु. पु. नास्ति ।

[6] मणिकम्—बृहज्जलभाण्डमिति वैद्यनाथदीक्षितः [ स्मृ. मु. फ. आ. का. पृ. ३५३ पु. सं. ] प्राह ।

*अद्वैतवासनावासितान्तःकरण एकात्मवादी शङ्कते—शरीरेन्द्रियमनोबुद्धिरूपोपाधिभेदादेवोपपत्तावात्मैकत्वमस्तु, मा भूदात्मभेद इति ।

नाऽभ्युपेयते, किं प्रत्यायतनं भेदाभ्युपगमेन। उच्यते—यस्तावत्प्रतिपत्ता परायतनस्वामिनं स्वप्रयत्नपूर्वकात्मीयशरीरसमवेतकर्मसमानचेष्टादर्शनादनुमानतः प्रत्येति[1] प्रयत्नवत्तया, नाऽसौ तं ग्राहकैकरसतया, किन्तु ग्राह्यकोटिनिविष्टमनात्मभूतमेव। तेन [2]प्रतीतिसिद्धत्वाद्भेदस्य, अलं भेदाभ्युपगमेनेति वचनमकिञ्चित्करम्। न हि [3]परायतनस्वामिनि स्वमित्येवमनुमानमुदेतुमलम्। यथा मम शरीरे मदीयप्रयत्नपूर्विका चेष्टा, तथा परशरीरेऽपि मत्प्रयत्ननिबन्धनैवेति प्रत्यक्षविरोधात्। प्रत्यक्षेण हि स्वात्मनि समवयन्प्रयत्न उपलभ्यते। न च परशरीरचेष्टानुगुणः प्रयत्नस्स्वात्मनि पुरुषाणां प्रत्यक्षीभवतीति, पर एव प्रयतिता परशरीरेऽनुमीयते। नन्वेवमनुमानेन परात्मप्रतीतौ, कथमिदमुच्यते "अगृह्यो न हि गृह्यते" [ बृ. उ. अ. ४. ब्रा. २ ख. ४ ] इति। परेण न गृह्यत इत्येतदभिप्रायमेतद्भवतीत्युच्यते-ग्राहकैकरसतया परेण न गृह्यत इति तस्याऽर्थः, तस्मान्न विरोधः।

किञ्च नानाव्यवस्थाना नानाभूताः प्रतिक्षेत्रं पुरुषाः, [4]धर्मा-धर्म-सुख-दुःखादिव्यवस्थादर्शनात्। अन्यथा ह्येकस्य धर्मा-धर्मादयस्सर्वस्य भवेयुः।

ब्रह्मसिद्धिकृतो मतेन शङ्का।

[5]अत्र कश्चित्पण्डितमानी प्राऽऽह—काल्पनिकी सुखदुःखादिव्यवस्था भविष्यति। यथैकस्मिन्नेव शरीरे पादादिवेदनाव्यवस्था न व्यतिकीर्यते, तथा नानाशरीरेषु न व्यतिकरिष्यत इति! न हि पादगता वेदना शिरसि, न वा शिरोगता वेदना पादे। न च वेदना पादादिष्वेव समवैतीति शक्यते वक्तुम्, तेषामज्ञत्वात्। ज्ञाता हि वेदनाभिस्सह सम्बध्यते, दुःखविशेषरूपत्वात् तासामिति।

तन्निरसनम्।

तदिदं बालजनमोहनमिति *वृद्धाः। "पादे मे वेदना, "शिरसि मे

---

[1] परिच्छिनत्तीति ख. पु. पा.। [2] विरुद्धत्वादिति मु. पु. पा.।

[3] परायतनं स्वमिति मु. पु. पा.।

[4] अत्र धर्मा-धर्मशद्बाभ्यामपूर्वमेव विवक्षितम्। यागादिके तु क्वचिद्धर्मा-धर्मप्रयोगो लाक्षणिक इति गुरूमतनिगर्वः।

[5] तत्र केचित्पण्डितमानिन आहुरिति मु. पु. पाठो दृश्यते। शालिकाचार्यस्सर्वत्र मण्डनमिश्रीयमतानुवादावसरे कश्चिदित्येव निर्दिशति। अतस्तदनुसारेणाऽत्रऽपि मूले कश्चिदित्येव पाठस्स्थापित इति वेदितव्यम्। *प्राभाकरमीमांसका इत्यर्थः।

वेदने''ति सर्ववेदनास्वेको दुःखी प्रकाशते । पादादिषु तु सन्तापादिकं समवैति । [1]तत्र सन्तापस्तेजसा सह संयोगः, शूलस्तु वायुना सहेति वात–पित्त–श्लेष्मणां क्षोभजेषु सर्वेषु विकारेषु वेदितव्यम् । अचेतनानामपि पादादीनां पित्तादिसंयोगो न विरुध्यते । [2]तज्जन्यं दुःखमात्मन्येव समवैति ।

अथोच्येत—यथा प्रतिबिम्बभाव एकस्यैव [3]बिम्बस्य मणिकृपाणदर्पणाद्युपाधिवशेन, व्यवस्थितानि च श्यामत्वादीनि, तथैकस्याऽऽत्मनो नानाशरीरोपाधिवशेन सुखादयो व्यवतिष्ठन्त इति । तदयुक्तम्—श्यामत्वादीनामौपाधिकानामुपाधिवशवर्तित्वाद्बिम्बसम्बन्धाभावात् । तेनैकधर्मिधर्माणां सतामेषा व्यवस्था सम्भवति । सुखादयस्तु नौपाधिकाः, किन्त्वात्मसमवायिन एवेत्येकात्मवर्तित्वेन[4] व्यवस्थानुपपत्तिः । किञ्च सिद्धे व्यक्तमेकत्वे स्यादप्येषा कल्पना, न[5] चाऽऽत्मैकत्वे प्रमाणमस्ति । एकपुरुषश्रुतयश्च प्रागेवोपवर्णितार्था इति, सिद्धं प्रतिक्षेत्रं नानाभूताः पुमांस इति ।

[6]नानाविवादसन्दर्भतमस्सङ्घातभेदनः ।
एष शालिकनाथेन तत्त्वालोकः प्रवर्तितः ॥

इति महामहोपाध्यायश्रीशालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां तत्त्वालोको नामाऽष्टमं प्रकरणं समाप्तम् ॥

---

[1] आयुर्वेदे चरकसुश्रुतादिग्रन्थेषु वातादीनां त्रयाणां धातूनां क्षोभजा विकारा बहवो निरूपिताः । तानेव हृदि निधायाऽऽह—तत्रेत्यादिना—वेदितव्यमित्यन्तेन ।

[2] तदुत्थमिति ख. पु. पा. । तदर्थमिति मु. पु. पा. ।

[3] बिम्बस्येति. मु. पु. नाऽस्ति ।

[4] अयमंशो मु. पु. नाऽस्ति ।

[5] न चेत्यादिः···पुमांस इत्यन्तः पाठो मु. पु. नाऽस्ति । खपुस्तकानुसारेण न्यवेशीति ध्येयम् ।

[6] नानाविवादसंम्भूततमस्सङ्घातभेदिनामिति. मु. पु. पा. ।

# परिशिष्टम् ।

१ आत्मनानात्ववादिभिस्सुख—दुःखसाक्षात्काररूपव्यवस्थानुपपत्त्याऽऽत्मभेद एष्टव्य इत्युच्यते। तन्मतनिराकरणाय मण्डनाचार्य आत्मन एकत्वेऽपि शरीरादिभेदकल्पनया भोगव्यवस्था सङ्घटत इति प्रत्यपीपदत्। तथा च तत्रत्यो ग्रन्थसन्दर्भः—"तथाहि—यत्तु भोगव्यवस्थानादिति। तत्रोच्यते—कल्पितादपि भेदाद्भोगव्यवस्थासिद्धेरसारमेतत्। तथाहि—एकस्मिन्नप्यात्मनि सर्वगते, शरीरपरिमाणे, अणुपरिमाणे वा कल्पितभेदनिबन्धना भोगव्यवस्था दृश्यते—पादे मे वेदना, शिरसि मे वेदना—इति। न हि पादस्य, शिरसो वा वेदनयाऽभिसम्बन्धः, अज्ञत्वात्; शरीरपरिमाणात्मवादिनोऽपि नाऽवयवा एव वेदनाभाजः, आत्मनस्तद्विरहप्रसङ्गात्! स्यादेतत्—ऐकात्म्ये तद्वदेव देहान्तरभोगानुसन्धानं स्यात्। अन्यदिदानीमेतत्। अस्ति तावद्भोगव्यवस्था। अपि च तत्राऽपि न प्रदेशः प्रदेशान्तरवेदनामनुसन्दधाति, तथेहाऽपि न जीवो जीवान्तरवेदनामनुसन्दधातीति समानम्। तथा मणि-कृपाण-दर्पणादिषु मुखादीनां वर्णसंस्थानभेदव्यवस्थानमुपलभ्यते भेदाभावेऽपि। एवञ्च मुक्तसंसारिविभागोऽप्युपपन्नः" [ ब्र. सि. पृ. ७ ] इति। अमुमेवाऽर्थं शालिकाचार्यः कश्चिदाहेत्यादिनोपपादयति। अस्मिन्प्रकरण अद्वैतवेदान्तिनो मतमनूद्य खण्ड्यमानं ब्रह्मसिद्धौ मण्डनमिश्रेणोक्तमित्येव बोध्यम्।

२ अत्रेदं बोध्यम्—शालिकाचार्यो धर्माधर्मसम्बन्धनिबन्धनश्शरीरेन्द्रियसम्बन्ध इत्यभ्युपगमपक्षेऽन्योन्याश्रयत्वदोषं प्रसरीसर्ति। अयन्दोषो व्यक्तिभेदमाश्रित्य परिहर्तव्यः। अयम्भावः—तथाहि बीजाङ्कुरयोर्बीजत्वा-ऽङ्कुरत्वजात्यवच्छिन्नयोः कार्यकारणभावो भवति। तथा धर्माधर्मसम्बन्ध-शरीरेन्द्रियसम्बन्धयोः कार्यकारणभावस्सञ्जाघटीति। तथा चोभयोरनादित्वेन न दोष इति प्रतिपादयाम्बभूव। अपि चाऽयम्प्रकारस्सर्वेषां दार्शनिकानामभिमतः। तैर्थिकानां तादृशानि द्वित्राणि स्थलानि सन्ति, यत्राऽनादित्वाभ्युपगममन्तरेण नाऽन्या गतिस्समस्ति। यथा—ईश्वरस्य सिसृक्षा—परमाणुक्रिययोः। यथा वाऽद्वैतवेदान्तिनां मायासम्बन्धो नित्यशुद्धबुद्धमुक्तस्वभावस्य परस्य ब्रह्मणः। येन ब्रह्म सर्वज्ञं सर्वशक्तिसमन्वितं जगदुत्पत्तिस्थितिलयकारणं भवति। एवं जीवेश्वरादिः, तद्भेदश्च। यथोक्तम्—

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगष्षडस्माकमनादयः"॥ इति

मीमांसकमते शारीरकभाष्यकारस्तत्रभवान् शङ्करस्वामी—अन्योन्याश्रयदोषं समुदवीभवत्। तथा च तदीयं भाष्यम्—"तत्कृतधर्माधर्मनिमित्तत्वंशरीरत्वमिति चेन्न—शरीरसम्बन्धस्याऽसिद्धत्वात्। धर्माधर्मयोरात्मकृतत्वासिद्धेः। शरीरसम्बन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गात्। अन्धपरम्परैषाऽनादित्वकल्पना।" [शा. भा. १.१.४.] इति। अनेन भाष्यसन्दर्भेणोक्तं दूषणं पूर्वोक्तेन हेतुना, प्रत्यभिज्ञाप्रस्तावेऽभिहितेनाऽऽत्मनः कर्तृत्वादिसमर्थनेन च निरवकाशीकृतमित्याशयेनाऽऽह—धर्माधर्मसम्बन्धसमवायेत्यादिना—अनादितया शरीरेन्द्रियधर्माधर्मसन्ततेः" इत्यन्तेन।

३ अत्रेदं बोध्यम्—आत्मवादप्रकरणे वेदप्रामाण्यसिद्ध्यर्थं यज्ञायुधिवाक्यविचारव्याजेन शरीरातिरिक्तात्मनोऽसत्वमाशङ्क्य, शरीराद्व्यतिरिक्तस्याऽऽत्मत्वं प्रत्यपादि भगवता

शबरस्वामिना भाष्यकृता। तच्चाऽऽत्मज्ञानमुपनिषत्सु श्रूयते द्विविधम् क्रत्वर्थम्, पुरुषार्थञ्चेति। तत्राऽऽद्यम्—"अविनाशी वाऽरेऽयमात्मा" इत्यादिना प्रतिपाद्यते। तच्च कर्मानुष्ठानोपयुक्तत्वात् "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिविधिवाक्यार्थज्ञानवत्कर्माङ्गम् दृष्टार्थत्वात्। "एतेन तत्क्रत्वर्थकर्तृप्रतिपादनेनोपनिषदां नैराकांक्ष्यं व्याख्यातम्" [तं.वा.पृ.११८] इति वार्तिकमपि स्वरसमस्मिन्नर्थे। "आत्मा वाऽरे द्रष्टव्य" इत्यादिकन्तु वक्ष्यमाणस्यार्थस्याऽतिगहनत्वान्महोपयोगित्वकथनायाऽऽलस्यं विहाय, श्रद्धातिशयेन वक्ष्यमाणमर्थं नरः प्रतिपद्येत इत्येतावन्मात्रप्रयोजनकमेव।

तथा च भट्टपादवचनम्—

"आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम्।

कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते"॥ [श्लो. वा. सं. आ. परि. श्लो. १०२] इति।

द्वितीयन्त्वितिकर्तव्यताविशेषसंयुक्तान्युपासनात्मकानि विधीयन्ते "आत्मानमुपासीते"त्यादिभिः। तेषां कर्मणि यागादौ, पुरुषे वा दृष्टप्रयोजनाभावात्, अदृष्टापेक्षायामङ्गत्वबोधकश्रुत्यादीनामन्यतमस्याऽभावेन क्रत्वर्थत्वासम्भवात्, वाक्यशेषोपनीतनिःश्रेयसफलकतया पुरुषार्थत्वमेव स्वीक्रियते। यद्यप्यनुमानादिनाऽवगतः "अहं स्थूलः" "अहं गच्छामी"त्यादिशरीर एवाऽहमाकारदर्शनात्प्रमाणान्तरप्रतिपादितेऽप्यात्मनि शरीरादिविवेको न दृढरूपेण हृदयेऽवतिष्ठते। अत उपनिषदवष्टम्भनेन नित्यात्मसत्तामात्रेण वेदप्रामाण्यसिद्ध्यर्थमेव तावन्मात्रं प्रत्यपादि भगवता शबरमुनिना।

एतेन भाष्यकृतोऽयमप्याशयो लक्ष्यते। सत्सु बहुष्वाऽऽत्मनोऽकर्तृत्वा-भोक्तृत्वादिप्रतिपादकेषु वाक्येषु नित्यत्वप्रतिपादनपराणि वेदान्तवाक्यान्युदाहार्षीत्तत्रभवान् भाष्यकारः, न त्वकर्त्र-भोक्त्रात्मप्रतिपादकानि वाक्यानि। तेषामुदाहरणे कर्मशरणानां कर्मणि शैथिल्यमापद्येत। अत एव प्रभाकरमिश्र आत्मवादान्ते—"तस्मान्न विवृतं भाष्यकारेण भगवता "न बुद्धिभेदं जनयेदि"त्यादिद्वैपायनवचनानुरोधात्, "नाऽऽज्ञानादि"त्युपसमाहार्षीत्" [बृ. पृ. २५६]। तस्मात्कर्मानुष्ठानोपयोग्यात्मतत्त्वं प्रतिपादयन् भाष्यकारशिष्याणां व्यामोहं दूरीचकार। तदेव व्याख्यातृभिः कुमारिलभट्ट-प्रभाकरमिश्रप्रभृतिभिस्सर्वैस्समादृतः, समर्थितश्चेति विबुधैरवधेयम्।

४ इन्द्रियाण्येवाऽऽत्मेति पक्षः लोकायतविशेषाणामेवाऽभिमत इति सर्वेष्वपि प्रामाणिकेषु ग्रन्थेषूपन्यस्तो निरस्तश्च दृश्यते। किंवदन्त्यप्येतादृश्येव। परं नन्दीश्वरविरचितप्रभाकरविजयस्याऽष्टमे प्रकरणे भगवतस्सत्यतपसो द्रष्टुश्चक्षुषो मे नाऽस्ति जिव्हेति पौराणिकवचनोपन्यासेनाऽयं पक्षः पौराणिकानामित्यवगम्यते। तत्त्वन्त्वीश्वरो वेत्तीति ध्येयम्। अयमपीन्द्रियात्मवादोपन्यासावसरे पौराणिकानामेव मतमित्यवतारितो ग्रन्थोऽस्माभिरिति।

५ अत्रेदमवधेयम्—मोक्षाध्वनीनानामस्ति सार्थद्वयी—केचिन्मोक्षं भावात्मकमाचक्षते, अपरेत्वेनमभावात्मकमाहुः। तत्राऽऽद्यपक्षे सालोक्य—सामीप्य—सारूप्य—सायुज्यप्रकारा विदुषामभिमताश्चकासति। द्वितीयपक्षेऽपि दुःखप्रागभावं केचनाऽऽशेरते, अपरे तु दुःखात्यन्ताभावम्, अन्ये तु निखिलदुःखध्वंसरूपं वर्णयन्ति यथारुचि। उभयत्राऽपि भगवती श्रुतिस्साहाय्यमाचरति। "ब्रह्म वेद ब्रह्मैव भवति" "आनन्दो ब्रह्मेति व्यजानात्" 'तरति शोकमात्मवित्" "न ह वै सशरीरस्य सतो न प्रियाप्रिये स्पृशतः" इत्याद्याः। यथा जायमानो हि जनुष्मान् चेतनः प्रेक्षावानिष्टप्राप्तिं कामयते, तथैवाऽनिष्टपरिहारमपि वष्टितमाम्, इति

सार्वजनीनमेतत् । अत एव लोके भारापगमे सुखी संवृत्तोऽहमित्यबाधितोऽनुभवस्समीक्ष्यते । अत उभयमपि प्राणिमात्रस्य समभिलषितमिति मनीषिणः पूर्वे उभयोरपि पुरुषार्थत्वमास्थिषत ।

एकविंशतिप्रभेददुःखध्वंसो मोक्ष इति तार्किकाः कीर्तयन्ति । देहः, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं, दुःखञ्चेत्येकविंशतिप्रभेदभिन्नमाचक्षते । इदन्त्वापातरमणीयमिति विवेकिनो मन्यन्ते । तेषामयम्भावः—सुखस्याऽपि विनाशेन मुक्तेरपुरुषार्थत्वं प्रसज्येत । अमुमर्थं श्रीहर्षमिश्रो ब्रवीति—

"मुक्तये यश्शिलात्वाय शास्त्रमूचे सचेतसाम् ।

गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः ।। [ नै. च. स. १७ श्लो. ७५ ] इति ।

तत्राऽद्वैतिनः—अविद्यानिवृत्तिः, आनन्दावाप्तिर्वा परमपुरुषार्थ इत्युभयमाद्रियन्ते । परन्त्वन्यतरस्य नाऽन्तरीयकत्वेन गुणप्रधानभावविवक्षयाऽऽनन्दावाप्तिर्मोक्षः, अविद्यास्तमयो वेत्येवं व्यवहरन्तो दृश्यन्ते । यथोक्तं दीक्षितकुलावतंसेन नीलकण्ठमखिना—

"अबोधहतिरित्यानन्दविस्फूर्तिरिति" ।

भाट्टमीमांसकास्तु—प्रपञ्चविलयो मोक्षः, एकविंशतिदुःखध्वंसो मोक्ष इति च मतद्वयं निरस्यन्तः प्रपञ्चसम्बन्धो बन्धः, प्रपञ्चसम्बन्धविलयो मोक्ष इत्याशेरते । त्रिधा हि शरीरादिप्रपञ्चः पुरुषशब्दवाच्यमात्मानं बध्नाति । तत्र भोगायतनं शरीरम्, भोगसाधनानीन्द्रियाणि चक्षुरादीनि, आन्तरिन्द्रियं मनश्च । भोग्याश्शब्दादयो विषयाः । भोगशब्देन सुखदुःखसाक्षात्कारोऽभिधीयते । तथा चैतत्त्रिविधस्याऽपि बन्धस्याऽत्यन्तिकसमुच्छेदो मोक्षः । उच्छेदे आत्यन्तिकत्वञ्च पूर्वोत्पन्नानां देहेन्द्रियविषयाणां विनाशः, अनुत्पन्नानामात्यन्तिकोऽनुत्पत्तिः । स च तदुत्पादकयोर्धर्माधर्मयोर्निश्शेषयोः परिक्षयात्, देहादीनामात्यन्तिकी निवृत्तिः । प्रारब्धकर्मणां भोगेनैव परिक्षयः । नित्यनैमित्तकयोरनुष्ठानं प्रत्यवायपरिहाराय, काम्यानाम्, प्रतिषिद्धानाञ्च कर्मणां परिवर्जनम् । देहान्तरारम्भेऽसति, वर्तमानस्य शरीरस्य पातात्स्वरूपेणाऽवस्थानं मोक्ष इति । अत एवोक्तं वार्तिकक्कता—

"मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।

नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया" ।। [श्लो. वा. सं. आ. परि. श्लो. ११०] इति ।

ततस्स्वेन रूपेणाऽवस्थानमिति पर्यवस्यति । तत्राऽऽत्मानन्दोऽभिव्यज्यते, न तु संसारदशायाम्, अनुभवहेतोरभावात् । देहेन्द्रियादीनामात्मान्तिकध्वंसानुगृहीतं मनस्तदनुभवसाधनम् । तत्र प्रमाणम्—"आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यत" इति श्रुतिः । "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति च्छन्दोगानां श्रुतिर्वैषयिकप्रियाप्रिययोस्स्पर्शं निषेधतीति ।

अत एव दर्शनान्तरेषु । मोक्षाभिधानप्रसक्तौ नित्यसुखाभिव्यक्तिर्मोक्ष इति मीमांसका इत्यनूदितं दृश्यते । अयमेव पक्षश्चिदानन्दपण्डितेन "वयन्तु सकलदुःखविलये सति नित्यनिरतिशयानन्दाभिव्यक्तिलक्षणं मोक्षमाचक्ष्महे" [नी. तत्व. पृ. २१९] इति वदता, नारायणभट्टेन मानमेयोदये प्रमेयप्रकरणे च [पृ. २२] सयुक्तिकं व्यवस्थापितो दृश्यते । परन्तु भाट्टवार्तिक—प्रकरणपञ्चिका—शास्त्रदीपिकादिग्रन्थपर्यालोचने त्वात्यन्तिक आत्मविशेषगुणोच्छेदरूप एव मोक्षो भट्टपादादीनां मीमांसकानामभिमत इति स्फुटमवगम्यते । प्रत्युताऽऽनन्दावाप्तिरिति पक्षस्य विस्तरेण खण्डनम्, आनन्दादिश्रुतीनां दुःखाभावपरतया च व्याख्यानमुपलभ्यते ।

वार्तिकावष्टम्भेनैव शालिकनाथमिश्रेण मोक्षस्वरूपमुपावर्णि । तामेव सरणिमनुसृत्य पार्थसारथिश्शास्त्रदीपिकायास्तर्कचरण आत्मवादान्तेऽद्वैतश्रुतीनां स्वाभिमतार्थयोजनेन आनन्दावाप्तरिति पक्षमुपमर्दयन्, आत्मवैशेषिकगुणोच्छेदरूपमेव मोक्षतत्त्वं वर्णयामास ।

गागाभट्टापरनामधेयो नारायणभट्टकुलावतंसो विश्वेश्वरसूरिर्मोक्षविचारप्रकरण आत्यन्तिकदुःखप्रागभावमेवाऽपवर्गमाचक्षते गुरुमतमर्मज्ञा इत्युदलीलिखत् । "आत्यन्तिदुःखप्रागभावो मोक्ष इति गुरवः" [ भा. चि. पृ. ४२ ] इति ।

मानमेयोदयस्य पूरको द्वितीयो नारायणभट्टो बुध्यादिविशेषगुणविलये सत्याऽऽत्मनस्स्वरूपेणाऽवस्थानं मोक्ष "इति प्राभाकरमतमिति । [ मा. मे. ३ पृ. ८८ ] प्रतिपादयति ।

गुरुमते सुखविलयादपुरुषार्थत्वानुपपत्तिं दर्शयति, भट्टमत आनन्दानुभवञ्चेति पूर्वं प्रादीदृशाम ।

"शिवाग्र्ययोगिनाऽऽत्यन्तिकदुःखानुत्पादो मोक्ष इति प्राभाकराः" [ शि. भा. पृ. ४७५-४७६ ] इति प्रतिपादितो दृश्यते ।

तत्रोत्पन्नानां नित्यानाम्, नैमित्तिकानाञ्च कर्मणामनुष्ठानेन, भोगेन, आत्मज्ञानेन चोच्छेदो जायते । अत्रोत्पत्स्यमानानां काम्यकर्मानुष्ठानेनैवोत्पत्तिर्भविष्यतीति, काम्यकर्मपरित्यागेन तेषामनुत्पत्तिरेवोच्छेदो विवक्षितः । भाविनान्त्वधर्माणां विहितस्य नित्यनैमित्तिककर्मकलापस्य परित्यागान्निषिद्धस्य निषेवणादुत्पत्तिर्भविष्यति, विहितस्याऽनुष्ठानात्प्रतिषिद्धस्य परित्यागात्तेषां याऽनुत्पत्तिः, सैवोच्छेदः । अत्र मुक्तस्य शरीरेन्द्रियादिकं नाऽस्ति, नाऽप्यानन्दोऽनुभूयते मुक्तावस्थायाम् । किन्तु भारापगमे सुखी संवृत्तोऽहमितिवत्सांसारिकसकलदुःखनिवृत्त्यैव मोक्षस्य पुरुषार्थत्वं प्रतिपादितम् । ईदृशञ्च मतं वार्तिककारादिभिरुन्नीतमिति प्रतीयते । सूत्र-वृत्ति-भाष्यादिष्वदर्शनादिति वयं प्रतीमः ।

अयमर्थः—वेदान्तदर्शने भाष्यकृता शङ्कराचार्येणोपपादितो दृश्यते । तथा च भाष्यसन्दर्भः—"यत्तु कैश्चिज्जल्प्यते—नित्यानि नैमित्तिकानि कर्माण्यनुष्ठीयन्ते प्रत्यवायानुत्पत्तये, काम्यानि प्रतिषिद्धानि च परिह्रियन्ते स्वर्ग-नरकानावाप्तये, साम्प्रतदेहोपभोग्यानि च कर्माण्युपभोगेनैव क्षप्यन्त इत्यतो वर्तमानदेहपातादूर्ध्वं देहान्तरप्रतिसन्धानकारणाभावात्स्वरूपावस्थानलक्षणं कैवल्यं विनाऽपि ब्रह्मात्मतयैवंवृत्तस्य सेत्स्यतीति । तदसत् । प्रमाणाभावात् । न ह्येतच्छास्त्रेण केनचित्प्रतिपादितं मोक्षार्थीत्थं समाचरेदिति । स्वमनीषया त्वेतत्तर्कितं-यस्मात्कर्मनिमित्तस्संसारः, तस्मान्निमित्ताभावान्न भविष्यतीति । न चैतत्तर्कयितुमपि शक्यते निमित्ताभावस्य दुर्ज्ञानत्वात्" [ शां. भा. अ. ४. पा. ३. अ. ५ ] इति ।

अपि च—अध्वरमीमांसकानां द्विविधं मोक्षस्वरूपमभिमतमिति दर्शनान्तरपरिशीलनेनाऽवगम्यते—काम्यप्रतिषिद्धयोरनारम्भादारब्धफलस्योपभोगेन क्षयान्नित्यनैमित्तकयोः कर्मणोरनुष्ठानेनाऽयत्नतयैव स्वात्मन्यवस्थानं मोक्ष इति प्रथमः प्रकारः, निरतिशयायाः प्रीतेस्स्वर्गशब्दवाच्यायाः कर्महेतुत्वात्कर्मभ्य एव मोक्ष इति च द्वितीयः प्रकारः । तत्राऽद्यस्य प्रकारस्याऽयमाशयः । तथा हि—जीवस्य शरीरेऽवस्थानं किल बन्धहेतुरित्युच्यतेऽभियुक्तैः । "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहृतिरस्ति" इति श्रुतेः । आत्यन्तिकेन शरीरसम्बन्धाभावेन युक्ते स्वस्वरूपेऽवस्थानं मोक्ष इति गीयते विचक्षणैः । "अशरीरं वा व सन्तं न प्रिया-

प्रिये स्पृशतः" इति च्छान्दोग्यश्रुतेः । स चाऽत्यन्तिकश्शरीरसम्बन्धाभावः कर्मभिरेव सिध्यति, यतो हि काम्यमिष्टिपश्वादिकं देवादिशरीरप्राप्तिहेतुः । प्रतिषिद्धं ब्राह्मणहननादिकं तिर्यगादि-शरीरप्राप्तिहेतुः । नित्यानाम्, नैमित्तिकानाञ्च कर्मणामननुष्ठानं प्रत्यवायजननद्वारेण नारक्यादिशरीरप्राप्तिहेतुः । "कर्मजन्योपभोगार्थं शरीरं नः प्रवर्तते" इत्यभियुक्तोक्तेः । अतो मुमुक्षुणा सर्वात्मना काम्यप्रतिषिद्धयोरनारम्भान्नित्यनैमित्तिककर्मणां सम्यगनुष्ठानेन प्रत्यवाया-नुत्पादान्न भाविजन्मप्राप्तिस्सम्भाव्यते । आरब्धफलयोः पुण्यपापकर्मणोरुपभोगेनैव क्षयान्न ततोऽपि भाविजन्मप्राप्तिर्न शङ्कितुं शक्यते ।

तथा च मुमुक्षोरेवं वर्तमानस्याऽऽत्यन्तिकशरीरसम्बन्धाभावशब्दितस्स्वात्मन्येवाऽवस्था-नलक्षणो मोक्षस्सिध्यति । अतः कर्मभ्यो मोक्ष इति । अत्र च शरीरसम्बन्धस्य कर्मनिमित्त-कत्वेन "निमित्तस्याऽपाये नैमित्तिकस्याऽपाय" इति न्यायेन शरीरसम्बन्धाभावरूपमोक्षस्य कर्मसाध्यत्वोक्तिरिति प्रथमपक्षस्याऽभिप्रायः ।

द्वितीयपक्षस्याऽयमभिप्रायः—यान्यग्निहोत्र-दर्शपूर्णमास—चातुर्मास्यादिकर्माणि स्वर्गसाध-नत्वेन श्रुतानि "ज्योतिष्टोमेन स्वर्गकामो यजेत" "अग्निहोत्रं जुहुयात्स्वर्गकामः" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादिवचनैः। तान्येव मोक्षसाधनं संयोगपृथक्त्वन्यायेन। "एकस्य तूभयत्वे संयोगपृथक्त्वमिति" चातुर्थिकेऽधिकरणे सिद्धोऽयं न्यायः । स्वर्गशब्दवाच्यस्य निरतिशयसुखस्य स्वरूपानन्दलक्षणान्मोक्षात्पार्थक्यासम्भवात् । श्रुतिरपि निरतिशयप्रीतिरेव स्वर्गशब्दवाच्येत्य-वगमयति । यथा—

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्" ।। इति ।

त्रिविष्टपादिजनितसुखविशेषे दुःखासम्भिन्नत्वादिविशेषणानामसम्भवात् । तत्र प्रयोगः लाक्षणिक इति सुरेश्वराचार्यैर्बृहदारण्यकभाष्यवार्तिकेऽभ्यधायि । तदेवाऽप्पय्यदीक्षितैः कल्पतरु-परिमलेऽभिहितमिति शास्त्रपरिच्छेदेऽवोचाम । अतो निरतिशयप्रीतिरूपमोक्षस्य कर्महेतुकत्व-प्रतीतेः कर्मभ्यो मोक्षस्सिध्यति । तत्राऽद्यपक्षे ऐकभविकस्सर्वेषां कर्मणां भोगेन क्षय इत्यपि विशेषो बोध्यः । तत्राऽद्यपक्ष एव कुमारिलभट्टेन वार्तिककृतोपापादीत्यग्रे वक्ष्यते—तथाहि

"य आत्मा अपहतपाप्मा विजरो विमृत्युः विशोकः विजिघत्सः अपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मानमुपासीत्" इति कामवाद-लोकवाद-वचनविशेषैर्जिज्ञासा—मननसहितात्मज्ञानविधानापेक्षितवाक्यान्तरोपात्तद्विविधाभ्युदय—निश्श्रेयस-रूपफलसम्बन्धः "स सर्वांश्च लोकानाप्नोति" "तरति शोकमात्मवित्" "स यदि पितृलोककामो भवति सङ्कल्पादेवाऽस्य पितरस्समुत्तिष्ठन्ति" तेन पितृलोकेन महीयते" इत्यादिना वाक्य-सन्दर्भेण योगजन्याणिमाद्यष्टैश्वर्यफलानि वर्णितानि । तथा "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थाफलवचन-मि"त्यादिवार्तिकसन्दर्भेणाऽऽत्मज्ञानस्य क्रत्वर्थत्ववत्पुरुषार्थत्वं वर्णितं कुमारिलभट्टेन । अत्राऽऽत्म-ज्ञानपदेन जीवात्मज्ञानमुत, परमात्मज्ञानं वा विवक्षितमित्यत्राऽध्वरमीमांसकानां ब्रह्ममीमांस-कानाञ्च विवादो जागर्ति । तत्र ब्रह्ममीमांसकाः श्रुतिशिरसामेव प्राधान्यम्, कर्मकाण्डस्य तदुपकारकत्वेन तदङ्गत्वमिति वदन्तो निखिलजगदेककारणभूतं सर्वज्ञं सर्वशक्तिसमन्वितं परमात्मानमभ्युपगच्छन्तस्तज्ज्ञानमेवाऽत्र विवक्षितमित्याशेरते ।

अध्वरमीमांसकास्तु---कर्मकाण्डस्य प्राधान्यमाचक्षाणाः परलोकसाधनेषु दर्शपूर्णमास---ज्योतिष्टोमादिकर्मसु देहातिरिक्तात्मज्ञानं विना प्रवृत्त्यसम्भवाज्जीवात्मज्ञानमेवाऽत्र विवक्षितमिति वदन्ति। कुमारिलभट्टस्तु --आत्मज्ञानस्य संयोगपृथक्त्वन्यायेन निश्श्रेयसफलकमिदमात्मज्ञानमित्येवमवादीत्। अत एव तेषामुपनिषद्वाक्यानामर्थवादत्वशङ्कां निरस्य, मोक्षसाधनञ्चाऽऽत्मज्ञानं कर्मसमुच्चितमिति सुविशदमाह। अप्रकरणगतत्वेनैकान्तिकक्रतुसम्बन्धाभावाच्च। नाऽञ्जन-खादिरस्रुवादिफलश्रुतिवदर्थवादत्वम्। न च ज्ञानविधानेन कर्मसम्बन्धवारणम्। प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्माण्यपि पूर्वोपात्तदुरितक्षयार्थमकरणनिमित्तानागतप्रत्यवायपरिहारार्थञ्च कर्तव्यानि। न च तेषां भिन्नप्रयोगत्वाद्भिन्नमार्गत्वाच्च बाधविकल्प-परस्पराश्रयिभावास्सम्भवन्तीति। अनेनोपर्युद्धृतवचनसन्दर्भेण ज्ञानकर्मसमुच्चयवादो मोक्षसाधनत्वेन वार्तिककृताऽङ्गीकृत इति स्पष्टमवगम्यते। अयमर्थस्सोमेश्वरेण राणकापरनामके न्यासुधाभिधाने तन्त्रवार्तिकव्याख्याने बृहट्टीकावचनैस्स्पष्टीक्रियते स्म। यथा—

"ननु निश्श्रेयसं ज्ञानाद्बन्धहेतोर्न कर्मणः।
नैकस्मादपि तत्किन्तु ज्ञानकर्मसमुच्चयात्॥
नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानञ्च विमलीकुर्वन्नभ्यासेन च पाचयेत्॥
वैराग्यात्पक्वविज्ञानः कैवल्यं लभते नरः।
न च ज्ञानविधानेन कर्मसम्बन्धवारणम्"॥ इति।

अस्य चाऽभिप्रायो भट्टसोमेश्वरेण स्पष्टीकृतः। "अत एवाऽऽत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितमित्यत्रैतच्छब्दप्रयोगेण संसारिरूपात्मज्ञानस्यैव कर्मप्रवृत्तिहेतुतोक्ता। असंसारिरूपात्मज्ञानस्य तु कर्मप्रवृत्त्यर्थत्वायोगात्पुरुषार्थतैव युक्तेत्याशयः" [न्या. सु. पृ. ३२६] इत्यादिग्रन्थेन। अस्माभिरपि "अविनाशी वाऽरे अयमात्मा" इति प्रतिपादनावसर ईदृश एव भाष्याशयः प्राकाशि। एवं सति श्लोकवार्तिकोक्तस्य मोक्षस्वरूपस्य तत्साधनस्य चाऽसाङ्गत्यं नाऽऽशङ्कनीयम्। उभयोर्वचनसन्दर्भयोर्विरोधस्य सामञ्जस्योपपादनेन परिहृतत्वात्। भट्टसोमेश्वरोक्तप्रमेयजातस्य मूलभूतं पार्थसारथिमिश्रस्य श्लोकवार्तिकव्याख्याने सम्बन्धाक्षेपपरिहारप्रकरणस्थं वचनजातमेवेति ध्येयम्। यथा द्विविधमात्मज्ञानमुपनिषत्सूपदिश्यते, देहाद्विवेकज्ञानम्—"अविनाशी वा अरे अयमात्मेत्यदि" "अथाऽऽत्मानमुपासीते"ति प्राणायामाद्यङ्गोपेतमुपासनात्मकं ज्ञानम्। उपासनात्मकस्य तु ज्ञानस्य कर्मणि पुरुषे च दृष्टप्रयोजनाभावाददृष्टापेक्षायां श्रुत्याद्यभावेन क्रत्वर्थत्वाभावाद्वाक्यशेषोपनीताभ्युदयनिश्श्रेयसफलतया रात्रिसत्रवत्पुरुषार्थत्वमेवेति व्याकरणाधिकरणे वक्ष्यतीति। एवं शेषलक्षणे "एकत्वयुक्तमेकस्य श्रुतिसंयोगात्" [मी. द. ३. १. १३.] इत्यधिकरणे "ग्रहं सम्मार्ष्टी"त्यत्र किमेकस्य ग्रहस्य सम्मार्गः? उत प्राकरणिकग्रहमात्रस्येति। तत्रोद्दिश्यमानस्य किं संख्या विवक्ष्यते उत नेति संशयमुपन्यस्य, विवक्षाशब्दव्याख्यानाय प्रवृत्तो वार्तिककारोऽन्तर्यामिब्राह्मणावलम्बनेन परमात्म तत्त्वं प्रतिपादितवान्, अतोऽपि हेतोरुपनिषत्सु प्रतिपाद्यमानमात्मज्ञानं द्विविधम्—आद्यं कर्मानुष्ठानप्रवृत्तिहेतुः, द्वितीयं निश्श्रेयसफलकमिति सुस्पष्टमवगम्यते। तस्माज्ज्ञानकर्मसमुच्चयवादो मीमांसकानामभिमतः। तत्राऽपि समसमुच्चय इति प्राग्व्यशीशदाम—इति।

---

# [1]न्यायशुद्धिर्नाम नवमं प्रकरणम् ।

[2]अपौरुषेये सम्बन्धे शब्दः प्रामाण्यमृच्छति ।
स च नित्यत्वसिद्धौ स्यादिति तत्प्रतिपाद्यते ॥१॥

यद्युच्चरितमात्रविनाशी शब्दो भवेत्, तदा तस्य वृद्धव्यवहारेण स्वाभाविकी स्वार्थाभिधानशक्तिरवसातुमशक्या । भूयोभूयः प्रयोगदर्शने हि तत्तदस्वार्थपरिहारेण निष्कृष्य स्वार्थाभिधानसामर्थ्यमवधार्यते । न चोच्चरितमात्रापवर्गिणश्शब्दस्य पुनःपुनः प्रयोगदर्शनमुपपद्यते । स्वार्थाभिधानसामर्थ्यानवधारणे च प्रथमश्रुत इव शब्दो नाऽर्थमवबोधयितुमलम्[3] । अर्थञ्चाऽनवबोधयतः प्रामाण्यमयुक्तमिति, शब्दस्य प्रामाण्यमिच्छता युक्तमभिधानस्य नित्यत्वस्थापनमिति सप्रयोजनमिदम् ।

ननु क्षणिकत्वेऽपि वर्णानां [4]गत्वादिविषयवृद्धव्यवहारपूर्वकमेव सम्बन्धाध्यवसानमुपपद्यते, किं नित्यत्वस्थापनयत्नेन । उच्यते—न प्रत्युच्चारणं भिन्नेषु वर्णेषु गत्वादिकं कल्पयितुं शक्यते, भेदाग्रहेणाऽपि शुक्तिकार[5]जतबोधवदभेदप्रत्ययाभिमानोपपत्तेः । यत्र हि भेदमध्यवस्यत एवाऽभेदज्ञानम्, तत्राऽन्यथानुपपत्त्या सामान्याश्रयणं घटते । न चाऽनित्यत्ववादिनोऽपि[6] वर्णेषु प्रत्युच्चारणं साक्षाद्भेदाध्यवसानं सम्मतम् ।

ननु च युक्तं शुक्तिकारजतादिषु भेदाग्रहणादभेदव्यवहार इति सामान्यासम्भवः, नेदं रजतमिति बाधकप्रत्ययोदयात्, इह तु सामान्योपपत्तेर्भ्रान्तिकल्पना निष्प्रमाणिकैव, नाऽयं गकार इति बाधकाभावात् । उच्यते । न

---

[1] न्यायशुद्धिरिति भवनाथमिश्रेण [ नय. वि. पृ. २५४ ], रामानुजाचार्येण तन्त्ररहस्ये च, [पृ. २४] तथैव व्यवहृतो दरीदृश्यते । परं गसंज्ञके पुस्तकेऽपि न्यायशुद्धिरिति संशोधितः पाठस्समवलोक्यते । अनेककोशानुसारेण न्यायशुद्धिरित्येव पाठो युक्त इति, स एव मयोपरि सन्यवेशीति ध्येयम् । शब्दनित्यत्वनिर्वचनपरमिति मुद्रिते पुस्तके पाठोऽधिको दृश्यते । गपुस्तके शब्दनित्यत्वसाधनपरमिति संशोधितोऽवलोक्यते । प्रकरणपर्यालोचनयाऽर्थसिद्धत्वात्सोंऽशोऽस्माभिः परित्यक्तः, वाजिनवदनुनिष्पादित्वादिति बोध्यम् ।

[2] सम्बन्धिद्वयाधारो हि सम्बन्धो भवति । सम्बन्धनित्यत्वं सम्बन्धिनश्शब्दस्य नित्यत्वमन्तरेण न सम्भवतीति, शब्दस्य नित्यत्वमाक्षेप-समाधानाभ्यां प्रतिपादयितुमाह—अपौरुषेयेति ।

[3] अवधारयितुमिति. मु. पु. पा. ।

[4] तत्तद्गवादीति. मु. पु. पा. ।

[5] बोधेति. मु. पु. नास्ति ।

[6] अपीति. मु. पु. नास्ति ।

बाधकमात्रायत्तैव भ्रान्तिकल्पना, किन्तु कारणदोषायत्ताऽपि। दृष्टश्चाऽतिसादृश्याद्भेदाग्रहणाद् भ्रान्तित्वमिति, साक्षादनुपजातेऽपि बाधके, युक्तमेव भ्रमावधारणम्। अतो न गत्वादिस्तत्र सम्भवति।

[1]अभिव्यञ्जकवैधर्म्यादभिव्यक्तेरसम्भवे।
प्रयत्नानन्तरं दृष्टेरभिधानं प्रयत्नजम्॥२॥

[2]किञ्च पुरुषप्रयत्नानन्तरं हि श्रवणं शब्दस्य द्वेधाऽवकल्पते—प्रागजातत्वादनुपलब्धः, प्रयत्नेन जनित उपलभ्यतामापद्यते, अनभिव्यक्तत्वाद्वाऽभिव्यज्यत इति। तत्र न तावत्—प्रयत्नस्य शब्दं प्रत्यभिव्यञ्जकत्वं सम्भवति। [3]आवरणापायेन किञ्चिदभिव्यज्यते, सन्निधानेन [4]वा। न च शब्दस्याऽऽवरणमुपपद्यते। इन्द्रियसम्बन्धप्रतिबन्धेन ह्याऽऽवरणं कुड्यादिना घटादेरुपलब्धम्। न च शब्दस्येन्द्रियसम्बन्धः प्रतिबन्धुं शक्यते, नित्यत्वात्। उत्पत्तिनिरोधो हि प्रतिबन्धः। न चाऽसौ नित्यस्योपपद्यते। आकाशो हि श्रोत्रेन्द्रियं शब्दवत्त्वात्, शब्दोपलम्भकतया च शब्दवत्त्वं चक्षुर्वत्। यथा—चक्षू रूपोपलम्भकं रूपवत्, तथा श्रोत्रमपि शब्दवत्। आकाशश्च शब्दवानिति स एव श्रोत्रम्, तद्गुणश्च शब्दस्तस्मिन्नित्यसमवेत इति, न तस्याऽऽवरणसम्भवः। अतस्तदपनयेन नाऽभिव्यक्तिः। अत एव सन्निधानस्याऽसम्भवः, नित्यसन्निधानादभिव्यङ्ग्यस्य।

किञ्च—अभिव्यञ्जकास्समानदेशस्थानेकेन्द्रियग्राह्यान् युगपदेवाऽभिव्यञ्जयन्ति, रूपादीनिव प्रदीपादयः। रूपम्, परिमाणम्, संख्येति सर्वं सकृदेव प्रदीपादिभिरभिव्यज्यते। अतस्सर्वशब्दोपलम्भो दुर्निवार एव। किञ्च-आकाशविशेषगुणत्वाच्छब्दस्य, एकत्वादाकाशस्य स्रुघ्नस्थेनाऽभिव्यक्तः पाटलीपुत्रस्थेनाऽप्युपलभ्येत। सर्वदा चोपलम्भोपरमो न स्यात्।

अथ श्रोत्रेन्द्रियसंस्कार एव शब्दस्याऽभिव्यक्तिरिष्यते, न सोऽपि घटते,

---

[1] उच्चारणप्रयत्नेन शब्दोऽभिव्यज्यत इति मीमांसकाभिमतं पक्षं निरस्य, शब्दस्योत्पत्तिरिति पूर्वपक्षमुपपादयति—अभिव्यञ्जकेति। तस्यैवाऽर्थस्योपपादनं किञ्चेत्यादिना क्रियत इत्यवगन्तव्यम्। [2] किञ्चेति. मु. पु. नास्ति।

[3] अभिव्यक्तिपक्षं सिद्धान्तिसम्मतं दूषयितुम्, अभिव्यक्तेरसम्भवं प्रतिबन्धकीभूतस्याऽऽवरणस्य निरासेन, संन्निधानेन वेति द्विधा विकल्प्य, क्रमेण निराकरोति—आवरणापायेनेत्यादिना, अत एव सन्निधानस्येत्यादिना च। सन्निधापनेनेति. मु. पु. पा.।

कः खल्विन्द्रियस्य संस्कारः—न तावदुन्मीलनवदावरणापगमः, पूर्ववदावरणासंभवात् । नाऽऽप्यालोकेनेवाऽऽप्यायनं[1] चाक्षुषस्य रश्मेः कोष्ठयानां वायूनाम्, आकाशस्य चाऽवयवसंयोगासम्भवात्[2] ।

"सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रकाशयेत् ।
घटायोन्मीलितं चक्षुः पटं न हि न [3]बुध्यते ॥"

[श्लो. वा. श. अ. श्लो. ६०. ६१] इति ।

तस्मादभिव्यञ्जकत्वेऽनुपपन्ने, यदि [4]प्रयत्नकारणकोऽपि न स्यात्, तदा तदपेक्षोपलब्धिर्न सम्भवेत् । तेनेदमनुमानं प्रयोक्तव्यम्—शब्दः पुरुषप्रयत्नोत्पाद्यस्तदनभिव्यङ्ग्यत्वे सति तदनन्तरोपलब्धेः, यो यदनभिव्यङ्ग्यस्तदनन्तरोपलभ्यः, स तस्योत्पाद्यः, यथा-घटः कपालव्यापारस्येति । केन पुनः प्रकारेण प्रयत्नेन शब्द उत्पाद्यते ।

तत्र [5]केचिदाहुः—पुरुषप्रयत्नोदीरितैर्वाय्ववयवैस्स्थानविशेषाभिघात[6]-संस्कारसंस्कृतैस्सर्वतोदिक्कैस्संयोगाख्यासमवायिकारणानुगृहीतैश्च स्वसमवेतः शब्द आरभ्यते । वायोश्च गतिमत्त्वात्, तदारब्धश्शब्दोऽपि गतिमान् कर्णशष्कुलीमण्डलावच्छिन्नेन नभसा श्रोत्रभावमापन्नेन संयुक्तस्सन्नुपलभ्यते । वेगाख्यसंस्कारनिबन्धना च वायोर्गतिरिति, तदपगमे गतिविच्छेदाद् दूरे यच्छ्रोत्रम्, तत्राऽप्रत्यासन्नत्वाच्छब्दो न श्रूयते ।

न [7]चैतदुपपद्यते—वायवीयश्चेच्छब्दो भवेत्, स्पर्शनेन बधिरैरुपलभ्येत । स्यान्मतम्—[8]अभिभूतत्वात् स्पर्शनेनाऽनुपलब्धिरिति । तन्न । प्रत्यक्षोपलब्ध्यर्हत्वात्[9] । यदि ह्यसावभिभूतः, तर्हि श्रोत्रेणाऽपि नोपलभ्येत । न

---

[1] गुणविशेषाधायकमिति. ख. पु. पा. । [2] संभेद इति मु. पु. पा. ।

[3] पटमपि दर्शयतीति मु. पु. पाठः । श्लोकवार्तिके त्वन्यादृशः पाठो दृश्यते । स एव पाठ उपरि निवेशित इत्यवधातव्यं विबुधैः । [4] प्रयत्नः कारक इति मु. पु. पा. ।

[5] "वायुरापद्यते शब्दतामिति," शिक्षाकारवचनमित्यभियुक्तप्रयोगादवगम्यते । तथा च शाबरं भाष्यम्—"तथा च शिक्षाकारा आहुः—वायुरापद्यते शब्दताम्" । [शा. भा. पृ. ९०–९१.] इति । परन्तु शु. यजुः. प्रातिशाख्यवचनमिति बोध्यम् । प्रातिशाख्यवचनावलम्बनेन वायवीयश्शब्द इति वदतां मतमाह—केचिदिति । [6] आघातेति मु. पु. पा. ।

[7] पूर्वोक्तं वायुकारणकश्शब्द इति पक्षं त्वगिन्द्रियेण शब्दस्याऽग्रहणान्निरस्यति—न चैतदित्यादिना ।

[8] अन्तर्भूतत्वादिति- मु. पु. पा. । [9] उपलब्धावर्हादिति. मु. पु. पा. ।

च वाच्यं न स्पर्शनेन्द्रियग्राह्यो वायुरिति । तदनुविधानेन तदवगतेः । अथ मतम्—स्पर्शमात्रं स्पर्शनेन्द्रियेणोपलभ्यते, न वायुद्रव्यमिति । तन्न—स्पर्शव्यतिरेकेऽपि[1] द्रव्यस्य प्रत्यभिज्ञायमानत्वात्[2] ।

अन्ये [3]त्वाहुः—संयोगाद्विभागाद्वाऽऽद्यशब्दो निष्पद्यते । यथा ताल्वादिवायुसंयोगानुगृहीताद्वाय्वाकाशसंयोगादाकाशे शब्दस्सञ्जायते, तथा ताल्वादिवायुविभागोपकृताद्वाय्वाकाशविभागादाकाश एव शब्दश्शब्दान्तरमारभते, तदपि शब्दान्तरमिति कर्णशष्कुलीमण्डलावच्छिन्ने नभसि श्रोत्रभावमापन्ने निष्पन्नश्शब्दश्श्रूयत इति ।

---

[1] व्यभिचार इति. मु. पु. पा. ।　　　　[2] प्रत्यभिज्ञानादिति. मु. पु. पा, ।

[3] अत्रेदं बोध्यम्—शब्दस्य वर्णात्मकस्याऽनित्यत्वमिच्छन्तो वैशेषिकाश्शब्दोत्पत्तिं संयोगविभागशब्देभ्यस्समर्थयन्ते । तथा च काणभुजं सूत्रम्—"संयोगाद्वा विभागाद्वा शब्दाद्वा शब्दनिष्पत्तिः" [वै. द. २. २. ३.] इति । अस्य सूत्रस्याऽयमर्थः । तथा हि—भेरीदण्डसंयोगात्, वेणुदलविभागाद्वा शब्दो जायते । स च वीची-तरङ्गन्यायेन, कदम्ब-मुकुलन्यायेन वा स्वसमानजातीयान् शब्दान् सर्वतस्तनोति । तेषु च सन्तन्यमानेषु श्रोत्रदेशे जातोऽन्त्यश्शब्दश्श्रोत्रेन्द्रियेण गृह्यते, न त्वाद्यः, नाऽपि मध्यमः । तत्राऽऽद्यशब्दस्योत्पत्तौ संयोगो विभागो वा कारणम्, द्वितीयादिशब्दानामुत्पत्तौ प्रथमत उत्पन्नश्शब्दः कारणमिति स्वीकर्तव्यमिति ।

इदमविमृश्यमानसुन्दरमिति गुरुमतानुयायिनो मन्यन्ते । तेषामयमाशयः—तथाहि लोके सर्वे जना एकमेव शब्दं परस्मै श्रावयितुं विवक्षन्ति, न तु शब्दान्तरं श्रावयितुं, शब्दान्तरं विवक्षन्ति । तथा चेयं विवक्षानुसारिणी शब्दश्श्रुतिस्सर्वसम्प्रतिपन्ना । शब्दसन्तानपक्षे त्वन्य एव वक्त्रा विवक्ष्यते, श्रोत्रा चाऽन्यश्श्रूयत इति, न विवक्षानुसारिणी शब्दश्रुतिस्स्यात् । अदृष्टपूर्वानेकशब्दकल्पने गौरवञ्च स्यात् । आरम्भकत्वमेव न केवलमदृष्टम्, प्रत्युत प्रमाणविरुद्धञ्च, तस्य निष्क्रियत्वात् । अतस्संयोगादिभिश्शब्दो नोत्पद्यते ।

अत्रेदं बोध्यम्—शब्दस्योत्पत्तिमभ्युपगच्छतां तार्किकाणां पञ्च दोषा अनुसन्धेयाः । तथा हि—आद्यस्य शब्दस्य कण्ठताल्वादिव्यापारजन्यत्वम्, उत्तरेषां द्वितीयादिशब्दानां शब्दोत्पाद्यत्वम् । अन्त्येतरस्य, स्वकार्यनाश्यत्वम्, अन्त्यस्य तु स्वस्यैव स्वनाशकत्वम् । परमत्र केशवमिश्रः—आद्यमध्यमशब्दाः कार्यशब्दनाश्या अन्त्यस्तूपान्त्येन, उपान्त्यस्त्वन्त्येन सुन्दोपसुन्दन्यायेन विनश्यत इति मतं प्रतिक्षिपन्, उपान्त्यनाशादेवाऽन्त्यनाश इति स्वपक्षमुपचिक्षेप । [तर्कः भा. पृ. ७५.] श्रोत्रसमवेतस्यैव ग्राह्यत्वम्, वीची-तरङ्गन्यायेन कदम्बमुकुलन्यायेन वाऽऽरभ्यत्वमित्यादयोऽनुसन्धेयाः ।

तथा च प्रयोगः—संयोग-विभागौ न शब्दारम्भकौ संयोगविभागत्वात्, ताल्वादिसंयोगविभागवत् । तथा शब्दो न शब्दारम्भकश्शब्दत्वादन्त्यशब्दवदिति च । अतो भाष्यकारोक्तः प्रकार एव श्रेयान् । यदाऽऽह भाष्यकारः—"अभिघातेन हि प्रेरिता वायवस्स्तिमितानि वाय्वन्तराणि प्रतिबाधमानास्सर्वतोदिक्कान्संयोग-विभागानुत्पादयन्तो यावद्वेगमभि-

[1]नानाभावे प्रयत्नस्य नानाभावोपलम्भनात् ।
वैलक्षण्ये च शब्दस्य वैलक्षण्येन कार्यता ॥३॥

किञ्च—अभिव्यङ्ग्यश्चेत् प्रयत्नेन शब्दो न प्रतियत्नं भेदेनोपलभ्येत । न खल्वभिव्यञ्जकप्रदीपभेदेऽपि नानाभावेन भावानामुपलम्भः । कारकभेदस्तु कार्यभेदहेतुरिति [2]संप्रतीतः । अतश्शब्दस्य प्रयत्नो जनयितेति निश्चीयते । यथा कारकवैलक्षण्यानुविधायिनी कार्यवैलक्षण्यसिद्धिरविहता, तथा वैलक्षण्येऽपि चाऽभिव्यञ्जकस्याऽभिव्यङ्ग्यवैलक्षण्यं न सम्भवति । शब्दस्तु प्रयत्नस्य मृदुत्वे, बलवत्त्वे च मृदुर्बलवांश्चोपलभ्यमानस्तत्कार्यतां न जहातीति ।

सिद्धान्तः ।

[3]शब्दे तत्प्रत्यये स्पष्टे नानाव्यञ्जककल्पनात् ।
उपलब्धिव्यवस्थानमुपपन्नं भविष्यति ॥४॥

यदि शक्यामश्शब्दस्य स्पष्टं प्रत्यभिज्ञानमुपदर्शयितुम्, तदा प्रयत्नस्य कारकत्वे निषिद्धे, अभिव्यञ्जकत्वे च स्थिते, उपलब्धिव्यवस्थानं व्यञ्जकबहुत्वेन वर्णयिष्यामः । श्रोत्रमेव संस्क्रियते, तत्संस्कारकता च—तदभिव्यञ्जकता । कोष्ठ्यो हि वायुः प्रयत्नवदात्मसंयोगादुद्गच्छति[4] । स [5]नाभेरुद्गच्छन्नुरःप्रभृतिष्वष्टसु स्थानेष्वभिघातेन संस्कृतो यावद्वेगमभिप्रतिष्ठमानश्श्रोत्रमनुप्राप्तशब्दोपलम्भानुगुणं संस्कारमारभते । तत्संयोग एव श्रोत्रसंस्कारः । वेगवत्त्वाच्च वायोः, कर्मोत्पत्तौ श्रोत्रविभागात् संयोगोपरमे, शब्दस्याऽनन्तरमुप-

---

प्रतिष्ठन्ते, तेन वायोरप्रत्यक्षत्वात्संयोगविभागा नोपलभ्यन्ते । अनुपरतेष्वेव तेषु शब्द उपलभ्यते, नोपरतेष्वतो न दोषः । अत एवाऽनुवातं दूरादुपलभ्यते शब्दः, न प्रतिवातमिति"। अभिघातेन हीत्यादिना यदुक्तं तत्प्रत्यक्षसिद्धं न कल्पनीयम् । स च वायुश्शब्दविशेषाभिव्यक्तौ तालवादिस्थानविशेषमनुरुध्यते । स्थानविशेषवशेन शब्दविशेषोपलम्भात् । यावद्वेगमभिप्रतिष्ठन्त इत्येतदपि वेगवत्वादेव वायूनां शरादिवत्क्लृप्तमेव । यदपि स्तिमितानि वाय्वन्तराणीत्युक्तम्, तदपि सर्वं क्लृप्तमेव । अवशिष्टन्तु मूलेनैव निगदव्याख्यातमिति न किञ्चिदनवद्यम् ।

[1] कारकवैलक्षण्येन कार्यवैलक्षण्यं भवति । न त्वभिव्यञ्जकवैलक्षण्येनाऽभिव्यङ्ग्यस्य वैलक्षण्यं संगच्छत इत्यभिप्रायेणाऽऽह—नानाभावेति । [2] सुप्रभेद इति. मु. पु. पा. ।

[3] शब्द उत्पत्तिमानिति प्राप्तं पूर्वपक्षं शब्दस्याऽभिव्यक्तिरिति सिद्धान्तमुखेन दूषयति-शब्दे इत्यनेन पद्येन ।

[4] उत्पद्यत इति मु. पु. पा. । [5] अत्रत्यो विशेषो [प्र. पं. पृ. १५६] द्रष्टव्यः ।

लम्भविच्छेदः। प्रयत्नभेदाच्च वायुकर्मभेदादुरःप्रभृतिस्थानसंयोगान्यत्वाव्य-वस्थया शब्दश्रवणम्। शब्दोत्पत्तिवाद्यप्युत्पादकभेदमनुमन्यत एव, अन्यथा कार्यभेदासम्भवात्।

यत्तूपवर्णितं—यथोन्मीलनसंस्कृतं चक्षुर्न समानदेशस्थानुपलभ्यान् व्यवस्थयोपलम्भयतीति। तदयुक्तम्—तत्रैकत्वादभिव्यञ्जकस्य। एकमेव ह्युन्मीलनं सर्वोपलम्भानुगुणनेत्रसंस्कारारम्भकमिति, कुत उपलब्धिर्व्यवतिष्ठताम्। इहत्वेकत्वं संस्काराणामसिद्धम्।

नन्वभिव्यङ्ग्यस्यैकेन्द्रियग्राह्यत्वे, अभिव्यञ्जकस्यैकतैव प्राप्नोति। ये समानेन्द्रियग्राह्याः, तेषामेक एवाऽभिव्यञ्जकः। यथा—आलोको घटादीनाम्। एकत्वे चाऽभिव्यञ्जकस्योपलब्धिव्यवस्था नोपपद्यते। अतोऽभिव्यञ्जकत्वा-सम्भवे, कारकत्वे व्यवस्थिते, भेदाग्रहणनिबन्धनैव प्रत्यभिज्ञेति न्याय्या कल्पना—इति।

अत्रोच्यते। एकेन्द्रियग्राह्यताऽपि भवेत्, अभिव्यञ्जकभेदोऽपि भवेदिति, किमनुपपन्नम्। स्वाभाविकी हि यस्य सम्बन्धव्याप्तिः, तस्य लिङ्गत्वम्। [१]आशङ्क्यमानाशेषोपाधिपरिहारेण हि स्वारसिकसम्बन्धव्याप्तिनिश्चयः। इह तु न शक्यते निर्णेतुं—किमेकेन्द्रियग्राह्यतया घटादीनाम्, तद्गतरूपादीनाञ्चैकोऽभिव्यञ्जकः, उत रूपिद्रव्यत्वात्, तत्समवायित्वाच्चेति। अतोऽनव-धारितसम्बन्धव्याप्तिकमेकेन्द्रियग्राह्यत्वं नाऽभिव्यञ्जकैक्यानुमानसमर्थम्। अतोऽभिव्यञ्जकत्वेऽपि प्रयत्नस्योपलब्धिव्यवस्थोपपत्तिः।

ननु स्थिरवाय्वपनय एव संस्कारः। अपनीते च तस्मिन्, सर्वशब्दोप-लब्धिर्दुर्निवारा। उच्यते—नाऽवरणापनयनं [२]तस्याऽभिव्यञ्जकम्, वायुना शब्दावरणासम्भवात्, किं [३]त्वदृष्टसापेक्षेण। एञ्चाऽपनेतृकोष्ठ्यवायुभेदात् [४]स्थिरवायुविभागलक्षणसंस्कारभेदादुपपन्नैवोपलब्धिव्यवस्था। अपि च न वयं स्थिरवाय्वपनयं संस्कारमाचक्ष्महे, किन्तु कोष्ठ्यवायुसंयोगमेव, प्रथम-

---

१ उपाधिविषये. [प्र. पं. पृ. २०६-२०७] विस्तरो द्रष्टव्यः।

२ अभिव्यञ्जकत्वमिति—मु. पु. पा.।   ३ किन्त्वदृष्टेन रूपेणेति. मु. पु. पा.।

४ लक्षणयोरिति मु. पु. पाठः, अवशिष्टोंशः गसंज्ञकपुस्तकानुसारेणोपरि निवेशितः पूर्वोत्तरग्रन्थसाङ्गत्यायेति मन्तव्यम्।

भावित्वात् । किमिति तर्हि भाष्यकारेण "स्तिमितानि वाय्वन्तराणी" त्युक्तम् ? कोष्ठयस्य वायोर्वेगविनाशार्थम् । [1]स्पर्शवद्द्रव्यसंयोगाद्धि वेग-विनाशोऽन्यत्र प्रतीत इति, इहाऽपि तदर्थमेव स्थिरवायुकीर्तनं[2] भाष्ये ।

ननु चैकत्वादाकाशस्य, तस्य च श्रोत्रत्वात् तत्संस्कारे, सर्वपुरुषेन्द्रिय संस्कारात् सर्वेऽपि शब्दमुपलभेरन् । नैष दोषः । [3]धर्मा-धर्मोपार्जितकर्ण-शष्कुलीभेदात् । कर्णशष्कुलीसंस्कारो हि श्रोत्रसंस्कारः, भिन्नाश्च प्रतिपुरुषं कर्णशष्कुल्य इति, असंस्कृतकर्णशष्कुलीको न शब्दमुपलभते । अनुवातश्च [4]दूरत एव शब्दमुपलभते । बाह्यवायुनोदनानुगृहीतस्य कोष्ठयवायुवेगस्य दूरगमनहेतुत्वात् । शब्दाच्छब्दान्तरारम्भपक्षे तु नाऽनुवातस्य कश्चिदुपयोगः ।

अभिव्यञ्जकनानात्वाच्छब्दो नानेव लक्ष्यते ।
नेत्रवृत्तिविभेदेन चन्द्रस्तैमिरिकैरिव ॥५॥

स्पष्टे तद्ग्रहे नानाभावोपलम्भश्शब्दे तावदसिद्ध एव । किन्तु परस्पर-निरपेक्षैरभिव्यञ्जकैः कोष्ठयवायुभिर्नानावक्तृसमुत्थैर्नानाभूतैर्भिन्नं श्रोत्रसंस्कार-मारभमाणैर्नानाभूतशब्दबुद्धिं जनयद्भिर्नानेव शब्दो बुध्यते, चन्द्र इव तिमिरविभिन्नाभिर्नेत्रवृत्तिभिः ।

नानादेशोपलम्भे हि सर्वेषां भ्रान्तिसम्मतिः ।
कर्णच्छिद्रगतस्यैव शब्दस्य श्रवणं यतः ॥६॥

यदुच्यते—कार्यत्वे शब्दस्य कारणदेशभेदान्नानादेशोपलम्भ[5] इति । तदयुक्तम् । यद्यपि कृतकश्शब्दः, तथापि संनिकृष्ट-विप्रकृष्टयोर्युगपच्छब्दो-पलम्भप्रसङ्गेन प्रतिवाता-नुवातयोश्चाऽविशेषापत्तेर्नेन्द्रियं प्राप्तस्योपलम्भकम् । प्राप्तावपि नेन्द्रियं शब्ददेशमुपसर्पति, प्रत्यक्षत्वाच्छ्रोत्रदेशे कर्णशष्कुल्याः प्रतिवाता-नुवातयोश्च तुल्योपलम्भापत्तेः । शब्दे तु श्रोत्रपथं प्राप्त उपलभ्य-माने देशभेदः प्रतीयते । अतो भ्रान्तिरेषा-नानादेशेषु शब्द उपलभ्यत इति ।

किन्निबन्धना भ्रान्तिः । अभिव्यञ्जकदेशनिबन्धनेति ब्रूमः । ताल्वादि-स्थानाघातसापेक्षो[6] हि कोष्ठयो वायुरभिव्यनक्ति । अतो वक्तृदेशोऽपि

---

[1] स्थास्नु इति मु. पु. पाठः ।
[2] भाष्यस्याऽभिप्रायोऽस्माभिर्वैशेषिकमतेन शब्दोत्पत्तिनिराकरणावसरे विवृतः ।
[3] उपरञ्जितेति मु. पु. पा. ।
[4] दूरादेवेति ख. पु. पा. ।
[5] नानादेशो गम्यत इति मु. पु. पा. ।
[6] अभिघातेति ख. पु. पा. ।

भवत्यभिव्यञ्जकदेशः। तेन शब्दं शृण्वतस्तदभिव्यञ्जकदेशोऽपि तदविनाभावोपकल्पितो बुद्धिस्थो भवति। शब्दाभिव्यक्तिविशेषेण च दूरा–सन्नत्वे तस्य कल्प्येते। प्रत्यक्षोपलभ्यमानवक्तृविपये च शब्दश्रुतिविशेषे दिग्विशेषो नियतमवधारितः, अतो दिग्विशेषकल्पनाऽपि। यस्तु न तथा विवेक्तुमलम्, तस्याऽभिव्यञ्जकदेशं प्रति व्यामोहो दृश्यत एव। एवञ्चेन्द्रियाणां स्वानुभवासमर्थत्वाच्छ्रोत्रगतशब्दोपलम्भे तद्देशाग्रहणात्, तदुच्चारणप्रदेशस्य प्रतीयमानत्वात्, तद्गतत्वप्रतिपत्तेश्च, तत्तद्देशगतशब्दप्रतिपत्तिव्यवहारं प्रवर्तयतीति[1] घटत एवेयं भ्रान्तिः।

वैलक्षण्यं स्वभावेन वर्णानां न च सम्मतम्।
नादाल्पत्व-महत्त्वाभ्यां तथात्वभ्रान्तिसम्भवात् ॥७॥

स्पष्टे तद्ग्रहे प्रयत्नस्तावद्वर्णानां जनको नेति स्थिते, तदनन्तरोपलम्भनियमेन[2] चाऽभिव्यञ्जकत्वे निर्णीते, अभिव्यञ्जकवृद्धिह्रासयोश्चाऽभिव्यङ्ग्यवृद्धिह्रासहेतुत्वाभावान्न शब्दो वर्धते, ह्रसते वा। किन्तु बलवति प्रयत्ने महान् वायुरुत्पद्यते, [3]तस्याऽवयवा भूयांसः कर्णशष्कुलीमण्डलस्य नेमिभागैर्बहुभिस्सम्बध्यन्ते। ततश्चाऽभिव्यञ्जकसंयोगबहुत्वात्, युगपदुपलम्भकबहुत्वात्, तेषाञ्च विच्छेदाग्रहणान्महानिव शब्दोऽवभाति, तरूणामन्तरालाग्रहणादिव महद्वनम्। यदा ते वाय्ववयवास्सहसा, विलम्बेन वा संयुज्यन्ते, तदोपलम्भोऽपि द्रुतः, विलम्बितो वा। यदा त्वेषामुच्चारणे ताल्वादीनां संवृतत्वं भवति, तदा तदनुरोधेन वर्णोपलब्धिरपि एकमात्राकालैव भवतीति, ह्रस्ववर्णव्यवहारसिद्धिः। यदा [4]विवृततरत्वम्, असंवृतत्वं वा ताल्वादीनामेव सम्पद्यते, तदा वर्णप्रतीतेरपि मात्राकालवृद्ध्या दीर्घवर्णव्यवहारसिद्धिः, वृद्धव्यवहारे तदनुरोधेनाऽप्यर्थाभिधानदर्शनात्, तथैव प्रतिपादकत्वमप्याश्रीयते। न चैवमभिधानस्याऽनित्यत्वदोषः, तदुपाधिविशिष्टस्य वर्णस्य वाचकस्याऽनित्यत्वात्। अतो वर्णानुपूर्व्यनित्यत्वे न कश्चिद्दोषः। आनुपूर्वीविशेषभाजां वर्णानां वाचकभूतानां नित्यत्वात्।

ननु [5]क्षणिका शब्दस्याऽभिव्यक्तिरिति, कथं तद्ग्रहणसम्भवः। उपलब्धे

---

[1] प्रतिपत्तीति. मु. पु. पा. नास्ति।
[2] नियमे वेति मु. पु. पा.।
[3] तस्य च भूयोंऽशा इति मु० पु० पा.।
[4] पुनर्विवृतत्वं वेत्येव मु. पु. पा.।
[5] न च शब्दस्येत्येव-मु. पु. पा.।

हि घटादिभावे तद्वशेन पूर्वानुभवाहितसंस्कारप्रबोधेन "स एवाऽयमि"ति प्रत्यभिज्ञोदीयते। शब्दे पुनरुच्चरित-तिरोहिते, पुनरुत्तरकाले कथं प्रत्यभिज्ञोदय इति। तत्राऽऽह—

नाऽवश्यं तद्ग्रहेणैव तत्संस्कारप्रबोधनम्।
तेन हेत्वन्तरोद्बुद्धात् संस्काराात्तद्ग्रहोदयः ॥८॥

यदि ह्ययं नियमः—तदुपलम्भ एव तत्संस्कारोद्बोधहेतुरिति, ततो नोपपद्यते शब्दे प्रत्यभिज्ञा। संस्कारास्त्वनियतोद्बोधहेतव इति, कारणान्तरवशेनोद्बुद्धात् संस्कारात् प्रथमसमागमसमय एव शब्दे प्रत्यभिज्ञा भविष्यति।

ननु "स एवाऽयं गकारः" इति [१]प्रतीतिस्तद्ग्रहः, न पुनर्भेदाग्रहणादिति, कथमेष निर्णयः। दृष्टो हि शुक्तिकायां भेदाग्रहात् "तदेवेदं रजतमि"ति प्रत्ययः—इति। तत्राऽऽह—

[२]भेदे मानं यदा नाऽस्ति शुक्तिका-रजतादिवत्।
तदा प्रतीतिसंसिद्धस्तद्ग्रहः केन वार्यते ॥९॥

स्पष्टे हि शुक्तिका—रजतयोर्भेदावसायिनि प्रमाणे, सादृश्याद्भेदानवबोधाद्भेदप्रतीतिरिति कल्प्यते। शब्दे तु न प्रत्यक्षसिद्धः प्रत्युच्चारणं भेदः। कथं न सिद्धः। ननु महत्त्वा-ल्पत्वाभ्यां विभिन्नो वर्ण उपलभ्यते। नैतदेवम्। महत्त्वा-ल्पत्वे प्रतियतोऽपि, वर्णप्रतीते महत्त्वा-ल्पत्वे एव भिन्ने अवभातः, न वर्णाः। न वाऽऽनुमानेनाऽपि भेदोऽवगन्तुं शक्यत इति प्रागेव निवेदितम्। अतो भेदे प्रमाणाभावात्, अभिन्न एवाऽयं भिन्नावभास इति, साक्षात्प्रतीतिबलेनैवाऽवस्थापितम् ।९॥

ननु च तद्ग्रहबलेनैवाऽनुमानं निरस्तम्। निरस्ते चाऽनुमाने, तद्ग्रह इतीतरेतराश्रयमिति। तत्राऽऽह—

अनुमाननिरासेन [३]तद्ग्रहत्वं प्रसाध्यते।
स्वयं प्रतीतिसिद्धत्वाद् भ्रान्तिशङ्का तु वार्यते ॥१०॥

---

[१] प्रसिद्धिरिति. मु. पु. पा.। [२] यदा भेदे प्रमेति मु. पु. पा.।
[३] न साध्यत इति. मु. पु. पा.। [४] निवार्यंत इति. मु. पु. पा.।

भेदाग्रहनिबन्धनेयं भ्रान्तिरिति शङ्का केवलानुमाननिरासेनाऽपनीयते। प्रतीतिबलसिद्धस्तु तद्ग्रहो न कारणान्तरमपेक्षत इति, कथमितरेतराश्रयता।

ननु किमिति तद्ग्रहबलाज्ज्वालायामपि भेदानुमानं न निराक्रियतइत्यत आह—

ज्वालाभेदं विना [1]भासां विततिर्नोपपद्यते।
भेदाज्ञानेन सादृश्यात् प्रत्यभिज्ञा तु युज्यते ॥११॥

अवयवी—ज्वाला। सर्वश्चाऽवयवी स्वावयवसंयोगेन जातः, तद्विनाशेन विनश्यति। तन्तुव्यतिषङ्गजनितो हि पटस्तन्तुविभागे विनाशी दृश्यते। [2]प्रभा च गृहोदरादिवर्तिनी तैजसं रूपम्। न च द्रव्याश्रिता रूपादयो द्रव्यं विरहय्य वर्तन्ते। तेन तैजसाः परमाणवो नित्यमभिभूतत्वादनुपलभ्यमाना अपि, प्रत्यक्षतो यावत्प्रभावितति सन्निधीयन्त इत्यङ्गीकरणीयम्। तेषु च देशान्तरमनुप्राप्तेष्वेतदाश्रयणीयम्-एतेषां संयोगा विघटन्त इति। विघटितेषु तेषु, तदारब्धे द्रव्येऽपि नाशमुपेयुषि, [3]ज्वालादर्शनं ज्वालान्तरदर्शनमन्तरेण नोपपद्यते। भेदाग्रहणनिबन्धना तु प्रत्यभिज्ञा भ्रान्तिश्शुक्तिरजतादिषु दृष्टत्वादुपपन्ना।

विना तु शब्दभेदेन न किञ्चिन्नोपपद्यते।
उक्तेन नीतिमार्गेण तद्ग्रहोऽतोऽत्र सम्मतः ॥१२॥

प्रत्युच्चारणं भेदव्यतिरेकेणाऽपि प्रयत्नानन्तरोपलभ्यमानत्वं यथोपपद्यते, तथोक्तमेवेति, अप्रतिपक्षा प्रत्यभिज्ञा।

[4]सदसत्कारणत्वेन तस्माच्छब्दस्य नित्यता।
एतदेव हि नित्यत्वं व्योमादिष्वपि सम्मतम् ॥१३॥

शब्दस्य प्रयत्न एव कारणतया सम्भावितः। स च प्रत्यभिज्ञाबलेन

---

[1] भास इति मु.पु.पा. [2] प्रदीपप्रभाशब्दयोर्वैलक्षण्यमभिहितमभियुक्तैः। तथाहि—प्रदीपः—निबिडावयवं तेजोद्रव्यम्। प्रभा तु प्रविरलावयवं तेजोद्रव्यमेवे [शां.भा.२.३.१३.]ति।

[3] ज्वालेत्येव. मु. पु. पा.।

[4] अत्र शालिकाचार्यैः—"सदकारणवन्नित्यम्" [अ. ४. आ. १. सू. १.] इति काणभुजं सूत्रमनुसन्दधातीति ज्ञेयम्।

द्वितीयादिदर्शनेष्वभिव्यञ्जकतामापादित इति, प्रथमदर्शनेऽप्यसावभिव्यञ्जक एव। अतः [1]कारणरहितत्वे [2]सति सत्त्वान्नित्यश्शब्दो गगनादिवत्।[3] तेन नाऽस्याऽनित्यतेति*।

एषा शालिकनाथेन शब्दनित्यत्वसाधनी।
प्रभाकरगुरोर्दृष्ट्या न्यायशुद्धिः [4]प्रकीर्तिता ॥१४॥

इति महामहोपाध्यायश्रीशालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां न्यायशुद्धिर्नाम नवमं प्रकरणं समाप्तम्[5] ॥

---

[1] शब्दो नित्यस्सत्त्वे सति कारणशून्यत्वादाकाशवदित्यनुमानं बोध्यम्।

[2] कारणरहितत्वेनेति. मु. पु. पा.। [3] तेनेति मु. पु. नाऽस्ति।

[4] परीक्षितेति मु. पु. पा.।

[5] इति प्रकरणपञ्चिकायां न्यायपरिशुद्धिस्समाप्तेति. ख. पु. पा.।

*अत्रेदमाकूतम्—शब्दविषये वैयाकरणानामन्येषां दार्शनिकानाञ्च मतभेदो दरीदृश्यते। तत्र शाब्दिका–वर्णानां प्रत्येक—समुदायाभ्यां विकल्पे सति दूषणासहत्वात्, तृतीयप्रकारासम्भवाच्च "शब्दादर्थं प्रतिपद्यामहे" इति वृद्धव्यवहाराच्च वर्णेभ्योऽतिरिक्तमर्थप्रतीत्यन्यथानुपपत्तिगम्यं स्फोटनामकं शब्दतत्त्वमभ्युपगच्छन्ति। अन्ये च दार्शनिका नैयायिकादय इदमसहमाना वर्णातिरिक्तं स्फोटतत्त्वं खण्डयन्तः दृष्टपरित्यागा-दृष्टपरिकल्पनयोः प्रमाणाभावात्, आनुपूर्वीविशेषभाजां वर्णानामेव पदत्वम्, एकार्थबोधकत्वरूपोपाधिनैकपदत्वं व्यवहारसिद्धं समर्थयन्ति। तत्र भाट्टास्तु शब्दो द्रव्यं साक्षादिन्द्रियेण ग्रहणादिति, तस्य द्रव्यात्मकत्वमभ्युपगच्छन्तः, अबाधितप्रत्यभिज्ञाबलान्नित्यत्वञ्चाऽऽतिष्ठन्ते।

नैयायिकास्तु-द्विविधस्यपिशब्दस्य गुणत्वम् "उत्पन्नो गकारः," "विनष्टो गकारः" इति प्रतीतिम्, गकारादिरनित्य उत्पत्तिमत्वे सति विनाशित्वात्, घटवदित्यनुमानञ्च पुरस्कुर्वन्तः, वर्णात्मकस्य शब्दस्याऽप्यनित्यत्वमभ्युपगच्छन्ति। ध्वन्यात्मकस्य तु शब्दस्याऽनित्यत्वं समेषां दार्शनिकानामभिमतम्।

प्राभाकरमीमांसकास्तु-तार्किकसरणिमनुसृत्य शब्दस्य बाह्यैकेन्द्रियग्राह्यत्वेन गुणत्वमुपवर्णयन्तः, भाट्टसम्मतं द्रव्यत्वं निरस्य, गुणत्वमभ्युपयन्ति। "स एवाऽयं गकार" त्यबाधितप्रत्यभिज्ञाबला "दुत्पन्नो गकारः" "विनष्टो गकार" इत्येतयोरनुभवयोर्गकाराभिव्यञ्जकध्वनिरुत्पन्नः, गकाराभिव्यञ्जकध्वनिर्नष्ट इत्यभिप्रायं वर्णयन्ति। "स एवाऽयं गकार" इति विषयप्रत्यभिज्ञा-

नस्य स्थिरात्मसिद्धिरपि प्रयोजनमिति [ऋ प पृ •••] टीकाकारश्शब्दाधिकरणे प्रत्यपादयत्। प्रत्यभिज्ञया नित्यत्वे सिद्धे, तदविरोधेनाऽनुमानेनापि शब्दस्य नित्यत्व सिद्धतीत्याशयेन शालिकाचार्योऽनुमानमपि-"अत-गगनवदि"त्यन्तेन ग्रन्थसन्दर्भेणोपन्यास्थत्। एतदेव हृदि निधायाऽऽह-तेनेति।

अत्रे बोध्यम्—शब्दाधिकरणेऽष्टादशसूत्राणि सन्ति। तत्राऽऽद्यसूत्रषट्केण शब्दस्योत्पत्तिमत्वेनऽनित्यत्वं पूर्वपक्षयित्वा, मध्यमसूत्रषट्केण पूर्वपक्ष निराकृत्य, अन्तिमसूत्रषट्केण शब्दनित्यत्वसिद्धान्तस्स्थिरीकृत। तत्रत्यपूर्वपक्षे गुणसूत्रम्—"वृद्धिश्च कर्तृभूम्नाऽस्य" [ श. नि अ सू ११ ] इति। अस्याऽयमर्थ—कर्तृभूम्ना—उच्चारयितृबाहुल्येन वृद्धि—महत्त्व शब्दस्य दृश्यते। अवयवप्रचयकृतं महत्त्वमित्यवयविजनन तत्रेति गम्यते, अभिव्यक्तिपक्षे नेदमुपपद्यते। यद्यपि तार्किकैश्शब्दस्य द्रव्यत्व नाऽङ्गीकृतम्, नाऽप्यवयवित्वम्। तन्मते गुणत्वात्। तथापि तदन्य एव पूर्वपक्षीत्याशयस्सूत्रकारस्येति प्रतीयते। तथा "नादवृद्धि परा" [ श सू १७ ] इति तच्छङ्कानिराकरणपर सूत्रम्। ध्वनेर्वृद्धिश्शब्दस्याऽवयवत्वेन महत्त्वानुपपत्ते। तेन सूत्रकृतस्स्थितिसमयेऽपि मीमासकातिरिक्त कश्चन शब्दद्रव्यवाद्यवर्तिष्टेति प्रतीयत-इति बोध्यम्। अभिव्यञ्जकशून्यकाले नोपलभ्यते। अतो वर्णात्मकश्शब्दो नित्य इति।

## मीमांसाजीवरक्षा नाम दशमं प्रकरणम् ।

[1]प्रभाकरगुरोर्भावं परिभाव्याऽभिधीयते ।
मीमांसाजीवरक्षेयं क्षणिकत्वनिराक्रिया ॥१॥

अत्र सुगतमतानुसारिणः-क्षणभङ्गिनस्सर्वानेव भावानभिदधति । किं पुनस्तेषां तत्र प्रमाणम् ? न[2] तावत् प्रत्यक्षं क्षणिकतामीक्षितुं [3]क्षमते, स्तम्भादिभावं[4] निपुणतरं निरीक्षमाणस्य क्षणिकत्वाध्यवसायाभावात् । स्यादेषा मनीषा—न क्षणिकता नाम भावस्वभावबहिर्भाविनी, तेन भावानुभवादेव प्रत्यक्षं क्षणिकतामपि साक्षात्करोतीति । तदिदं मनोरथमात्रं मन्यन्ते मतिमन्तः । तथाहि—"संविन्निष्ठा विषयव्यवस्थितयः" इति स्थितिरियमविवादा सर्ववादिनाम् । तदियमपि क्षणिकता भावस्य स्वभावभूता सती संवित्तिमधिरोहन्ती तदव्यतिरेकेण व्यवतिष्ठते, नाऽन्यथा । न च तथा संविदमुदीयमानामुदीक्षामाह इति, कुतस्तस्या भावस्वभावान्तर्भाविता ? कुतस्तराञ्च तदवबोधेनाऽवबोधः । अथ मन्वीरन्—क्षणिकता प्रत्यक्षमीक्ष्यमाणाऽपि[5] न निश्चयपथमवतीर्णा तेनाऽगृहीतेवाऽवभाति, तथाऽपि न [6]तस्यां प्रत्यक्षं प्रमाणम् । यत्र हि प्रत्यक्षस्य स्वभावतो विकल्पविरहिणस्तत्—[7]पृष्ठभाविना सविकल्पकप्रत्ययेन व्यापारोऽनुगम्यते, तत्र प्रत्यक्षं प्रमाणमिति सौगताः । यत्र च दृष्टमेतदिति प्रत्ययो नोदीयते, न [8]तत्प्रत्यक्षसमधिगतमिति सिद्धान्तध्वान्ताक्रान्ताशयानां वाङ्मात्रविलसितमिदम्[9] ।

यदपि केचिदूचिरे—प्रत्यक्षं ज्ञानं क्षणिकं, स्वकालाकलितवस्तु-

---

[1] अस्मिन् प्रकरणे ग्रन्थकृता बौद्धानामभिमतस्सर्वेषां भावानां क्षणिकत्ववाद उपन्यस्य निराक्रियते—प्रभाकरगुरोरिति ।

[2] बौद्धोक्तं सर्वेषां भावानां क्षणिकत्वमसहमानस्तत्र प्रमाणं पृच्छति-प्रत्यक्षम्, अनुमानं वेति । तत्राऽऽद्यं दूषयितुं प्रक्रमते—न तावदित्यादिना । द्वितीयं दूषयिष्यति—अनुमानमपीत्यादिना ।

[3] ईषितुमिति. मु. पु. पा. ।

[4] विषयमिति. मु. पु. पा. ।

[5] ईक्षितेति. मु. पु. पा. ।

[6] तस्या इति. मु. पु. पा. ।

[7] तदिति मु. पु. नाऽस्ति ।

[8] समाधिगतेति. मु. पु. न. दृश्यते ।

[9] इदमिति मु. पु. नाऽस्ति ।

विषयतया क्षणिकतामवगमयतीति। तदपि बालिशभाषितम्। एकक्षणमात्रवर्त्तिता हि क्षणिकता। न तत् प्रत्यक्षेणेदानीमेवेदं [1]वस्त्विति प्रतिपद्यते[2], कालान्तरं प्रत्यौदासीन्यात्[3] प्रत्यक्षस्य। प्रत्युत प्रत्यभिज्ञालक्षणं प्रत्यक्षमेव क्षणिकतां दूरमुपक्षिपति, पूर्वा-परकालाकलितभावावकल्पनात्। अनुमानमपि सम्बन्धानुसन्धाननिबन्धनं क्षणिकतां न पक्षीकर्तुं क्षमते, तया सह कस्यचिल्लिङ्गस्य सम्बन्धबोधविरहात्। न खल्वप्रतीते सम्बन्धिनि-सम्बन्धबुद्धिराविर्भवति। न [4]चैतदुभयातिरेकि प्रमाणं सुगतमतानुसारिणो मन्यन्ते।

तदिदमाकाशभ्रान्तमित्यपहसन्ति सौगताः। ते [5]हि स्वभावहेतुकानुमानसमधिगमनीयां क्षणिकतामाचक्षते। किं पुनस्तदनुमानम्। यत् सत्, तत् क्षणिकम्, सन्तश्च सर्वे भावा इति भावमात्रानुबन्धिनि साध्ये स्वभावहेतुर्भवति। यथा—शिंशपात्वं वृक्षत्वे। शिंशपामात्रानुबन्धि हि वृक्षत्वम्। तथेहाऽपि सत्तामात्रानुबन्धिनी[6] क्षणिकता। कथं पुनस्तन्मात्रानुबन्धसिद्धिः? विपक्षे बाधकप्रमाणप्रवृत्तेः। अक्षणिकत्वे हि व्यापकानुपलब्धिस्सत्तां बाधते। अर्थक्रियाकारिता हि सत्ता, नाऽपरा काचिदस्ति। सा च क्रम-यौगपद्याभ्यां व्याप्ता, तृतीयकोटिविरहात्[7]। अनयोः परस्परप्रतिपक्षतयैकप्रतिषेधस्येतरविधिनान्तरीयकत्वात्। न च क्रम-यौगपद्येऽक्षणिकेषु सम्भवतः। ते तु निवर्तमाने सत्तामपि निवर्तयतः, वृक्षत्वं शिंशपात्वमिव। कथमक्षणिकेषु क्रम-यौगपद्याभ्यामर्थक्रियाविरहः?

---

[1] इदं वस्त्विति. मु. पु. नाऽस्ति, व्यवस्थितमिति. मु. पु. पाठो दृश्यते।

[2] प्रतिपद्यन्त इति बहुवचनान्तः पा. मु. पु.। [3] प्रत्यक्षस्येति. मु. पु. नाऽस्ति।

[4] सौगताः प्रत्यक्षम्, अनुमानञ्चेति प्रमाणद्वयमङ्गीकुर्वन्ति। तत्र यद्यत्स्वयमुपनिपत्य विज्ञानं जनयति, तत् प्रत्यक्षप्रमाणप्रमेयम्। यत्तु न प्रत्यक्षम्, तस्य सामान्यात्मना सम्बद्धादेवाऽर्थान्तराज्ज्ञानं तस्याऽनुमेयत्वमेव। अत एवोक्तं दिङ्नागेन—

"प्रत्यक्षमनुमानञ्च प्रमाणे सदृशात्मनः।
अप्रत्यक्षस्य सम्बन्धादन्यतः प्रतिपत्तितः"॥ [प्र. विनि.] इति।

तदेव मनसि निधायाऽऽह—न चैतदिति।

[5] अयं विषयोऽनुमानपरिच्छेदे "कार्यकारणभावाद्वा, इति पद्यव्याख्यानावसरे टिप्पण्यां द्रष्टव्यः। [6] संबद्धे इति. मु. पु. पा.।

[7] राशीति. मु. पु. पा.।

अत्राऽऽहुः—[1]अक्षणिको हि भावोऽर्थक्रियाजननस्वभावो वा भवेत् ? अतत्स्वभावो वा ? नाऽपरः प्रकारोऽस्ति । तत्राऽग्रिमपक्षपरिग्रहे सर्वासामर्थक्रियाणामेकस्मिन्नेव क्षणे कृतत्वात्, कृतस्य च पुनः करणानुपपत्तेः, अनन्तरक्षणेऽर्थक्रियासामर्थ्यशून्यत्वात्, असल्लक्षणत्वापत्तेरक्षणिकत्वहानिः । द्वितीयविकल्पावलम्बने तु [2]कदाचिदपि ततोऽर्थक्रिया नोदीयत इति, असल्लक्षणत्वापत्तिरेव । स्यान्मतम्—समर्थोऽपि स्वभावतो भावस्सहकारिसमवधानवशेन कदाचित्करोति, तदभावाच्चाऽन्यदा नेति । तदपि विमर्दं न क्षमते । स हि सहकारी किञ्चिदारभते, न वा ? तेनाऽऽरभ्यमाणमप्यर्थक्रियासाधनत्वाभिमतभावस्वभावभूतम्, उत—अतत्स्वभावभूतं वेति विकल्पनीयम् । अनारम्भपक्षेऽपेक्षार्थोऽभिधातव्यः । न खल्वनुपकारकं प्रत्यपेक्षाऽर्थवती । अर्थक्रियासाधनत्वाभिमतभावस्वभावभूतस्याऽऽरम्भे च भावस्याऽप्युत्पत्तिरापतति । [3]न ह्यनुत्पद्यमान उत्पद्यमानस्वभावो भवति, विरुद्धधर्माध्यासस्य भेदापादकत्वात्[4] । भावोदयाङ्गीकारे चाऽक्षणिकत्वपक्षपरिक्षयः[5] । अतत्स्वभावभूतस्याऽऽरम्भाभ्युपगमे भावस्य प्रागसाधकत्वात्, नाऽक्षणिकात्क्रमेणाऽर्थक्रियासिद्धिः । तत एव बाह्यादागन्तोरर्थक्रियोदयः, तद्भावे भावात्, तदभावे चाऽभावात् । न च तद्व्यतिरेका—व्यतिरेकाभ्यामन्यः प्रकारोऽस्ति । परस्परविरुद्धयोरेकत्र समवायप्रतीतिविरहात् ।

ननु क्षणिकोऽपि भावः—किमर्थक्रियाजननसमर्थस्वभावः, अतत्स्वभावो ? वेति [6]प्राचीं कल्पनां [7]नाऽतिवर्तते । तत्राऽर्थक्रियाजननसमर्थस्वभावस्य सहकारिव्यपेक्षा न स्यात् । न ह्यसमर्थादर्थादर्थक्रियोदीयते । श्रूयतां परमरहस्यं सौगतानाम्—[8]अन्त्यक्षणं प्राप्तोऽर्थक्रियाजननसमर्थस्वभाव एव भावः [9]कार्यमप्येकमेवाऽऽरभते । किमिति तर्हि सहकारिभिर्विनाऽपि न करोति । निरपेक्षस्य जनकत्वे, सहकारिताऽपि तस्य कीदृशीति

---

[1] भवत्किमर्थमिति. मु. पु. पा. ।  [2] काऽपीति. मु. पु. पा. ।

[3] "अयमेव भेदहेतुर्विरुद्धधर्माध्यासो नाम परस्परपरिहारस्थितिलक्षश्चाऽत्र विरोधः" [ प्र. वा. भा. पृ. ४१० ] इति ।

[4] न ह्युत्पद्यमानोऽनुत्पद्यमान इति. मु. पु. पा. ।  [5] पक्षेति मु. पु. नाऽस्ति ।

[6] किं वा नेतीति. मु. पु. पा. ।  [7] नाऽस्तीति वर्तत इति. मु. पु. पा. ।

[8] अर्थक्षणमिति. ख. पु. पा. ।  [9] कार्यमप्येकैकमेवेति ख. पु. पा. ।

वक्तव्यम् । अत्र वदामः—यत्तावदिदमुक्तम्—विनाऽपि सहकारिभिः किमिति न करोतीति । तत्तावत् सुगतमतकौशलविरहविजृम्भितम् । क्षणिको हि भावो न सहकारिभिर्विनाऽस्ति । कथमसन्[1] करिष्यति । यस्त्वस्ति, नाऽसौ स इति, न किञ्चित् क्षीणम् । सहकारिभिर्विना किमिति न भवत्येवेति पर्यनुयोगे, हेतुस्वभावैरुत्तरं वाच्यम्—ते[2] तथा भवन्ति, भावयन्ति चेति । एककार्यकारिता चाऽन्त्यक्षणवर्तिनां सहकारिता । ननु तेऽप्यन्यनिरपेक्षा एव जनकाः किमिति न कार्यान्तरमारभन्ते । अत्राऽपि वयमनीशाः—भावास्तु यदारभन्ते, तदारभन्तामित्यनुमन्तुमेव वयं प्रभवामः । ते चाऽमी जनका अपि[3] सन्तस्तदेव जनयन्तीति, पश्यतामस्माकं तावत्येवाऽभ्युपगमः । नन्वेकेन कृते, अपरः किं करोतीति ? भवेदेतदेवं पर्यायेणाऽर्थक्रियायाम्, सहक्रियायान्तु कृत इत्येव नाऽस्ति । नन्वेवमेकस्मादपि तत्सिद्धेः, किमपरे कुर्वन्ति । नैतदेवम् । न ते प्रेक्षापूर्वकारिणः, येनैवं पर्यालोचयेयुः । अन्योऽपीदं कर्तुमस्माभिरपि विना समर्थः, वयमिह न प्रभवाम इति । ते तु हेत्वधीनसन्निधाना न भवितुं न क्षमन्त इति काऽनुपपत्तिः ।

ननु कथमेकं कार्यमनेकस्मादुत्पद्यते । कारणभेद एव हि कार्यस्य भेदे हेतुः, अन्यथाऽऽकस्मिकत्वापत्तेः । उच्यते, न सहकारिकारणभेदाद् भेदः कार्यस्य, किन्तु सामग्रीभेदादिति, [4]हेतुबिन्दौ कृतपरिश्रमाणामनायाससमधिगम्यम् । तस्मान्न क्षणिकत्वेऽप्यक्षणिकत्वपक्षसदृक्षपर्यनुयोगावकाशः । बीजादीनां हि क्षणपरम्परापरिणामेन [5]तादृशः क्षणस्सञ्जायते । यतोऽनपेक्षितहेत्वन्तरप्रवृत्तेरनन्तरमङ्कुरं प्रादुर्भवति । नन्वेवमपि परा-परेषु बीजादिक्षणेषु "तदेवेदमि"ति प्रत्यभिज्ञा नोपपद्यते । अपि च प्रत्यभिज्ञाप्रत्यक्षविरोधे कथमनुमानमात्मानं लभत इत्यपि न वाच्यम् । [6]आत्मलाभे वा वह्नावपि शैत्यानुमानप्रसङ्गः ।

---

[1] कथमेतदिति. मु. पु. पा. ।

[2] तेनेति. मु. पु. पा. ।

[3] सन्त इति. मु. पु. नाऽस्ति ।

[4] सहकारिकारणभेदेन कार्यभेद इति पक्षं निरस्य सामग्रीभेदेन कार्यभेद [ हे. बि. पृ. ५८ ] इति धर्मकीर्तिना व्यवस्थापितम्, तदेवाऽत्र शालिकाचार्यो निर्दिशतीति बोध्यम् ।

[5] तादृशा क्षणा जायन्त इति. मु. पु. पा. ।

[6] लाभ इत्येव मु. पु. पा. ।

समाधिरभिधीयते—ये ते क्षणाः, तेषामात्यन्तिकं भेदं सुसदृशतया दृष्टमपि प्रत्याकलयितुमनीशस्य भेदाग्रहणनिबन्धनोऽभेदव्यवहारः[1] प्रवर्तते, शुक्तिकायामिव रजतव्यवहारः। न चाऽनुमानोदयविरोधः, अर्थक्रियाया अन्यथानुपपत्तेः। प्रत्यभिज्ञा तु भेदाग्रहणेनाऽप्युपपद्यत इति निरवद्यम्। अत एव च वृद्धा वदन्ति—"भवति च प्रत्यक्षादप्यनुमानं बलीय" इति। युक्तश्चेदमेव पश्यामः। "तदेवेदमि"त्येकविज्ञानोदये[2] कारणाभावात्[3], इन्द्रियं सन्निहिते व्याप्रियते, न पुनः पूर्वकालसम्बन्धिता-[4]रूपां तत्तामुपस्पृशति, पूर्वानुभवभाविता च भावना नेदन्तामपरकालयोगात्मिकाम्—इति। तदिदं ज्वालाप्रत्यभिज्ञानेन व्याख्यातम्।

अपि च कृतकानां भावानामवश्यम्भावी विनाशः प्रतीयते। अतोऽपि शक्या क्षणभङ्गिताऽनुमातुम्। तथाहि—यद्येषा ध्रुवभाविनी, तत्र तेषां हेत्वन्तरापेक्षा नाऽस्ति। ध्रुवभावी च कृतकानां विनाश इति, विरुद्धव्याप्तोपलब्धलिङ्गकमनुमानं विनाशस्य हेत्वन्तरापेक्षितां प्रतिक्षिपति। ध्रुवभाविता हि निषिध्यमानहेत्वन्तरापेक्षित्वविरुद्धनिरपेक्षत्वव्याप्तोपलब्धा[5] विनाशस्य हेत्वन्तरानपेक्षितामुपस्थापयति। सा च स्वविरुद्धं हेत्वन्तरापेक्षित्वं निराकरोति। ये हि हेत्वन्तरापेक्षाः, ते ध्रुवभाविनो न भवन्ति। यथा—वाससि रागादयः। अतो हेत्वन्तरापेक्षित्वविरुद्धतन्निरपेक्षत्वव्याप्तध्रुवभावित्वस्य योपलब्धिः, सैवाऽध्रुवभावित्वस्याऽनुपलब्धिः। अध्रुवभावित्वस्याऽनुपलब्धेः, विनाशस्य हेत्वन्तरापेक्षा नाऽस्ति। तथा यदि भावा अपि स्वहेतुभ्यो हेत्वन्तरं विनाशं प्रत्यपेक्षेरन्, ततस्तस्य हेत्वन्तरस्य सन्निधाननियमे प्रमाणाभावात्, कश्चित्कृतकोऽपि न विनश्येत्। स्वहेतोस्तु विनश्वरस्योदयेऽनन्तरमेवाऽपवर्ग इति, क्षणभङ्गुरत्वसिद्धिः।

अपि चेदं चिन्तनीयम्, किं कृतका भावास्स्वहेतुभ्यस्समुपजायमाना विनश्वरस्वभावा एव जायन्ते? अविनश्वरस्वभावा[6]—वा? विनश्वर—स्वभावा उदयानन्तरमेव लीयन्त इति क्षणभङ्गिनः। अविनश्वरस्वभावास्तु

---

[1] भेदाग्रहणव्यवहार इति. मु. पु. पा.। [2] एकविज्ञानोदये ख्यातमिति-मु. पु. पा.।

[3] अपि च कृतकानां भावानामवश्यं भावि विनाश इति मु. पु. दृश्यते। तदितस्तृतीयपङ्क्तावाम्रेडितमिति परित्यक्तमस्माभिरिति ध्येयम्। [4] पूर्वसंबन्धिरूपतामिति. मु. पु. पा.।

[5] उपलब्ध्येति. मु. पु. पा.। [6] स्वभावा इति मु. पु. नाऽस्ति।

न कदाचिद्विनश्येयुः। न च हेत्वन्तरात्तेषां [1]विनाशः, विकल्पासहत्वात्। स हि जायमानो विनाशो भावादव्यतिरेकी ? व्यतिरेकी वा। न तावद-व्यतिरेकी, हेतुभेदात्। व्यतिरेकिणि तु जाते, भावस्य प्राग्वदुपलब्ध्यादि-प्रसङ्गः। तेन तिरोधीयत इति कल्पनायामपि, तिरोधानं प्रत्येप विकल्पो वाच्य[2] इत्यलमतिप्रसङ्गेन।

एकदेशिमतेन क्षणिकत्ववादनिरासः।

अत्र[3] केचिदेवं समादधति—"तदेवेदमि"ति तत्तेदन्ते परस्परं संवलिते समाकलयदेकं प्रत्यभिज्ञासमाख्यातं प्रत्यक्षविज्ञानं क्षणभङ्गानुमानं निरु-णद्धि—इति।

[4]न चेदं समीचीनम्। द्वे एते विज्ञाने ग्रहण-स्मरणरूपे यथायथं तत्तामात्रे, इदन्तामात्रे च व्याप्रियमाणे नाऽलमुभयानुभवसम्भवसमयवर्तिता-मर्थस्याऽवभासयितुम्, प्रतीतिविरोधात्। यथैव खल्वभिन्नदेशकालं वस्त्वे-कतया चकास्ति, तथा भिन्नदेशकालमप्येकतयैव परिस्फुरतीति, तथाविध-संवेदनोदयश्च नैकविज्ञानमन्तरेणेति, एकमेवेदं विज्ञानमुररीकरणीयम्। कार्य-सद्भावोपपादनायाऽप्रतीतमपि कारणं परिकल्पनीयम्, न पुनः कारणमुख-निरीक्षणेन स्पष्टदृष्टकार्यविपर्ययः पर्यालोचनीयः। तेन यद्यपि केवला-दिन्द्रियात्, केवलात् पूर्वानुभवसमासादितजन्मनो भावनाभिधानात् संस्काराद्वा नैवंविधमिदं विज्ञानमुदेतुमर्हति। तथाऽपि तयोरन्योन्यसमवधानसमासा-दितदशान्तरयोरिदं कार्यमित्याचार्या[5] मेनिरे*।

---

[1] विनाशोदय इति. मु. पु. पा.।  [2] वाच्य इति मु. पु. नाऽस्ति।

[3] यत्सत्तत्क्षणिकमित्यनुमानं नोत्पत्तुमर्हति तद्विरोधिनस्स्थायित्वसाधकस्य प्रत्यभिज्ञा प्रत्यक्षस्य जागरूकत्वादिति भाट्टमीमांसकमतमनूद्य दूषयति—अत्रेत्यादिना—निरुणद्धीत्यन्तेन।

[4] नेदमेवेति मु. पु. पा.।  [5] पर्यालोचनाञ्चक्रिर इति ख. पु. पा.। मु. पु. ना.।

*अत्रेदं बोध्यम्—प्रत्यभिज्ञाविषये सौगतानाम्, मीमांसकानाञ्च मतभेदो वर्तते। तत्र ताथागता मन्यन्ते "सोऽयं देवदत्तः" इति तत्तेदन्तावगाहि प्रत्यभिज्ञानं पूर्वोत्तरकालावस्थायि एकं वस्तु नाऽवगाहते, 'यत् सत् तत् क्षणिकमि'ति रीत्या प्रतिसंख्यानिरोधा-प्रतिसंख्यानिरोधा-वरणा-भावातिरिक्तानां समेषां भावानां क्षणिकत्वेन स्थायित्वासम्भवात्। अतस्तैस्सादृश्यमादायैव "तदेवेदमिति" प्रत्यभिज्ञाप्रत्यक्षं "सेयं दीपज्वाला," "तदेवेदमौषधमि"त्यादिवद्व्याख्यातम्। अतः प्रत्यभिज्ञा क्षणिकत्वानुमानस्य साधकमेव, न बाधकम्। किञ्च "तदेवेदमि"ति ज्ञानमिदं नैकमिति वक्तुं शक्यते, कारणभेदात्, विषयभेदात्, स्वभावविरोधाच्च। यतो हि संस्कारः

न चेदमप्युचितम् । प्रत्यक्षमेवेवेदं न भवतीति, सत्यपि संस्कारोपयोगे, इन्द्रियव्यापाराधीनजन्मतयाऽस्य प्रथमसमागमसमयभाविनस्सकलवादिनामपहस्तितविवादानां प्रत्यक्षसम्मतादविशेषात् । न चेदं प्रमाणाभासमित्यत्र किञ्चन प्रमाणमस्ति, बाध-कारणदोषविषयसंवेदनान्तरविरहात् । न चेदमेवाऽनुमानं बाधकमिति चित्तमनुरज्यते, परस्पराश्रयदोषसमासक्तेः । यावत्खल्वेतद्विज्ञानमबाधितम्, तावदनुमानमेव नोदेतुं प्रभवति, सञ्जाते चाऽनुमाने बाधितमिदं भवतीति, विशदतरमितरेतराश्रयत्वम्[1] । अबाधितविषयता[2] चाऽपि कारणमनुमानोदये, अन्यथा हुतवहे शीतता किमिति नाऽनुमीयते । नन्वेवं तर्हि कथं ज्वालादीनामेकत्वेनाऽवधारितानामनुमानतो भेदसिद्धिः ।

भाट्टमतेन वस्तुनो द्व्यात्मकतोपन्यासः ।

अत्र सिद्धान्तसारमुदीरयन्ति—समान्य-विशेषात्मकानि सर्ववस्तूनि । तत्र ज्वालादिषु प्रत्यक्षं सामान्यविषयम्, अनुमानन्तु विशेषविषयमिति, भिन्नगोचरप्रचारिणोः प्रत्यक्षा—नुमानयोर्विरोधाभावात्, न प्रत्यक्षेणाऽनुमानोदयविरोधः। कथं पुनरक्षणिकस्याऽर्थक्रियाकारिता ? क्रमेणेति वदन्ति । स खलु सहकारिसमवधानोपहितविशेषो भावस्तां तामर्थक्रियां क्रमेणैव सम्पादयति । ननु विकल्पितं-सहकारिभिः किं व्यतिरिक्तः, अव्यतिरिक्तो वा विशेष आधीयत इति, दूषणानि चेह विकल्पयुगले पूर्वमावेदितानि ।

---

पूर्वकालसम्बन्धितारूपां तत्तामवगाहते, वर्तमानकालसम्बन्धितारूपामिदन्तामिन्द्रियम् । अतः प्रत्यभिज्ञानं नैकं विज्ञानमित्येव युक्त मिति ।

इदमविचारितरमणीयमिति नैयायिक—मीमांसकादयोऽभिप्रयन्ति । तेषामयम्भावः—तथा हि "सोऽयं देवत्तः" तदेवेदमिति चेदं विज्ञानं पूर्वोत्तरकालावस्थायि वस्त्वैक्यावगाहि नाऽपलपितुं शक्यते । यद्यपि केवलेन संस्कारेणेदन्ता गृहीतुं न शक्यते, न वा केवलेनेन्द्रियेण तत्ता, तथाऽपि यथा करम्बिताभ्यां वृक्षशिंशपाजनकसामग्रीभ्यां करम्बितशिंशपावृक्षो जन्यते, तथा संस्कारसध्रीचीनेन्द्रियेण हेरम्ब—नृसिंहादिवत् तदेवेदमिति ज्ञानमुत्पद्यत इति किन्नोपपद्यते। प्रत्यभिज्ञायास्सादृश्यविषयकत्वे तत्सदृशमिति प्रतीतिस्स्यात्, ननु तदेवेदमिति । पूर्वोत्तरवर्तिनोर्द्वयोः परस्परवार्तानभिज्ञत्वादिति ।

[1] इतरेतरकारणत्वमिति क. पु. पा. ।

[2] अनुमानसामग्रीपरिगणनावसरे अबाधितविषयत्वमप्यनुमानोत्पत्तौ कारणत्वेन पठितम् [ प्र. पं. पृ. २१२ ]। तदेव स्मारयति—अबाधितेति ।

**[1]अत्राऽपि त एव प्रक्रियामनुक्रमयन्ति। नेदमस्मन्मतमेकान्ततोभिन्नान्येव सर्ववस्तूनि, अभिन्नानि [2]वेति, किन्तु सर्वभावेषु भेदा-भेदौ सङ्गिरामहे। तत्र भेदमात्रविकल्पसम्भवीनि[3] दूषणान्यभेदाश्रयणेन परिहृतानि, अभेदमात्राश्रितानि च भेदावलम्बनेनेति। नन्वेतौ भेदा-भेदौ कथमेकत्र विरोधिनौ निविशेते। *तत्राऽऽहुः—नेमौ विरोधिनौ, सहदर्शनात्। सहानवस्थानलक्षणो हि विरोधः, अनवस्थानञ्चाऽदर्शननिबन्धनम्। अतो नाऽस्ति विरोधः।**

---

*अत्रेदमवधेयम् जातिव्यक्त्योर्भेदः, अभेदः, भेदा-भेदाविति दार्शनिका मिथो विप्रतिपद्यन्ते। तत्र भेदः पारमार्थिकः, अभेदव्यपदेशो गौण इति व्यपदिशन्ति तार्किकाः प्राभाकराश्च। अद्वैतवेदान्तिनस्तु-अभेदः पारमार्थिकः, भेदः काल्पनिकः, भिद्यमानानन्त्यत्वाद्भेदस्येत्याशेरते।

भाट्टमीमांसकास्तु—जातिव्यक्त्योः भेदा-भेदावातिष्ठन्ते। तेषामयम्भावः—जात्यात्मनाऽभेदः, व्यक्त्यात्मना भेद इति। अपर्यायत्वे सति सामानाधिकरण्यप्रत्ययो भेदा-भेदाववगाहते। अनुभवेनैकत्र भावा-भावप्रतिपादनान्न विरोधश्शङ्कितुं शक्यते। तथा च भाष्यकारवचनम्—"अनुपपन्नमिति नः क्व सम्प्रत्ययः, यन्न प्रमाणेनाऽवगतम्" [ शा. भा. पृ. ६४ ] इति। अतस्सर्वेषु "इयङ्गौः, इयङ्गौः" अयङ्घटः, अयङ्घटः" इति सकलगवादिष्वनुगतं विजातीयेभ्यो व्यावृत्तं देशान्तरकालान्तरेष्वबाधितं व्यावृत्तानुवृत्ताकारं प्रत्यक्षमुत्पद्यते। तदेव च प्रत्यक्षं सामान्य-विशेषात्मना द्व्याकारं वस्तु व्यवस्थापयति। स च सामान्याकारो गोत्व-घटत्वादिजातिः, विशेषाकारस्तु तत्तद्व्यक्तिरित्यनुभवबलादवगम्यते। अतः "इयङ्गौरि"ति इदं-गोपदयोरपर्यायत्वे सति सामानाधिकरण्यदर्शनाद्भेदाभेदावेवाऽङ्गीकर्तव्य इति। अतः कौमारिलमते जाति-व्यक्त्योर्भेदा-भेदावङ्गीक्रियेते। भेदपक्षे सम्भाविता दोषा अभेदपक्षाश्रयणेन परिह्रियन्ते, अभेदपक्षे सम्भाव्यमाना दोषा भेदपक्षावलम्बनेन पराणुद्यन्त इति, न किञ्चिदवहीनम्। अयमेवाऽनेकान्तवाद इत्युच्यते। इयमेव रीतिरवयवावयविनोः, गुणगुणिनोः, क्रियाक्रियावतोरङ्गीक्रियते कौमारिलैः।

सांख्यैस्सदनुवृत्त्या सर्वस्य वस्तुनस्सद्रूपत्वं प्रतिपाद्यते। इदञ्चाऽसहमानास्ताथागता व्यावृत्त्यात्मकं सर्वं वस्त्विति वर्णयन्ति। समन्वयवादी कुमारिलभट्टस्तयोस्समन्वयेन सामञ्जस्यं प्रतिपिपादयिषुरनेकान्तवादं भेदसहिष्णुतादात्म्यरूपं भेदाभेदगर्भं समर्थयामास। तदेव शालिकाचार्यष्टीकाकारप्रभाकरगुरोननुमतमिति भाट्टसम्मतं भेदाभेदवादमुपपाद्य निरास्थत्—अत्राऽपीत्यादिना भिन्नाभिन्नविशेषाश्रयणेनाऽर्थक्रियासमर्थनं न घटत इत्यन्तेन।

अस्य च शालिकोक्तस्योपपादन-निराकरणे पार्थसारथिना शास्त्रदीपिकायास्तर्कचरणे 'कश्चित्पुनराह इत्यादिना तस्मादुपपन्नं भिन्नाभिन्नत्वमि"त्यन्तेन [ शास्त्र. दी. पृ. १०१ ] द्रष्टव्ये।

[1] प्रतिनियमेत्यादिरस्माकमित्यन्तो मु. पु. पा। [2] चेति. मु. पु. पा.।
[3] संभाविनीति. मु. पु. पा.।

तन्निरासः।

[1]तदिदमविचारितरमणीयमिति [2]प्रभाकरगुरोर्नाऽनुमतम्। स हि ददर्श—भेदा-भेदावेव तावदेकत्र न सम्भवतः, विरोधात्। न हि तयोस्सह-दर्शनमुपपद्यते। एकाकारप्रतीतिरेव खल्वभेददर्शनम्, विलक्षणाकार-प्रतीतिश्च भेददर्शनम्। तत्र यद्येकाकारा प्रतीतिः, तदा विलक्षणाकारप्रती-तिर्नाऽस्ति। विलक्षणाकारे च प्रतीते, एकाकारप्रतीतिरेव नाऽस्ति। तेन भिन्ना-भिन्नविशेषाश्रयणेनाऽर्थक्रियासमर्थनं न घटत[3] इति। न च प्रत्यभिज्ञाने-नाऽनुमानविरोधः,[4] प्रत्यभिज्ञाया एव परीक्षणीयत्वात्। दृष्टा—शुक्तिकायां "तदेवेदं रजतमि"ति मतिः। सा च सादृश्यवशेन भेदाग्रहणनिबन्धनैवेति युक्ताऽत्राऽपि परीक्षा। तत्र परीक्ष्यमाणस्याऽर्थक्रियानुपपत्त्या क्षणिकत्वे निर्णीते, [5]सदृशपरा—परोत्पत्तिविप्रलम्भोऽयमिति निश्चीयते। भवति च विमृशतोऽपि[6] दिङ्मोहादिष्वनुमानवशेन जाताया अपि प्रतीतेर्विपर्ययः। हुतवहादिषु चौष्ण्यप्रतीतिरुपजाता परीक्ष्यमाणाऽपि नाऽन्यथोपपद्यत इति, न विपर्ययानुमानोदयः। तस्मादलमनेन [7]वञ्चनादर्शनेनाऽतिनिर्बन्धेन[8]।

सिद्धान्तः।

[9]गम्भीरतरगुरुदर्शनसागरपारदृश्वानस्तु सम्प्रति समाधिमभिदधति—स्तम्भादिषु प्रथममनुभूतेषु पुनरन्तरा तिरोधानादिवशेन विच्छिन्नोपलम्भेषु पुनरनुभवतः "स एवाऽयमि"ति तावज्जायते मतिः। तत्र यद्यर्थक्रिया स्थिरा-दपि कथञ्चिदुपपद्यते, ततो भेदाग्रहणनिबन्धनोऽयमभेदव्यवहार इति किमिति कल्प्यते। उपपद्यते च स्थिरादपि भावात् सहकारिविशेषोपजातागन्तुक-क्रियादिरूपविशेषभाजः क्रमेणाऽर्थक्रिया। स च विशेषो व्यतिरिक्त एव

---

१ एतेनेति. ख. पु. पा.।

२ गुरूणामिति बहुवचनान्तः पाठो मुद्रितपुस्तके दरीदृश्यते। परमनन्तरवाक्ये-स हि ददर्शेत्येकवचनान्तपाठदर्शनादेकवचनान्त एव पाठोऽस्मभिस्समादृत,इत्यवधेयं सूरिभिः।

३ अघटमानमिति. मु. पु. पा.।

४ प्रत्यभिज्ञानुमानविरोध इति. मु. पु. पा.।

५ सदृशपरम्परेति-मु. पु. पा.।

६ हुतवहादिष्विति. मु. पु. पा.।

७ नानाटकपक्षपतितेनेति मु. पु. पा.।

८ नग्नादेकपक्षपतितादसारतरनिर्बन्धनदर्शनेनेति क्वचिद् दृश्यते।

९ इदानीं स्वमतेन भावानां स्थायित्वम्, क्रमेण कार्योत्पत्तिम्, प्रत्यभिज्ञाप्रामाण्यञ्च वर्णयति-गम्भीरेति।

भावादर्थक्रियाकारिणः । न च स एवाऽर्थक्रियाकारी, भावस्तूदास्त इति चतुरस्रम् । तथाविधविशेषालीढतैव तस्य साधनता, यदनन्तरमर्थक्रियोदयः, तद्विशेषयोगितयैव भावेषु साधनत्वव्यवहारो लौकिकानाम् ।

कथं पुनरसौ विशेषस्तस्येति व्यपदिश्यते, तदाश्रयतयैवाऽनुमानात् । कथं पुनस्तदाश्रयतैव । स्वहेतुवशेनेति मत्वा निवर्ततां भवान्, अलमस्माभिर्दूरमनुयातैः । अथ कस्माद्भावस्यैव भेदो नाऽनुमीयते, प्रत्यभिज्ञानानुगुण्यादिति वदामः । दृष्टानुसारि चाऽनुमानमुचितम्, दृष्टोपपत्तिमुखत्वात् । यथा चाऽर्थक्रिया दृश्यते,[1] तथेदमपि दृश्यते स्थावरो भाव इति, तदनुगुणमनुमानमुचितम् । तेन स्थावरेऽप्यर्थक्रियाव्यापकक्रम-यौगपद्यानिवृत्तेरसिद्धो व्यापकानुपलम्भः, [2]तदसिद्धौ च विपर्यये बाधकाभावात्, असिद्धतन्मात्रानुबन्धिनीं क्षणिकतां न सत्ता साधयितुमलम्, अनैकान्तिकत्वादिति । न चाऽर्थक्रियाकारितैव सत्ता, किन्तु [3]प्रमाणसम्बन्धयोग्यता । यतस्स्वरूपसत्ता च प्रमाणसम्बन्धयोग्यता । अतोऽर्थक्रियामकुर्वन्नपि सन्निति, न किञ्चिदवद्यम् ।

यत्त्विदमुदितमनपेक्षा भावा विनाशं प्रति—इति । तदपि विमृश्यमानं [4]दह्यमानं जातुषमिवाऽऽभरणं विलीयते[5] । कं खलु भवन्तो विनाशमभिमन्यन्ते ? प्रध्वंसाभावो विनाश इति चेत्—कः पुनः प्रध्वंसाभावः ? "दध्नि क्षीरं नाऽस्तीस्त्ये" वमादिका भावविषया संविदिति यद्युच्येत, तदाऽमृतकलायामुदिता नीतिरुद्धरणीया[6] । न हि नाऽस्ती"ति बुद्धिरस्ति । किन्तु दधिस्वरूपमात्रानुभव एव स्वयम्प्रकाशे नञ्शब्दप्रयोगमात्रमेव, सैव हि पयसो नास्तिता, या दृश्येऽपि तस्मिन् दधिस्वरूपमात्रोपलब्धिः । न च तां प्रति पयस एव निरपेक्षस्य हेतुता, अनुपनिपतिते हेत्वन्तरे, पयस एवोपलब्धेः ।

---

[1] अर्थक्रियाकारितेति मु पु पा ।

[2] तदसिद्धेनेति मु पु. पा ।

[3] जातिनिर्णयाख्ये चतुर्थे प्रकरणे सत्तापरपर्याय महासामान्यं निराकृत्य, प्रमाणसबन्धयोग्यत्व सत्त्व व्यवस्थापितं ग्रन्थकृता । सिंहावलोकनन्यायेन पुनस्तदेव स्मारयति—किन्त्वित्यादिना । अत्रत्यो विशेषो विस्तरेण [ प्र पं. पृ ९७-९९ ] टिप्पण्या द्रष्टव्य ।

[4] दह्यमानमिति मु पु ना । [5] विशीर्यत इति मु. पु. पा. ।

[6] अनुसरणीयेति ख. पु पा. ।

न चेदं पयोन्तरमुपलभ्यत इति शक्यं वक्तुम् । प्रत्यभिज्ञानस्याऽभेद-साधकत्वात् । ननु च हेत्वन्तरापेक्षित्वे ध्रुवभाविता नोपपद्यते । ध्रुव-भावितैव कुतोऽवगम्यते ? दर्शनादिति चेत् ? हेत्वन्तरेणाऽप्यवश्यं भवितव्यमिति, दर्शनादेवाऽवगम्यताम् । न च बाला वयं[1] येनैवंविधवादाद् भीषयामहे ।

यत्पुनरिदं स्वहेतुभ्यो भावानामपि नश्वराणामुत्पत्तौ, हेत्वन्तरायत्ते विनाशे, व्यतिरेकिणि जातेऽपि पूर्ववत् भावस्योपलब्ध्यादिप्रसङ्ग इति । अत्रोच्यते—उक्तमस्माभिः—यथा तन्मात्रोपलब्धिरेव विनाश इति । तेन तस्या हेतुसद्भावात् तयैव भवितव्यम् । अनुपलब्धिरपि तस्य सैवेत्यनुपल-ब्धिरेव तस्य नोपलब्धिः, तन्निबन्धनश्चाऽभावव्यवहारोऽपीति सर्वमनाकुलम् ।

सुगताशीविषविषमक्षणभङ्गविषानलावलीढायाः ।
मीमांसाया विहिता[2] मर्ममयी जीवरक्षेयम् ॥१॥

इति महामहोपाध्यायश्रीशालिकानाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां मीमांसाजीवरक्षा नाम दशमं प्रकरणं समाप्तम् ॥

---

[1] बिभीम इति मु. पु. पा., बिभीषामह इति. ख. पु. पा. ।

[2] तत्त्वमयीति. मु. पु. पा. ।

## सवृत्तिकाया वाक्यार्थमातृकाया उपोद्घातो नाम प्रथमः परिच्छेदः ।

[1]गम्भीरविततमर्थं वाचा संक्षिप्तया निबद्धमपि ।
न विदन्ति ये समग्रं कृपया तदनुग्रहः क्रियते ॥१॥

[2]तत्र कार्यवाक्यार्थवादिन एव भावम्, भावनाम्, अपूर्वञ्च वाक्यार्थान् प्रतिजानते। तत्राऽपूर्वमेव वाक्यार्थ इति साधनीयम्। तस्य मूलं पदानामन्विताभिधायितेति, तामेव तावदादौ परिशोधयति। [3]अत्र ये प्रत्यस्तमित-

---

[1] तत्र भवान् ग्रन्थकार प्राभाकरसम्मत वाक्यार्थं कार्यरूप सिसाधयिषुर्वाक्यार्थमातृकानामक प्रकरण विरचयन्, तावताऽपरितुष्यन्तदर्थविवरणात्मिका तद्वृत्तिं प्रतिजनीते—गम्भीरेति।

[2] कार्यरूपो वाक्यार्थ इति वैयाकरणा, भाट्टमीमासका, प्राभाकराश्चाऽऽतिष्ठन्ते। तत्र कार्यं—क्रियेति पर्याय। धात्वर्थ—क्रिया, स एव वाक्यार्थे मुख्यविशेष्यतया भासत इति वैयाकरणा मन्वते। यथोक्त तै—

"फलव्यापारयोर्धातुराश्रये तु तिङस्स्मृता ।
फले प्रधान व्यापारस्तिङर्थस्तु विशेषणम्" [वै भू सा] इति ।

भाट्टमीमासकास्तु—धात्वर्थो न क्रिया, किन्तु करणकारकम्, कर्मकारक वा भवति। धात्वर्थे क्वचित्क्रियाव्यापदेशो लाक्षणिक, मुख्या क्रिया तु भावना, सा चाऽऽख्यातप्रत्ययार्थ, न प्रकृत्यर्थ। सैव वाक्यार्थे मुख्यविशेष्यतया भासत इति सङ्गिरन्ते। तथा चोक्तम्—

"भावनैव हि वाक्यार्थस्सर्वत्राऽऽख्यातवत्तया
अनेकगुणजात्यादिकारकार्थानुरञ्जिते"। [त वा पृ सं ४४५]। ति

प्राभाकरास्तु—कार्यं लिङ्गादेरर्थ, तच्च सामान्यरूपेण लिङादिनाऽभिधीयते। विशेषतस्तु—तत्तद्धात्वर्थो लोके। यथा—पाक, गमनमिति। अतो लोके तन्मते क्रियैव कार्यशब्देनाऽभिधीयते। वेदवाक्यविमर्शज तु—तत्तद्धात्वर्थातिरिक्त कालान्तरावस्थायि यागादिक्रियातो भिन्न स्वर्गकामपदसमभिव्याहारान्यथानुपपत्तिगम्यमपूर्वमेव कार्यमिति। तस्यैव वैदिकलिङ्गादिवाच्यत्वम्, वाक्यार्थे मुख्यविशेष्यतया च भानमित्याचक्षते। अयमर्थो द्वितीयपरिच्छेदे विस्तरेणोपपादयिष्यते। अस्माभिश्च शास्त्रपरिच्छेदे [प्र पं पृ २३५-२३६] विशदं समुपावर्णि। एतमेवोक्तमर्थं क्रमशो दर्शयति—कार्यवाक्यार्थवादिन इत्यादिना। अयमर्थ उत्तरत्र स्पष्टीभविष्यतीति वक्ष्यमाणमेवाऽर्थं श्रोतृबुद्धिसमाधानायाऽऽह—तत्रेति। पदाना कार्याभिधायित्वमुत्तरत्र स्फुटीकरिष्यते।

[3] वैयाकरणमतमाह—"अत्र ये" इत्यादिना

पदविभागम्, वाक्यमेव वाक्यार्थस्य वाचकमित्याचक्षते। [1]ये च वाक्यान्त्यवर्ण एवेति,[2] ये च पदैरनन्विताः पदार्था अभिहिताः परस्परान्वयमात्मनोऽवगमयन्ति—इति।

तन्निरासाय प्रतिजानीते—

**पदेभ्य एव वाक्यार्थप्रत्ययो जायते यथा।**
**तथा वयं निबध्नीमः प्रभाकरगुरोर्मतम् ॥१॥**

पदेभ्य एव, न वाक्यात्, नाऽप्यन्त्यवर्णात्, नाऽपि पदार्थेभ्य इत्यर्थः ।१॥

तं प्रकारं वक्तुमुपक्रमते—

**पदैरेवाऽन्वितस्वार्थमात्रोपक्षीणशक्तिभिः।**
**स्वार्थाश्चेद् बोधिता बुद्धो वाक्यार्थोऽपि तथा सति ॥२॥**

वाक्यार्थप्रतिपत्तौ हि पदानामनुपायत्वे तदन्यथानुपपत्त्या, वाक्यमेकं तदुपायभूतं कल्प्यते। यद्यपि व्युत्पत्त्यनपेक्षाच्छब्दादर्थो नाऽवगम्यते। यद्यपि चाऽऽनन्त्याद्वाक्यानाम्, तदर्थानाञ्च, वैदिकस्य चाऽर्थस्याऽनन्योपायत्वात् व्युत्पत्तिरशक्या। तथाऽपि काल्पनिकपद-पदार्थव्युत्पत्तिसंस्कृतात् वाक्याद्वाक्यार्थमवगच्छतीत्याश्रीयते। यदि काल्पनिकत्वे पद-पदार्थानां प्रमाणाभावादेकैकवर्णोच्चारणेऽर्थानवबोधात्, क्रमेणोच्चारितानाञ्च युगपच्छ्रवणासम्भवात्, पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः, तस्य च पारमार्थिकपद-पदार्थव्युत्पत्तिस्सहकारिणीति पक्षस्स्वीक्रियते, यदि वा पदैस्सुकरव्युत्पत्तयोऽनन्विता एव स्वार्था अभिहिता वाक्यार्थमवबोधयन्तीत्यङ्गीक्रियते, यदि तु पदान्येवाऽन्वितान्स्वार्थानभिदधतीति शक्यते साधयितुम्, तदा वाक्यार्थस्याऽवबुद्धत्वान्नैताः कल्पना आत्मानं लभन्ते ॥२॥

कथं पुनः पदानामन्वितस्वार्थमात्रबोधकत्वे वाक्यार्थावगतिस्सिद्ध्यतीत्यत्राऽऽह—

**[3]प्रधानगुणभावेन लब्धान्योन्यसमन्वयान्।**
**पदार्थानेव वाक्यार्थान् सङ्गिरन्ते विपश्चितः ॥३॥**

---

[1] मीमांसाभाष्यकारमतम्, नैयायिकमतञ्चाऽऽह—ये चेति।

[2] वार्तिककाराणां मतमाह—ये च पदैरिति।

[3] परमतनिरासं प्रतिज्ञाय, स्वाभिमतं राद्धान्तमुपन्यस्यति—प्रधानेत्यादिना पद्येन।

ननु तेषां भूयस्त्वाद् भूयांसो वाक्यार्थाः, वाक्यानि च स्युरित्यत्राऽऽह—

भूयाँसो यद्यपि स्वार्थाः पदानां ते पृथक्पृथक् ।
प्रयोजनतया त्वेकवाक्यार्थं सम्प्रचक्षते ॥४॥
तत्प्रतीत्येककार्यत्वाद्वाक्यमप्येकमुच्यते ।

कथं पुनरेकप्रयोजनत्वमित्यत्राऽऽह—

प्रतिपत्तिर्गुणानां हि प्रधानैकप्रयोजना ॥५॥

यद्धि प्रधानभूतं, तदेव कथन्नाम विशिष्टं प्रतीयतामित्येवमर्थं गुणानां प्रतिपादनम्, तेन तत्रैव तात्पर्यम्, तदेव प्रमेयम्, तात्पर्यविषय एव शब्दस्य प्रामाण्याभ्युपगमात्, तस्य तथाभूतस्य प्रतिपत्तिर्नैकपदनिबन्धनेति, वाक्यमेव तत्र प्रमाणम् । अत एव च "[१]षष्ठाद्ये न पदं नाम किञ्चन वाक्ये, न पदार्था नाम केचन वाक्यार्थे" [बृ. टी. ६-१-१] इत्युक्तम् । पृथग्भूतं पदं नाम न किञ्चन प्रमाणमस्ति । पृथग्भूताश्च पदार्थाः, न प्रमेयास्सन्तीत्यर्थः । एतच्च तत्रैव स्पष्टमुक्तम् ॥५॥

[१]सम्प्रति वाक्यमेव वाचकं वाक्यार्थस्येति ये ब्रुवते, [२]ये च वाक्यान्त्यवर्ण एवेति । तन्निराकरणायाऽऽह—

व्यवहारेषु वृद्धानां वाक्यश्रवणभाविषु ।
आवापो-द्धारभेदेन पदानां शक्तिनिश्चयः ॥६॥

---

अयं भावः—पदान्येव वाक्यम्, पदार्था एव वाक्यार्थ इति गुरुमतस्थितिः । पदार्थमेवैकं प्रधानं गुणभूतार्थान्तरव्यतिषक्तं वाक्यार्थमाचक्षते प्राभाकराः । अतो गुणभूतार्थान्तरव्यतिषक्तप्रधानपदार्थस्यैकत्वादेकवाक्यत्वम् । गुणप्रधानभेद एव वाक्यभेदप्रयोजकः । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत", "समिधो यजति" इत्यङ्गप्रधानवाक्यभेदयोरपि गुणान्वितप्रधानभेदोऽस्त्येव वाक्यभेदावस्थायाम्, यदा तु ग्राहकग्रहणम्, तदैकवाक्यत्वमेव । तथा च पदार्थानां संसर्गो न वाक्यार्थः, अपि त्वन्विताः पदार्था एव वाक्यार्थ इति भावः ।

[१] निरवयवं वाक्यं निरवयवस्य वाक्यार्थस्य वाचकमिति वैयाकरणा मन्वते । तन्निरासायाऽनुवदति—सम्प्रतीति ।

[२] "वाक्यस्थेषूच्चरत्सु वर्णेषु प्रतिवर्णं श्रवणं भवति, श्रुतं वर्णमेकमनेकं वा पदभावेन प्रतिसन्धत्ते, प्रतिसन्धाय च व्यवस्यति. पदव्यवसायेन स्मृत्या पदार्थं प्रतिपद्यते । पदसमूहप्रतिसन्धानात् वाक्यं व्यवस्यति । संबद्धांश्च पदार्थान् गृहीत्वा वाक्यार्थं प्रतिपद्यते" [न्या. द. अ. ३. आ. २. सू. ६२] इति वात्स्यायनभाष्यसन्दर्भपरिशीलिनां मतम्, मीमांसाभाष्यपरिशीलिनाञ्च मतमुपन्यस्यति—ये चेत्यादिना ।

यद्यपि वृद्धव्यवहारपूर्विकैव सर्वा शब्दव्युत्पत्तिः, वाक्यैरेव च व्यवहारः। तथाऽपि यत्पदावापे यस्याऽर्थस्याऽऽवापः, यदुद्धारे चोद्धारः, तस्मिन्नेवाऽर्थे तस्य पदस्य वाचकशक्तिरवसीयते। न च तथा सति वाक्यार्थप्रतिपत्तिर्नोपपद्यते, वक्ष्यमाणत्वान्न्यायस्य। येन कार्यबलेन वाक्यमेकं प्रत्यक्षपरिदृश्यमानवर्णपदभेदापह्नवेन कल्प्येत।

[१]किञ्च, "शिशो! गामानय, शिशो! गां बधान, वत्स! गामानय, वत्स! गां बधान, अर्भक! गामानय, अर्भक! गां बधान, डिम्भ? गामानय, डिम्भ? गां बधान"त्यष्टानां वाक्यानामष्टौ वाचकशक्तयः कल्प्याः। पदवादिनस्तु, सप्तानां पदानां सप्तैव शक्तय इति कल्पनालाघवम्। अनयैव दिशा शुक्लामिति पदप्रक्षेपे वाक्यवादिनोऽष्टावपराः कल्प्याः, [२]पदवादिनस्त्वेकैव। अपारमार्थिके च [३]पद-पदार्थविभागे किमाश्रिता व्युत्पत्तिरभ्युपायतामुपैतीत्यपि चिन्तनीयम्।

ये पुनः—वाक्यान्त्यवर्णस्य वाचकतामाहुः, तन्मतेऽपि तावत् पदार्थविभागस्य पारमार्थिकत्वात् घटेतैव व्युत्पत्तिः। ननु वाच्यवाचकसम्बन्धग्रहणमेव व्युत्पत्तिरित्युच्यते। न च वाक्यान्त्यवर्णवाचकत्ववादिनां पदं पदार्थस्य वाचकम्। अतस्तन्मतेऽपि निर्विषयैव व्युत्पत्तिः। उच्यते। न निर्विषया, निमित्तनैमित्तिकभावस्याऽभ्युपगतत्वात्। केयमवाचकस्य निमित्तता? नैष दोषः। वाक्याद्धि यत्पदप्रयोगे[४] सति, यत्पदार्थान्वितो वाक्यार्थः प्रतीयते, तत्पदं तस्याऽर्थस्याऽवाचकमपि भवति निमित्तम्। किन्तु तन्मतेऽपि शक्तिकल्पनागौरवं पूर्वोक्तन्यायेन तुल्यमेव।

---

१ अत्रैते संग्रहश्लोका बोध्या :—

"डिम्भाऽर्भक शिशो बाल गां बधानाऽऽनयेति यत्।
पदसप्तकमेतेन रचिते वचनाष्टके ॥१॥
शक्त्यष्टकं कल्पनीयं स्याद्वर्णावलिवादिनः।
पदानामेव सप्तानां सप्तैव खलु शक्तयः ॥२॥
पदवादिमते कल्प्या इति स्यात्तस्य लाघवम्।
शुक्लामिति पदन्यासाद्वाक्ये षोडशके कृते ॥३॥
शक्त्यष्टकन्त्वेव भवेदष्टानां पदवादिनः" ॥ ३ इति।

२ वाक्यानामिति. मु. पु. पा.।

३ पदविभाग इति मु. पु. पा.।

४ अन्वय इति मु. पु. पा.।

*येऽप्याहुः—वाक्यमेव स्मृत्यारूढं वाक्यार्थं प्रतिपादयतीति, तेषामपि प्राच्यमेव शक्तिकल्पनागौरवलक्षणं[1] दूषणमशक्यपरिहारम्। [2]भाष्यकारवचनञ्च "पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः" [शा. भा. पृ. ४६] इति निर्विषयम्। अशक्यश्च महावाक्यस्य सकृत्स्मरणम्। तस्मात्पदानामेव वाचकशक्तिराश्रयणीया।

अत्र केचिच्चोदयन्ति—ननु वृद्धव्यवहारप्रयुक्ते वाक्ये पदानां वाचकशक्त्यवधारणमेव नोपपद्यते। पुरुषवाक्यानामर्थं प्रति लिङ्गभावेन प्रमाणत्वाभ्युपगमात्। वाक्याद्धि कार्यभूतात्प्रतीतस्य वक्तुस्तदर्थविषयं पूर्वविज्ञानं [3]कारणभूतमनुमीयते। तस्य च ज्ञानस्य ज्ञेयाव्यभिचारित्वात् ज्ञेयभूतार्थनिश्चय इति, न वाचकशक्त्यवगमः। उच्यते। न नूनं भवान् [4]नीतिपथोक्तमर्थं सम्यगाकलयति। परिहृतं हि तत्रेदम्—बालो हि व्युत्पद्यमानः प्रयोज्यवृद्धस्य शब्दश्रवणसमनन्तरभाविनीं विशिष्टचेष्टानुमितामर्थप्रतीतिं शब्दकारणिकामवगच्छति। स तथा व्युत्पन्नः कदाचित्कस्यचिदनन्वितार्थपदरचनं वाक्यमुपलभते, तथोपलभमानस्य चैष विमर्शो जायते—सम्भाव्यमानानन्वितार्थपदरचनमिदं वाक्यं कथं प्रयोज्यवृद्धस्य अर्थनिश्चयं कृतवत्? वृद्धस्याऽपि पुरुषायत्ते वाक्येऽनन्वितार्थपदरचनशङ्का ममेव सम्भवतीति। तस्यैवं विचिकित्सोदये पुनरेष निश्चयो जायते—नूनमनेनाऽयं प्रयोक्तेत्थमवधारितो यदन्वितार्थान्येव पदान्ययं प्रयुङ्क्ते-इति। तथाविधपदप्रयोगनियमश्चाऽस्याऽनुपलब्धेऽन्वये नोपपद्यत इत्येवमन्वयोपलम्भमनुमिमानेनाऽन्वयो निश्चीयते। निश्चिते चाऽन्वये वाक्यमेतदनुवादभूत[5]मर्थस्येति। एवञ्चेदनुवादकतया तस्याऽर्थस्य तद्वाक्यं वाचकमेवेति, पूर्ववाचकशक्तिज्ञानं नाऽयथार्थमिति मन्यते। यदि परं मया

---

* प्रत्येकवर्णपदानुभवभावितभावनानिच यत्रब्धजन्मस्मृतिदर्पणारूढमेव वाक्यार्थबोधकमिति मीमांसकैकदेशिननां मतमाह—येप्याहुरिति।

[1] लक्षणमिति. मु. पु. नाऽस्ति।

[2] इदं भाष्यं व्याचक्षाणष्टीकाकारः—कोऽयं संस्कार इत्यादिना संस्कारं निराकुर्वन्, अनास्थावादपरतया भाष्यसन्दर्भमयूयुजत्। ऋजुविमलायामितोऽधिको विशेषो [पृ. १४६-१६१] द्रष्टव्यः।

[3] अयं विषयश्शास्त्रपरिच्छेद उक्तः, अत्राऽपि द्वितीयपरिच्छेदे वक्ष्यते।

[4] नीतिपथोक्तमर्थं शालिकाचार्यस्स्मारयत्यत्रेति ध्येयम्। [5] अनुवाद इति मु.पु.पा.।

प्रागनुमानपुरस्सरोऽर्थनिश्चयोऽस्येति नाऽवगतम्। याऽपि चेयमर्थस्यानिश्चितेऽन्वये विशिष्टवक्तृज्ञानानुमा, साऽपि पदानां स्वरूपमात्रावगमादेव नोपपद्यते, किन्तु विशेषावगमात्। न च शक्तेरन्यः पदानां विशेषोऽवगम्यते। ततो मयैवाऽनेनाऽपि पदानां वाचकशक्तिरवधारिता। तेन विशिष्टान्वयवाचकपदप्रयोगात्तद्विषयं वक्तुः पूर्वज्ञानमनुमितवान्, इति गम्भीरोऽयं नीतिमहाह्रदः।

अन्विताभिधानानुपपत्तिशङ्का।

अत्र [1]केचिदाचक्षते—भवतु पदानां पदार्थेषु शक्तिज्ञानम्, तथाऽप्यन्विताभिधानं न सिध्यति—इति। तथाहि—प्रतियोगिनामनन्ततया अन्वयानामानन्त्यात्, तदानन्त्ये चाऽन्वितानामप्यानन्त्यात्सम्बन्धग्रहणं दुष्करम्। अगृहीतसम्बन्धस्य च पदस्य वाचकत्वे, एकस्माच्छब्दात्सर्वार्थप्रतीतिप्रसङ्गः[2]। सामान्यान्वयाभिधानञ्च नाऽऽशङ्कनीयमेव, वाक्येभ्यो विशेषान्वयावगमात्। स्वरूपमात्राभिधानेनाऽपि च वाक्यार्थप्रतिपत्त्युप[3]पत्तावन्विताभिधानाश्रयणे शक्तिकल्पनागौरवम्[4]।

तथा[5] पदेनाऽन्वितस्स्वार्थोऽभिधीयमानः—किमभिहितेन पदार्थान्तरेणा-

---

[1] पदैरभिहिताः पदार्था आकांक्षायोग्यतासत्तिमन्तो लक्षणया पदार्थसंसर्गरूपं वाक्यार्थं बोधयन्तीति भाट्टमीमांसका आशेरते। तदुपोद्बलकतया—पदानीत्यादि—वगमयन्तीत्यन्तं भाष्यं प्रमाणयन्ति। तद्दूषयितुमनुवदति—केचिदित्यादिना।

[2] प्रसङ्गादिति. मु. पु. पा.।

[3] प्रतिपत्ताविति. मु. पु. पा.।

[4] गौरवादिति. मु. पु. पा.।

[5] **अत्रेदं बोध्यम्—**

अत्र विकल्पद्वयमुपन्यस्य पक्षद्वये प्रसज्यमानं दूषणजातमत्र ऋजुविमलापञ्जिकायां पर्यहार्षीत्। तथा च तत्रत्योऽयं पञ्चिकासन्दर्भः—

उत्तरम्—इदं ततः। व्यतिषिक्ता एवाऽभिधेया इति। कुतः? तत्प्रतिपत्तये हि शब्दार्थव्यवहारो यतस्तथाऽवस्थितमेव वस्तु शब्देन वाच्यम्, न पुनरन्यथाभूतम्, अतोऽन्विता एवाऽभिधेयाः, स्वभावतोऽन्वितत्वात्। ननु च न वस्तुस्वभावोऽन्विताभिधानम्, किं तर्हि? व्यवहारे आवापोद्धाराभ्याम्। तौ च स्वरूपमात्र एव सम्भवतः, न पुनर्व्यतिषक्ते, व्यतिषक्तान्तरव्यभिचारेण तद्व्यतिषङ्गव्यभिचारात्। अपि च व्यतिषक्ताभिधानेऽङ्गीक्रियमाणे शक्तिकल्पनागौरवम्। किञ्च किं सामान्येन व्यतिषक्तमभिधीयते, विशेषेण वा? आद्ये कल्पे वृथाऽभिधानमिदम्, अर्थसामर्थ्येनाऽपि तत्सिद्धेः। द्वितीये तु विशेषाणामानन्त्येन सम्बन्धग्रहणाशक्तिः। अगृहीतसम्बन्धस्य वाचकत्वे प्रथमश्रवणेऽपि यत्किञ्चिदर्थप्रतीतिप्रसङ्गः,। किञ्च किमभिहितेन विशेषेण तद्व्यतिषक्तमभिधीयते, अनभिहितेन वा?

ऽन्वितोऽभिधीयते ? उत, अनभिहितेनेति ? विकल्पनीयम् । अनभिहितेन

---

अभिहितपक्ष इतरेतराश्रयम् । द्वितीयमपि पदमभिहितार्थान्तरव्यतिषक्ताभिधायकत्वेनेतर-पदाभिधानमाश्रयतीति प्रसक्तं दुरुत्तरमितरेतराश्रयम् । अनभिहितपक्षे पदान्तरप्रयोगवैयर्थ्यम् । अत एव केचिदभिहितानां पदार्थानामेवाऽन्योन्यान्वयबोधकतामभ्युपगच्छन्ति । ते हि मन्यन्ते—आवापोद्वाराभ्यां वृद्धव्यवहारे पदानि स्वरूपमात्रेणाऽर्थानभिदधते, तेऽर्थाः परस्परम-पेक्षा-सन्निधि—योग्यताभिरुपसंस्कृता अदृष्टमेवाऽन्योन्यान्वयमवगमयन्ति । न च तत्र सम्बन्ध-ग्रहणाशक्तिपर्यनुयोगः, गृहीतसम्बन्धपदप्रतिपादितानामगृहीतसम्बन्धानामेव पदार्थानामन्वयाव-बोधकत्वदर्शनात्, अभिनवकविरचितेषु, वैदिकेषु च वाक्येषु प्रतीतिं प्रति विवादाभावादिति । तत्राऽऽह—"व्यवहारे च यथाव्यतिषङ्गमेवाऽऽवापोद्वारो" इति । अस्याऽर्थः वृद्धव्यवहारे च यथाव्यतिषङ्गं-व्यतिषङ्गमनतिक्रम्याऽऽवापोद्वारो । तथाहि—"गामानय" इत्यानयत्यन्वि-तस्यैव गोरावापः, "महिषमानय" इति च तदन्वितस्यैवोद्वारः, तेनाऽन्वित एव शब्दस्य सामर्थ्यमवसीयते । तच्च द्विधा सम्भवति—साक्षाद्वाऽभिधानेन, पदार्थप्रतिपत्त्यवान्तर-व्यवधानेन वेति सम्प्रधारणीयम् । न तत्र साक्षात्सम्भवे प्रणाडीसमाश्रयणमुचित-मित्यन्विताभिधानमेव निर्णीयते । न च सम्बन्धग्रहणाशक्तिः, उपाधिविशेषाश्रयणेन सुकरत्वात्, आकाङ्क्षा—सन्निधानोपस्थापितान्वययोग्यार्थान्तरान्वितस्वार्थाभिधायीनि पदानीति व्युत्पत्तिपरिग्रहे न किञ्चिदनुपपन्नम् । योऽपि चाऽभिहितान्वयवादी, सोऽपि पदार्थेषु न विधिमिममतिवर्तते । न च शक्तिकल्पनागौरवम्, पदार्थेष्वपरिहार्यत्वाच्छक्तिक-ल्पनायाः । ननु च दृष्टेयं पदार्थानां शक्तिः । तथाहि—अव्यक्तगुणिविशेषं श्वेतिमानं चक्षुषा परिछन्दन् हेषया चाऽश्वत्वमनुमिमानः पदनिक्षेपशब्देन च गन्तारं परिकल्पयन् "श्वेतोऽश्वो गच्छति" इति प्रतिपद्यते । तत्र "श्वेतिमा" "अश्वः" "गन्ता" इति पदार्थत्र-यमन्योन्यान्वयमवगमयतीति । तदनुपपन्नम्; अनुमानतो हि हेषयाऽश्वत्वमनुमीयमानं हेष-माणपुरोवर्तिद्रव्यगतमेवाऽनुमीयते, न स्वतन्त्रम् । यत्रैव हि लिङ्गम्, तत्रैव लिङ्गिनमनुमा-पयति । यस्य पुनरपादानदेशविभ्रमो हेषायाः, असावश्वत्वं प्रतिपद्यमानोऽपि न विशेषमव-धारयति । योऽपि पारिशेष्याद्विशेषमवगच्छति, सोऽप्यर्थापत्तेर्विशेषमवगच्छतीति न पदार्थमात्रस्य क्वचिदन्वयबोधकत्वम् । अपि च यदि श्वेतिमादयः प्रमाणान्तरपरिच्छिन्नाः, तदा प्रमाणान्तर-तापातः, तस्याऽशब्दत्वात्, शब्दप्रतिपादितपदार्थपूर्वकं वाक्यार्थज्ञानं शाब्दम्, नाऽशब्दपूर्वकमपीति । अपि च प्रथमोपनिपतिनि शब्द एव शक्तिः कल्प्यताम्, किमिति तं परित्यज्य, पदार्थं यावद्-गम्यते । किञ्च पदस्याऽभिधानशक्तिस्तावदविवादैव, तत्रैवाऽतिरेकः कल्पयितुं युक्तः; न पुनः पदार्थेषु शक्तिकल्पना, धर्मिकल्पनातो धर्मकल्पनाया लाघवात् । यच्चेदमिहे तरेतराश्रयत्वं चोदितम्, तदप्येवं निरसनीयम् । न पदमात्रात्केवलादेवार्थागमः, किन्तु यावन्ति पदानि वाक्ये, तावन्ति श्रुत्वा न्यायानुसारेण वचनव्यक्तिविशेषमवसायाऽर्थोऽवगम्यते । तत्र पदेषु प्रथमश्रुतेषु पदार्था अन्विता एव स्मर्यन्ते, यथा पदार्थदर्शने पदम् । अन्वितेऽपि ह्यभिधीयमाने स्वरूपं नाऽपैत्येव, तेन शक्नोति तया प्रत्यासत्त्या तत्स्वरूपमात्रं पदं स्मारयितुम् । तत्र स्मृतिसन्नि-हितपदार्थान्वितस्वार्थं पदमभिधत्त इति नेतरेतराश्रयत्वम् । स्मरणे हि निरपेक्षत्वात्, पदार्था अपि स्मृता एवाऽन्योन्यान्वयमवगमयन्ति ।

चेत्, [१]पदान्तरप्रयोगवैयर्थ्यम् । एकस्माच्च [२]सर्वान्वयप्रतीतिप्रसङ्गः । अभिहितेन चेत्, तदपि तर्हि पदमन्विताभिधायितया [३]पदान्तरोपात्तमर्थमभिधानायाऽपेक्षत—इति, इतरेतराश्रयः प्राप्नोति । तस्मात्पदान्तराभिधानानपेक्षस्वरूपमात्राभिधानमेवाऽर्थानां पदैः क्रियते । ते च तथाभूताः पदैरभिहिताः पदार्था आकाङ्क्षा-सन्निधि-योग्यतावन्तो वाक्यार्थमवगमयन्ति । न तेषां सम्बन्धग्रहणापेक्षा शङ्कनीया । यतः पदधर्मोऽयम्, नाऽयमर्थधर्मः । तदाह भाष्यकारः—"[४]पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि । अथेदानीं अवगतास्सन्त वाक्यार्थमवगमयन्ती" [पू. मी. १. १. २५.] ति । ६ ॥

तदेतन्निराकर्तुमुपक्रमते—

**ओप्यन्ते, चोद्ध्रियन्ते च स्वार्था अन्वयशालिनः ।**
**अन्वितेष्वेव सामर्थ्यं पदानां तेन [५]गम्यते ॥७॥**

**तत्रैव वार्तिकमतेन शङ्का ।**

अत्राऽऽह—सत्यमन्वितपदार्थविषयावेवाऽऽवापोद्धारौ, तथाऽप्यन्विता-

---

तदाहुः—

"तेऽपि नैवाऽस्मृता यस्माद्वाक्यार्थं गमयन्ति नः ।
तस्मात्तत्स्मरणेष्वेव संहतेषु प्रमाणता" ॥ इति ।

तदिदं सर्वमुक्तमस्माभिर्वाक्यार्थमातृकायामेव । यतो यथाव्यतिषङ्गमेवाऽऽवापोद्धारौ, तस्माद्व्यतिषक्ताभिधानमेवेदं पदम् [ ऋ. वि. पं. पृ. ३८३-३८५. ] इति

एतेनाऽन्विताभिधानवादे वाचस्पतिमिश्रेणोक्तं दूषणम्, [ तत्व. बिं. पृ. ९३ । ] पार्थसारथिमिश्रेणाऽभिहितं दूषणम् [न्या. र. वा. नि. पृ. ९३], चित्सुखाचार्येण प्रसञ्जितं दूषणं [ प्र. त. प्र. पृ. १४५ ], च दूरोत्सारितमित्यवधेयम् ।

[१] पदार्थान्तरेति. मु. पु. पा. । [२] पदार्थात् सर्वार्थेति. मु. पु. पा. ।

[३] पदार्थान्तरोत्यमर्थाभिधानमिति मु. पु. पा. ।

[४] अत्र 'अथेदानीं पदार्था अवगतास्सन्तः' इति शाबरभाष्ये पाठो दृश्यते । अत्र तु "पदार्था अवगताः सन्त" इत्यस्य स्थाने "अभिहिताः सन्त" इति पाठो दृश्यते । अस्य वाक्यस्य प्राभाकरसम्मतोऽयमर्थः—पदानि—अन्वितमर्थमभिधाय पर्यवस्यन्ति, "पदार्था" इत्यनेनाऽन्विताः कथ्यन्ते । वाक्यार्थशब्देन चाऽन्वय उच्यते । तथा चाऽयं निर्गलितोऽर्थऽन्वितार्थप्रतिपादिकानि पदानि । अन्वयस्याऽनभिधानेऽन्वितस्याऽभिधानं नैव युज्यते । तस्मात् व्यतिषक्ताभिधायीनि पदानि । अत्र व्यतिषक्तः—अन्वित इति पर्यायः । व्यतिषङ्गः, अन्वयः वाक्यार्थं इति च पर्यायस्तन्मत इति ध्येयम् ।

[५] गद्यत इति. मु. पु. पा. ।

भिधानमशक्यम्। पारम्पर्येणाऽपि तदुपपत्तेः। तथाहि—पदैरनन्वितोऽप्यभिहितोऽर्थोऽन्वितार्थप्रतिपत्तेर्निमित्तं भवतीति, पदानां पारम्पर्येणाऽन्वितेष्वपि हेतुत्वम्। तदाहुर्वार्तिककारमिश्राः—

"न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः।
तन्मात्रावसितेष्वेषु पदार्थेभ्यस्स गम्यते"॥

[श्लो. वा. अधि. ७. श्लो. २२६] इति।

पदार्थप्रतिपादनञ्च वाक्यार्थप्रतिपत्तये प्रयुक्तानां पदानामवान्तरव्यापार इति च, तेषामेव व्यवहारः—

"वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्।
पाके ज्वालेव काष्ठानां [1]पदार्थप्रतिपादनम्"॥

[श्लो. वा. अधि. ७. श्लो. ३४३.] इति।

एतामाशङ्कामुपेक्ष्यैव तावद्दोषान्तरं परिहरति—

**आकाङ्क्षा-सन्निधिप्राप्तयोग्यार्थान्तरसङ्गतान्।**
**स्वार्थानाहुः पदानीति व्युत्पत्तिस्संश्रिता[1] यदा ॥८॥**
**आनन्त्य-व्यभिचाराभ्यां तदा दोषो न कश्चन।**

यत्तावदुक्तम्—आनन्त्याच्छब्दशक्त्यवधारणानुपपत्तिः, अगृहीतशक्तेश्च वाचकत्वे व्यभिचारप्रसङ्ग इति। तदनुपपन्नम्। उपलक्षणाश्रयणेनाऽपि [2]सम्बन्धबोधः, सौकर्यादाकाङ्क्षितेन योग्येन सन्निहितेन चाऽन्वितं स्वार्थं पदं वक्तीति व्युत्पत्तिराश्रीयते। तेन—

[3]यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते।
तदन्वितः पदेनाऽर्थस्स्वकीयः प्रतिपाद्यते॥ इति संग्रहश्लोकः।

---

१ मयेति मु. पु. पा.।

२ बोधसौकर्यादिति मु. पु. पा.।

3 अत्रेदमवधेयम्—शालिकाचार्येण वाक्यार्थमातृकायाम्, स्वोपज्ञायां तद्वृत्तौ च प्राभाकारसिद्धान्तप्रतिपादकाश्श्लोकाः प्रकरणेऽस्मिन्नुपनिबद्धाः। प्रामाणिकाः प्राञ्चो ग्रन्थकृतस्तन्मतानुवादप्रसङ्गे स्वोक्तार्थदार्ढ्याय तान् श्लोकानुदाहरन्तो वाक्यार्थमातृकास्थत्वेनोपन्यस्यन्तीति बोध्यम्।

आकाङ्क्षाविषये न्यायमतोपन्यास-निरासौ ।

का पुनरियमाकाङ्क्षा ? प्रतिपत्तुर्जिज्ञासा । किन्निबन्धना पुनरसौ ? [१]अविनाभावनिबन्धनेति केचित् । क्रिया हि कारकाविनाभाविनीति तां प्रतीत्य, कारकं जिज्ञासते, एवं कारकमपि बुध्वा, क्रियामिति । [२]तदयुक्तमिति मन्यामहे ?, जिज्ञासाविरामानुपपत्तेः । तथाहि—यदा तावत् कारकजिज्ञासा, तदा तदीयजनक—तद्‌गुण—तत्क्रिया—तत्कारकान्तरादिजिज्ञासाऽप्यापद्यते । अथ प्रयोजनाभावात् कारकातिरिक्तमन्यन्न जिज्ञास्यते, तर्हि क्रियामात्रावगमेऽपि यत्र कारकज्ञानेन प्रयोजनं नाऽस्ति, तत्र जिज्ञासा न स्यात् । अनुष्ठेयतया हि क्रियायामवगतायां कारकमन्तरेण तदनुष्ठानानुपपत्तेः, कारकज्ञानं न प्रयोजनवत् । वर्तमानापदेशादौ त्वननुष्ठेयतया नाऽस्ति न कारकज्ञानेन प्रयोजनम् । अथ च यत्राऽपि वाक्यमपरिपूर्णं मन्यन्ते, साकाङ्क्षार्थाभिधायितया चाऽपरिपूर्णता । अत एव तत्राऽध्याहारमपि कुर्वन्ति ।

यत्राऽपि चाऽनुष्ठेयक्रियावगमः, तत्राऽपि निश्शेषकारकजिज्ञासा स्यात् । यथा—देवदत्त ! "गामानये"ति [३]करणानुपादानादपरिपूर्णता स्यात् । अथैककारकज्ञानेनाऽपि तावदनुष्ठानोपपत्तेर्न कारकान्तरजिज्ञासा, तर्हि देवदत्त ! "गामानय दण्डेने"ति प्रयुक्तेऽपि दण्डशब्दे, तदाकाङ्क्षा न स्यात् । ततश्च-अनाकाङ्क्षितत्वात् तस्य, तदन्वयो न स्याद्वाक्यार्थे । अथ दण्डपदोच्चारणात् तत्राऽऽकाङ्क्षा परिकल्प्यते । [४]अन्यथा दण्डपदार्थस्याऽनन्वये तत्पदोच्चारणमनर्थकं स्यात् ।

एवम्"प्यरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाती" [तै. सं. ६.१.६] त्यत्राऽप्यनन्वयप्रसङ्गः । न हि वेदपदोच्चारणेनाऽनर्थकेन न भवितव्यमिति किञ्चन प्रमाणमस्ति, अतो न तत्राऽऽकाङ्क्षोदये किञ्चित्कारणमस्तीति, "सोमं क्रीणाती"त्यतोऽधिकस्याऽनन्वितता स्यात् । अपि च लौकिकत्वात् क्रिया-कारकयोः, यत्किञ्चित्क्रिया-कारकोपादानेऽपि तत्सिद्धेरविघातान्नाऽतीव विशेषजिज्ञासा घटते । अज्ञाते हि ज्ञानेच्छा घटते, न पुनर्ज्ञातेऽपि ।

---

[१] तार्किकाः—इत्थमाकाङ्क्षां लक्षयन्ति यत्पदस्य यत्पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वम्, तस्य पदस्य तेन पदेनाऽऽकाङ्क्षा । यथा—कारकपद–क्रियापदयोरिति ।

[२] उपपादितं तार्किकमतं निरस्यति—तदयुक्तमिति ।

[३] करणानुवादादिति. मु. पु. पा. ।

[४] अपदार्थस्येति मु. पु. पा. ।

स्वमतेनाऽऽकाङ्क्षाकथनम् ।

[1]अत्रोच्यते—अभिधानापर्यवसानम्, अभिधेयापर्यवसानञ्च जिज्ञासोदये निबन्धनम्। एकपदप्रयोगे हि [2]द्वारमित्यादावभिधानमेव न पर्यवस्यति। न ह्यनुच्चरिते प्रतियोगिसन्निधापके[3] पदेऽन्विताभिधानं शक्यते वक्तुम्। वृद्धव्यवहारवशेनाऽन्वितार्थप्रतिपादनपरता पदानामवधारितेति, तदर्थं युक्तैव प्रतियोगिजिज्ञासा। यस्याऽप्यभिहितान्वय इति राद्धान्तः, तन्मतेऽपि पदार्थस्य [4]पदार्थान्तरमन्तरेणाऽन्वयासामर्थ्यात्, तदुपपत्तये युक्तैव [5]प्रतियोगिजिज्ञासा। तस्याञ्च सत्यामपरिपूर्णवाक्यपरिपूरकतया लोकेऽध्याहारस्य[6] [7]विदितत्वात्, प्रकरणादिवशेन योग्यप्रतियोग्यध्याहारः क्रियते।

"अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती" [आ.श्रौ.१.३.७.सू.१.२.] त्यादिष्वनेकपदप्रयोगादन्विताभिधानेऽपि, अभिहितस्य कार्यस्याऽपूर्वात्म-

---

[1] तार्किकसम्मतामाकाङ्क्षा निरस्य, स्वमतेनाऽऽकाङ्क्षास्वरूपमुपपादयितुमुपक्रमते—अत्रोच्यत इत्यादिना। अयम्भाव—अभिधानापर्यवसानात्, अभिहितार्थापर्यवसानाद्वा पदार्थान्तरे पुरुषस्य या जिज्ञासा समुत्पद्यते, साऽऽकाङ्क्षेत्युच्यते प्राभाकरै—आकाङ्क्षा च प्रतिपत्तुर्जिज्ञासेति। अत एवोक्तम्—

"अभिधानावसाना हि जिज्ञासाऽर्थाच्च जायते।
प्रयोजनावसानाच्च पदार्थे सा निवर्तते"॥ इति।

शालिकाचार्योऽप्य"न्वितस्याऽभिधानार्थमि" [प्र प पृ ३८८.] त्यादिना वक्ष्यति। तत्राऽऽद्यस्योदाहरणम्—यथा—द्वारमिति। अत्र प्रकृत्यर्थादतिरिक्ते प्रत्ययार्थे न प्रतीतिरस्ति। ]न प्रकृत्या स्वार्थोऽभिधीयते। प्रातिपदिकार्थमात्रे प्रथमाया विधानात्, तस्मादत्राऽभिधान-पर्यवसानाय प्रतिपत्ता पुरुष. पदार्थान्तर स्मारितान्वययोग्य जिज्ञासते।

द्वितीयस्योदाहरण यथा—"विश्वजिता यजेत" इति। अत्राऽभिहितस्याऽर्थस्याऽपर्यव-सानात्, लिङर्थ. कार्यम्, धात्वर्थस्य विषयत्व-करणत्वाभ्यामन्वयाद्विषयकरणान्वितस्य कार्यस्या-भिधान पर्यवसितम्। परन्तु तत्कार्यं नियोज्यविशेषमन्तरेण न पर्यवस्यति। न खलु कार्यमनु-ष्ठानं विना व्यवतिष्ठते। अनुष्ठानञ्च नाऽकर्तृकम्, न चाऽनधिकृतः कर्ता भवति, न चाऽनियो-ज्योऽधिकृत इति, कार्यानुष्ठान-कर्त्रधिकार-नियोज्यसमुदायात्मक पौर्वापर्येण "तृप्तिकामः ]चेत्," इति लोके, "दर्शपूर्णमासाभ्या स्वर्गकामो यजेत" इति च वेदे प्रसिद्धम्। विषय-करणान्वितस्य कार्यस्य पर्यवसानाय तदन्वययोग्यनियोज्यजिज्ञासा जायत इत्याशयेनाऽऽह—अभिधानेति।

[2] द्वारमित्येव मु. पु. पा।
[3] सन्निधाविति मु. पु पा.।
[4] पदार्थान्तरेणेति मु. पु पा.।
[5] प्रतिज्ञेति. मु. पु. पा.।
[6] व्यवहारस्येति. मु. पु. पा.।
[7] विहितत्वादिति मु. पु. पा.।

नोऽनुष्ठानं विना कार्यत्वानुपपत्तेः, कर्त्रा च विना तदसम्भवात्, अधिकाराहते च तदयोगात्, नियोज्यमन्तरेण च तस्याऽनवकल्पनात्, तदुपपत्तये युक्तैव तदन्वययोग्यनियोज्यजिज्ञासा। तस्यां सत्यामपरिपूर्णत्वावगमात्, लोकवदध्याहारे कर्तव्ये सत्यपि, [1]जीवनस्याऽऽवश्यकत्वेऽन्तरङ्गत्वे च [2]विधेरनुष्ठानाक्षेपो न कल्पेतेति, तत्परित्यागेन काम्ये नियोज्यविशेषणे स्थिते सर्वकामिपुरुषव्यापिस्वर्गस्यैव नियोज्यविशेषणत्वयोग्यत्वात्, स्वर्गकामो नियोज्योऽध्याह्रियते।

[3]तथाऽध्ययनविधावन्यप्रयुक्तानुष्ठाननिर्वाहितकार्यभावे नियोज्यो नाऽध्याह्रियते। [4]अलौकिकत्वाच्चाऽपूर्वे कार्ये नियोज्यस्याऽध्याहारमन्तरेणाऽऽकाङ्क्षा न निवर्तते। अलौकिकत्वादेव च "सौर्यं चरुं[5] निर्वपेत् घृते शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः" [मै. सं. २. २. २] इत्यादौ करणोपकारमन्तरेण विधेस्सिद्ध्यसम्भवात् तज्जिज्ञासा, तज्जनकपदार्थजिज्ञासा च। अत एव तदभावे भाष्यकारो वाक्यानां [6]न्यूनतामाशङ्क्य परिहृतवान्[7]।

नन्वेवं तर्हि यत्र पदत्रयं प्रयुज्यते—"गामानय शुक्लामि"ति लोके, तत्र हि कारकद्वयस्याऽसम्भवान्नाऽऽकाङ्क्षाऽस्तीति कथमन्विताभिधानम्। "गामानयेत्ये"तावतैव परिपूर्णत्वाद्वाक्यस्य। सत्यम्। पदान्तरानुच्चारण एवम्, उच्चरिते तु तस्मिन्, तस्याऽप्यानयतिसन्निधानादेकवाक्यत्वावगमादानयत्यन्वितस्वार्थाभिधायित्वात्, आकाङ्क्षां विना च तदसम्भवात्, आनयतेराकाङ्क्षा परिकल्प्यते। तथा चोक्तं [8]भाष्यकारेण—"भवति च रक्तं

---

[1] अयमंशो मुद्रितपुस्तके न दृश्यते। [2] परिधेरिति मु. पु. पा.।

[3] नियोगगतकृतिसाध्यतारूपकार्यताघटकतया विषय एव नियोगप्रतीत्यनुबन्धः, न तु नियोज्यः। अतो नियोज्याभावेऽप्यध्ययननियोगस्य, प्रयाजादिनियोगानाञ्च प्रतीतिसम्भवात्, तत्र नियोज्यो नाऽध्याह्रियते। अयमर्थोऽत्रैव द्वितीयपरिच्छेदे "नियोज्यान्विताभिधानञ्च-प्रायिकमि"त्यत्र विवरिष्यते ग्रन्थकृतेति बोध्यम्।

[4] अयौगिकत्वादिति मु. पु. पा.।

[5] यद्यपि मीमांसाग्रन्थेषु "प्रायशस्सर्वेषु" सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम" इत्येव पाठो दृश्यते। तथाऽपि मैत्रायणीशाखास्थमिदं वाक्यमिति, तत्रत्य एव पाठो मूले निवेशित इति ध्येयम्। [6] अग्लानतामिति ख. पु. पा.।

[7] एतेषु च सौर्यादिषु विध्यादिरस्ति, विध्यन्तो नास्ति। एतेष्वपि स विध्यन्तः कल्प्यते। कथं कृत्वेत्यादिना–तेन वैदिकीतिकर्तव्यता प्राप्यत इत्यन्तेने [शा. भा. ७. ४. १.]ति शेषः।

[8] विध्य-र्थवादयोरेकवाक्यताप्रतिपादनावसरे—अर्थवादाधिकरण इति शेषः।

प्रत्याकाङ्क्षे" [ शा. भा. पृ. ११७. ]ति । तेनाऽत्राऽप्यन्विताभिधानसिद्ध्यर्थमेवाऽऽकाङ्क्षा । यदि परमयं विशेषः, "द्वारमि"त्यादौ तस्यैव पदस्याऽन्विताभिधानायाऽऽकाङ्क्षा, "गामानय शुक्लामि"त्यादौ तु [1]पदान्तरस्येति ।

अन्वितस्याऽभिधानार्थमुक्तार्थघटनाय वा ।
प्रतियोगिनि जिज्ञासा या साऽऽकाङ्क्षेति गीयते ॥ इति सङ्ग्रहश्लोकः ॥

सा चेयमाकाङ्क्षा [2]भवन्ती व्युत्पत्तावुपलक्षणमाश्रीयते । किमिति पुनस्सन्निधि-योग्यत्व एव [3]नाऽऽश्रीयते, निराकाङ्क्षाणामन्विताभिधानादर्शनात् । "अयमेति पुत्रो राज्ञः, पुरुषोऽयमपनीयतामि"त्यादौ पुत्रपदसम्बन्धनिराकाङ्क्षो राजा न पुरुषेणाऽन्वीयते । कस्मात्पुनरनयोः पुत्र-पुरुषयोस्सन्निधि-योग्यत्वाविशेषेऽपि पुत्रेणैव राज्ञस्सम्बन्धः, न पुरुषेण । उच्यते—वाक्यात् [4]वाक्यार्थप्रतिपत्तेर्न्यायसापेक्षत्वात्, नित्यसापेक्षेण पुत्रेणैव राजा सम्बध्यते, तत्सम्बन्धनिराकाङ्क्षश्च न पुरुषसम्बन्धमनुभवतीत्याकाङ्क्षाऽपि व्युत्पत्त्युपलक्षणमाश्रीयते ।

परिपूर्णेन योग्यस्य समीपस्याऽप्यनन्वयः[5] ।
व्युत्पत्तौ तेन शब्दानामाकाङ्क्षाऽप्युपलक्षणम् ॥ इति संग्रहश्लोकः ॥

सा चेयमाकाङ्क्षा प्रतियोगिषु सर्वेषु न सहसैवोपजायते, किन्तु कारणोपनिपातक्रमेण । तथाहि—विषयमन्तरेणाऽपूर्वं कार्यं प्रत्येतुमेव न शक्यत इति, प्रतिपत्त्यनुबन्धभूतविषयापेक्षा प्रथमं विधेः । अथ प्रतिपन्ने विषयसम्बन्धिनि विध्यर्थे, नियोज्यमन्तरेण तत्सिद्ध्यसम्भवान्नियोज्याकाङ्क्षा । तथा विषयीभूते भावार्थे करणे लब्धे, वैकृतापूर्वाणां करणोपकाराकाङ्क्षा, लब्धे च तस्मिन्, तज्जनकपदार्थाकाङ्क्षेति ।

तथा चाऽऽहुः—

"प्रतियोगिषु सर्वेषु नाऽऽकाङ्क्षोदेति तत्क्षणात् ।
कारणोपनिपातानुपूर्व्येण तु यथायथम्" ॥ इति ॥

---

[1] पदार्थान्तरस्येति. मु. पु. पा. । [2] भवन्तीत्येव मु. पु. पा. ।
[3] साकांक्षेणेति. मु. पु. पा. । [4] वाक्यादिति. मु. पु. ना. ।
[5] "अनन्वया [तन्त्ररहस्ये पृ० ३१] दि"त्युद्धृतः पाठः ।

तत्क्रमेणाऽन्विताभिधानमपि क्रमेणैव ।

श्लोकश्चाऽत्र भवति—

जिज्ञासा जायते बोद्धुस्सम्बन्धिषु यथा यथा ।
तथा तथैव शब्दानामन्वितार्थाभिधायिता ॥

सन्निधिनिरूपणम् ।

अथ [1]सन्निधिः कः ? [2]यस्याऽर्थस्य श्रवणानन्तरमाकाङ्क्षा-योग्यताभ्यामर्थान्तरे बुद्धि विपरिवृत्तिः । सा च न शब्दनिबन्धनैव केवलमन्विताभिधानव्युत्पत्तावुपलक्षणम्, [3]अध्याहृतेनाऽपि लोके अन्विताभिधानदर्शनात् । न च वाच्यं—शब्द एवाऽध्याह्रियते, स चाऽर्थमुपस्थापयति—इति, अनुपयोगात्, अप्रमाणकत्वाच्च । यद्यप्यर्थापत्तिप्रमाणकोऽध्याहारः, तथाऽपि शब्दकल्पनमनुपपन्नम् । येन हि विना ऽनुपपत्तिः, तदेवाऽर्थापत्तिप्रमेयम् । न चाऽर्थानां शब्दमन्तरेणाऽनुपपत्तिः । स्यान्मतम् । अर्थकल्पनायैवाऽर्थापत्तिः प्रवर्त्तमाना तस्याऽर्थस्य सविकल्पकज्ञानवेद्यत्वात्, सविकल्पकज्ञानानाञ्च शब्दपुरस्सरत्वात् पुरोवर्तिनि शब्द एव पर्यवस्यति—इति । तदसत् । यथैव शब्दपुरस्सरेऽपि सविकल्पकज्ञाने लिङ्गस्य, इन्द्रियाणाञ्च निर्विकल्पकदशायामर्थ एवाऽवधारितशक्तित्वान्न शब्दमात्रे पर्यवसानम्, तथा दृष्टार्थापत्तौ साक्षादुपपादकेऽर्थ एवाऽर्थापत्तेः प्रामाण्याभ्युपगमात्, श्रुतार्थापत्तावपि तत्रैव तस्याः प्रामाण्यं युक्तम्, न शब्दे । तस्य साक्षादनुपपत्तिशमनासमर्थत्वात् ।

किञ्च सर्वत्र सविकल्पकज्ञाने शब्दस्स्मरणविपरिवर्ती न प्रमेयतां प्रतिपत्तुमर्हति । सविकल्पकल्पकज्ञानेषु पूर्वप्रतीयमानता च शब्दस्य नाऽतीव प्रमाणवती, किन्त्वर्थप्रतीतावेव समानकालं शब्दस्मरणमिति प्रतीत्यारूढम् । तेन न श्रुतार्थापत्तिश्शब्दविषया । न च शब्दानुपपत्त्या शब्दकल्पनै-

---

[1] यथा सन्निधिकथनं तथेति. मु. पु. पा. । [2]यदनन्तरं बुद्धाविति. ख. पु. पा. ।

[3] सन्निधिश्शब्दकृत एवेति भाट्टमीमांसका मन्यन्ते, पदजन्यपदार्थोपस्थितेश्शाब्दबोधे हेतुत्वात् । प्राभाकरमीमांसकास्तु पदार्थोपस्थितेरेव शाब्दबोधे हेतुत्वं मन्यमानाश्शब्दजन्यत्वमुपस्थितौ न सहन्ते, किन्तु मनसि विपरिवर्तमानं सर्वमपि । अत एवाऽर्थाध्याहारवादिन इति गीयन्ते । अत्र यद्वक्तव्यम्, तत्सर्वमनागतावेक्षणन्यायेनाऽर्थापत्तिपरिच्छेदे [प्र. पं. पृ. २७८-२८१] विवेचितमस्माभिः, तत् तत एवाऽवगन्तव्यम् ।

वोचिता, तस्य स्वतोऽनुपपत्त्यभावात्। अन्विताभिधानानुपपत्त्या तु कल्पना प्रसरन्ती योग्यप्रतियोग्यर्थविषयैवाऽवतिष्ठते, तस्यैवाऽऽकाङ्क्षितत्वात्, [1]दशमाद्यन्यायेन पदार्थवत् पूर्वप्रतीतस्याऽपि शब्दस्योपेक्षणीयत्त्वात्।

न च "द्वारमि"ति यत्राऽध्याहारः, तत्राऽप्याव्रियताम्, संव्रियतामिति वा कल्पयितुमर्थापत्तेः प्रभविष्णुता, सामान्यकल्पनामात्रहेतुत्वात्। तस्माद्-परिपूर्णपरिपूरकतया लोकत एवाऽध्याहारस्याऽप्युपपत्तिः[2]। तत्र योग्यतया, प्रकरणादिवशेन च विशेषावधारणादर्थ एव च परिपूरक इति, अनुपयोगी शब्द-स्याऽध्याहारः। अतो विश्वजिदादौ नियोज्येन, सर्वत्र च करणोपकारेण, विकृतिषु च प्राकृतपदार्थैरशब्दोपस्थापितैरपि सिद्धमन्विताभिधानम्। आकाङ्क्षावच्च सन्निधावपि सन्निधापकक्रमेणैव क्रमो वेदितव्यः, तदनुसारेण चाऽन्विताभिधानमपि तथैव—इति।

सन्निधिश्शब्दजन्मैव व्युत्पत्तौ नोपलक्षणम्।
अध्याहृतेनाऽप्यर्थेन लोके सम्बन्धदर्शनात्॥
सहसैव न सर्वेषां सन्निधिः प्रतियोगिनाम्।
सन्निधापकसामग्रीक्रमेण क्रमवानसौ॥
यथा यथा सन्निधानं जायते प्रतियोगिनाम्।
तथा तथा क्रमेणैव शब्दैरन्वितबोधनम्॥ इति सङ्ग्रहश्लोकाः।

अतो यथोक्ताकाङ्क्षा—सन्निधिप्राप्तमाकाङ्क्षितं सन्निहितं योग्यञ्च यत् पदार्थान्तरम्, तेन सङ्गतमित्यर्थः।

योग्यतानिरूपणम्।

किं पुनरिदं योग्यत्वं नाम? उच्यते—यत् [3]सम्बन्धार्हम्। सम्बन्धार्ह-

---

[1] अत्रेदं बोध्यम्—अतिदेशस्योभयमतसाधारण्येऽपि निरूपणे प्रकारभेदो विद्यते। तथा हि—भाट्टमते उपकारस्याऽतिदेश, तत्पृष्ठभावेन तज्जनकीभूताना पदार्थानामू, तत्पृष्ठभावेन शास्त्रस्येत्यङ्गीक्रियते।

प्राभाकरास्तु—प्राकृतस्योपकारस्योपदेशेनैव विकृतावन्वय, पदार्थानान्त्वतिदेशेनेति स्वीकुर्वन्ति। तन्मते उपदेशशब्देन ग्रन्थसन्दर्भोऽभिधीयते। स चाऽर्थान्तरान्वित विध्यर्थं कार्य प्रतिपादयति। स तथाभूत औपदेशिक एव। स चाऽपर्यवस्यन् यदाक्षिपति, तदप्यौपदेशिक भवति। तथा च प्रकृतौ पूर्वप्रतीता पदार्था उपेक्ष्यन्ते, तथाऽर्थापत्तौ प्रथमप्रतीतश्शब्द उपेक्ष्यते प्राभाकरैरित्याशयेनाऽऽह—दशमाद्येति।

[2] अध्याहारस्याऽपि व्युत्पत्तिरिति ख. पु पाठः। [3] सबन्धार्हत्वमिति मु.पु पा.।

मिदमिति कथमवगम्यते, सम्बन्धित्वेन दृष्टत्वात्। नन्वेवं तर्हि कथमपूर्वे कार्येऽन्विताभिधानं वेदे, तेन सह कस्य चित् सम्बन्धस्याऽदर्शनात्। उच्यते—सामान्यतो योग्यतावधारणं विशेषप्रतिपत्तावुपाय इत्यदोषः। यदपि तदपूर्वम्, तदपि कार्यमेवेति दृष्टचरकार्यसम्बन्धं यत्, तद्योग्यमित्यवसीयते।

सामान्येनैव योग्यत्वं लोके यदवधारितम्।
तदन्विताभिधानस्य व्युत्पत्तावुपलक्षणम्॥ इति सङ्ग्रहश्लोकः।

योग्यताविषये मतान्तरोपन्यास—निरासौ।

अन्ये तु—यदयोग्यतया नाऽवधारितम्, तद् योग्यम्। तेनाऽलौकिकेनाऽपि विध्यर्थेनाऽन्विताभिधानं सिद्ध्यतीत्याहुः। तदिदमसारम्। यथा-प्रमाणान्तरावेद्ये वस्तुनि कस्यचिद् योग्यताऽवधारयितुं न शक्यते, तथैवाऽयोग्यताऽपीति, [1]सर्वस्याऽप्रतीतेनाऽपि सर्वप्रकारेण तस्मिन्नन्वयस्स्यात्। भावार्थस्यैव विषयत्वेनाऽन्वयः, अनुपादेयविशेषणविशिष्टस्यैव स्वर्गकामादेः नियोज्यतयाऽन्वय इति नियमो नोपपद्यत इत्यलमतिप्रसङ्गेन॥८॥

नन्वन्विताभिधानपक्षे व्युत्पत्तावुपलक्षणाश्रयणमेव गौरवमित्यत्राऽऽह—

**पदार्थेष्वपि चैवैषा [2]सामग्र्यन्वयबोधने॥९॥**

यस्याऽपि मते पदार्था एवाऽन्योन्यान्वयमवगमयन्ति, तेनाऽपि प्रतिनियतान्वयबोधसिद्ध्यर्थमिदमाश्रयणीयमेव—आकाङ्क्षा—सन्निधि—योग्यतावन्त एव पदार्था [4]वाक्यार्थं बोधयन्ति, नान्य इति, एतदेव कथमिति पर्यनुयुक्तेन वृद्धव्यवहारे तथादर्शनादिति परिहारो वाच्यः। तस्मादुभयपक्षसाधारणत्वान्नेदं दूषणम्॥९॥

नन्वेवमपि केन विशेषेणाऽभिहितान्वयं परित्यज्य, अन्विताभिधानमाश्रितमिति। [5]अत्राऽऽह—

**किन्तु तेषामदृष्टैषा शक्तिर्मानान्तराद्गतौ।**
**कल्प्या विशिष्टार्थपरपदसंस्पर्शभाविता॥१०॥**

---

[1] प्रामाणान्तराप्रतीतेनेति. मु. पु. पा.।
[2] सर्वेणेति मु. पु. पा.।
[3] अन्वयबोधिनीति. मु. पु. पा.।
[4] अन्वयमिति. मु. पु. पा.।
[5] अत्राऽऽहुरिति. मु. पु. पा.।

पदार्थानां हि शब्दादन्यतः प्रमाणात् प्रतीयमानानामन्योन्यान्वयबोधकत्वं न प्रतीतमिति, शब्दाभिधेयानां तदवगमशक्तिः कल्पयितव्या। तस्याश्चोत्पत्तौ शब्दसंस्पर्श एव हेतुरित्याश्रयणीयम्। शब्दो हि विशिष्टार्थप्रतिपत्तिपरतया लोकव्यवहारेषु प्रयुज्यमानो दृष्टः। न चाऽसौ साक्षाद्वाक्यार्थप्रतिपादने समर्थ इति, पदार्थानवान्तरव्यापारीकरोति। ते च यद्यन्योन्यान्यान्वयबोधने समर्थास्स्युः, तदा तेषामवान्तरव्यापारता स्यान्नाऽन्यथेति, विशिष्टार्थावबोधपरशब्दसंस्पर्शादेव तेषामेषा शक्तिराविर्भवतीति, शब्दस्याऽपि पदार्थगतान्वयबोधकत्व[1]शक्त्याधानशक्तिराश्रयणीया। स्यादेवम्—यदि मानान्तरावसेयानां पदार्थानामन्योन्यान्वयावगमे सामर्थ्यं न स्यात्। अस्ति तु तत् श्वैत्यस्याऽनवधारिताश्रयविशेषस्य प्रत्यक्षदृष्टस्य, अश्वस्याऽप्रतिपन्नगुणविशेषस्य प्रत्यक्षहेषाशब्दानुमितस्य पदनिक्षेपशब्दानुमितस्य, अज्ञातकर्तृभेदस्य धावनस्य च, "श्वेतोऽश्वो धावती"त्यन्वयबोधकत्वदर्शनात्।

[2]तदाहुर्वार्त्तिककारमिश्राः—

"[3]पश्यतश्श्वेतमारूपं हेषाशब्दञ्च शृण्वतः।
खुरनिक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीः॥
दृष्टावाक्यविनिर्मुक्ता" इति।

[श्लो. वा. वा. अधि. श्लो. ३५८]

आरूपम्—अव्यक्तरूपमित्यर्थः। तेन गुणविशेषो न प्रत्यक्षमवसीयत इत्यर्थः।

अत्रोच्यते—किं येनैव पुरुषेण श्वैत्यसमानाश्रयौ हेषाध्वनि-पदनिक्षेपशब्दाववगतौ, तस्यैवेयं "श्वेतोऽश्वो धावती"ति धीः? उत यस्यऽपादानानध्यवसायः, तस्याऽपि—इति? किमतः। यदि तावदप्रत्याकलितहेषा-

---

[1] पदार्थशक्त्याधानेति मु. पु. पा।  [2] पादा इति मु. पु पा।

[3] अत्रेदं बोध्यम्—भाष्यकारेण वाक्यस्याऽवाचकत्वम्, पदार्थानां वाक्यार्थं प्रति निमित्तत्वं प्रतिपादयितुं "अपिचाऽन्वय-व्यतिरेकाभ्यामि"[शा. भा. पृ. ९७]त्यादि भाष्यमवतारितम्। "श्वेतोऽश्वो धावती"त्यत्र श्वेतमव्यक्तं कञ्चन पदार्थं गवाश्वादिरूपं दूरादुपलभमानः, तस्मिन्नेव ह्लेषाशब्देन खुरशब्देनाऽश्वजातिं गमनञ्चाऽनुमिमानो योग्यानुपलब्ध्या वस्त्वन्तराणामभावञ्जानानो गुण-जाति-क्रियाणामर्थान्तरान्वयमपेक्षमाणानां योग्यानामर्थापत्तिप्रमाणेनैतेषां

ध्वनि-पदविहारनिर्घोषापादानस्येत्युच्यते, तदा प्रतीतिविरोधः। स ह्येवं प्रतिपद्यते—भवितव्यमस्मिन् देशे नूनमश्वेन, भवितव्यञ्च केनचिद्धावतेति। अथाऽश्वसंबन्धिनमेव खुरपुटटङ्काररवमभ्यासपाटववशादवैति, तदाऽसावश्ववर्तिनीमेव वेगवतीं गतिमनुमिनोतीति, न पुनः केवलामेवाऽवगम्य, तस्याऽन्वयं पदार्थसामर्थ्येनाऽवबुद्ध्यते। योऽपि तस्मिन् देशे नाऽस्त्यन्योऽश्वादिति निश्चित्य, पारिशेष्यादपादानाध्यवसायेऽपि ह्रेषाध्वनेश्श्वैत्यसमानाधिकरणमश्वत्वमप्यध्यवस्यति, *तस्याऽपि गृहाभावदर्शनमिव बहिर्भावावगतावर्थापत्तिः—"योऽयं श्वेतः, स एषोऽश्वः" इत्यत्र प्रमाणम्। यस्तु श्वैत्यसमानाधिकरणौ ह्रेषाध्वनि-खुरपुटटङ्कारावध्यवस्यति, तस्याऽप्यश्वत्वे वेगवति च गमने श्वेतवर्तिन्येवाऽनुमानम्, न स्वतन्त्रयोः। अतः प्रमाणान्तरेणाऽसम्बद्धावभातानां पदार्थानां न क्वचिदन्योन्यसम्बन्धबोधकत्वमनुमानार्थापत्तिव्यतिरेकेण प्रतीतम्।

अपि च यदि पदार्थावगतिमात्रादेव परस्परान्वयावगमः, तदा कस्मिन्

---

मिथस्संसर्गमवबुध्यते "श्वेतोऽश्वो धावती"ति। तथा च प्रकृते पदार्थानामाकाङ्क्षा-योग्यता—सन्निधिवशेन सामान्यतोऽन्वयबोधनम्, विशेषतश्चाऽर्थापत्त्याऽवगच्छति। "गामानये"त्यादावेकवाक्यतयैव तन्नियम इत्येव कल्पनीयम्, वाक्यन्त्वत्यन्ताक्लृप्तं न कल्पनीयम्। तथा च वाक्यग्रहणेऽपि पदार्थानामग्रहणे वाक्यार्थप्रत्ययो नोपजायते। वाक्याग्रहणेऽपि पदार्थग्रहणे वाक्यार्थो जायत इति वाक्यस्य वाक्यार्थप्रत्ययं प्रत्यकारणत्वम्, पदार्थज्ञानस्याऽन्वय—व्यतिरेकाभ्यां वाक्यार्थज्ञानं प्रति हेतुत्वं पर्यवस्यत इति। केचित्तु—तत्र वाक्यस्याऽग्रहणादेव वाक्यार्थज्ञानं न जायत इति वदन्ति। इदमनुपपन्नम्। अत्यन्तापरिदृष्टस्य वाक्यस्य हेतुत्वकल्पनापेक्षया प्रतीतस्य पदार्थस्य, पदार्थज्ञानस्य वा हेतुत्वाभ्युपगमश्श्रेयानित्यभिहितान्वयवादिनाम्मतमुपन्यस्यति—"पदार्थानामित्यादिना—न प्रत्यक्षमवसीयत इत्यर्थः" इत्यन्तेन। तन्मतं दूषयति—अत्रोच्यत इति। अस्याऽयमभिप्रायः—"श्वेतोऽश्वो धावती"तिप्रतीतिस्सर्वैरनुभूयते। साऽर्थापत्तावनुमाने वाऽन्तर्भवति, न तु ततोऽतिरिच्यते। अभिहितान्वयवादे शक्तित्रयं कल्पनीयम्, पदार्थानां वाक्यार्थप्रत्ययाधानसामर्थ्यम्, पदानां पदार्थबोधनसामर्थ्यम्, तत्सामर्थ्याधानसामर्थ्यञ्चेति। पदार्थसामर्थ्यजन्यत्वे वाक्यार्थबोधस्य शाब्दत्वसिद्धये सप्तमप्रमाणाभ्युपगमप्रसङ्गश्च। अन्विताभिधानवादे तु पदानां पदार्थे, अन्वये चेति शक्तिद्वयम्, पदशक्तेरेवाऽन्वयपर्यन्तता वा स्वीक्रियते, जातिशक्तेरेव व्यक्तिपर्यन्तबोधवदिति लाघवं मनसि निधायाऽऽह—अत इत्यन्तेन। अत्र वाचस्पतिमिश्रेण—यथाऽऽकारिणमन्तरेणेत्यादिना[तत्त्व. बि. पृ. १२४] दृष्टान्त—दार्ष्टान्तिकयोर्वैषम्यमात्रमवोचि। पार्थसारथिमिश्रेण [ न्या. र. मा. वा. नि. पृ. ८३ ] चिदानन्दपण्डितेन च [ नी. त. आ. पृ. ८४ ] दृष्टान्तासिद्धावेव बह्व्यो युक्तयः प्रादर्शिषतेति बोध्यम्।

* विग्रहाभाव इति मु. पु. पा.।

प्रमाणे तस्याऽन्तर्भाव इति वाच्यम्? न तावच्छाब्दे, शब्दाभावात्। पदार्थाभिधानावान्तरव्यापारेण हि [1]यच्छब्दादन्वयज्ञानम्, तच्छाब्दमित्येष वो राद्धान्तः। [2]तस्मान्नाऽस्य शाब्देऽन्तर्भावः। प्रमाणान्तराभ्युपगमे तु शाब्दस्योच्छेदः, शब्दावगतपदार्थविषयेऽपि तस्यैव प्रामाण्यप्रसङ्गात्। तस्माच्छब्दाभिहितानां पदार्थानामन्यत्राऽदृष्टं वाक्यार्थबोधनसामर्थ्यं कल्पयितव्यम्। तदाधानशक्तिश्च शब्दानामपीति कल्पनालाघवाच्छब्दानामेवाऽन्वितस्वार्थावबोधनशक्तिमात्रं कल्पयितुं न्याय्यम्। तेन पारम्पर्येण पदानामन्वितेषु सामर्थ्यमिति निरस्तम्।

[3]नन्वनन्तप्रतियोग्यन्वितस्वार्थबोधनविषया अनन्ता एव शब्दस्य शक्तयः कल्पयितव्यास्स्युः। अभिहितान्वयवादे त्वेकस्मिन्नर्थे एकस्य शब्दस्यैकैव शक्तिरिति। [4]तन्न—एकयैवाऽऽकाङ्क्षित-सन्निहित-[5]योग्यार्थान्वितस्वार्थाभिधानशक्त्या प्रतियोगिभेदेन कार्यभेदोपपत्तेश्चक्षुरादीनामिव। चक्षुर्यथैवैकया दर्शनशक्त्या घटादिप्रतियोगिसहायभेदाज्ज्ञानानि भिन्नानि जनयति, तथा शब्दोऽपि प्रतियोगिभेदादिति मन्तव्यम्। किञ्च पदार्थेष्वपि तुल्यमेतदिति न किञ्चिदेतत्।

अन्ये त्वाहुः—आकाङ्क्षा-सन्निधि-योग्यतावन्तः पदार्था वाक्यार्थीभवन्ति, न पुनर्वाक्यार्थमेव बोधयन्तीति। तदिदमतिमन्दम्—वाक्यार्थावगतेः कारणाभावप्रसङ्गात्। अनुपायत्वे पदानामन्वयप्रतीतौ पदार्था अपि चेन्न कारणम्, अकारणिकैवाऽऽपद्येत। स्यान्मतम्। क्रियापदेन, कारकपदेन वा साकाङ्क्षेऽर्थेऽभिहिते, यदेव पदान्तरेण योग्यप्रतियोगिपदार्थान्तरं सन्निधाप्यते, तदेव तस्य सम्बन्धित्वेनाऽवतिष्ठते—इति। सत्यमेवम्। अवगतिस्तु तत्सम्बन्धस्य किन्निबन्धनेति वाच्यम्। अथ पूर्वपदार्थे साकाङ्क्षेऽभिहिते, यत् पदान्तरमुच्चरितम्, तत् तत्सम्बन्धितयैव स्वार्थमुपनयति प्रत्ययवत्। यथा प्रकृत्यर्थे पूर्वप्रतीते प्रत्यय उच्चार्यमाणस्स्वार्थं तद्विशिष्टमेवाऽभिधत्ते, तथा पदान्तरमपि। तदुक्तं, "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह

---

[1] अन्यज्ज्ञानमिति मु. पु. पा.। [2] कस्मादिति मु. पु. पा.।

[3] भाट्टमीमांसकश्शक्त्यानन्त्यदोषमन्विताभिधानवादे, अभिहितान्वयवादे लाघवञ्च मनसि निधाय शङ्कते—नन्वित्यादिना शक्तिरित्यन्तेन।

[4] पूर्वोक्तामाशङ्कां परिहरति-तन्नेति। [5] अर्थेति मु. पु. नाऽस्ति।

ब्रूतः" [म. भा.] इति। प्रकृतिः स्वार्थं प्रत्ययार्थविशेषणत्वेनोपनयतीति, प्रत्ययेन तदर्थमाहेत्यर्थः।

तथा चोक्तम्—

"नित्यं विशिष्ट एवाऽर्थे प्रत्ययो यत्प्रयुज्यते।
तत्पूर्वतरविज्ञातप्रकृत्यर्थविशेषणात्"॥ इति।

अङ्गीकृतं तर्हि द्वितीयस्य पदस्याऽन्विताभिधानम्, प्रथमस्य तथाऽपि नाऽस्तीति चेन्न। वाक्ये पदानां प्रयोगक्रमनियमाभावात्। यदेव कदाचित् प्रथमम्, तदेव कदाचित् द्वितीयमिति, सर्वपदानामेवाऽन्विताभिधानमापतितम्। अभिहितान्वयवादी च प्रकृति-प्रत्यययोरप्यन्वय-व्यतिरेकावधारितव्यतिरिक्तशक्तिकयोरभिहितान्वयमेव पदवदिच्छति।

तथा च—

"प्रकृतिप्रत्ययौ ब्रूतः प्रत्ययार्थं सहेति यत्।
भेदेनैवाऽभिधानेऽपि प्राधान्येन तथोच्यते"॥
"पाकं तु पचिरेवाऽऽह कर्तारं प्रत्ययोऽप्यकः।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचिद्"॥ [1]इत्याह।

किञ्च प्रत्ययश्चेदन्विताभिधायी, तदा तदविशेषात् पदानामप्यन्विताभिधायिता किमिति नाऽभ्युपेयते, किमर्धवैशसेन। यदि प्रकृति-प्रत्यययोरप्यन्विताभिधानमस्ति, न तर्हि द्वारमित्यत्राऽन्विताभिधानानुपपत्तिनिबन्धयाऽऽकाङ्क्षया विव्रियतां, संव्रियतां वेत्यध्याहारः। उच्यते। द्वारमिति प्रथमेयं प्रातिपदिकार्थव्यतिरिक्तार्थाभिधायिनी। तेनाऽत्र केन सहाऽन्वितस्याऽभिधानम्। व्यतिरिक्तार्थे प्रत्यये प्रविशेत्यादौ योऽध्याहारः, सोऽभिहितार्थानुपपत्त्यैव विश्वजिदादिवदिति न दोषः।

वाक्यार्थविषये भट्टपादमतम्।

[2]वार्तिककारमिश्रास्तु-लाक्षणिकान् सर्ववाक्यार्थानिच्छन्तः पदार्थानाम-

---

[1] अभिहितान्वयवादीत्यस्य व्यवहितेनाऽऽहेत्यनेन संबन्धो बोध्यः।

[2] अत्रेदमवधेयम्—आनुपूर्वीमन्तो वर्णाः पदम्, आनुपूर्वीमन्ति पदानि वाक्यमिति भाट्टमीमांसकाः, प्राभाकरमीमांसकाश्च मन्यन्ते। परं वाक्यार्थं प्रति किं कारणमित्यत्र तेषामुभयेषां विवादस्संलक्ष्यते। तत्र कौमारिलतन्त्रानुसारिणस्तु पद—वाक्ययोर्वाक्यार्थं प्रति निमित्तत्वं प्रतिक्षिपन्तः, पदार्थस्यैव वाक्यार्थं प्रति निमित्तत्वमुपपादयन्त"स्तद्भूतानामि"त्यादिसूत्रं व्याच-

न्वयावबोधशक्तिकल्पनां निराकुर्वन्ति । अनन्वितावस्थो हि पदार्थोऽभिहितोऽन्वितावस्थां स्वसम्बन्धिनीं लक्षयति । अवस्था-वस्थावतोर्हि सम्बन्धात्, अवस्थावत्यभिहिते, भवत्येवाऽवस्थाऽपि बुद्धिस्था । *सर्वत्र च सम्बन्धिनि दृष्टे, सम्बन्ध्यन्तरे बुद्धिर्भवतीति क्लृप्तमेव । तेन नाऽस्ति पदानामन्वितबोधने शक्तिकल्पनेति । तदाहुः—

"†वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नस्स्थितिः ।"

---

* एकसबन्धिज्ञानमपरसबन्धिस्मारकमिति न्यायेनेति शेष ।

† नस्स्थितमि [अ सि पृ ७०२] ति मधुसूनसरस्वतीभिरुद्धृत पाठ ।

क्षाणास्स्वमतानुगुण्येन योजयन्तो दरीदृश्यन्ते । तथा हि—भाट्टमीमासका अभिहितान्वयवादिन इति पप्रथिरे विद्वत्समाजे । अभिहितान्वय इत्यस्याऽयमर्थ—विभक्त्यन्ताभ्या पदाभ्या स्वार्थानुभवावेव जन्येते, तादृशानुभवविषयत्वमेव पदार्थस्याऽभिहितत्वमित्युच्यते । तदनन्तर तादृशानुभवाभ्यामेव विभक्त्यन्तपदार्थयोरन्वयापरपर्यायससार्गनुभवो जायते, न तु पदेन, न वा पदसङ्घातात्मकेन वाक्येन । तथा च पदाभिहितयोरर्थयोरन्वयबोध इति । अत्राऽन्वय–व्यतिरेकाभ्या वाक्यार्थप्रत्यय प्रति पदार्थज्ञानस्य, ज्ञाताना पदार्थाना वा हेतुत्वम् । तथा च पारमार्षं सूत्रम्—"तद्भूताना क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्" [ पू मी द १ १ ३२ ] इति । तस्याऽयमर्थ.—तेषु पदार्थेषु भूताना वर्तमानाना पदाना क्रियार्थेन समाम्नायस्सम्यक्परस्परान्वितस्वार्थबोधकत्वेनोच्चारण भवति । अर्थस्य—वाक्यार्थ प्रत्ययस्य तन्निमित्तत्वात्—पदार्थज्ञाननिमित्तकत्वात् । भाष्यकारश्शबरमुनिरपि "पदानि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि, अथेदानी पदार्था अवगतास्सन्तो वाक्यार्थमवगमयन्ती"त्यन्तेनाऽमुमेवाऽऽशय व्यशीशदत् । वार्तिककार कुमारिलभट्टोऽपीममेवाऽभिप्राय वार्तिकयाञ्चकार ।

तथा च वार्तिकम्—

"अत्राऽभिधीयते यद्यप्यस्ति मलान्तर न न ।
पदार्थानान्तु मूलत्व दृष्ट तद्भावभावत" ॥

[ श्लो वा वा श्लो ११०½ १११½ ] इति ।

पार्थसारथिमिश्रस्तु भाष्यवार्तिकमतेनेद सूत्र प्रागुक्तरीत्या व्याख्याय, प्रकारान्तरेण व्याचख्यौ । तत् तत एवाऽवगन्तव्यम् ।

अत्र पदजन्या पदार्थोपस्थिति प्रमाण-सशय-विपर्यय-स्मृतिषु कतमेयमिति जिज्ञासा समुन्मिषति । तत्रेय पदात्पदार्थप्रतिपत्ति प्रमाणमिति वक्तु न शक्यते । अज्ञातार्थज्ञापकत्व प्रमेति प्रमाणलक्षणकथनात् । अतः प्रमाकोटौ नाऽन्तर्भावयितु शक्यते, सशय-विपर्ययरूपता त्वस्याऽशक्यशङ्का । न च पञ्चमी विधा समस्तीति, स्मृतिनिवेशपक्ष एव परिशिष्यते । अस्मिन्पक्षे—

"पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते" । इति ।

"भावनावचनस्तावत्ता स्मारयति लोकवत्" ॥ इति ।

**अत्राऽपरे ब्रुवते—नेयं लक्षणा, स्वार्थापरित्यागात् । स्वार्थपरित्यागेन हि गङ्गादिषु लक्षणा दृष्टा-इति । ते तु मीमांसातन्त्रान्तःपातवैकल्ये-**

---

चाऽनुकूलम् । तस्मात्पदजन्यपदार्थोपस्थितिस्स्मृतिरूपेति कौमारिलमतानुगाः केचनाऽऽशेरते । अतस्तन्मते पदस्मारिताः पदार्था आकाङ्क्षा-योग्यता-ऽऽसत्तिमन्तो वाक्यार्थं बोधयन्तीत्यागच्छति ।

अपरे तु पूर्वस्मिन्मते पदार्थस्य वाक्यार्थबोधशक्तिस्वीकारापत्त्या गौरवाद्बिभ्यतः प्रकारान्तरमुन्नयन्ति । तेषामयमाशयः—पदैः पदार्था एवाऽभिधीयन्ते । अर्थान्तरान्विततया तु लक्ष्यन्ते । अन्यथा पदार्थस्वरूपातिरेकिविशिष्टार्थाभिधाने गौरवं प्रसज्येत । अनन्वितावस्थो ह्यभिहितः पदार्थोऽन्वितावस्थां लक्षयति । अवस्था-वस्थावतोस्तावत्सम्बन्धोऽस्त्येव, एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायात् । "वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नस्स्थिति"रिति च । इदमविचारितरमणीयमिति मन्यमानाः परे प्रकारान्तरमुपगच्छन्ति । मुख्यार्थबाधे तद्योगे लक्षणा प्रवर्तते, प्रकृते मुख्यार्थबाधाभावेन लक्षणालक्षणस्याऽसम्भवान्नेदं वार्तिककाराभिप्रेतम्, अपि तु प्रकारान्तरमेव । तथाहि—वार्तिककारः कुमारिलभट्टस्सर्वत्र वाक्यार्थे वाक्यतात्पर्यानुपपत्त्या लक्षणां मेने । अभिहितान्वयवादे पदैस्स्वशक्तिवशात्पदार्था अभिधीयन्ते, न तु स्मार्यन्ते, स्मार्य-स्मारकभावसम्बन्धातिरिक्तसम्बन्धकल्पने गौरवप्रसङ्गात् । एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्, न तु स्मारकत्वमेव सम्बन्ध इति । हस्तिपकादौ हस्त्यादिसंयोगादिना ज्ञानत्वेन स्मारकत्वस्य दर्शनात् ।

तथा च वार्तिकम्—

"पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते" ।। इति ।

अतोऽनधिगतार्थगन्तृत्वाभावान्नाऽनुभावकमिति वक्तुं न शक्यते, न वा स्मारकं भवितुमर्हति, सम्बन्धान्तराभावात् । अपि तु शक्त्याऽज्ञातज्ञापकमिति स्मारकसदृशमित्यर्थः । स्मृत्यनुभवातिरिक्तं ज्ञानं प्रमाणबलादायातं केनाऽपि न शक्यते वारयितुम् । किञ्च पदार्थोपस्थितौ तत्तांशस्याऽनुल्लेखात्, तत्तांशोल्लेखभङ्गेन तत्तांशरूपस्मृतिप्रमोषकल्पने महद्गौरवं प्रसज्येत । अतः पदजन्यस्मृत्यनुभवविलक्षणज्ञानविषयीभूताः पदार्था अभिहिता इति सङ्कीर्त्यतेऽस्मिन्मते । इदमेवाऽस्य पूर्वमताद्वैलक्षण्यम् । पदाभिहिताश्च पदार्था आकाङ्क्षा-योग्यता-ऽऽसत्तिमन्तो वाक्यतात्पर्यानुपपत्त्या विशिष्टरूपं स्वान्वयमनुभावयन्तीति वाक्यार्थो लक्ष्य इत्याख्यायते । पदेन यत् बोध्यते, तच्छक्यमित्युच्यते, पदार्थेन यद्बोध्यते, तल्लक्ष्यमिति च नियमस्स्वीक्रियते ।

तथाचोक्तं कुमारिलभट्टेन—

"वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नस्स्थितिः" ।। इति ।

तथा च पदानां स्वार्थमात्रमभिदधतामेकप्रयोजनवत्पदार्थपरतयैकवाक्यत्वं सिद्ध्यति । एकप्रयोजनसिध्युपयोगिता च पदार्थानां पृथगुपस्थितानां वैशिष्ट्यमन्तरेण न सञ्जाघटीति । अतः प्रयोजनत्वायैकवाक्यतासिद्ध्यर्थञ्च लक्षणया पदानां विशिष्टार्थप्रत्यायनपरत्वमास्थेयम् । तथा चैकवाक्यान्तर्गतानां समेषां पदानामितरपदार्थान्वितस्वार्थकलक्षकतायां वाक्यार्थभेदेन प्रसक्तो वाक्यभेदस्समभिव्याहृतगुणभूतनानापदार्थान्वितप्रधानपदार्थरूपस्यैकस्यैवाऽङ्गीकारेण परिहर्तुं शक्यते । इयं वाक्यतात्पर्यानुपपत्त्या कल्प्यमाना लक्षणा समभिव्याहार-

नैवमाहुः। लक्षणीयवशेन हि क्वचित् स्वार्थस्य त्यागः, संग्रहो वा। "सृष्टीरूपदधाती"ति [1]लक्षणायास्स्वीकारः, [2]गुणिनां तद्गणपठितानां सृष्टिशब्दरहितानामपि लक्ष्यमाणत्वात्, तदन्तर्गतत्वाच्च सृष्ट्यर्थस्य।

तथा "पौर्णमासीं यजते" इत्येकवचनानुपपत्त्या पौर्णमासीशब्दो यागवचनो यागसमुदायलक्षणार्थः[3]। न च समुदायपरिग्रहे समुदायित्यागः, तदाश्रयत्वात्तस्य। तथेतरेतरयोगद्वन्द्वे द्विवचन-बहुवचनानुपपत्तेरर्थान्तरसहितावस्था लक्षणयाऽऽश्रीयते, न चाऽवस्थावत्परित्यागः। तथा निषादस्थपत्यधिकरण [मी. द. ६. १-१०] पूर्वपक्षे षष्ठ्यर्थलक्षणा स्यादित्युच्यते, न तत्र प्रकृत्यर्थस्य त्यागोऽप्यापद्यते। तथा [4]रथघोषेणेत्यत्र रथस्याऽपरित्यागः। तथा "मेधपतये [5]मेधमि"त्येकवचनान्तस्य मन्त्रस्य लक्षणया प्रकृतौ निवेशः। न च गुणिनोरग्नीषोमयोस्तत्र हानमिति, [6]स्वार्थापरित्यागेऽपि युक्तैव लक्षणा।

गुरुमतेन लक्षणानिरूपणम्।

अत्रोच्यते। कथं पुनरियं लक्षणा?

*वाच्यस्याऽर्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः।

---

गम्या। इयञ्च वाक्यार्थे लक्षणाऽनुभवबलसिद्धा समभिव्याहृतसकलपदवृत्तिः, प्रधानपदमात्रवृत्तिर्वेति परमगहनोऽयं कौमारिलवाक्यार्थनिर्णयमार्गः।

यद्यपि "गङ्गायां घोष" इत्यादौ गङ्गापदाभिहितपदार्थस्मार्यत्वं तीरादौ लक्ष्यता, वाक्यार्थेत्वयं विशेषः पदार्थानुभाव्यत्वम्। अत एव पदार्थबोध्यत्वमादाय वाक्यार्थस्य लक्ष्यत्वव्यवहारो भाट्टमीमांसकानां प्रववृते। अत एव पदार्थेन पदार्थलक्षणायां पूर्वसम्बन्धज्ञानमपेक्ष्यते, तस्य स्मार्यत्वात्। वाक्यार्थलक्षणायां न पूर्वसम्बन्धज्ञानापेक्षाऽस्ति। तस्याऽनुभाव्यत्वेन पूर्वसम्बन्धज्ञानापेक्षाराहित्यात्। अतः पदार्थलक्षणायां पूर्वसम्बन्धज्ञानमेव नियामकम्, वाक्यार्थलक्षणायामाकाङ्क्षा-योग्यता-ऽऽसत्तिरूपमेवेति परस्परनिरपेक्षं नियामकमित्यङ्गीक्रियते। तथा च पदशक्तेः पदार्थोपस्थितावेवोपक्षयात्, उपस्थितानां पदार्थानामन्वयरूपसंसर्गानुभावकत्वात्, वाक्यार्थलक्षणायां न कश्चिद्दोष इत्याशयेनाऽऽह—वार्तिककारमिश्रास्त्विवति।

[1] लक्षणस्येति मु. पु. पा।  [2] गणिनामिति. मु. पु. पा।

[3] लक्षणार्थमिति. मु. पु. पा।

[4] रथघोषेण माहेन्द्रस्तोत्रमुपाकरोतीत्यत्रेति शेषः।

[5] मेधपतय इति. मु. पु. नाऽस्ति।  [6] सर्वार्थेति. मु. पु. पा।

* वाच्यार्थस्येति क. प. तरौ. पा।

तत्सम्बन्धवशप्राप्तस्याऽन्वयाल्लक्षणोच्यते ।। [1]इति सङ्ग्रहश्लोकः[2] ।

"गङ्गायां घोषः," इत्यादिषु श्रौतस्य गङ्गापदार्थस्य वाक्यार्थेऽन्वयासम्भवात्, तं परित्यज्य तत्सम्बन्धाल्लब्धबुद्धिसन्निधेः कूलाद्यर्थस्य वाक्यार्थान्वयिताऽध्यवसीयते। अत एवाऽऽहुः—"अनुपपत्त्या, सम्बन्धेन च लक्षणा भवती"ति। इह च "गामानये"त्यादौ न श्रौतस्याऽर्थस्याऽन्वयायोग्यत्वं, नाऽप्यन्वितावस्थस्याऽऽनयनसम्बन्धार्हता[3]। अन्वितार्थस्याऽन्वयान्तरासम्भवात्। अथ मा भूदेषा लक्षणा, किन्तु क्रियाऽवगता कारकान्वयिनीमात्मनो दशामवगमयति, अविनाभावादिति। उच्यते—शाब्दत्वं तावदित्थमपह्नुतमन्वयावगमस्य, किन्तु सामान्यतोदृष्टानुमानगोचरताऽभ्युपगता भवति। तथा विशिष्टान्वयावगतिरनुपपद्यमाना [4]निर्मूलाऽऽपद्यते। अथ विशेषान्वयं विना व्यवहारानवकल्पनादनर्थकं शब्दोच्चारणमिति तदा-

---

[1] उत्तरश्लोक इति मु. पु. पा.।

[2] शालिकाचार्योक्तिं लक्षणालक्षणं वाचस्पतिमिश्रेण वाक्यार्थविचारप्रसङ्गेऽनूद्य खण्डितं दृश्यते, अयं वाचस्पतिमिश्रश्शालिकाचार्यादर्वाचीन इति भूमिकायामवोचाम।

तथा हि—तदीयो ग्रन्थसन्दर्भः—

"तथा चाऽऽह कश्चित्—

"वाच्यस्याऽर्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः।
तत्सम्बन्धवशप्राप्तस्याऽन्वयाल्लक्षणोच्यते" ।। इति

न च "ओदनं पचति चैत्रः पिठरे" इत्यादौ चैत्रपिठरादीनामर्थानां वाक्यार्थे सम्बन्धानर्हत्वम्, न च तल्लक्षिताया अन्वितावस्थाया अन्वयान्तरशालिता, न चैवं लक्षणा, तल्लक्षणविरहात्—इति। तत्किमिदानीं न लक्षणेयमित्यनन्यलभ्यस्याऽपि शब्दार्थत्वमस्तु। न हि "मासमग्निहोत्रं जुह्वति" [तां. ब्रा. अ. २५. खं. ४] इत्यत्राऽग्निहोत्रपदमलाक्षणिकमिति, मुख्यं भवति। कर्मान्तरसादृश्येन गौण्या वृत्त्या तत्र प्रवृत्त्युपपत्तेर्न तदभिधानशक्तिकल्पनेति चेत्, इहाप्युन्नीतया नीत्याऽन्तरेणाऽप्यभिधानसामर्थ्यमन्वितावस्थाप्रतीत्युपपत्तेः कृतमभिधानशक्तिः। एवञ्च न चेदियं पदप्रवृत्तिर्लक्षणालक्षणमन्वेति।

भवतु तर्हि चतुर्थी, दृष्टत्वात्। अस्तु वा लक्षणैव नो खल्वेतल्लक्षणम्, अप्रसिद्धवृत्त्यन्तरावतारप्रसङ्गात्। तस्मादेतद्वक्तव्यम्। तदिदमुच्यते—'मृष्यामहे वाच्यानुपपत्तितः' इति, सम्बन्धवशप्राप्तस्य' इति च, न पुनः 'वाक्यार्थे सम्बन्धे'ति च 'अन्वयात्' इति च। अस्ति चेहाऽपि लोकानुसारतो विशिष्टार्थप्रत्यायनप्रयुक्तसमभिव्याहृतीनामर्थरूपमात्रपरत्वे पदानामनुपपत्तिः। अर्थरूपसम्बन्धवशप्राप्तता चाऽन्वितावस्थायाः। व्यापकञ्चैतल्लक्षणं लक्षणानामनवयवेन वैदिकानां लौकिकानाञ्चेति चतुरस्रम्" [तत्व. बिं. पृ. १५६-१५७] इति।

[3] संबन्धाङ्गतेति मु. पु. पा.। [4] निर्मूलमिति मु. पु. पा.।

श्रयणम्, एवमपि प्रेक्षापूर्वकारिणां[१] सार्थकवाक्यमात्रप्रयोगिणां वचनाद्विशेषान्वयावगमः। वेदे त्वानर्थक्येन न भवितव्यमिति, प्रमाणाभावान्न शक्यते विशेषान्वयोऽवगन्तुम्। न च लोकेऽप्यानर्थक्यमापद्यत इत्येतावता कारणेनोपायाद्विनाऽपि विशेषान्वयाध्यवसानं युक्तम्। न हि दग्धुकामस्योदकोपादानमनर्थकमिति, जलस्य दाहशक्तिराविर्भवति। काममानर्थक्यम्। न पुनस्सामान्यतोदृष्टस्य [२]विशेषान्वयावसायिता। अथाऽऽकाङ्क्षित-सन्निहित-योग्यान्वयपरता वृद्धव्यवहारे पदानामवगतेति, व्युत्पत्त्यनुसारेण विशेषान्वयावगमः। तन्न तत्र वृद्धव्यवहार एव तत्परता पदानाम्, पदार्थानां वा उपायाभावेन कथं नाम निर्वहति? चिन्ता सा हि पदानाम्, पदार्थानां वा शक्तिकल्पनां विनाऽनुपपन्नेति मन्यामहे ॥१०॥

सा च पदानामेवोचितेत्याह—

[३]प्राथम्यादभिधातृत्वात् तात्पर्यावगमादपि[४]।
पदानामेव सा शक्तिर्वरमभ्युपगम्यनाम् ॥११॥

प्रथमभावीनि पदान्यतिलङ्घ्य, नाऽर्थेषु वाक्यार्थबोधनशक्तिराश्रयितुं युक्ता। किञ्च पदानि तावदभिधायकानीति निर्विवादम्। तेन तेषामभिधानशक्तिस्सम्प्रतिपन्नैवेति, तस्या एवाऽन्वयपर्यन्तता कल्पयितुं सुकरा। पदार्थानान्तु बोधनशक्तिरेव कल्प्या। तेन "धर्मिकल्पनातो वरं धर्मकल्पना [५]लघीयसी"त्यन्विताभिधानशक्तिः पदानामेव कल्पयितुमुचिता।

किञ्च पदान्यभिधायकानीष्यन्ते, तत्र यदि स्वरूपमात्रविषयामेव पदार्थबुद्धिमादध्युः, तदाऽप्यभिधायकता हीयेत, तस्या बुद्धेस्सम्बन्धग्रहणसमयजातपदार्थबोधकसंस्कारोन्मेषप्रभवत्वात्। अवश्यं हि सम्बन्धस्मरणसिद्ध्यर्थं सम्बन्धिभूतार्थस्मरणसंस्कारोद्बोधोऽङ्गीकरणीयः। तस्मात् सम्ब-

---

[१] स्वार्थकेति मु. पु. पा.। [२] अन्वय इति. मु. पु. नाऽस्ति।

[३] तात्पर्योपगमादिति पाठो—तन्त्ररहस्ये दृश्यते।

[४] अस्य निराकरणं पार्थसारथिना वाक्यार्थनिर्णये कृतमस्ति। यथा—
"प्राथम्यकारणं यत्तु तद्विपर्ययसाधनम्।
ये तात्पर्या-भिधातृत्वे तेऽप्यनैकान्तिकीकृते॥"
[न्या. र. मा. श्लो. १५. पृ. १०७] इति।

[५] लघीयसीति मु. पु. नाऽस्ति।

न्वयग्रहणसमयानधिगतान्वितार्थप्रतिपादनाभ्युपगम एव शब्दानामभिधायकतेति, तामङ्गीकुर्वता पदानामन्विताभिधायकताऽऽश्रयणीया ।

यस्तु—

"पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते" ॥

[ श्लो. वा. अधि. ६. १०७. ] इति ।

तथा—

"भावनावचनस्तावत् तां स्मारयति लोकवत्" ॥

[ श्लो. वा. अधि. ७. श्लो. २४८ ]

इति चाऽऽचार्यवचनदर्शनात् स्मारकतामेव पदानामभिधायकत्वमाह, तं प्रत्याह—"तात्पर्योपगमादपी"ति ।

येनाऽपि वादिना पदानां स्मारकत्वमेव पदार्थेष्वङ्गीकृतम्[१], सोऽपि वाक्यार्थप्रतिपत्तिपरतां पदानामभ्युपैत्येव, अन्यथा वाक्यार्थस्याऽशाब्दत्वप्रसङ्गः । एवञ्चेत् पदानामेव साक्षाद्वाक्यार्थबोधनशक्तिरस्तु, किं परम्पराश्रयणेन[२] ।

तेन पदार्थेषु पदानां स्मारकत्वातिरिक्तं येऽभिधायकत्वमाहुः, तेषां शक्तित्रयकल्पना । एका तावत्पदानामभिधायकत्वशक्तिः, अपरा च पदार्थगतान्वयबोधनशक्त्याधानशक्तिः, पदार्थानाञ्चाऽन्वयज्ञापनशक्तिरिति । स्मारकत्ववादिनस्त्वभिधानशक्तिं हित्वा शक्तिद्वयकल्पनालाघवात्, उक्तेनैव न्यायेन पदानामेव शक्तिकल्पनाया [३]उचितत्वात्, अन्विताभिधायीनि पदानीति स्थापितम् ।११।।

सम्प्रति पूर्वोक्तमितरेतराश्रयदोषं परिहर्तुम्, यथा पदेभ्यो वाक्यार्थप्रतिपत्तिः, तथा दर्शयति—

**[४]पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।**
**[५]न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥१२॥**

---

[१] अङ्गीकरणीयमिति मु. पु. पा. । [२] परस्पराश्रयप्रपञ्चादिति मु. पु. पा. ।

[३] न्याय्येति मु. पु. पा. । [४] श्रूयमाणं पदं सर्वमिति ख. पु. पा. ।

[५] "न्यायैस्सम्पादिता व्यक्तिः यस्य तत्, अत्र न्यायशब्देन वृद्धव्यवहारप्रवर्तितायां शब्दार्थप्रवृत्तौ ये न्यायाश्शब्दार्थगोचरा एकवाक्यत्व-भिन्नवाक्यत्वादयः, अत्रैव पूर्वोक्ताः साधारणाः, ये च द्वादशलक्षण्यां प्राच्यां मीमांसायां प्रतिपाद्या वेदार्थनिर्णयेऽसाधारणाश्शब्दान्तरा-भ्यास-संज्ञा-गुण-प्रकरणान्तराणि, श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्याः, श्रुत्य-र्थ-

यस्तावदगृहीतसम्बन्धः, यस्य च सम्बन्धग्रहणसंस्कारो नोत्पन्नः, प्रध्वस्तो वा, स वाक्यार्थप्रतिपत्तौ नाऽधिक्रियते। यस्त्वनपभ्रष्टसम्बन्धग्रहणसंस्कारः, स पदं श्रुत्वा नूनं तावदिदं स्मरति—इदमस्याऽकाङ्क्षितसन्निहित-योग्य-प्रतियोग्यन्वितस्य वाचकमिति। एवञ्च स्मरता स्मृतमेव अनन्वितमपि[1] स्वरूपमन्वयभाजाम्। न चैकपदश्रवणे वाक्यार्थावगतिरितिकश्चिन्मन्यते। अभिहितान्वयवादिनोऽपि हि यावत् पदान्तरमर्थान्तरं नोपस्थापयति, तावदन्वयावगमो नाऽस्ति। पदार्थस्याऽन्वयावबोधिनः पदार्थान्तरापेक्षत्वात्, प्रतियोगिसापेक्षत्वादन्वयस्य। अतस्तन्मतेऽपि सर्वपदैरनन्वितस्वार्था [2]अभिधानीयाः। पश्चात्तेभ्यस्सर्वेभ्यस्स्मृत्यारूढेभ्यो वाक्यार्थप्रतिपत्तिरङ्गीकरणीया।

तदाहुर्वार्तिककारमिश्राः—

"तेऽपि[1] नैवाऽस्मृता यस्माद् वाक्यार्थं गमयन्ति नः।
तस्मात् तत्स्मरणेष्वेव [3]संहतेषु प्रमाणता"॥ [बृहट्टीका] इति।

अत एव तत्रभवत आचार्यस्य वाक्यलक्षणं "[1]संहत्याऽर्थमभिदधति पदानि वाक्यमि" [शा. भा. बला. अ. पृ. ८२४.] ति।

नन्वन्विताभिधानवादिनां कथं वाक्यार्थप्रतिपत्तिः। श्रूयमाणेन हि पदेन योऽर्थो नाऽवबोधितः, स कथमन्तर्हिते तस्मिन्नवभासेत। उच्यते—अभिहितान्वयवादिनोऽपि नाऽयं नियमः—श्रूयमाण एव पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः पदार्थप्रतिपादक इति, बाल्यदशाधीतात् प्रागनवधृतार्थादङ्गपरिज्ञानसंस्कारात् पश्चात् स्मृतादपि वेदादर्थावगमदर्शनात्। तेन स्मृत्यारूढस्याऽवगमकत्वमदोषः। श्रूयमाणेन हि पदेन प्रतियोगिसापेक्षत्वादन्विताभिधानस्य प्राक् सहकारिविरहादर्थो नाऽभिहितः, पश्चादभिधीयत इति किमनुपपन्नम्।

---

पाठ—स्थान-मुख्य-प्रवृत्तयः, वचन-नामधेय-चोदनालिङ्गानि च विवक्षिताः। तैर्विमर्ददशायां सम्पादिते शब्दार्थानामन्वयार्हत्वविभागे सति, पश्चात्स्मृत्युपनीतैः पर्यायक्रमेण वाक्यार्थावगतिर्जायते। तस्माल्लौकिकम्, वैदिकञ्च वाक्यं यद्विप्रतिपन्नार्थम्, तन्न्यायसापेक्षमेवाऽर्थबोधकम्। प्रतिपन्नार्थन्तु तदनपेक्षमेव झटित्यर्थबोधकमि"ति तन्त्ररहस्यस्थो वाक्यसन्दर्भो जिज्ञासूनां बोधसौकर्याय निवेशित इति ध्येयम्। [1] अनन्वितमिति. मु. पु. पा.।

[2] अभिधीयमाना इति. मु. पु. पा.। [3] संगतेष्विति पाठो न्यायरत्नमालायां दृश्यते।

येऽपि वादिन एवमाहुः—एकमेव पदमन्विताभिधायकमस्तु, इतराणि च पदानि प्रतियोगिसन्निधापनमात्र एव व्याप्रियन्ताम् । न चाऽगृह्यमाणविशेषता, प्राथम्येन, प्रधानपदत्वेन वा विशेषग्रहणात् । अत एव चाऽऽहुः—"पदमाद्यं[1] वा वाक्यम्, प्रधानं पदं वा वाक्यमि" [वा. प. का. २. श्लो. २.]ति । तान्प्रत्याह—"सर्वमि"ति । प्रथमस्यैव स्याद्वाक्यता यदि, सर्वपदार्थानां प्रथमपदार्थान्वितता स्यात् । न चाऽयं नियमः । "अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाती" [तै. सं. ६. १. ९]ति क्रयमात्रान्वयित्वादारुण्यस्य । किञ्च[2] वाक्ये पदानामानुपूर्व्यनियमाभावात्, कदाचित्तदेव प्रथमं सदन्विताभिधायकम्, अन्यदा नेति न युक्तम् । तथा प्रधानपदस्याऽपि वाक्यत्वमयुक्तम्, सोमपदार्थेन[3] सह सर्वेषामनन्वयात् । यद्यप्यारुण्यादीनां सर्वेषां सोमं प्रत्यैदमर्थ्यमस्ति । तथाऽप्यस्मिन् वाक्ये क्रय एवाऽऽरुण्यादीनामैदमर्थ्येन, क्रिया-कारकभावेन चाऽन्वयः । क्रयद्वारेण तु सोमं प्रत्यैदमर्थ्यमात्रम् ।

अथ यत्प्रतिपादनपरं वाक्यम्, तत् प्रधानमित्युच्यते । इह तु क्रय एव सर्वकर्मकरणावच्छिन्नः प्रतिपाद्यते । तेन क्रीणातीत्येतदेव[4] प्रधानं पदम्, तदन्वयिता च सर्वेषामारुण्यादीनामिति । अत्रोच्यते—वाक्यस्य यत् तावत् तात्पर्यं, [5]तन्न व्यवस्थितम् । क्वचिदाख्यातपरत्वमेव—"अग्निहोत्रं जुहोती"ति । क्वचिद् गुणविधिपरत्वं, दध्ना जुहोती"ति । तेन प्रधानपदत्वस्याऽपि सर्वेषां पदानां सम्भवात्, सर्वेषामेव पदानामन्विताभिधानशक्तिराश्रयणीया । तथा सति यत्राऽपि गुणपरत्वम्, तत्राऽपि क्लृप्तशक्तिकतया तदन्विताभिधायकत्वमविरुद्धम् । पदार्थेष्वपि चैतत् तुल्यमेव ।

नन्वेवं "गामानये"त्यादौ परस्परपर्यायिता सर्वशब्दानां स्यात् । यथा "गामि"त्यनेनाऽऽनयत्यन्विताभिधानम्, तथा "ऽऽनये"त्यनेनाऽपि गवान्विताभिधानमिति । उच्यते—द्वावेतावर्थौ, यदानयनान्वितं गोत्वम्, गवान्वितश्चाऽऽनयनमिति । तेनैकैकेनैकैकस्याऽर्थस्याऽभिधानात् कुतः पर्यायत्वप्रसङ्गः । पदार्थेष्वपि चैतत्समानम् । ननु क्रीणात्यर्थस्याऽऽरुण्याद्यने-

---

[1] भर्तृहरिणोक्तान् वाक्यविकल्पान् दर्शयति—पदमाद्यमिति ।

[2] पूर्वोक्तान् वाक्यविकल्पान् दूषयति क्रमेण-किञ्चेति । [3] सोमपदेनेति मु. पु. पा. ।

[4] क्रीणातीत्येवेति मु. पु. पा. । [5] तदिति मु. पु. नाऽस्ति ।

कार्थान्विताभिधानादावृत्तिलक्षणो वाक्यभेदस्स्यात् । न । तन्त्रोच्चारणात् । वैरूप्ये च तन्त्रतानुपपत्तेर्वाक्यभेदस्स्यात् ।

"न्यायसम्पादितव्यक्ती"ति किमिदम्, यावन्न्यायेन वचनव्यक्तिर्न-सम्पाद्यते, तावत् पदजातं वाक्यार्थस्याऽवबोधकं न भवति । लोकव्य-[1]वहारवर्तिभिर्न्यायैर्यावत्—इदं विधेयम्, इदमनुवाद्यम् । इदं प्रधानम्, इदं गुणभूतम् । इदं विवक्षितम्, इदविवक्षितमित्यादि न सम्प्रधार्यते, तावन्न क्वचिद्वेदवाक्यार्थोऽवबुद्ध्यते ।

तदुक्तं वार्तिककारमिश्रैः—

"तावदेव हि सन्देहो वेदवाक्ये श्रुते भवेत् ।
यावन्न वचनव्यक्तिस्तस्य स्पष्टाऽवधार्यते ॥
ज्ञात्वा तु वचनव्यक्तिं मीमांसान्यायकातराः ।
प्रलीयन्ते समस्ताश्च वेदवाक्यार्थसंशयाः" ॥ इति ।

अत एव मीमांसाया वेदवाक्यार्थप्रतिपत्तावितिकर्त्तव्यतात्वम् । तदुक्तं तैरेव—

"धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं [2]मीमांसा पूरयिष्यति" ॥ [बृहट्टीका] इति ।

ननु लोके द्रागेव वाक्यार्थावगतिर्नेयतीं सामग्रीमपेक्षते । उच्यते—अत्यन्ताभ्यस्तेषु वाक्येषु स्यादेवम्, अदृष्टार्थेषु स्मृत्यादिवाक्येषु, लोकेऽपि नानाविधविवादोत्थानात् कुतो द्रागेवाऽर्थनिश्चयः । अपि च कारणाभा-वेनाऽपि लोकस्याऽयंविवेको नाऽस्ति ।

---

[1] व्यवहारानुपपत्तिभिरिति मु पु पा ।

[2] अस्य वेदवाक्यस्याऽयमर्थ, अन्यो वेति वेदवाक्यार्थसशये सति तन्निर्णयोपायभूत-न्यायनिबन्धन हि शास्त्र मीमासेति गीयते । सा च द्वादशलक्षण्यात्मिका, तदारम्भरव शास्त्रमुखनामके प्रकरणे–आक्षेपसमाधानाभ्यामध्यापनविधिमुपजीव्य समुपवर्णित । सा च करणीभूतस्य वेदस्यतिकर्तव्यतास्थाने आपतति । यथा चाक्षुषप्रत्यक्ष प्रति करणस्याऽपि चक्षुष आलोक, यथा वाऽनुमानस्य व्याप्तिस्मरणम्, यथा वाऽर्थापत्तेस्सन्देहापत्ति, तथा वेदेन धर्मे प्रमीयमाणे सति, मीमासाशास्त्रमितिकर्तव्यतास्थानपूरक भवति । करणसामान्य-स्येतिकर्त्तव्यताकाङ्क्षाया अविशिष्टत्वादित्यर्थ । यथोक्तम्—

"न हि तत्करण लोके वेदे वा किञ्चिदीदृशम् ।
इतिकर्तव्यतासाध्ये यस्य नाऽनुग्रहार्थिता" ॥
[श्लो वा पृ ५०७ श्लो. ३७ ] इति ।

तदुक्तम्—

"बहुजाति-गुण-द्रव्य-कर्मभेदावलम्बिनः ।
प्रत्ययान् सहसा जातान् श्रौत-लाक्षणिकात्मकान् ॥
न लोकः कारणाभावान्निर्धारयितुमर्हति ।
बला-बलादिसिद्ध्यर्थं वाक्यज्ञास्तु [1]विचिन्वते" ॥

[ तं. वा. पृ० ] इति ।

यच्चेदं सर्वपदानामन्विताभिधायित्वमुच्यते, तत् सर्वेषु श्रौतार्थेषु पदेषु । लाक्षणिक-गौणार्थपदप्रयोगे तु यदेव तत्र श्रौतार्थं पदम्, तदेवाऽन्विताभिधायकम्, इतरत्तु पदं प्रतियोगिसन्निधापनपरमेव । तत्र वाचकत्वशक्त्यनवधारणात् स्वार्थस्याऽपि तत्तदानीमवाचकम्, अन्वयायोग्यत्वात् । किन्तु तदर्थेन स्मृतेन यत् स्वसम्बन्धि, स्वसदृशं वा स्वयमन्वययोग्यमुपस्थाप्यते, तेनाऽन्वितं श्रौतार्थमेव पदं स्वार्थमभिधत्त इति दर्शनरहस्यमिदम् । न च सर्वपदान्येव लाक्षणिकानि, गौणानि वा वाक्ये सम्भवन्तीति निरवद्यम् । क्वचिदभिधानं निमित्तम्, क्वचिदभिहितोऽर्थ इति च यदुक्तम्, तच्छब्दोपस्थापितत्तां दर्शयितुं गौणमभिहितत्वग्रहणम् ॥१२॥

कथं पुनरन्विताभिधायिना पदेन स्वरूपमात्रं स्मारयितुं शक्यमित्याह—

**अन्वितस्याऽभिधानेऽपि स्वरूपं विद्यते सदा ।**
**तेन स्वरूपमात्रेऽपि शब्दो जनयति स्मृतिम् ॥१३॥**

एवं तावत् सम्बन्धग्रहणान्तर्गतं स्वरूपस्मरणमुक्तम् । सम्प्रति स्वरूपमात्रस्मरणमपि पदादेव नाऽनुपपन्नमित्याह—

**यथाऽर्थेनाऽप्रमाणेन स्वपदं स्मार्यते क्वचित् ।**
**पदेनाऽप्यप्रमाणेन तथाऽर्थस्स्मारयिष्यते ॥१४॥**

न हि यत्प्रमाणं, तदेव स्मरणकारणम्, अप्रमाणमेव हि तत् । यस्य तु येन सह कदाचित्प्रत्यासत्तिः प्रतीतपूर्वा, सा तत्र संस्कारोद्बोधद्वारेण शक्नोत्येव स्मृतिं जनयितुम् । अस्ति च स्वरूपस्याऽपि तदभिधेयान्तर्गत्या शब्देन प्रत्यासत्तिरिति, शक्नोति तत्राऽपि शब्दस्स्मृतिं जनयितुम्, अर्थवत् । यथा निर्विकल्पकदशाप्रतीतमर्थस्वरूपमात्रमनभिधेममपि शब्दं स्मारयति,

---

[1] विविञ्चत इति मु. पु. पा. ।

तथा शब्दोऽप्यर्थमिति, किमनुपपन्नम्। एतेन—पदोच्चारणानन्तरं पदार्थस्वरूपप्रतीतिस्समर्थिता। अभिहितान्वयवादिनोऽपि सा न प्रमाणम्, अभ्यधिकार्थपरिच्छेदाभावात्। "अनधिगतार्थगन्तृ प्रमाणमि"ति सिद्धान्ताभ्युपगमात्।

तदुक्तम्—

"सर्वस्याऽनुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा" [श्लो. वा. औ. सू. श्लो. ११.] इति। अत एव स्मृतिरियम्, यदि पुनस्स्मृतिरेषा नाऽभ्युपेयेत, तदा प्रमाण-स्मृति-संशय-विपर्ययेभ्यः प्रतिपत्त्यन्तरानभ्युपगमात् पदात् पदार्थप्रतीतिः क्वाऽन्तर्भाव्यतामिति वाच्यम्। अत एवाऽभिहितान्वयवादेऽपि स्मारकत्वमेवाऽस्मभ्यं रोचते ॥१४॥

इतरेतराश्रयमिदानीं परिहरति—

**स्मृतिसन्निहितैरेवमर्थैरन्वितमात्मनः[1]।**
**अर्थमाह पदं सर्वमिति [2]नाऽन्योन्यसंश्रयः ॥१५॥**

स्वार्थस्वरूपमात्रस्मरणे हि न पदं पदान्तरमपेक्षते। स्मृतिसन्निहितमपीदं भवत्येव सन्निहितम्। नाऽस्ति तेनेतरेतराश्रयत्वम्।

ननु वृद्धव्यवहारेण व्युत्पत्तिः, अन्वितार्थप्रतिपत्तिनिबन्धनश्च व्यवहारः, अतस्तद्दर्शनात्, अन्वितप्रतिपत्तिरेवाऽनुमातुं शक्या, न त्वनन्वितपदार्थमात्रस्मरणम्। उच्यते—व्यवहारानुमितान्वितप्रतिपत्त्यन्यथानुपपत्तिरेवाऽनन्वितस्वार्थस्मरणसम्भवे प्रमाणम्। दर्शितं ह्येतत्—नाऽनन्वितप्रतिपत्तिमन्तरेणाऽन्वितप्रतिपत्तिरुपपद्यत इति।

[3]अत्र कश्चिदाह—यदि स्मृतिसन्निहितमाश्रित्याऽन्विताभिधानं परैः क्रियते, तदा स्मरणस्य प्रत्यासत्तिनिबन्धनत्वात्, अनेकेषाञ्चाऽर्थानां प्रत्यासत्तिसम्भवात्, तेषु स्मृतिसन्निहितेष्वगृह्यमाणविशेषत्वात्, "उरवायां

---

[1] तन्त्ररहस्ये "आत्मन" इति षठचन्त पाठो दृश्यते। पञ्चिकायान्त्वात्मनेति तृतीयान्त पाठ। अत्र षष्ठचन्तपाठ एव साधीयान् प्रतिभाति।

[2] "नाऽन्योन्यसश्रय" इति प्रथमान्त पाठस्तन्त्ररहस्ये दृश्यते,। अतस्तगनुसारेण स एव पाठोऽत्र योजित इति ध्येयम्।

[3] भट्टमतानुयायी कश्चिदन्विताभिधान दूषयन्नभिहितान्वयवाद समर्थयन्नाह—अत्र कश्चिदिति।

पचती"ति नोखा पचत्यर्थान्वितैव केवलाऽभिधीयेत। सा हि [1]कुलालाद्यन्विताऽपि प्रतिपन्नैवेति, स्मरणात् तदन्विताऽप्युखाऽभिधीयेत। तथा पचत्यर्थोऽपि पिष्टकादिकरणकोऽवगत[2] इति तत्स्मरणादोदनान्वित एवाऽभिधीयेत। अभिहितान्वयवादे तु नाऽयं दोषः। एकैकस्याऽर्थस्याऽभिधेयत्वादिति।

[3]अत्रोच्यते—पदात्तावत् पदार्थप्रतीतिस्स्मरणाद् भिन्ना वदितुं न शक्यते। तेन स्मृतानामेवाऽन्वयबोधकत्वमित्याश्रयणीयम्। तथा च तुल्यो दोषः। अथ शब्दैस्स्मारितानामन्वयबोधकत्वं[4] वृद्धव्यवहारे तथादर्शनादित्यदोषः[5]। मतान्तरेऽपि तुल्यमेतत्। न चाऽयमेकान्तः, वृद्धव्यवहारेऽध्याहृतेनाऽप्यर्थेनाऽऽन्विताभिधानदर्शनादित्युक्तम्। अथ शब्दैर्बहवोऽर्थास्स्मार्यन्ते, किन्तु तेषां कतमेनाऽन्वयावबोधकत्वमिति न विद्मः[6]। अभिहितान्वयवादे त्वभिहितेनैवाऽन्वयबोधकत्वं युक्तमेवेति। तदसत्। स्मारकत्वातिरेकिणी[7] काऽन्याऽभिधायकता, या व्यवस्थानिबन्धनम्। अथोच्येत-स्मारकत्वं नाम प्रत्यासत्तिनिबन्धनम्। तेन तदतिरेकिण्यभिधेया—भिधायकतालक्षणा प्रत्यासत्तिरङ्गीकरणीयेति। नैतदेवम्। स्मारकत्वेनैव वृद्धव्यवहारे दर्शनात् स्मारकत्वोपपत्तेः। [8]प्रत्याय्य-प्रत्यायकता हि वाच्यवाचकता, सा च यद्यप्यग्नि—धूमादीनां सम्बन्धान्तरपूर्विका दृष्टा। तथाऽपि शब्दे तथा नाऽऽश्रीयते, किन्तु वाचकत्वावगमादेव वाचकत्वम्। एवं स्मारकत्वावगमादेव स्मारकत्वमिति, किं प्रत्यासत्त्यन्तराश्रयणेन।

अपि चाऽन्वितार्थवादिन एवेदं प्रतिनियतान्वयित्वमुपपद्यते—यत्पदा-

---

[1] निर्वापितेति मु पु पा। [2] पाकादिमुक्त इति मु पु पा।

[3] उपपादितं पूर्वपक्षं प्रतिक्षिपन्नन्विताभिधाने चाऽऽपादितं दूषणं निरस्यति—अत्रोच्यत इत्यादिना। [4] बोधकत्वादिति मु पु पा।

[5] दर्शनाददोष इत्येव मु मु पु पा। [6] न विद्म इति मु पु नाऽस्ति।

[7] अत्रेदं बोध्यम्—पदश्रवणात्पदार्थोपस्थितिर्जायत इति सर्वैरङ्गीक्रियते। साऽनुभवरूपा, स्मृतिरूपा वेत्यत्र विवादः। तत्र केचिदनुभवरूपेति स्वीकुर्वन्ति, अन्ये तु स्मृतिरूपेति वर्णयन्ति। अयमर्थोऽभिहितान्वयवादनिरूपणावसरेऽस्माभिर्विविच्य विवेचितः। तत्राऽऽद्यं प्रकारं निराकृत्य, द्वितीयपक्षं कक्षीकरोति—स्मारकत्वातिरेकिणीति।

[8] प्रत्याययतुरिति मु पु. पा।

र्थान्तरान्विताभिधायकतया स्मार्यते, तदन्वितस्यैव वृद्धव्यवहारे वाच्यत्वदर्शनात्। यत्राऽप्यध्याहारः, तत्राऽपि सन्निधापकवशेन विशेषान्विताभिधानलाभ इति लोकत एव ज्ञातमिति, न कश्चिद्दोषः। अपि च ज्ञानं तावदेतद् यदनेन पदेनाऽयमर्थोऽन्वितो वाच्य इति, तत्र यद्यन्येनाऽप्यर्थान्विताभिधानं स्यात्, तदा वाक्यभेदो भवेत्। न चाऽसावेकवाक्यत्वसम्भवे न्याय्यः।

तदुक्तम्—

"सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते" [ श्लो. वा. प्र. सू. श्लो. ६. ] इति।

अत एव यथाकथञ्चिदेकवाक्यत्वोपपत्तौ वाक्यभेदस्याऽन्याय्यत्वम्। लोके च लक्षणा, गौणी च वृत्तिर्वाक्यभेदभयादेव[1]। अन्यथा वाक्यं भित्वा किमित्यध्याहृत्य योग्यमर्थान्तरं सर्वपदान्येव मुख्यार्थानि नाऽऽश्रीयन्ते। वेदेऽप्येकवाक्यत्वबलादेवा[2]ऽर्थवादेषु [3]गुणवादाद्याश्रयणम्, [4]सम्मार्गाधिकरणे [मी. द. २. १. ४.] विभक्तिव्यत्ययवर्णनम्। औदुम्बराधिकरणपूर्वपक्षे च कथञ्चित् पशुफलकत्वाश्रयणम्। चित्राधिकरणे [ मी. द. १. ४. २. ] रूढिपरित्यागेन "पञ्चदशान्याज्यानि भवन्ती" [तां. ब्रा. २०. १. १.] ति कथञ्चिन्नामधेयत्वाश्रयणम्। वाजपेयाधिकरणे [ मी. द. १. ४. ५. ] च वाक्यभेदभयादेव नामधेयत्वाश्रयणम्। पौर्णमास्यधिकरणे [ मी. द. २. २. ३.] चाऽनेकगुणविधाने वाक्यभेदापत्तेस्समुदायानुवादकत्वसिद्धिः। प्रकरणान्तराधिकरणे [ मी. द. २. ३. ११. ] च वाक्यभेददोषादेवाऽग्निहोत्रपदस्य गौणत्ववर्णनम्। ग्रहाधिकरणे [ मी. द. १. ३. ७. ] चैकत्वस्याऽविवक्षितत्वम्। "अर्द्धमन्तर्वेदि मिनोति, अर्द्धं बहिर्वेदी" [ मै. सं. ३. ९. ४. ] त्यत्र [मी. द. ३. ७. ६.] देशलक्षणापरत्वम्। क्षौमाधिकरणे [ मी. द. ६. १. ५. ] च पुंद्वयविधानहानम्। हविरार्त्यधिकरणे [ मी. द. ६. ४. ६. ] चोभयपदस्याऽविवक्षा। "वारुण्या निष्कासेन तुषैश्चाऽवभृथं यन्ती" [ मी. द. ७. ३. ५. ] त्यत्र निरपेक्षत्वत्यागः। पर्युदासाधिकरणे [ मी. द. १०. ८. ७. ] च नञर्थस्य लाक्षणिकत्वमित्यादि बहुतरं दृश्यते।

[1] वाक्यभेदादिति. मु. पु. पा.। [2] एकबलादिति मु. पु. पा.।
[3] गुणवादाच्चेति मु. पु. पा.। [4] सम्मार्गाधिकरण इति. मु. पु. नाऽस्ति।

तत्र यदि समभिव्याह्रियमाणस्य पदस्याऽभिधेयं परित्यज्य, अन्येन सहाऽन्वयो लक्ष्यते, [1]तदा तदेकवाक्यता हीयेत। [2]तदर्थमेवेदमुक्तं, "न्यायसम्पादितव्यक्तीति"।

एकवाक्यत्वं हि न्यायः[3]। तदनुसारेण योऽर्थः, सोऽत्र वाक्यस्याऽऽश्रयणीयः। वृद्धव्यवहारव्युत्पत्तिनियन्त्रितायां शब्दार्थावगतौ ये न्यायाः वृद्धव्यवहारे वाक्यार्थावगतिहेतुतया विदिताः, तानपरिजहता वाक्यार्था बोद्धव्या इति-सर्वासामेवाऽनुपपत्तीनामनवकाशः।

भवतु तर्हि पदार्थान्तरेण तावदन्विताभिधानमेकवाक्यत्वबलात् तत्स्मारितेन, स्वयं स्मारितेन च तदेकवाक्यत्वानुगुणेनाऽर्थान्तरेणाऽपि किमित्यन्विताभिधानं न भवति। उच्यते—पदद्वयेनैवाऽन्विताभिधानसिद्धेराकाङ्क्षोपशान्तेः। अथ नोपशान्ताऽऽकाङ्क्षा, तर्हि को नाम तत्राऽन्विताभिधानं वारयेत्। अत एवैकपदोच्चारणे तदर्थसम्बन्धमुखेन बहुष्वपि स्मृतिसन्निहितेषु यस्याऽर्थस्य केनचित्प्रकारेण विशेषो गृह्यते, तेनैवाऽन्विताभिधानम्, अगृह्यमाणे तु विशेषेऽनध्यवसायादप्रतीतिरेव। अत एव विकृतिषु तत्सादृश्येन यदपूर्वं स्मर्यमाणं स्वोपकारकं स्मारयति, तदीयेनैवोपकारेण परिपूरणम्। अतो यत्र बहुतरधर्मसाधारण्यनिबन्धनं सादृश्यमत्यन्तोत्कटम्[4], तत्रैव शीघ्रं स्मृत्युपपत्तेस्तदीयोपकारपरिग्रह एव। दर्विहोमेषु तु सर्वापूर्वाणामविशेषाद् विशेषो ग्रहीतुमशक्य इत्यनध्यवसाय एव प्राकृतस्योपकारस्येति, तत्रैवोपकारकल्पना।

[5]अपि च यथावृद्धव्यवहारावगमं वाक्यार्थाविबोधः। तत्र यदेव पदेन अनपभ्रष्टसम्बन्धग्रहणसंस्कारस्य पुरुषस्य नियमेन स्मार्यते, तेनैवाऽन्विताभिधानं पदान्तरस्य दृश्यते, नाऽन्येन। सर्वं पदं स्वार्थं हि नियमेन सम्बन्धग्रहणात्[6] स्मारयति, नाऽर्थान्तरम्। ततश्च [7]तेनैवाऽन्वितस्वार्थबोधकतेति, न कश्चिद्दोषः।

---

१ तदाऽप्येकवाक्यतेति—मु पु पा।

२ उपर्युक्तेऽर्थे दाढर्यं सपादयितु द्वादशेन श्लोकेनोक्तमर्थं स्मारयति—तदर्थमिति।

३ महान्वय इति मु पु पा। ४ अन्यस्योद्गतमिति मु पु पा।

५ उपकारकतेति मु पु पा। ६ स्मर्तृणामिति मु पु पा।

७ पदान्तरस्येत्यधिक पा मु पु।

किञ्च यद्यभिहितेनैवाऽन्वितस्वार्थबोधनाभ्युपगम एव प्रतिनियतान्वयबोधो घटते, नाऽन्यथा, तर्हि कल्प्यतां पदानामन्विताभिधानशक्तिरपि। द्विरभिधानमापद्यत इति चेदापद्यताम्, न कश्चिद्दोषः। पूर्वं केवलं पदमनन्वितं स्वार्थमभिधत्ते, प्रतियोगिपदान्तराभिहितवस्त्वन्तरसहायप्राप्त्या तु तत्तदन्वितमर्थमाह, इति न कश्चिद्दोषः। इत्थमपि चाऽस्मन्मते शक्तिकल्पनालाघवमस्ति, पदार्थगतान्वयबोधनशक्त्याधानशक्तिकल्पनात्यागात्। तुल्यायामपि शक्तिकल्पनायाम्, पदानामेवाऽन्वितबोधनशक्तिराश्रयितुमुचिता,[1] न पदार्थानाम्, प्रथमावगतत्वात्, वाक्यार्थे च [2]तात्पर्यस्योपगमादिति ॥१५॥

कथं तर्हीदं भाष्यम्—"पदानि ही"त्यादि।

तत्राऽऽह—

अन्वितेषु पदैरेवं बोध्यमानेषु शक्तिभिः।
अन्वयार्थगृहीतत्वान्नाऽन्यां शक्तिमपेक्षते ॥१६॥

[3]आशङ्कितोत्तरमिदं भाष्यम्। किमाशङ्कितम्? यद्यन्विताभिधायीनि पदानि, तर्हि नाऽन्वयाभिधायीनि। तत्सिद्ध्यर्थं पदानां शक्त्यन्तरं कल्प्यमिति। अत्रेदमुत्तरम्। यत्पदमन्विताभिधायकम्, तदन्वयाभिधायकमेव। [4]अन्यथाऽन्वित एवाऽसौ नाऽभिहितस्स्यादिति, अन्वितरूपेणाऽर्थेनाऽन्वयस्स्वीकृतः। तं विना तदसम्भवादिति, नाऽपरा तद्विषया पदानां शक्तिः कल्पनीया ॥१६॥

कथं पुनरसावर्थगृहीत [5]इत्यत्राऽऽह—

प्रतीयन्नन्वयं यस्मात् प्रतीयादन्वितं पुमान्।
व्यक्तिं [6]जातिमिवाऽर्थेऽसाविति सम्परिकीर्त्यते ॥१७॥

अन्वयवानेव ह्यन्वितः। सोऽन्वयाप्रतीतौ न प्रतीत एव स्यात्, किन्तु स्वरूपमात्रमेव। न च तदन्वितमुच्यते। तस्मादन्वयं प्रतिपद्यमान[7] एवाऽऽन्वितं प्रतिपद्यते। यथा व्यक्तिं प्रतिपद्यमान एव जातिम्।

---

[1] उचितमिति. मु. पु. पा.। [2] अवगतत्वादिति. मु. पु. पा.।
[3] आक्षिप्तं भाष्यवाक्यं स्वमतेन योजयति—आशङ्कितेति।
[4] अन्विताभिधायकमित्येव मु. पु. पा.। [5] इत्याहेति मु. पु. पा.।
[6] व्यक्तिजातिमिवेति मु. पु. पा.।
[7] प्रतिपाद्यमानोऽन्वितंसंप्रतिपाद्यत इति मु. पु. पा.।

अयन्तु विशेषः। अन्वयवानेवाऽन्वित उच्यत इति, अन्वयोऽप्यभिधानानुप्रविष्टः। व्यक्तिमत्त्वेन जातिस्वरूपं न भवति, किन्तु व्यक्तेराकारान्तरभूता जातिस्ततो भिन्ना। सा चेदाकृतिश्शब्दाभिधेया, न व्यक्तिरप्यभिधानानुप्रवेशिनी, किन्त्वाकारभूता जातिर्व्यक्तेर्व्यतिरिक्ताऽपि वस्तुस्वभावेन व्यक्तिमन्तरेण न प्रतीतिमनुभवति, एतावता च साम्येन दृष्टान्तः, न सर्वात्मना।

नन्वेकविज्ञानारूढा कथं व्यक्तिरनभिधेया। शब्दोत्थापितविज्ञानविषयता ह्यभिधेयता, अस्ति च व्यक्तेरपि तथाभाव इति, कथमनमभिधेयतेति। [1]श्रूयतामवधानेन सर्वस्वं प्राभाकराणाम्। सत्यमेकसंवित्तिविषयता जातिव्यक्त्योः। तथापि चिन्तनीयमिदम्—कथमेषा संवित्तिरुभयविषया जायत इति। किमस्योभयविषयत्वे शब्दमात्रस्यैव व्यापारः? उत जातिमात्रविषयत्वे शब्दस्स्वरूपमात्रेण व्याप्रियते। व्यक्तिविषयत्वे जात्यनभिधायकतया जातेरन्यथा बोधयितुमशक्यत्वात्—इति। तत्र तावदनन्तासु व्यक्तिषु सम्बन्धग्रहणाशक्तेः, आकृत्युपलक्षितासु च यद्यपि सम्बन्धग्रहणं सुकरम्, तथाऽपि तद्रूपवत्त्वेनैव शब्दाद्व्यक्त्यवगमात्, उपलक्षणत्वे कारणाभावात्, चिह्नाभावेन च क्रियान्वयासम्भवादाकृतिविषयत्वं तावच्छब्दस्वरूपनिबन्धनम्। एवञ्चेत्तदभिधायकतयैव व्यक्तिविषयत्वे शब्दव्यापार इति निश्चीयते। तेनाऽऽकृतिर्न व्यक्तिं गमयति, किन्तु शब्द एव तदभिधायकतयेत्याकृतितो व्यक्तिरुच्यते। अतोऽन्विताभिधानायाऽन्वयस्याऽर्थग्रहीतत्वादसावन्वयो नाऽभिधीयते। तेन व्यतिषक्ताभिधानवन्न व्यतिषङ्गाभिधानं, निष्कृष्टाभिधानन्तु न भवति। व्यतिषक्ततोऽवगतेर्व्यतिषङ्गस्य, व्यतिषक्तस्य व्यतिषङ्गं विनाऽभिधानानुपपत्तेः।

[2]भाष्याक्षराणामयमर्थः—पदान्यन्वितमभिधाय निवृत्तव्यापाराणि ना-

[1] अत्रेदं बोध्यम्- प्राञ्चो नैयायिका गवादिशब्दानां जात्य-वयवसंस्थान-व्यक्तिषु त्रिसृष्वप्येकैव शक्तिरिति वदन्तः, "जात्याकृतिव्यक्तयः पदार्थः" इति सूत्रञ्चाऽस्मिन्नर्थे प्रमाणयन्ति।

नव्यास्तु-जातिविशिष्टायां व्यक्तौ शक्तिमाचक्षते। भाट्टमीमांसकास्तु-जातौ शक्तिः, व्यक्तौ निरूढलक्षणेति संप्रचक्षते, "नाऽगृहीतविशेषणा बुद्धिर्विशेष्यमुपसङ्क्रामती"ति न्यायेन। प्राभाकरास्तु—जातौ शक्तिः, समानसंवित्संवेद्यत्वेन जातिभासकसामग्र्यैव व्यक्तिभानोपपत्तेर्व्यक्तौ नाऽतिरिक्ता शक्तिस्स्वीकर्तुमुचितेत्याशयेनाऽऽह—श्रूयतामिति।

[2] स्वमतेन भाष्यस्याऽभिप्रायं वर्णयति-भाष्येति।

ऽन्वयं पृथगभिदधाति। अथेदानीमन्विताः प्रतिपन्ना अन्वयमपि प्रतीतं सम्पादयन्ति—इति। लोके च पदार्थानां सम्बन्धग्रहणसमय एव विदितत्वात्, वाक्यान्तरे चाऽन्वयान्तरस्यैव प्रतिपन्नत्वात्, तत्परतैव वाक्यस्येति। वाक्यार्थशब्देन भाष्यकारोऽन्वयमाह। वेदे त्वपूर्वात्माऽन्वितो वाक्यार्थ इति [1]वक्ष्यामः। तस्य च स्वरूपमनवगतमित्यस्यैव वाक्यार्थत्वम्। एवमुक्तेन न्यायेन विशेषेणैवाऽन्विताभिधानं समर्थितम् ॥१७॥

येऽन्विताभिधानवादिन एवमाहुः—वृद्धव्यवहारप्रसिद्धसम्बन्धश्शब्दोऽर्थस्य वाचकः, अन्वय-व्यतिरेकाभ्यश्च सम्बन्धावधारणम्। न च विशेषान्वयविषयौ तौ सम्भवतः। क्रियापदं हि कारकसामान्याव्यभिचारिण्या क्रियया सहाऽन्वय—व्यतिरेकौ भजते। [2]विशेषान्वयान्तरव्यभिचारात्। एवं कारकपदेऽपि योज्यम्।

तन्निराकरणायाऽऽह—

सामान्येनाऽन्वितं वाच्यं पदानां ये प्रचक्षते।
नियतेन विशेषेण तेषां स्यादन्वयः कथम् ॥१८॥

दर्शितमिदं—विशेषान्वयेऽप्याकाङ्क्षा-सन्निधि-योग्यतोपाधिवशेन सम्बन्धग्रहणं सुकरमिति, तदभिधायकतैव युक्ता पदानाम्। यदि चाऽसौ नेष्यते, तदा वाक्यार्थप्रतिपत्तिरेव नोपपद्यते, विशेषान्वयरूपत्वाद्वाक्यार्थस्य ॥१८॥

ननु च सामान्यान्वयोऽभिहितो विशेषान्वयमाक्षेप्स्यति, निर्विशेषस्य सामान्यस्य [3]प्रत्येतुमशक्तेर्विशेषान्वयप्रतिपत्तिरुपपन्नैवेत्यत्राऽऽह—

यद्यप्याक्षिप्यते नाम विशेषो व्यक्तिजातिवत्।
निर्धारितविशेषस्तु तद्वदेव न गम्यते ॥१९॥

यथा—जातिर्व्यक्तिमाक्षिपन्त्यपि, न प्रतिनियतं विशेषमाक्षिपति, तथाऽत्राऽपि प्रतिनियतविशेषालाभान्नियतविशेषात्मकवाक्यार्थप्रतिपत्तिरनुपपन्ना ॥१९॥

अथ विशेषमात्राक्षेपेऽप्याकाङ्क्षितस्सन्निहितो योग्यश्च योगविशेषो यः

---

[1] अस्यैव प्रकरणस्य द्वितीये परिच्छेदे २१ श्लोकव्याख्यायामिति शेषः।

[2] विशेषान्तरान्वयव्यभिचारादिति मु. पु. पा। [3] अशक्तेरिति ु. पु. न.।

ऽन्वयं पृथगभिदधति। अथेदानीमन्विताः प्रतिपन्ना अन्वयमपि प्रतीतं सम्पादयन्ति—इति। लोके च पदार्थानां सम्बन्धग्रहणसमय एव विदितत्वात्, वाक्यान्तरे चाऽन्वयान्तरस्यैव प्रतिपन्नत्वात्, तत्परतैव वाक्यस्येति। वाक्यार्थशब्देन भाष्यकारोऽन्वयमाह। वेदे त्वपूर्वात्माऽन्वितो वाक्यार्थ इति [1]वक्ष्यामः। तस्य च स्वरूपमनवगतमित्यस्यैव वाक्यार्थत्वम्। एवमुक्तेन न्यायेन विशेषेणैवाऽन्विताभिधानं समर्थितम् ॥१७॥

येऽन्विताभिधानवादिन एवमाहुः—वृद्धव्यवहारप्रसिद्धसम्बन्धश्शब्दोऽर्थस्य वाचकः, अन्वय-व्यतिरेकाभ्यश्च सम्बन्धावधारणम्। न च विशेषान्वयविषयौ तौ सम्भवतः। क्रियापदं हि कारकसामान्याव्यभिचारिण्या क्रियया सहाऽन्वय—व्यतिरेकौ भजते। [2]विशेषान्वयान्तरव्यभिचारात्। एवं कारकपदेऽपि योज्यम्।

तन्निराकरणायाऽऽह—

**सामान्येनाऽन्वितं वाच्यं पदानां ये प्रचक्षते।**
**नियतेन विशेषेण तेषां स्यादन्वयः कथम् ॥१८॥**

दर्शितमिदं—विशेषान्वयेऽप्याकाङ्क्षा-सन्निधि-योग्यतोपाधिवशेन सम्बन्धग्रहणं सुकरमिति, तदभिधायकतैव युक्ता पदानाम्। यदि चाऽसौ नेष्यते, तदा वाक्यार्थप्रतिपत्तिरेव नोपपद्यते, विशेषान्वयरूपत्वाद्वाक्यार्थस्य ॥१८॥

ननु च सामान्यान्वयोऽभिहितो विशेषान्वयमाक्षेप्स्यति, निर्विशेषस्य सामान्यस्य [3]प्रत्येतुमशक्तेर्विशेषान्वयप्रतिपत्तिरुपपन्नैवेत्यत्राऽऽह—

**यद्यप्याक्षिप्यते नाम विशेषो व्यक्तिजातिवत्।**
**निर्धारितविशेषस्तु तद्वदेव न गम्यते ॥१९॥**

यथा—जातिर्व्यक्तिमाक्षिपन्त्यपि, न प्रतिनियतं विशेषमाक्षिपति, तथाऽत्राऽपि प्रतिनियतविशेषालाभान्नियतविशेषात्मकवाक्यार्थप्रतिपत्तिरनुपपन्ना ॥१९॥

अथ विशेषमात्राक्षेपेऽप्याकाङ्क्षितस्सन्निहितो योग्यश्च योगविशेषो यः

[1] अस्यैव प्रकरणस्य द्वितीये परिच्छेदे २१ श्लोकव्याख्यायामिति शेष.।
[2] विशेषान्तरान्वयव्यभिचारादिति मु. पु पा। [3] अशक्तेरिति ु पु न।

पदवृन्दं स्मृतिस्थं वा प्रथमं पदमेव वा ॥
आख्यातपदमात्रं वा पदार्था वाऽप्यनन्विताः ।
[2]सामान्यान्वयबोधे वा हेतुर्वाक्यार्थबोधने ॥
पदान्येव समर्थानि वाक्यार्थस्याऽवबोधने ।
विशेषान्वयवादीनि भागशो भागशालिनः ।

इति सङ्ग्रहश्लोकाः ।

तथा चोक्तम् । अस्ति वा पदस्याऽर्थः ? बाढमस्ति । कथं तर्हि वाक्य-वाक्यार्थयोरौत्पत्तिकत्वम्, वृद्धव्यवहारात् । सत्यम् । सत्ववयवश इत्युक्तम् ।

इति महामहोपाध्यायश्रीमच्छालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां सवृत्तिकाया वाक्यार्थमातृकाया उपोद्घातो नाम प्रथमः परिच्छेदस्समाप्तः ॥

---

खण्डपक्षे—आख्यातशब्द, क्रम, सङ्घात, पदमाद्य, पृथक्सर्वं पद साकाङ्क्षम, इति पञ्च लक्षणानि ज्ञेयानि । तत्राऽपि सङ्घात, क्रम इति लक्षणमभिहितान्वयवादिमतेन ।

अन्विताभिधानवादिमतेन तु—आख्यातशब्द, पदमाद्य, पृथक्सर्व पर साकाङ्क्षम्, इति त्रीणि लक्षणानिति विवेक ।

एतदर्थसङ्ग्राहकाभ्या द्वाभ्या पद्याभ्या वाक्यविकल्पानष्ठौ प्रदर्शयति शाब्दिकशिरोमणिर्हरि—

"आख्यातशब्दस्सङ्घातो जातिस्सङ्घातवर्तिनी ।
एकोऽनवयवश्शब्द क्रमो बुद्ध्यनुसहृति ॥
पद्यमाद्य पृथक्सर्वं पद साकाङ्क्षमित्यपि ।
वाक्य प्रति मतिर्भिन्ना बहुधा न्यायदर्शिनाम् ॥
[वा. प का २ श्लो १–२] इति ।

इदमेव मत कुमारिलभट्टेन—
"एवमाद्यान्तसर्वेषा पृथक्सङ्घातकल्पने ।
अन्योन्यानुग्रहाभावात्पदाना नाऽस्ति वाक्यता ॥
आद्य यदि पदमि [श्लो पृ ८६० श्लो ४९ ५०]
त्यादिना वार्तिकेन निराकारि । शालिकाचार्योऽपि—आद्यपद वाक्यमित्यादिना निरस्य सर्वाणि पदानि वाक्यमिति स्वपक्षमुपक्षिपन्नाह—वाक्यमिति । यद्यप्यय वाक्यविकल्प "श्रूयमाण पद सर्वमि"त्यादिपद्यस्थसर्वशब्दार्थनिरूपणावसरे प्रत्याख्यात, तथाऽप्यत्रोपसहारव्याजेनाऽऽम्रेडयाम्बभूवेति मन्तव्यम् ।

[1] अवयव एवेति मु पु पा ।
[2] सामान्यान्वयबोधो वा हेतुर्वाक्यार्थभावन इति पा. ग. पु ।

# परिशिष्टम् ।

"पदानि हि स्व स्व पदार्थमभिधाय निवृत्तव्यापाराणि, अथेदानी पदार्था अवगतास्सन्तो वाक्यार्थमवगमयन्ति" [ शा भा पृ ९६ पू स ] इति भाष्यसन्दर्भ । इमञ्च भाष्यसन्दर्भ भाट्टा-अभिहितान्वयवादप्रतिपादनपरतया व्याचक्षते । अस्याऽयमभिप्राय—तानि तानि प्रयुज्यमानानि स्वस्वार्थमात्र प्रतिपादयन्ति, न तु विशिष्टरूप वाक्यार्थमवबोधयितुमीशते । तेषा पदाना पदार्थप्रतिपादनमात्रे न तात्पर्य तेषा प्रमाणान्तरसिद्धत्वात्, किन्तु विशिष्टार्थप्रत्यायने तात्पर्यम् । अभिधाव्यापार पदार्थेष्वेव विश्राम्यति, वाक्यतात्पर्यस्याऽपर्यवसिततया वाक्यार्थ-पर्यन्तत्वमतो वाक्यार्थज्ञान प्रति पदार्थज्ञान हेतु अवगता पदार्था वा, अत एव पूर्वस्मिन्प्रकरणे मूलमाक्षिप्तम्, किमपि मूल न सम्भवतीति । समाहितञ्चाऽग्रे निमित्त पदार्था इति । अत पूर्वापरवाक्यसन्दर्भपर्यालोचनेनोदाहृतभाष्यस्य वाक्यार्थमूलाक्षेपपरिहारपरत्वमेवेत्यवगम्यते । तस्मात्पदाभिहिता पदार्था आकाङ्क्षा—योग्यता-आसत्तिमन्तो लक्षणया वाक्यार्थं बोधयन्ति । तथा च—वार्तिकम्—

"साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।
वर्णास्तथाऽपि नैतस्मिन्पर्यवस्यन्ति निष्फले ॥
वाक्यार्थमितये तेषा प्रवृत्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठाना पदार्थप्रतिपादनम्" ॥
"वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नस्स्थिति" ॥ इति च ।

अन्विताभिधानवादस्त्वनुपदमेव निरूपयिष्यते ।

अत्रेदमवधेयम्—शब्दस्वरूपविषये मतद्वयमस्ति—वर्णातिरिक्तो वर्णाभिव्यङ्ग्यस्स्फोट एव शब्द इति, क्रमवन्तो वर्णा एव शब्द इति च । तत्राऽऽद्य मत वैयाकरणानाम्, चरमञ्च तार्किक-मीमासकादीनामभिमतमिति न्यायशुद्धिटिप्पण्यामवादिष्म[३६] । तन्न प्रस्मर्तव्यम् । तत्रेय विचिकित्सा जायते—वर्णसमूहश्रवणसमनन्तर समस्तवर्णविषयैका स्मृतिरुत्पद्यते, अथवा पूर्वपूर्ववर्णानुभवजनितसस्कारसहितस्याऽन्तिमवर्णस्याऽनुभवेन च स्मृत्यनुभवरूपा विचित्रा बुद्धि-रुत्पद्यते, प्रत्यभिज्ञाप्रत्यक्षवत्, हेरम्ब-नृसिहवदिति च । तत्राऽऽद्य पक्ष एव भाष्यकृता शबरस्वा-मिना "पूर्वपूर्ववर्णानुभवजनितान्त्यवर्णोऽर्थप्रत्यायक इत्यदोष" इत्यादिना भाष्येणोपन्यस्त ।

वाचस्पतिमिश्रोऽपि प्रत्येकवर्णानुभवभावितभावनानिचयलब्धस्मृतिदर्पणारूढा वर्णमाले-त्यन्य इत्यमुमेव पक्षमुपन्यस्यति स्म [ त वि पृ ७ ] ।

पार्थसारथिमिश्रोऽपि मत्पक्षे "स्मृतिमेव जनयन्तोऽर्थप्रतीर्ति सस्कारा जनयन्ति । प्रत्येक-वर्णानुभवभावितैस्सस्कारैस्सहत्य सर्ववर्णगोचरैका स्मृतिर्जायते । तस्याञ्च युगपदवभास-मानाऽपि विनैव सस्कारेण सहत्यैवाऽर्थप्रत्यय जनयन्ति" [ शा दी त पा पृ ९६ ] इति ।

न्यायभाष्यकृता पक्षिलस्वामिनाऽपि वर्णानामाशुतरविनाशिना वर्णानामुच्चरित-प्रध्व-सित्वेन साहित्य न सम्भवतीति नाऽऽशङ्कनीयम् । यथा—आग्नेयादीना षण्णा यागाना स्वरूपेण साहित्यासम्भवेऽप्यवान्तरव्यापाररूपापूर्वद्वारेण साहित्यम्, स्वर्गसाधनता च, तथैव क्रमोपगृही-

ताना वर्णाना सस्कारद्वारेण साहित्यम्, अर्थप्रत्यायकत्वञ्च सञ्जाघटीति । अपि च प्रागुदाहृतभाष्यपर्यालोचने इदमप्यवगम्यते—यदन्त्यवर्णस्यैवाऽर्थप्रत्यायकत्वम्, तथा च "शब्दादर्थ-प्रतिपद्यामह" इति लौकिकवचनमप्युपपन्न भवति ।

विश्वनाथपञ्चाननेनाऽयमर्थ कण्ठरवेणोक्त । तथा च ग्रन्थसन्दर्भ —"प्रत्येकपदानुभवजन्यसस्कारैश्चरमतावद्विषयकस्मरणस्याऽव्यवधानेनोत्पत्ते । तावत्पदसस्कारसहितचरमवर्णज्ञानस्योद्वोधकत्वम्" [ न्या सि मु श ख पृ ९० ] इति ।

भट्टवार्तिके तु—समस्तवर्णविषया या बुद्धि, वस्या प्रकारद्वयमाख्यायते । तत्राऽद्य प्रकारो यथा—सद्रूपान्त्यवर्णप्रत्यक्षम्, पूर्वेष्वतीतेषु वर्णेषु स्मृतिरूपमिति स्मृत्यनुभवरूपा विचित्रा बुद्धिरर्थप्रतीतिहेतुरिति केचिन्मन्यन्ते । प्रागुक्तप्रकारश्च द्वितीय इति ।

तथा च वार्तिकम्—

"चित्ररूपाञ्च ता बुद्धि सदसद्वर्णगोचराम् ।
केचिदाहुर्यथा वर्णो गृह्यतेऽन्त पदे पदे ।।
तथाऽन्त्यवर्णे विज्ञाते सर्वसस्कारकारितम् ।
स्मरण यौगपद्येन सर्वेष्वन्ये प्रचक्षते" ।।

[ श्लो वा स्फो वा श्लो १११-११२ ] इति ।

तत्र चित्ररूपा च बुद्धि केषाञ्चिन्मतेनोक्तम् । सर्ववर्णविषयस्मृतिपक्षस्तु सर्वैरादृत । शालिकाचार्येणाऽयमेव पक्षोऽङ्गीकृतस्समर्थितश्चेति बोध्यम् ।

---

## अथ सवृत्तेर्वाक्यार्थमातृकाया द्वितीयः परिच्छेदः ।

कार्यविषये पूर्वपक्षः ।

[1]उपोद्घातभूतमन्विताभिधानं प्रसाध्य, अपूर्वं कार्यं वेदवाक्यानामर्थ इति साधयितुकामः पूर्वपक्षं तावदाह—

ननु व्युत्पत्त्यपेक्षेषु शब्देष्वर्थाभिधायिषु ।
कथं मानान्तरावेद्यं कार्यमाहुर्लिङादयः ॥१॥

अपूर्वाधिकरणे [मी.द. २.१.२] लिङाद्यर्थोऽपूर्वमित्युक्तम् । प्रमाणान्तरायोग्यश्चाऽपूर्वमिष्यते । यच्च प्रमाणान्तरायोग्यम्, तत्र सम्बन्धग्रहणमशक्यम्, सम्बन्धिग्रहणपूर्वकत्वात्तस्य । विशिष्टार्थव्यवहारदर्शनेन हि तद्विषया शब्दशक्तिरनुमीयते, तदेव च सम्बन्धग्रहणम् । यच्च न प्रतीयते, न तद्विषयो व्यवहारोऽवसीयते । तदनवसाये च, न तद्विषया बुद्धिरनुमीयते । तदननुमाने च कुतश्शब्दस्य शक्तिः कल्प्यते । अपूर्वञ्च न प्रमाणान्तरगोचरः । न च शब्दादेव तदवगम्य, सम्बन्धावधारणम्, इतरेतराश्रयप्रसङ्गात्[2] । अवसितशक्तेरवबोधकत्वात् । अवबोधकत्वादेव शक्त्यवगमात् । स्यान्मतम् । लिङादेश्शब्दस्याऽयं महिमा, यदनवसितशक्तिरपि स्वार्थमवगमयतीति । तदिदमप्रमाणम् ।[3] क्रियामात्रावबोधकत्वाङ्गीकारेण लिङादेर्लोकतो व्युत्पत्तिसम्भवे, शब्दान्तरवैलक्षण्येनाऽगृहीतसम्बन्धस्यैव वाचकत्वकल्पनानुपपत्तेः ।

वेदवाक्यादपूर्वकार्यावगतेरेवं कल्प्यत इति चेत् । न । तस्या एवाऽसिद्धत्वात्, क्रियैव कार्यतया वेदवाक्येभ्योऽवगम्यत इति, व्युत्पत्तिबलेनाऽप्रामाणिकं मनोरथमात्रविजृम्भितन्त्वपूर्वं कार्यं प्रतीयते—इति । तस्मादगृहीतसम्बन्धो लिङादिः कथमपूर्वं कार्यमभिधत्ते, तथा च कथं [4]तद्वाक्यार्थः । अभिधेय एव [5]ह्यर्थो भवति वाक्यार्थः ॥१॥

---

[1] वाक्यार्थमातृकावृत्तेरुपोद्घातरूपे प्रथमे परिच्छेदे भाट्टसम्मतमभिहितान्वयवादं निरस्य, अन्विताभिधानवादं सोपपत्तिकमुपवर्णयामास शालिकाचार्यः । ततो द्वितीये परिच्छेदे कार्यापरपर्यायमपूर्वमेव वाक्यार्थ इति निरूपयिषुः पातनिकामुपन्यस्यति—उपोद्घातेति ।

[2] प्रसङ्गादिति. मु. पु. नाऽस्ति ।

[3] कार्येति. मु. पु. अधिकः पाठो दृश्यते ।

[4] तदिति मु. पु. नाऽस्ति ।

[5] अर्थोऽभिभवतीति मु. पु. पा. ।

एवञ्च—

शब्दान्तराण्यपि कथं तेनाऽदृष्टेन कुत्रचिद् ।
वदिष्यन्त्यन्वितं स्वार्थं व्युत्पत्तिपथदूरगम् ॥२॥

तस्मिन्नप्रतीयमाने तदन्वितस्याऽप्रतीतेः, तत्र संबन्धावधारणानुपपत्तेर्दूरनिरस्तं शब्दान्तराणां तदन्वितस्वार्थबोधकत्वमिति ॥२॥

सिद्धान्तः ।

राद्धान्तमुपक्रमते—

[1]अत्रोच्यते यदा नाम वृद्धेनैकेन भाषिते ।
जलं चैत्राऽऽहरस्वेति चैत्र आहरते जलम् ॥३॥
तदा व्युत्पित्समानोऽन्यस्तत्रैवमवगच्छति ।

[2]बुद्धिपूर्वा [3]ममेवाऽस्य प्रवृत्तिरियमीदृशी । लिङादियुक्तवाक्यश्रवणसमनन्तरं वृद्धस्य विशिष्टार्थविषयां प्रवृत्तिं दृष्ट्वा, व्युत्पित्समानो बाल एवमाकलयति—येयं स्वाधीनाऽस्य प्रवृत्तिः, सा मद्वद् बुद्धिपूर्विकेति । पुनश्च तस्याऽयं विमर्शो जायते—अहं बुद्ध्वा प्रवृत्तो[4] यथा, तद्वदेषोऽपि ।

यस्याः प्रवृत्तेर्हेतुभूता बुद्धिः, सा यद्विषया सती मम प्रवृत्तिहेतुः, तद्विषयैवाऽस्याऽपीति, पुनर्व्युत्पित्सोरनुमा जायते । तदेवमनुमानद्वयमेतद्—वृद्धस्य स्वतन्त्रा प्रवृत्तिः-धर्मिणी, बुद्धिपूर्विका-इति साध्यो धर्मः, स्वतन्त्रप्रवृत्तित्वात् मदीयस्वतन्त्रप्रवृत्तिवदिति, तथा-वृद्धस्य प्रवृत्तिहेतुभूता बुद्धिः—धर्मिणी यद्विषया बुद्धिर्मम प्रवृत्तिहेतुभूता तद्विषयैवाऽस्याऽपीति—साध्यो धर्मः, प्रवृत्तिहेतुभूतबुद्धित्वात् मदीयप्रवृत्तिहेतुभूतबुद्धिवत्—इति । पुनश्च तस्याऽयं विमर्शः प्रवर्त्तते । [5]तदस्य तु शब्देन बोध्यते । अनेन मम मानान्तरेण तु यद्विषया सा बुद्धिः प्रवृत्तिहेतुभूता, तद्वस्त्वनेन[6] शब्देन बोध्यते । तद्भावे सत्यवगमात्, मम तु मानान्तरेण तद् बोध्यत इति—अयमावयोर्विशेषः ।

---

[1] नैयायिकैश्शक्तिग्राहकाणि प्रमाणानि व्याकरणादीनि स्वीक्रियन्ते । प्राभाकर—मीमांसकैर्वृद्धव्यवहारस्यैव शक्तिग्राहकप्रमाणशिरोमणिभूतत्वमिष्यते । तेनैव शक्तिग्रहवेलाया कार्यपरत्वमवगम्यत इत्याशयेन सिद्धान्तमुपन्यस्यति—अत्रोच्यत इत्यादिना ।

[2] तत्रोति. मु पु. पा ।

[3] ममेवाऽस्येति मु पु नास्ति ।

[4] यत्—तदेषोपीति. मु पु पा ।

[5] पदस्येति मु. पु पा. ।

[6] तद्वत्स्वस्येति मु पु पा ।

तेन यत् बुद्ध्वा प्रवृत्तिर्मम, तदस्याऽनेन शब्देन बोद्धयत इति शब्दस्य प्रवृत्तिहेतुभूतार्थावबोधकतामवधारयति ॥३½॥

पुनश्च कोऽसौ प्रवृत्तिहेतुभूतोऽर्थश्शब्दाभिधेय इति निर्धारयितुम्, स्वात्मनि प्रतिपन्नं प्रवृत्तिहेतुभूतमर्थमनुसन्धत्ते—

**तत्र बुद्ध्वा प्रवृत्तोऽहं किं तावत् स्वयमन्यदा ॥४॥**

शब्दनिरपेक्षस्स्वयमहं प्रवर्त्तमानः किं बुद्ध्वा प्रवृत्त इति जिज्ञासते। अन्यदेत्यनेन—व्युत्पत्तितः प्रागवस्थोच्यते। व्युत्पन्नेन बालेन यदात्मनि प्रवृत्तिकारणतया [1]प्रतीतम्, तदेव व्युत्पन्नस्याऽपीति कल्प्यते, नाऽन्यदित्यर्थः।

शब्द-व्यापारयोर्भावनात्वनिरासः।

[2]तेन शब्द एव प्रवृत्तिहेतुभूतो विधिः, तद्व्यापारो वेति निरस्तं भवति। तयोर्बालेनाऽऽत्मनि प्रवृत्तिकारणत्वेनाऽदर्शनात्।

[3]अतिमन्दतया चेमौ पक्षौ न साक्षादुपन्यस्य निरस्तौ। तथाहि—लिङादिशब्दस्वरूपस्य प्रवर्तकत्वे सर्व एव तच्छ्राविणो नियमेन प्रवर्त्तेरन्, नचैवं दृश्यते, कस्यचित् कदाचित् प्रवृत्तेः। लिङादिव्यापारस्य तु प्रवृत्तिहेतुत्वाश्रयणं देवाः प्रतिपद्यन्ताम्, पिशितचक्षुषो मानुषा वयं नेयतीं प्रमाणभूमिमवगाहितुं क्षमाः।

शाब्दभावनोपन्यासः

*केयं शब्दभावना[3]-[4]उच्यते—लिङादिव्यापाररूपा पुरुषप्रवृत्तिभवना-

---

[1] प्रतीतिः मु. पु. पा.।

[2] शब्दो विधिः, शब्दव्यापारो वेति विधिं द्वेधा विकल्प्य क्रमशो निराकरोति—तेनेत्यादिना लिङादिशब्दनिष्ठः प्रवर्तना-प्रेरणा-शब्दभावनेत्याद्यपरपर्यायो व्यापारविशेष एव विध्यर्थः। तस्या आर्थभावना साध्यं, लिङादिज्ञानं करणम्, अर्थवादैर्लक्षणया प्रतिपाद्यमानं प्राशस्त्यज्ञानमितिकर्तव्यता, इतीमां भाट्टसम्मतां शाब्दभावनां प्रतिक्षेप्स्यत्यग्रे विस्तरेण।

[3] सूची-कटाहन्यायेन शब्द-तद्व्यापारयोः प्रवर्तकत्वं निरस्यति-अतिमन्दतयेति।

* केयमिति मु. पु. ना.।

[4] अत्रेदं बोध्यम्—प्रावर्तना-विध्यर्थः। स चाऽलौकिकव्यापार इति वार्तिकव्याख्याता न्यायसुधाकारो मन्यते स्म। पार्थसारथिमिश्रप्रभृतयस्तु क्लृप्तेनैवोपपत्तावालौकिककल्पनां न सहन्ते। किन्त्विष्टसाधनत्वेन प्रवर्त्तनां विध्यर्थमाचक्षते। लिङादेर्विधिशब्दस्याऽऽख्यातत्वेन दशलकारसाधारणोपाधिना पुरुष-प्रवृत्तिरूपार्थभावनां प्रति वाचकत्वं, तज्ज्ञानहेतुत्वमित्यर्थः। सा च ज्ञातैव

नुकूला *स्वज्ञानकरणिका, अर्थवादोदितप्राशस्त्यलक्षणेतिकर्त्तव्यतायोगिनी प्रेरणात्मिका कल्प्यते। "स्वाध्यायाध्ययनविधिना हि सर्वे विधायकाः, स्वाध्यायपदोपात्तश्चाऽऽत्मा† नियुज्यन्ते भावयेदि"[तं. वा. पृ. ११४]ति। तत्र किमित्यपेक्षायां पुरुषप्रवृत्तिस्सम्बद्ध्यते। केनेत्याकाङ्क्षायां विधिज्ञानमेव योग्यतया करणत्वेनाऽङ्गीक्रियते। ज्ञाता हि शाब्दभावना प्रवृत्तिं प्रसूते, योग्यतयैवाऽर्थवादसमुत्थप्राशस्त्यज्ञानमितिकर्त्तव्यतांशे निविशते। अवसीदन्ती हि विधिशक्तिः प्राशस्त्यज्ञानेनोत्तभ्यते। तस्याश्च पुरुषव्यापाररूपा स्वर्गादिभाव्यावच्छिन्ना भावार्थकरणिका श्रौत-स्मार्त्ता—चारप्राप्तपदार्थजनितकरणोपकारवत्यार्थभावना समानप्रत्ययवाच्या विषयभूता—इति।

तन्निरासः।

तन्न। लिङादेस्तादृशो व्यापारो विद्यत इत्यत्र न किञ्चन प्रमाणम्। लिङादिशब्दानन्तरभाविनी पुरूषप्रवृत्तिरेव प्रमाणमिति चेत्। न। तन्निबन्धनत्वेन प्रवृत्तेरन्यत्राऽदृष्टत्वात्। ‡यन्निबन्धना हि प्रवृत्तिर्दृष्टा, तदेव तां दृष्ट्वा शक्यमनुमातुम्, न पुनरप्रतिपन्नपूर्वकारणभावश्शब्दव्यापारविशेषः। अथ लिङादिशब्द एव प्रमाणमिति साहसम्, अगृहीतसम्बन्धस्याऽवाचकत्वात्। अनवधारिते हि सम्बन्धिनि, सम्बन्धबोधवैधुर्यात्। ‖कथञ्च तत्र स्वाध्यायाध्ययनविधिना सर्वे विधायकास्स्वात्मा च विनियुज्यन्ते। पुरुषं §विधिरार्थभावनायां प्रेरयति। यश्च येन $प्रेर्यते, स तेन नियुज्यते। न चाऽचेतनानां ¶विधीनां नियोजकत्वमपि सम्भवति। अथ न§ नियोज्यन्ते। तदप्य-

---

सत्यनुष्ठातु शक्यत इति तद्धीहेतोरपि शब्दस्य तद्धेतुत्व प्रणाल्या सम्भवत्येव। तत्र विधिशब्दस्य पुरुषप्रवृत्तिरूपार्थभावनाज्ञानहेतुर्व्यापारसे तद्वाचकशक्तिमत्तया विधिशब्दज्ञानम्। स एव च तस्य प्रवृत्तिहेतुर्व्यापार इति प्रवर्तनेत्याख्या लभते। शब्दस्य ज्ञानद्वारेणैव प्रवृत्तिजनकत्वात्। ज्ञानजनकव्यापारकल्पने मानाभावात्। ज्ञानजनकश्च व्यापार, तस्य स्वज्ञानम्, शक्तिज्ञानम्, शक्तिविशिष्टस्वज्ञानञ्च। तत्राऽऽद्ययोरन्यतरस्य शाब्दभावनात्वम्, तृतीयस्य तु तत्र करणत्वमिति भाट्टमीमासकाना रहस्यम्। अत्राऽयमर्थ परिनिनितिष्ठति—विधिना स्वज्ञान जन्यते, प्रवर्तनात्वेन चाऽभिधीयत इति विधिज्ञानमेव शाब्दभावनेति।

* स्वज्ञापितेति मु पु पा।
† स्वाध्यायशब्दवाच्य इति मु पु पा।
‡ तन्निबन्धनेति. मु. पु पा।
‖ यच्चेति मु पु पा।
$ अर्थभावनायामिति मु पु नाऽस्ति।
¶ तेऽचेतनावनियुज्यन्त इति मु पु पा।
§ विधीनामिति मु पु नाऽस्ति।
§ अनियोज्यत्वे किं तन्नियुज्यत. इति मु पु पा।

नुपपन्नम्—शाब्दभावनासु सर्वशब्दानां स्वत एव कर्तृत्वात् विनियोगानपेक्षणात्। अथ न †पुरुषाः प्रेरणे विनियुज्यन्ते, किन्त्वर्थावबोधने। तदपि न घटते। तत्राऽपि नियोज्यानपेक्षायास्तुल्यत्वात्। अध्ययनविधेश्च-अक्षरसंस्काररूपाध्ययनविधायकत्वाभ्युपगमात्‡।

तथाचाऽऽहुः—

"द्रव्यादीनां पुनः कस्मिन् स्वाध्यायोऽन्तर्गतो भवेत्।
त्रेधाऽपि प्रतिभात्यस्मिन् संस्कारत्वस्य निर्णयः॥
संस्कार्यगणनायाञ्च युक्तैवाऽक्षरसंस्क्रिया।
स्वाध्यायो हि स्फुटं कर्म साक्षात्संस्क्रियते चि सः"॥ इति।

संस्कारविधिश्च न संस्कार्यं विनियुङ्क्ते, प्रमाणान्तरावसितोपयोगस्य शेषित्वात्। संस्कारपर्यवसायी तु संस्कारविधिर्न संस्कार्यस्य कार्यं कल्पयेत्। आत्मा /चाऽध्ययनविधिना विनियुज्यते, न विनियुज्यते वेति प्रतिपत्तिद्वयस्याऽप्यसम्भवादनुपपन्नम्।

पुरुषप्रवृत्तेर्भाव्यत्वप्रक्षेप-प्रतिक्षेपौ।

कथञ्च पुरुषवृत्तिस्तस्या भाव्यम्, न तावदनन्तरनिष्पत्तेः, विधिज्ञानस्य करणत्वाभावप्रसङ्गात्। क्रियाफलं हि तदा पुरुषप्रवृत्तिस्स्यात्। न च क्रिया स्वफलप्रसवाय करणमपेक्षते। न च गमनं संयोग-विभागारम्भे

---

† अथ न पुरुषप्रेरण इति मु पु पा। ‡ अभ्युपगम इति मुद्रितपुस्तके पाठ।

तत्रभवान् कुमारिलभट्टो लिडादियुक्तेषु वाक्येषु शाब्दभावना—र्थभावना चेति भावनाद्वय प्रतिपादयति स्म। तथा चाऽस्य वार्तिकसन्दर्भ —

"इह हि लिडादियुक्तेषु वाक्येषु द्वे भावने गम्येते—शाब्दत्मिकाऽर्थात्मिका चेति। तत्राऽर्थात्मिकयाऽर्थवादा नाऽपेक्ष्यन्ते, शब्दात्मिकया तु ग्रहीष्यन्ते। सा ह्येव प्रवर्तते। स्वाध्यायाध्यनविधिनेतरे सर्वे विधायकास्स्वाध्यायपदोपात्तश्चाऽऽत्मा नियुज्यन्ते भावयेत्—इति। तत्र लिडादीना प्रयोजककर्तृत्त्वम्, पुरुष प्रयोज्य, तेन किमित्यपेक्षाया पुरुषप्रवर्तनमिति सम्बध्यते। अथ तु योग्यतैव लिडादिविषया क्रियोच्यते-प्रवर्तयेदिति। तत किमित्यपेक्षिते पुरुषमित्येव सम्बध्यते। यद्यपि चाऽचेतनत्वालिडादिष्वेवविध प्रयोजकत्व न सम्भवति, तथाऽपि पुरुषस्य प्रयोज्यस्य प्रयोजकत्वानुपपत्तेस्तद्गतचैतन्यद्वारेण विधायकाना प्रयोजकता। यदि चैव न कल्प्येत, नैवैषा विधायकत्वव्यपदेशो भवेत्। अथ केनेत्यपेक्षिते पूर्वसम्बन्धानुभवापेक्षेण विधिविज्ञानेनेति सम्बध्यते।

करणापेक्षम्। स्यान्मतम्। [1]लिङादिशब्दो विधिज्ञानं जनयित्वा, [2]करणानुगृहीतः प्रेरणारूपं स्वव्यापारमारभते इति। न च करणत्वाभावः, क्रियानिष्पत्तावेव करणत्वात्। तदिदमलौकिकम्। न हि कस्यचिद्वस्तुनस्स्वज्ञानमुत्पादहेतुः प्रतीतम्।

प्राशस्त्यज्ञानस्येतिकर्तव्यतात्वनिरासः।

एवमर्थवादोदितप्राशस्त्यस्याऽपीतिकर्त्तव्यतात्वं विध्वस्तम्। योग्यतया हि तस्य तथाभावः। न च प्रेरणोत्पत्तौ शब्दकर्तृकायां करणीभूतज्ञानानुग्रहयोग्यता तस्य शक्यतेऽवगन्तुं। पुरुषकर्तृकायान्तु प्रवृत्तौ स्यात् तस्य योग्यतावगमः, प्रशस्ते [3]पुरुषप्रवृत्तिदर्शनात्। स्यान्मतम्। अप्रशस्ते पुरुषप्रवृत्त्यसम्भवे प्रेरणैव नोपपद्यते। तदसत्। न फलसम्भवायत्ता क्रियानिष्पत्तिः, क्रियानिष्पत्त्यायत्तैव तु फलसिद्धिरिति लोके प्रतीतम्। अत एव तस्मिन्पक्षे निष्फलेऽपि प्रेरणासिद्धेः प्रवृत्तिस्स्यात्। अथ फलमपीतिकर्त्तव्यतापदनिवेशि, प्राशस्त्यवत्, अतस्तदभावे न प्रेरणा निष्पद्यते—इति। तर्हि फलमेवाऽस्त्वितिकर्त्तव्यतांशपरिपूरकम्, किं प्राशस्त्येन। सत्यमेतद्, अस्ति तावद् तदपीति न त्यज्यते। एवं तर्ह्यश्रुते प्राशस्त्ये तदपेक्षा मा भूत्। ततश्च तदतिदेशादिकल्पनमघटमानं केवलस्य विधेर्दर्विहोमवत्करणेतिकर्त्तव्यताकल्पनाऽपि कल्पनामात्रमेव।

---

कथमिति–प्राशस्त्यज्ञानानुगृहीतेनेति। कुत एतत्। बुद्धिपूर्वकारिणो हि पुरुषा यावत्प्रशस्तोऽयमिति नाऽवबुध्यन्ते, तावन्न प्रवर्तन्ते। तत्र विधिविभक्तिरवसीदति, तां प्राशस्त्यज्ञानमुत्तभ्नाति। तच्च पुरुषार्थात्मके फलांशे सर्वस्य स्वयमेवाऽनुष्ठानं भवतीति प्रसिद्धत्वान्न वेदादुत्पद्यमानमपेक्ष्यते। साधने–तिकर्तव्यतयोस्त्वप्रवृत्तपुरुषनियोगाच्छास्त्रमेव प्राशस्त्यप्रतिपादनायाऽऽकाङ्क्ष्यते। तत्पुनः केन क्रियेतेति साधनापेक्षायां यदि वा फलपदेन निवर्त्येत, प्रशस्तोऽयं भूतिफलत्वात्।

अथवा विधिनैव सर्वदोषाशङ्काविनिर्मुक्तवेदविहितत्त्वादिति। अथवा विशिष्टद्रव्यदेवतेतिकर्तव्यतायुक्तत्वादिति। तत्र फलपदादीनामर्थान्तरोपयोगात्, पुनरन्यत्राऽप्युपयोगो न युज्यते। विध्युत्तरकाला चेयमाकाङ्क्षा, पूर्वञ्च फलपदादिनिवेशः। तस्मादपि न तैर्निवर्त्येत इति। [तं. वा. पृ. ११४. ११५.] उपर्युद्धृतेन वार्तिकसन्दर्भेणोपपादितां सपरिकरां शाब्दभावनां "का नाम शाब्दभावना इत्यादिना, तथा च न शाब्दभावना विधिरि"त्यन्तेन निरास्थच्छालिकाचार्य इति विबुधैरवधेयम्।

[1] लिङादीति. मु. पु. नाऽस्ति। [2] तत्करणेति मुद्रित-पुस्तके पाठः।
[3] पुरुषेति मु. पु. पा. नाऽस्ति।

दर्विहोमवदिति[1] चाऽसिद्धो दृष्टान्तः। तत्राऽपि श्रौतद्रव्य-देवता-स्मृत्या-चारप्राप्ताचमनादीतिकर्त्तव्यतामात्रेणोपकारकल्प्तेरभिमतत्वात्[2]। नह्येकस्यैव वस्तुनोऽनुग्राहकता, अनुग्राह्यता च स्वात्मन्युपपद्यते। अथ शब्दः प्रेरणां करोत्येव, प्रवृत्तिस्तु न तावन्मात्रेण, किन्तु तज्ज्ञाने सति। एवं तर्हि ज्ञानफलमेव प्रवृत्तिरस्तु, न प्रेरणाफलं, तस्मिन्सति भावात्, असति चाऽभावात्। तथा च न शाब्दभावना विधिरिति सिद्धम्।

[3]किञ्च शब्दोऽम्बरगुण इति, [3]प्राप्यकारीन्द्रियवादिनाऽभ्युपेयम्। अन्यथा नभसश्श्रोत्रभूतस्य, शब्दस्य च प्राप्त्यसम्भवात्संयोग-समवाययोरन्य-तरस्य च प्राप्तिरूपत्वात्, संयोगस्याऽन्यतरकर्मजस्य, उभयकर्मजस्य, संयोग-जस्य च द्रव्यत्वे सति शब्दस्य नभसा सहाऽसम्भवात्, तस्य च त्रैविध्यनि-

---

१ वास्तोष्पतिहोमवाक्यशेषे श्रूयते—"यदेकया जुहुयात्, दर्विहोमं कुर्यात्, पुरोऽनुवाक्या-मनूच्य, याज्यया जुहोति सदेवत्वाय [ तै. सं. का. ३. प्रपा. ४. अनु. १० ] इति। अस्याऽ-यमर्थः—आश्रावयेत्यादिरस्तुश्रौषट् इत्यन्तः मन्त्रसङ्घः याज्यापुरोनुवाक्ययोस्सहाये वर्तते, याज्या-पुरोनुवाक्ये प्रधानभूते। तत्पूर्वको होमो देवनामत्यन्तं प्रियो भवति। दर्विहोमस्त-द्रहितः। अग्नये स्वाहेत्येवं मन्त्रमुच्चार्याऽऽश्रावणादिभिर्विना केवलया दर्व्या हूयमानत्वात् देवानामत्यन्तं प्रियो न भवति। एवं सत्यत्र "यद्येकया दर्व्या जुहुयात्" तदानीमाश्रावणादि-मन्त्राणामवकाशाभावेन दर्विहोमस्स्यात्। अतो दर्विहोमत्वं मा भूदित्यभिप्रेत्य "वास्तोष्पते प्रतिजानीही" त्येतां पुरोनुवाक्यामनूच्य, "वास्तोष्पते शग्मये"त्यनया याज्यया जुहुयात्। एवं सति देवानामत्यन्तप्रियत्वात्सदेवत्वं भवति। जुहोत्युत्पत्तिका एकमन्त्रकास्स्वाहाकारप्रदाना दर्विहोमा इत्युच्यन्ते। ते च कस्याऽपि यागस्य, होमस्य वा न प्रकृतयः, न विकृतयः, न वा प्रकृति-विकृतयो भवन्ति, अपि तु सांख्यपुरुषवदपूर्वाः, इत्यष्टमाध्यायस्य तुरीयचरणे व्यवस्थापितम्। अतो दर्विहोमा अपूर्वा अश्रुतेतिकर्त्तव्यताकाश्च। यथा तत्रोत्पन्ना कथंभावा-परपर्यायेतिकर्त्तव्यताकाङ्क्षा यथाश्रुतकर्मस्वरूपमात्रानुष्ठानेन निवर्तते। तत्र स्वरूपनिष्पाद-नातिरिक्तस्य व्यापारस्याऽश्रवणात्। अपि चैकस्यैव यत्र व्यापारद्वयं, शक्तिद्वयं वा कल्प्यते, तत्र दर्विहोमन्यायो दृष्टान्ततयोपादीयते। अत एवाऽर्थवादाधिकरणे "तद्यदि केनचिदुपदेशेन, वा, ऽतिदेशेन वा न लप्स्यामहे, ततो विध्युद्देशस्यैव द्वे शक्ती कल्पयिष्यामः" [तं. वा. पृ. ११५] इत्युक्तम्।

२ प्राप्तेरिति. मु. पु. पा.।

३ शब्दो गुणः, अथवा द्रव्यमिति द्वेधा विकल्प्य, शब्दस्य गुणत्वपक्षे व्यापारवत्त्वं न घटते। शब्दो न व्यापारवान् गुणत्वात् रूपवदित्यनुमानं वोध्यम्। द्रव्यत्वपक्षेऽपि शब्दो न व्यापारवान् विभुत्वादाकाशवदित्यनुमानेन शब्दस्य व्यापारवत्त्वं नोपपद्यत इत्याह—किञ्चेति।

यमात्, पारिशेष्यात्समवायः प्राप्तिरिति, आकाशगुणश्शब्दः। न च तस्य व्यापारसम्भवः, द्रव्याश्रितत्वाद्व्यापाराणाम्।

कथं तर्हि शब्दस्याऽभिधानलक्षणो व्यापार आश्रीयते। यथा तत्तथा श्रूयताम्—यत्तावदात्मन्यर्थविषयज्ञानं शब्दविषयज्ञानानन्तरं जायते, [1]तच्छब्दकर्तृकतया यदा विवक्ष्यते, तदा [2]तदाभिधानिकमित्युच्यते। परस्थेऽपि व्यापारे भवत्येव कर्तृता, परिस्पन्द इवाऽत्मन इति, न कश्चिद्दोषः।

कथञ्चाऽसौ शब्दव्यापारश्चार्थभावनाविषयः, एकप्रत्ययवाच्यत्वात्-इति[3]।

तदुक्तम्—

"[4]विधि-भावनयोश्चैकप्रत्ययग्राह्यता कृतः।
धात्वर्थात्प्रथमं तावत्सम्बन्धोऽध्यवसीयते"॥

[ श्लो. वा. अ. ७. श्लो. ७९½. ८०½ ] इति।

तन्न। प्रत्ययस्य भावनाभिधानमस्मिन्पक्षे दुर्घटं यतः।

आख्यातानां भावनावाचित्वशङ्का।

ननु[5] च सर्वाख्यातानां भावनावचनता करोतिसामानाधिकरण्याद-ध्यवसीयते। तथाहि—भवत्यर्थस्य कर्तुः प्रयोजकव्यापारो भावना, सैव-कृतिः। भाव्यमानस्यैव क्रियमाणत्वात्, तस्य कृतिकर्मत्वात्। किम-कार्षीत्? अपाक्षीत्, किं करोति? पचति? किं करिष्यति, पक्ष्यति, इति प्रश्नोत्तरदर्शनात्, करोत्यर्थस्सर्वाख्यातैरभिधीयत इति गम्यते। अन्यथा करोत्यर्थविषयप्रश्ने तदुत्तरानुपपत्तिः। [3]तत्र सत्यामपि प्रकृतौ घञन्तादिषु करोत्यर्थानवबोधात्, आख्यातप्रत्ययसन्निधाने च तदवगमात्, आख्याता-नामेव सोऽर्थ इति निश्चीयते।

तन्निरासः।

तदसत्। किं करोतीत्यस्य प्रश्नस्य यद्ययमर्थः-यत्करोति, तत्किमिति,

---

[1] कर्त्रर्थतयेति. मु. पु. पा.।

[2] तदभिधानमिति. मु. पु. पा.। [3] चेदिति. मु. पु. पा.।

[4] वाक्याधिकरणे वार्तिककारेण धात्वर्थात्प्रागेव शब्दभावना-र्थभायनयोस्संवन्धो भवति। एकप्रत्ययवाच्यत्वेन समानाभिधानश्रुतेरित्युक्तमित्यर्थः।

[5] मण्डनमिश्रैर्भावनाविवेके सर्वाख्यातानां भावनावाचित्वमुक्तम् [ २७ श्लो. ]। तदेव निरसितुमनुवदतीति ध्येयम्।

तत्र चेत्पचतीत्युत्तरं स्यात्, तदा पाकं करोतीत्यस्मिन्नर्थे पचतीति वर्त्तते। तथा च सिद्ध्येदाख्यातानां करोत्यर्थता। न चैतदेवम्। अनवगते हि धातुवाच्ये व्यापारविशेषे, तद्विशेष एव-एवं पृच्छ्यते, तत्र पचतीत्युत्तरम्। तथा च न सिद्ध्यति धात्वर्थातिरिक्तकरोत्यर्थवचनताऽऽख्यातानाम्। सर्वे धात्वर्थाश्च कस्यचिदभूतस्य भवनेऽनुकूलतां भजन्तः करोत्यर्थतामापन्नाः करोतिना प्रष्टुम्, निर्देष्टुञ्च शक्यन्त इति, तद्विशेषप्रश्नोत्तरे एव ते। किञ्च धातुवाच्यव्यापारविशेषविषयत्वेनाऽपि प्रश्नो-त्तरयोरुपपत्तौ, तदतिरिक्तकरोत्यर्थवाचकताऽऽख्यातानां न शक्यते वक्तुम्।

अपि च सप्रयत्नक्रियेषु देवत्तादिषु व्यापारभेदसम्भवात् घटेतां प्रश्नोत्तरे। व्यतिरिक्तकरोत्यर्थविषये "किं करोती"ति प्रश्ने, "गच्छती"ति चोत्तरे गमनातिरिक्तव्यापाराभावादनुपपत्तिरेव स्यात्। धात्वर्थविशेषविषयत्वे तु तत्राऽप्युपपत्तिः। अथ तत्राऽपि संयोग-विभागौ धात्वर्थः, परिस्पन्दस्तु विभक्त्यर्थ इति, तत्राऽपि धात्वर्थव्यतिरिक्तव्यापारसम्भवान्नाऽनुपपत्तिः। तन्न। परिस्पन्दस्यैव गमिवाच्यत्वात्। तथाहि—न केवले संयोगे, विभागे वा गमेः प्रयोगः, स्थाणौ श्येनेन वियुक्ते, संयुक्ते वाऽप्रयोगात्। नाऽपि द्वयोः, उत्पत्य-निपतिते श्येने स्थाणौ प्रयोगप्रसङ्गात्। एकक्रिया-क्षणजन्यौ संयोग–विभागौ गमिवाच्याविति यद्युच्येत। तर्हि क्रियैवाऽस्तु वाच्या, किमसावुपाधिकोटौ निवेश्यते। एवं ह्युपाधिसमाश्रयगौरवमेव परिहृतं भवति।

अपि च वृद्धव्यवहाराच्छब्दार्थनिर्णयः। न चाऽऽख्यातानां भावना-वचनत्वमन्तरेण कस्यचिद्वृद्धव्यवहारस्याऽनुपपत्तिः। प्रश्नोत्तरे तु सम्बन्ध-ज्ञानोत्तरकालभाविनी, अतो न तद्वशेन सम्बन्धिनिरूपणा। कर्त्रादिसंख्या-मात्रवाचितयाऽऽख्यातप्रयोगोपपत्तौ, नाऽधिकं वाच्यं शक्यं कल्पयितुम्। अपि च "पाकं करोति देवदत्तः" इत्यत्र तावत्पच्यर्थं पाकशब्दो ब्रवीति, तद-नुगुणन्तु पुरुषप्रयत्नं करोतिराचष्टे, आख्यातन्तु केवलकर्तृसंख्यां वक्तीति, सिद्धं तन्मात्रवाचित्वम्। अतोऽन्यत्राऽपि तत्रैव वर्त्तत इति युक्तम्। एवं "पचति देवदत्तः" इत्यस्य यद्विवरणं—पाकं करोतीति। तदप्यनुपपन्नम्। पच-तीत्यत्र यः पुरुषप्रयत्नः, यत्सम्बन्धेन पच्यर्थस्साध्यभूतः, तं करोतिना प्रकृतिभूतेनोपादाय विवरणोपपत्तेः। यत्राऽपि "रथो गमनं करोती"ति न

प्रयत्नोऽपरोऽस्ति, तत्राऽपि गमनस्य साध्यतां दर्शयितुम्, गौणः करोति-प्रयोगो द्रष्टव्यः। पक्षद्वयेऽपि तुल्यत्वात्।

मण्डनमिश्रमतोपन्यास-निरासौ।

यस्तु—"देवदत्त ओदनं पचती"त्यादौ वृद्धव्यवहारे एव प्रकृत्यर्थातिरिक्ते प्रयत्ने प्रयोगादाख्यातानां तदर्थतामाह। स इत्थं शिक्षयितव्यः—वत्स! किं न वेत्सि "अनन्यलभ्यश्शब्दार्थः" इति। इह च प्रकृत्यर्थाक्षेपेणाऽपि प्रयत्नप्रतिपत्त्युपपत्तेः, न शक्यते तद्वाचकताऽऽख्यातानामाश्रयितुम्—इति।

कार्यवाचिनामेव कृतिवाचित्वनिरूपणम्।

ननु प्राभाकरा अपि भावनावाचकतां न कथमाख्यातप्रत्ययस्येच्छन्ति। उच्यते—न सर्वाख्यातप्रत्ययानां भावनावचनत्वमभ्युपेमः, किन्तु कार्याभिधायिनो लिङादयः कार्यस्याऽन्यथाऽनभिधानात् कृत्यभिधायिन इष्यन्ते। कृतिसम्बन्धि हि कार्यं कृत्यनभिधाने नाऽभिहितं स्यात्। नह्यस्ति सम्भवः, कृतिश्च नाऽभिधीयते, कार्यञ्चाऽभिधीयते—इति।

अथ मतम्। यथा दण्डीत्यत्र प्रत्ययेन दण्डो नऽाभिधीयते, अथ च तद्विशिष्टपुरुषप्रतीतिः, एवमिहाऽपि भवेदिति। तन्न। तत्राऽप्यप्रतीते दण्डे, न तद्वति प्रत्ययः। अस्ति च तत्र प्रकृतिभूतो दण्डशब्दः, स च तस्य प्रत्याययिता। न चेह तथा सम्भवति, प्रकृतीनां [1]पुरुषव्यापाराभिधानानियमात्। पुरुषो हि चेतनः कार्यं लिङादिभिरवबुध्यते। न चाऽसौ परकृतिसम्बन्धि स्वयं कार्यं बोद्धुमलमिति, तदीयकृत्यभिधानमेषितव्यम्। तस्य च कृतिः प्रयत्नरूपा। न च सर्वथा [2]तदननुभवे तदभिधायिन इति, न दण्डिन्यायस्याऽयं विषयः। स्यान्मतम्। यथा लिङां कर्त्रादिसंख्यामात्रवचनता, क्रियाक्षेपेण च कर्त्रादीनां प्रतीतिः। तथेहाऽपि क्रिया प्रयत्नमाक्षिपति, मा भूत्तस्य लिङ्वाच्यता—इति। तदसत्। यद्यपि प्रकृत्यर्थभूतया क्रियया प्रयत्न आक्षिप्यते। तथाऽपि तदायत्तसिद्धिकतया[3] कथमपूर्वं गम्यते। प्रयत्नाभिधाने तदवच्छिन्नतया प्रतीयमानं[4] तदायत्तसिद्धिकमवगम्यते, नाऽन्यथा। न च कृत्यनवच्छिन्नस्वरूपमात्रेणाऽपूर्वमभिहितं कृतिमाक्षेप्तुमलम्। अवगतसम्बन्धं हि वस्त्वा-

---

१ अभिधाननियमादित्येव मु. पु. पा.।

२ संबन्ध्यननुभव इति. मु. पु. पा.।

३ सिद्धिकतयेति मु. पु. पा.।

४ अभिधीयमानमिति. मु. पु. पा.।

क्षिप्यते । न च शब्दमन्तरेणाऽपूर्वस्य प्रयत्नसम्बन्धावगमे [1]कारणमस्ति । अतः कथं तत् प्रयत्नमाक्षिपेत् । तस्मादपूर्वकार्यभिधायिनां प्रयत्नाभिधानमवश्यमाश्रयणीयमिति, विषयकरणीये निपुणतरमुपपादितमित्यलमतिप्रसङ्गेन ।४।

तत्र न क्रियामात्रं तावदहं बुध्वा प्रवृत्तः, नाऽपि फलमात्रम्, न क्रियाफलसम्बन्धमात्रं वा । क्रिया–फलयोस्साध्य-साधनतावगमेऽपि न प्रवृत्तिरुपपद्यते । तृप्तिहेतौ भोजनेऽतीते, वर्तमाने वाऽप्रवृत्तेः, भविष्यत्यपि तत्साधने सामुद्रविदाख्यात इवाऽनुष्ठानाभावात् । पुरुषाशयावगमस्तु प्रवृत्तिहेतुत्वेनाऽऽशङ्कितोऽपि, स्वतन्त्रप्रवृत्तौ व्युत्पत्सोर्दूरोत्सारितत्वात् । किन्तु कार्यतां बुध्वा प्रवृत्तोऽहम्, ममेदं कार्यमिति प्रतीत्य—अहं सर्वत्र प्रवृत्तः ।

तथाहि—

आस्तां तावत्क्रिया लोके गमना-गमनादिका ।
अन्ततस्स्तन्यपानादिस्तृप्तिकारिण्यपि[2] क्रिया ॥५॥
सा यावन्मम कार्येयमिति नैवाऽवधार्यते ।
तावत्कदाऽऽपि मे तत्र प्रवृत्तिरभवन्न[3] हि ॥६॥

ब्रह्मसिद्धिकृतो मतेनाऽऽशङ्का ।

[4]अत्राऽपर आह । सत्यं—कार्यावगमादेव प्रवृत्तिः । इष्टसाधनतैव तु कार्यता, न परा काचित्, सैव प्रवृत्तिहेतुर्विधिरुच्यते ।

तदाह—

"अपेक्षितोपायतैव विधिरिष्टो मनीषिभिः ।
अतो ह्यध्यवसायादिर्नाऽकस्मान्नाऽभिधानतः" ॥
[ ब्र. सि. कां. ३, १०३½ १०४½ पृ० ११५ ] इति ।

---

[1] कारणान्तरमिति मु. पु. पा. ।

[2] कार्यपीति मु. पु. पा. । [3] न भविष्यतीति. क. पु. पा. ।

[4] मण्डनमिश्रः—ब्रह्मसिद्धौ नियोगकाण्डे तृतीये प्रतिपत्तिविधेस्तृतीयं प्रकारं निराकुर्वन्, प्रभाकरसम्मतं नियोगवादं निराकरिष्णुस्स्वाभिमतं विधिस्वरूपं विधिविवेके निरूपितं प्रदर्शयति—अपेक्षितोपायतेत्यादिश्लोकेन । तन्मतमेवाऽत्रोपन्यस्यति दूषयितुं शालिकनाथः—अत्रेत्यादिना । अस्याऽयमर्थः—ममेदं कार्यमिति योऽध्यवसायः, "अहमत्र नियुक्तोऽस्मि" इति बुद्धिः, स एवाऽलौकिको नियोगो विधिरिति यो मन्यते, तं प्रत्यभिधीयते तदेवेष्टसाधनत्वादध्यवसायो भवति, नाऽभिधानतः—अलौकिकस्य नियोगस्यऽभिधानासम्भवादित्यर्थः ।

[1]तथा

"पुंसो नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः ।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्त्तनाम् ॥
[वि. वि. श्लो. २६ पृ० २४३] इति ।

कर्त्तुरिष्टाभ्युपाये हि कर्त्तव्यमिति लोकधीः ।
विपरीते त्वकर्तव्यमिति तद्विषये ततः ॥
[वि. वि. श्लो. ३० पृ० ३०२] इति च ।

तन्निरासः ।

तत्र तावदिदमेव वक्तव्यम् । अतीतस्य, [2]वर्तमानस्य चेष्टसाधनताऽऽस्ति, न च तत् कार्यतयाऽऽवसीयते । तेनाऽन्या कार्यता, अन्या चेष्टसाधनता—इति । तथा प्रवृत्तिरपि तन्मात्रावगमायत्ता न भवतीत्युपेत्यैव तावत् तं, फलसाधनता—कार्यतयोर्भेदं विनिर्दिशति—

[3]फलसाधनता नाम या सा नैव च कार्यता ।
कार्यता कृतिसाध्यत्वं फलसाधनता पुनः ॥७॥
करणत्वं फलोत्पादे भिद्येते ते परस्परम् ।

यद्यप्येकवस्तुनिवेशिता द्वयोः, तथाऽपि स्वरूपभेदोऽस्त्येव । तदेव हि वस्तु फलं प्रत्युपायभावात्फलसाधनमित्युच्यते, कृत्यधीनात्मलाभतया च कार्यमिति ॥७॥

---

[1] एवं ब्रह्मसिध्यनुसारेण न नियोगो विध्यर्थः, किन्त्विष्टसाधनत्वमेवेति प्रसाध्य, तमेवाऽर्थं विधिविवेकवचनाभ्यां द्रढयति—तथेति ।

[2] अनागतस्येति. ख. पु. पा. ।

[3] प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्य हेतुत्वम्, उत कार्यताज्ञानस्येति द्वेधा विकल्पः । तत्राऽऽद्यः पक्षो विचारपदवीमारोढुं नाऽर्हति, अतीता-नागतादिषु समीहितसाधनताज्ञानसत्वेपि प्रवृत्तेरदर्शनात् । अतः कृतिसाध्यत्वरूपकार्यताज्ञानस्य प्रवृत्तिहेतुत्वं वाच्यम् । ततो मधु-विष-सम्पृक्तभोजनादौ कृतिसाध्यत्वसत्वेऽपि समीहितसाधनताज्ञानस्याऽभावेन न प्रवृत्तिः । समीहित-साधनेऽपि कृतिसाध्य एव प्रवृत्तिदर्शनात्, तद्धेतोरेव तदस्तु मध्ये किन्तेन, अनन्यलभ्यश्शब्दार्थ इति न्यायात् ।

ननु समीहितसाधनत्वमेव कृतिसाध्यत्वम्, न त्वनयोर्वैलक्षण्यमिति नाऽऽशङ्कनीयम् । अन्या च समीहितसाधनता कृतिसाध्यत्वरूपकार्यता च ततो विलक्षणा । समीहितसाधनता कृतिसाध्यतां प्रति कारणं कार्य-कारणयोरेकरूपता नैव घटते, किञ्चाऽतीत-वर्तमाना-नागतदि-

किमितीष्टाभ्युपायेष्वेव कर्त्तव्यतावगमः, अन्यत्र नेत्यत्राऽऽह—

*किन्तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत् ॥८॥

फलसाधनता तत्र [1]कारणं तेन कार्यता ।

तद्भावभाविनी नित्यं तदा सैव[2] प्रकाशते ॥९॥

स्वभावेन हि कर्माणि दुखोत्पादहेतुभूतानि । तेषु कार्यत्वावगमः फलसाधनतावगमनिबन्धनः । कार्यता हि न कृत्यधीनसिद्धितामात्ररूपा, किन्तु कृतिं प्रति प्रधानभूतं सत् यत् तदधीनसत्ताकम्, तत्कार्यमुच्यते । तच्च कृतेः प्रधानम्, यदधिकृत्य कृतिः प्रवर्तते । न च दुःखं दुखहेतुंवाऽधिकृत्य कृतेः प्रवृत्तिरुपपन्ना, नाऽप्यदुःखम्, अदुःखहेतुं वा । किन्तु सुखं, सुखहेतुं वा । तत्र न तावत्स्वयं सुखरूपं कर्म, सुखसाधनमपि चेन्न स्यात्, न तस्य कृतिं प्रति प्राधान्यावगमो[3] घटते । अतः कर्मसु कार्यत्वावगमः फलसाधनतावगमनिबन्धन इति, ज्ञापककोटिनिविष्टा फलसाधनता [4]कार्यतामनुरुध्यते, न त्वसौ तदात्मैव । तथा चाऽसाधनस्याऽपि सुखस्यैवाऽस्ति

---

विपयेष्विष्टसाधनता वरीवर्ति । न तत्कार्यतयाऽध्यवसीयते । अतस्समीहितसाधनातिरिक्तस्य सुखस्य कार्यता । अत एव सर्वे पुमांसो ग्रीष्मशर्वरीषु सुरतारम्भपरिश्रान्तशरीरास्सुधामरीचिमण्डलोदयम्, मलयमारुततरङ्गसङ्गमं वेष्टोपायं मन्यन्त एव, न पुनः कार्यम् । अतः प्रथमपक्षस्याऽसम्भवाच्चरमपक्षमेवोररीकुर्वन्ति प्राभाकरमतानुयायिनः । अतोऽपि हेतोरन्या कार्यता, समीहितसाधनता चाऽन्येत्यभिप्रेत्याऽऽह—फलसाधनता नामेति ।

[1] कारणत्वमिति दर्शनोदये पा. । [2] तदात्मैवेति मु. पु. पा. ।

[3] प्राधान्याभ्युपगम इति. मु. पु. पा. ।

[4] ज्ञापककोटिप्रविष्टां फलसाधनतां कार्यतेति. मु. पु. पा. ।

* हितसाधनता— कार्यतयोः पूर्वं भेदोऽभ्यधायि । तत इयमाकाङ्क्षा समुन्मिषति—यत्समीहितसाधन एव कार्यतामतिरुत्पद्यते, नाऽन्यत्रेत्याशङ्कामुत्थाप्य परिहरति शालिकाचार्यः—"किन्तु स्वयं क्लेशरूपमि"त्यादिना । अयमभिप्रायः—यद्यपि समीहितसाधन एव कार्यताज्ञानं प्रायो लोके दृश्यते, तथाऽपि कश्चनाऽत्र विशेषोऽस्ति, यत्कर्म कार्यत्वं व्रजेत् । तत्स्वयं क्लेशरूपमेव स्यात्, तर्हि कथं तस्य कार्यत्वम्, न हि दुःखाकरस्य कर्मणः कार्यत्वमुपपद्यते, "अकर्तव्यो दुःखफल" इत्यभियुक्तोक्तेः । तत्र समाधानमाह—तेन कार्यतेति । तृतीयचरणस्यैवाऽर्थविवरणम्—तेन कार्यतेति । तेन कार्यताऽस्य भवति, न प्रवृत्तेः । अत एवाऽग्रेतनो "ज्ञापककोटिप्रविष्टा फलसाधनता कार्यतामनुरुध्यते, न त्वसौ तदात्मैवे"त्यादिग्रन्थस्सङ्गच्छत इति बोध्यम् ।

अथवा मण्डनमिश्रस्तदनुयायिनश्च—इष्टसाधनताज्ञानमेव प्रवृत्तिकारणम्, न तु कार्यताज्ञानमिति वदन्ति । तन्मतनिराकरिष्णुराह—तेन कार्यतेति । कार्यताज्ञानादेव प्रवृत्तिः, नत्विष्टसाधनताज्ञानादित्यर्थः ।

कार्यता। सुखं हि सर्वः कार्यतयाऽवैति, न तस्य फलसाधनतामपेक्षते। तेन फलसाधनतोत्तीर्णकार्यतावगमेन मे प्रवृत्तिरिति निश्चित्य, व्युत्पित्समानश्चैत्रं प्रवर्त्तमानं दृष्ट्वाऽनुमिनोति–चैत्रोऽपि कार्यबोधात्प्रवर्त्तते—इति। चैत्रस्य [१]प्रवृत्तिः–धर्मिणी, कार्यबोधपूर्विका–इति साध्यो धर्मः, बुद्धिपूर्वकत्वे सति प्रवृत्तित्वान्मदीयप्रवृत्तिवदिति। लिङादयश्च प्रवृत्तिहेतुभूतार्थाभिधायिनः कार्यमेवाऽभिदधते। तस्यैवाऽवगतस्य प्रवृत्त्यनन्तरकारणत्वात् ॥९॥

इच्छा यद्यपि प्रवृत्तिहेतुः, तथाऽपि सा लिङादिवाच्या न भवति। तदवगमस्य प्रवृत्तावनपेक्षितत्वात्। उत्पन्ना हि सा प्रवृत्तिकारणम्, नाऽवगता।

नन्वेवमपि कथं लिङादीनां कार्ये व्युत्पत्तिरित्यत्राऽऽह—

**शब्दान्तराणि स्वार्थेषु व्युत्पद्यन्ते यथैव हि।**
**आवापो-द्धापभेदेन तथा कार्ये लिङादयः ॥१०॥**

[२]लिङादियुक्तवाक्यश्रवणे तद्भावभाविन्या प्रवृत्त्या विशिष्टकार्यावगतिमनुमाय, वाक्यस्य [३]हेतुतामध्यवस्यति। तत्राऽपि [४]कोऽर्थः केन [५]शब्देनाऽभिहित इति विवेचने, लिङाद्यावापे[६] कार्यावगतिदर्शनात्, तदुद्धारे चाऽदर्शनात्, त एव कार्यावगतिं कुर्वन्तीति शब्दान्तरवल्लिङादीनां कार्यवाचकत्वव्युत्पत्तिसिद्धिः ॥१०॥

ननु लोकव्यवहारात् लिङादयो वाचकतया व्युत्पाद्यमाना प्रैषादिष्वेव वाचकतया व्युत्पत्तिमर्हन्ति। तत्रैव तेषां प्रयोगदर्शनादित्याशङ्क्याऽऽह—

***कार्यमेव हि [७]वक्त्तॄणां ज्यायः-सम-कनीयसाम्।**
**प्रवर्त्त्यापेक्षया भेदात्प्रैषादिव्यपदेशभाक् ॥११॥**

प्रवर्त्त्यपुरुषापेक्षया ज्यायसा वक्त्रा प्रतिपाद्यमानं कार्यं प्रैष इति व्यप-

---

[१] पूर्वोक्तमेवार्थं पक्षसाध्यनिर्देशेनाऽभिनीय दर्शयति-चैत्रस्य प्रवृत्तिर्धर्मिणीति।

[२] अस्याऽर्थस्याऽक्षरशोऽर्थतश्चाऽनुवादो विधिविवेकव्याख्यायां न्यायकणिकायां [पृ. ५२] द्रष्टव्यः।

[३] तावदित्यधिको मु. पु. पा.।

[४] अर्थभाग इति मु. पु. पा.।

[५] शब्दांशेनेति मु. पा. पा.।

[६] आवापेनेत्येव मु. पु. पा.।

[७] कर्तॄणामिति मु. पु. पा.।

* अत्रेदं बोध्यम्—लिङादेरर्थः प्रैषादिर्लोकेऽवगम्यते। तत्र सम-हीन-ज्यायोभिः प्रयोक्तृभिः प्रयुज्यमानः प्रैषादिव्यपदेशं भजते। सर्वत्र सम-हीन-ज्यायसाम्प्रयोगे कार्यत्वस्याऽप-

दिश्यते। समेनाऽऽमन्त्रणं, हीनेनाऽध्येषणमिति, प्रैषादिप्रतिपादका अपि लिङादयः [१]कार्यमेव प्रतिपादन्ति, नाऽर्थान्तरम् ॥११॥

कथं पुनरवसीयते—कार्यमेव प्रैषादिव्यपदेशभागित्यत्राऽऽह—

**कार्यमेव हि सर्वत्र प्रवृत्तावेककारणम्।**
**प्रवृत्त्यव्यभिचारित्वाल्लिङाद्यर्थोऽवधार्यते ॥१२॥**

प्रवृत्तिर्हि बालेन स्वात्मनि कार्यावगमपूर्विका प्रतिपन्नेति, सर्वपुरुषानपि प्रवर्त्तमानान्दृष्ट्वा कार्यावगममेव बालः कल्पयतीति, प्रैषादीनामपि प्रवृत्तिः कार्यावगमनिबन्धनेति, कार्यमेव प्रैषादिव्यपदेशयोगीति सिद्धम्।

वस्तुतस्तु प्रैषादीनामपि [२]प्रवृत्त्यव्यभिचारित्वात्कार्यस्य च प्रवृत्तिषु सर्वासु हेतुभूतत्वात्प्रैषादिष्वपि लिङादीनां कार्यमेवाऽर्थ इति निश्चीयते ॥१२॥

केन पुनः प्रमाणेन बालस्स्वयं कार्यमवगच्छति। यतः प्रवर्त्तत इत्यत्राऽऽह—

**कृतिसाध्यं प्रधानं [३]यत्तत्कार्यमभिधीयते[४]।**
**[५]तच्च मानान्तरेणाऽपि वेद्यमोदनपाकवत् ॥१३॥**

कृतौ सत्यां भावात्, असत्याञ्चाऽभावादनुमानतः कृतिसाध्यता तावदवगम्यते। यदधिकृत्य कृतिः प्रवर्त्तते, तत्कृतेः प्रधानम्, प्रयत्नश्च कृतिः। स च मानसप्रत्यक्षवेद्य इति, विशिष्टप्रयोजनताऽपि प्रयत्नस्य प्रत्यक्षवेद्यैव।

---

रित्यागात्, अव्यभिराचाराच्च कार्यमेव लिङाद्यर्थो युक्तः। अतो नियोगापरपर्यायकार्याभिधानमेव। प्रैषादयस्तूपाधय इत्येव युक्तम्। उपाधिर्नाम—योऽभिधानाननुप्रवेशी सन् शब्दार्थान् विशेषेऽवस्थापयति। यथा-दृतिहरिशब्दः। अत्र पशुत्वमुपाधिः। यदा हरणक्रिया पशुसम्बन्धिनी, तदा तस्याः कर्ता दृतिहरिशब्देनोच्यते। तथा प्रकृते लिङादीनां कार्ये वाच्ये प्रैषादय उपाधय इत्याशयेनाऽऽह—कार्यमेवेति। वृत्तिसहितस्याऽस्य श्लोकस्याऽनुवादोऽन्यूनानतिरेकं वाऽऽनन्दबोधाचार्येण [न्या. म. पृ. १८७.] द्रष्टव्यः, विधिविवेकव्याख्यायां न्यायकणिकायाँनिरासः। [पृ. ७२]

[१] कार्यमित्यादिः—व्यपदेशभागित्यन्तो भागो मु. पु. नोपलभ्यते।

[२] प्रवृत्तिव्यभिचारित्वादिति मु. पु. पा.।

[३] अवसीयत इति. मु. पु. पा.। [४] कार्यमिति. मु. पु. नाऽस्ति।

[५] अत्रेदमवधेयम्—प्राभाकरमते—लिङादिवाच्यं कार्यम्। तच्च-धात्वर्थक्रियातिरिक्तमित्यनुपदमेव साधयिष्यति शालिकाचार्यः—स्वाभिमतं कार्यं विशेषणद्वयविशिष्टमुपपादयति—कृतिसाध्यमित्यादिना श्लोकेन।

अयमाशयः। तथा हि—कृतिः पुरुषप्रयत्नस्तत्साध्यम्, कृतेः प्रधानञ्च यत्, तत्

तेन प्रत्यक्षा-नुमानाभ्यां कार्यमवगम्यते। यथा चोदन-पाकयोरिति, न किञ्चिदनुपपन्नम्।

उपसंहरति—

एवं कार्यात्मकेऽप्यर्थे व्युत्पद्यन्ते लिङादयः।
तदन्वितेषु स्वार्थेषु तथा शब्दान्तराण्यपि ॥१४॥

एवमपि कथं मानान्तरावेद्यकार्यवाचिता लिङादीनामित्याशङ्क्य, मीमांसामवतारयति—

संप्रधार्यमिदन्त्वत्र तत्कार्यं किं क्रियात्मकम्।
यद्वा तद्व्यतिरेकीति ........................ ॥

को नु निर्णय इत्यत्राऽऽह—

........................तत्र लोकानुसारतः ॥१५॥
प्रमाणान्तरविज्ञेया क्रिया कार्येति यद्यपि।

*लोके हि लिङादियुक्तवाक्यश्रवणे विशिष्टक्रियानुष्ठानदर्शनात्तद्विषया कार्यावगतिर्लिङादिभिः क्रियत इति युक्तम्, अवगति-प्रवृत्त्योरेकविषयत्वात्। नह्यन्यत्कार्यतयाऽवगम्य, अन्यत्र बालः प्रवर्त्तते। किञ्च क्रियायां कार्यभूतायां लिङादियुक्तवाक्यप्रतिपाद्यायामभ्युपगम्यमानायां[1] शक्तिकल्पनालाघवं स्यादेव। तथाहि—धातुरेव कार्यभूतं स्वार्थं ब्रवीतु, तथाभूतार्थवाचिनस्तु धातोः परे लिङादयो भवन्तीत्याश्रीयते। लिङादिश्रवणे तु

---

कार्यमिति कार्यस्वरूपमुक्तत्र भवति। कृतिसाध्यं कार्यमित्युक्तौ धात्वर्थस्याऽपि कृतिसाध्यत्वेनाऽतिव्याप्तिस्तत्र स्यात्, अतस्तद्वारणाय प्रधानमिति विशेषणम्। अत्र प्राधान्यञ्च कृत्युद्देश्यत्वरूपं विवक्षितम्। एतावन्मात्रोक्तौ स्वर्गादिफलेऽतिप्रसक्तिस्स्यात्, अतस्तद्व्यावृत्त्यर्थं कृतिसाध्यत्वमिति विशेषणदलमुपात्तम्। तथा च कृतिसाध्यत्वे सति कृतिनिरूपितोद्देश्यताशालित्वमिति, कार्यस्वरूपं परिनिनितिष्ठति। तत्र कृतिसाध्यत्वं कृत्यन्वय-व्यतिरेकरूपानुमानप्रमाणेनाऽवगम्यते। कृतिप्रधानत्वञ्च—मानसप्रत्यक्षेण प्रतीयत इति, प्रत्यक्षा—नुमानप्रमाणगम्यं कार्यमित्युच्यते। ननु प्रमाणद्वयस्य भिन्नविषयत्वेन परस्परवार्तानभिज्ञतया मिथो घटनायोग इति न शङ्कनीयम्। अनुमितिजन्यसंस्कारसध्रीचीने मनसि "स एवाऽयं" प्रत्यभिज्ञाप्रत्यक्षवत् मिथस्सङ्कलनमुपपद्यते। प्रयत्नश्च कृतिः, स मानसावसेय इति। कृतिसाध्यत्वविशिष्टकृत्युद्देश्यत्वरूपो विशिष्टप्रयोजनभावोऽपि कार्यस्य मानसावसेयइत्युक्तं भवति। तत्रैवाऽनुकूलदृष्टान्तमाह—ओदनपाकवदिति। ओदनः प्रत्यक्षेणाऽवगम्यते, पाकस्य तत्साधनत्वमन्वयव्यतिरेकाभ्यामवगम्यत इत्यर्थः। अनेन वृत्तिसन्दर्भो निगदव्याख्यातः। ओदनः पाकश्चेति क्वचिद्दृश्यते। एतेनाऽत्र श्रीभाष्योक्तानां दूषणानामनवकाश इति ध्येयम्।

[1] अभ्युपगम्यमानायामिति मु. पु. नाऽस्ति। *प्रतिभातीति मु. पु. पा.।

तथाभूतार्थपरतया[1] धातुः प्रयुक्त इत्यवगम्य, कार्यभूतधात्वर्थावगमस्सम्पद्यते । यथा लडादिभ्यो वर्त्तमानाद्यध्यवसायः, तेष्वपि [2]वर्तमानेऽर्थे वर्त्तमानाद्धातोर्लडित्येव सूत्रार्थः । कर्त्रादिसंख्यामात्रवाचित्वमेव केवलं लडादीनामिव लिङादीनामप्यर्थ इति, क्रियैव कार्यतया वेदेऽप्यवगम्यत इति, यद्यपि विवेकासमर्थानामवगतिर्भवति[3] ।

[4]तथाऽपि वेदे षष्ठाद्यसिद्धान्तेऽवस्थिते सति ॥१६॥
स्वर्गकामादयः कार्ये नियोज्यत्वेन [5]सम्मताः ।
[6]स्वर्गकामादिभिश्शब्दैर्वक्तव्या इत्यवस्थितम् ॥१७॥

षष्ठाद्ये ह्येतदुक्तम्—लिङादिप्रयोगे तावत्कार्यावगतिरस्तीति निर्विवादम् । कृतिसाध्यश्च कार्यं भवति । सति कर्त्तरि तस्याऽऽत्मलाभः । कर्तृलाभश्च स्वसम्बन्धिकार्यावबोधे सति भवति, नाऽन्यथा । तेन यद्यपि लोकानुसारेण क्रियाया एव कार्यतया बोध्यमानाया वाक्यार्थत्वात्, तदन्वयित्वाच्चेतरेषामपि[7] पदार्थानाम्, कारकत्वादृते चाऽन्यस्य क्रियान्वयित्वासम्भवाल्लोहितोष्णीषन्यायेन विशेषणभूतस्वर्गकामनासमर्पणपरतया कर्तृविशेषणत्वेन स्वर्गकामस्याऽन्वयोऽवगम्यते । तथाऽपि स्वसम्बन्धिकार्यबोद्धृत्वेनैवाऽन्वयो वर्णनीय इति, नियोज्यसमर्पकत्वमेवाऽऽश्रीयते—इति ॥१७॥

एवमपि किमित्याह—

नियोज्यस्स च कार्यं यस्स्वकीयत्वेन बुद्ध्यते ।

तथाऽपि किमित्याह—

स्वर्गादिः कामयोगाच्च साध्यत्वेनैव गम्यते ॥१८॥

साध्यविषयैव हि सर्वत्र कामना भवति, तेन तत्सम्बन्धात्साध्यभूतं स्वर्गादि काम्यमानतया पुरुषं विशिनष्टि—

तेन साध्यत्वपर्यन्तस्वर्गादीच्छाविशेषितः ।
तदेव शक्नुयात्कार्यं बोद्धुं यत्काम्यसाधनम् ॥१९॥

---

[1] तथाभूतार्थतयेति मु. पु. पा. ।

[2] "वर्तमाने लट्" [ ३-४-५४ ] इति सूत्रस्यार्थमाह—वर्तमान इति ।

[3] विवेकसमर्थानामिति. मु. पु. पा. ।

[4] तथा वेदे सिद्धान्तेऽवस्थिते सतीति मु. पु. पा. ।

[5] संगता इति. मु. पु. पाः ।

[6] स्वर्गकामादय इति मु. पु. पा. ।

[7] इतरेषामिति. मु. पु. ना. ।

मण्डनमिश्रमतस्योपन्यासः ।

अत्र कश्चिदाह—यद्यपि कामनायोगात्साध्यता स्वर्गादीनामवगम्यते, तथाऽपि प्रकृतकार्यसाध्यत्वावगमो निष्प्रमाणक एव, अन्यसाध्यस्याऽपि साध्यत्वसम्भवात् । न च यत्काम्यते, तस्याऽवश्यं साधनमस्ति । मनोरथपरम्पराहृतचेतसो हि तन्नाऽस्ति, यन्न कामनाविषयीभवति । न च तस्य सर्वस्य साधनं भवति, सर्वज्ञत्वमपि केचित्कामयन्ते, न च तस्योपाय-सम्भवः । अथ तदिच्छावतोऽतत्साधने कर्तृता नोपपद्यते । कथं[1] नोपपद्येत । दृश्यन्ते हि ग्रामाभिगमनकामा [2]अपि यादृच्छिकीषु क्रियासु प्रवर्त्तमानाः । अपि च सर्वोऽभ्युदयार्थ्येव[3] पुरुषः, तथाऽपि प्रायशस्तद्विरोधिष्वेवेन्द्रियार्थेषु प्रवर्त्तमानो दृश्यते—इति ।

तन्निरासः ।

अत्रोच्यते—स्वर्गादिकं कामयमानस्य तदेव कार्यतया बोद्धुमव-कल्पते, यदेव तस्य काम्यमानस्य सिद्ध्यनुगुणम् । अन्यथा हि तत्कामिना सता तत्कार्यतयाऽनवबुद्धं स्यात् । अपरित्यक्ततत्कामनासम्बन्धो हि तत्साधनं कार्यतयाऽवबुध्यते । तस्माद्यत्कामिनो यत्कार्यतयोपदिश्यते, तत्तस्य काम्यस्य [4]साधनमिति नियोज्यकार्यान्वयानुपपत्त्यैव गम्यते ॥१६॥

एवं सति किं फलमित्याह—

लिङादिस्तत्र कार्यञ्चेत् क्रियामेवाऽवबोधयेत् ।
समन्वयो नियोज्येन तदानीमेव हीयते ॥२०॥

कथमित्याह—

क्रिया हि क्षणिकत्वेन न कालान्तरभाविनः ।
स्वर्गादेः [5]काम्यमानस्य [6]समर्था जननं प्रति ॥२१॥
इष्टस्याऽजनिका सा च नियोज्येन फलार्थिना ।
कार्यत्वेन न सम्बन्धमर्हति क्षणभङ्गिनी ॥२२॥

कार्यविरोधि कर्मेति प्रमाणान्तरसिद्धम् । परिस्पन्दो ह्युत्तरदेशसंयोगो-दयापवर्गीत्याशुतरविनाशी, स्वर्गश्च नियतदेशान्तर—कालान्तरभोग्यः ।

---

[1] अयमंशो मु. पु. नाऽस्ति । [2] कामा हीति. मु. पु. पा. ।
[3] अभ्युपायार्थीति मु. पु. पा. । [4] साधकमिति. मु. पु. पा. ।
[5] साध्यमानस्येति मु. पु. पा. । [6] न शक्तेति. मु. पु. पा. ।

मण्डनमिश्रमतानुवादः ।

[1]ननु प्रीतिमात्रवचनस्स्वर्ग इति षष्ठाद्ये साधितम्, प्रीतिसाधनेषु द्रव्येषु स्वर्गशब्दप्रयोगात् । न च तेषु स्वरूपनिबन्धन एव तत्प्रयोगः, प्रीत्यपगमे तदभावात् । न च तत्साधनवचनता तदनभिधाने घटते, तदभिधानाभ्युपगमे तद्वाचकतैव । लक्षणया तत्साधने प्रयोगोपपत्तेः, तत्र शक्तिकल्पनापरिक्षयात् । अखण्डशब्दतया च दण्डिन्यायस्याऽसम्भवात्तदन्तर्गतस्य दण्डशब्दस्य दण्डप्रत्यायकत्वसम्भवात् । प्रीतेश्च कर्मानन्तरभावित्वमपि न सम्भवत्येव ।

तन्निरासः ।

उच्यते । न प्रीतिमात्रवचनतया ज्योतिष्टोमादिचोदनासु स्वर्गशब्दस्य प्रयोगोऽवकल्पते[2], अर्थवादेषु दुःखासम्भिन्नचिरतरोपभोग्याभिलाषोपनेयप्रीतिश्रवणात् । तत्र यदि विध्युद्देशगतस्स्वर्गशब्दस्तथाविधप्रीतिपरतया न वर्ण्यते, तदाऽतिपरोक्षाऽर्थवादपदानां वृत्तिरादृता न भवेदिति, तदानुगुण्येन तादृश्यामेव प्रीतौ स्वर्गशब्दः प्रयुक्त इति निश्चीयते । तथाभूता[3] च सा नियतमेव देशान्तरभोग्या । अतो न कर्मानन्तरभाविनीति, न तत्र कर्मण आशुतरविनाशिनस्साधनताऽवकल्पते । यस्मिन् हि पूर्ववर्त्तिनि यन्निष्पाद्यते, तत्तस्य साधनमिति लोकप्रतीतिः । अत एव च विनष्टस्याऽपि कर्मणश्शास्त्रेण साधनत्वं बोध्यत इति ये ब्रुवते, तेऽपि निरस्ताः । एवं चाऽसावाशुतरविनाशिनी क्रिया स्वर्गकामिना नियोज्येन सह कार्यतया सम्बन्धुं नाऽर्हति, स्वर्गं प्रति साधनत्वानुपपत्तेः ॥२०-२२॥

---

[1] इष्टिषु प्रैषस्याऽध्वर्युः कर्ता, अनुवचनस्य होता । तद्विकृतौ पशावुभयोर्मैत्रावरुणः कर्ता विधीयते—"मैत्रावरुणः प्रेष्यति चाऽनु चाऽऽह" इति । तेन मैत्रावरुणस्य प्राप्तत्वात्, "दण्डी प्रैषानन्वाहे"ति वाक्येन मैत्रावरुणकर्तृके प्रैषानुवचने प्राप्ते इति, दण्डस्यैव विध्यन्वयस्स्वीकृतः । तेन न्यायेन "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यत्र स्वर्गकामशब्दस्य स्वर्गपरत्वमङ्गीक्रियते । तदुक्तम्—

"अपेक्षितत्वात् भाव्यस्य स्वर्गकामा हि तत्पराः ।
विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितम्" ॥ [भा. वि. श्लो. ५७] इति ।

तन्मतमेवाऽत्राऽनूद्य निराक्रियते ग्रन्थकारेणेति ध्येयम् ।

[2] अवगम्यत इति. मु. पु. पा. ।

[3] तथाऽवस्थेति. मु. पु. पा. ।

तस्मान्नियोज्यसम्बन्धसमर्थं विधिवाचिभिः ।
कार्यं कालान्तरस्थायि क्रियातो भिन्नमुच्यते ॥२३॥

ननु क्रियैव कार्यतयोच्यताम्, अस्तु सैव [1]फलसाधनम् । तेन तस्या अपि नियोज्यसंबन्धो घटत एव । न त्वसौ क्षणभङ्गिनी देहान्तरोपभोग्य-स्वर्गसाधनतां कथमवलम्बिष्यते । उच्यते । वरं तस्या एव तदनुपपत्त्या चिरतरावस्थायिताकल्पना, न पुनरदृष्टस्याश्रुतस्य तदतिरेकिणोऽर्थस्य कल्पना ।

यदि [2]वा कर्मण एव शक्तिरवस्थायिनीत्यभ्युपगम्यताम् । तदिदमुभयमपि प्रमाणान्तरविरोधान्न कल्पनामर्हति । अविरोधि हि प्रतीतसिद्ध्यर्थं कल्पयितुं शक्यम् । कर्मणश्चाऽऽशुतरविनाशिनश्चिरतरावस्थायिता प्रमाणान्तरविरुद्धा[3] ।

वार्तिकमतोपन्यास-निरासौ ।

शक्तिमति चाऽतीते शक्तिरप्यतीतेति प्रमाणान्तरसिद्धमिति, न साऽपि स्थायिनी शक्या कल्पयितुम् । [4]अपि चाऽऽश्रये निवृत्ते, किमाश्रया शक्तिरवतिष्ठताम् । आत्माश्रितेति चेत् । नाऽन्यदीया शक्तिरन्यत्र वर्तते, प्रमाणान्तरविरोधादेव । किञ्च शक्तिमत्यसति, शक्तेः फलं न युक्तम् । शक्तिमद्धि साधनम्, न शक्तिः केवला[5], अन्यथा शक्तित्वं न स्यात् ।

देवताप्रसादस्य फलप्रयोजकत्वशङ्का

[6]ननु यागादिक्रिया देवताराधनोपायभूता सती कार्यतयोच्यताम्, सा तत्प्रत्यासत्तिद्वारेण कालान्तरेऽपि फलं जनयितुमलमेव । देवता फलदान-समर्था कर्मभिराराध्यते, साऽऽराधिता प्रसीदति, प्रसन्ना च कर्तॄन्काला-न्तरेऽपि फलेन योजयत्येव—इति ।

---

[1] फलसाधनमित्यादि—देहान्तरोपभोग्येत्यन्तः पाठो मु. पु. नोपलभ्यते ।

[2] यदि वेत्यत्र वाकारो मु. पु. नाऽस्ति । [3] निरस्तेति मु. पु. पा. ।

[4] अस्तु सैव स्वर्गसाधनमाश्रितेति मु. पु. पा. । [5] केवलेति मु. पु. नाऽस्ति ।

[6] अत्रेदं बोध्यम्—'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यत्र ज्योतिष्टोमयागस्य स्वर्गसाधनताऽवगम्यते । अत्रेष्टसाधनतावाक्यार्थवादिनो मण्डनमिश्रस्य मते स्वर्ग—यागयोस्साध्य-साधन-भावश्श्रौतः । भावनावाक्यार्थवादिनां भाट्टानाम्मते समभिव्याहारापरपर्यायवाक्यगम्यस्स्वर्ग-

तन्निरासः ।

**नैतदेवम् । यागादीनां देवताराधनहेतुत्वे प्रमाणाभावात् । न हि देवताराधनोपायभूतो याग इत्यत्र किञ्चित्प्रमाणमस्ति । ननु देवपूजार्थ एव यजिस्स्मर्यते । पूजा च सर्वा *पूज्यमानाराधनार्थेत्यवगतम् । उच्यते । न स्मृतिः प्रमाणम्, स्मृतित्वादेव । प्रमाणान्तरापेक्षया च स्मृतीनामर्थवर्णनम्, तदनुवर्त्तित्वात्तासाम् । न च प्रमाणान्तरेण देवताराधनोपायता †यागस्याऽवगम्यत इत्युक्तम् । अतो देवतोद्देशेन द्रव्य-**

* पूज्यमानार्थेत्येव मु. पु. पा. ।  † यागस्येत्युक्तमिति. मु. पु. पा. ।

यागयोस्साध्य-साधनभावः । तथा च पार्थसारथिमिश्र आह—"न हि तत्र स्वर्गकामस्य, यागस्य वा साध्यत्वम्, साधनत्वं वा केनचिदुक्तम् । पदद्वयसमभिव्याहारादेव तु सम्बन्धे कल्पयितव्ये 'असाधकन्तु तादर्थ्यादिति' न्यायेन कामिनः प्राधान्यम्, यागस्य च गुणत्वं कल्प्यते" [न्या. र. मा. पृ. १७६] इति । प्राभाकरमते तु-स्वर्ग-यागयोस्साध्य-साधनभावो हि न श्रुत्यादिप्रमाणगम्यः, अपि त्वौपादानिक इति । उपादानस्वरूपन्त्वग्रे वक्ष्यते । तत्राऽयं विचारः प्रस्तूयते । यागस्य क्षणिकस्याऽपि स्वरूपेण फलोत्पत्तिं यावदवस्थानमभ्युपगम्यते शास्त्रप्रामाण्यात्, अथवा देवताप्रसादस्याऽवान्तरव्यापारत्वमङ्गीक्रियते, यागध्वंसस्यैव स्वर्गादिफलजनकता, उताऽपूर्वस्येति चतुर्धा संशयः । तत्र प्रथमः पक्षो न विचारमर्हति । कर्मणः क्षणिकत्वेन सिद्धस्य चिरकालावस्थानाभ्युपगमः प्रत्यक्षादिप्रमाणान्तरविरुद्ध इत्ययं पक्षस्त्यज्यते । अस्तु तर्हि द्वितीयः पक्ष इति वक्तुं न शक्यते । अस्मिन्पक्षे देवतायाः प्राधान्यम्, यागस्य तदर्थत्वं 'यज देवपूजे'-त्यादिश्रवणाद्यागेनाऽऽराधिता देवताऽऽराधयित्रे यजमानाय फलं दास्यतीति च वक्तव्यम् । अस्मिन्पक्षे देवतायाः—

"विग्रहो हविषां भोग ऐश्वर्यञ्च प्रसन्नता ॥
फलदातृत्वमित्येतत् पञ्चकं विग्रहादिकम्" ॥ इति

स्वीकार्यम् । चतुर्वेदभाष्यकारो माधवाचार्यस्तु—"विग्रहः, हविस्स्वीकारः, तद्भोजनम्, तृप्तिः, प्रसादश्चेत्येतच्चेतनस्योचितं पञ्चकमि"ति[मी. ६. ९. १. ४.]न्यायमालाविस्तरेमेने, सोमनाथोऽपि [म. मा. पृ. ५५६ ] तथैवाऽभिप्रैति । परं विग्रहादिपञ्चकमस्तीत्यत्र नाऽस्ति विवादः । एतत्पञ्चकं स्वीकार्यम् । "यद्यपि तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति, दधत्पोषं रयिम् मयि" इत्यादिमन्त्रा-र्थवादप्रामाण्यादित्यभ्यूहितुमवकाशोऽस्ति, तथाऽपि 'विधिना त्वेकवाक्यत्वादि'ति प्रधानविध्येकवाक्यताया मन्त्रा-र्थवादयोरिष्टत्वेन स्वातन्त्र्येण तेषां कस्मिंश्चिदर्थे प्रामाण्यायोगात् । शब्दस्य तात्पर्यविषयीभूत एव प्रामाण्यमभियुक्तानामभिमतम्, न तु शब्दात्प्रतीयमानेऽर्थे । अपि च महावाक्यस्थलेऽवान्तरवाक्यस्य स्वातन्त्र्येणाऽर्थबोधकताऽभियुक्तानां न सम्मता । अन्यथा "न कलञ्जं भक्षयेदि"त्यादौ कलञ्जं भक्षयेदित्यादिवाक्यार्थः केन निवार्येत । अतो देवताया विग्रहादिपञ्चकसद्भावे मन्त्रा-र्थवादादिकं प्रमाणमित्यौपनिषदानां मनोमोदकमात्रमिति ज्ञेयम् ।

किञ्च देवताया आराधितायाः फलदातृत्वं शब्दबलादङ्गीक्रियतेऽर्थबलाद्वेत्यपि

**त्यागो याग इति, गौणं देवतापूजात्मकत्वमवगन्तव्यम्, पूजाऽपि पूज्योद्देशेनैव हि प्रवर्त्तते–इति। अपि च सा कर्मभिराराध्यते, याऽऽराधनं प्रतिपद्यते। नानादेशगामिना पुरुषेणाऽनुष्ठीयमानयागात्मकपूजावगमश्च**

---

चिन्तनीयम्। तत्र 'ज्योतिष्टोमेन यजेते'ति वाक्यं स्वर्ग-यागयोस्साध्य-साधनभावं ब्रूते, न तु देवताप्रसादस्य, तस्य द्रव्यवत्कर्माङ्गत्वात्, 'न हि स्वामिनि स्थिते कश्चिद्दासात्फलं प्रार्थयते' इति न्यायात्। न द्वितीयः—देवताया वस्तुसामर्थ्यात्फलप्रदत्वमिति, विग्रहादिपञ्चकप्रतिपादकयोर्मन्त्रा-र्थवादयोस्स्वार्थे तात्पर्याभावस्य प्रागुपवर्णितत्वात्। अन्यथा 'वनस्पतिभ्यस्स्वाहा' 'मूलेभ्यस्स्वाहा' 'तूलेभ्यस्स्वाहा' इत्यादिमन्त्रेष्वपि देवत्वम्, विग्रहादिपञ्चकञ्च, कल्प्येत। तच्च प्रत्यक्षविरुद्धम्। अतो राजादिवद्देवताया फलदातृत्वं न सञ्जाघटीति। किञ्च विग्रहादिवद्देवतावादी न विना कर्मणा फलमभ्युपैति। अतोऽन्यतरसिद्धस्य देवताप्रसादस्य फलदातृत्वकल्पनापेक्षयोभयवादिसिद्धस्य यागस्यैव फलदातृत्वकल्पनं सङ्गच्छते, लाघवात्। अपि च माता-पितृ-गुरुशुश्रूषाया देवतां विनैव फलप्रदत्वमुभयवादिसम्मतम्। अपि च देवताप्रसादस्य फलं प्रति प्रयोजकत्वे कार्य-कारणभावप्रयुक्तगौरवञ्चाऽऽपद्यते। देवताप्रसादस्य फलम्प्रति प्रयोजकत्वे समवायसम्बन्धेनाऽऽत्मनि फलोत्पत्तिं प्रति स्वजनकयागसमवायित्वसम्बन्धेन कारणता वाच्या। अतः कारणतावच्छेदकप्रयुक्तगौरवम्। अवान्तरप्रसादाश्च बहवो एषितव्याः। तेषां कारणता स्वजनकयागसमवायित्वसम्बन्धेनेति वक्तव्या। तथा च कारणतावच्छेदकसम्बन्धकल्पनागौरवम्। इतोऽपि विशेषः—भाट्टदीपिकायां देवताधिकरणे द्रष्टव्यः। न तृतीयः—यद्यपि यागध्वंसस्य क्लृप्तत्वेन लाघवं समस्ति। तथाऽपि तस्य नित्यत्वेनैकवारं फलोत्पत्त्यनन्तरं घटीयन्त्रवदनवरतं स्वर्गोत्पत्तिरापद्येत। किञ्च—प्रतियोगिध्वंसयोरेककार्यकारित्वं कुत्राऽपि न क्लृप्तम्, फलतो विरुद्धकार्यारम्भ एव दृश्यते। अतोऽयं पक्षो न विदुषां मनोऽनुरञ्जयति। परिशिष्यते च यागस्य फलदातृत्वपक्षः, अस्मिन्पक्षे क्षणिकस्य यागस्य देशान्तर-कालान्तरभाविस्वर्गरूपफलारम्भकत्वं नैव घटते। अतो यागस्य स्वर्गसाधनत्वश्रवणात् शब्देनश्रुतार्थापत्त्या चाऽपूर्वं कल्प्यत इति भाट्टमीमांसका मन्वते। अत एवैते कल्प्यापूर्ववादिन इति गीयन्ते। प्राभाकरमीमांसकास्तु—लिङादिवाच्यं कार्यमिति वदन्ति। अत एते वाच्यापूर्ववादिन इति च गीयन्ते। अपूर्वाभ्युपगमस्योभयत्र साधारण्येऽपि तस्य वाच्यत्वप्राधान्यांश एव विवादः, न तु स्वरूपे। तत्र देवताधिकरणे देवताया विग्रहादिपञ्चकनिराकरणं यागादेः कर्मणः प्राधान्यं 'इन्द्राय स्वाहा' इत्यादाविन्द्रायेति चतुर्थ्यन्तशब्दो देवतेति च सिद्धान्तद्वयप्रतिपादनार्थं देवताविग्रहादेर्निराकरणं प्रौढिवादेनेति भाष्यकारश्शबरस्वामी मेने। "देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्" इति सूत्रेण देवताया फलदातृत्वं पूर्वपक्षयित्वा, 'अपि वा यज्ञकर्म प्रधानं स्याद्गुणत्वे देवताश्रुतिः' इति वदन् सूत्रकारः कर्मणः प्राधान्यं सूत्रयति। भाष्यकारेण निराकृतमेव देवताविग्रहादिपञ्चकं सूत्रकारीयमित्यभिप्रैति हर्षमिश्रः—

"विश्वरूपकलनादुपपन्नं तस्य जैमिनिमुनित्वमुदीये" [ नै. का. स. ५. श्लो. ३९ ] इत्यादिना।

वार्तिककारस्तु—सिद्धान्तद्वयप्रतिपादनं देवताविग्रहादिनिराकरणमन्तरेणाऽप्युपपादयितुं

देवताया इति, प्रमाणविरुद्धमेव, [1]विग्रहवतश्च प्रतिपत्तियोगिता, तस्य च वेदेनाऽनादिनाऽऽराध्यतया प्रतिपादनमपि प्रमाणान्तरविरुद्धमेव, तस्याऽनादित्वानुपपत्तेः। देवताधिकरणे [मी. द. ६. १. ४.] च प्रपञ्चेनाऽयमर्थो निरस्त इति, नाऽतीवाऽत्र यतितव्यम्।

यागस्य पुरुषसंस्कारकत्वशङ्का।

अथाऽपि स्यात्पुरुषसंस्कारहेतुभूतैव क्रिया शब्देन कार्यतयोच्यते, तस्याश्च स्वर्गकामादिपुरुषसम्बन्धात्पुरुषसंस्कारादेव कालान्तरे फलं भविष्यति—इति। तन्न। पुरुषसंस्कारकत्वे प्रमाणाभावात्। न हि प्रमाणान्तरतः, शब्दतो वा पुरुषसंस्कारहेतुता यागादीनामवसीयत इति "कर्माण्यारम्भभाव्यत्वादि" [मी. द. अ. ११. पा. १ सू. २०] त्यत्रोक्तम्।

क्रियाकार्यत्वशङ्का।

ननु क्रियैव कार्यतयोच्यताम्, फलसाधनता च तस्या एवाऽऽश्रीयताम्। तदन्यथानुपपत्त्या तु किञ्चिदप्यपरं तज्जन्यं फलोदयानुगुणं कालान्तरस्थाय्यात्माश्रयं परिकल्प्यताम्, मा भूत्तस्य लिङादिवाच्यता—इति।

कार्यं लिङादिवाच्यमिति स्वमतनिरूपणम्।

उच्यते—तद्धि तदनुपपत्त्या कल्प्यते, यद्यस्योपपादकम्। न च क्रियाजन्येनाऽन्येन फलजनकेन कल्पितेन क्रियायाः फलसाधनतोपपादिता भवति। न हि साधनसाधनं तस्य साधनं भवति, अवान्तरव्यापारो वा, शक्तिर्वा तत्साधनतां निर्वाहयति। व्यापारयोगितयैव शक्तिमतां साधनता यतः। न चाऽऽत्मसमवाय्यर्थान्तरं कर्मणामवान्तरव्यापारः, नाऽपि

---

शक्यत इति मन्वानो भाष्यकारोक्तं देवताविग्रहादिपञ्चकनिराकरणमस्पृष्ट्वैव सूत्रकारोक्तहेतुना देवताया गुणत्वम्, भूत-भव्यसमुच्चारणन्यायेन कर्मणः प्राधान्यञ्च प्रत्यपीपदत्।

टीकाकारस्तु—नियोगापरपर्यायकार्यप्राधान्यं वक्तुकामो भाष्योक्तदेवताविग्रहादिपञ्चकनिराकरणं तदुपोद्बलकत्वेनाऽयूयुजत्। अतो भट्टमते कर्मणः प्राधान्यं सिषाधयिषितं नावमिके देवताधिकरणे। प्राभाकरमते तु कार्यप्राधान्यमित्यमुमर्थं हृदि निधायाऽऽह शालिकाचार्यः—'ननु यागादिक्रिया—इत्यादिना प्रपञ्चेनाऽयमर्थो निरस्तो नाऽतीवाऽत्र यतितव्यमित्यन्तेन।

[1] विग्रहवतश्चेत्यादिः—विरुद्धमेवेत्यन्तो मुद्रितपुस्तके न दृश्यते।

[2] अयं ग्रन्थ इति. मु. पु. पा.।

शक्तिरिति, न तस्याऽर्थापत्तिगम्यता युक्ता। किन्त्वन्विताभिधाने स्थिते, नियोज्यानुगुण्याच्छब्दवाच्यतैवोचितेति सूक्तम्—[1]नियोज्यसम्बन्धसमर्थं कालान्तरस्थायि कार्यं क्रियातिरिक्तं लिङादिभिरेवोच्यते—इति।

गुरुमतसर्वस्ववर्णनम्।

[2]अत्रैषा प्रक्रिया। चोदनासूत्रे कार्यार्थता प्रतिपादिता। षष्ठाद्ये तस्यैव कार्यस्य स्वसम्बन्धितया बोध्यस्स्वर्गकामादिर्नियोज्य इति व्युत्पादितम्। स्वर्गकामना च नियोज्यविशेषणमित्येकादशाद्ये [मी. द. ११. १. १.] व्युत्पादितम्। तस्य च कार्यस्य नियोज्यविशेषणीभूतकाम्योत्पत्तिहेतुत्वमिति बादर्यधिकरणे [मी. द. ३. १. ३] राद्धान्तितम्। तच्च तथाभूतं कार्यं क्रियारूपं न भवति, तस्याः फलसाधनत्वायोगात्। देवताराधनमुखेन तावत् फलसाधनता नाऽस्तीति देवताधिकरणे [मी. द. ९. १. ४] व्युत्पादितम्। पुरुषसंस्कारमुखेन नाऽस्तीति "कर्माण्यारम्भभाव्यत्वादि"त्यत्रोक्तम्। कर्मणः, तच्छक्तेर्वा स्थायिता नेति चाऽपूर्वाधिकरणे [मी. द. २. १. २] प्रतिपादितम्। अतो नियोज्यान्वयमुखेन मानान्तरापूर्वमात्मसमवायि कार्यं लिङादिभिरभिधीयत इत्यनेकन्यायसाध्यम्। कार्यञ्च कृतिसाध्यम्। कृतिश्च पुंसां प्रयत्न एव। न चाऽसौ भावार्थमन्तरेणाऽस्तीति, [3]तत्सम्बद्ध एवोच्यतइति भावार्थाधिकरणे [२. १. १] स्थितम्। स च भावार्थस्सम्बध्यमानस्तमवच्छिनत्तीति, शब्दान्तराधिकरणे [मी. द. २. २. १] निर्णीतम्। विषयभूतश्च भावार्थः करणीभवतीति बादर्यधिकरणे एवोक्तम्, स्वकार्यसाधने भावार्थे पुरुषस्यैश्वर्यमिति च तत्रैवोक्तम् ॥२३॥

कालान्तरावस्थायिनः कार्यस्य नियोज्यान्वययोग्यतामाह—

**तद्धि कालान्तरस्थानाच्छक्तं स्वर्गादिसिद्धये।**
**सम्बन्धोऽप्युपपद्येत नियोज्येनाऽस्य कामिना ॥२४॥**

---

[1] इदन्तु त्रयोविंशश्लोकस्यऽर्थतोऽनुवादः, न तु ग्रन्थान्तरादुदधारि शालिकाचार्येणेति बोध्यम्।

[2] अत्रत्यस्सर्वोऽप्यर्थोऽनागतावेक्षणन्यायेन कणेहत्य विवेचितो [प्र. पं. पृ. २३४-२३६] ऽस्माभिः, विस्तरोऽस्य तत्रैव द्रष्टव्यो जिज्ञासुभिः।

[3] संबन्धनियोग इति मु. पु. पा.।

ननु भाष्यकारः—प्रत्ययार्थं प्रयत्नमित्याह[1], न क्रियादिभिन्नं कार्यमिति यो मन्यते, तं प्रत्याह—

क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तत् ।
अतो मानान्तरापूर्वमपूर्वमिति गीयते ॥२५॥

नियोगनिर्वचनम् ।

नन्वेवमप्यपूर्वं वाक्यार्थस्स्याद्, न नियोगः । नियोगश्च वाक्यार्थ-इति प्राभाकराणामुल्लाप इत्यत्राऽऽह—

[2]कार्यत्वेन नियोज्यश्च स्वात्मनि प्रेरयन्नसौ ।
नियोग[3] इति मीमांसानिष्णातैरभिधीयते ॥२६॥

एवमपि कथं [4]तस्य वाक्यार्थत्वमित्याह—

कार्यस्यैव प्रधानत्वाद्वाक्यार्थत्वञ्च युज्यते ।
वाक्यं तदेव हि प्राऽऽह नियोज्य-विषयान्वितम् ॥२७॥

उक्तं ह्येतत्-यत् प्रधानतया प्रतिपाद्यते, तद्वाक्यार्थः-इति । कार्यञ्च प्रधानतयोच्यत इति, तस्यैव वाक्यार्थत्वम् ।

नियोज्यान्विताभिधानं प्रायिकमिति कथनम् ।

नियोज्यन्विताभिधानञ्च प्रायिकम्, आधाना-ध्ययना-ङ्ग-प्रधानोत्पत्ति-नियोगानां नियोज्यशून्यानामभिधानाभ्युपगमात् । विवरणकारा ह्याधान-विषयमपि नियोगान्तरमिच्छन्ति, क्रतुनियोगप्रत्यभिज्ञानाभावाद् । अस-न्निधाने हि तन्नियोगप्रत्यभिज्ञानं नोपपद्यते । नाऽपि [5]पर्णतादिवद्व्य-

---

[1] अपूर्वमिति मु. पु. पा. ।

[2] अत्रेदमवधेयम्—द्विविधं कार्यम्—क्रियारूपं क्रियातिरिक्तनियोगापरपर्यायं कार्यरूप-ञ्चेति । तत्राऽऽद्ये गुणभूतः कर्तेत्युच्यते । द्वितीयम्प्रति गुणभूतो नियोज्य इत्यभिधीयते । तत्र कर्तृत्व-नियोज्यत्वयोर्गुणभावे समानेऽपि यत्प्रति गुणभावः, स एव नियोज्य इति गुरुतन्त्रे व्यवहारः । कः पुनरसौ नियोगः ? यस्मिन् ज्ञाते नियुक्तोऽहमत्रेति प्रतिपद्यते पुरुषः, स एवाऽर्थो नियोग इति जेगीयते गुरुणा । "ज्योतिष्टोमेन स्वर्गकामो यजेते"ति श्रुतेर्नियुक्तोऽहमत्रेति प्रथममवगच्छति । ततो यागेऽधिक्रियते । तेनाऽयमाद्यस्सम्बन्धः । अत एव पुरुषं नियुञ्जानस्सन्नियोग इत्युच्यत इत्यभिप्रायं मनसि निधायाऽऽह—कार्यत्वेनेत्यादि ।

[3] नियोज्य इति मु. पु. पा. ।

[4] तस्येति मु. पु. नास्ति ।

[5] पर्णतादिविधिवदिति मु. पु. पा. ।

भिचरितक्रतुसम्बन्धाग्निमुखेन[1] प्रत्यभिज्ञोपपत्तिः। प्रागाधानादाहवनीया-[2]दिशब्दानामर्थापरिज्ञानात्क्रतुसम्बन्धानवगमात्। जुह्वादीनान्त्वाकृतिवचनत्वात्प्रागेव [3]विधेर्नियोगप्रत्यभिज्ञासम्भवः।

नन्वग्नीनामपि साध्यत्वात्, साध्यद्वयं कथमेकस्मिन्वाक्येऽन्वीयते ? उच्यते—नियोग एवाऽत्राऽपि प्रधानं साध्यम्, अनीप्सितकर्मतात्वग्नीनाम्। अनीप्सितकर्मत्वेऽपि यत्तदाधानजन्यं फलमग्निसमवायि, तद्योगिन्याहवनीयादिशब्दप्रयोगात्, आहवनीयादीनाञ्च क्रतूपयोगित्वात्तत्सिद्ध्यर्थतयैव पुरुषप्रवृत्त्युपपत्तेरनुष्ठानलाभादलं [4]नियोज्यान्विताभिधानेन—इति।

तथाऽध्ययनविधावप्याचार्यकरणविधिप्रयुक्त्यैवाऽनुष्ठानलाभान्नियोज्य-शून्याभिधानमिति स्थितम्। प्रधानोत्पत्तिनियोगा अप्यधिकारनियोगाक्षिप्तस्वविषयानुष्ठानेनैव लब्धसिद्धय इति, न तत्र नियोज्यान्विताभिधानान्वेषणम्।

प्रयाजादिषु नियोगान्तरोपन्न्यासः।

अङ्गोत्पत्तिनियोगा अपि विनियुक्तप्रयाजादिविषयत्वादधिकारनियोगाङ्गतयैव सिध्यन्तीति, किं तेषु नियोज्यान्विताभिधानेन।

कथं पुनः प्रयाजादिविधीनां विनियुक्तविषयत्वम् ? उच्यते—साधिकारनियोगसन्निधौ प्रयाजादिवाक्यानि श्रुतानि न [5]तावत्स्वविषयं नियोगान्तरमवगमयितुमीशते, अवघातादिवदनुवादकत्वसम्भवात्। किन्तु स्वरूपमात्रमेव[6] योग्यस्वपदार्थविशिष्टमुपस्थापयन्ति[7]। तच्च प्रयोजनाकाङ्क्षितया प्रयोजनीभूतेन साधिकारेण नियोगेनाऽन्वीयत इति, अधिकारवाक्यगत एव लिङ्शब्दस्तदन्वितं स्वार्थमभिधत्ते। स चाऽन्वयः प्रयाजादीनामैदमर्थ्यमात्रेण ग्राहकग्रहणमित्युच्यते। करणोपकारसाकाङ्क्षस्य चाऽपूर्वस्य यत्कर-[8]णोपकारपरिकल्पनम्, स प्रकरणव्यापारः। तत्र यत्तेषां [9]करणोपकारजनकत्वकल्पनम्, तदौपादानिकम्—इति।

---

[1] सम्वन्धात्तन्मुखेनेति मु. पु. पा.।
[2] अर्थापत्तिज्ञान इति. मु. पु. पा.।
[3] प्राग्विनियोग इति मु. पु. पा.।
[4] प्रयोज्याभिधानेनेति मु. पु. पा.।
[5] स्वयागमिति मु. पु. पा.।
[6] योगस्येति मु. पु. पा.।
[7] उपपादयतीति. मु. पु. पा.।
[8] करणोपकारकत्वेति मु. पु. पा।
[9] इतिकर्तव्यतात्वेति मु. पु. पा।

तत्र शङ्का-निरासौ ।

नाऽस्ति तर्हि प्रयाजादिषु नियोगान्तरम् ? न नाऽस्ति, क्षणिकानां तेषां सम्भूयकरणोपकारकत्वानुपपत्तेर्नियोगान्तरस्याऽवश्याश्रयणीयत्वात् । योऽसौ लिङादिः प्रागनूद्यमानार्थकतया शङ्कितः, स इदानीं नियोगान्तरमभिधत्ते । अत एव चाऽवघातादिवदेषां यज्यादिशब्दानामेवाऽङ्गवाक्यगतानामधिकारनियोगान्वितस्वार्थाभिधानं नाऽभ्युपगम्यते । तथा सत्युत्पत्तावेवाऽङ्गयागस्वरूपस्याऽन्यतिरश्चीनस्य नियोगान्तराविषयत्वात्, नियोगान्तरविषयता न स्यात् । उत्पत्तिदशायां [1]त्वनन्यतिरश्चीनतयाऽभिधानाद्युक्तं नियोगान्तरविषयत्वम् । कस्मात्पुनरन्यतिरश्चीनस्य नियोगान्तराविषयत्वम्, [2]कार्यद्वयसम्बन्धावगमानुपपत्तेः । नह्येकं वस्तु युगपत्कार्यद्वयसम्बन्धि शक्यमवगन्तुम् । यच्च तन्नियोगान्तरं प्रयाजादिषु, तत् पश्चादभिधीयमानमधिकारनियोगाङ्गतयैव[3] स्वशब्देनाऽभिधीयते । अन्यथा विषयद्वयविनियोगविरोधादित्यलमतिप्रसङ्गेन ॥२७॥

नियोगस्य गुणत्वशङ्का-निरासौ ।

ननु नियोगस्य काम्यमानफलसाधनत्वाभ्युपगमात्, फलस्यैव प्राधान्यात्, तस्यैव वाक्यार्थत्वं[4] युक्तमित्यत आह—

**आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये ।**
**कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः ॥२८॥**

यत्तदपूर्वं कार्यम्, तस्य नियोज्यान्वयं विना कार्यत्वानुपपत्तेः, अनुष्ठानं विना तदसम्भवात्, कर्त्रा च विना तदनुपपत्तेः, अधिकारेण[5] च विना कर्त्तुरभावात्, नियोज्यत्वं विना तदयोगात्, अकामसाधने च [6]कामिनो नियोगानवगमादिति, आत्मसिद्ध्यर्थमेव नियोगः काम्यमानफलसिद्धिहेतुत्वमवलम्बते, स्वामिवत् । यथाऽऽत्मन एव संविदधानस्स्वामी गर्भदासस्योपकरोति, तथा नियोगोऽपि नियोज्यस्येति, न [7]प्राधान्यप्रच्युतिः ॥२८॥

ननु नियोगस्य फलसाधनत्वात्, तस्य च सेतिकर्त्तव्यताककरणनिब-

---

[1] अन्यनिष्ठेति मु. पु. पा. ।
[2] सम्बन्धानुपपत्तेरिति मु. पु. पा. ।
[3] अङ्गतैव शब्देनेति मु. पु. पा. ।
[4] युक्तमिति मु. पु. नाऽस्ति ।
[5] अधिकारिणेति मु. पु. पा. ।
[6] कामिन इति मु. पु. नाऽस्ति ।
[7] पदेति मु. पु. पा. ।

न्धनसिद्धित्वात्, तदनुष्ठानानन्तरं नियोगसिद्धेः फलसिद्धिस्स्यात्, अनन्तरं नियोगो [1]न निष्पद्यते, तर्हि क्रियायामतीतायां कुतस्तत्सिद्धिरित्यत्राऽऽह—

**विषयानुष्ठितौ सत्यां सिद्‌धो न हि विधिः फलम् ।**
**तदानीमेव कुरुते सहकारिव्यपेक्षया ॥२९॥**

एषाऽऽत्र दर्शनस्थितिः—प्रधानोत्पत्तिनियोगाः, अङ्गोत्पत्तिनियोगाश्च यथायथं संनिपत्योपकारकाङ्ग्युक्तस्वविषयमात्रानुष्ठानेनैव सिद्‌ध्यन्ति । तत्र यान्यङ्गापूर्वाणि, तानि सम्भूय प्रधानोत्पत्त्यपूर्वेषूपकुर्वन्ति, तस्माच्च परमापूर्वं निष्पद्यते । यान्यपि चाऽङ्गापूर्वाणि दीक्षणीयादीनाम्, तेषामप्याराधुपकारकातिदेशिकाङ्गभाजामेकमुत्पत्त्यपूर्वम्, अपरमप्यङ्गापूर्वं प्रधानवद्वेदितव्यम्—इति । अनया दिशाऽन्यत्राऽपि सकलमूहनीयम् ।

इत्थं यद्यपि कर्मानुष्ठानानन्तरमेव नियोगसिद्धिः, तथाऽपि यत् फलस्याऽनन्तराभवनम्, तत् उपपत्त्या कल्प्यते—इति ॥२९॥

नन्वेवं सति फलहेतुताऽपूर्वस्य बाध्येतेत्यत्राऽऽह—

**सहकारिव्यपेक्षा च कारणत्वं न बाधते ।**
**मा[2] बाधिष्टेति सर्वत्र तदनुग्रहकल्पना ॥३०॥**

तथेत्यर्थः ।

"[3]अतः पुरुषकारश्च दैवञ्च फलसाधनम्" । इत्याचार्याः ।

दैवम्—अपूर्वम् । अपेक्षणीयं सहकारि च पुरुषकारपदवेद्यम् ।

---

[1] नकारो मु. पु. नाऽस्ति ।

[2] मा वा बाधिष्ट सर्वत्र कार्ये पाकादिके यथेति मु० पु० पा. ।

[3] अत्र "अतः पुरुषकारश्च दैवञ्च फलसाधनमि"ति वचनमुद्धृतं शालिकाचार्येण । तत्समानानुपूर्वीकाणि वचांसि याज्ञ्यवल्क्यस्मृतावुपलभ्यन्ते ।

यथा—

"दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ॥
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदैहिकम् ॥३४९॥
केचिद्दैवात्स्वभावाद्वा कालात्पुरुषकारतः ॥
संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः ॥३५०॥
यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ॥
एवं पुरुषकारेण विना दैवं न सिद्‌ध्यति" ॥३५१॥ [या. स्मृ. आ. अ.] इति ।

अमुमेवाऽऽशयं मनसि निधाय प्रकृते पद्यार्धस्योपन्यास इति बोध्यम् ।

नित्यादिषु नियोगानभिधानशङ्का-परिहारौ।

नन्वेवं भवतु काम्येष्वपूर्वकार्याभिधानं लिङादीनाम्, नित्य-नैमित्तिक-निषेधाधिकारेषु कथम्? [1]न हि तेषु फलोदयं प्राभाकरा अनुमन्यन्ते। न हि फलं फलतयाऽन्वीयते, किन्त्वधिकारिविशेषणतया। लब्धे तु जीवनादावधिकारिविशेषणे, किं फलान्वेषणेन। न च फलमन्तरेण प्रवृत्त्यसम्भवः, स्वसम्बन्धिकार्यावगममात्रायत्तत्वात्प्रवृत्तेः। निरपेक्षाच्छब्दात्फलमन्तरेणाऽपि स्वसम्बन्धिकार्यावगमः, तावन्मात्रस्य लोके प्रवृत्तिहेतुत्वावगमात्। कार्यावगमोत्पादनायैव फलमुपयुज्यत इत्युक्तम्। ननु यथा शब्दात्कार्यावगतिः, तथा निष्फलत्वादनुमानेनाऽकार्यताप्रतीतिरपीति, कथं प्रवृत्त्युपपत्तिः? न। [2]आगमविरोधेनाऽनुमानस्याऽऽत्मलाभाभावात्। एतावानेव प्रमाणव्यापारः, यत्प्रवृत्तियोग्यार्थोपदर्शनम्। अन्यथा यदि कश्चित्कल्पिते फले न प्रवर्तते, तदा किं कर्त्तव्यम् ॥३०॥

ननु फलोदयानभ्युपगमे च प्राच्यमार्गासम्भवात्, नित्यादिष्वपूर्वकार्याभिधानमप्रमाणकं स्यात्, तत्राऽऽह—

एवं कामाधिकारार्थपर्यालोचनयोत्थिता।
व्युत्पत्तिस्सर्ववाक्यार्थप्रतिपत्तिनिबन्धनम् ॥३१॥

[3]उक्तमिदमन्याय्यश्चाऽनेकार्थत्वम्-इति। तेन कामाधिकारे सिद्धेऽपूर्वकार्याभिधायकत्वे, नित्यादिष्वपि स एवाऽर्थो विरोधाभावादाश्रीयते। नित्याधिकारानुगुण्येन तु क्रियाकार्यत्वाभिधानं काम्येष्वनुपपन्नमिति, सर्वत्राऽपूर्वमेव[6] वाक्यार्थः—इति ॥३१॥

---

[1] न हीति मु. पु. नास्ति।

[2] यथा-नरशिरःकपालं शुचि प्राण्यङ्गत्वाच्छङ्खवदित्यनुमानं "नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेत्" इत्यागमेन बाधितं सन्नोदेति, तथेति मन्तव्यम्।

[3] अत्रत्यो विशेषो [ प्र. पं. पृ. २६१-२६२ ] द्रष्टव्यः। [4] रिहेति मु. पु. पा.।

[5] अत्र यद्वक्तव्यम्, तत्सर्वमनागतावेक्षणन्यायेन [ प्र. पं. पृ. २३४-२३५ ] कणेहत्य निरूपितम्, तत्रैव तद्द्रष्टव्यमिति।

[6] अत्रेदं बोध्यम्—प्राभाकरमते नियोग एव धर्मः, स च स्वनिष्ठः, किञ्चित्प्रति न गुणीभूतः, नित्ये नैमित्तिके च विधिसिद्धिरेव प्रयोजनम्, यदि विधिसिद्धिर्नस्यात्, तदेव महदनिष्ठम्, तस्यैव पुरुषार्थत्वात्, अत एव कामाधिकारेऽपि विधिसिद्धिः प्रयोजनम्, स्वर्गादिफलसिद्धिस्तु नान्तरीयिका। तत्सिद्धौ स्तुवन्तः, तदसिद्धौ गर्हमाणाश्शिष्टाग्रगण्या एव प्रमाणम्, तत्सिद्धावकृतार्थं

तत्रैतदेव तावद्वक्तव्यम्—न केवलं वेदे लोकव्यवहारादेव शब्दार्थावधारणम्, किन्तु प्रसिद्धार्थपदसम्बन्धादपि पदार्थान्तरान्वययोग्यार्थाभिधायकतेति[1] स्थिते, तदनुरूपार्थाभिधायकता निर्णीयत एव। एतच्च यववराहाधिकरणे [ मी. द. १. ३. ५. ] व्युत्पादितम्। [2]व्यवहारत एव सम्बन्धावधारणादुभयथाऽपि व्यवहारदर्शनात्समा विप्रतिपत्तिरिति पूर्वः पक्षः। पदान्तरसम्बन्धादपि पदान्तरार्थाध्यवसानं भवत्येव, तेन वैदिकवाक्यशेषान्वयार्हतालोचनेन दीर्घशूकाद्यर्थत्वमेवेति राद्धान्तः।

तथा त्रिवृच्छब्दे, यूपा-हवनीयादिषु च शक्त्यवधारणात्। लोकेऽपि चाऽयं व्यवहारो बहुलमुपलभ्यते। तथा सति वैदिकनियोज्यान्वययोग्यतया लिङादीनामपूर्वकार्याभिधायकत्वनिर्णयो नाऽनुपपन्नः।

अयश्चाऽपरो विशेषः—यल्लिङादियुक्तानां वाक्यानां कार्यार्थत्वम्, तत्तावद्वृद्धव्यवहारादेव सिद्धम्, किन्तु लिङादिप्रत्ययानां यद्वाच्यं[3] कार्यम्, तच्चाऽपूर्वरूपमित्येतावन्मात्रं वैदिकपदसम्बन्धादवसीयते—इति ॥३१॥

[4]एकदेशिमतमधुना निराकर्त्तुमुपन्यस्यति—

व्यवहारत एवाऽऽहुर्व्युत्पत्तिमपरे पुनः।
कार्ये मानान्तरावेद्ये क्रियादिव्यतिरेकिणि ॥३२॥

अस्याऽर्थः—केचिदेवमाहुः—लिङादियुक्तवाक्यश्रवणे प्रवृत्तिदर्शनात्, कार्यावगतिनिबन्धनत्वात्प्रवृत्तेः, कार्यमात्रमेव तेषामर्थः, न [5]क्रिया।

वैदिकलिङादेः कार्ये शक्तिनिर्णयः।

नन्वेवं वेदादेव व्युत्पत्तिरास्थिता स्यादित्याशङ्क्याऽऽह—

व्युत्पत्तिरपि कार्येऽर्थे व्यवहारानुसारिणी।
किन्तु निर्धारणामात्रं वेदवाक्यविमर्शजम् ॥३३॥

---

मन्यमानं स्वकीयमन्तःकरणं वा। तस्मात्कार्यमेव प्रधानमिति, न काऽप्यनुपपत्तिरित्याशयेनाऽऽह—"नन्वित्यादिना सर्वत्राऽपूर्वमेव वाक्यार्थः"—इत्यन्तेन।

[1] अभिधायकत्वमिति मु. पु. पा.।

[2] यववराहाधिकरणस्य पूर्वपक्ष-सिद्धान्तौ संक्षेपेण दर्शयति--"व्यवहारत इत्यादिना-राद्धान्तः"—इत्यन्तेन।

[3] यद्वाच्यं कार्यमित्ययमंशो मु. पु. नाऽस्ति। [4] एकदेशिनामिति मु. पु. पा.।

[5] क्रियादिरूपतेति मु. पु. पाः।

तस्यां शब्दस्य प्रवृत्त्यनुपयोगित्वादिति, क्रियानिष्कृष्टकार्याभिधायिता लौकिकव्यवहारादेव निर्णीयते–इति ॥३३॥

तदिदमयुक्तमिति प्रतिजानीते—

सितेतर इव त्वेष पक्षश्चित्तं न कर्षति ।
चन्द्रातपामलन्यायप्रवासमलिनीकृतः ॥३४॥

कथमित्याह—

कार्ये मानान्तरावेद्ये पार्श्वस्थस्तन्निबन्धनम् ।
व्यवहारं कथङ्कारं शब्दात्प्रागवबुध्यताम् ॥३५॥
व्यवहारमविज्ञाय तन्निबन्धनतद्गता ।
प्रतिपत्तिः कथं ज्ञेया शब्दशक्तिः कथन्तराम् ॥३६॥

इदमत्राऽऽकूतम् । यद्यपि कार्यमात्रमेव प्रवृत्त्युपयोगीति तावन्मात्रमेव शब्दार्थः, तथाऽपि तस्य लोके क्रियागतस्यैव प्रवर्त्तकत्वदर्शनाद्, शक्यते क्रियाश्रितता प्रत्येतुम् । यथाऽऽकृतिमात्रस्य शब्दार्थत्वेऽपि व्यक्त्याश्रितताऽपि न प्रतिक्षिप्यते, तथा क्रियाश्रितत्वं प्रमाणान्तरप्रमितं न प्रतिक्षेपमर्हति । तेन क्रियातिरिक्तकार्याभिधायकत्वमसिद्धम्[१] । यदि परं तन्निबन्धनव्यवहार एव[२] स्यात्, तदा तद्दर्शनात्तद्धेतुभूतप्रतिपत्त्यन्यथानुपपत्त्याऽनुमानेन शब्दस्य वाचकत्वाध्यवसानं भवेत् । न चैतदस्ति, तस्य शब्दादन्यतः प्रागनवगमात्तन्निबन्धनव्यवहाराप्रतिपत्तिः[३], तदप्रतिपत्तौ च तद्धेतुभूतप्रतिपत्त्यननुमानान्न शक्तिकल्पनोपपत्तिः ॥३४-३६॥

तत्राऽऽकूतं विवृणोति—

कार्यप्रतीतिमात्रञ्च प्रवृत्तेरनुमीयताम् ।
किन्तु कार्या क्रियैवेति[४] लोकदृष्ट्याऽऽवसीयते ॥३७॥

लोकप्रतीतं क्रियारूपत्वञ्च न शक्यतेऽपह्नोतुमिति, कार्यमात्रार्थत्वे क्रियैव कार्यतया लिङाद्यर्थ इति निश्चीयते, न पुनः प्रमाणान्तरादपूर्वम्-इति ॥३७॥

---

[१] कार्याभिधायि न प्रसिद्धमिति मु. पु. पा. ।

[२] दर्शनमेवेति मु. पु. पा ।

[३] अप्रतिपत्तेरिति ख. पु. पा. ।

[४] क्रियाचेति ख. पु. पा. ।

मतान्तरेण क्रियाकार्यत्वशङ्का-निरासौ ।

अन्ये पुन—र्वेदार्थबोधकाचार्यवचननिबन्धनप्रवृत्तिदर्शनेनाऽतीन्द्रिये[1] कार्ये लिङादयो व्युत्पद्यन्त इत्याहुः । यद्याचार्यवचनादपि क्रियैव कार्यतयाऽऽवगम्यते, तदा तस्यास्स्वयं दुःखरूपत्वात्पुरुषार्थान्तरानुबन्धनं विना प्रवृत्त्यसम्भवान्नियमेन सुखार्थिनः प्रवृत्तिर्न स्यात् । [2]न च सन्ध्योपासनादौ पुरुषार्थोऽस्ति । तस्मात्क्रियातिरिक्तकार्यमाचार्यवचनेभ्योऽवगम्यते—इति ।

तान्प्रत्याह—

वेदार्थाचार्यवाक्येषु प्रवृत्तिर्याऽपि दृश्यते ।
तत्राऽप्येषैव सम्बन्धपरिज्ञानविधा भवेत् ॥३८॥

आचार्यवाक्यश्रवणादपि शिष्याणां या सन्ध्योपासनादौ प्रवृत्तिः, तत्राऽपि बालस्स्वविषयनिरूपितं क्रियाकार्यत्वावगममेव कारणत्वेन परिकल्पयेत्, फलं विना च तदनुपपत्तेः फलावगममपि सम्भावयेत् । लोकव्युत्पत्त्यनुसारेण[3] वेदार्थमपि प्रतिपद्यमानो नित्य-नैमित्तिक-निषेधाधिकारेष्वपि[4] फलं कल्पयेत् । स एव बाल्यदशायां व्युत्पन्नस्स्वयमाचार्यपदवीमधिरुढो वेदार्थं प्रतीत्य, शिष्येभ्य उपदिशन् क्रियामेव कार्यतया प्रतिपादयेत्, नाऽपूर्वं कार्यम्–इति ॥३९॥

उपसंहरति—

तस्माल्लोकानुसारेण व्युत्पत्तिः कार्यमात्रके ।
तस्य त्वपूर्वरूपत्वं वेदवाक्यानुसारतः ॥३९॥

एवमपूर्वकार्याभिधायित्वे सिद्धे चोदयति—

ननु लोकविरोधित्वं पक्षेऽस्मिन्नपि दृश्यते ।
सर्वथैव[5] यतो लोके क्रिया कार्यैव गम्यते ॥४०॥

परिहरति—

भवेदेवं विरुध्येते कार्यऽपूर्वेऽपि लौकिकौ ।
प्रतिपत्ति-प्रयोगौ चेत् क्रियाकार्यत्वगोचरौ ॥४१॥

---

[1] स्वार्थेति मु. पु. पा. । [2] ततश्चेति मु. पु. पा. ।
[3] लोकेति मुद्रितपुस्तके न दृश्यते ।
[4] नित्यनैमित्तिकाधिकारयोरपीति मु. पु. पा. । [5] सर्वदैवमिति मु. पु. पा. ।

यदि क्रियाकार्यत्वगोचरौ लौकिकौ प्रतिपत्ति-प्रयोगावपूर्वकार्याभिधायित्वपक्षाङ्गीकारे विरुध्येते, ततो लोकविरुद्धत्वं स्यादस्मत्पक्षस्य। न चैतदस्तीत्याह—

अपूर्वं हि क्रियासाध्यं साधिता साधनं क्रिया।
तस्मादपूर्वकार्यत्वं[१] क्रियाकार्यत्वसङ्गतम्[२] ॥४२॥
प्रमाणान्तरगम्यं हि लोकश्शब्दैर्विवक्षति।
क्रियाकार्यत्व एवाऽतः प्रयोगो लक्षणान्वितः ॥४३॥

प्रतिपत्ति-प्रयोगौ हि नाऽवश्यं श्रौतवृत्त्यनुसारिणावेव, लक्षणयाऽपि लोके[३] तद्दर्शनात्। तेन यद्यप्युक्तेन न्यायेनाऽपूर्वमेव कार्यं लिङादीनामभिधेयम्, तथाऽपि तस्य क्रियाकार्यत्वाव्यभिचारात्, तत्र लक्षणया तयोर्नाऽनुपपत्तिः। यत्तु श्रौतपदार्थे कार्ये लोके लिङादि न प्रयुज्यत इति। तत् तस्याऽपूर्वात्मनः प्रमाणान्तराप्रतीतत्वात्, प्रतीतविषयत्वाच्च लौकिकप्रयोगस्य। क्रियासाध्यन्त्वपूर्वम्, साधिता च सती क्रिया साधनं भवतीत्यपूर्वेण सह क्रियाकार्यत्वं[४] नित्यसम्बद्धमिति, शक्यते तल्लक्षयितुम् ॥४२-४३॥

यद्येषा[५] लक्षणा, किमिति तर्हि लोको नाऽवगच्छतीत्याह—

लक्षणानभिमानस्तु मुख्यार्थानवधारणात्।
ये तु[६] मुख्यार्थकुशलास्तेषां लाक्षणिकत्वधीः ॥४४॥

मुख्यमर्थमविदित्वा लाक्षणिकमप्यर्थं श्रौतमिव मन्यन्ते, म्लेच्छा इव यव-वराहाद्यर्थम्। मुख्यार्थविवेकिनान्तु परीक्षकाणां लाक्षणिकत्वधीः—इति ॥४४॥

उपसंहरति—

तस्मान्मानान्तरावेद्यं कार्यमर्थान्तरान्वितम्।
वेदवाक्यं ब्रवीतीति संक्षेपोऽयमुदाहृतः ॥४५॥

---

१ साध्यत्वमिति मु. पु. पा.।
२ साध्यत्वेति मु. पु. पा.।
३ दर्शनादिति मु. पु. पा.।
४ क्रियासाध्यत्वमिति मु. पु. पा.।
५ यद्येषामिति ख. पु. पा.।
६ यत्त्विति मु. पु. पा.।

ग्रन्थस्य, कर्तुश्च संज्ञां, प्रयोजनञ्चाऽऽह—

वाक्यार्थमातृकेयं प्रभाकरगुरोर्मतानुसारेण[1] ।
अनसूयुबोधनार्थं शालिकनाथेन सङ्ग्रथिता ॥४६॥

[2]रचिता सच्चरितानामनुग्रहं कर्तुकामेन ।
वाक्यार्थमातृकाया वृत्तिरियं शालिकेनैव ॥

इति महामहोपाध्यायश्रीमच्छालिकनाथमिश्रप्रणीतायां सवृत्तौ वाक्यार्थमातृकायां द्वितीयः परिच्छेदस्समाप्तः ॥

समाप्तश्चेदं प्रकरणपञ्चिकायां सवृत्तिर्वाक्यार्थमातृका नामैकादशं प्रकरणम् ।

---

[1] दर्शनेनेति मु. पु. पा. ।

[2] अयं श्लोको मुद्रितपुस्तके वाक्यार्थमातृकायामेव निवेशितो दरीदृश्यते, तथैव केचिन्मन्वते, तथाऽपि वृत्तेरनुगुणत्वाद्वृत्तावेवाऽस्माभिर्निवेशित इति बोध्यम् ।

## परिशिष्टम्

अत्रेदमवधेयम्—"ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यत्र यागस्य स्वर्गसाधनता स्वरूपतः क्षणिकस्य नोपपद्यत इति, कालान्तरभाविस्वर्गोत्पत्तये श्रुतार्थापत्त्याऽपूर्वं कल्प्यते, तच्च यागस्य शक्तिः, अवान्तरव्यापारो वा । न तु तस्य लिङादिवाच्यत्वम्, प्राधान्यं वा । फलसाधनत्वोपपत्तये कल्प्यमानं तत् यत्राऽङ्गीकृतं फलाय कल्प्यते, तत्रैवाङ्गीक्रियते, न तत्राऽऽश्रयो नियम्यते । तथा च वार्तिकम्—

"शक्तिः कार्यानुमेयत्वाद्यद्गतैवोपयुज्यते ।
तत्रैव साऽभ्युपेतव्या स्वाश्रयाऽन्याश्रयाऽपि वा" [ तं. वा. पृ. ३९८ ] इति ॥

अस्यैव निराकरणं "शक्तिमति चेत्यादिना न स्यादि"त्यन्तेन [ प्र. पं. पृ. ४३६ ] शालिकनाथेन कृतमिति मन्तव्यम् ।

# अथ विषयकरणीयं नाम द्वादशं प्रकरणम् ।

प्रकरणार्थप्रतिज्ञा ।

[१]प्रभाकरमतं सम्यगालोच्य क्रियते मया ।
विषयं [२]करणञ्चैव विवेक्तुं युक्तिवर्णना ॥१॥

"ज्योतिष्टोमेन स्वर्गकामो यजेते"त्येवमादिषु स्वर्गकामादिर्नियोज्यत्वेन सम्बध्यमानः, नाऽस्वर्गसाधने कार्ये बोद्धृतयाऽन्वेतुमलम्* । क्रिया हि क्षण-भङ्गिनी न कालान्तरभाविनस्स्वर्गादेस्साधनायोपपद्यत इति, कालान्तरा-

---

[१] प्रकरणप्रतिपाद्यमर्थं श्लोकेनैकेन सङ्क्षेपेणाऽऽह—प्रभाकरमतमिति ।

[२] अस्मिन् प्रकरणे धात्वर्थ एव लिङादिवाच्ये कार्ये विषयत्वेन, करणत्वेन च सम्बध्यत इति निरूप्यते । अतो विषयकरणीयमित्यन्वर्थनामधेयमिदं प्रकरणम् । अत्रैषा तन्मतस्थितिः । तथाहि—कार्यताज्ञानं प्रवर्तकम् । तच्च कार्यं लिङ्लोट्-तव्यानामन्यतमस्य वाच्यम् । प्रवृत्तिहेतुश्च विलक्षणकार्यज्ञानमेव सर्वत्र दृष्टम्, कार्यसामान्यज्ञाने प्रेक्षावतां प्रवृत्त्यदर्शनात् । एवञ्च विशेषतः, कार्यप्रतीत्यर्थमवच्छेदकोऽपेक्ष्यते । अवच्छेदकः, विषयः, अनुबन्ध इति च पर्यायः । अवच्छेदकापेक्षायां तत्तद्धात्वर्थो यागादिस्साक्षात्कार्यमवच्छेत्तुं न प्रभवति, तथाऽपि यागकृतिसाध्यमपूर्वमित्येवं कृत्यवच्छेदद्वारा कार्यमवच्छेत्तुं शक्नोति, अतो धात्वर्थो यागादि-रवच्छेदकत्वेन सम्बध्यते । अवच्छेदकत्वमेव विषयत्वमिति, धात्वर्थस्य यागादेर्लिङादिवाच्ये कार्ये प्रतिपत्त्यनुबन्धतया विषयत्वेनाऽन्वयः । अत्र प्रतिपत्त्यनुबन्धत्वं—प्रतीतिप्रयोजकत्वं बोध्यम् । अयञ्च विषयो द्वितीय-द्वितीयाद्ये शब्दान्तराधिकरणे निरूपितो गुरुणा ।

तथा विषयत्वेनाऽन्वितस्यैव धात्वर्थस्याऽपूर्वोत्पत्तावसाधारणकारणत्वात्करणत्वेन कार्येऽन्वयः । कार्यं कृतिसाध्यं भाव्यमिति पर्यायः । ततश्च भाव्यरूपापूर्वोद्देशेन प्रवृत्ता या कृतिः, सा भावनेत्यभिधीयते । सा च क्रियात्वात्करणमन्तरेण नोपपद्यते । अतः कृतिसाध्य-लक्षणकार्यं स्वनिष्पत्त्यर्थं स्वसाधनार्थप्रवृत्तकृतिरूपभावनामुखेन करणमपेक्ष्यते । धात्वर्थ एव कार्योत्पत्त्यनुबन्धत्वेन करणतयाऽपि सम्बद्ध्यते । अत्रोत्पत्त्यनुबन्धत्वञ्चोत्पत्तिजनकत्वम्, परोद्देशप्रवृत्तकृतिव्याप्यत्वं हि करणत्वमित्याचक्षते गुरवः, तस्माद्धात्वर्थो विषयतया, करणतया, च कार्येण सम्बध्यते । अमुमेवाऽर्थं भवनाथश्श्लोकेनैकेन सञ्जग्राह—

"कृति—तत्साध्यमध्यस्थो यागादिर्विषयो मतः ।
कार्येऽसङ्कुटिताकारे करणत्वेन सम्मतः" [ न. वि. २. २. १ ] इति ॥

**अस्याऽयमर्थः**—कृति-कार्ययोः घटकोऽयं धात्वर्थः, न तं विना कृतिः कार्येणाऽन्वेतु-मर्हति, तथा कार्योत्पादकत्वमपि ।

अयञ्च श्लोकः कस्येत्यत्र विवदन्ते टीकाकाराः । अखण्डानन्दश्शालिकनाथस्येत्यभिप्रैति, तथा सर्वदर्शनकौमुदीकारो माधवसरस्वती तदेवाऽनुसरति । परन्तु न्यायमकरन्दस्य व्याख्याने

* अवच्छेत्तुमिति मु. पु. पा. ।

वस्थायि क्रियातो भिन्नं कार्यमपूर्वं लिङादयो बोधयन्तीति 'स्थितम् ।

### स्वसिद्धान्तवर्णनम् ।

कार्यञ्च कृतीप्सितमुच्यते । कृतिः—आत्मव्यापारः—पुरुषप्रयत्न इत्यनर्थान्तरम् । चेतनश्चाऽऽत्मा कार्ये बोद्धृतयाऽन्वयमुपैति । न चाऽन्यव्यापाराभिनिर्वर्त्यमन्यस्स्वसम्बन्धितया कार्यत्वेन संवेदयितुमलमिति, आत्मनो मानसप्रत्यक्षसमधिगमनीयः प्रयत्नस्स्वव्यापारः । अतस्तन्निर्वर्त्यमेवाऽपूर्वं कार्यमात्मा मन्यते । प्रयत्न एव भवितव्येऽपूर्वे प्रयोजकभूतस्य भावयितुरात्मनो व्यापार इति, भावनाशब्देनोच्यते । न च कार्याभिधानं कृतिमनभिदधतां लिङादीनामुपपद्यत इति, ते कृतिमप्यभिदधति, अपूर्वञ्च । न च युगपदनेकाभिधानं दोषः, तथाऽवगमात्, आनुगुण्याच्च । अवगता हि प्रमाणेन लिङादीनां कार्याभिधायिता । आनुगुण्यात् । कृतिर्गुणभूता प्रधानपदवर्तिन्यपूर्वात्मनि कार्ये । अविवादा च कर्त्रादिगतसङ्ख्यावाचिता लिङादीनां कार्याभिधायिनामपि । न चाऽभिधेयतामात्रेण भावनाया एव वाक्यार्थत्वम् । भाव्यमपूर्वं प्रति गुणभावेनाऽभिधानात्, प्रधानभावेनाऽपूर्वस्याऽभिधानात्तदेव वाक्यार्थ इति, न किञ्चिदनुपपन्नम् । अत एव भगवतो भाष्यकारस्य तत्र तत्र व्यवहारः—"पुरुषप्रयत्नः—करणमपूर्वस्य भावनो"च्यत[1]—इति ।

### धात्वर्थस्य विषयत्वोपन्यासः ।

तस्य तथाविधस्य कार्यस्य नूनं केनचिद्भावार्थेनाऽवच्छेदः । न हि प्रयत्नो भावार्थमन्तरेणाऽस्ति । सर्वो हि पुरुषप्रयत्नः कश्चिद्भावार्थमवश्यमाश्रयते, तेन विना तदभवात् । तेन प्रयत्नाविनाभावी भावार्थः प्रयत्नाभिनिर्वर्त्यमपूर्वमवच्छिनत्ति । अवच्छेदकतयैव विषयभावः[2] । "यत्रैव[3]

---

चित्सुखमुनिविरचिते वाक्यार्थमातृकास्थत्वेन निर्देशोऽस्य दृश्यते । चित्सुखीव्याख्यायां नयनप्रसादिन्यान्तु भवनाथीय इति । निर्णयस्त्वस्माभिः प्रागभ्यधायि । प्रकरणेऽस्मिन् धात्वर्थ एव विषयः, करणमिति च प्राधानिको विषयः, कार्याभिधायिनामेव लिङादीनां भावनावाचित्वं, लडादिस्थलेत्वाख्यातस्य संख्यामात्रवाचित्वम्, धात्वर्थः क्रिया, इत्येते विषयाः प्रसङ्गादुपवर्णिता इति ध्येयम् ।

[1] अपूर्वाधिकरणे लिङादीनां वाच्यं कार्यमिति बृहती—ऋजुविमलादौ प्रपञ्चेनोपवर्णितमित्यर्थः ।

[2] प्रकरणतोऽपूर्वस्य नोच्यत इति. मु. पु. पा. । [3] विषयभावमिति मु. पु. पा. ।

हि यो भवति नाऽन्यत्र, स तस्य विषय" इति विषयविदः । "[1]अनन्यत्र भावो विषयशब्दार्थः" इति च । अतो भाव्य एवाऽर्थो विषयः, भाव्यस्यैव पुरुषप्रयत्नगोचरत्वात् । तेन कार्याभिधायिभिस्सह विषयबोधकतयैव भावार्थः कर्मशब्दस्समभिव्याहारं प्रथममर्हति, तस्य [2]प्रतिपत्त्यनुबन्धत्वात् । अविषयं ह्यपूर्वं कार्यं प्रत्येतुमशक्यम् । प्रतीतस्य च कार्यस्य साधनाकाङ्क्षा । तेन न जघन्यया साधनतया भावार्थानामपूर्वेण सहाऽन्वयः । किन्तु प्रतीत्युपायतामेव मन्यमानो [3]भगवानेवं ब्रूते—"न ह्यविषयान्नियोगान्नियोगज्ञानमुत्पद्यते" [ बृ. टी. ] इति ।

धात्वर्थस्य करणत्वनिरूपणम् ।

स च विषयीभूतभावार्थावच्छिन्नो विध्यर्थः कार्यात्मा प्रतीतः करणम्, इतिकर्तव्यताञ्चाऽपेक्षते, अन्यत्राऽपि साध्ये तथादर्शनात् । तत्र स एव भावार्थो विषयीभूतः करणमित्यवसीयते, कृतिव्याप्यत्वात् । यो हि यया कृत्याऽन्यार्थप्रवृत्तया विषयीक्रियते, स एव तत्र करणम् । यथा—परशुरुद्यमन-निपातनाभ्यां काष्ठगतद्वैधीभवनलक्षणकार्ये प्रवृत्ताभ्यां व्याप्यमानस्तयोरेव द्विधाभवनलक्षणफलावच्छेदलब्धद्वैधीकरणव्यपदेश्ययोश्छिदिधातुवाच्ययोः करणम्, तथेहाऽप्यपूर्वार्थप्रवृत्तपुरुषप्रयत्नव्याप्यमानो भावार्थस्तस्मिन्नेव प्रयत्नेऽपूर्वभावनारूपे करणम् ।

ननु कथं प्रयत्नलब्धात्मा भावार्थो भावनायां करणम् । भाव्यमानतया हि कर्मैव स्यात् । उच्यते । तत्र धात्वर्थो न कर्म, अपूर्वार्थकृतिविषयत्वात् । सर्वाण्येव हि कारकाणि कर्त्तृव्यतिरिक्तानि तद्व्यापारव्याप्यानि, न चैतावता तानि कर्मतां [4]भजन्ते, अनीप्सितत्वात् । क्वचिच्चाऽनीप्सिते कर्मता दृश्यत एव । यथा—"अग्निहोत्रं जुहोति" [ तै. सं. १. ५. ६ ] इति । करणन्तु यद्यपि स्वरूपनिवृत्तौ न सम्भवति, तथाऽप्यपूर्वभावनारूपता तदधीनेति नाऽनुपपन्नम् । यथा परशोरेव । न हि परशुः कर्म, करणन्तु भवति, अनीप्सितत्वात् । [5]उद्यमन-निपातनयोर्द्वैधीकरणरूपतायास्तदधी-

---

[1] अस्याऽयमर्थः—कृत्य—पूर्वयोर्मध्य एव भवति धात्वर्थः, नाऽन्यत्रेत्यनन्यत्र भावो विषय इति मु. पु. पा. । [2] प्रतिपत्त्यनुबन्धित्वादिति ख. पु. पा. ।

[3] उक्तेऽर्थे टीकाकृतो वचनं प्रमाणतयोपन्यस्यति-भगवानित्यादिना ।

[4] कर्मतां प्रति भजन्त इति मु. पु. पा. । [5] द्वैधीकरणभवनेति मु. पु. पा. ।

नत्वात् । परशुसम्बन्धप्रभावेन ह्युद्यमन-निपातने द्वैधाभवनफलनिष्पादकतया द्वैधाभवने कारणतां[1] भजेते । अतः "उद्भिदा यजेते" [ तां· ब्रा. १६. ७. २. ३ ] ति तृतीयानिर्देशोपपत्तिः[2] । अपूर्वभावनायां करणत्वाद्यागस्य, तन्नामत्वाच्चोद्भिच्छब्दस्य । एवञ्चाऽपूर्व-फलयोरेकैव भावना, एकत्वात्पुरुष-प्रयत्नस्य । एकमेव च करणम्, तद्भावनाव्याप्यत्वादेकैव भाव्यता । [3]अत एव च साध्यविवृद्धिरियमिति प्राभाकराः ।

धात्वर्थस्य विषयत्वकरणत्वयोरुपसंहारः ।

[4]यदि विषयीभूतस्य करणता, हन्त तर्हि "दर्शपूर्णमासाभ्यामि"त्यत्र तन्त्राभिहितानां तन्त्रेणैव प्रतिपत्त्यनुबन्धत्वात्, विषयभावस्यैकत्वादेकमेव करणं स्यात्, ततश्च भेदेनेतिकर्तव्यतासम्बन्धो न स्यात् । उच्यते—न सम्यगवधृतमायुष्मता श्रुतिशालिनां वचः । यदेव विषयीभूतम्, तदेव करणम्, नाऽन्यदिति तस्याऽर्थः । प्रतीत्यनुबन्धतया* च विषयभावः, स यथाभिधानमवकल्पते, प्रतिपत्त्युपायत्वादभिधानस्य । अतस्तन्त्राभिधानात्सहितानां विषयभावः, करणन्तु सिद्ध्यनुबन्धी नियोगस्य, तच्च यथास्वभावं वेदितव्यम् । स्वभावाधीना हि साधनानां† साधकतेति स्वभावभेदे भिन्ना साधकता । साधकत्वे च कृतिविषयत्वात्करणतेति भेदेन करणभावः ।

---

[1] करणतामिति मु. पु. पा. । [2] निर्देशोपपत्तेरिति. मु. पु. पा. ।

[3] सर्वत्र विधिवाक्येषु लिङादिवाच्यस्य कार्यस्य साध्यत्वं शाब्दमित्यङ्गीक्रियते प्राभाकरैः, स्वर्गादिकमपि साध्यं भवति, परन्त्वार्थिकं साध्यत्वं तस्य । तथा च सर्वत्र विधिवाक्येषु साध्यविवृद्धिः प्राभाकराणां सम्मतेति स्वमतरहस्यमुद्घाटयति—अत एवेति ।

[4] यः कार्ये विषयत्वेनाऽन्वेति, तस्यैव तत्र करणत्वेनाऽन्वय इति तन्मतस्थितिः । तत्राऽयं विशेषः—क्वचित् विषयस्यैकत्वेऽपि करणानां भेदो भवति । यथा लोके "देवदत्तो रथेन, अश्वेन, शिबिकया वा गच्छती"त्यादावेकस्याऽप्यनेककरणसाध्यत्वं दृष्टम् । अत एव 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्रैकेन यजिना तन्त्रेणोपात्तानामाग्नेयादीनां षण्णां यागानां विषयत्वमेकमेव, तथाऽपि उत्पत्तिवाक्येषु "यदाग्नेयोऽष्टाकपाल" इत्यादिषु द्रव्य-देवताभेदाद्भिन्नस्वभावाः षट् यागाः प्रतिपन्ना इति तेषां भेदेनैव करणत्वम् । एवमेव, "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यत्र विषयैक्येऽपि करणभेदस्समाश्रीयते, इष्टि-पशु-सोमसमुदायात्मको हि राजसूयः । तथा च विषयस्यैकत्वेऽपि क्वचित् क्वचित् करणभेदः, तद्भेदाच्च धर्माणां व्यवस्था, तेन चाऽधिकारापूर्वप्रयुक्तत्वेऽपि सावान्तरापूर्वाणां करणानां भिन्नत्वात्, आज्य–औषध-सान्नाय्यधर्माणां

*अनुबन्धितयेति, मु. पु. पा. । †साधकानामिति ख. पु. पा. ।

नन्वेवं प्रत्येकं करणभावाश्रयणे करणान्तरनिरपेक्षाणां किमिति नियोगसिद्धिहेतुता न भवति ? नैवम् । यथाश्रुतकरणाधीनसिद्धित्वान्नियोगस्य । तत्र बहूनि करणानि तस्य श्रूयन्त इति, तथैव तस्य सिद्धिः । [1]अनेककरणसम्पाद्यताऽप्येकस्य दृष्टा । यथा—गमनस्याऽश्वेन, शिबिकया, रथेन वा गच्छति—इति । भिन्नस्तत्र [2]कारणावान्तरव्यापार इति यद्युच्येत । अत्राऽप्युत्पत्त्यपूर्वाण्यवान्तरव्यापारभूतानि भिन्नानि सङ्गिरामह एव । अत एव तद्भेदेन भिन्नत्वात्करणभावस्य [4]परमापूर्वप्रयुक्तत्वेऽप्याज्यौ-षध-सान्नाय्यधर्माणामसङ्करः । अपूर्वसाधननिवेशित्वाद्धर्माणाम्, तस्य च भेदात् ।

ये पुनर्यागादीनामपूर्वञ्चाऽन्तरा भावनां नाऽनुमन्यन्ते, तेषां यागादीनां करणभावो दुर्घटः । अव्यापाररूपत्वादपूर्वस्य, व्यापारसम्बन्धप्रभवत्वाच्च[3] करणभावस्य । गौणं करणत्वमिति चेत् ! कथं तर्हीतिकर्तव्यतासम्बन्धः । करणं हीतिकर्तव्यतया सम्बध्यते । [4]गौणञ्च न करणम्, न हि गौणे मुख्यधर्मस्सम्भवति ।

येऽपि[5] सर्वाख्यातेष्वेव भावनाभिधानमाहुः, तेषामपि मतमसमभ्यं न रोचते । न हि कार्यानभिधायिषु लडादिषु भावनाभिधाने प्रमाणमस्ति ।

वार्तिकमतनिराकरणम् ।

[6]यदपि किं करोति ? पचतीत्युत्तरदर्शनप्रमाणमुपन्यस्तम् । तदपि न

---

विलापनो-त्पवन-प्रोक्षणा-वहनन-दोहना-तञ्चनादीनां यथाद्वारमसाङ्कर्येणाऽनुष्ठानम्, इत्यमुमाशयं मनसि निधायाऽऽह—यदीत्यादिना, तस्य च भेदात् इत्यन्तेन ।

[1] अयमर्थो निरूपितचरः [ प्र. पं. पृ. २६० ]

[2] करणव्यापार इति. मु. पु. पा. । [3] सम्बन्धप्रसवत्वादिति मु. पु. ।

[4] गौण-मुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति न्यायेनेति शेषः ।

[5] भाट्टा आख्यातसामान्यस्य भावनावाचित्वं सङ्गिरन्ते । तन्मतमनूद्य निराकरोति, येऽपीति । अयमाशयः—कृत्युपहितमर्यादं हि कार्यं कृत्या व्याप्यम्, अतः कार्याभिधायिनामेव लिङादीनां भावनावाचित्वम्, न सर्वेषाम् । लडादिस्थले त्वाख्यातस्य सङ्ख्यामात्राभिधायित्वम् । विशेषस्तु सवृत्तेर्वाक्यार्थमातृकाया द्वितीये परिच्छेदे कणेहत्य विवेचितमिति नेह प्रतन्यते ।

[6] कुमारिलभट्ट आह—"अभिधाभावनामाहुरि"त्यादिना सर्वाख्यातानुवर्तिनी करोतिधातुवाच्या पुरुषव्यापाररूपा भावनाऽवगम्यत—इति । तथा च वार्तिकसन्दर्भः—

"किं करोति ? पचति, किमकार्षीदपाक्षीत्, किं करिष्यति ? पक्ष्यति. किं कुर्यात् ?

साधकम्। व्यापारविशेषप्रश्नो ह्ययं—किङ्करोतीति[1]। तत्र पचतीत्युत्तरेणाऽपि तदेव निर्दिश्यते। यत्तु व्यापारमात्रवाचिधातूच्चारणमात्रं न क्रियते, तत्र तावन्मात्रस्याऽपभ्रंशत्वात्। प्रत्ययान्तरोच्चारणे च प्रश्नेन सहाऽसम्बन्धः। अत एवाऽचेतनव्यापारे वर्तमानापदेशादीनां प्रयोगः। लिङादयस्तु चेतनमेवाऽधिकृत्य प्रयुज्यन्ते।

न चाऽचेतनेषु गौणः प्रयोगः, मुख्यत्वेऽप्यविरोधात्। कर्तृसङ्ख्यादिमात्रवचनत्वे च "रथो गच्छती"त्यादिषु मुख्यत्वापत्तेः। न चेदं वाच्यम्—संयोग-विभागावेव धात्वर्थः, व्यापारस्तु परिस्पन्दात्मा "रथो गच्छती"त्यादिषु लडर्थः, तेनाऽचेतनेऽपि मुख्य एव लडर्थ इति। धातूनामेव क्रियावाचित्वात्प्रथमोपनिपाती व्यापार एव धात्वर्थो [2]युक्तः, न जघन्यौ संयोग-विभागौ। किञ्चाऽनेकार्थताऽप्यापद्येत। केवलस्य संयोगस्याऽवाच्यत्वात्, संयोगजेऽपि संयोगे गच्छतीत्यप्रयोगात्, विभागजेऽपि विभागे प्रयोगानुपलब्धेः, न केवलस्य संयोगस्य, विभागस्य वा गमिवाच्यतेति, किमनेन मनीषिकानिर्मितेन बालजल्पितेन [3]बालजनमनोहारिणा निर्बन्धेन।

शालिकनाथेन कृतं कृतिनामुपकारसिद्धये सम्यक्।
समुदीक्ष्य वा गुरुमतं सम्यग्विषयकरणीयमिदम्[4] ॥२॥

इति महामहोपाध्यायश्रीमच्छालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायां विषयकरणीयं नाम द्वादशं प्रकरणं समाप्तम्।

---

पचेत्; किं न कुर्यात्? न पचेचिदि" [तं. वा. पृ. ३७८] ति। अयमंशोऽनूद्य निराक्रियते शालिकनाथेन—यदपीत्यादिना तदपि न साधकमित्यन्तेन।

"धात्वर्थव्यतिरेकेण यद्यप्येषा न लभ्यते।
तथाऽपि सर्वसामान्यरूपेणाऽन्याऽवगम्यते" [तं.वा.पृ.३८२]इति॥ तथा मण्डनमिश्रेण—
"सर्वधात्वर्थसम्बद्धः करोत्यर्थो हि भावना" इति। इदमेव मतं निराकरोति शालिकाचार्य इति ध्येयम्।

[1] किं करोतीति प्रश्नस्येति ख. पु. दृश्यते।

[2] अत्र 'धात्वर्थो व्यापारः' इत्यङ्गीकृत्य, गच्छतीत्यत्र संयोग इति ये वर्णयन्ति, तन्मतं प्रतिक्षिपन्नाह—**धात्वर्थो न युक्त** इति।

[3] बालजनेति. मु. पु. नाऽस्ति।

[4] शालिकनाथेन कृतं कृतिनामुपकारसिद्धये।
समवदाय गुरुमतं सम्यक्विषयमेतत्प्रकरणम्॥ इति. ख. पु. पा.।

# अथाऽङ्गपारायणे सन्निपत्त्योपकारकाङ्गनिरूपणपरः प्रथमः परिच्छेदः ।

प्रकरणार्थप्रतिज्ञा ।

[1]व्याख्याविकल्पसम्भवमङ्गान्यधिकृत्य संशयं छेत्तुम् ।
परमं प्रभाकरगुरोर्गम्भीरं भावमभिधास्ये[2] ॥१॥

अङ्गानां चातुर्विध्यम् ।

इह चतुर्विधमङ्गजातम्—जाति-गुण-द्रव्य-भावार्थात्मकम् । तत्र भावार्थात्मकमपि द्विविधम्—सन्निपत्त्योपकारकम्, आरादुपकारकञ्चेति ।

सन्निपातिनां चातुर्विध्यम् ।

तत्र सन्निपत्त्योपकारकं चतुर्विधं, साध्यभूतोत्पत्ति-प्राप्ति-विकृति-संस्कृति-भेदात् । [3]यथाक्रमं संयवन-दोहन-विलापन-प्रोक्षणादिरूपम् । तत्र संयवनेन प्रागभूतः पिण्ड उत्पद्यते । सदेव क्षीरं दोहनेन प्राप्यते । विलापनेन प्राचीं संहतावस्थामपबाध्य, इतरा द्रवावस्थाऽऽज्यस्योत्पद्यते । पार्थिवं ह्याज्यं गन्धवत्त्वात् स्वभावतस्संहतरूपमग्निसंयोगेन द्रवीभवति । तदाह भगवान्काश्यपः—"सर्पि-र्जतु-मधू-च्छिष्टानां पार्थिवानामग्निसंयोगात् द्रवत्वमद्भिस्सामान्यमि" [ वै. द. अ. २. आ. १. सू. ६ ] ति । तथा शाब्दे-

---

[1] अथेदानीं द्वादशलक्षण्यां व्यवस्थितक्रमायां प्राच्यां मीमांसायां प्रथमाध्यायप्रतिपाद्यां प्रमाणचिन्तां प्रायशोऽमृतकला—प्रमाणपारायणयोश्च समास-व्यासाभ्यां बहिरङ्गयुक्तिमूलतयाऽऽदावुपपाद्य, द्वितीयाध्यायगतामतिविप्रतिपत्त्यभावेन शास्त्रभेदचिन्तां शास्त्रपरिच्छेदे निरूप्य, अवशिष्टाध्यायदशकप्रतिपाद्यस्य प्रमेयजातस्य सङ्ग्राहकमङ्गपारायणन्नाम त्रयोदशप्रकरणमारभमाणस्तत्प्रतिपाद्यं सङ्क्षेपतः प्रतिजानीते—व्याख्येत्यादिना ।

[2] अङ्गविषये मीमांसकानामेव मतभेदो दृश्यते—आरादुपकारकम्, सन्निपत्त्योपकारकम्, उभयात्मकम्, अनुभयात्मकञ्चेति । तत्रोभयात्मकमाश्रयिकर्म, अनुभयात्मकास्तु-जाति-द्रव्य-गुणाः । ते हि कारके न कञ्चनाऽतिशयमादधते, नाऽपि फलापूर्वं क्रियामात्रनिर्वर्तका इति प्रकारान्तरम् । एतेनाऽङ्गं द्विविधम्—सिद्धरूपं क्रियारूपञ्चेति । तत्र सिद्धरूपम्—जातिगुणादि । क्रियारूपम्—सन्निपत्त्योपकारकमारादुपकारकञ्चेति भाट्टाभिमतो विभागो निगदव्याख्यातः ।

[3] अस्य विस्तरः प्रथमप्रकरणस्य ७ पृष्ठे टिप्पण्यां द्रष्टव्यः ।

रप्युक्तम्—"अग्निसंयोगेनाऽऽज्यं द्रवीभवतीति च्विप्रत्ययप्रयोगादि"ति। प्रोक्षणन्तु द्रव्यस्य न प्रागवस्थाध्वंसेन दशान्तरमादधाति—इति।

श्लोकश्चाऽत्र भवति—

पूर्वावस्थाप्रहाणेन दशान्तरपरिग्रहम्[1]।
विकारमाहुस्संस्कारं केवलातिशयोदयम्[2] ॥२॥ इति।

सन्निपातिनामङ्गानां लक्षणम्।

किं पुनरेषां चतुर्णामपि सन्निपत्त्योपकारित्वे लक्षणम्? [3]यत्-कारकविध्यपेक्षं फलं जनयति, तत्-संनिपत्त्योपकारकम्। यथा—कर्त्तरि स्नानम्,[4] कर्मण्यवघातादि, अधिकरणे दध्यानयनमित्याद्यूहनीयम्।

भाट्टमतेनाऽऽशङ्का।

तत्र सन्निपत्त्योपकारकाङ्गवाक्येषु केचित्पृथग्विधीनभ्युपगच्छन्ति। ते हि मन्यन्ते—यद्यत्र पृथग्विधयो नाऽभ्युपगम्येरन्, तदाऽधिकृताधिकारादङ्गतैवाऽवघातादीनां न स्यात्। न च द्रव्यसम्बन्धमुखेन प्रकृताधिकारापूर्वसम्बन्धादङ्गतासिद्धिः, व्रीह्यादिशब्दानामाकृतिवचनत्वात्। यद्यपि कार्यप्रत्यासन्नतया व्यक्तीनां तल्लक्षणार्थो जातिशब्दः, तथाऽपि व्यक्तिमात्रं लक्ष्यते, नाऽपूर्वविशेषसंबद्धा व्यक्तिः। न च प्रकृततयाऽऽग्नेयीवत्तदपूर्वसाधनव्यक्तिलक्षणावशेनाऽपूर्वसंबन्धः, यद्यप्याग्नेयीन्यायेन सन्निहितव्यक्ति-

---

[1] परिग्रह इति. मु. पु. पा।   [2] अतिशयोदय इति मु. पु. पा।

[3] अत्रेदं बोध्यम्—सन्निपत्योपकारकस्योत्पत्ति-प्राप्ति-विकृति-संस्कृतिरूपातिशयाधायकत्वं प्रायशो द्वितीयाप्रतिपन्ने कर्मण्येव, तथाऽपि प्रधानभूतकार्यशेषतया विनियुक्तेषु कर्त्रादिकारकान्तरेषु भवति तदित्यशयेनाऽऽह—यदिति। क्रमेणोदाहरति—"तीर्थे स्नाति" [तै. सं. ६. १. २. ५] इत्यादिना कर्ता संस्क्रियते। अवघातेन कर्मभूतेषु व्रीहिषु संस्कारो जायते। "प्रयाजशेषेण हवींष्यभिघारयति" [तै. सं. २. ६. ११. १२] इत्यनेन प्रयाजशेषस्य हविष्षु क्षारणेन प्रतिपत्तिलक्षणस्संस्कारो जायते। "यद्देवत्यः पशुः, तद्देवत्यः पुरोडाशः" इत्यादिना पशौ या देवता, पशुयागाङ्गभूतपुरोडाशयागेऽपि सैव देवतेति, पुरोडाशयागेन पशुयागीया देवता संस्क्रियत्ते। "अग्नेस्तृणान्यपचिनोति" [आप.श्रौ.सू.३.४.३] इत्यत्र-अग्नेस्सकाशात्तृणस्याऽन्यत्राऽपनयनेन अपादानेऽग्नौ संस्कारो जायते। "गोदोहनेन पशुकामस्य," "यजमानस्य याज्या" इत्यादौ षष्ठी, "तप्ते पयसि दध्यानयति" इत्यत्र दधिप्रक्षेपेणाऽधिकरणं पयस्संस्क्रियते। यद्यपि ग्रन्थकृता कर्तृकर्मा-धिकरणानां त्रयाणामेवोदाहरणानि प्रदर्शितानि। शिष्याणां बुद्धिवैशद्याय सर्वासां विभक्तीनामुदाहरणानि दर्शितानीति बोध्यम्।

[4] व्रतमिति. ख. पु. पा।

परिग्रहः, तथा स्वरूपेणैव तासामप्रकृतव्यक्तिपरिहारेण प्रतीतिः, न पुनरपूर्वविशेषसाधनतया, तस्य स्वरूपस्य लाक्षणिकत्वात्। न च लक्षितलक्षणायां कारणमस्ति[1]। तथाहि—जात्या व्यक्तिर्लक्ष्यते, व्यक्त्या च साधनविशेष इति लक्षितलक्षणा[2] कारणाभावादयुक्ता। अत एव "चाऽऽग्नेय्याऽऽग्नीध्रमुपतिष्ठते" [ तै. सं. ३. १. ६ ] इति सत्यपि प्रकृतपरिग्रहे, न ऋगन्तरेणाऽग्नीध्र[3]उपस्थीयते। अत एव च न तत्र विनियुक्तविनियोगविरोधः। कार्यान्तरसाधनतया चाऽऽग्नीध्रोपस्थाने ऽविनियोगात्। एवञ्च स्वरूपमात्रेणैवाऽवघातादीनां सम्बन्धान्नाऽपूर्वविशेषसम्बन्धसिद्धिः, दीक्षणीयावाङ्नियमवत्। यथा स्वावान्तरापूर्वसम्बन्धाद्वाङ्नियमो नाऽधिकारापूर्वानुप्रवेशी, तथाऽवघाताद्यपि स्यात्। ततश्चाऽधिकारापूर्वं प्रत्यवघातादीनामङ्गता न स्यात्। तदनङ्गत्वे च तत्प्रयुक्त्यभावादवघातादीनामनुष्ठानं न स्यात्। अतोऽवघातादिषूत्पत्तिनियोगोऽङ्गीकरणीयः। तस्मिन् खल्वाश्रिते, अधिकाराभावेन तस्याऽनुष्ठानानुपपत्तेरधिकारिणि कल्पयितव्ये, प्रकृताधिकारापूर्वेऽधिकृत एव प्रयाजादिष्वप्यधिक्रियत इति, नोपायो—पेयभावात्तदङ्गत्वसिद्धिः—इति।

तन्निरासः।

तदिदं तत्रभवानुपाध्यायो[4] न मृष्यति। तदाह "अनभिज्ञो भवान्विषय–नियोज्यानामि" [ बृ. टी. ३. १. ३ ] त्यत्र। अवघातादिषु शब्दतः, वस्तुस्वभावतश्च तुषकणविमोचनादि दृष्टम्, प्रोक्षणादिषु शब्दत एवाऽदृष्टश्च कार्यमङ्गीक्रियते। तत्र यदि नियोगोऽप्यपर आश्रीयेत कार्यभूतः, तदा कार्यद्वयमेकस्मिन् वाक्ये नाऽन्वीयते। न च यथा स्वर्गादिकं फलम्, तथाभूतमेतद्भवितुमर्हति। तस्य च नियोज्यविशेषणत्वेनाऽन्वीयमानत्वात्[5]। न च तुषकणविमोचनादि नियोज्यविशेषणम्, क्रियाफलत्वात्। यदेव नियोगफलम्, तदेव नियोज्यविशेषणतामनुभवति। साध्यविशिष्टो हि नियोज्यस्तदेव कार्यतया प्रतिपत्तुमर्हति, यदेव तस्य साध्यं साधयतीति, नियोज्यविशेषणस्य सिद्धिरवसीयते। यच्च क्रियाफलम्, न

[1] प्रमाणमस्तीति मु. पु. पा.।

[2] प्रकरणाभावादिति मु. पु. पा.। [3] उपस्थेय इति मु. पु. पा.।

[4] अत्र शालिकाचार्यस्साक्षात्स्वगुरुं प्रभाकरमिश्रमुपाध्यायशब्देन निर्दिशतीति बोध्यम्।

[5] अन्वयसम्भवादिति. मु. पु. पा.।

तन्नियोगात्सिध्यतीति, न तद्विशिष्टो नियोगे नियोज्यतामश्नुते। न च प्रतीततुषकणविमोचनादिकार्यत्यागो युक्तः, प्रतीतहानादेव।

ननु च नियोगाभिधायिलिङादिप्रयोगवशेन नियोगोऽपि प्रतीत एवेति तुल्यो दोषः। उच्यते। सन्निहिते विधौ विधिरवगम्यमानस्स एव तावदवगन्तुमुचितः। तत्र यदि तद्विषयानुप्रवेशिता विषयस्य न स्यात्, तर्हि भवेद्विध्यन्तरम्। अनुप्रविशति चाऽवघातादि प्रकृतविषयम्, तदर्थव्रीह्यादिसम्बन्धात्। [1]सन्निहिताधिकारनियोगपरतयैवाऽवहन्त्यादिभिः पदैरवघातादय उच्यन्ते, तथाभूतानां तेषां क्रिया-कारकभावोपदेशात्। यदि स्वरूपमात्रावस्थितैर्व्रीह्यादिभिस्सह सम्बन्धस्स्यात्, तदा तदधिकारसम्बन्धो न स्यादिति, तदीयसाधनविशेषलक्षणया व्रीह्यादिभिः[2] पदैरुपस्थापितोऽवघातादिभिरन्वीयते, न स्वरूपमात्रम्। एवञ्चोपदेशत एव यवेष्वप्यवघातादयस्सिद्धा भवन्ति, साधनभावस्याऽविशेषात्। अत एव चाऽवघातादयो नियोगसाधनतयाऽप्राप्ता एव विधीयन्ते। नियमस्तु प्रयोजनम्। यदि नियोगाङ्गतयाऽवघातादयो न विधीयेरन्, तदा पुरोडाशमात्रसिद्ध्यर्थतया नखविदलनाद्यप्याक्षिप्येत। नियोगाङ्गतया त्ववघातादिषु विहितेषु, तैर्विना नियोगसिद्ध्यनुपपत्तेः, नियमेन त एवाऽक्षिप्यन्ते। नियोगाङ्गता तु पक्षेऽप्यप्राप्ता, नियोगस्याऽलौकिकतया तदङ्गत्वस्याऽपि शब्दादन्यतोऽनवगमात्। नियोगाङ्गत्वाच्चाऽवघातादीनाम्, नियोगसम्बन्धः प्राप्तस्स लिङादिभिरनूद्यते।

अवघातादीनां नियोगविषयत्वशङ्का-निरासौ।

ननु यद्यवघातादीनां नियोगसम्बन्धोऽस्ति, कथं तर्हि तेषां नियोगाविषयत्वमुच्यते? इत्थमुच्यते—न नियोगसंबन्धितामात्रमुच्यते, यस्य नियोसिद्धिरेव कार्यम्, स विषयः। अवघातादीनाञ्च तुषकणविमोचनाद्यवान्तरकार्यङ्कुर्वतां नियोगाविषयत्वम्। तेन नियोगाविषयत्वम्, अङ्गता चेति सिद्धम्। विधेयास्त्ववघातादयो नियोगसिद्ध्यर्थतयोपादीयमानत्वात्। तदुक्तम्—"यत्तु तत्सिद्ध्यर्थमुपादीयते तद्विधेयमिति तन्त्रे व्यवहारः" [ब्र. २. बृ. टी. पृ. ३९] इति। तदेवं नियोगप्रत्यभिज्ञोपबृंहितसन्निधानमात्रेणैवाऽवघातादीनां नियोगाङ्गता, न पदार्थान्वयमुखेनेति सिद्धम्।

येषां पुनः पदार्थान्वयमुखेनाऽनुप्रवेशोऽभिमतः, तेषां प्रकरणाधीतस्य

[1] तथाहीति. मु. पु. पा.।

[2] अवस्थापितेति. मु. पु. पा.।

पाश्वदश्यस्य, अनारभ्याधीतस्य च साप्तदश्यस्य सामिधेनीसम्बन्धमुखेनाऽनुप्रवेशिनोरविशेषात्, उभयोरपि प्रकृतावेव निवेशः, विकल्पश्च स्यात् । सन्निधानमात्रेण तु प्रकरणाधीतस्य ग्रहणे शीघ्रं पाश्वदश्यमधिकारानुप्रविष्टमिति, तदवरुद्धे साप्तदश्यमधिकारविरुद्धं[1] नाऽनुप्रविशति । तेन विकृतावेव तस्य निवेशः ।

यदि सन्निधानतोऽधिकारविधावनुप्रवेशः, तर्हि पर्णतादीनामनारभ्याधीतानां कथमनुप्रवेशः ? उच्यते—जुह्वादयोऽव्यभिचरितक्रतुसम्बन्धा इति, तत्सम्बन्धमुखेन क्रतुसम्बन्धसिद्धिः, तत्सम्बद्धेष्वेव च जुह्वादिषु पर्णतादिसम्बन्धात् । अत एव "हिरण्यं भार्यमि" [तै. ब्रा. २. २. ५. २] ति स्वतन्त्रमेवाऽधिकारनियोगविषयः, हिरण्यस्य क्रतुसम्बन्धव्यभिचारात् ।

ये च पदार्थस्वरूपान्वयेऽनर्थकत्वापत्तेः, तत्सम्बन्धावस्थान्वयपूर्वकं ग्राहकान्वयमाहुः, तेषामिदमेव तावत्कथम्, आनर्थक्येन न भवितव्यम्—इति । वेदवाक्यत्वादिति चेत् ? वेदेनाऽनर्थकेन न भवितव्यमिति न राज्ञा[2] ज्ञापितम्, यस्याऽर्थो गम्यते, तस्य मा भूदानर्थक्यम्, अनवसीयमानार्थस्य त्वर्थवत्त्वं मनोरथमात्रविजृम्भितम् । पक्षान्तरालम्बनेनाऽप्यर्थवत्ता भवत्येवेति, वरं संनिधानवशेन नियोगाङ्गताभ्युपगमः । [3]सन्निधानमपि सम्बन्धे कारणमिति वाक्यविदः । सम्बन्धश्च गुणप्रधानभावमन्तरेण न स्यात् । तत्र च "न कार्यमन्यार्थं भवती"ति नियोग एव प्रधानम्, अङ्गमवघातादयः ।

सन्निधानविषये शङ्का-निरासौ ।

यदि चाऽनर्थक्येन नियोगसम्बन्धः, तदा च "तृच उत्तमः पर्यासः" इति [4]द्वादशाह एव न निविशते । क्रतुसम्बन्धो ह्यन्तः पर्यास उच्यते । तेन तत्र पदार्थमात्रसम्बन्धेऽप्यानर्थक्यं नाऽस्ति । तथा "हिरण्मय्यस्स्रुचो

[1] अधिकारविधौ नाऽनुप्रविशतीवर्तं मु.पु.पा. । [2] न चाऽऽज्ञापितमिति. मु. पु. पा. ।

[3] आकाङ्क्षा-योग्यता-सत्तीनां शाब्दबोधं प्रति हेतुत्वस्याऽनुषङ्गाधिकरणादौ साधितत्वादित्याशयेनाऽऽ-सन्निधानमिति । वाक्यविदः—मीमांसका इत्यर्थः ।

[4] द्वादशाहे श्रूयते "स्तोत्रीया-नुरूपौ तृचौ भवतः । वृषण्वन्तस्तृचा भवन्ति । तृच-उत्तमः पर्यासः" इति । अस्य वाक्यस्याऽयमर्थः—प्राकृतानां बहिष्पवमानस्तोत्रगतानां त्रयाणां तृचानां स्तोत्रीयः, अनुरूपः, पर्यासश्चेति त्रीणि नामानि भवन्ति । अत्राऽतिदेशेन प्राप्तयोरनुरूप-पर्यासयोर्स्तृचयोर्मध्ये वृषण्वच्छब्दयुक्तास्तृचाः कर्तव्या इति । पर्यासशब्दोऽन्तवाची । लोके च

भवन्ति" [ आप. श्रौ. सू. ८. ५. २६ ] इति स्रुचामव्यभिचरितक्रतुसम्बन्धानां धर्मविधेरानर्थक्यं नाऽस्तीति, न प्रकृताधिकारसम्बन्धस्स्यात् । किञ्चाऽनर्थक्यपरिहारायऽपूर्वसबन्धोऽभ्युपेतः । किमिति न सन्निहितापूर्वसम्बन्धस्समाश्रीयते । यदि सन्निधानमकारणम्, ततश्च "अग्नेस्तृणान्यपचिनोति" [आप. श्रौ. सू. ३. ४. ३.] इति नाऽग्निहोत्रे एव व्यवतिष्ठेत । अथ सन्निधानविशेषात्तदपूर्वसम्बन्धिनामग्न्यादीनां परिग्रहः, तदा वरं सन्निधानविशेषात्तदपूर्वसम्बन्ध एवाऽस्तु, किं परम्पराश्रयणेन । यथा क्रियाकारकभावेनाऽन्विताभिधानम्, तथा प्रयोजन-प्रयोजनिभावेनाऽपि ह्यभिधानं लोके प्रतिपन्नम् । न हि व्रीह्यादयः प्रयोजनतां प्रतिपत्तुमर्हन्ति—इति, तत्परित्यागेनाऽपूर्वेणैव सह प्रयोजन–प्रयोजनिभावेन सम्बन्धः ।

अवान्तरापूर्वे शङ्का-तन्निरासौ ।

ये चाऽवघातादिष्ववान्तरापूर्वाणि सङ्गिरन्ते, तेषां मते "प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ती"ति प्रोक्षणं दीक्षणीयावाङ्नियमवदवान्तरापूर्वप्रयुक्तं स्यात् । ततश्च त्रैधातवीयामिव वाङ्नियमः, नखनिर्भिन्ने चरौ प्रोक्षणं न[1] स्यात्, तत्प्रयोजकं रूपं तत्र नाऽस्ति—इति । न चैतद्वाच्यं—तुषकणविमोचनादिकार्यमुखेनाऽधिकारापूर्वमेव प्रयोजकमिति, वाङ्नियमेऽपि तथा प्रसङ्गात्, दीक्षणीयायामपि क्रत्वपेक्षितत्वोत्पत्तिरपि[2] कार्यमस्तीति, ज्योतिष्टोम एव प्रयोजको वाङ्नियमस्य स्यात् । ततश्च [3]दीक्षितत्वोत्पादिकायां त्रैधातवीयायामपि स्यात् ।

ननु यद्यवघातादिष्ववान्तरविधयो नेष्यन्ते, कथं[4] तर्हि "न चाऽविहितमङ्गं भवति" [ शा. भा. अ. ३, पा. ४. अ. १३. ] इत्यङ्गेष्वेवाऽन्तरविध्यभ्युपगमो भाष्यकारस्य ? उच्यते । आरादुपकारकेऽनृतवदनप्रतिषेधे चाऽवान्तरविधिरङ्गीकृतः, तद्व्यतिरेकेणाऽङ्गत्वानुपपत्तेः । स्वरूपेण ह्यणि-

---

नदीपर्यासः, क्षेत्रपर्यास इत्यादौ अन्तरूपेऽर्थे प्रयोगदर्शनात् । तथा च जैमिनिसूत्रं "पर्यासश्चाऽन्ताख्यः," [ मी. द. ५-३-८ ] इति । तथा च पर्यासस्य क्रतुसम्बन्धेऽप्यानर्थक्याभावान्न नियोगसम्बन्धः कल्पयितुं शक्यत इति—प्रघट्टकार्थः ।

[1] न स्यात्तथेति मु. पु. पा. । [2] इति तदधिकार्यं नाऽस्तीति मु. पु. पा. ।

[3] दीक्षणीयेति मु. पु. पा. ।

[4] कर्त्रधिकरणे भाष्यकारेण शबरस्वामिना न चाऽविहितमङ्गं भवती" [ मी. द. ३-४-१३ ] त्युक्तम् । जञ्जभ्यमानाधिकरणे [ मी. द. ३-४-१४ ] चैवं सति पुरुषप्रयत्नो

कत्वात्कर्मणाम्, उपकारजननकाले तदनवस्थानादङ्गत्वं न घटत इति, इहैव वक्ष्यामः। अत एव जञ्जभ्यमानमन्त्रवचने सन्निपत्योपकारिणि "पुरुषप्रयत्नश्रवणमनुवादः" इति वदति भाष्यकारः। यत्र ह्यवान्तरविधिरस्ति, तत्र पुरुषयत्नश्रवणं नाऽनुवादः। यदेव हि तदवान्तरापूर्वम्, तत् कार्यतया लिङादिवाच्यम्। न च कृतिरूपपुरुषप्रयत्नानभिधाने कृत्यवच्छिन्नस्वभावकार्याभिधानोपपत्तिरिति, तदर्थं कृतिरूपपुरुषप्रयत्नाभिधानं युक्तमिति, नाऽविवक्षितः पुरुषप्रयत्नः। एवं नियोगप्रत्यभिज्ञोपबृंहितसंनिधिसमाम्नानवशादवघातादयोऽवहन्त्यादिपदैरधिकारनियोगैदमर्थ्येनाऽन्वयिनोऽवगतास्सन्तस्तदन्वितावस्थैर्व्रीह्यादिभिस्सह क्रिया–कारकभावेनाऽन्वितास्तान् प्रति शेषतां प्रतिपद्यन्ते।

स्वमतेन श्रुत्यादीनां विनियोजकत्वकथनम्।

किं पुनरवघातस्य व्रीह्यादिशेषत्वे प्रमाणम्? कार्यमिति ब्रूमः। तथा हि—न कार्यमन्यार्थं भवति, कार्यत्वादेव। तेन यत् कार्येण सम्बद्धम्, तत्तावत्तदर्थम्। यदपि च कार्यैदमर्थ्यापन्नेन संबद्धं, तेनाऽपि सह यस्य

---

ऽनुवादो भविष्यतीत्युक्तम्। अनयोर्भाष्यवचनयोर्विरोधमाशङ्क्य, आद्यस्य विनियोगविधिविषयत्वेन, द्वितीयस्य च प्रयोगविधिविषयत्वेन विरोधपरिहारो ऽभिहितो भट्टमतानुयायिभिः।

तदिदं पराभिमतं भाष्ययोजनं प्रकरणपर्यालोचनेनाऽनुपपन्नमिति मन्वानस्स्वमतेन भाष्यवचनद्वयस्य तात्पर्यं वर्णयितुं पातनिकामारचयति—कथं तर्हीति। अयमत्र विषयपरिशुद्धिः। तथाहि—प्राभाकरमते "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यादौ लिङ्वाच्यमधिकारापूर्वमेव "व्रीहीनवहन्ती"त्याद्यङ्गविधिवाक्यगतेन लिङाऽनूद्यते। परन्त्वारादुपकारकेष्वङ्गेष्वपूर्वान्तरमङ्गीक्रियते। "न चाऽविहितमङ्गी भवतीति," भाष्यवाक्यस्य कर्त्रधिकरणस्थत्वेनाऽनृतवदनप्रतिषेधस्याऽऽरादुपकारकत्वेनाऽस्याऽऽरादुपकारकाङ्गविषयत्वमेव युक्तम्। "एवं सति "पुरुषप्रयत्न श्रवणमनुवाद इति भाष्यन्तु जञ्जभ्यमानाधिकरणगतम्। तस्याऽधिकरणस्य "प्राणो वै दक्षः, अपानः क्रतुः, तस्माज्जञ्जभ्यमानोऽनुब्रूयान्मयि दक्ष क्रतू इति प्राणापानावेवात्मनधत्ते" [तै. सं. २-५-२-४] इति वाक्यं विषयः। तस्याऽयमर्थः-दर्शपूर्णमासक्रतुमध्ये जञ्जभ्यमानः—जृम्भां कुर्वन् यजमानः "मयि दक्षक्रतू" इति मन्त्रमुच्चारयेत्। तेन प्राणापानावात्मनि धारयतीत्यर्थः। तथा चाऽनुवादप्रदर्शनपरभाष्यस्य जञ्जभ्यमानाधिकरणस्थत्वेन सन्निपत्योपकारकविषयत्वस्योचितत्वात्। सन्निपत्योपकारकाङ्गविधिषु प्रत्ययः प्रधानविधिवाक्यार्थस्य नियोगस्याऽनुवाद इति सिद्धान्तात्, प्रकरणानुरोधाच्च। तथा च भिन्नविषयत्वेनैवोभयोर्भाष्ययोर्विरोधपरिहारवर्णनं युक्तमित्याशयो बोध्य इति। अस्य उपन्यासनिरासौ न्या०रत्न०मा० [पृ. २१५] द्रष्टव्यौ।

साध्यसाधनभावः, तदपि तदर्थमेव, कार्यैदमर्थ्यापन्नस्याऽन्यैदमर्थ्ये प्रमाणाभावात्। एवं [1]सर्वेषु शेष-शेषित्वं वेदितव्यम्।

यदि [2]कार्यतयैवैदमर्थ्यावगमः, कथं तर्हि श्रुत्यादीनां विनियोगकारणत्वम्? द्वारविशेषसमर्पकतया। कार्यविशेषकरतया च शेषश्शेषिणि शेषतामापद्यते, नाऽन्यथा, अकिञ्चित्करस्य शेषत्वानुपपत्तेः। तत्र श्रुतिः "व्रीहीनवहन्ती"ति द्वितीयात्मिका व्रीह्यादिगतं तुषकणविमोचनादि समभिव्याहृतक्रियासाध्यभूतं समर्पयन्ती [3]नियोगकरणतामनुवदति, न पुद्वीतीयैव शेषितां व्रीह्यादीनाम्, अवघातस्य च शेषतामाह। "गां ददाती"त्यादिषु व्यभिचारात्। क्रियाजन्यफलभागिता हि सर्वत्राऽव्यभिचारिणी द्वितीयावाच्या, न शेषिता, व्यभिचारित्वात्। क्रियाजन्यस्य फलस्य भागि कारकमेव कर्म। तच्च किञ्चिदीप्सितम्, भूत-भाव्युपयोगात्। किञ्चिच्चाऽनीप्सितम्, अनुपयोगात्। *अनेनैव विशेषेण भगवतः पाणिनेस्सूत्रद्वयम्—"कर्तुरीप्सिततमं कर्म" [पा. सू. १. ४. ४९] "तथायुक्तञ्चाऽनीप्सितमि" [पा. सू. १. ४. ५०] ति च।

येषां मते शेषितैव द्वितीयार्थः, तेषां मते "सुवर्णं भार्यमि"ति क्रतुधर्म एव स्यात्। श्रुतानुगुणाधिकारानुप्रवेशितैव न्याय्या यतः, न स्वतन्त्राधिकारकल्पना, अवगतसुवर्णशेषित्वत्यागप्रसङ्गात्। क्रियाजन्यफलभागित्वे तु शब्दार्थे, न श्रुतहानिरिति, [4]स्वतन्त्रकर्त्रवगमात् [5]तत्कारणभूताधिकारकल्पनैव न्याय्या। प्रकृतनियोगाप्रत्यभिज्ञानान्नियोगान्तरे स्थिते प्रजापतिव्रताधिकारकल्पनेवाऽधिकारकल्पनैवोचिता—इति।

---

[1] सर्वेषां चेति मु. पु. पा।

[2] कार्यत एवेति मु. पु. पा।

[3] कारणतामनुभवतीति. मु. पु. पा।

[4] कर्तृतावगमादिति मु. पु. पा।

[5] तत्कारणेति मु. पु. पा।

* अत्रेदं बोध्यम्—"कर्मणि द्वितीये"ति पाणिनिस्मरणात् कर्मत्वं द्वितीयार्थ इति फलति। तत्र पार्थसारथिस्साध्यत्वं द्वितीयार्थ इति मन्यते स्म सम्मार्गाधिकरणे।

वार्तिकव्याख्याता सोमेश्वरभट्टस्तु—ईप्सितकर्मत्वं द्वितीयार्थः, "कर्तुरीप्सिततमं कर्मे"ति स्मरणात्। अनीप्सितकर्मत्वे निरूढलक्षणेति प्रतिपादयाञ्चकार। "तथायुक्तञ्चाऽनीप्सितमिति," स्मरणात्।

लिङ्गस्योदाहरणम् ।

[1]स्नानादिषु वस्तुस्वभावपर्यालोचनया लिङ्गात्कर्तृसंस्काररूपकार्याङ्गीकारः । तेन कर्तरि शेषता स्नानादीनाम्, सामर्थ्यात् । सामर्थ्यमात्रञ्च लिङ्गम्, नाऽभिधानसामर्थ्यमेव ।

वाक्यस्योदाहरणम् ।

"अभिक्रामं जुहोती" [ तै. सं. २. ६. ६. १ ] त्यादिषु वाक्यादभिक्रमणस्य होमः कार्यतया प्रतीयत इति, वाक्येनाऽयं विनियोगः ।

[2]सन्निपत्त्योपकारकाणान्तु न प्रकरणेन विनियोगस्सम्भवति । येषां प्रकरणं द्वारं कल्पयति, तेषां प्रकरणाधीनो विनियोगः ।

---

भवदेवस्तु—क्रियत इति व्युत्पत्त्या मनिन्प्रत्ययान्तः कर्मशब्दः । चेतनस्तदेव करोति यदीप्सिततमम्, इच्छापूर्वकत्वात्क्रियायाः । अतस्तदेव मुख्यं कर्म । अत एव पाणिनिस्ससस्मार, "कर्तुरीप्सिततमं कर्मे"ति । अन्येषामनीप्सितादीनां क्रियाव्याप्यत्वमात्रपरः कर्मशब्दो द्वितीयाप्रयोगार्थं प्रयुक्त [ तौ. म. ति. पृ. २२४ ] इति । अत ईप्सिता–नीप्सितसाधारणं कर्मत्वमित्येऽऽह ।

कर्मणो द्वैविध्यं भाट्टचिन्तामणौ [ पृ. ९६. ९७ ] विस्तरेण द्रष्टव्यम् । इदमेव खण्डदेवाचार्येण समादृतम् ।

तथाहि—खण्डदेवाचार्यस्तु—कर्मत्वे शक्तिः, ईप्सिता–नीप्सितरूपविशेषस्य प्रमाणान्तरलभ्यत्वात्, अनन्यलभ्यश्शब्दार्थ इति न्यायात् । व्याप्यत्वापरपर्यायकर्मत्वस्य क्रियाजन्यचतुर्विधफलान्यतमाश्रयत्वस्य, तत्समनियताखण्डोपाधेर्वा द्वितीयावाच्यत्वम् । तथा युक्तञ्चाऽनीप्सितमिति च सूत्रस्य यथा न वैयर्थ्यम्, तथा सम्मार्गाधिकरणे [ २. १. ५. मी. कौ. पृ. ७५ ] विस्तरेण द्रष्टव्यम् ।

प्राभाकरमीमांसकास्तु—ईप्सिता-नीप्सितोभयसाधारणं क्रियाजन्यफलभागित्वमेव कर्मत्वं द्वितीयार्थ इति स्वीकुर्वन्ति । "ग्रामं गच्छति देवदत्त" इत्यादौ तद् व्यक्तम् । यद्यप्यपादानस्याऽपि विभागलक्षणक्रियाजन्यफलभागित्वेन कर्मत्वं प्रसजति । तथाप्युत्पाद्या-प्य-विकार्य-संस्कार्य भेदेन कर्म चतुर्विधम् । उत्पत्ति–प्राप्ति–विकृति–संस्कृतिरूपफलचतुष्टयान्यतमभागित्वमेव कर्मत्वम्, अतो नाऽन्यत्कर्म । नन्वेवं सति "गां गोपालो दोग्धि" इत्यत्रोत्पत्यत्त्यान्यतमभागित्वाभावाद् गौरकर्मत्वमिति नाऽऽशङ्कनीयम् । तस्याश्च कर्मत्वं "अकथितञ्चे"त्यनेनोक्तम् । अत ईप्सिता–नीप्सितसाधारणं कर्मत्वमिति । अस्मिन्नेव पक्षे पाणिनेस्स्मरणद्वयं सार्थकमित्यादिभावं मनसि निधायाऽऽह—क्रियाजन्यस्य फलस्य भागि कारकं कर्मेत्यादिना ।

साध्यापरपर्यायशेषित्वं द्वितीयार्थ इति वादिनां मतं पराकरोति—ये हीत्यादिना ।

[1] श्रुतेर्द्वारशेषतामभिधाय, लिङ्गस्य द्वारशेषतां दर्शयति-स्नानादिष्विति ।

[2] अङ्गानि क्रियारूपाणि द्विधा—सन्निपत्योपकारका-रादुपकारकभेदेन । सन्निपत्योपकारिणां श्रुत्यादिभिर्विनियोगः, आरादुपकारकाणां प्रयाजादीनां प्रकरणेन विनियोग इति

प्रकरणनिरूपणम् ।

इतिकर्त्तव्यताकाङ्क्षा प्रकरणम् । तया च करणोपकारः कार्यभूतः कल्प्यते । न चाऽसौ सन्निपत्योपकारिणां द्वारमिति, न तेषां प्रकरणेन विनियोगः ।

स्थान-समाख्ययोस्सन्निपातिषु न विनियोजकत्वम् ।

स्थान-समाख्ययोरपि सन्निपत्योपकारकाणि प्रति न कार्यकल्पकतेति, न विनियोगकारणत्वम् । एवं[1] सन्निपत्योपकारकाणां नियोगैदमर्थ्यम-भिधानतः, विनियोगतश्च कारकैदमर्थ्यम्, उपादानतश्चाऽधिकारनियोग-करणीभूतयागाद्यैदमर्थ्यम् ।

[2]नियोगाक्षेपो ह्युपादानम्, तत्कृतं प्रोक्षणादेः क्रत्वर्थत्वम् । यदि तदीयकरणोपकारकता प्रोक्षणादेर्न स्यात्, तदा केनाऽपरेण प्रकारेण तदन्वि-तनियोगप्रतीतिर्निर्वहतीति, नियोग एव तदन्वितः प्रतिपन्नस्तस्य करणोप-कारकतां कल्पयन् करणैदमर्थ्यमाक्षिपतीति, तत्कृतमेव प्रोक्षणादेः क्रत्वर्थ-त्वम् । विनियोगात् पुनः कारकैदमर्थ्यमेवेति ।

कथं पुनस्तेषां करणोपकारकता ? तुषकणविमोचनादिकार्यपरम्परादा-नेनोपकार्यविशेषाधायकतया ।

नन्वेवं सति कारकानुप्रवेशिनामवघातादीनां [3]करणशरीरविशेषाधाय-कतया करणोपकारकत्वं, प्रयाजादीनान्त्वव्यतिरिक्तकरणानुग्रहजनकतेति, न सर्वैरेक उपकारः क्रियते । ततश्च सर्वैरेकेतिकर्तव्यतेति न स्यात् । उच्यते । उपकार्यविशेषायत्तसिद्धित्वादुपकारसिद्धेरुपकार्यविशेषस्योपकारं[4] जनयितुमलम्, नाऽन्यस्येत्यवघातादिविनियोगादवगम्यते । एवञ्चोपपन्न-मवघातादेरपि प्रयाजादिभिस्सह करणोपकारजनकत्वम् ।

---

भाट्टमीमांसकानामभ्युपगमः, प्राभाकरास्तु-सन्निपत्योपकारिणां ग्राहकेण ग्रहणम्, आरादुप-कारकाणां प्रकरणेन विनियोग इति स्वीकुर्वन्ति । तत् विवक्षुस्सन्निपत्योपकारिणां प्रकरणवि-नियोज्यतां विघटयति—सन्निपत्योपकारकाणामित्यादिना ।

[1] नियोगापरपर्यायस्याऽधिकारापूर्वस्य ग्राहकत्व-विनियोजकत्व-प्रयोजकत्वाख्यास्त्रिस्रोऽ-वस्थाः क्रमेण भवन्ति । ता निर्दिशति—एवमित्यादिना ।

[2] विनियोगेति मु. पु. पा. ।

[3] करणशरीरविशेषोपायकतयेति ख. पु. पा. ।

[4] विशेषस्योपकारकमिति. मु .पु. पा. ।

सन्निपातिनामारादुपकारकत्वशङ्का-निरासौ ।

कस्मात् पुनः प्रयाजादिवदवघातादयोऽप्युपकारका नाऽभ्युपेयन्ते ? प्रकृताधिकारनियोगप्रत्यभिज्ञानात् । सम्भवति चाऽत्र नियोगैक्यं तदीय-व्रीहिसंस्कारमुखेनेत्युक्तम्[१] । प्रयाजादितुल्यत्वे ह्यवघातादीनामङ्गीक्रियमाणे, उत्पत्तिनियोगान्तरमाश्रयणीयमिति वक्ष्यामः[२] ।

तत्र सङ्ग्रहश्लोकाः—

सन्निधानवशोत्पन्ना प्रकृतापूर्वगामिनी[३] ।
मा बाधि [४]प्रत्यभिज्ञेति तदनुग्रहकाङ्क्षया ॥३॥
अवहन्त्यादिभिश्शब्दैः कार्यान्वितपदार्थकैः ।
प्रकृतापूर्वसम्बद्ध[५] एव स्वार्थोऽभिधीयते ॥४॥
तथा सति तदीयत्वं तेषां रक्षितुमिच्छता ।
व्रीह्यादिभिः पदैर्युक्ता कार्यसाधनलक्षणा ॥५॥
क्रियाकारकसम्बन्धोऽप्यतस्साधनगोचरः[६] ।
शेषिभावोऽपि[७] तस्यैव श्रौतद्वारानुसारतः ॥६॥

इति महामहोपाध्यायश्रीमच्छालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिका-यामङ्गपारायणे सन्निपत्योपकारकाङ्गनिरूपणपरः प्रथमः परिच्छेदस्समाप्तः ॥

---

[१] गुणेनेति मु. मु. पा. ।

[२] तथाऽप्यधिकारनियोगं प्रति तेषां क्षणभङ्गिनामवान्तरापूर्वण्याजनयतामङ्गता नोपपद्यत इति पश्चाद्यदधिकारापूर्वाङ्गभावोपपादनायाऽण्यवान्तरापूर्वाणि लिङ्गाऽभिधेयान्युपेयन्त इत्यादिना द्वितीयपरिच्छेदे [ प्र. पं. पृ. ४७० ] इति शेषः ।

[३] भाविनीति मु. पु. पा. ।

[४] भावाधिष्ठात्व इति मु. पु. पा. ।

[५] सम्बन्ध इति. मु. पु. पा. ।

[६] ह्यतत्सा इति मु. पु. पा. ।

[७] बोध इति मु. पु. पा. ।

# अथाऽङ्गपारायणे आरादुपकारकाङ्गनिरुपणपरः

## द्वितीयः परिच्छेदः ।

प्रकरणार्थप्रतिज्ञा ।

[1]आरादुपकारकं द्विविधम्—अदृष्टप्रयोजनं, दृष्टा-दृष्टाप्रयोजनञ्च । तत्राऽदृष्टप्रयोजनं "समिधो यजती" [श. ब्रा. २. ६. १. १] त्यादि । अस्य कारकगतं किञ्चित् प्रयोजनं न दृश्यते ।

आरादुपकारकविषय एकदेशिमतम् ।

[2]तत्र केचित्तावदधिकारापूर्वं प्रत्यङ्गतासिद्ध्यर्थमेषामधिकृताधिकारमिच्छन्ति । ते हि मन्यन्ते—उत्पत्तिनियोगास्तावत् समिदादिषु निर्विवादं सम्मताः । न च नियोगो नियोज्यमन्तरेणाऽभिधीयते । तथा सति विश्वजिदादिषु नियोज्यपरिकल्पना न स्यात् । तत्र च नियोज्ये कल्पयितव्ये, यद्यनुषङ्गः फलपदस्य कल्प्येत, यदि वा विश्वजिन्यायेनाऽधिकारी कल्प्येत, तदाऽधिकारापूर्वस्येतिकर्तव्यताकाङ्क्षा न [3]परिपूर्यते । न परमापूर्वाधिकृते त्वधिकारिणि सति, उपायो-पेयभावो गम्यते । न ह्यन्यथाऽधि-

---

[1] अत्रेदमाकूतम्—अङ्गं द्विविधम्—सिद्धरूपं क्रियारूपञ्चेति । तत्राऽद्यं जात्यादिकमिति प्रागवादिष्म । द्वितीयं क्रियारूपम्—गुणकर्म, प्रधानकर्म चेति । गुणकर्म त्रिविधम्—दृष्टार्थम्, अदृष्टार्थम्, दृष्टादृष्टार्थञ्चेति । दृष्टार्थमवघातादि, अदृष्टार्थं प्रोक्षणादि, दृष्टादृष्टार्थं पशु पुरुडोशो-त्तमप्रयाज—स्विष्टकृदादि । इदमेव चाऽऽश्रयिकर्मेत्यभिधीयते । इदं त्रिविधं गुणकर्म सन्निपत्त्योपकारकमिति व्यवह्रियते भाट्टैः ।

प्राभाकरमीमांसकास्तु—सन्निपत्त्योपकारकं चतुर्विधं कर्मेति वदन्तः, आरादुपकारकं अदृष्टार्थम्, दृष्टादृष्टार्थञ्चेति द्वेधा वर्णयन्ति । आश्रयिकर्मविषये भाट्टानां प्राभाकराणाञ्च कियान्भेदो लक्ष्यते । तस्योभयार्थत्वेऽपि दृष्टस्य प्राधान्यमभ्युपेत्य, अदृष्टस्योपसर्जनतां सन्निपत्त्योपकारकापरपर्याये गुणकर्मण्यन्तर्भावयन्ति भाट्टास्संस्कारसद्ध्रीचीनेन्द्रियजन्यस्याऽपि प्रत्यभिज्ञानस्याऽनुभवैकपक्षपातिभिरनुभवपक्षकुक्षिनिक्षेपवत् । प्राभाकरमीमांसकास्तु-अदृष्टस्य प्राधान्यमभ्युपगम्य, दृष्टस्य गौणतामिच्छन्त आरादुपकारके कर्मणि निवेशयन्तीति बोध्यम् । इतोऽप्यधिकमग्रे वक्ष्यामः ।

[2] आरादुपकारकाङ्गविषये पश्चात्स्वसिद्धान्तं प्रदिदर्शयिषुरादौ दर्शपूर्णमासयोरधिकृतस्य प्रयाजादावधिकार इति वदतां भाट्टमीमांसकानां मतं दूषयितुमवतारयति—"तत्रेत्यादिना•••इतिकर्तव्यतात्वेनैव सम्बन्ध" इत्यन्तेन ।

[3] परिपूर्णेति मु. पु. पा. ।

कृताधिकारभाव उपपद्यते । यस्य हि परमापूर्वं साध्यम्, स परमापूर्वाधिकारी, तेन यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यादौ स्वर्गकामे साध्य-स्वर्गविशिष्टेऽधिकारिणि स्वर्ग-यागयोरुपायो-पेयभावः, तथेहाऽपि समिदादि-परमापूर्वयोः । तत्र "न च कार्यमन्यार्थमि"ति न्यायेनाऽधिकारनियोगै-दमर्थ्यमेव समिदादीनामवसीयते । तदिदं ग्राहकग्रहणमिति गीयते । तत्रोत्पत्तिशिष्टाग्नेयादिकरणावरुद्धे परमापूर्वे प्रकारान्तरेणैदमर्थ्यानुपपत्तेरिति-कर्तव्यतात्वेनैव सम्बन्धः—इति ।

तन्निरासः ।

तदिदमनुपपन्नमिति प्राभाकराः । [1]तथाहि—यदि सर्वस्य नियोगस्य नियोज्यान्विताभिधानमाश्रीयते, [2]तर्हि राजसूयिकानामिज्याविशेषाणा-मुत्पत्तिनियोगानामपि साधिकारत्वं स्यात् । ततोऽभिषेचनीयतन्त्रमध्ये पठितानां विदेवनादीनामभिषेचनीयावान्तरापूर्वप्रकरणेन तदङ्गतैव स्यात् । अथोच्येत—नाऽदृष्टार्थो नियोगो नियोज्यान्वितोऽभिधीयते, किन्त्वनुष्ठान-लब्धये । अभिषेचनीयादयश्च परमापूर्वप्रयुक्त्यैव लब्धानुष्ठानाः, परमा-पूर्वस्याऽपि तद्विषयत्वात्, तेनैव स्वसिद्ध्यर्थं विषयीभूतास्विज्यासु प्रयुज्य-मानासु तद्विषयोत्पत्तिनियोगा अपि लब्धसिद्धयो न स्वसिद्धये नियोज्यान्त-रमाकाङ्क्षन्ति—इति । तर्हि प्रयाजादिनियोगा अपि विनियुक्तविषयत्वा-न्नाऽधिकारान्तरमपेक्षेरन् । स्यान्मतं—विनियोग एव तेषामधिकृताधिकार-मन्तरेणाऽनुपपन्नः—इति ।

तदसत्—नियोगैदमर्थ्यमात्रेण प्रथमं शब्देनाऽवगताधिकारसम्बन्धानां प्रकरणेनेतिकर्तव्यतात्वेन विनियोगात् । तथाहि—अधिकारविधिसन्निधौ "समिधो यजती"त्यादयो निरधिकारा एव तावदाम्नायन्ते । तत्र योऽसावधिकारविधिः, स एव प्रयोजनभूतो निरधिकारैस्समिदादिभिस्स्वयम-प्रयोजनभूतैरन्वितस्स्वशब्देनाऽभिधीयते[3] । समिदादिवाक्यानि च द्रव्य-देवताविशिष्टानि यागस्वरूपाण्येव सन्निधापयन्ति, सन्निधानमात्रेण तैस्सहाऽ-धिकारनियोगस्याऽन्वयः । यदि च सन्निधानं नाऽऽद्रियेत, तदा समिदा-

---

[1] तथाहीति मु. पु. नाऽस्ति ।
[2] तत्रेति मु. पु. पा. ।
[3] स्वेति मु. पु. नाऽस्ति ।

दिष्वपि किमिति परमापूर्वाधिकारी कल्प्यते । तदेवं सन्निधानमात्रतस्सिद्ध-मधिकारैदमर्थ्यं[1] कथं भवतीत्यपेक्षा । तथा साध्यभूतस्याऽधिकारापूर्वस्य च कथमित्याकाङ्क्षा । तेन करणोपकार एव तेषां द्वारमाश्रीयते । तत्र यदैद-मर्थ्येनाऽन्विताभिधानम्, तद्ग्राहकग्रहणम् । यच्च तेषां करणोपकारद्वार-परिकल्पनम्, स एव प्रकरणविनियोगः—इति ।

अवान्तरापूर्वापह्नवशङ्का-परिहारौ ।

नन्वेवमवान्तरापूर्वाण्यपह्नुतानि? नाऽपह्नोष्यामहे। यद्यपि प्रथमं लिङा-दयो न व्यतिरिक्तं नियोगं प्रतिपादयितुमीशते, "व्रीहीनवहन्तीत्यादि"ष्विव शङ्क्यमानाधिकारनियोगानुवादकत्वात् । तथाऽप्यधिकारनियोगं प्रत्येषां क्षणभङ्गिनामवान्तरापूर्वाण्यजनयतामङ्गता नोपपद्यत इति, पश्चाद्यदधिकारा-पूर्वाङ्गभावोपपादनायाऽऽश्रयणीयान्यवान्तरापूर्वाणि लिङाऽभिधेयान्युपेयन्ते । तदेतद्दीक्षणीयावाङ्नियमाधिकरणे [ मी. द. ६. १. २. ] व्युत्पादितम् । नन्वेमाश्रयिष्ववान्तरापूर्वाभ्युपगमो यथा, तथाऽत्रैव वक्ष्यामः ।

यानि [2]चाऽवान्तरापूर्वाणि, तानि शब्देनाऽङ्गभूतान्यधिकारापूर्वं प्रत्यु-पनीयन्ते ।

दीक्षणीयादिष्ववान्तरापूर्वशङ्का-परिहारौ ।

नन्वेवं तर्हि दीक्षणीयादिषु वाङ्नियमस्याऽवान्तरापूर्वप्रयुक्तता न स्यात् । किन्तु "प्रोक्षिताभ्यामुलूखल-मुसलाभ्यामवहन्ती"तिवत् तदपूर्वप्रयु-क्ततैवाऽऽपद्येत । न । तस्य स्वरूपनिष्पत्त्यर्थत्वात्, यद्यप्यवान्तरापूर्वाणां परमापूर्वाङ्गभावः, तथाऽपि तेषु स्वरूपनिष्पत्त्यर्थ एव वाङ्नियमादिको धर्मः, "दीक्षणीयायामनुब्रूयादि" [ आप. श्रौ. सू. २०. ४. १० ] ति दीक्ष-णीयासम्बद्धावान्तरापूर्वस्वरूपसंबन्धावगमात् । न च तेषां स्वरूपपरित्या-गेनाऽङ्गा-ङ्गिभावलक्षणा युक्ता, लक्षणैव यतः । न च स्वरूपार्थत्वेनाऽन-नुष्ठानम्[3] । स्वरूपस्यैवाऽनन्यगम्यसिद्धित्वात् । शब्दैकगम्यसिद्धिकं सर्व-मपूर्वम्, अवघातादीनान्तु प्रमाणान्तरावसेयसिद्धीनां विनाऽपि प्रोक्षणं स्वरूप-सिद्धेः । स्वरूपार्थत्वे [4]युक्तं नियमनियोगस्याऽननुष्ठानम् । तदेवं स्वयमङ्ग-

---

[1] उपकारैदमर्थ्यमिति मु. पु. पा. । [2] तान्यवान्तरापूर्वान्वितानीति मु. पु. पा. ।

[3] स्वरूपार्थत्वेनाऽनुमानमिति. मु. पु. पा. ।

[4] अयुक्तं नियमनियोगस्याऽनुष्ठानमिति. मु. पु. पा. ।

त्वाल्लब्धानुष्ठानेषु प्रयाजादिषु नाऽधिकारकल्पनावकाशः। तेनैव प्रकारेण प्रधानविषयेषूत्पत्तिनियोगेषु करणावान्तरव्यापारो[1] वेदितव्यः।

यो हि तमवान्तरव्यापारं नाऽभ्युपगच्छति, तस्य[2] करणभेदो न स्याद्दर्शपूर्णमासादिषु, तथाऽऽग्नेयादिधर्मा उपांशुयाजादिषु भवेयुः, परमापूर्वप्रयुक्तत्वात्, तत्प्रति साधनभावाविशेषात्। अवान्तरव्यापारभेदे तु युक्ता व्यवस्था, अन्यथाऽऽग्नेयस्य करणता, अन्यथोपांशुयाजादीनामिति।

यथा बृहद्र—थन्तरयोस्स्तुतिसाधनयोरप्यन्यथा साधनतेति धर्मव्यवस्था।

तथा—पार्वणहोमयोरपि। अत एव विकृतिषु बाधः। न हि यथाऽऽग्नेयस्याऽपूर्वसाधनता तथा सौर्यस्येति, प्राकृतद्वाराभावेन पार्वणहोमयोर्बाधः। ये च सन्त्यवान्तरापूर्वाणि न साधनरूपाण्याचक्षते, न तेषाम[2]वान्तरव्यापारतेति प्राचीनसकलदोषप्रसङ्गः। कार्योत्पत्तिनिमित्तभावेन ह्यवान्तरव्यापारता, [3]अन्यथा श्रमादेरपि [4]कृषिसमुत्थस्य विलेखनवत् सस्याधिगमेऽवान्तरव्यापारतापत्तेः। नन्वेवमधिकारशून्यत्वे दीक्षणीयादिष्वतिदेशो न स्यात्। उच्यते—निरधिकाराणामपि कार्यत्वाविशेषात्, अनिर्ज्ञातोपायत्वाच्च युक्तैव कथमित्याकाङ्क्षा।

भाट्टमतेनाऽवान्तरप्रकरणोपक्षेपः।

नन्वेवमङ्गीकृतमवान्तरप्रकरणम्। कर्तव्यस्य हि कथमित्याकाङ्क्षा प्रकरणमिति मीमांसकप्रसिद्धिः।

अवान्तरप्रकरणनिरासः।

*नाऽवान्तरप्रकरणं नाम प्रमाणमस्ति, प्रमेयाभावे प्रमाणानुपपत्तेः[5]।

---

१ करणावान्तरभाव इति. मु. पु. पा.।
२ कारणभेद इति मु. पु. पा.।
३ अन्यदेति. ख. पु. पा.।
४ कृषिसमुत्पाद्येति मु. पु. पा.।
५ प्रमाणत्वानुपपत्तेरिति. मु. पु. पा.।

*अत्रेदं बोध्यम्—अङ्गा-ङ्गिनोः परस्पराकाङ्क्षा प्रकरणम्। तच्च द्विविधम्—महाप्रकरणम्, अवान्तरप्रकरणञ्चेति। तत्र फलभावनायाः प्रकरणं महाप्रकरणम्, यथा दर्शपूर्णमास-प्रयाजयोः। फलभावनाया मध्ये यदङ्गभावनायाः प्रकरणम्, तदवान्तरप्रकरणम्। तच्च सन्दंशेन ज्ञायते। एकाङ्गानुवादेन विधीयमानयोर्धर्मयोरन्तराले विहितत्धं सन्दंश इत्युच्यते कौमारिलमतानुगैः। सन्दंशसहकृतेनाऽवान्तरप्रकरणेनाऽभिक्रमणादीनां प्रयाजादिषु

यावदेव तान्यवान्तरापूर्वाणि नाऽवगम्यन्ते, तावदेव सर्वस्याऽऽरादुपकारकस्य पदार्थजातस्याऽविशेषेण प्रधानविधिपरिगृहीतत्वात्। पश्चात्तु सर्वेषामधिकारानुप्रवेशाविशेषात्, नाऽन्योन्यं तादर्थ्यमस्तीति, नाऽवान्तरप्रकरणविनियोज्यत्वसम्भवः। यानि तु वाक्यादिभिः, तेष्ववान्तरापूर्वाणि निवेशितानि, तानि [1]तत्र प्रतिष्ठितानि न परमापूर्वं संक्रमिष्यन्ति।

शङ्का

नन्वेवं प्रयाजादिषु सौमिकविध्यन्तप्रसङ्गः। नाऽयं दोषः। यदि निरधिकाराणामपि साधिकाराणामिव स्वारसिकाकाङ्क्षा भवेत्, भवेदेवम्। अननुष्ठेयत्वान्न स्वाभाविकीतिकर्तव्यताकाङ्क्षा। कथं पुनः कार्यता, अननुष्ठेयता च।

---

विनियोग इति। यथा फलभावना—साध्यम्, साधनम्, इतिकर्तव्यताचेत्यंशत्रयमपेक्षते, तथाऽङ्गभावनाऽप्यंशत्रयमपेक्षते, भावनात्वसामान्यात्। अतोऽवान्तरप्रकरणादभिक्रमाणादेः प्रयाजाङ्गताऽऽज्यग्रहणा-भिघारणाभ्यां सन्दष्टस्य। अतोऽवान्तरप्रकरणमङ्गीकर्तव्यमिति वार्तिककृताऽभिक्रमणाधिकरणे [ मी. द. ३-१-१० ] प्रत्यपादि। अभिक्रमणन्नाम—प्रतिप्रयाजमावहनीयसमीपगमनम्। अतोऽवान्तरप्रकरणं वार्तिककारोपज्ञम्। तदेव शास्त्रदीपिकादिषु स्वीकृतम्, समर्थितञ्च दृश्यते।

इदमनुपपन्नमिति प्राभाकरमीमांसका मन्वते।

तेषामयम्भावः—तथा हि—"अभिक्रामं जुहोती"त्यत्र प्रयाजसन्निधौ विहितस्याऽभिक्रमणादेर्वाक्यात्प्रयाजाङ्गत्वम्। यदर्थमवान्तरप्रकरणं स्वीकृतम्, तस्य प्रकारान्तरेणाङ्गत्वोपपत्तेरवान्तरप्रकरणविनियोज्यस्याऽङ्गस्याऽसम्भवादवान्तरप्रकरणन्नाम विनियोगप्रमाणं नेषितव्यमिति। यतो भावना कृत्यपरपर्याया कृतिलब्धभाव्यसम्बन्धेतिकर्तव्यतामाकाङ्क्षति। यावदङ्गभावनैका प्रयोजनमपेक्षमाणा फलभावनाया अङ्गं भवति, इतराऽप्यङ्गभावना प्रधानभावनयैव सम्बध्यते। अतस्समेषां प्रधानभावनान्वितानां न मिथोऽङ्गा-ङ्गिभावो युज्यते। तथा चाऽभिक्रमणं वाक्येनैव प्रयाजादिषु विधीयते, अवान्तरप्रकरणविनियोज्याङ्गासम्भवादिति प्राभाकरदर्शनम्। एतेन कुमारिलभट्टात्प्राचीनः प्रभाकरमिश्र इति वदन्तः केचनाऽन्वेषणविचक्षणाः प्रत्याख्यताः। अर्वाचीनस्य कुमारिलोपज्ञस्याऽवान्तरप्रकरणस्य प्राचीनेन प्रभाकरमिश्रेण निराकरणं कथन्नाम सङ्गच्छतामिति सुधीभिरवधातव्यम्। इतोऽप्यधिको भूमिकायामस्माभिर्विस्तरेणोपापादि। एतत्सर्वमभिप्रेत्याऽऽह—नाऽवान्तरप्रकरणं नाम प्रमाणं संभवतीत्यादिना। अस्योपन्यास-निरासौ पार्थसारथिमिश्रेण कृतौ-"कश्चित्त्वाह-नावान्तरप्रकरणं नामप्रमाणं संभवति, इत्यादिना-तस्मादवान्तर प्रकरणाभ्युपगमेऽपि न कश्चिद्दोष" इति [न्या. र. मा. पृ. १८७-१९२ ] द्रष्टव्यौ।

[1] तानीति मु. पु. नाऽस्ति।

तन्निरासः

नूनं भवानश्रुतपूर्वसप्रमाद्यः[१]। विविक्तं हि तत्रेदं गुरुणा—यदेव हि पुरुषेण ममेदं कार्यमिति निरपेक्षमेवाऽवगम्यते, तदनुष्ठेयम्। यत्तु तत्सिद्ध्यर्थं प्रागसिद्धं सद्विनियुज्यते, तत् कार्यम्। परमापूर्वञ्च निरपेक्षं कार्यमवगम्यते। कार्यावगमाद्धि फलावगतिः, न फलावगतेः कार्यतेति षष्ठाद्ये क्षुण्णम्[२]। अतस्सिद्धोऽनुष्ठेयकार्यविवेकः।

प्रयाजादिष्वपूर्वोपपादनम्।

यदेव चाऽनुष्ठेयं तत्रैव कथमित्याकाङ्क्षा, न कार्यमात्रे। अवहीनस्तर्हि प्रयाजादीनामिव दीक्षणीयादिष्वाकाङ्क्षापह्नवेनाऽतिदेशः। न सम्यगवगतं मतमस्माकं भवता। अयं हि नो राद्धान्तः—स्वारसिकीतिकर्तव्यताकाङ्क्षा निरधिकाराणां नाऽस्ति, कारणान्तरसमुत्था तु नाऽपह्नूयते। तत्र दीक्षणीयादिषु प्रयाजादिदर्शनेनेतिकर्तव्यताकाङ्क्षा कल्प्यते। स्वरसतोऽप्याकाङ्क्षाशून्यस्य कारणान्तरोपनिपातनिबन्धनाऽऽकाङ्क्षा युज्यते। यथा—"पटो भवती" ति निराकाङ्क्षस्याऽपि पदद्वयस्य रक्तपदोच्चारणात् रक्तं प्रत्याकाङ्क्षा। अन्यथा "रक्तः पटो भवती"त्यनन्वयप्रसङ्गः। एवं प्रयाजादिषु न किञ्चिदाकाङ्क्षोत्थापने [३]कारणमस्तीति, न सौमिकधर्मातिदेशः, सिद्धश्च दीक्षणीयादिष्वैष्टिकविध्यन्तलाभः—इति।

ये त्वधिकृताधिकाराभ्युपगमेन साधिकारतामङ्गनियोगानामाहुः, तेषां प्रयाजादिषु [४]रात्रिसत्रन्यायेनाऽऽर्थवादिकफलकाम एवाऽधिकारी प्राप्नोतीति, नाऽधिकृताधिकारसम्भवः। स्यान्मतम्–इतिकर्तव्यताकाङ्क्षा प्रधानविधेर्न परिपूर्यते–इति। मा परिपूरि, प्रयोजनन्तु [५]परिपूर्णम्, अर्थवादपदानि प्रमाणांशोपनिपातीनि, तेषां [६]परोक्षा वृत्तिर्मा भूदिति तत्प्रतिपाद्यफलकाम

---

[१] सप्रमाद इति मु. पु. पा.।

[२] "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यत्र स्वर्गकामपदं नियोज्यसमर्पकम्, न कर्तृप्रतिपादनपरं, अतो नियोज्यान्वितकार्याभिधानमुपपद्यत इति प्रतिपादनावसरे टीका-पञ्चिकयोरिति शेषः।

[३] कारणान्तरमिति मु. पु. पा.।

[४] रात्रिसत्रन्यायस्वरूपन्तु [ प्र. पं. पृ. ३४१-३४२ ] विवेचितमस्माभिः। तदत्राऽनुसन्धेयम्।

[५] प्रमाणमिति. मु. पु. पा.।

[६] लक्षणा वृत्तिरित्यर्थः

एवाऽधिकारी युक्तः। साधिकारविधिसन्निधिमात्रेण तु निरधिकाराणां प्रतीतेर्तादर्थ्येऽधिकाराकाङ्क्षा नाऽस्तीत्यर्थवादपदान्यर्थवादमात्रपर्यवसायीन्येव।

तथा "पयो व्रतं ब्राह्मणस्ये" [ तै. आ. २ प्रपा. अनु. ८, तै. सं. ६. २. ५. २ ] त्यादिषु भोजनाय प्रवृत्तस्य द्रव्यार्जननियमवत्, स्ववाक्य एवाऽधिकारिणो लब्धत्वान्न प्रधानप्रवृत्तस्याऽधिकारश्शक्यते कल्पयितुम्, अन्यथा स्वातन्त्र्यं पयोव्रतादीनामापद्यते।

तथा—"नाऽनृतं वदेदि" [तै. सं. २. ५. ५. ६] ति प्रकरणाधीतेऽपि निषिध्यमानक्रियाकर्तुरधिकारावगमान्न प्रकरणानुप्रवेशसम्भवः।

तथा "[1]भिन्ने जुहोति"ति निमित्तस्याऽधिकारिविशेषणत्वाद्विना निमित्तकल्पनादधिकारिविशेषालाभान्न होमस्य दर्शपूर्णमासाङ्गत्वलाभः। न वेदमिह समाधानम्। [1]भिन्नशब्दस्य यौगिकत्वात्प्रकृतगामित्वे सति, निमित्तवतोऽप्यधिकारेऽधिकृतस्याऽधिकार इति, प्रकरणे भिन्नस्याऽविनियोगात्। तद्धि प्रकरणे संनिहितम्, यत् तत्र विनियुक्तम्। न च भिन्नस्य विनियोगोऽस्ति। अपि चाऽधिकाराकाङ्क्षायामधिकारे कल्पयितुमुपक्रान्ते, किमित्यार्थेन सन्निधानेनाऽधिकारः कल्प्यते। [2]भवत्वनुषङ्गः, साक्षाच्छ्रुतस्याऽधिकारपदस्य, प्रधानवाक्ये तु श्रुतेऽधिकारपदे प्रधानेन सह संबन्धे सति, सन्निहितानामश्रुताधिकाराणां साधिकारैदमर्थ्येनाऽन्वितानामधिकाराकाङ्क्षैव नाऽस्तीत्यनुषङ्गनिराकरणे मूलयुक्तिः। अभ्युच्चयमात्रन्तु वरमनुषङ्गत इतिकर्तव्यताकाङ्क्षापरिपूरणमेवेति।

प्रयाजादीनां विकल्पशङ्का-परिहारौ।

अपि च प्रत्येकं "समिधो यजती" [ श. ब्रा. २. ६. १. १ ] त्यादिषु

---

[1] दर्शपूर्णमासप्रकरणे "भिन्ने जुहोती"ति श्रूयते। तस्याऽयमर्थः। यद्भिन्नं सत्कार्याक्षमं चूर्णीभूतं कपालम्, तद्गतं भेदनं भिन्नशब्दार्थः। तत्र क्तप्रत्ययेन भेदनाश्रयद्रव्यस्याऽभिधानात्तस्य प्रत्ययार्थत्वेन प्राधान्यात्, प्रकृत्यर्थस्य भेदनस्य विशेषणत्वेनाऽन्वये सर्वतो द्रव्यप्राप्तेरावश्यकत्वात्, अतः कृत्स्नभेदन इदं प्रायश्चित्तम्। अतो निमित्तवतोऽधिकारेऽधिकृताधिकारप्रसङ्गाद्दर्शपूर्णमासाङ्गत्वानुपपत्तिरित्याशयेनाऽऽह-भिन्नशब्दस्येति।

[2] अनेकसन्निधौ समाम्नातस्याऽसंबन्धिपदाव्यवेतस्याऽऽम्नानं सर्वार्थमिति परिकल्प्य, सर्वैस्सन्निहितैरेकवाक्यतापरिकल्पनमनुषङ्गशब्दार्थः। यथा रात्रिसत्रे आर्थवादिकस्य प्रतिष्ठारूपस्य फलस्याऽनुषङ्गेण रात्रिसत्रविध्येकवाक्यतापरिकल्पनमिति बोध्यम्।

प्रधानाधिकृतस्याऽधिकारावगमात्प्रत्येकमेव समिदादीनां प्रधानोपायभावात् प्रत्येकमितिकर्तव्यताभावस्स्यात् । अवान्तरविधयो हि तदा स्वविषयाणामुपायभावं प्रकल्पयन्ति, करणावरुद्धे परमापूर्वे करणताया असम्भवात्, करणोपकारजनकतयैवोपायभावकल्पनम् । ततश्चाऽनपेक्षोपायभावोपगमात्[१] प्रत्येकमेकैककरणोपकारसम्पादकत्वात् विकल्पस्समिदादीनां स्यात् । अधिकारविधिना तु तेषां तादर्थ्यमात्रग्रहणे तस्य तदन्वितस्याऽन्यथानुपपत्तेः, तादर्थ्यसिद्ध्यर्थं करणोपकारजनकता कल्पनीया, [२]सा च यथान्वयम् । अन्वये च सर्वेषां यौगपद्यम् । तत्र यदि प्रत्येकं करणोपकारजनकता स्यात्, तदा विकल्पे सति नित्यवदन्वयो नोपसंह्रियेत । मिलितानान्तु तज्जनकताश्रयणे सर्वथा तदन्वयोपसंहार इति, न प्रत्येकमितिकर्त्तव्यताभावः । उपायोपेयभावे तु तादर्थ्येनाऽन्वये सति वैकल्पिकत्वादुपायभावस्य, तथैवाऽन्वयोऽपीति युक्तम् ।

प्रयाजादिषु सौमिकधर्मातिदेशशङ्का ।

किञ्चाऽधिकृताधिकारेण सर्वेषु साधिकारेषु सत्सु, प्रयाजादेरितिकर्तव्यताकाङ्क्षा स्वारसिकीति, सौमिकधर्मातिदेशस्तेषु स्यात्, [३]अव्यक्तत्वात् । न च वाच्यं सत्यामप्याकाङ्क्षायामितरेतराश्रयतया न तेषु सौमिकधर्मातिदेशः । सोमो हि दीक्षणीयादिभिरङ्गवान्, दीक्षणीयादीन्यैष्टिकधर्मग्राहीणि । यदि चेष्टावपि प्रयाजादिषु सौमिकधर्माः प्रवर्त्तेरन्, तदा स्फुटतरमितरेतराश्रयत्वम्—इति ।

तन्निरासः ।

तदिदं बालजनजल्पितम् । यथा सोमे विनाप्यैष्टिकधर्मप्राप्त्या दीक्षणीयादिमात्रनिबन्धन एवोपकारः, तथेष्टावपि सौमिकधर्मनिरपेक्ष एवोपकारः । यदि परं [४]द्वयोरङ्गानि द्वयोरुपकारं गृह्णन्ति, परं तत्र चोपकारक्लृप्तेरविरोधान्न[५] कश्चिद्दोषः । निरधिकारेष्वङ्गेषु न स्वारसिकीतिकर्त-

---

[१] अनपेक्ष्योपायभावमाश्रित्यैकस्यैवेति मु. पु. पा. ।

[२] सा चेत्यादिः जनकतेत्यन्तः पा० मु० पु० न दृश्यते । ग. पुस्तकानुसारेणाऽयं पाठ उपरि निवेशित इति ध्येयम् ।

[३] अव्यक्तत्वादिति मु. पु. नाऽस्ति ।

[४] परमतयोरङ्गनिबद्धयोरुपकारं गृह्णातीति मु.पु.पा. । [५] अविशेषादिति मु.पु.पा. ।

व्यताकाङ्क्षा, किन्तु लिङ्गबलोत्थापनीयेति दर्शितमादौ। तेन लिङ्गरहितेषु नाऽऽकाङ्क्षोदय इति, न प्रयाजादिषु सौमिकधर्मातिदेशः।

शङ्का

केचिदाहुः—यदि सन्निधिसमाम्नानमात्रेण प्रकृताधिकारानुप्रवेशो न भवति, तदा ज्योतिष्टोमप्रकरणे समाम्नातस्याऽपि षोडशिनः "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति वैकृतत्वमेव स्यात्।

तन्निरासः।

तदसत्। [1]ग्रहणचोदनेयं ग्राह्यापेक्षिणी। तत्र प्रकृततया सोमरस एव ग्राह्यत्वेनाऽन्वयं याति। स च ज्योतिष्टोमाधिकारसम्बद्ध इति, तदनुप्रवेशः। पश्चात्तु तस्य वाक्येन पुनर्द्विरात्रसम्बन्ध इति नाऽनुपपन्नं किञ्चित्। तदेवमारादुपकारकेषु प्रथमं तादर्थ्येनाऽधिकारनियोगं प्रत्यन्वितेषु, साधिकारेण विधिनाऽनुष्ठेयभूतेन [2]करणोपकारक्लृप्तेरप्रतीतेनाऽधिकारनियोगेन जनकत्वकल्पनम्। न च क्षणिकानां तेषां परस्परं स्वरूपेणाऽसम्भवतां सम्भूयोपकारजनकतोपपद्यत इत्यवान्तरापूर्वाणि स्वीक्रियन्ते।

आश्रयिकर्मविषये भाट्टमतेन शङ्का।

[3]नन्वेवमाश्रयिषु कर्मसु विनाऽप्यपूर्वेण द्रव्य-देवतासंस्कारमुखेन करणोपकारजननसिद्धिरिति नाऽपूर्वसमाश्रयणे किञ्चन प्रमाणम्।

---

[1] ग्रहणस्याऽबाध्यतयेति मु.पु.पा.। [2] करणोपकारे क्लृप्ते तं प्रतीति मु. पु. पा.।

[3] आश्रयिकर्मविषये भाट्टमीमांसकानां प्राभाकरमीमांसकानाञ्च वैलक्षण्यं वरीवर्ति। तत्र भाट्टमीमांसकास्सन्निपत्त्योपकारकमङ्गं दृष्टा-दृष्ट-दृष्टादृष्टभेदेन त्रिविधं वर्णयन्तो दृष्टादृष्टसंस्काररूपमाश्रयिकर्मशब्देन व्यवहरन्ति। यथा-पशुपुरोडाशादि। तच्च देवतारूपोद्देशांशेन पशुयागोपयुक्ताया एव देवतायाः पुनः पुरोडाशयागे "अग्नीषोमाभ्यामिद"-मित्यादिप्रकारेणोद्देशात् विनियुक्तदेवताप्रतिपत्तेर्दृष्टार्थत्वम्। त्यागांशेन त्वपूर्वोत्पत्तिरित्यदृष्टार्थत्वमित्युभाभ्यामंशाभ्यामुभयात्मको याग उभयार्थः। एकस्याऽपि यागस्यांऽशभेदेन पृथक्प्रयोजनापेक्षानुसारेण प्रयोजनद्वयाश्रयणे न कश्चिद्दोषः। अत आश्रयिकर्मस्थले दृष्टप्रयोजनाभ्युपगमपूर्वकमदृष्टं प्रयोजनं परिकल्प्यते, तस्मादुभयार्थं तदिति मन्यन्ते।

प्राभाकरमीमांसकास्तु—आरादुपकारकमदृष्टार्थम्, दृष्टादृष्टार्थमिति द्वेधा प्रतिपादयन्तो दृष्टादृष्टार्थमारादुपकारकमेवाऽऽश्रयिकर्मशब्देन व्यपदिशन्ति। आश्रयिकर्मस्थलेऽदृष्टकल्पनापूर्वकं दृष्टप्रयोजनाश्रयणमित्यातिष्ठन्ते। तेषामयम्भावः—प्रधानयागे विनियुक्तमेव द्रव्यं स्विष्टकृद्यागस्य द्रव्यं भवति। अत्र यद्यपि मानसत्यागरूपस्य स्विष्टकृतो दर्शपूर्णमासयागं प्रति न कश्चन दृष्टोपकारो दृश्यते। तथाऽपि तदङ्गभूतस्य द्रव्यप्रक्षेपस्य दर्श-पूर्णमासयाग-

प्राभाकरमतेन समाधानम् ।

किं भवानृजुविमलायामनवहितः[1] ? दर्शितं हि तत्रेदं [1]चतुर्थे—न साक्षाद्द्रव्यदेवतोपकारो यागे[2], किन्तु स्वाङ्गभूतमन्त्राद्यंशमुखेन । न च यागेऽधिकारानुप्रविष्टे तयोस्तत्र विनियोगोपपत्तिः । न चाऽपूर्वमन्तरेण यागस्याऽधिकारानुप्रवेश इत्यवश्याश्रयणीयमवान्तरापूर्वम् । तेषाञ्चाऽदृष्टतया न प्रयोजकत्वम् । दृष्टतया च द्रव्य-देवतासंस्कार एव प्रयोजकः । तत्राऽपि द्रव्य-देवतासंस्कारयोर्द्रव्यप्रतिपत्तिरेव प्रयोजिका, यागे द्रव्यस्य साक्षाद्व्यापारादिति मन्तव्यम् ।

द्रव्यस्य तु न श्रुतिविनियोगः । न क्वचिद्द्रव्यस्य द्वारं श्रुतिस्समर्पयति । न च प्राकरणिकोऽपि द्रव्यस्य विनियोगः, साक्षात्करणोपकारजनकत्वाभावात् । तस्य हि लिङ्गेन, वाक्येन, स्थानेन, [3]समाख्यया वा भावार्थ एव जनकतया सम्बन्धः । गुण-जात्योस्तु वाक्येन विनियोगः, नानाव्यापारत्वात्करणानाम् । अतस्साधनभूतद्रव्योपादाने तदवच्छेदकतयाऽस्त्येव तयोरुपयोग इति, न कारकतया विनियोगो विरुद्ध्यते ।

उत्पन्नकर्मगतसंख्ययाऽभ्यासनिरूपणम् ।

या तु [3]सङ्ख्योत्पन्नकर्मसमवायिनी । यथा—"एकादश प्रयाजान्यज-

---

द्रव्याश्रयत्वाद्दृष्टरूपो द्रव्यसंस्कारो यद्यपि प्रतिभाति । तथाऽप्यस्य स्विष्टकृन्मात्रशेषतया साक्षात्प्रधानयागशेषत्वाभावात्तद्द्रव्यसंस्कारकत्वं सञ्जाघटीति । यदि तच्छेषिभूतस्य स्विष्टकृतः प्रधानशेषत्वं निर्व्यूढं स्यात्, ततस्तद्वारा तस्य प्रधानशेषद्रव्यसंस्कारकं भवेत्, ततस्तन्निर्वाहश्चाऽपूर्वरूपादृष्टकल्पनामन्तरेण न सम्भवतीति, प्रथमं स्विष्टकृतोऽदृष्टप्रयोजनं परिकल्प्य, पश्चात्तदंशस्य प्रक्षेपस्य दृष्टप्रयोजनं परिकल्प्यत इत्यदृष्टप्रयोजनपूर्वकमेव दृष्टप्रयोजनाश्रयणमित्याश्रयिकर्मण उभयार्थत्वम् । एवं पञ्चमप्रयाजेऽप्ययमेव प्रकारोऽनुसन्धेयः । एतत्सर्वं मनसि निधायाऽऽह—"नन्वेवमित्यादिना यागे द्रव्यस्य साक्षाद्व्यापारादिति मन्तव्यमि"त्यन्तेन । पार्थसारथिनेक्तौ 'यस्तु यागस्य साक्षादित्यादिना— तस्य पशुपरोडाशयागः पूर्वमेव यागसम्बन्धाद्दृष्टं कुर्वन्नोभयार्थस्स्यादित्यन्तेनाऽस्योपन्यास-निरासौ । (न्या. र. मा. पृ. १६१) द्रष्टव्यौ ।

[1] मञ्जुमालायामिति. ख. पु. पा. ।

[2] चतुर्थी तुर्येणेति मु. पु. पा. । चातुर्थिकेनेति ख. पु. पा. ।

[3] अत्र पञ्चप्रयाजानुद्दिश्यैकादशत्वसंख्या न विधातुं शक्यते, पञ्चसु एकादशत्वस्य निवेशायोगात् । किन्तु संख्याऽभ्यासं लक्षयति । तथा च प्रयाजानुवादेनाऽभ्यासो विधीयते । ततश्चाऽभ्यासे क्रियमाणे श्रुतैकादशत्वसंख्या स्वयमेव निष्पद्यत एवेति न तस्य विधेयत्वमिति बोध्यम् ।

ती"[श. ब्रा. ३. ६. ५. १.]ति। सोत्पन्नानां कर्मणां विधानासम्भवात्कर्माश्रितो विधीयते। यद्यपि चोद्देश्यगतं विशेषणं वाक्यभेदभयेन विवक्षां नाऽर्हतीति, प्रयाजादीनां साहित्यं न विवक्षितम्, तथाऽपि तस्याः पृथक्त्वनिवेशित्वान्न प्रत्येकमभिसम्बन्धः, किन्तु समुदायेनैव। न चाऽभ्यासं विना तस्याः परिपूर्त्तिरिति, अर्थादभ्यासाश्रयणे प्रकृतग्रहणात्स्वस्थानविवृद्धयैव[1] परिपूरणम्।

यः पुनरुत्पद्यमानकर्मसमवेतस्सङ्ख्याख्यो गुणः, नाऽसौ विधेयः। स हि विधीयमानानि कर्माण्यवच्छिनत्ति। न च तस्य विधेयत्वसम्भवः। बहुषु विहितेषु प्रचयो लभ्यत एवेति न पृथग्विधेयत्वमवलम्बते। अविधेयभूतोऽपि चाऽसौ भावार्थं भिन्दन् विधावुपकरोतीति सोऽन्वयी। यस्तु भिन्नप्रातिपदिकाभिधेयः, सोऽरुणिमादिवत् कर्मणि कारकतया विधीयते।

पश्वेकत्वस्यौपादानिकशेषत्वनिरूपणम्।

[2]यः पुनरयं विभक्त्यभिधेयः, तस्य यद्यपि शक्त्या प्रातिपदिकार्थसम्बन्धः, तथाऽपि तस्य तन्मात्रसम्बन्धे प्रकरणसमाम्नानापादितो ग्राहकसम्बन्धो नोपपद्यत इति, ग्राहकीयावस्थासम्बन्धितैवौपादानिकीति निर्णीयते। विनियुक्तस्य पश्वादेरुपादानमनवच्छिन्नस्य न सम्भवतीति, अस्ति तदवच्छेदकी-

---

[1] आवृत्तिर्द्वेधाऽस्मिन् शास्त्रे प्रतिपादिता-दण्डकलितवदावृत्तिः, स्वस्थानवृद्धिश्चेति। द्वितीयेन प्रकारेण प्रकृते आवृत्तिर्बोध्या। अस्य विस्तरः पञ्चमतृतीयाद्याधिकरणे द्रष्टव्यः।

[2] एवं तृतीयाध्यायप्रतिपाद्यं सप्रमाणं वैनियोगिकं शेषत्वं परिसमाप्य, पश्वेकत्वस्यौपादानिकं शेषत्वं निरूपयितुमुपक्रमते— यः पुनर्विभक्त्यभिधेय इति।

"पशुना यजेते"त्यत्र तृतीयोपात्तमेकत्वं समानाभिधानश्रुत्या कारकाङ्गम्, पदश्रुत्या पशोरङ्गमिति भाट्टानां सिद्धान्तः। प्राभाकरमीमांसकास्तु— लिङ्ग-संख्याविशेषितमेव करणत्वं तृतीयाश्रुत्याऽभिधीयत इति भाट्टसिद्धान्तमसहमानाः प्रकारान्तरेणोपादानापरपर्यायेण विधिव्यापारेण ग्राहकीयपश्वङ्गत्वमुपपादयन्ति। तेषामयमाशयः। तथा हि— 'पशुना यजेते'त्यत्र पशुत्व-लिङ्ग-संख्या-सम्बन्धानामन्योन्यमनन्वितानामेव प्रथमं ग्राहकग्रहणे सति पश्चात्पशुनेति तृतीयाविभक्त्या प्रातिपदिकार्थगतानां लिङ्ग-संख्या-करणत्वानामभिधानेऽपि, प्रथमं तृतीयाश्रुत्या पशोर्यागशेषत्वेन ग्राहकैदमर्थ्यस्य निर्वाहो भवति। लिङ्ग-संख्ययोश्च करणत्वेनाऽनभिधानात्, साक्षाद्यागान्वयासम्भवात्। पश्चात्पशुद्वारा ग्राहकैदमर्थ्यनिर्वाहो वक्तव्यः। तयोः पशुमात्रान्वयेऽपि तदनिर्वाहात्। उपादानाख्येन विधिव्यापारेण ग्राहकीयपशुशेषत्वसिद्धेर्निर्वाह इत्यभिप्रायं मनसि निधायाऽऽह—यः पुनरित्यादिना-विधिः कल्पयतीत्यन्तेन।

भूतसंख्यापेक्षा, सङ्ख्यायाश्च प्रतीतग्राहकान्वयनिर्वाहायाऽऽश्रयापेक्षेति, तदवस्थासम्बन्धितां विधिः कल्पयति। सङ्ख्यान्वितश्च विध्यर्थः प्रतीतस्तद-न्वयोपपत्तये ग्राहकीयदशासम्बन्धितामापादयति।

उपादानस्य विषयोपन्यासः।

[1]उपादानलक्षणो विधिव्यापार आक्षेपापरपर्यायो मीमांसकैः प्रतिपन्नः, उत्पत्ति-विनियोगा-धिकार-प्रयोगविषयः प्रतिज्ञायते। तस्य च यथाप्रतीत-विध्यनुपपत्तिरेव बीजम्। "सौर्यञ्चरुं निर्वपेदि"त्यादौ साधिकारो विधिः प्रतिपन्न उत्पत्तिं विनाऽनुपपद्यमान उत्पत्तिमाक्षिपति। न हि क्षणिकं यागमात्रमुत्पत्तिनियोगानपेक्षमधिकारसिद्धिसमर्थमिति बहुधोक्तम्, तदेव विश्वजिदादिष्वधिकारकल्पनाबीजम् इति।

निमित्तपर्यन्ते चाऽधिकारे साध्यभूतो विधिरनुष्ठानापरनामानं करणस्य प्रयोगमाक्षिपति। कामाधिकारे तु कामसिद्धेस्तदायत्तत्वात्, मानसी प्रवृत्तिः प्रागेव फलायत्तानुष्ठानप्रवृत्तावप्यप्रतिहता निमित्तमस्तीति विधिरप्रयोजकः, उभयत्राऽङ्गेषु क्रतुरेव प्रयोजकः, क्रतूपकारद्वारत्वात्तेषाम्। यदेव हि यस्य कार्यं, तदेव तस्य प्रयोजकम्। क्रतूपकारश्चाऽङ्गानां कार्यमिति, तदेवाऽनुष्ठाननिमित्तम्। "[2]यच्च विधिना स्वसिद्ध्यर्थमाक्षिप्यते, तद्विधेय-

---

[1] अत्रेदं बोध्यम्— प्राभाकरमते शेषत्वं द्विविधम्-वैनियोगिकम्, औपादानिकञ्चेति। तत्र वैनियोगिकं शेषत्वं श्रुत्यादिषट्प्रमाणसहकृतं तृतीयेऽध्याये निरूपितम्। औपादानिकं शेषत्वं चतुर्थेऽध्याये निरूप्यते। इदञ्चोपादानं विध्याक्षेपरूपविधिव्यापारात्मकं शब्दप्रमाणान्तर्गतमेव, न तु भाट्टसम्मतश्रुतार्थापत्तिवच्छाब्दप्रमोपजीवि तदनन्तरं प्रवर्तमानं प्रमाणान्तरमिति तन्मतरहस्यम्। अत एवोपादीयत इत्यस्याऽऽक्षिप्यत [प्र. पं. पृ. ३४२] इति विवरणमित्यवोचाम। अत एव "यत्तु स्वसिद्ध्यर्थमुपादीयते तदपि विधेयमि"ति गुरुग्रन्थस्य प्रथमारब्धग्राहकग्रहणनिर्वाहाय यत्किञ्चिद्द्वारेण विध्यन्वयितया शब्दबोध्यमित्यर्थोऽभियुक्तैरुपवर्णितः। अतः 'पशुना यजेत' इत्यत्र विभक्त्यभिहितस्य पशुगतस्यैकत्वस्याऽपूर्वाङ्गत्वमौपादानिकम्। अयमर्थः— प्रथमप्रकरण उपपादितचरः। शास्त्रदीपिकाव्याख्यायामपि सोमनाथेनाऽयमर्थः प्राभाकर-सम्मतं चतुर्थाध्यायगतं प्रमेयं वर्णयता न्यरूपि। तथा चाऽयं तत्रत्योऽयं व्याख्यासन्दर्भः। प्राभाकरास्तु—श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्याभिश्शेषविनियोगलक्षणमुक्तमिति भाष्ये उपादानाख्यं श्रुत्याद्यतिरिक्तं शेषत्वे प्रमाणान्तरमस्तीत्यवगमात्, उपादानाख्यप्रमाणगम्यमुत्पत्ति-विनियोगाधिकार-प्रयुक्त्याख्यं चतुष्टयमध्यायार्थं [ शा. दी. व्या. पृ. ३४७ ] इति।

[2] चोदनासूत्रगतं बृहतीवाक्यमुक्तेऽर्थे संवादयति यच्चेति।

मिति" तन्त्रे व्यवहारः[१]। नन्वेवं विश्वजिदादावधिकारोऽप्याक्षिप्ततया विधेय एव स्यात्। उच्यते। नाऽधिकारस्य नियोगसिद्धौ व्यापारः, किन्तु कर्तृत्वस्य। तत्प्रतिपत्त्यर्थश्च नियोज्याक्षेपः[२]—इति।

विवरणमतेन क्रमस्याऽनभिधानोपन्यासः।

एवञ्च—विधिना स्वसिद्ध्यर्थमनाक्षिप्यमाणत्वान्न क्रमो विधेय इति मीमांसकानामुद्गारः।

निबन्धनमतनिरूपणम्

[३]क्रमस्य पाञ्चमिकस्य न किञ्चिदभिधानमस्ति। न चाऽनभिहितस्य तस्य वैनियोगिकम्, औपादानिकं वा शेषत्वं घटते, न वाऽशेषभूतस्य विधिराक्षेपाय प्रभवति।

यस्तु [२]"वषट्कर्तुः प्रथमभक्षः" [आप. श्रौ. सू. १२. २४. ६] इति प्रथम-

---

[१] तन्त्रज्ञाः—इति. मु. पु. पा.। टीकाया अर्थतोऽनुवादोऽयम्। यद्यदुपादीयते, तत्तद्विधेयमिति तन्त्रे व्यवहार [बृ. टी. पृ. ३९] इति पाठो दृश्यते।

[२] अधिकारापेक्ष इति मु. पु. पा.।

[३] पञ्चमेऽध्याये क्रमो निरूप्यत इत्ययं विषयो भाट्ट-प्राभाकरयोस्समानः, साक्षान्न विधीयते, परं पदार्थविशेषणतया क्रमो विधीयत इति भाट्टमीमांसका मन्वते।

प्राभाकरास्तु-इदं नाऽनुमन्वते। तत्र प्राभाकरमते विवरणम्,-निबन्धनञ्चेति व्याख्यानद्वयं वरीवर्ति। अयम्भावः—शाबरभाष्यस्योपरि षट्सहस्रग्रन्थात्मकं विवरणन्नाम गुरुणा प्रथमं प्रणीता लघ्वी टीकेति तत्सम्प्रदायः।

द्वादशसहस्रग्रन्थात्मकं निबन्धनन्नाम पश्चाद्गुरुणैव प्रणीता बृहती टीका। इदं टीकाद्वयं शब्दसामर्थ्यम्, अर्थसामर्थ्यञ्चाऽऽलोच्य प्रभाकरमिश्रेणैव व्यरचि, इति तन्त्ररहस्ये रामानुजाचार्यो ब्रवीति। यथा—

"आलोच्य शब्दबलमर्थबलं श्रुतीनाम्॥
टीकाद्वयं व्यरचयद्बृहतीञ्च लघ्वीम्" [तं. र. पृ. १. श्लो. ५.]॥इति॥

एवं "टीकाकारो हि प्रथमं विवरणटीकां कृत्वा पश्चान्निबन्धनटीकां कृतवानिति किंवदन्ती। निबन्धनमतस्याऽद्याऽपि शिष्य-प्रशिष्यपरम्परया वर्तमानत्वात्," इति नयविवेकदीपिकाकारस्य वरदराजस्योक्तिरप्युपर्युक्तमेवाऽर्थं परिपोषयति।

तत्र विवरणकारोऽर्थसामर्थ्यानुसारेण तार्तीयस्य "वषट्कर्तुः प्रथमभक्ष" इत्यादौ प्रथमशब्दावगम्यस्य पदार्थद्वयाश्रयस्य पौर्वापर्यलक्षणस्य, पाञ्चमिकस्य बहुपदार्थव्यासक्तस्य विततिलक्षणस्याऽशाब्दस्य चाऽभिधेयत्वा-नभिधेयत्वलक्षणवैषम्यसद्भावेऽपि पदार्थस्वभावपर्यालोचनायां न विधेयत्वमिति मेने।

शब्दाभिधेयः क्रमः। स हि विनियोज्यः, विधेयश्चेति निबन्धनकारः। अत एवाऽसौ तृतीये चिन्तितः। पञ्चमे हि यस्तावच्छ्रौतक्रमः "अध्वर्युर्गृहपतिं दीक्षयित्वे" [श. ब्रा. १२. १. १. १०] त्यादौ, न तस्य किञ्चिदभिधानमस्ति। कथं तर्हि प्रतीयते। क्त्वाप्रत्ययो हि समानकर्तृकेऽर्थे वर्तमानाद्धातोर्विधीयमानोऽपि, य एव प्रथमं प्रयुज्यते, तत एव विधीयते, तत्र [1]क्त्वाप्रत्ययश्रवणात्। प्रथमप्रयोज्यत्वे स्थितेऽर्थावगतिरपि तथैव, यथाप्रयोगभावित्वादर्थावगतेः, यथावगति चाऽनुष्ठानमिति, तत्क्रमोऽपि तथाविध एवाऽवगम्यते।

अर्थादीनां क्रमानभिधाननिरूपणम्।

[2]अर्थादिष्वभिधानशङ्का दूरापास्तैव। अनभिधीयमानस्याऽप्यवगत्युपायभावस्तत्र तत्र प्रकरणे चिन्तित एव।

---

१ "समानकर्तृकयोः पूर्वकाले" इति पाणिनिसूत्रमत्राऽनुसन्धेयम्।

२ अर्थ-पठन-स्थान-मुख्य-प्रवृत्त्यवगम्येषु क्रमेषु तु त्क्वाप्रत्ययस्याऽप्यभावादभिधानशङ्कैव नाऽस्तीति नायकरत्ने पाठो दृश्यते। तदनुसारेण मूले पाठस्संशोधित इति विभावनीयम्। रूपवदिति मु. पु. पा.। दूरत एवेति. स्व. पु. पा।

निबन्धनकारस्तुमेने—शब्दसामर्थ्यवादितया शब्दस्वभावपर्यालोचनेनाऽभिधेयस्य तार्तीयस्य क्रमस्याऽभिधानसम्भवात्प्रथमं ग्राहकेण ग्रहणम्, तदनु ग्राहकशेषत्वम्, तदनन्तरं करणशेषत्वम्, पश्चात्तु द्वारशेपत्वम्, ततः प्रयोगविध्यनुष्ठाप्यत्वम्, तदेव च विधेयत्वमिति तन्मतसिद्धान्तरहस्यम्।

पाञ्चमिकस्य क्रमस्य तु न शब्दाभिधेयत्वम् "समानकर्तृकयोः पूर्वकाले" इति पाणिनिसूत्रेण समानकर्तृकयोर्धात्वोः पूर्वकाले वर्तमानाद्धातोः क्त्वाप्रत्ययस्य विधानात् क्त्वाप्रत्ययः पूर्वकालवाचीति गम्यते। "मुखं व्यादाय स्वपिती" त्यादौ पूर्वकालत्वस्य व्यभिचारान्न पूर्वकालत्वमप्यर्थस्सम्भवति। अतः क्त्वाप्रत्ययरूपश्रुत्या क्रमो नाऽभिधीयते। अर्थ-पाठ-स्थान-मुख्य-प्रवृत्त्यवगम्येषु क्रमेषु तु क्त्वाप्रत्ययस्याऽप्यभावादभिधानशङ्कैव नोदेति, इति पाञ्चमिकस्य क्रमस्य शब्दबलवादिनो निबन्धनकारस्य मतेनाऽनभिधेयत्वमेव। तस्मात्पाञ्चमिकस्य क्रमस्याऽनभिधेयत्वेन ग्राहकेणाऽग्रहात्, अनङ्गत्वेन तद्धानावपि वैगुण्याभावेनाऽनर्थकः क्रमविचार इति मतद्वयसाधारणः पूर्वःपक्षः।

तत्राऽयं मतद्वयसाधारणस्सिद्धान्तः। तथाहि—क्रमस्याऽनङ्गत्वेऽपि क्रमविचारोऽवश्यमारम्भणीय एव, अनङ्गस्याऽपि तस्याऽऽदरणीयत्वात्। प्रयोगविधिर्हि साङ्गप्रधानानुष्ठापकः। तद्विशेषश्श्रुत्यादिप्रमाणविशेषात्, अनुष्ठेयपदार्थगतपौर्वापर्यविशेषाद्वा वक्तव्यः। तेन यद्यपि प्रयोगविधिः क्रमस्याऽनुष्ठानं नाऽक्षिपति। तथाऽपि प्रयोगविशेषन्त्वाक्षिपत्येव। स च विशेषः क्रमविशेषाधीनः। अतस्तदादरणम्। परस्परमङ्गाङ्गिभावापन्नानेककर्तृकान्नानापदार्थान्क्रमेण

क्रमस्य चोदनालक्षणत्वाक्षेप-समाधाने ।

यदि विध्यर्थं प्रति शेषत्वं क्रमस्य नाऽस्ति, कथं तर्हि चोदनालक्षणत्वम्? न विधेयता चोदनालक्षणत्वे हेतुः, अधिकारस्य तदभावप्रसङ्गात् । [1]विध्यर्थस्तदन्वितः प्रतिपाद्यत इति चोदनालक्षणत्वम् । तर्हि क्रमान्वितोऽपि प्रयोगविधिरवसीयत इति, तस्याऽपि चोदनालक्षणत्वमविरुद्धम् । क्रमविशेषपरिगृहीतप्रयोगावच्छिन्नो हि प्रयोगविधिः प्रतीयते । अत एवाऽनङ्गत्वेऽपि क्रमस्याऽऽदरः, तदभावे प्रयोगानुपपत्तेः, प्रयोगविधेश्च विशिष्टप्रयोगसाध्यत्वात् । तदेवं द्विविधमौपदेशिकम्—वैनियोगिकम्, औपादानिकञ्च ।

अधिकारनिरूपणम् ।

तत्र न यथाधिकारं विनियुज्यते, अपि तु यथाविनियोगमधिकारः । समान्यतोऽप्यधिकाराश्रयणेन विनियोगसिद्धेः ।

यद्यपि प्रतिप्रकरणं व्यवस्थासिद्धये ग्राहकग्रहणपूर्वको विनियोगः, यद्यपि च साधिकारस्यैव ग्राहकत्वम्, तथाऽपि सामान्यतोऽपि स्वर्गकामादावधिकारिणि लब्धे साधिकारत्वे सम्पन्ने, ग्राहकग्रहणे संवृत्ते विनियुक्तेष्वङ्गेषु तदव-

---

प्रयुञ्जानो विधिरवर्जनीयतया क्रममपि प्रयुङ्क्ते । अतस्तत्प्रयुक्तिरार्थिकीति, क्रमलक्षणमारम्भणीयम् ।

तथा चोक्तम्—

"क्रमस्याऽनङ्गभावेऽपि नैवाऽनादरणीयता ॥
तदभावे विशिष्टस्य प्रयोगस्याऽप्रसिद्धितः" ॥इति।

"श्रुतिलक्षणमानुपूर्व्यमिति" सूत्रमप्यत्राऽनुकूलम् । "चोदनालक्षणोऽर्थो धर्मः" इति शास्त्रादौ चोदनालक्षणस्यैव विचार्यत्वं प्रतिज्ञातम् । चोदनाप्रमाण्य-शास्त्रभेदलक्षणयोरौपोद्घातिकत्वेनाऽविधेयस्याऽपि क्रमस्य "एकादश प्रयाजान् यजती"तिवदविधेयस्याऽप्येकादशत्वस्य विवक्षावत्प्रयोगविशेषनिर्धारणाय विवक्षणेन क्रमश्श्रुतिलक्षणो भवति ।

इदमेव मतद्वयं मण्डनमिश्रेणोक्तम्—"न ह्येष प्रयोगविधेर्विषयः, अननुष्ठेयत्वात्, अशब्दार्थत्वात्, क्रमवद्व्यतिरेकेणेदन्तयाऽनिरूपणात्" इति । इदं सन्दर्भद्वयं वाचस्पतिमिश्रेणेत्थमवतारितम्—"तत्र विवरणकृतो हेतुमाहाऽननुष्ठेयत्वादिति । निबन्धनकृतो हेतुमाह—"अशब्दार्थत्वादि"[वि.वि.व्या.न्या.क. पृ. ४१३] ति । इदं सर्वं मनसि निधायाऽऽह—क्रमस्य पाञ्चमिकस्य न किञ्चिदभिधानमस्तीत्यादिना—प्रयोगविधेश्च विशिष्टप्रयोगसाध्यत्वादित्यन्तेन ।

[1] अविध्यर्थ इति. मु. पु. पा. । [2] क्रमनियमस्य तदादर इति मु. पु. पा. ।

च्छिन्ने विध्यर्थे कार्यात्मनि तदनुष्ठानसमर्थस्य [1]स्वर्गकामिनोऽधिकार इति, पश्चादधिकारिविशेषनियमः । [2]अत एवाऽन्ध–बधिर–पङ्ग्वादीनामवेक्षणा–श्रावणा-भिक्रमणाद्यङ्गवति, अत्र्यार्षेयाणामार्षेयत्रयवरणलक्षणाङ्गभाजि, आहवनीयादियोगिनि चाऽनाहिताग्नीनामनधिकारः । तेषां तथाविधविध्यर्थसम्पादने स्वाभाविकशक्त्ययोगादिति स्वयमूहनीयम् ।

अशक्तानामङ्गवैकल्यसमाधानेन, अद्रव्याणां द्रव्यार्जनेन चाऽधिकारवर्णम् ।

येषां पुनस्स्वाभाविकी शक्तिरनपेता,[3] तेषामधिकारो भवत्येवाद्रव्याणाम्, [4]समाधेयव्याधिविशेषपरवशेन्द्रियाणाञ्च । ननु तेषामधिकारो न निर्वहत्येव, अपूर्वसिद्धिनिबन्धनत्वात्तस्य, तस्यास्सकलाङ्गग्रामायत्तत्वात् । सत्यम् । कामाधिकारो न भवत्येव । तस्य सेतिकर्तव्यताकफलभावनाकरणविषयत्वात् । फलकामस्य हि फलभावनां प्रत्यकरणीभूतेऽधिकारो नाऽवकल्पते । सर्वश्च करणं सेतिकर्तव्यताकं करणतामनुभवतीति सम्मतम् । ततस्साङ्गाननुष्ठाने सेतिकर्तव्यताकत्वव्याघातात्, विषयाभावाद्विषयिणोऽप्यनुपपत्तेरधिकारविलय एव कामिनाम् ।

नित्येष्वङ्गविषये यथाशक्तिन्यायः ।

[5]निमित्तवतश्च केवलभावार्थविषय एवाऽधिकार इत्यङ्गानुपसंहारेऽपि विषयाप्रमोषान्नाऽधिकारावगमः । अनपेतश्चाऽधिकारो यावदुपसंहरणीयाङ्ग-

---

१ अत्रेदमवधेयम्---स्वर्गकामाधिकरणे षष्ठाद्ये आख्यातवाच्यायां भावनायां स्वर्गस्य साध्यत्वेनाऽन्वयः कामपदसमभिव्याहारादिति भाट्टमीमांसका मन्वते । प्राभाकरमीमांसकास्तु-स्वर्गकामपदं नियोज्यसमर्पकम्, विषय-नियोज्याभ्यां नियोगप्रतीतिरिति स्वीकुर्वन्ति । यद्यप्ययमर्थस्सार्वत्रिको न, आधानादौ नियोज्यमन्तरेणाऽपि नियोगप्रतीतिर्भवतीति [प्र. पं. पृ. ४५२] मूल एवोक्तः ।

२ यथाविनियोगमधिकार इति तिर्यगधिकरणसिद्धान्तमुपक्षिपन्नन्धपङ्ग्वादीनामधिकारं व्यावर्तयति—अत एवेत्यादिना—स्वयमूहनीयमित्यन्तेन ।

३ शक्तिरपेतेति मु. पु. पा. । शक्तिरनपेक्षितेति. ख. पु. पा. ।

४ असमाधेयेति. मु. पु. पा. ।

५ सर्वत्र नियोगसिद्धिरेव पुरुषार्थः । तत्र काम्यस्थले स्वर्गकामस्याऽधिकारित्वेन स्वर्गकरणस्यैव यागस्य नियोगं प्रति विषयत्वम्, अतः काम्यस्थले स्वर्गोऽपि फलम् । न च तावता नियोगस्याऽरुषार्थत्वमाशङ्कनीयम् । अत एव काम्येषु साध्यविवृद्धिरिति मन्यन्ते ।

सम्पाद्यतामेव तदानीमवगमयति, औत्सर्गिकी तु सकलाङ्गायत्तसिद्धितैव। अनेनैवाऽभिप्रायेण निमित्ताधिकारे गौणः, मुख्यश्च शास्त्रार्थ इति प्राभाकराणामुल्लापः।

नैमित्तिकानामनुष्ठानं कादाचित्कम्, प्रतिनिमित्तमावृत्तिरिति कथनञ्च।

अस्ति च किञ्चिदङ्गं निमित्तायत्तविधानम्। तत्सत्येव निमित्तेऽङ्गम्। यथा—"भिन्ने जुहोती"ति। तत्र चैष शास्त्रार्थः—सति भेदने भेदनहोमसहितोऽङ्गकलापः करणोपकारं जनयति, तदभावे तु केवल एव—इति। यावच्च भेदनादिकमावर्तते, तावती होमस्याऽऽवृत्तिः। एष तावदौपदेशिकोऽङ्गकलापः।

कार्यप्रमेयनिरूपणोपक्रमः।

कार्यनिबन्धनं [1]किञ्चिदङ्गं मीमांसका मन्यन्ते। उपदेशो हि प्रतिप्रकरणमङ्गानां व्यवस्थित एव, अपूर्वग्रहणपूर्वकत्वाद्विनियोगस्य। यदि हि "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यनेन साधिकारं यागमुद्दिश्य "समिधो यजती"ति समिदादिविधिस्स्यात्, तदानीमुद्दिश्य विधानात्, यावद्यागमेव समिदादिविधिरिति, यजिमत्सु सर्वापूर्वेषु समिदादिविधानादुपदेशो न व्यवतिष्ठेत। न हि तदा स्वर्गकामपदम्, दर्शपूर्णमासपदं वा विशेषणायाऽलम्, उद्दिश्यमानविशेषणविवक्षायां वाक्यभेदापत्तेः। सन्निधानमात्रेण त्वन्विताभिधानसिद्धेर्दर्शपूर्णमासाभ्यामित्यधिकारवाक्यत्वे सति समिदादीनां तदनुप्रवेशाद्विनियुक्तविषयतयाऽप्यनुष्ठानसम्पत्तेर्दर्शपूर्णमासाभ्यामित्यधिकारवाक्यमेव[2] नोद्देश्यसमर्पकम्। तत्राऽङ्गानामपूर्वेण सह तादर्थ्येनाऽप्यन्विताभिधानम्, प्रकरणेन च करणोपकारलक्षणद्वारपरि-

---

नित्यस्थले तु न तादृशोऽधिकारी, नाऽपि विषय-करणे, अपि त्वकामिनियोगं प्रति धात्वर्थस्य यागादेर्विषयत्वं करणत्वञ्च। अतस्साध्यविवृद्धिरहितं नियोगमात्रं पुरुषार्थः। अत एव काम्यस्थले कलिकापूर्वं, नित्यस्थले पण्डापूर्वमिति चाऽस्मिन् दर्शने ग्रन्थकृतां व्यवहारः। अवश्यञ्चैवमभ्युपेतव्यम्। अन्यथोभयथाऽप्यतिरिक्तफलकत्वे, तदभावे वा नित्यकाम्यविवेको दुरुपपादस्स्यात्, इति च बोध्यम्।

[1] केचिदन्ये इति. मु. पु. पा.। मीमांसकाः—प्राभाकरमीमांसका इत्यर्थः।

[2] वाक्यमेवेत्यादिरुपकारलक्षणद्वरेत्यन्तो भागो मु. पु. नोपलभ्यते।

कल्पनम् । तत्र चोपादानलक्षणेन विधिव्यापारेणाऽङ्गानां समुदितानामुपकारजनकत्वपरिकल्पनमिति, प्रतिप्रकरणमङ्गव्यवस्था ।

कार्यप्रमेयनिरूपणम् ।

क्व पुनः केषां कार्यनिबन्धनमङ्गत्वम् ? प्राकृतानां वैकृतापूर्वेषु, तदीयकरणे च [1]यमतिदेशमाचक्षते, प्राकृतानां प्राकृतस्थानपतितेऽर्थान्तरे, यमूहमभिदधति। द्विविधं शाब्दम्-उपदेशजम्, [2] कार्यजञ्च[3] । तत्र च वैकृतापूर्वस्य साध्यभूतस्य सेतिकर्तव्यताककरणाकाङ्क्षस्य विषयीभूते भावार्थे करणे लब्धे, या परेतिकर्त्तव्यताकाङ्क्षा, तस्याश्च न प्रकृतिवदुपकारान्तरकल्पनोपपद्यते । क्लृप्ते ह्युपकारान्तरे तज्जनकद्विविधपदार्थाकाङ्क्षा पश्चात्तनी सा प्रकरणाधीतपदार्थवर्गसम्बन्धेन न परिपूर्यते । प्राकृते तूपकारे स्वीकृते, तन्मुखेन द्विविधप्राकृतपदार्थोपस्थापनादाकाङ्क्षा परिपूर्यत इति, प्राकृतमेवोपकारं स्वीकरोति ।

भाट्टाभिमतानुमानो-पमानयोरतिदेशाहेतुत्वनिरूपणम् ।

कः पुनर्हेतुस्स्वीकरणे ? नाऽनुमानम्, अव्यभिचरितलिङ्गसम्बन्धाभावात् । नोपमानम्, तस्य सादृश्यमात्रविषयत्वात्, सिद्धविषयावगाहिनोश्चाऽनयोः कार्ये प्रामाण्यानवतारात् ।

लिङादिना प्राकृतोपकारस्याऽभिधानम् ।

उच्यते । य एवाऽसौ नियोगाभिधायी लिङादिशब्दः, स एव प्राकृतोपकारान्वितं स्वार्थमभिदधाति । प्रकृतावपि विध्यर्थपरिकल्पितो-

---

[1] यथायथमिति. मु. पा. ।   [2] उपदेशकं कार्यकञ्चेति मु. पु. पा. ।

[3] द्वादशलक्षण्यां षट्कद्वयमस्ति-पूर्वषट्कम्, उत्तरषट्कञ्चेति । तत्र पूर्वषट्के उपदेशस्सपरिकरो न्यरूपि । उत्तरषट्केऽतिदेशनिरूपणम् । इत्थमिदं कर्तव्यमित्युपदेशः । तद्वदिदं कर्तव्यमित्यतिदेशः । उपदेशा-तिदेशविषयत्वेन षट्कद्वयं व्याचक्षते भाट्टमीमांसकाः ।

प्राभाकरमीमांसकास्तु-प्रकारान्तरेण षट्कद्वयस्य व्यवस्थामभ्युपगच्छन्ति । तथा हि—उपदेशस्य न केवलमातिदेशिकत्वम्, न वौपदेशिकत्वं, किन्तु विध्याक्षेप्यत्वादुपदिष्टत्वम्, तद्वद्भावेन प्रापितत्वाच्चाऽऽतिदेशिकत्वमप्युपपद्यत इत्युभयलक्षणाक्रान्तत्वादुभयरूपत्वम् । एकस्मिन्नपि प्रमेये प्रमाणद्वयसमावेशस्सम्भवति । अत उपदेशप्रमेयं पूर्वस्मिन्षट्के । उत्तरस्मिंश्च षट्के (चतुर्थाध्याये) कार्यप्रमेयं निरूप्यते । अत्र कार्यशब्देनोपकारो विवक्षितः, न तु नियोगः । अत एवोपकारस्यैकत्वे तन्त्रप्रसङ्गौ, उपकारभेदे त्वावृत्तिरित्येकादशे, द्वादशे च क्रमेण तद्विचारस्सङ्गच्छते । कार्यप्रमेयनिरूपणमुत्तरषट्क इत्यभिप्रायं मनसि निधायाऽऽह—कार्याजञ्चेत्यादिना ।

पकारेणाऽन्वितं स्वार्थं लिङादिरेव वक्ति। अन्विताभिधाने चाऽऽकाङ्क्षा-योग्यता—सन्निधिश्च कारणम्। इह च प्राकृतस्योपकारस्यैवाऽऽकाङ्क्षा-योग्यता च तावदविवादा। सन्निधानन्तु बुद्धेन प्राकृतेनैवाऽपूर्वेण लिङ्गविशेषेण च प्राकृतमपूर्वं बुद्धौ सन्निधीयते, तच्च स्वोपकारं सन्निधापयति। अत एवोपकारसम्बन्ध औपदेशिक इति [1]तत्त्वविदः।

विकृतावुपकारस्यौपदेशिकत्वोपन्यासः।

यो हि ग्रन्थेन, विध्यर्थेनवोपस्थापितस्तस्मिन्नन्वयमेति, स औपदेशिकः। यथा—प्रकृतावुपकारः, यथा वा-विश्वजिदादावधिकारी। तदेवमुपकारस्सम्बन्धमुपेतः केन पदार्थवर्गेण जन्यत इति, पश्चात्तस्यैव वैकृतस्याऽपूर्वस्याऽऽकाङ्क्षा भवति।

शङ्का।

ननु प्रकृतावेवाऽसावुपकारो निर्ज्ञातजनकभूतपदार्थवर्ग इति नाऽऽकाङ्क्षोदये कारणमस्ति। अत एव पदार्थानामतिदेशो नेति मन्यन्ते। यदि पदार्थेष्वपि पश्चाद्भाविन्याकाङ्क्षा स्यात्, तदा तद्धेतुके प्राकृतानां वैकृतापूर्वसम्बन्धे सति, को नामोपकारस्येव पदार्थानामतिदेशं वारयेत्। अन्यत्रोक्तस्य[2] ह्यन्येन सम्बन्धोऽतिदेश इत्यतिदेशविदः।

तन्निरासः।

अत्र ब्रूमः—यदि करणोपकारप्रयुक्ताः प्राकृताः पदार्थास्स्युः, तदा निर्ज्ञातेषु जनकेषु[3] प्रधानाकाङ्क्षा नाऽवतरेत्। अपूर्वप्रयुक्तास्तु धर्मा इति मीमांसकाः। तथा सति यदपूर्वप्रयुक्तास्ते धर्माः, तत्सम्बद्धे एवोपकारे तेषां जनकता कल्पिता, नाऽन्यसम्बद्धे। अतो वैकृतापूर्वसम्बन्धस्याऽनिर्ज्ञातोपायाकाङ्क्षा नाऽनुपपन्ना। येषां तु[4] क्लृप्तसाधनभावानां पदार्थानामनुष्ठानमेव केवलम्, तेषामौपदेशिकत्वादुपकारसाधनभावस्योह-बाधौ न स्याताम्। आकाङ्क्षानिबन्धने तु विकृत्यपूर्वसम्बन्धे यथोह-बाधौ सिद्ध्यतः, तथाऽत्र वक्ष्यामः। एवञ्च सत्यां पदार्थाकाङ्क्षायां पश्चादुपकारेण ये प्राकृताः पदार्था बुद्धिविषयतामापद्यन्ते, तेऽन्वयमासादयन्ति।

---

[1] तत्त्वविदः—प्राभाकरमीमांसका इत्यर्थः। [2] अन्यता ह्यन्येन संबन्धोऽतिदेश इति मु. पु. पा. खपुस्तके तु—अन्यत्र तु ह्यन्येनसंबन्धोऽतिदेशत इति पाठो दृश्यते।

[3] पदार्थाकाङ्क्षेति. मु. पु. पा.। [4] प्रकृतिसाधनभावेनेति मु. पु. पा.।

उपकारस्य प्राकृतपदार्थोपस्थापकत्वोपन्यासः।

केन पुनस्सम्बन्धेनोपकारस्तानुपस्थापयति। उच्यते। प्रकृतौ तेषां पदार्थानाम्, तस्य चोपकारस्य जन्य-जनकभावः प्रतीत इति, तयाऽपूर्वप्रतीत्या स्मृतिस्तेषु जायते। तेषु स्मृतिसन्निहितेषु लब्धान्वयेषु यथाप्रकरणाधीतेषु पश्चादुपकारसाधनत्वं मिलितानां कल्प्यते। तदाहुः—"वैकृतं पदार्थवर्गं प्राकृतमुपकाराढौकितं तथा विधिरुपकारे साधनमेकीकृत्य कल्पयति, उपकारलक्षणकार्योपस्थापितप्राकृतपदार्थान्वयज्ञानञ्च विकृत्यपूर्वकार्यजं शाब्दमुच्यते। न च पदार्थानामपूर्वान्तरसम्बन्धोऽनुपपन्नः। अन्यदीयस्याऽन्यसम्बन्धाभावादि" [ बृ. टी. १०. १. १ ] ति। अर्थश्चाऽयमतिक्षुण्ण ऋजुविमलादिषु।

ऊहस्य शाब्दत्वनिरूपणम्।

तत्र प्राकृतानां संस्काराणां प्राकृतद्रव्यस्थानपतितपदार्थसम्बन्धनिश्चयः ऊहापरनामाऽपि कार्यज [1]एव शाब्दः।

प्रकृतौ यत्कार्यं प्रतीतमवघातादीनाम्, "तदेवेदमि"ति निश्चये सति, [2]तेषां वैकृतद्रव्यान्तरसम्बन्धनिश्चयः! यदपूर्वार्था ह्यवघातादयः, तदीयतण्डुलोत्पत्तिप्रकृतिद्रव्यमवघातादिभिस्संस्कार्यमिति प्रकृतौ शास्त्रार्थः। विकृतावपि तादृशा एव नीवारादय इति,[3] तद्धर्मोहस्तेषु।

बाधनिरूपणम्।

एवं कृष्णलादिष्ववघातादिषूहितेषु द्वारभूतकार्याभावेन यो बाधनिश्चयः, सोऽपि कार्यज एव। तदेवमूहित—बाधिता—भ्युच्चितपदार्थजन्यः प्राकृत उपकारो विकृताविति स्थितम्।

तन्त्रा-वापनिरूपणम्।

तेषाञ्चौपदेशिकानां कार्यसम्बद्धानाञ्चाऽङ्गानामनेकप्रधानसम्बन्धे [4]प्रयुक्ति

---

[1] कार्यरूपवशादिति मु. पु. पा.।

[2] तेषामित्यादि-निश्चय इत्यन्तः पा. मु. पु. नोपलभ्यते। ख.संज्ञककोशानुसारेण निवेशित इति ध्येयम्।

[3] धर्मोहस्तेष्वित्येव मु. पु. पाः।

[4] प्रयोगविशेष इति. मु. पु. पा.।

विशेषस्तन्त्रमनुष्ठानस्य[१]। तथा देश-काल-कर्तृणां प्रयोगानुबन्धभूतानां भेदो नाऽवसीयते कार्यस्यैवाऽभेदे। भिद्यमाने तु कार्ये कार्यार्थमनुष्ठानमावर्तत एव। देशादिभेदेऽपि प्रयोगभेदावगमादावृत्तिरेवाऽनुष्ठानस्य।

प्रसङ्गनिरूपणम्।

यस्य च परार्थमनुष्ठितस्याऽपि कार्यं तन्त्रमित्यवगम्यते, तस्याऽन्यत्राप्युपकारकत्वमेवेति सकृदनुष्ठानम्—इति।

नानाश्रमविषयाणां[२] विधिसिन्धौ [३]निमज्जताऽङ्गानाम्।
प्रविततगम्भीराणां पारायणमेतदाचरितम् ॥१॥

इति महामहोपाध्यायश्रीमच्छालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायामङ्गपारायणे आरादुपकारकाङ्गनिरूपणपरो नाम द्वितीयः परिच्छेदस्समाप्तः।

---

[१] अनुष्ठानमिति मु. पु. पा.। [२] मितेति मु. पु. पा.।
[३] सिद्धारङ्गसामिवेति ख. पु. पा.।

# परिशिष्टम् ।

अत्रेदमवधेयम्—बाधो द्विविधः—अप्राप्तबाधः, प्राप्तबाधश्चेति । तत्र तृतीयेऽध्याये श्रुत्यादीनां प्रमाणानां समवाये पूर्वपूर्वप्रमाणेन श्रुत्यादिनोत्तरोत्तरस्य लिङ्गादेर्बाधः कल्पना-मूलाकाङ्क्षोच्छेदलक्षणोऽप्राप्तबाधो न्यरूपि । प्राकृतस्य त्वङ्गस्य विकृतौ कार्यमुखेनाऽऽगतस्य द्वारलोप-प्रत्याम्नान-प्रतिषेधैर्यो बाधः, स प्राप्तबाधः । स च दशमेऽध्याये प्रत्यपादि । इमौ च श्रुतिलिङ्गाधिकरणवार्तिके कण्ठेहत्य विवेचितौ कुमारिलभट्टेन । इदमेव पार्थसार-थिप्रभृतिभिर्महामीमांसकैश्शास्त्रदीपिका-न्यायरत्नमालादौ विविच्य व्यवस्थापितम् ।

प्राभाकरमीमांसकास्त्वेवं वर्णयन्ति । तथाहि-अप्राप्तबाध-प्राप्तबाधाभ्यां शेषलक्षण-बाधलक्षणयोर्विषयव्यवस्था न सञ्जाघटीति, अपि तु विवेकाग्रहणनिबन्धनप्राप्तिज्ञान-व्यवहारात्, तद्बाधाच्च प्राप्तबाधव्यवहारस्य श्रुतिलिङ्गादिषु सम्भवेन तृतीयाध्यायस्या प्राप्तबाधो विषय इति कथनमविचारितरमणीयमेव ।

अयम्भावः यथा—"इदं रजतमि"त्यत्र दोषविशेषागृहीतविशेषधर्मके शुक्तिस्वरूपे गृहीते, सदृशदर्शनाद्रजतमात्रे स्मृते सत्युभयोरनुभव-स्मरणयोस्स्वरूपतः, विषयतश्च मिथो भेदाग्रहादिदं रजतमिति विशिष्टव्यवहारः, न तु विशिष्टज्ञानम्, तस्माज्ज्ञानभेदमङ्गीकृत्य सर्वं ज्ञानं यथार्थमिति नयवीथ्यां शालिकाचार्येण प्रासाधि । तथा च शुक्तिकायां रजतसाधारणं यद्रूपं तावन्मात्रेण गृहीतायां यद्रजतस्मृतिरुत्पद्यते, तस्य ग्रहणाद्भेदमनवलोकयन्तो लोकाः पश्यामीति व्यवहरन्ति । तद्विशेषदर्शनात्प्राप्तिस्मरणमेवेदं, न प्राप्तिज्ञानम् ।

तथा "बर्हिर्देवसदनं दामी"त्यादिर्वस्तुतो लिङ्गविनियोज्यो मन्त्रः, तत्सामान्यस्याऽर्थप्रकाशनसमर्थमन्त्रत्वादिरूपस्येन्द्रादौ दर्शनात् । वस्तुतो लिङ्गविनियोज्यमन्त्रस्थलीयां प्राप्तिं स्मरन्त ऐन्द्र्यादिमन्त्रोच्चारणग्रहणस्य बर्हिर्देवसदनमित्यादिमन्त्रगोचरप्राप्तिस्मरणस्य च स्वरूपतो, विषयतश्च भेदमपश्यन्तः, स्मृतित्वव्यञ्जकतत्तोल्लेखसंस्कारशक्तिप्रमोषात्प्राप्ति-ज्ञानं व्यपदिशन्ति, तद्विशेषदर्शनाद्विनियोजकश्रुतिदर्शनसहकृतात्प्राप्तिस्मरणमेव न तु प्राप्तिज्ञा-नमिति विशेषदर्शनेन जनानां प्राप्तिज्ञानं निवर्तते । तथा च प्राप्तिज्ञान—तद्बाधयोरभावेऽपि विवेकाग्रहणनिबन्धनप्राप्तिज्ञानव्यवहारात्, तद्बाधाच्च प्राप्तबाधव्यवहारश्श्रुति-लिङ्गादिषु सम्भ-वति । अत एव टीकाकृता "अत्रेदानीमुपदेशबाधविदोऽभिदधति या सामान्यप्राप्तिमित्यादिना रजतज्ञानमि"त्यन्तेन बृहतीवाक्येन, इयं शुक्तिकेत्यादिकया ऋजुविमलापञ्चिकया च विशदी-क्रियते स्म श्रुतिलिङ्गाधिकरणोपसंहारगतस्य "अथ यत् तत्र तत्रेत्यादेर्न तन्मिथ्या" [ शा. भा. पृ. ८५८-८६२ ] इत्यन्तस्य भाष्यसन्दर्भस्याऽयमेवाशयः । एतेन वार्तिकमतं प्रत्याख्यतमिति वेदितव्यम् ।

दशमाध्यायेऽपि भगवता टीकाकारेणोक्तम्—"ज्ञानेनाऽज्ञानं निवर्तत इति बाधविदः" इति । अतस्तृतीये प्राप्तबाध एव निरूप्यते । एवं दशमाध्यायेऽपि प्राकृतानामङ्गानां विकृतौ प्राप्तिरस्ति, विध्याक्षेपापरपर्यायेणोपदेशेनाऽन्विताभिधानसिद्धान्तात् ।

अतः अप्राप्तबाध-प्राप्तबाधाभ्यां तृतीय-दशमयोरध्याययोर्निरूपणीयविषयवैलक्षण्यं न

वक्तुं शक्यते, अपि तु "प्रकृतिवद्विकृतिः कर्तव्ये"त्यतिदेशेन विकृतौ प्राप्तानामेव सर्वेषामङ्गानां कृष्णलादिषु द्वारलोपादिनाऽनुष्ठानलक्षणो व्यवहारो बाध्यते।

एवं "शरमयं बर्हिर्भवती" [ तै. सं. २-१-७-७ ] त्यत्र चोदकावगताबाधिताङ्गभावशरप्राप्तौ प्रत्यक्षवचनावगतशरनिराकाङ्क्षेण प्रयोगवचनेन बर्हिषामनुपसङ्ग्रहादननुष्ठानलक्षणबाधः।

एवं महापित्रेष्टौ श्रुतस्य "नाऽऽर्षेयं वृणीत" [ तै. ब्रा. १-६-९-१ ] इति होतृवरणनिषेधस्य प्रयोगविधिनाऽसङ्ग्रहाद्वरणस्याऽतिदिष्टस्याऽननुष्ठानलक्षण एव बाधः। अतः कुतश्चिदप्यतिदेशो न निवार्यत इति, प्रयोगविधिसङ्ग्रहाभावाद्बाध्यत इत्युच्यते, न तु प्राप्तबाधः।

किञ्च प्राकृतानां पदार्थानां विकृतावतिदेशो युज्यते। तथा च पारमर्षं सूत्रम्—"चोदनार्थकात्स्न्यंमि"[ मी. द. ३-६-८ ]ति।

अत्र प्रसङ्गे मिथ्यात्वव्यवहारोऽननुष्ठानाभिप्रायः प्राभाकरमीमांसकानाम्, व्यवहारविसंवादादेव सर्वेषां ज्ञानानां मिथ्यात्वम्, नत्वयथार्थत्वेन। न खल्वयथार्थं नाम ज्ञानं सङ्घटत इति विवेचितोऽयमर्थः—"यत्प्रत्यक्षं न तद्व्यभिचरति, यद्व्यभिचरति न तत्प्रत्यक्षमि" [शा. भा. पृ. २८ ]ति वृत्तिकारग्रन्थव्याख्यानावसरे टीका-पञ्चिकयोः। "इदं रजतमि"त्यादौ चक्षुषः प्राप्यकारित्वेनाऽसन्निहितरजतप्राप्त्यनुपपत्तेरग्रहणमुपपद्यते दोषादिना। प्रकृते तु ग्रहणकृतोऽतिदेशस्य सत्त्वेन, नाऽग्रहणमिति वक्तुं शक्यते।

एतेन "नाऽस्ति लुप्तार्थानां चोदकवचनम्"। "तस्मान्न लुप्तप्राकृतप्रयोजनं चोदकश्चोदयति"। "बाधो नाम यदेवेदमिति निश्चितं कारणान्तरेण मिथ्येति कथ्यते" इति च भाष्यसन्दर्भो दशमाद्यस्थोऽतिदेशेन प्राप्तानामपि तत्फलस्याऽनुष्ठानस्याऽभावादिति फलद्वारेण व्याख्येय इति। तथा चाऽतिदेशप्राप्तानामबाधिताङ्गभावानामेव प्राकृतानां पदार्थानामननुष्ठानलक्षणो बाध इति।

अत एव बलाबलाधिकरणोपसंहारे—"अथ यत् तत्र तत्रेदमनेन बाध्यते, इदमनेने" त्यादिभाष्यं व्याख्यातुं प्रवृत्तो वार्तिककारो यदिदं भाष्यमप्राप्तबाधविषयम्, उत प्राप्तबाधविषयं वेति द्वेधा विकल्प्य दूषयाम्बभूव—

"बाधस्योक्तरूपत्वात्प्रश्नस्तावन्न युज्यते।
स्थिते चाऽप्राप्तबाधत्वे प्राप्तबाधोऽपि नोत्तरमि"॥ [ मी. द. पृ. ८४९]

त्यादिना। तदनन्तरञ्च यद्यप्यधिकरणान्तोपसंहारात्तद्विषयः प्रतिभाति, तथाऽपि सामर्थ्यात्पूषाद्यनुमन्त्रणमन्त्रवदुत्कृष्यते। विज्ञातप्रकारत्वान्नैवाऽयं "अथ यत्तत्र तत्रेति" श्रुत्यादिषु बाधस्सम्बध्यते, किन्तर्हि बाधाधिकारादिहाऽऽचार्यस्य यावन्तश्शास्त्रोपनिबद्धा बाधभेदाः, ते सर्वे हृदयमनुप्राप्ताः। तेषाञ्च श्रुत्यादिसदृशो बाध उपपद्यते। सर्वत्रैकरूपेण बाधमार्गेण भवितव्यम्। अतो यदि तदीयः प्रकारश्श्रुत्यादिष्वस्तु, श्रुत्यादिप्रकारो वा तेषु। तत्र श्रुत्यादिगतस्तावत्सम्प्रत्येव कथित इति किमनेन पृष्टेन। ये त्वेतद्व्यतिरिक्तास्तेषु कथमिति मन्यमानो वदति—अथ इत्यादिना............ये तु प्रमाणतदाभास-नित्यनैमित्तिक-क्रत्वर्थ-

पुरुषार्थ-पौर्वापर्य-प्राकृतवैकृत-सामान्यविशेष-निष्प्रयोजन-सप्रयोजनाल्पभूयस्त्व-सावकाशनिरवकाशाङ्गप्रधानतद्धर्मबाधाः, तेष्विदमुक्तं प्राप्तं बाध्यते" मी. द. पृ. ८६१ ] इति ।

भाष्यमधिकृत्येदञ्च सर्वं वार्तिकोक्तमाक्षेपसमाधानादिकमविचारितरमणीयमिति बृहतीटीका—ऋजुविमलापञ्चिकयोः परिशीलनेन करतलामलकवत्स्फुटमवगम्यते । तथाहि—बलाबलाधिकरणभाष्यटीकासन्दर्भः, "अत्रेदानीमुपदेशबाधविदोऽभिदधति—सामान्यतः प्राप्तिम्मन्वाना विशेषमपश्यन्तस्स्मृतिप्रमोषनिमित्तं प्राप्तिज्ञानं व्यपदिशन्ति शुक्तिकायामिव रजतज्ञानमि"[ बृ. टी. ]ति । अत्र ऋजुविमलापञ्चिकाटीकयां "एकदेशिमतमाहेति" पूर्वं वर्तते । "दूषयति" इत्युत्तरत्र वर्तते । अयञ्चैकदेशी वार्तिककार इति शास्त्रदीपिकाव्याख्यानात्सोमनाथीयाद[शा. दी. व्या. म. पृ. २४८-२४९.]वगम्यते ।

एतेन "नोपदेशबाधविदामिदमभिधानम्, अपि त्वतद्विदामित्युपरम्यत" इति शास्त्रदीपिकावचने उपदेशबाधवित्पदेन प्रभाकरमिश्रस्य ग्रहणमिति निगदव्याख्यातम् ।

तथा चाऽप्राप्तबाध-प्राप्तबाधविषयत्वाभ्यां तृतीय-दशमयोर्विषयव्यवस्थाया असम्भवेनेत्थं विविक्तो विषयो वक्तव्यः । तृतीये श्रुति-लिङ्गधिकरणेऽलिङ्गे लिङ्गसाधारणं रूपं पश्यन्नलिङ्गतामविविञ्चन् लिंगतामन्यत्र दृष्टां स्मरन् लिङ्गव्यवहारं प्रवर्तयन्नलिङ्गज्ञानेन लिङ्गव्यवहारान्निवर्तत इति ।

तथा चोक्तं प्रकरणपञ्चिकायाम्—
"लिङ्गालिङ्गे न शक्नोति विवेक्तुं मूढचेतनः ।।
तस्याऽलिङ्गे लिङ्गरूपसाधारण्यनिबन्धनः ।।
लिङ्गसंवहारोऽयं विपरीतः प्रवर्तते ।।
श्रुतिलिङ्गाधिकरणे विस्तरेणैतदीरितमि"[ प्र. पं. पृ. ३८ ]ति ।

दशमेऽप्यध्यायेऽननुष्ठानलक्षणव्यवहारबाधो न्यरूपि, न प्राप्तबाध इति । यथेदं रजतमित्यत्र शुक्तिस्वरूपाज्ञाननिबन्धनः प्रसज्यमानरजतव्यवहारः "इयं शुक्तिरि"तिस्वरूपज्ञानेन बाध्यत इति स्वरूपज्ञानमेव बाधकमित्युच्यते । तथाच पञ्चिका—"इयं शुक्तिकेति-स्वरूपमेव बाधकप्रत्यय इत्युच्यत" इति । तथा च चोदकस्य न बाधः, न वाऽङ्गानाम्, अपि त्वनुष्ठानाभावेनाऽननुष्ठानलक्षणो बाध इति स्वमतरहस्यमुपन्यस्यति—एवं कृष्णलादिष्विति ।

---

## अथाऽतिदेशपारायणं नाम चतुर्दशं प्रकरणम् ।

प्रकरणार्थप्रतिज्ञा ।

[1]विकृतौ ये पदार्थानामतिदेशं न मन्वते ।
[2]प्रकारस्योपदेशश्च तेषामुत्तरमुच्यते ॥ १ ॥

स्वसिद्धान्तस्योपन्यासः ।

प्राकृतेनोपकारेण पदार्थैश्चैव वैकृतैः ।
प्रयोगविधिना स्वेन विधिरन्वित उच्यते ॥ २ ॥

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेनाऽन्वितो हि विध्यर्थस्स्वशब्देनैव वर्ण्यते[3] ॥ ३ ॥

साध्यभूतश्च विध्यर्थ उपकारमपेक्षते ।
[4]वाक्यादिभिः[5] प्राकृतश्च स योग्यस्सन्निधाप्यते ॥ ४ ॥

अन्यथाऽनवगम्यत्वाद्यद्यप्यङ्गपुरस्सरः ।
उपकारः प्राकृतोऽसौ विकृतौ सन्निधाप्यते ॥ ५ ॥

तथाऽप्यपेक्षितत्वेन प्रकारं प्रथमं विधिः ।
स्वीकरोति पदार्थांस्तु प्रतीतानप्युपेक्षते ॥ ६ ॥

पश्चात्तु तैरपि पुनरुपकारप्रसिद्धये ।
अपेक्षितैस्तद्वशेन प्राप्तैरन्वयमृच्छति ॥ ७ ॥

---

[1] अत्रेदमाकूतम्—अतिदेशाभ्युपगमस्य भाट्ट-प्राभाकरमतसाधारण्येऽपि, उपकारप्रापकशास्त्रेण चोदकसहायेनोपकारे प्राप्ते, तदनन्तरमतिदेशेन पदार्थप्राप्त्या विकृत्यङ्गता, तेषामनुष्ठानं परं न भवतीति स्वमतमुपपादयितुमुपकारे "प्रकृतिवद्विकृतिः कर्तव्ये"त्यतिदेशेन प्राप्ते, न तत्पृष्ठभावेन तज्जनकीभूतानां पदार्थानां प्राप्तिरिति वदतां भाट्टमीमांसकानां मतं निरसितुं तन्मतमुपक्षिपति—विकृतावित्यादिना ।

[2] करणस्येति मु० पु० पा० ।

[3] भण्यत इति मु० पु० पा० ।

[4] तिबादिभिरिति मु० पु० पा० ।

[5] अत्र वाक्यपदेन प्रत्यक्षवचनम्, आदिशब्देन लिंगम्, नामधेयञ्च विवक्षितम् । तेषां प्राकृतोपकारोपस्थापकत्वं ५३ तमे श्लोके वक्ष्यतीति बोध्यम् ।

गुणप्रधानभावेन सर्वत्रैवाऽन्वयो मतः ।
[1]प्रधानञ्च विधिर्धर्मा गुणास्तं प्रति सम्मताः ॥ ८ ॥
अन्वितस्याऽभिधानञ्च न [2]शब्दोपस्थितैः परम् ।
दर्शनात्पितृयज्ञादौ कल्प्येनाऽप्यधिकारिणा ॥ ९ ॥
सम्बन्धिना न सर्वेण सहसैवाऽन्विताभिधा ।
सम्बन्धिनां सन्निधानक्रमेण तु यथायथम् ॥१०॥

प्रकृति-विकृत्योर्विशेषोपन्यासः ।

[3]प्रकृतौ तु स्वशब्दत्वात्पदार्थानां पुरोऽन्वयः ।
उपकारस्य कल्प्यस्य पश्चादिति परं भिदा ॥११॥

अतिदेशलक्षणम्

व्युत्क्रमेणोपकारेण पदार्थैश्चैव वैकृतैः ।
प्राकृतैर्विधिरन्वेति सोऽतिदेशश्च सम्मतः ॥१२॥
यस्य देशे विधिर्यस्मिंस्ततोऽन्यत्राऽपि तद्गतिः ।
अतिदेशः प्रकारस्य धर्माणाञ्चैव युज्यते ॥१३॥
अन्यत्रत्यो यथाऽन्यत्र प्रकारोऽन्वयमृच्छति ।
तथा धर्मा [4]अपीष्यन्ते तेषामप्यतिदेश्यता ॥१४॥

एकदेशिमतेन दशमाद्यविरोधशङ्का ।

नन्वेवं दशमाद्येन विरोधस्ते प्रसज्यते ।
नैवं कार्यानपेक्षोऽसावतिदेशो निवारितः ॥१५॥
तद्भङ्गभावेन सम्बन्धो धर्माणामेव चेद्भवेत् ।
अनपेक्ष्यप्रकारत्वात्तदा [5]बाधो न सिध्यति ॥१६॥

तन्निरासः ।

प्रकृतौ हि पदार्थानां सम्बन्धेऽवगते यथा ।
द्वारं दृष्टमदृष्टं वा सम्बन्धार्थं प्रकल्प्यते ॥१७॥

---

[1] प्रधानश्चेति ख. पु. पा. । [2] शब्दोपस्थापितैरिति० मु. पु. पा. ।

[3] प्रकृतौ प्रथमं पदार्थानामन्वयः, तदनन्तरमुपकारस्याऽन्वयो भवति, विकृतौ पूर्वमुपकारस्याऽन्वयः, ततस्तज्जनकीभूतानां पदार्थानामिति वैलक्षण्यं मनस्यभिसन्धायाऽऽह—प्रकृताविति ।

[4] अपीत्येषामिति ख. पु. पा. । [5] बोध इति मु. पु. पा. ।

कार्यानपेक्षसम्बन्धे तथैवाऽवगते सति ।
द्वारं दृष्टमदृष्टं वा कल्प्यं स्याद्विकृतावपि ॥१८॥
ततो न घटते बाधः कार्यलोपनिबन्धनः ।
दृष्टाभावेऽप्यदृष्टस्य द्वारस्य खलु सम्भवात् ॥१९॥
कार्यापेक्षा यदा धर्मा विकृतौ यान्ति सङ्गतिम् ।
तदा कार्यावलोपेन तेषां बाधः प्रसिद्ध्यति ॥२०॥
प्राप्नुवन्तो हि कार्येण धर्मा द्वारसमन्विताः ।
प्राप्नुवन्तीति न द्वारकल्पनावसरस्तदा ॥२१॥
क्लृप्तद्वारावलोपेन तेषां बाधः प्रमाणवान् ।
अतिदेशेन धर्माणां प्राप्तानामपि सिद्ध्यति ॥२२॥
कार्यानपेक्षसम्बन्धो धर्माणामुच्यते यदि ।
दशमाद्यविरोधस्स्यात्तदानीं न च तत्तथा ॥२३॥
[1]तद्भावेन किं धर्माः प्रकारो वाऽपि गृह्यते ।
इत्येषा दशमाद्ये हि चिन्ता बाधप्रसिद्ध्ये ॥२४॥

स्वमतेन दशमाद्यविरोधोपन्यासः ।

[2]पूर्वपक्षी च तत्राऽऽह पदार्थानां परिग्रहम् ।
नोपकारे हि धर्मेभ्यो विना शक्यं निरूपणम् ॥२५॥
यद्यप्याकाङ्क्षति विधिःप्रकारं प्रथमं स्वयम् ।
तथाऽपि तस्य प्रकृतावपि नैव स्वरूपतः ॥२६॥
परिज्ञानं किन्तु यथाश्रुतैर्धर्मैस्तथैव हि ।
तस्मात्पदार्थपूर्वैव सदा तस्य निरूपणा ॥२७॥
अतः पूर्वप्रतीतत्वात्पदार्थैरेव वैकृतः ।
विधिस्सम्बन्धमाप्नोति तान्गृहीत्वा तु स स्वयम् ॥२८॥
उपकारं प्रकृतिवत्कल्पयत्यात्मसिद्धये ।
अतश्च प्राकृते द्वारेऽलुप्ते बाधन्तु नाऽर्हति ॥२९॥

स्वमतेन दशमाद्यसिद्धान्तवर्णनम् ।

[3]राद्धान्ती तु वदत्येवं सत्यं धर्माः पुरस्सराः ।
तथाऽपि ते न गृह्यन्ते तदानीमनपेक्षणात् ॥३०॥

---

तद्भावेन चेति मु. पु. पा. ।

प्रकारं हि पुनस्साध्यरूपो विधिरपेक्षते[१] ।
पदार्थानिति हि [२]तान्प्रतीतानप्युपेक्षते ॥३१॥
प्रकारेणैव सम्बन्धं प्रथमं प्रतिपद्यते ।
प्रकारकल्पितैः पश्चात्पदार्थैरिति दर्शितम् ॥३२॥

अन्यधर्माणामन्यधर्मत्वशङ्का-निरासौ ।

धर्माणामन्यदीयानां कथमन्यत्र सङ्क्रमः ।
इति चेदुपकारेऽपि तुल्यमेतदथोच्यते ॥३३॥
नोपकारस्य सम्बन्ध इति हास्यमिदं वचः ।
यद्यसौ नाऽन्यदीयस्स्यात्कथं तर्ह्यतिदिश्यते ॥३४॥
अन्यत्र ह्यन्यदीयस्य देशोऽतिदेश उच्यते ।
तद्भद्भावेन तत्प्राप्तौ विरोधश्चेन्न विद्यते ॥३५॥
तद्भद्भावोपपत्त्यर्थं पदार्थेष्वपि तत्समम् ।
प्रतिपत्तिविरोधोऽयमन्यदीयान्यसङ्क्रमे ॥३६॥
मुखान्तरेण[३] सम्बन्धे स च नाऽस्ति कथञ्चन ।

भाट्टमतेऽनुपपत्त्युपन्यासः ।

ये तु नेच्छन्ति धर्माणां सम्बन्धं वैकृतैस्सह ॥३७॥
अपूर्वे प्राकृताङ्गानां[४] ग्रन्थस्तेषां विरुध्यते ।
सप्तमा-ष्टमयोस्तेषां[५] प्रकारप्राप्तिचिन्तनम् ॥३८॥
न युक्तं तत्र चिन्ता हि षट्केऽस्मिन्कार्यबन्धना ।
नियोगोऽप्यथ कार्यञ्चेत्तदर्थमपि चिन्त्यते ॥३९॥
चतुर्थाध्यायचिन्ताऽपि[४] षट्केऽस्मिन्नापतेत्तथा ।

स्वमतेनोपपत्तिप्रदर्शनम् ।

कार्यतो ह्युपदेशार्थाद्विध्यर्थाद्यत्प्रतीयते ॥४०॥
[५]यथा तस्योपदिष्टत्वं तथाऽऽक्षेपेण[*] वक्ष्यते ।
तेन विध्यर्थमुत्सृज्य [६]कार्यमन्यत्समाश्रितम् ॥४१॥

---

१ विधिरुपेक्षत इति. मु. पु. पा. ।  २ प्रतीतेनेति मु. पु. पा. ।
३ द्वारान्तरेणेत्यर्थः ।  ४ अपूर्वे प्राकृतानामिति मु. पु. पा. ।
५ परमते सप्तमा-ष्टमयोरध्याययोरतिदेशषट्के विचारानुपपत्तिप्रदर्शनमुखेन स्वमते
* अध्यक्षेणेति मु. पु. पा. ।

द्वारभूतमियं चिन्ता कार्यषट्के विधीयते।
अतिदेशः पदार्थानां तेन षट्केऽत्र चिन्तितः ॥४२॥
तस्यैव हेतुभूतस्स उपकारोऽपि दर्शितः।
"षड्भिर्दीक्षयती"त्यत्र प्राकृतानाञ्च वैकृतैः ॥४३॥
अङ्गभूतैरनङ्गानां बाधश्चैवं प्रसज्यते।
प्रधानभावबाह्यत्वादुपकारप्रसिद्धये ॥४४॥
नैव प्रयुक्तिमात्रेण क्रियते प्राकृतं पुनः।
तत्र* कार्यातिदेशोऽयं सम्मतस्त्वौपदेशिकः ॥४५॥
[१]उपदेशप्रमेयेण विध्यर्थेनोपकल्पितः।
प्रकृतावुपकारस्य यदपूर्वेण कल्पना ॥४६॥
नियोज्यस्य च †वृद्धानामुपदेशेन सम्मता।

---

विरोधपरिहारमाह—यथेत्यादिना षट्केऽत्र चिन्तित—इत्यन्तेन।

१ अत्रेदं बोध्यम्—उपदेशः, विधिः, चोदना चेति पर्यायः। स चेत्थमिदं कर्तव्यमित्येवं-रूपः। यथा—प्रयाजादिभिरुपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति। तद्वदिदं कर्तव्य-मित्येवंरूपोऽतिदेशः। यथा—"सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम आग्नेयवदुपकृत्येति। उपदेशनिरूपणमुपजीव्यम्, अतिदेशनिरूपणञ्चोपजीवकम्। अत एव द्वादशलक्षण्यां मीमांसायां पूर्वषट्क उपदेशविचारः कृतः, उत्तरषट्के चाऽतिदेशविचारः कृतः। तत्राऽपि प्रमाणस्य सर्वोपजीव्यत्वेनाऽऽदौ तन्निरूपणमकारि। तन्त्र-प्रसङ्गयोस्तूपदेशातिदेशोभयसाधरण्यात्सर्वान्ते निरूपणमिति, तन्त्रा-वापप्रसङ्गानां प्रयोगविधिव्यापाररूपत्वेन न चतुर्थे निरूपणीयत्वप्रसङ्ग इति भाट्टमतस्थितिः।

प्राभाकरास्तु—प्रकारान्तरेण द्वादशलक्षण्या विषयव्यवस्थां कुर्वन्ति। तेषामयं भावः—तथाहि—उपदेशो नाम—ग्रन्थसन्दर्भः। स चाऽर्थान्तरान्वितं विध्यर्थं कार्यत्वेन प्रतिपाद-यति। स तथाभूत एवौपदेशिकः, विध्यर्थे कार्यरूपे तस्य प्रमाणत्वावधारणाच्चोदनासूत्रे। ग्रन्थसन्दर्भापरपर्यायादुपदेशाद्योऽर्थः प्रतीयते, स एवौपदेशिक इति न नियमः, अपि तु विध्यर्थस्स्वप्रतीत्यर्थं यं यमाक्षिपति, स सर्वोऽप्यौपदेशिक एव। यथा पिण्डपितृयज्ञदावश्रुतो नियोज्यः, दर्शपूर्णमासादौ चोपकारः। स एव विकृतावप्युपदेशेन प्राप्यते। परं प्राकृतस्योपकारस्य क्लृप्तत्वेन विकृतावुपकारस्य कल्प्यत्वेन च प्राकृत एवोपकार उपदेशेनाऽऽक्षिप्यते स्वसिद्ध्यर्थम्। अत उपकारः प्रकृतौ, विकृतौ चौपदेशिक एव। तस्योपस्थितिः प्रत्यक्षवचन-नाम-लिङ्गैः। तेन विध्यर्थकल्पितस्योपकारस्यौपदेशिकत्वं सङ्घटते तन्मते।

*अत इति. मु. पु. पा.।

†प्रभाकरमतानुयायिनामित्यर्थः।

स्वमतेनोपदेशशब्दार्थोपन्यासः ।

उपदेशो हि* नामाऽत्र ग्रन्थसन्दर्भ उच्यते ॥४७॥
स च प्रमाणं विध्यर्थे कार्यरूपेऽवधारितः ।
योऽर्थः प्रतीयते यस्मात्स परं नौपदेशिकः ॥४८॥
विध्यर्थस्स्वप्रतीत्यर्थं यमाक्षिपति सोऽपि च ।
अपर्यवस्यन्विध्यर्थो यं प्रकल्पयितुं क्षमः ॥४९॥
औपदेशिकता युक्ता तस्याऽप्यक्षरबोध्यवत्[1] ।
उपकारविशेषश्च विधिः कल्पयितुं क्षमः ॥५०॥
न पदार्थविशेषन्तु वैकृतं प्राकृतो यथा ।
उपकारविशेषस्य कल्पनायां क्षमोऽपि यत् ॥५१॥
प्रकृतेरेव गृह्णाति लाघवं तत्र कारणम् ।
क्लृप्त-कल्प्यविरोधे हि लघुः क्लृप्तपरिग्रहः ॥५२॥
†स्ववाक्य-नाम-लिङ्गैश्च क्लृप्तोऽसौ-सन्निधाप्यते ।
पदार्थभेदप्राप्तिस्तु नोपकारं विना भवेत् ॥५३॥

प्रकृति-विकृत्योर्विशेषकथनम् ।

‡तत्प्राप्तिः कार्यतस्तेषां प्रकारश्चोपदेशतः ।
प्रकृतावुपकारश्च पदार्थश्चोपदेशतः ॥५४॥
विकृतौ कार्यतो धर्माः प्रकारश्चोपदेशतः ॥५५॥

स चोपकारव्यक्तिविशेषमाक्षिपन् वैकृतो विधिः प्राकृतोपकारोऽस्तीत्येतावन्मात्रमाक्षिपति । तावता प्रकृतिविशेषनियमस्य चोदकलभ्यत्वमात्रेणोपकारस्यौपदेशिकत्वं न हीयते । अपि चोपदेशातिदेशयोरसङ्कीर्णविषयत्वं भाट्टमीमांसकानामभिमतम् । तदपि न सेद्धुमर्हति । यतो हि—उपकारो नौपदेशिकः, न वाऽऽतिदेशिकः, अपि तु केवलविध्याक्षेप्यत्वेनौपदेशिकता, तद्वद्भावेन प्रापितत्वादातिदेशिकतेति, उभयलक्षणाक्रान्तत्वेनोभयरूपत्वमुपकारस्याऽङ्गीक्रियते । अयं विशेषः—प्रकृतौ पूर्वं पदार्थः, अनन्तरमुपकारस्याऽऽक्षेपः । विकृतौ पूर्वमुपकारः, ततोऽतिदेशेन पदार्थानां प्राप्तिः । एतेनोपकारस्य, तत्पृष्ठभावेन पदार्थानाञ्चेति भाट्टानां कथनं चिकित्सितम् । अतः पूर्वोत्तरषट्कयोर्भाट्टोक्तप्रकारेण विषयव्यवस्थाया असम्भवात् ।

* आक्षेप इति ख. पु. अक्षबोध्यतेति. मु. पु. पा. ।   † स्ववाक्यादिति मु. पु. पा.,

‡ मुद्रिते पुस्तके इदं श्लोकार्धं न दृश्यते, प्रक्रतानुगुण्यात् खपुस्तकानुसारेण निवेशितमिति ध्येयम् ।

एकादशेन श्लोकेनाऽभिहितमप्यर्थं "बहुकृत्वोऽपि पथ्यं वदितव्यमि"ति न्यायेन निर्दिशति—तत्प्राप्तिरिति ।

स्वमतोपन्यासः ।

*उपदिष्टेऽपि चैतस्मिन्नतिदेशपदाभिधा ।
न वार्यतेऽस्ति तस्याऽर्थो देशान्यत्वं निजाद्विधेः ॥५६॥

उपदेशातिदेशयोर्भिन्नविषयत्ववादिभाट्टमते दोषोद्भावनम् ।

उपदिष्टातिदिष्टत्वं न त्वेकस्य विरुद्ध्यते ।
नोपदेशातिदेशौ हि प्रमाण इति सम्मते ॥५७॥
उपदेशातिदेशौ हि प्रमाणे भवतो यदि ।

स्वमते पूर्वोक्तदोषाभाववर्णनम् ।

तदा विरोधो जायेत न चैवमिह सम्मतम् ॥५८॥
तेनोपदेशमेयत्वादुपदिष्टमितीष्यते[1] ।
अन्यस्मिन्नन्यतोभावादतिदेशोऽपि युज्यते ॥५९॥

स्वमतेनोपदेशदेशयोर्विषयनिर्देशः ।

उपदेश-कार्यरूपप्रमाणद्वयसंश्रयौ ।
षट्कावुभौ नोपदेशमतिदेशश्च संश्रितौ ॥६०॥
अतिदेशाश्रयत्वे हि बाधे तन्त्रे च भूयसी ।
उपदिष्टार्थविषया चिन्ता नैवोपपद्यते ॥६१॥
द्वारकार्याश्रयत्वे तु सर्वासामुपपन्नता ।
चिन्तानामिति चिन्तेह युक्ता कार्यसमाश्रया ॥६२॥

---

अत एवमत्र विषयव्यवस्था वर्णनीया । पूर्वषट्के उपदेशप्रमेयं विचार्यते, उत्तरस्मिन्षट्के च कार्यप्रमेयम् । अत्र कार्यशब्देन न नियोगापरपर्यायमपूर्वं विवक्षितम्, किन्तूपकारः । तत्र पूर्वषट्के प्रथमाध्यायेन प्रमाणविचारः, द्वितीये क्रियमाणश्शास्त्रभेदविचारश्चौपोद्घातिकः । वैनियोगिकं शेषत्वं तृतीये साधनलक्षणे, औपादानिका उत्पत्ति-विनियोग-प्रयोगाधिकाराश्चतुर्थे विचारिताः ॥ प्रयोगविषयत्वेन, अधिकारविषयत्वेन चोपयोगः पञ्चम-षष्ठयोरुक्तप्राय इति पूर्वस्मिन्षटके उपदेशप्रमेयमुपकारापरपर्यायं कार्यं विचारितं साङ्गोपाङ्गतया, उत्तरस्मिन्षट्के कार्यप्रमेयं विचार्य सम्प्रधारितम् । तत्र कार्यशब्देनोपकारो विवक्षित इति प्रागेवाऽवोचाम । कार्यप्रमेयशब्देन पदार्था विवक्षिताः । सप्तमादावुपकारस्साक्षाद्विचारितः, तद्विचारेणैव तत्प्रमेयभूता अपि पदार्था विचारिता इति तत्त्वम् ।

अत एवोपकारस्यैकरूपत्वे तन्त्रम्, प्रसङ्गश्च, उपकारभेदे त्वावृत्तिरिति तन्त्र-प्रसङ्गयोरुपकारनिरूप्यत्वेन क्रमश एकादश-द्वादशाध्याययोस्तन्त्रावापप्रसङ्गा विचारिताः । उत्तरष-

* उपदेशत्वमिति मु० पु० पा० ।

उपकारवत् पदार्थानामुपदिष्टत्वशङ्का ।

[1]नन्वेवमुपदिष्टत्वं पदार्थानां प्रसज्यते ।
कार्यवत्तैरपि यतो विध्यर्थोऽन्वित उच्यते ॥६३॥

तन्निरासः ।

उच्यते शाब्दतैवं स्यान्नोपदेशप्रमेयता ।
प्रमाणद्वयभेदोऽयमुपस्थाननिबन्धनः ॥६४॥
उपदेशोपस्थितो यो वाक्यार्थान्वयमृच्छति ।
स औपदेशिको ज्ञेयस्स च द्वैधमुपस्थितः ॥६५॥
ग्रन्थेनोपस्थितश्चैव विध्यर्थोपस्थितस्तथा ।
[2]यथोपकारः प्रकृतौ नियोज्यो वाऽश्रुतो यथा ॥६६॥
प्रकारोपस्थितो यश्च द्वेधा नाऽसावुपस्थितः ।
तेनौपदेशिको नाऽसौ केवलं कार्यबन्धनः ॥६७॥
पूर्वनिबन्धनिबन्धनमपनेतुं मोहमीहमानेन ।
शालिकनाथेन कृतः कृतिनामानन्ददो यत्नः ॥६८॥

इति महामहोपाध्यायश्रीमच्छालिकनाथमिश्रप्रणीतायां प्रकरणपञ्चिकायामतिदेशपारायणं नाम चतुर्दशं प्रकरणं समाप्तम् ।

॥ समाप्ता चेयं प्रकरणपञ्चिका ॥

---

ट्कस्याऽतिदेशविचारात्मकत्वे तन्त्र-प्रसङ्गयोस्तत्राऽसाङ्गत्यं भट्टमत इवाऽस्मन्मतेऽपि सप्तमाष्टमयोः पूर्वषट्काप्रमेयस्यौपदेशिकस्योपकारस्य चिन्ता न सङ्गच्छत इत्युच्येत, तर्ह्युपकारस्यौपदेशप्रमेयत्वेन तद्विचारस्य साक्षात्सम्बन्धासम्भवेऽपि कार्यषट्कोपोद्घाततया तद्विचारस्सङ्गच्छते, "यस्तूभयोस्समो दोषः" इति न्यायात् । अत उपदेशप्रमेय-कार्यप्रमेयाभ्यामेव पूर्वोत्तरषट्कयोर्विषयभेदो वर्णनीयः, नोपदेशातिदेशाभ्यां षट्कद्वयस्य विषयव्यवस्थेति प्रतिपादयितुं पातनिकामारचयति–"उपदेश इत्यादिना–सर्वासामुपपन्नता चिन्तानामित्यन्तेन" । अस्योपन्यास-निरासौ पार्थसारथिनोक्तौ [ न्या० र० मा० २६८-२७२ पृ० ] द्रष्टव्यौ ।

१ नवमश्लोकेनोक्तमेवाऽर्थं सिंहावलोकनन्यायेन पुनरनुसन्धत्ते-यथोपकार इति, ।

२ सम्यगिति. मु. पु. पा. ।

काशीहिन्दूविश्वविद्यालयान्तर्गतसंस्कृतमहाविद्यालयाध्यापकेन मीमांसारत्नेन श्रीसुब्रह्मण्य शास्त्रिणा मीमांसावेदान्ताचार्येण विरचिता प्रकरणपञ्चिकाया विषमस्थलटिप्पणी समाप्ता ।

# भाट्ट-प्राभाकरप्रस्थानयोर्मतभेदप्रदर्शनी पट्टिका।

| भाट्टप्रस्थाने | प्राभाकरप्रस्थाने |
|---|---|
| १—प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यनुपलब्ध्याख्यानि षट् प्रमाणानि। | १—प्रत्यक्षानुमानशास्त्रोपमानार्थापत्त्याख्यानि पञ्च प्रमाणानि। |
| २—प्रमाकरणं प्रमाणम्। | २—तथैव |
| ३—अनधिगताबाधितासन्दिग्धार्थबोधकं प्रमाणम्। | ३—अनुभूतिः प्रमाणम्। |
| ४—इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। | ४—साक्षात्प्रतीतिः प्रत्यक्षम्। तच्च मेय-मातृ-मितिविषयं त्रिपुटं भवति। द्रव्य-जातिगुणेष्विन्द्रियसंयोगेन प्रत्यक्षा प्रतीतिर्जायते। |
| ५—तद्द्विविधं निर्विकल्पकं सविकल्पकञ्चेति। | ५—तथैव |
| ६—सन्निकर्षस्त्रिविधः—संयोगः, संयुक्ततादात्म्यम्, संयुक्ततादात्म्यतादात्म्यञ्चेति। | ६—संयोगः संयुक्तसमवायः, समवायश्चेति। |
| ७—अनुमानम्—व्याप्यदर्शनादसन्निकृष्टार्थविज्ञानम्। सम्बन्धो व्याप्तिः। | ७—तथैव निरूपाधिकसम्बन्धो व्याप्तिः। |
| ८—व्याप्तिज्ञान-पक्षधर्मताज्ञानयोरनुमितिकारणता, विशिष्टवैशिष्ट्यावगाहिज्ञानस्य यथासम्भवं कारणता। | ८—व्याप्तिज्ञान-पक्षधर्मताज्ञानाभ्यामेवाऽनुमितिः, न तु विशिष्ट-वैशिष्ट्यावगाहिज्ञानात्। |
| ९—प्रतिज्ञाहेतूदाहरणत्रयं २। | ९—तथैव |
| १०—केवलव्यतिरेकि नाऽङ्गीक्रियते। तत्स्थानेऽर्थापत्तेरभ्युपगमः। | १०—तथैव |
| ११—हेत्वाभासचतुष्टयं वार्तिककारमतेन, त्रयं शास्त्रदीपिकाकारमतेन। | ११—हेत्वाभासचतुष्टयम्। |
| १२—अन्वयदृष्टान्त-व्यतिरेकदृष्टान्तद्वयम्। | १२—अन्वयदृष्टान्त एक एव, न तु व्यतिरेकदृष्टान्तः। |
| १३—लौकिक-वैदिकभेदेन द्विविधस्याऽपि शब्दस्य प्रामाण्यम्। | १३—शास्त्रस्यैव प्रामाण्यम्, लौकिकशब्दस्याऽनुमानविधया वैशेषिकादिवत्। |
| १४—शक्तिर्लक्षणा गौणी चेति तिस्रो वृत्तयः। | १४—तथैव, परमत्राऽयं विशेषश्शक्तिः पदार्थान्तरम्। |

| भाट्टप्रस्थाने | प्राभाकरप्रस्थाने |
|---|---|
| १५—आकाङ्क्षा, योग्यता, आसत्तिः, तात्पर्यज्ञानञ्चेति चत्वारि सहकारिकारणानि। तात्पर्यं लौकिकवाक्येषु पुरुषनिष्ठम्, वैदिकवाक्ये तु शब्दनिष्ठमेव। | १५—तथैव |
| १६—शब्दार्थस्तु–जातिः, उपाधिर्वा, न व्यक्तिः, नाऽपि जातिविशिष्टा व्यक्तिः। | १६—तथैव |
| १७—प्रेरणा, इष्टसाधनत्वं वा विध्यर्थः। | १७—कार्यं विध्यर्थः। तत्र नियोगापरपर्याये कार्ये वैदिकलिङादेश्शक्तिः, लौकिके क्रियाकार्ये लक्षणा। |
| १८—अभिहितान्वयवादः। | १८—अन्विताभिधानवादः। |
| १९—उपमानप्रमाणे नाऽनयोर्मतयोर्भेदः। उपमानस्याऽतिदेशोपपादकत्वम्। | १९—तथा, तन्नेष्यते |
| २०—अर्थापत्तिर्द्विविधा-श्रुतार्थापत्तिः, दृष्टार्थापत्तिश्चेति। | २०—दृष्टार्थापत्तिरेकैव। |
| २१—शब्दाध्याहारः। | २१—अर्थाध्याहारः। |
| २२—प्रत्याक्षादीन्यर्थापत्तिपर्यन्तानि पञ्च प्रमाणानि भावमात्रग्राहकाणि नाऽभावं ग्रहीतुमीशते। अभावग्राहकं प्रमाणमनुपलब्धिरूपम्। स चाऽभावः—प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावः, अन्योन्याभावश्चेति चतुर्विधः। भाट्टचिन्तामणिकारो गागाभट्टः प्रागभावं नाऽङ्गीकरोति। | २२—अधिकरणातिरिक्तस्याऽभावस्याऽनङ्गीकारेण तद्ग्राहकप्रमाणस्याऽनपेक्षितत्वादनुपलब्धेः प्रमाणान्तरत्वं न स्वीक्रियते। |
| २३—द्रव्य-गुण-कर्म-सामान्याभावाः पञ्च पदार्थाः। पूर्वतन्त्रसिद्धान्तरत्नावलीकारास्तु शक्तचा सह षडिति वदन्ति, गागाभट्टोऽभावेन सह सप्तेति मेने [भा. चि. पृ. १७]। | २३—द्रव्य-गुण-कर्म-सामान्य-शक्ति-सादृश्य-संख्या–समवायाश्चेत्यष्टौ पदार्थाः। क्रमोऽपि नवमः पदार्थ इति न्यायसिद्धिव्याख्याकारो नारायणो [प्र. पं. पृ. ८२] मन्यते। |
| २४—पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनश्शब्दतमांस्येकादश द्रव्याणि। | २४—पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव द्रव्याणि। |
| २५—वायुः स्पार्शनप्रत्यक्षविषयः। | २५—वायुरनुमेयः। |
| २६—कालाकाशदिशः प्रत्यक्षाः। | २६—कालाकाशदिशोऽनुमेयाः। |
| २७—जरायुजाण्डजस्वेदजोद्भिज्जभेदेन शरीरं चतुर्विधम्। | २७—उद्भिज्जं विहाय त्रिविधं शरीरम्। |
| २८—चक्षूरसनघ्राणत्वक्श्रोत्रभेदेन बाह्येन्द्रियाणि पञ्च, अन्तरिन्द्रियं मनः केषांचिन्मतेन विभु, अपरेषां मतेनाऽणु। | २८—बाह्यानि पञ्च, मनस्त्वन्तरिन्द्रियमणुपरिमाणमेव। |

| भाट्टप्रस्थाने | प्राभाकरप्रस्थाने |
|---|---|
| २९—आत्मानो विभव कर्तारो भोक्तार प्रतिशरीर भिन्ना, ज्ञानादीनामाश्रया, स्वकृतधर्माधर्मैर्जन्मजात्यायुर्भोगान् यथायथ प्राप्नुवन्ति । प्रारब्धकर्माणि भोगेनाऽऽत्मज्ञानेन च क्षपयित्वा मुक्ता अवतिष्ठन्ते । वैशेषिकात्मगुणोच्छेद एव मोक्ष, न तु सुखरूप । तत्साधनञ्च ज्ञानकर्मसमुच्चय ज्ञानकर्मणोस्समप्राधान्यम्, आत्मा मानसप्रत्यक्षविषय । | २९—आत्माऽऽश्रयविधया सर्वत्र प्रकाशते । |
| ३०—वेदसिद्ध ईश्वरोऽङ्गीक्रियते, न तु तार्किकपरिकल्पित आनुमानिक । | ३०—तथैव |
| ३१—ज्ञानमनुमेय ज्ञाततालिङ्गकानुमानेन । | ३१—ज्ञान स्वयप्रकाशम् । |
| ३२—वर्णात्मकश्शब्दो द्रव्यम्, ध्वन्यात्मकस्तु वायुगुणोऽनित्य. । | ३२—वर्णात्मकश्शब्द आकाशस्य गुणो नित्यश्च, ध्वन्यात्मकस्तु तथैव । |
| ३३—तमोऽतिरिक्त द्रव्यम् । | ३३—नाऽस्त्येव तम । |
| ३४—रूपरसगन्धस्पर्शसख्यापरिमाणपृथक्त्व-सयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहबुद्धिसुखदु खेच्छाद्वेषप्रयत्नसस्कारध्वनिप्राकटचशक्तयश्चेति चतुर्विशतिर्गुणा । | ३४—सख्यायाश्शक्तेश्च पदार्थान्तरत्वेन प्राकटचस्याऽनभ्युपगमेन शब्देन सहाऽवशिष्टा गुणास्सम्मता । |
| ३५—अन्यथाख्यातिवाद । | ३५—अख्यातिवाद । |
| ३६—कर्म प्रत्यक्षम् । | ३६—कर्माऽनुमेयम् । |
| ३७—सामान्य पृथिवीत्वघटत्वगुणत्वकर्मत्व-ब्राह्मणत्वादिजातिरङ्गीक्रियते । | ३७—स्वरूपसत्तातिरेकिणी सत्ताजातिर्नाङ्गीक्रियते, द्रव्यत्वपृथिवीत्वघटत्वादि स्वीक्रियते, गुणत्व कर्मत्वमुञ्चोपाधि, न तु जाति. । |

## द्वादशाध्यायार्थनिरूपणम् ।

| | |
|---|---|
| ३८—प्रथमेऽध्याये—धर्मप्रामाण्यनिरूपणम् । | ३८—विधिप्रामाण्यनिरूपणम् । |
| ३९—द्वितीये—शब्दान्तरादिभि कर्मभेदनिरूपणम् । | ३९—अनुबन्धसाध्यभेदेन शास्त्रभेदनिरूपणम् । अनुबन्धभेदश्च सख्या विहायाऽवशिष्टै प्रमाणै । |
| ४०—तृतीयेऽध्याये—शेषत्वनिरूपणम्, अर्थात् शेषित्वनिरूपणञ्च । | ४०—वैनियोगिक शेषत्वम् । |
| ४१—प्रकरणं द्विविधम्—महाप्रकरणमवान्तरप्रकरणभेदेन । | ४१—अवान्तरप्रकरण नाऽस्ति । |

| भाट्टप्रस्थाने | प्राभाकरप्रस्थाने |
|---|---|
| ४२—चतुर्थे-प्रयोज्य-प्रयोजकभावविचारः । | ४२—उपादानख्यं प्रमाणं विध्यपेक्षारूपविधि-व्यापारात्मकं शब्दप्रमाणान्तर्भूतम् । तेषां शेषत्व-प्रयुक्ति-अधिकारोत्पत्त्याख्यं चतुष्टयं विषयः । |
| ४३—पञ्चमे-श्रुत्यर्थ-पाठ-स्थान-मुख्य-प्रवृत्त्याख्यैष्षड्भिः प्रमाणैः क्रमनिरूपणम् । स च विधेयः पदार्थविशेषणतया । | ४३—तथा । स च शब्दशक्तिवादिनो विवरणकारस्य मतेऽर्थशक्तिवादिनो निबन्धनकारस्य मते चाऽविधेयः । |
| ४४—षष्ठे-अधिकारनिरूपणम् । | ४४—तथा । |
| ४५—सामान्येनाऽतिदेशस्सप्तमे । | ४५—इदञ्च समानम् । |
| ४६—विशेषातिदेशोऽष्टमे । | ४६—एवमेव । |
| ४७—नवमे-ऊहो मन्त्रसामसंस्काराणाम् । | ४७—पूर्ववदेव । |
| ४८—अर्थलोप-प्रत्याम्नान-प्रतिषेधैरुत्सर्गापवादाभ्यां बाधनिरूपणम् । बाध्यस्य पदार्थस्याऽतिदेशतो विकृतौ न प्राप्तिः । | ४८—प्राकृतानां पदार्थानां विकृतावङ्गत्वमस्ति, परं द्वारलोपादिनाऽनुष्ठानं न भवति । |
| ४९—एकादशे-तन्त्रावापाभ्यामङ्गपरिमाण-निरूपणं तन्त्रम् । | ४९—तथा । |
| ५०—द्वादशे प्रसङ्गोऽन्यत उपकारलाभप्रयुक्ताङ्गाननुष्ठानरूपः । | ५०—एवमेव । |
| ५१—महासृष्टि-महाप्रलयौ नाऽङ्गीक्रियेते । खण्डप्रलय-खण्डसृष्टीत्वङ्गीक्रियेते । | ५१—तथैव । |
| ५२—प्रपञ्चस्सत्यः । 'न कदाचिदनीदृशं जगत्' इति न्यायात् । | ५२—तथैव । |
| ५३—प्रमाणानां प्रामाण्यं स्वत उत्पद्यते, ज्ञायते च । अप्रामाण्यन्तु कारण-दोष-बाधकज्ञानाभ्यां जन्यते । | ५३—एवमेव । |
| ५४—वेदा अपौरुषेयाः । | ५४—तथैव । |
| ५५—सामवेदान्तर्गतस्योहग्रन्थस्य पौरुषेयत्वम् । | ५५—एवमेव । |
| ५६—स्मृतीनां वेदमूलत्वेनैव प्रामाण्यम् । | ५६—नित्यानुमेयवेदमूलत्वेनेति विशेषो गुरुमते । |
| ५७—शिष्टाचारस्य स्मृति-श्रुतिकल्पनाद्वारा प्रामाण्यम् । | ५७—शिष्टाचारेण साक्षात् श्रुतिरेवाऽनुमीयते, न तु स्मृतिद्वारेण । |
| ५८—अध्ययनविधिप्रयुक्तत्वमध्ययनस्य । | ५८—अध्यापनविधिप्रयुक्तत्वमध्ययनस्य । |
| ५९—जातिव्यक्त्योर्भेदाभेदौ । | ५९—जातिव्यक्त्योर्भेदः । |
| ६०—मन्वादीनां स्मृतिमूलभूतवेदवाक्यप्रत्यक्षीकरणम् । अस्मदादीनां तदभावः । | ६०—नित्यानुमेयवेदमूलत्वं स्मृतीनामिति । |

गुरुसम्मतपदार्थनिरूपणं व्याख्यायां पृ० ७८. ८१. १५४. १६०. विस्तरेण द्रष्टव्यम् ।

# प्रामादिकपाठ-शुद्धपाठपत्रिका।

| पृ० | पं० | | |
|---|---|---|---|
| ४ | टिप्पणी | निबन्धनम् | निबन्धना |
| ५ | ,, | मातोर्जिज्ञासा | मानेर्जिज्ञासा |
| १४ | टीका | ण्यङ्चन्तादिङो | ण्यन्तादिङो |
| १५ | ,, | मुनयीते" त्यंस्योपनांशे | मुपनयीते त्यंशस्य |
| २५ | टिप्पणी | तस्य व्याख्या | तस्या व्याख्या |
| ६ | ६ | फलमात्रेयो निर्देशादित्यर्थ | निर्देशादित्यार्थवादिक |
| ८ | ११ | वाउपाकुत्य | वाऽप्युपाकृत्य |
| ११ | | अध्यापनवथि | अध्यापनविधि |
| १२ | २१ | आचार्यकत्वम् | आचार्यकम् |
| १४ | २१ | नियाज्यत्व | नियोज्यत्व |
| १५ | १४ | द्वारविशेषणतया | द्वारशेषतया |
| १७ | ११ | वचनत्वम् | वाचकत्वम् |
| ,, | | निर्योज्य | नियोज्य |
| १८ | ८ | अध्यापनावधि | अध्यापनविधि |
| ३० | ९ | निश्चयश्चाययिति | निश्चयश्चेयमिति |
| ,, | १२ | व्यभिचारात् | व्यभिचारवान् |
| ३५ | २ | दृष्टेनान्वय | दृष्टेनान्विय |
| ४७ | १५ | तदुक्तिलक्षितः | तदुपलक्षितः |
| ५७ | ११ | शैघ्रया | शैघ्र्यात् |
| ५९ | २ | परर्यान् | परपर्यायान् |
| ६३ | २४ | योऽतस्तु | यो वस्तु |
| ७६ | २७ | वासना | वासनया |
| ७७ | १० | कारणाऽनिरपणे | कारणानिरूपणे |
| ७८ | ६ | लक्षणसाधारण | लक्षणासाधारण |
| ,, | ६ | गुणा असमवायि | गुणांसमवायि |
| ८० | २६ | इपञ्जकं | रुपव्यञ्जकम् |
| ८१ | ६ | स्पर्शनम् | स्पार्शनम् |
| ,, | ६ | स्पर्शेन्द्रिय | स्पर्शनेन्द्रिय |
| ,, | १८ | महत्पर्शवत्वम् | अणुत्वम् |
| ८२ | ८ | द्वितीयमात्रापेक्षया | द्वितीयमात्रापेक्षि |
| ,, | ९ | अनेकाश्रये | अनेकाश्रया |
| ,, | १६ | नवविधं पदार्थानां रिकल्पनम् | नवविधपदार्थपरिकल्पनम् |
| ८३ | २३ | अयथार्यत्वलक्षणम् | अतथात्वलक्षणम् |
| ,, | २३ | तथात्वलक्षणम् | अर्थतथात्वलक्षणम् |

* १८ पृ. विवरणं लघ्वी, निबन्धनं बृहतीति च. पठितव्यम्।

| पृ० | पं० | | |
|---|---|---|---|
| ८३ | २८ | इत्याकारकं व्यवसायेन | इत्याकारकव्यवसायेन |
| ८४ | ६ | एवयवाय | एवाऽवयवा |
| ,, | ११ | नेकत्र | अनेकत्र |
| ८५ | २३ | ग्रहणादेवेकैकत्वबुद्धिः | ग्रहणादेवैकत्वबुद्धिः |
| ,, | २६ | अवयव्ययवभावः | अवयव्यवयवभावः |
| ,, | २७ | उत्पाद्यते | उत्पद्यते |
| ८७ | ९ | अजीजनत् | जीजनत् |
| ,, | ९ | कथंकारंरसौ | कथङ्कारमसौ |
| ८९ | २२ | अविसंवादलक्षणे | अव्यभिचारलक्षणे |
| ,, | २३ | अधिकथं | अधिकार्थं |
| ९० | १९ | नागच्छन्ती | नागच्छति |
| ९६ | २६ | रूप-रूपपिणोनियमेन | रूप-रूपिणोर्नियमेन |
| ९७ | २६ | प्रभाकरः | प्राभाकराः |
| ९८ | ९५ | संशायितता | संशयितता |
| ९९ | १६ | स्वरूपासत्ता | स्वरूपसत्ता |
| ,, | ३१ | सामान्यल्वीकारेण | सामान्यस्वीकारेण |
| १०० | ५ | ककारगकारयोः | ककारखकारयोः |
| ,, | ९ | वर्णपेण | वर्णरूपेण |
| ,, | १६ | सामान्ये | सामान्यभावे |
| १०८ | ९ | प्रसज्यते | प्रभज्यते, विभज्यते |
| ११० | २६ | निश्चयश्चेयमेवेति संवित्तिस्सर्ववस्तुषु । साच वस्त्वन्तराभावसंवित्त्यनुगमादृते [ श्लो. वा. अ. भा. श्लो. २६ ] ऋजुविमलायां मतान्तरेऽप्युक्तमित्यारभ्य पद्यमिदं दृश्यते । | |
| ११४ | १७ | अगृण्हती | अगृण्हन्ती |
| ,, | २३ | तद्वयावृत्ति | अतद्वयावृत्ति, |
| ११७ | २ | अतिव्याप्तमिति | अतिव्याप्तिरिति |
| १२० | २८ | उपान्यथत् | उपन्यास्थद् |
| १२१ | ३० | पङ्क्तौ टीकाकृत इति पठितव्यम् | |
| १२३ | ३० | किनिबन्धनः | किन्निबन्धनः |
| १२४ | १ | दर्पणादीनान्त्वग्रहणम् | दर्पणादीनान्तु ग्रहणम् । |
| १२५ | ११ | पङ्क्तौ रूपतेत्यनन्तरं स्मरणरूपस्येति पठितव्यम् । | |
| १२६ | २३ | स्मरणरूपश्येवेति | स्मरणरूपस्येति । |
| ,, | २६ | बाधकाभावात् | बाधकप्रत्ययाभावात् |
| १२७ | ९ | वन्हयसंयोगेन तेजोऽवयव, | वन्हयसंयोगेन तेजोवयव- |
| ,, | २० | व्यवाहाराभावत् | व्यवहाराभावात् |

| पृ० | पं० | | |
|---|---|---|---|
| १२७ | २६ | एतावन्यात्रं उक्ते | एतावन्मात्र उक्ते |
| १३० | ९ | मानाम अवसायि | मा नाम वसायि |
| १३१ | ७ | सन्निर्षः | सन्निकर्ष |
| ,, | ८ | द्वयणुक | द्वयणुकस्य |
| १३३ | १० | स्पर्शेन्द्रियेण | स्पर्शनेन्द्रियेण |
| १३५ | ३ | प्रयोजनमित्यस्य पूर्वं प्रयोजनम्–इति पठितव्यम् | |
| ,, | ७ | निवृत्यर्थं | निवृत्त्यर्थम् |
| ,, | ९ | विशेषाणाम् | विशेषणानाम् |
| ,, | १२ | ण्युत्पत्मा | ण्युत्पत्त्या |
| ,, | २९ | साभात्कारि | साक्षात्प्रतीतिः |
| ,, | ३२ | व्याख्यातमितीत्यनन्तरं पठितव्यं त्रिलोचनगुरून्नीतदिशेति | |
| १३६ | २१ | अनुमानशङ्कैव | अनुमानशङ्केव |
| १३७ | २१ | सुखोदयः | सुखादयः |
| १५२ | २४ | अनारभ्यत्वम् | अनारम्भकम् |
| १५५ | १४ | मनो विभु | मनोऽविभु |
| ,, | २५ | पृथिव्याँ रूपं शक्लत्वमेव | पृथिव्यां षड्विधं रूपम् |
| १५७ | २५ | द्वित्वादिकमेव | द्वित्वादिकैव |
| ,, | ३० | द्वयणुके | द्वचणुके |
| १६१ | २६ | सविकल्पकत्वम् | सविकल्पकस्य प्रामाण्यम् । |
| १६४ | २२ | सामान्य | असामान्य |
| ,, | १६ | व्यावृत्योः | व्यावृत्त्योः |
| १६६ | ११ | लिङ्गमित्येवमादि | लिङ्गादि |
| १६८ | ४ | सङ्गः | प्रसङ्गः । |
| १९० | २३ | समुत्थपयति | समुत्थापयति |
| १९१ | २८ | दृष्टः सन् | दृष्टस्सन् । |
| १९६ | ६ | पपीक्षा कर्तव्या | परीक्षा न कर्तव्या । |
| १९८ | ३ | पारम्पर्यण | पारम्पर्येण । |
| ,, | २१ | शिशपयो | शिंशपयो । |
| १९९ | २ | कारणविनाभावं | कारणाविनाभावं । |
| ,, | ११ | तदाहुरित्यस्याऽनन्तरं ११ पंक्तौ "यावान् कश्चित्प्रतिषेधः, सर्वोऽनुपलब्धिसाध्यः" [ प्र० वा० भा० पृ० २४० ] इति पठितव्यम् । | |
| २०० | २४ | करण | कारण |
| २०२ | ११ | प्रतित्यनुगम | प्रत्यनुगम |
| ३०५ | ५ | धमात् | धूमात् |
| २०६ | १३ | विशेषत: | विशेषतः |
| ,, | १४ | प्रामाण्यम् अभ्यु | प्रामाण्यमभ्यु |

| पृ० | पं० | | |
|---|---|---|---|
| २०६ | १४ | शक्यते | शक्यत |
| ,, | १४ | तत्प्रतिपादवचनं | प्रतिपादकवचनम् |
| २०७ | ११ | दञ्च | इदञ्च |
| ,, | १३ | संवन्त्वात् | सम्बन्धत्वात् |
| ,, | १७ | व्याकत्वं | व्यापकत्वम् |
| ,, | ३६ | निरुपाधिरिति | निरुपाधिक इति |
| २०८ | २७ | असाधरणस्य | असाधारणस्य |
| २०९ | २४ | भट्टः माता | भट्टो माता |
| २११ | २४ | शद्वः अश्रावणः गुणत्वात् | शद्वोऽश्रावणो गुणत्वात् |
| २१२ | ६ | कारणरिगणनन् | कारणपरिगणनम् |
| २१९ | २१ | कारणव | कारणत्वम् |
| २२० | २४ | निगमनरू | निगमनरूप |
| २२१ | २५ | युक्तम | युक्तम् |
| २२४ | ९ | सवषां | सर्वेषां |
| २२५ | १५ | संक्षेप्तव्यमिति | सङ्क्षेप्तव्य इति |
| २२७ | १४ | साभारण | असाधारण |
| २२९ | १७ | अव्यक्तात्वात् | अव्यक्तत्वात् |
| ,, | २९ | प्रमितं वाक्यार्थं | प्रमितवाक्य |
| २३० | ६ | अकारः | आकारः |
| २३४ | ३१ | प्रवर्तकमाहुः | प्रवर्तकं वचनमाहुः |
| २३५ | १४ | पदार्थान्तिर | पदार्थं |
| २३७ | २१ | विधिनैकवाक्यता | विधिना पदैकवाक्यता |
| २३९ | १० | अभिधते | अभिधत्ते |
| २४२ | २५ | अपौरुषेय | अपौरुषेयम् |
| २६६ | ३ | अध्ययन | अध्यापन |
| २७५ | ११ | श्लोकश्चाऽत्र भवतीति मु० पञ्चिकाग्रन्थ इति बोध्यम् | |
| २८१ | | अभिहितान्वयवादा-न्विताभिधानयोस्स्वरूपमित्यस्य स्थाने-अभिहितान्वय-वादस्वरूपमेकादशप्रकरणे विवेचयिष्यते । अन्विताभिधानवादस्वरूपं भूमिकायां (पृ० १६-२०) विवेचितमिति पठनीयम् । | |
| २८७ | २६ | सर्वद | सर्वदा |
| २८८ | २४ | द्रतीते मूले | प्रतीतेर्मूलम् |
| २९८ | २ | अभावादीनां | अभाववादिनां |
| ,, | १८ | रूपाभावाधिकरणे | रूपाभावाभावाधिकरणे |
| २९९ | ६ | वृत्त्यनियात्मकत्वात् | वृत्त्यनियामकत्वात् |
| ३०१ | | श्लोकयोरनन्तरमितिशब्दस्सम्पातायातः । | |

| पृ० | प० | | |
|---|---|---|---|
| ३११ | ११ | तत्व | तत्त्व |
| ३१२ | ८ | स्वयुक्त्या | युक्त्या |
| ३१३ | २ | ब्राह्म | ब्रह्म |
| ,, | २७ | बक्ष्याम | अवोचाम |
| ,, | ३० | महालय | महाप्रलय |
| ३१५ | २० | तिरेकम् | तिरेकित्वम् |
| ३१८ | ५० | "अर्हन्मरणचित्तस्य प्रतिसन्धिर्न विद्यते। प्रदीपस्येव निर्वाणं विमोक्षस्तस्य चेतस" [प्र० वा० भा० पृ० ६३] | |
| ३२२ | २४ | भ्रावत्व | भावरूपत्व |
| ३२३ | ४ | अचलत्व | चलत्व |
| ,, | ९ | कामत | क्रामत |
| ३२४ | | सर्वदर्शनकौमुद्यामुद्धृतोऽय श्लोक इति ध्येयम् | |
| ३२५ | १० | एतत्रय | एतत्त्रय |
| ३३२ | ४ | महत्य | महत्त्व |
| ३५८ | १ | व्यज्जकत्व | व्यञ्जकत्व |
| ३६० | १ | व्यज्जक | व्यञ्जकं |
| ,, | १५ | व्यज्जक | व्यञ्जक |
| ३६१ | १४ | नवबन्धात् | नवबोधात् |
| ३६७ | २५ | लक्षश्च | लक्षणञ्च |
| ३८० | २४ | एकदेशिनना | एकादेशिनाम् |
| ८८१ | १६ | वगमयति | अवगमयन्ति |
| ३८२ | १९ | परिछन्दत् | परिच्छिन्दन् |
| ४०० | ५ | आनर्थक्यम् | अनर्थकम् |
| ४०१ | १९ | तात्पर्यावगमादपीति पठनीयम् | |
| ४०२ | | पर्यायेति सम्पातायातम् | |
| ४१४ | २८ | प्रत्याख्यात | व्याख्यात. |
| ४१५ | १८ | म्भूमिकाया न्यरूपयाम | |
| ४२० | २१ | व्यापार इति सम्पातायातम् | |
| ४२१ | ९ | चि इत्यस्य स्थाने हीति पठितव्यम् | |
| ४३८ | १५ | दककल्पना | दकसम्बन्धकल्पना |
| ४४८ | ९ | प्रवृत्तिया | प्रवृत्तिर्या |
| ,, | २५ | कायाऽपूर्ये | कार्येऽपूर्वे |
| ४५३ | २३ | स्वरूपनिवृत्तो | स्वरूपनिर्वृत्तो |
| ४५६ | २७ | न युक्त. | युक्त |
| ४६८ | ४ | दृष्टाप्रयोजन | दृष्टप्रयोजन |
| ४७२ | २ | कर्माश्रितो | कर्माश्रिता |

# प्रसक्तग्रन्थकर्तृनामावलिः ।



# साङ्केतिकशब्दविवरणम् ।

| | | |
|---|---|---|
| १—मी. द. | मीमांसादर्शनम् । | आनन्दाश्रमः, पूना । |
| २—शा. भा. | शाबरभाष्यम् । | ,, ,, |
| ३—श्लो. वा. | श्लोकवार्तिकम् । | चौखम्बा, वाराणसी । |
| ४—तं, वा. | तन्त्रवार्तिकम् । | आनन्दाश्रमः, पूना । |
| ५—ता. टी. | तात्पर्यटीका । | मद्रास युनिवर्सिटी १९४० ई० |

| | | |
|---|---|---|
| ६—न्या. सु. | न्यायसुधा । | चौखम्बा वाराणसी । १९०९ ई० |
| ७—ऋ. वि. पं. | ऋजुविमलापञ्चिका । | मद्रास युनिवरसिटी । १९३६ ई० |
| ८—न्या. र. | न्यायरत्नाकरः । | चौखम्बा वाराणसी । |
| ९—न्या. मं. | न्यायमञ्जरी । | ,, |
| १०—न्या. वा. | न्यायवार्तिकम् । | ,, |
| ११—न्या. वा. ता. टी. | न्यायवार्तिकतात्पर्यटीका । | ,, |
| १२—न्या. सू. | न्यायसूत्रम् । | ,, |
| १३—न्या. कु. | न्यायकुसुमाञ्जलिः । | ,, |
| १४—वा. भा. | वात्स्यायनभाष्यम् । | ,, |
| १५—प्र. भा. | प्रशस्तपादभाष्यम् । | ,, |
| १६—न्या. कं. | न्यायकन्दली । | ,, |
| १७—प्र. त. प्र. | प्रत्यक्तत्त्वप्रदीपिका । | निर्णयसागर प्रेस बंबई १९३१ ई० |
| १८—प्र. वा. | प्रमाणवार्तिकम् । | जायस्वाल रिसर्च इन्स्टूट् पटना १९५२ |
| १९—खं. खा. | खण्डनखण्डखाद्यम् । | लाजरस प्रेस वाराणसी । |
| २०—न्या. सि. मु. | न्यायसिद्धान्तमुक्तावली । | नि. सा. प्रे. बंबई |
| २१—प्र. वा. भा. | प्रमाणवार्तिकभाष्यम् । | जायस्वाल रिसर्च इन्स्टिट्यूट पटना । |
| २२—न्या. बि. | न्यायबिन्दुः । | चौखम्बा वाराणसी । |
| २३—त. बि. | तत्त्वबिन्दुः । | अन्नामलै. यू. |
| २४—अ. ध. को. | अभिधर्मकोशः । | लण्डन. |
| २५—तै. सं. | तैत्तिरीयसंहिता । | आनन्दाश्रमः पूना । |
| २६—तै. ब्रा. | तैत्तिरीयब्राह्मणम् । | ,, |
| २७—ऋ. सं. | ऋक्संहिता । | ,, |
| २८—आ. श्रौ. | आपस्तम्बश्रौतसूत्रम् । | मैसूर यू. |
| २९—न. वि. | नयविवेकः । | मद्रास यू. १९३७ |
| ३०—न्या. म. | न्यायमकरन्दः । | चौखम्बा वाराणसी १९०१ |
| ३१—ब्र. सि. | ब्रह्मसिद्धिः । | ग. औ. मै. लाइब्रेरी मद्रास । |
| ३२—वै. उ. | वैशेषिकोपस्कारः । | चौखम्बा वाराणसी । |
| ३३—वि. प्र. सं. | विवरणप्रमेयसङ्ग्रहः । | अच्युतग्रन्थमाला, वाराणसी । |
| ३४—शा. दी. | शास्त्रदीपिका । | नि. सा. बंबई । १९१५ ई० |
| ३५—भा. दी. | भाट्टदीपिका । | मैसूर यू. |
| ३६—प्र. वि. | प्रभाकरविजयः । | संस्कृतसाहित्यपरिषद् कलकत्ता १९२६ई. |
| ३७—न्या. र. मा. | न्यायरत्नमाला । | गायकवाडसिरीज बडौदा । |
| ३८—ना. र. | नायकरत्नम् । | ,, |
| ३९—का. टी. | काशिकाटीका । | अनन्तशयनं सिरीज । |
| ४०—वि. वि. | विधिविवेकः । | लाजरस बनारस । १९०७ ई० |
| ४१—न्या. क. | न्यायकणिका । | ,, |
| ४२—भा. वि. | भावनाविवेकः । | अन्नामलै यू. मद्रास १९५२ ई० |

| | | |
|---|---|---|
| ४३—भा. चिं | गदूचिन्तामणिः । | चौखम्बा वाराणसी । |
| ४४—वा. र. | वक्यार्थरत्नम् । | मैसूर यू. १९४३ ई० |
| ४५—तं. र. | तन्त्ररहस्यम् । | वडोदा । |
| ४६—मा. मे. | मानमेयोदयः | अनन्तशयनम् । |
| ४७—स्या. र. | स्याद्वादरत्नाकरः | १९८२ ई० |
| ४८—त. र. दी. | तर्करहस्यदीपिका | कलकत्ता । |
| ४९—प्र. मी. | प्रमाणमीमांसा | |
| ५०—सां त. कौ. | सांख्यतत्त्वकौमुदी | चौखम्बा वाराणसी । |
| ५१—श्रु. प्र. | श्रुतप्रकाशिका | बंबई । |
| ५३—अ. सा. | अष्टसहस्री | ,, १९१५ ई० |
| ५४—न्या. वि. | न्यायबिन्दुः | चौखम्बा वाराणसी । |
| ५५—हे. बि. | हेतुबिन्दुः | |
| ५६—मी. बा. प्र. | मीमांसाबालप्रकाशः | चौखम्बा वाराणसी । |
| ५७—तत्त्व-चि. | तत्त्वचिन्तामणिः | |
| ५८—त-टी. | तत्त्वटीका | बम्बई । |
| ५९—श्री. भा. | श्रीभाष्यम् | ,, |
| ६०—बृ. टी. | बृहट्टीका | |

